संस्कृतविद्यापीठग्रन्थमालायाः  पुष्पम्

अष्टमी

# कुतूहलवृत्तिः




प्रस्तावनालेखकः

डा० ० गोपालरेड्डी

राज्यपालः—उत्तरप्रदेशस्य

प्रधानसम्पादकः

० मण्डनमिश्रः

निदेशकः

श्रीलालबहादुरशास्त्रिराष्ट्रियसं  विद्यापी

सम्पादकः

विद्यासागरः आचार्य-श्रीपट्टाभिरामशास्त्री

साहित्यविभागाध्यक्षः

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

दिल्ली

१९६८—६९

प्रकाशक-

डॉ० मण्डनमिश्रः

निदेशक

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

दिल्ली ।

प्रथमसंस्करणम् ११०० प्रतयः

मूल्यम् ३०—०० रू० ( त्रिंशन्मुद्राः )

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य तत्त्वावधाने सम्पादितम् ।

मुद्रक —

श्री घनश्याम उपाध्याय

व्यवस्थापक

वाराणसेय संस्कृत विश्वविद्यालय, मुद्रणालय ।

# PREFACE

I am greatly privileged to have been requested to write this preface to the commentary on the first three chapters of the Jaimini Sūtras Realising as I do my own limitations with regard to Sanskritic learning—and more specially with regard to the systems of Indian Philosophy, I make bold to agree to write a few lines introducing this great commentary on the monumental work I am sure students interested in Indian Philosophy will find this publication very useful in understanding the full import of the Sūtras of Jaimini This is one more evidence of the great contributions made by South Indian scholars to the great reservoir of Sanskritic learning

The importance and usefulness of the Sutras of Jaimini have been recognised in most of the systems of Indian Philosophy And it is, therefore, necessary that the Mīmāmsā Sutras should be studied with great precision We are extremely fortunate that these Sūtras were commented upon by Śabarsvāmin, the **bhāsyakāra,** before the beginning of the Christian era and uptil now this learned commentary has been the only means which would enable a scholar to understand and unfold the deeper implications of the Mīmāmsā Sūtras It was only in seventh-eighth Century A D that the redoubtable Kumārila Bhatta wrote his monumental book, the **Tantra-Varttika**, and also his **magnum opus**, the **Ślokavārttika**—which two works are regarded as the most outstanding contributions in the field of Mīmāmsā philosophy

Centuries later, Pārthasārathi Miśra writes his Sāstradipikā in which he has attempted an elucidation of the cardinal principles of the system of Jaimini The tradition has been preserved in the works of a few other dilecticians in subsequent years, which are recognised in the academic world as important contributions to Mīmāmsā literature But it must be said that inspite of all these attempts, scholars have still felt the necessity of a more exhaustive and elucidating exposition of the Mimāmsā Sutras It cannot be disputed that Jaimini's philosophical system is as much important as it is vast and intricate It is, therefore, that students experience great hardship in appreciating its value The discovery, therefore, of the Adhvara Mīmāmsā Kutuhalavrtti, also called Kutuhalavrtti for reasons of brevity, may be regarded as a great historical event Śrī Vāsudeva Dīksita, the author, is iden-

tical with the writer of the commentrry of Bālamanoramā on Siddhānta-Kaumudī of Bhattoji Dīksita Students of the Pāninian system have always felt that the Bālamanoramā is one of the finest and easily understood commentaries in the field of Sanskrit Grammar It is, therefore, a great historical event that this commentary on the Mīmāmsā Sūtras is now available to us Vāsudeva Diksita was born in a village in Tanjore District on the banks of Kaveri The name of his mother was Annapūrnā and that of his father Mahādeva Vājapeyayāji His elder brother Viseva'ara Vājapeyayāji was Adhvaryu of Śri Ānanda Rāja, Minister of the Chola King, Śrī Shahji Sarabhji Tukkoji The younger brother took his lessons in Veda, Vedānta and Mimāmsā from his elder brother

The present volume consists of the commentary on the first three chapters of the Jaimini Sūtras, on the basis of seven manuscripts collected from different parts of India The publication has been financed by the Lal Bahadur Shastri Vidyapeetha of Delhi The Director of the Institute, Dr Mandan Mishra, should be congratulated on this important venture, and it is hoped that efforts should be made to complete the work in the near future

I feel very happy to find that the editing work has been entrusted to a scholar, Pandit P N Pattabhirama Śāstrin, Professor and Head of the Department of Sāhitya in Varanaseya Sanskrit Vishwavidyalaya, Varanasi, who is held in great esteem as one of the front-rank Mimāmsaka in modern times throughout the country

Raj Bhavan,
Naini Tal
May 10, 1969

**B. Gopal Reddi**

श्रीः

# प्रास्ताविकम्

श्री लालबहादुरशास्त्रि-संस्कृतविद्यापीठस्य ग्रन्थमालायाः षष्ठं पुष्पं विदुषां सम्मुखमुपस्थाप्यते। श्रीवासुदेवदीक्षितविदुषा विरचितोऽयम् अध्वरमीमांसाकुतूहल-वृत्तिनामा ग्रन्थः। मद्गुरुचरणैराचार्यं श्रीपट्टाभिरामशास्त्रिभिरस्य ग्रन्थस्य प्रकाशनायाहमभिहित। मदध्ययनावसरे ग्रन्थमिममधीयानोऽहम् ग्रन्थस्यास्य महत्त्वमन्वभवम्। श्रौतपदार्थानां समुपपादने श्रीवासुदेवदीक्षितमपरः कोऽपि मीमांसाग्रन्थकारो नातिशेत इति न मया वक्तव्यम्। अतिगहनस्यापि विषयस्य प्रतिपादने श्रीवासुदेवदीक्षितोऽनितरसाधारणीं सरलां शैलीमावहति। तत्र तत्र पूर्वैर्जैर्ग्रन्थकारैरनिर्दिष्टानपि विषयान् ग्रन्थेऽस्मिन् विशदयति। ग्रन्थस्यास्याध्ययनेनेदमवगन्तुं शक्यते यच्छ्रीवासुदेवदीक्षितोऽनुसन्धानरूपेण ग्रन्थमिमं निबबन्धेति। भाष्यकारादीन् आदरदृष्ट्या विलोकयन्नपि तत्र तत्र निर्भीकोऽयं समालोचयति खण्डयति च तांस्तान् विषयान्।

एतादृशस्य महतो ग्रन्थस्य प्रकाशने मद्गुरुचरणसदृक्षा एव समर्था इति विभावयन्नहमासम्। अस्य ग्रन्थस्य प्रकाशनं केन्द्रियशिक्षाविभागेन स्वीकृतमपि गुरुचरणैरादिष्टो विद्यापीठद्वारा तदिदं पवित्रं कार्यं सम्पादयितुमहं प्रावर्तिषि। तत्रायं प्रथमो भागस्तृतीयाध्यायान्तः प्रकाश्यते। अवशिष्टानामध्यायानां द्वाभ्यां त्रिभिर्वा भागैः प्रकाशनं भविष्यति। समग्रस्यास्य ग्रन्थस्य द्वादशाध्यायान्तस्य प्रकाशनेन विद्यापीठस्य सुमहद्गौरवं समेधितं स्यादित्यत्र न कश्चन संशयः। अस्य प्रकाशनेन विना मीमांसाध्येतृभिरध्यापकैश्च या न्यूनताऽनुभूयते तदपाकरणायावशिष्टस्य ग्रन्थस्य च पूरणाय गुरुचरणानभ्यर्थयते।

सं० २०२६ वैशाख
शुद्ध पञ्चमी
२१-४-६९

प्रधानसम्पादकः
मण्डनमिश्रः

श्री.

# किञ्चिन्निवेदनम्

अथेदानी श्रीवासुदेवदीक्षितविदुषा विरचिताया अध्वरमीमासाकुतूहलवृत्ते प्रथमो भागस्तृतीयाध्यायान्तः प्रकाशपथमानीयते । तृतीयाध्यायचतुर्थपादान्तो भागोऽस्मत्परमाचार्यं महामहोपाध्याय श्रीकुप्पुस्वामिशास्त्रिचरणैरितस्त्रिशद्वर्षेभ्य पूर्वं सम्मुद्र्य प्रकाशित । मदध्ययनकाल एवास्मत्पूज्यपादा ग्रन्थमिमध्यापयन्तः, समग्रोऽय ग्रन्थो यदि प्रकाशितस्यात्तर्हि न केवल मीमासकानाम् अपि तु समग्रस्यैव सस्कृतवाङ्मयस्य न्यूनता परिपूरयेदिति पदेपदे कथयन्त आसन् । यदाऽह शास्त्रिश्रेण्यामधीयान आसम्, तत एव तालपत्रेषु ग्रन्थलिपिभिर्लिखितं स्वीय पुस्तक देवनागरीलिपिभिर्लेखितु मा पूज्यपादा न्ययूयुजन् । पर झटिति तत्कार्यं सम्पादयितु नाशकनवम् । पूज्यपादाना जामात्रा मत्सतीर्थ्येन श्रीरामनाथदीक्षितेन तत्कार्यं समपादि । गच्छति काले मयाऽप्येक पुस्तक कस्माच्चन श्रोत्रियगृहात् समासादितम् । मद्रपुरीयाड्यारपुस्तकालयतः मद्रपुरीराजकीयमातृकापुस्तकालयत , तिरुपतिवेङ्कटेश्वरविश्वविद्यालयपुस्तकालयतः, वाराणसेयसरस्वतीभवनतश्च पुस्तकान्यवलम्ब्य प्रथम षष्ठाध्यायान्तो भाग पाठभेदाविना सशोधित. । पूज्यपादाना समयादेवास्य प्रकाशनाय महान् यत्न कृत , पर न सफल. प्रयत्नो जात. । अन्ते चास्य प्रकाशनाय केन्द्रसर्वकारशिक्षाविभागेन प्रदत्तायामप्याज्ञाया श्रीलालबहादुरशास्त्रिराष्ट्रियसस्कृतविद्यापीठनिदेशकस्य डाक्टर श्रीमण्डनमिश्रस्य प्रकाशनकार्याभिरुचिमवगत्य तद्द्वारा प्रकाशनमेवोचितमिति निरचिनवम् । तत्रास्मत्पूज्यपादाना ग्रन्थ एक मदीयो द्वितीय अड्यारग्रन्थालयस्य तृतीय , मद्रपुरराजकीयमातृकापुस्तकालयस्य चतुर्थः, तिरुपतिपुस्तकालयस्य पञ्चम , सरस्वतीभवनस्य षष्ठ , मत्परमाचार्यं सम्पादितस्तृतीयचतुर्थपादान्तो ग्रन्थस्सप्तम , इति सप्तपुस्तकानामाधारेण तृतीयाध्यायान्तोऽय भाग प्रकाशपथमानीयते ।

भगवता जैमिनिना विरचितानि द्वादशाध्यायपरिमितानि सूत्राणि । प्रत्यध्याय चत्वार पादा , तृतीयषष्ठदशमेष्वध्यायेषु प्रत्येकमष्टौ पादा । प्रतिपाद विचार्यविषयानुसारेण भूयास्यधिकरणानि । एकैकस्मिन्नधिकरणे सूत्राण्यप्यनेकानि । एकैकमपि सूत्र वेदवाक्याशर्गर्भितम् । इमानि सूत्राणि मीमासादर्शनपदेन व्यवह्रियन्ते । मीमासासूत्राणि सरलतमानि,

नाकुलानि, प्रायेण नाध्याहारापेक्षीणि । सूत्रत्वसरक्षणाय प्रवर्तमानया सङ्ग्रहेच्छया न क्वचिदावश्यकपदपरित्याग , न क्वचित् पारिभाषिक पद- परिदृश्यते । एकत्रैवानेकेषा पदार्थाना प्रतिपादनाय सर्वत्र समाहारद्वन्द्वाश्रयणम्, क्वचिच्चेतरेतरद्वन्द्वाश्रयणम् । प्राय सूत्राणि पद्यगन्धीनि, छन्दश्चानुष्टुभम् । निष्कृष्य वेदवाक्यार्थप्रतिपादनाय प्रवृत्तमिद जैमिनीय शास्त्र वाक्यशास्त्रमिति प्रसिद्धम् । सायणमहीधरोम्वटकपर्दिप्रभृतीना वेदभाष्यकर्तॄणा मीमासादर्शनमिदमवलम्ब्य । एतच्छास्त्राविरोधेन प्रणीतमेव वेदभाष्य प्रामाण्यमश्नुते । तत्र चेद कारणम्—जैमिनि स्वसमये यावदुपलम्भ वेदान् तच्छाखाश्च सर्वा परिशील्य सति विरोधे तत्प्रशमनाय न्यायानधिकरणे प्रवर्तयाम्बभूव । न केवलमिमे न्याया वेदभाष्यकर्तॄणामेवावलम्ब , किन्तु दार्शनिकाना निबन्धकर्तॄणा वैयाकरणानामालङ्कारिकाणाञ्च । विना द्वित्राणा मीमासान्यायसञ्चारेण दार्शनिका निबन्धकारा वैयाकरणा आलङ्कारिका वा स्वग्रन्थस्य न्यूनतामेव पश्यन्ति । तदत्र कानिचनोदाहरणानि विव्रियन्ते ।

भगवतो बादरायणस्य शिष्यो जैमिनिरिति प्रसिद्धि । शिष्यस्यापि सतो जैमिनेर्नाम बादरायणो गृह्णाति । जैमिनिरपि स्वगुरोर्नाम सूत्रेषु सादर व्यवहरति । शास्त्रकारयोरनयोर्मिथ स्वस्वसूत्रेषु व्यवहार शास्त्रयोर्विद्यमान नेदीयास सम्बन्धमवद्योतयति । भगवान् बादरायणो बहुत्र स्वोक्तार्थे सम्मतिप्रदर्शनव्याजेन मीमासान्यायान् सूचयति, याश्च भगवत्पादा॰ टीकाकाराश्च स्पष्ट विवृण्वते । यद्यपि पूर्वतन्त्रस्योत्तरतन्त्रस्य चास्ति विविक्तविषयत्वम्, नैकेनापरस्य गतार्थता तथापि उपनिषद्वाक्यार्थनिर्णयाय पूर्वतन्त्रन्याया उपयुज्यन्ते । यथा पर्युदासाधिकरणन्यायेन हान्यधिकरणवाक्यार्थनिर्णय॰ । दशमाध्याये जैमिनि॰ 'अपि तु वाक्यशेषत्वादितरपर्युदासस्स्यात् प्रतिषेधे च विकल्पस्स्यात्' इत्यधिकरणे विकल्पस्य दुष्टत्वात् सत्या गतौ विकल्पो नेष्टव्य इति प्रत्यपादयत् । 'यजतिषु येयजामह करोति' 'नानूयाजेषु ये यजामह करोति' इत्यत्र विधिनिषेधयो षोडशिग्रहणाग्रहणवद् विकल्पः उतानूयाजभिन्नेषु येयजामह कर्तव्य इति पर्युदास इति सशये सत्या गतौ विकल्पो न न्याय्य , तस्याष्टदोषदुष्टत्वात् । अत पर्युदास एवेति सिद्धान्त । श्रुत्यन्तरगतो विशेष श्रुत्यन्तरे यदि नाभ्युपेयते तर्हि तत्र सर्वत्र विकल्प ,स च सत्या गतौ नाभ्युपेतव्य इति न्यायस्य स्वरूपम्। अस्य न्यायस्य सञ्चार 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्द स्तुत्युपगानवत् तदुक्तम्' इति (३-३-२६) बादरायणसूत्रे परिदृश्यते । 'अश्व इव रोमाणि विधूय पाप चन्द्र इव राहोर्मुखात् प्रमुच्य' इत्यादौ छान्दोग्ये सुकृतदुष्कृतयोर्हानि त्याग उच्यते । श्रुत्यन्तरे च 'प्रिया ज्ञातय सुकृतमुपयान्ति अप्रिया दुष्कृतम्' इत्यादावुपायन ग्रहणमुक्तम् । अनयोरेकवाक्यत्वाभावे विकल्प प्रम-

ज्येत । स च सत्या गतौ न युक्तः । अत उभयोरेकवाक्यत्वमङ्गीकृत्य हानावप्युपायनान्वय इति पर्युदासाधिकरणन्यायसञ्चार ।

एव गुणमुख्यव्यतिक्रमाधिकरण ( पू० मी० ३.३.२ ) न्यायेन अक्षरध्यधिकरण ( ब्र० मी० ३.३२.०.) वाक्यार्थनिर्णय । "य एव विद्वान् अग्निमाधत्ते" इति विहितस्य याजुर्वेदिकस्याधानस्याङ्गतया वारवन्तीय–यज्ञायज्ञीय–वामदेव्याना साम्ना यजुर्वेद एव विनियोग उक्त । सामानि च सामवेद उत्पन्नानि । 'उपांशु यजुषा उच्चैस्साम्ना' इति यजुर्वेदस्योपांशुत्वस्वर, सामवेदस्य चोच्चैष्ट्वस्वर । तत्र सशय —किं यत्र सामवेदे सामानि उत्पद्यन्ते तत्रत्येनैवोच्चैष्ट्वेन स्वरेणाधाने प्रयोक्तव्यानि, उत यत्र यजुर्वेदे विनियुज्यन्ते तत्रत्येनोपांशुत्वस्वरेणाधाने प्रयोक्तव्यानीति । प्रधानविधेरङ्गविधायकताया अङ्गविधिप्रवृत्तिनिबन्धनत्वेन प्रधानवेदस्वरस्योपांशुत्वस्याङ्गेषु सामसु मन्दप्रवृत्तिकतया, अङ्गवेदस्वरस्य चोच्चैस्त्वस्य निरपेक्षतया प्रथम प्रवृत्तत्वेन प्रथमोपस्थिताङ्गवेदस्वरस्यैव ग्राह्यत्वाद्वारवन्तीयादीनामुच्चैस्त्वमेवेति पूर्वपक्षे सति, गुणमुख्ययोरङ्गविधिप्रधानविधिनिबन्धनस्वरयोः उच्चैस्त्वोपांशुत्वयोर्व्यतिक्रमे वारवन्तीयादिसामसु विरोधे सति गुणाना प्रधानार्थत्वान्मुख्येन प्रधानविधिनैव निमित्तेन 'उपांशु यजुषा' इति यजुर्वेदसयुक्तस्वर. प्रत्येतव्य. । ततश्च प्रधानवेदस्वरस्योपांशुत्वस्य प्रधानधर्मत्वात् तद्बाधे प्रधानवैगुण्यम् । अङ्गवेदस्वरस्योच्चैस्त्वस्य बाधे त्वङ्गवैगुण्यमिति वारवन्तीयादिसाम्ना प्रधानवेदनिबन्धनमुपांशुत्वमेवेति गुणमुख्यव्यतिक्रमाधिकरणे सिद्धान्तितम् । एवमेव 'अक्षरधिया त्ववरोध सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' ( ब्र० सू० ३. ३. ३३ ) इत्यधिकरणे ब्रह्ममीमासायाम् "एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु" इति बृहदारण्यकवाक्य, 'अथ परा यया तदक्षरमधिगम्यते यत्तद्रेश्यमग्राह्यम्' इति मुण्डकवाक्यञ्चोदाहृत्य गुणमुख्यव्यतिक्रमाधिकरणमनुरुध्य अक्षरतन्त्रत्वात् तद्विशेषणानां यत्र क्वापि शाखाया विद्यमानाना तेषामक्षरे उपसहार. प्रतिपादितः ।

'प्रदानवदेव तदुक्तम्' ( ब्र० सू० ३.३.३४ ) इत्यत्र 'नाना वा देवता पृथक्त्वात्' इति सङ्कर्षकाण्डीयमधिकरण दृष्टान्तीकृत्य "वायुर्वाव सवर्गः प्राणो वाव सवर्ग." इत्युभयत्र उपासनाप्रयोगभेदस्सिद्धान्तित । त्रिपुरोडाशिन्यामिष्टौ "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजाय इन्द्राय स्वराजे" इति विहिताया राजादिगुणभेदात् याज्यापुरोऽनुवाक्याव्यत्यासाच्च यथा यागभेदस्तथैवोपासनाप्रयोगभेदोऽपीति वाक्यार्थनिर्णय ।

'विधिर्वा धारणवत्' इति ( ब्र० सू० ३ ४. २० ) सूत्रे 'धारणवत्' इत्यनेनोपरि धारणाधिकरणन्याय बादरायणो दृष्टान्तमति । सन्न्यासाश्रमोऽस्ति नवेति सन्देहे 'ब्रह्मसंस्थोऽमृ-

तत्वमेति' इति वाक्ये ब्रह्मसस्थताया इतराश्रमेषु असम्भवात् सन्यासिनामेव च सम्भवात् अत्रैव सन्यासविधिः 'धारणवत्' इति सूत्रांशेन दृष्टान्तः प्रदत्त । दिष्टाग्निहोत्रे श्रूयते—'अधस्तात्समिध धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति । गार्हपत्यसमीपे स्थालीगत हविरग्निहोत्रहवण्यामुन्नीय तदधस्तात् समिध धारयन् आहवनीयसमीप नयेत्, हि यतः दैवे जीवदग्निहोत्रे समिधमग्निहोत्रहवण्यामुपरि धारयतीति वाक्यस्यार्थ.। तदत्र 'उपरि हि देवेभ्यो धारयति' इत्यस्य दिष्टाग्निहोत्रगताधस्ताद्धारणस्तावकत्वादनुवादत्वमेव न विधिरिति पूर्वपक्षे प्राप्ते—'विधिस्तु धारणेऽपूर्वत्वात्' ( जै० सू० ३-४-१५ ) इति सूत्रेणोपरिधारणस्य विधित्वमेवेति व्यवस्थापितम् । एतन्न्यायेन 'ब्रह्मसस्थोऽमृतत्वमेति' इति सन्यासविधिरेव ।

एव घटस्सन् इत्यादे प्रत्यक्षस्य 'नेह नानास्ति किञ्चन' इति शास्त्रेणोपमर्दमङ्गीकृत्य प्रत्यक्षस्य व्यावहारिकसत्त्वविषयकत्वमङ्गीक्रियते वेदान्तिभि । तत्रोपजीव्योपमर्दापेक्षया उपजीवकस्य शास्त्रस्यैवोपमर्द· लाक्षणिकार्थपरत्वरूप· कर्तु शक्यते । तथा च 'नेह नानास्ति' इत्यादे· प्रपञ्चसत्त्वाविरोधी अर्थो ग्राह्य इति पूर्वपक्षे 'इतरमन्य ' इति जैमिनीयतार्तीयन्यायात् समाधानमुच्यते । अग्नीषोमीयपशौ 'यूपाय परिवीयमाणायानुब्रूहि' इति सम्प्रैषानन्तर 'परिवीरसीति यूप परिव्ययति' इति यजुर्वेदे श्रुतम् । तत्रैव पशौ 'युवा सुवासा इत्यन्वाह' इति होतृवेदे श्रुतम् । 'परिवीरसि' इति करणमन्त्रोऽध्वर्युणा 'युवा सुवासा' इति क्रियमाणानुवादिमन्त्रो होत्रा च सम्प्रैषानन्तर पठनीयौ । यूपसमीपे तिष्ठन्नध्वर्यु. स्वीय मन्त्र पठति, होता च स्वस्थाने समुपविष्टो मन्त्र ब्रूत इति स्थिति । इमौ च मन्त्रौ चोदकेन कुण्डपायिनामयन सत्र प्राप्तौ । तत्र 'यो होता सोऽध्वयु.' इति श्रुतम् । अनेन होतुरध्वर्युत्वविधानाद् एकैकेनोभयोर्मन्त्रयो प्रकृतिवत् प्रयोक्तुमशक्यत्वादन्यतरस्य मन्त्रस्य त्यागेऽवश्यम्भाविनि 'परिधिद्वयर्थकत्वादुभयधर्मा स्यात्' इति न्यायेन स्वधर्माविरुद्धैरेवाध्वर्युकार्यै होता सम्बध्यत इति परिवीरसीत्याध्वर्यवमन्त्रस्त्यज्यत इति पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रम्—'विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषा यतो विशेषस्स्यात्' इति । 'यो होता सोऽध्वर्यु ' इति वचने होतुस्तत्कर्मणश्च प्राप्ति प्रकृतिवच्छब्देन भवति । तथा चास्य वचनस्य प्रत्यक्षवचनत्वमिति कृत्वोपजीव्य यत् 'प्रकृतिवद् विकृति कर्तव्या' इति वचन तस्य बाध होतृकर्मविषये सङ्कोचरूपोऽङ्गीकृत —अध्वर्युकार्यं यत् तद्धोता कुर्यादिति । तथा च 'युवा सुवासा ' इति हौत्रमन्त्र परित्यज्य 'परिवीरसि'इत्याध्वर्यव एव करणमन्त्र प्रयोज्य । एवमिहापि षड्विधतात्पर्य-

लिङ्गोपेताद्वैतश्रुतिप्राबल्यात् प्रत्यक्षस्योपजीव्यस्यापि व्यावहारिकविषयत्वकल्पनरूपो बाधस्सोढव्य इति सिध्यति ।

एवं ब्रह्मसूत्रकारैस्स्वसूत्रेषूपनिबद्धानां पूर्वतन्त्रन्यायानामुपबृंहणाय वाचस्पतिमिश्रप्रभृतयष्टीकाकाराः न्यायान्तराणि सन्निवेश्योपनिषद्वाक्यार्थं निष्कृष्टं निरूपयन्ति । तत्र परिमलकारा अप्पय्यदीक्षितेन्द्रा विशेषेणोल्लेखमर्हन्ति इति सुप्रसिद्धमिदम् ।

एवं वेदमूलानां तत्तन्महर्षिभिर्विरचितानां स्मृतिसन्दर्भाणां क्वचित्क्वचिन्मिथो विरुद्धवदवभासमानानां समन्वयाय निबन्धकारा इमानेव मीमांसान्यायान् तत्र तत्र सञ्चारयन्ति, येन च निष्कृष्टो वाक्यार्थो निर्गलितो भवेत् ।

वैयाकरणभूषणसारे श्रीकौण्डभट्टः मीमांसकमतखण्डनाय मण्डनाय वा अरुणाधिकरण–बलाबलाधिकरण–विश्वजिदधिकरण–जञ्जभ्यमानाधिकरण–रात्रिसत्राधिकरण–दण्डप्रदानाधिकरणादिसिद्धन्यायान् सञ्चार्य स्वग्रन्थं परिपोषयति, तद्व्याख्याता दर्पणकारो न्यायानिमान् सुविशदं मीमांसकशैल्या विवृणोति । तथैव काव्यप्रकाश-ध्वन्यालोकलोचन-कुवलयानन्द-चित्रमीमांसाद्यलङ्कारग्रन्थेष्वपि मीमांसान्यायसञ्चारो भूयानुपलभ्यते । 'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता' इति वदन्तो भट्टपादा विषयमेनं द्रढयन्ति ।

तत्र भाष्यकारस्य शबरस्वामिनः पूर्वं जैमिनिसूत्राणां द्वित्रा वृत्तय आसन्, किन्तु ता अनुपलम्भदोषदूषिताः । प्रायः खिस्तो पूर्वं द्वितीयशताब्द्यां शबरस्वामिना विरचिताज्जैमिनिसूत्रभाष्यादनन्तरं बहुशतकपर्यन्तं सूत्रवृत्तिरूपेण कोऽपि ग्रन्थो नाविर्भूतः । अयं मीमांसादर्शनस्य शबरस्वामिपर्यन्तमुत्पत्तिकालः । वार्तिककारान् भट्टपादान् आरभ्य विकासकालः समारब्धः । तत्रापि खिस्तो परं दशमशताब्दीतः सूत्राण्यनपेक्ष्य तत्सारनिरूपणात्मका अधिकरणग्रन्था आविरभवन् । एतादृशग्रन्थस्य प्रथमः आविष्कारकः पार्थसारथिमिश्रः इति मीमांसकसमाजे प्रवादः । तदनु भाट्टदीपिकाजैमिनिन्यायमालाप्रभृतयो ग्रन्था तेषां व्याख्यानरूपाश्च ग्रन्था अनेके प्रादुर्बभूवुः । तत्र खण्डदेवाचार्याः बलाबलाधिकरणपर्यन्तं मीमांसाकौस्तुभाख्यं सूत्रव्याख्यानव्याजेनातिप्रौढं नैकविधमीमांसापदार्थतत्त्वावेदकं ग्रन्थं प्राणैषुः । शाबरभाष्यं विहाय समग्राणां जैमिनीयानां सूत्राणामर्थावबोधाय नान्यत्साधनमासीत् । अधिकरणार्थावबोधमात्रेण सूत्रार्थावबोधनमतिदुष्करम् । मीमांसाध्येतारो विनैव सूत्रार्थावबोधेनाधिकरणार्थं जानन्तो महतीं न्यूनतामन्वभवन् । इयं दशा खिस्तो परमष्टादशशताब्दीपर्यन्तमनुस्यूताभवत् । अस्मिन्नेवावसरे श्रीमतो वासुदेवदीक्षितस्याविर्भावः । दक्षिणदेशेषु कावेर्याः परिसरे तञ्जावूरमण्डलान्तर्गते कस्मिंश्चन श्रोत्रियग्रामे दीक्षितस्य जन्मेत्यनुमीयते । कुतूहलवृत्तेस्तत्तदध्यायान्ते

तत्वमेति' इति वाक्ये ब्रह्मसस्थताया इतराश्रमेषु असम्भवात् सन्यासिनामेव च सम्भवात् अत्रैव सन्यासविधिः 'धारणवत्' इति सूत्रांशेन दृष्टान्त. प्रदत्त । दिष्टाग्निहोत्रे श्रूयते—'अधस्तात्समिध धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति । गार्हपत्यसमीपे स्थालीगत हविरग्निहोत्रहवण्यामुन्नीय तदधस्तात् समिध धारयन् आहवनीयसमीप नयेत्, हि यत दैवे जीवदग्निहोत्रे समिधमग्निहोत्रहवण्यामुपरि धारयतीति वाक्यस्यार्थ । तदत्र 'उपरि हि देवेभ्यो धारयति' इत्यस्य विष्टाग्निहोत्रगताधस्ताद्धारणस्तावकत्वादनुवादत्वमेव न विधिरिति पूर्वपक्षे प्राप्ते—'विधिस्तु धारणेऽपूर्वत्वात्' ( जै० सू० ३-४-१५ ) इति सूत्रेणोपरिधारणस्य विधित्वमेवेति व्यवस्थापितम् । एतन्न्यायेन 'ब्रह्मसस्थोऽमृतत्वमेति' इति सन्यासविधिरेव ।

एव घटस्सन् इत्यादे प्रत्यक्षस्य 'नेह नानास्ति किञ्चन' इति शास्त्रेणोपमर्दमङ्गीकृत्य प्रत्यक्षस्य व्यावहारिकसत्त्वविषयकत्वमङ्गीक्रियते वेदान्तिभि । तत्रोपजीव्योपमर्दापेक्षया उपजीवकस्य शास्त्रस्यैवोपमर्द लाक्षणिकार्थपरत्वरूप. कर्तुं शक्यते । तथा च 'नेह नानास्ति' इत्यादे· प्रपञ्चसत्त्वाविरोधी अर्थो ग्राह्य इति पूर्वपक्षे 'इतरमन्य' इति जैमिनीयतार्तीयन्यायात् समाधानमुच्यते । अग्नीषोमीयपशौ 'यूपाय परिवीयमाणायानुब्रूहि' इति सम्प्रैषानन्तर 'परिवीरसीति यूप परिव्ययति' इति यजुर्वेदे श्रुतम् । तत्रैव पशौ 'युवा सुवासा इत्यन्वाह' इति होतृवेदे श्रुतम् । 'परिवीरसि' इति करणमन्त्रोऽध्वर्युणा 'युवा सुवासा' इति क्रियमाणानुवादिमन्त्रो होत्रा च सम्प्रैषानन्तर पठनीयौ । यूपसमीपे तिष्ठन्नध्वर्यु. स्वीय मन्त्र पठति, होता च स्वस्थाने समुपविष्टो मन्त्र ब्रूत इति स्थिति· । इमौ च मन्त्रौ चोदकेन कुण्डपायिनामयन सत्र प्राप्तौ । तत्र 'यो होता सोऽध्वयु.' इति श्रुतम् । अनेन होतुरध्वर्युत्वविधानाद् एकैकेनोभयोर्मन्त्रयो प्रकृतिवत् प्रयोक्तुमशक्यत्वादन्यतरस्य मन्त्रस्य त्यागेऽवश्यम्भाविनि 'परिधिद्वयर्थकत्वादुभयधर्मा स्यात्' इति न्यायेन स्वधर्माविरुद्धैरेवाध्वर्युकार्ये होता सम्बध्यत इति परिवीरसीत्याध्वर्यवमन्त्रस्त्यज्यत इति पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रम्—'विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषा यतो विशेषस्स्यात्' इति । 'यो होता सोऽध्वर्यु' इति वचने होतुस्तत्कर्मणश्च प्राप्ति प्रकृतिवच्छब्देन भवति । तथा चास्य वचनस्य प्रत्यक्षवचनत्वमिति कृत्वोपजीव्य यत् 'प्रकृतिवद् विकृति कर्तव्या' इति वचन तस्य बाध होतृकर्मविषये सङ्कोचरूपोऽङ्गीकृत.—अध्वर्युकार्यं यत् तद्धोता कुर्यादिति । तथा च 'युवा सुवासा' इति हौत्रमन्त्र परित्यज्य 'परिवीरसि'इत्याध्वर्यव एव करणमन्त्र प्रयोज्य । एवमिहापि षड्विधतात्पर्य-

लिङ्गोपेताद्वैतश्रुतिप्राबल्यात् प्रत्यक्षस्योपजीव्यस्यापि व्यावहारिकविषयत्वकल्पनरूपो बाधस्सोढव्य इति सिध्यति ।

एवं ब्रह्मसूत्रकारैस्स्वसूत्रेषूपनिबद्धाना पूर्वतन्त्रन्यायानामुपबृंहणाय वाचस्पतिमिश्रप्रभृतयष्टीकाकारा न्यायान्तराणि सन्निवेश्योपनिषद्वाक्यार्थं निष्कृष्टं निरूपयन्ति । तत्र परिमलकारा अप्पय्यदीक्षितेन्द्रा विशेषेणोल्लेखमर्हन्ति इति सुप्रसिद्धमिदम् ।

एव वेदमूलाना तत्तन्महर्षिभिर्विरचिताना स्मृतिसन्दर्भाणा क्वचित्क्वचिन्मिथो विरुद्धवदवभासमानाना समन्वयाय निबन्धकारा इमानेव मीमासान्यायान् तत्र तत्र सञ्चारयन्ति, येन च निष्कृष्टो वाक्यार्थो निर्गलितो भवेत् ।

वैयाकरणभूषणसारे श्रीकौण्डभट्ट· मीमासकमतखण्डनाय मण्डनाय वा अरुणाधिकरण–बलाबलाधिकरण–विश्वजिदधिकरण–जञ्जभ्यमानाधिकरण–रात्रिसत्राधिकरण–दण्डप्रदानाधिकरणादिसिद्धन्यायान् सञ्चार्य स्वग्रन्थ परिपोषयति, तद्व्याख्याता दर्पणकारो न्यायानिमान् सुविशद मीमासकशैल्या विवृणोति । तथैव काव्यप्रकाश-ध्वन्यालोकलोचन-कुवलयानन्द-चित्रमीमासाद्यलङ्कारग्रन्थेष्वपि मीमासान्यायसञ्चारो भूयानुपलभ्यते । 'मीमासाख्या तु विद्येय बहुविद्यान्तराश्रिता' इति वदन्तो भट्टपादा विषयमेन द्रढयन्ति ।

तत्र भाष्यकारस्य शबरस्वामिन पूर्वं जैमिनिसूत्राणा द्वित्रा वृत्तय आसन्, किन्तु ता अनुपलम्भदोषदूषिता· । प्राय खिस्तो· पूर्वं द्वितीयशताब्द्या शबरस्वामिना विरचिताज्जैमिनिसूत्रभाष्यादनन्तर बहुशतकपर्यन्त सूत्रवृत्तिरूपेण कोऽपि ग्रन्थो नाविर्भूत· । अय मीमासादर्शनस्य शबरस्वामिपर्यन्तमुत्पत्तिकाल । वार्तिककारान् भट्टपादान् आरभ्य विकासकाल समारब्धः । तत्रापि खिस्तो पर दशमशताब्दीत सूत्राण्यनपेक्ष्य तत्सारनिरूपणात्मका अधिकरणग्रन्था आविरभवन् । एतादृशग्रन्थस्य प्रथम आविष्कारकः पार्थसारथिमिश्र इति मीमासकसमाजे प्रवाद· । तदनु भाट्टदीपिकाजैमिनिन्यायमालाप्रभृतयो ग्रन्था तेषा व्याख्यानरूपाश्च ग्रन्था अनेके प्रादुर्बभूवु । तत्र खण्डदेवाचार्याः बलाबलाधिकरणपर्यन्तं मीमासाकौस्तुभाख्य सूत्रव्याख्यानव्याजेनातिप्रौढ नैकविधमीमासापदार्थतत्त्वावेदक ग्रन्थ प्राणैषु । शाबरभाष्य विहाय समग्राणा जैमिनीयाना सूत्राणामर्थावबोधाय नान्यत्साधनमासीत् । अधिकरणार्थावबोधमात्रेण सूत्रार्थावबोधनमतिदुष्करम् । मीमासाध्येतारो विनैव सूत्रार्थावबोधेनाधिकरणार्थं जानन्तो महती न्यूनतामन्वभवन् । इय दशा खिस्तो परमष्टादशशताब्दीपर्यन्तमनुस्यूताभवत् । अस्मिन्नेवावसरे श्रीमतो वासुदेवदीक्षितस्याविर्भाव । दक्षिणदेशेषु कावेर्याः परिसरे तञ्जावूरमण्डलान्तर्गते कस्मिश्चन श्रोत्रियग्रामे दीक्षितस्य जन्मेत्यनुमीयते । कुतूहलवृत्तेस्तत्तदध्यायान्ते

दृश्यमानेन विवरणेनैतज्ज्ञायते—यच्चोलमहीमहेन्द्रस्य श्रीशाहजिशरभजितुक्कोजिनाम्नो राज्ये-ऽमात्यधुरमावहत आनन्दरायस्य निर्वर्तितमहाग्निचयनक्रतो पञ्चपुरुषीपोष्यः श्रीविश्वेश्वरवाजपेययाजी अध्वर्युरासीत्। अस्य च माता अन्नपूर्णा पिता च श्रीमहादेववाजपेययाजी। अथ पदवाक्यप्रमाणपारावारपारीण वाल्य एवामात्यवरस्य श्रीआनन्दरायस्य दयया निर्वर्तितवाजपेयसर्वपृष्ठाप्तोर्यामादिसस्थाकक्रतुः प्रसिद्धोऽभवत्। तस्यायमनुज श्रीवासुदेवदीक्षित इति।

अग्रजात् श्रीविश्वेश्वरवाजपेययाजिनो लब्धविद्यावैदुष्यमेन श्रीवासुदेवदीक्षित सर्वे एव संस्कृताध्येतार सुपरिचिन्वन्ति। अयमेव सिद्धान्तकौमुद्यास्सुविशदा सरला मनोहराञ्च व्याख्या बालमनोरमाभिधा व्यरचयत्। बालमनोरमा चास्य द्वितीयो ग्रन्थ। प्रथम कुतूहलवृत्तिमेव निबबन्ध। दीक्षितविरचित 'वासुदेव कारिका' इति नाम्ना अग्निहोत्रमारभ्याश्वमेध पर्यन्त क्रतूना स्वरूपाववोधक प्रयोगात्मको ग्रन्थ उपलभ्यते। कुतूहलवृत्तिनिर्माणेन मीमासाध्येतृणा या न्यूनता सूत्रार्थापरिज्ञाननिवन्धना सा वासुदेवदीक्षितेन सर्वथा परिहृतेति वक्तु शक्यते। अस्य ग्रन्थस्य विलक्षण साभिप्रायञ्च नाम कृत ग्रन्थकारेण—'अध्वरमीमासाकुतूहलवृत्ति-' इति। नास्ति ध्वरो हिंसा यस्यास्सा अध्वरा, सा चासौ मीमासा-पूज्यविचारश्चाध्वरमीमासा। तल्लक्षितानि सूत्राणीत्यर्थ। तस्या कुतूहलेन क्रियमाणा वृत्ति—अध्वरमीमासाकुतूहलवृत्तिः। अध्वराणा क्रतूना मीमासा, तल्लक्षितसूत्राणि तस्या कुतूहलेन क्रियमाणा वृत्तिरिति वा। एव नामाधातुर्ग्रन्थकारस्यायमाशय—मीमासासूत्राणा प्रतिपदव्याख्यानमात्रेण न मे व्यापार उपशाम्यति, किन्तु अग्निहोत्रदर्शपूर्णमाससप्तसस्थाकज्योतिष्टोमप्रभृतयो यावन्तोऽध्वरा तेषामपि मीमासया विचारेण सह सूत्राणा वृत्तिसम्पादन मामकीनो व्यापार इति। स्थानेऽयमाशय। जैमिनिर्हि सूत्रकार नानाशाखागतानि वाक्यानि मनसि निधाय तत्र तत्र वाक्यार्थनिष्कर्षाय सूत्राणि निबध्नाति। वेदवाक्यगर्भितत्व सूत्राणामिति पूर्वमवोचम्। किंशाखागत वाक्य जैमिनेरभिमतमिति परिज्ञान न सुलभम्। शबरस्वामिनोऽपि भाष्यकारा 'विशये प्रायदर्शनात्' ( जै. सू २.३.१६ ) इति सूत्रव्याख्यानावसरे स्पष्ट वदन्ति—'वृत्तिकारवचनात्प्रतिज्ञा सशयश्चावगच्छाम' इति।

तत्र भाष्यकारै. विषयवाक्यानि निर्धार्य प्रदर्शितमधिकरणस्वरूपमवलम्ब्यैव प्रवृत्तेष्वपि ग्रन्थकारेषु श्रीवासुदेवदीक्षित कञ्चनातिशयमाबिभर्ति। तथाहि—अभ्यासाधिकरणे 'समिधो यजति' 'तनूनपात यजति' इत्यादि पञ्च वाक्यान्युदाहृत्य किमत्र भावनैक्यम् उत भावनाभेद इति सन्दिह्य प्रत्ययार्थस्य भावनाया प्रकृत्यर्थस्य यागस्य चैकत्वात् भावनैक्यमा-

शाङ्ख्यानन्यपरविधिपुन श्रवणरूपाभ्यासस्य भावनाभेदकत्वाद्भावनाभेद इति यथाभाष्यम-धिकरण समाप्य 'अत्र ब्रूम' इत्यादिना 'तस्मात्प्रयाजैर्यजति' इत्यादि शातपथश्रुतिम् अन्यानि च प्रमाणानि सम्प्रदर्श्य सङ्ख्ययैव प्रयाजेषु कर्मभेद व्यवस्थाप्य 'समिधो यजति' 'तनूनपात यजति' इत्यादीना तत्तद्याज्याविधायकत्वमेवेत्यभिधायाधिकरणस्योदाहरण 'वाजप्रसवीय जुहोति' 'राष्ट्रभृतो जुहोति' इत्याद्युदाहार्यमित्युपसहरति। एवमरुणाधिकरणे 'अत्रेद वक्त-व्यम्—वाजसनेयशाखाया "तस्मात्सोम क्रीणाति" इति द्रव्यसयोगेन विना सोमक्रयस्योत्पत्ति-वाक्य श्रुतम्' इत्यादिना द्रव्यासयुक्त क्रयवाक्यमुदाहृत्य तत्रारुणादिवाक्याना गुणविधायकत्व विनैव वाक्यभेदमुपपाद्य 'सूत्रन्त्वेव योज्यम्' इत्यधिकरणमारचयति। मन्त्राधिकरणे 'तद-र्थशास्त्रात्' इत्यादिभि• पञ्चदशहेतुभि• यथाभाष्य मन्त्राणामर्थप्रतिपादकत्व समुपपाद्य 'अत्रेद प्रतिभाति' 'इयाँस्तु विशेष•' इत्यादिना मन्त्रार्थप्रतिपत्ति प्रयोक्तु श्रोतुर्वा इति विचार समुत्थाप्य 'भाष्यवार्तिकदिकृतो मन्त्रप्रयोक्तुरेव मन्त्रजन्य शाब्दबोध मन्यन्ते। तत्तु वय न मृष्यामहे, शब्दोच्चारणस्य पर प्रत्येव शाब्दबोधजनकत्वस्वाभाव्यात्' इति श्रोतृदेवताया एव मन्त्रार्थप्रतिपत्तिमुपपादयन्नन्ते 'तथा च कर्मकाले कल्पसूत्रादितो विनियोगमात्र जाना-नस्यार्थज्ञानशून्यस्यापि मन्त्रप्रयोगस्सिद्ध' इत्युपसहरति। तृतीयप्रथमे चतुर्थीकरणाधि-करणेऽधिकरणसिद्धान्त सुविशद प्रतिपाद्यान्ते शाखान्तरीयाधिकविध्युपसहारस्यानित्यत्व सकलकल्पकाराभिमतमिति सप्रमाण निरूप्य 'जैमिनेरप्याचार्यस्य मतेऽनित्य एव शाखान्त-रीयाणामधिकविधीनामुपसहार' इति वदन् ग्रन्थकारस्तत्र षष्ठान्त्याधिकरणस्य 'पशुचोद-नायामनियमोऽविशेषात्' 'छागो वा मन्त्रवर्णात्' इति सूत्रे प्रमाणत्वेन निर्दिशति। यदि शाखान्तरीयाधिकधीनामुपसहार• नित्यस्स्यात्तर्हि 'अजोऽग्नीषोमीय' इति शाखान्तरे श्रव-णात् 'छागो वा मन्त्रवर्णात्' इति सूत्रेण विशेष उपसहारकथन व्यर्थमित्यधिकरणमेवानर्थक स्यात्। तस्यानित्यत्वे चाधिकरणमर्थवत्स्यादिति दीक्षिताशय। अत्र भाष्यकारमतमुत्थाप्य भाष्यकारमधिक्षिपति—'यत्तु भाष्यकारादिभि कृत्वाचिन्तया तदधिकरणप्रवृत्तिर्वर्णिता तदेत-त्सर्वज्ञस्य सूत्रकारस्य मौढ्य वर्णयद्भि तदपेक्षया सार्वज्ञ्यमपि स्वेषु प्रकटयद्भि• सूत्रकारा-शयानभिज्ञत्वमेव तेषामाविष्कृतमिति तानेव वयमुपेक्षामहे' इत्यादिना। अयमाशय—यत्र जैमिनिसूत्रमनुल्लिखितवाक्यविशेष भवति तत्र सूत्रव्याख्यातृभिः स्वबुद्ध्या किञ्चन विषय-वाक्यमुत्प्रेक्ष्याधिकरणशरीर रचयितव्यम्। यदि तत्राधिकरणस्यानुन्मेष, विषयान्तरस्य न परिस्फूर्तिः तर्हि कृत्वाचिन्तयाधिकरण वर्णनीयमिति स्थिति। अत्र च 'पशुचोदनाया' इति पशवाक्यस्यैव सूत्रे कण्ठत उदाहृतत्वात्कृत्वाचिन्ताया कथमवसर इति। एव कल्पसूत्राधि-

करणे 'सर्वोऽपरपक्ष पूर्णमासस्य कालः सर्वं पूर्वपक्षो दर्शस्य' इति निदानसूत्र 'अमावास्यायाममावास्यया यजेत, पौर्णमास्या पौर्णमास्या यजेत' इति प्रत्यक्षश्रुतिविरुद्धत्वादप्रमाणम् प्रतिपादयता भाष्यकाराणा मतमुल्लिख्य 'अत्रेद चिन्त्यम्' इत्यादिना बोधायनापस्तम्बादिभि प्रदर्शिता 'अथैकेषा वि वा एतस्य यज्ञश्छिद्यते, यस्य यज्ञे प्रततेऽन्तरामेतामिष्टिं निर्वपन्ति' इति श्रुतिमुदाहृत्य निदानसूत्रस्य प्रामाण्य व्यवस्थापयन् अन्ते 'सर्वोऽपरपक्ष पूर्णमासस्य' इति कल्पसूत्रमिद प्रत्यक्षश्रुतिविरोधादप्रमाण्ये कथमुदाहृत भाष्यकृता' इति पृच्छति ग्रन्थकार । एव तत्रैव प्रत्यक्षश्रुतिविरुद्धत्वात् कात्यायनापस्तम्बादीनामपि वचनाना न्यायाभासमूलकत्वेनाप्रामाण्य व्यवस्थापयता वार्तिककाराणामपि मतम् 'यच्च वार्तिकादिग्रन्थेषु' इत्यादिनानूद्य तदुद्धारस्तु तत्तदधिकरणे निरूपयिष्यते । तथा च किञ्चित्कल्पसूत्रवाक्यान्तरमुदाहरणान्तरमत्रान्वेषणीयम्' इत्युपसहरति ।

तथैव गुणाधिकरणे यथाभाष्य यथावार्तिकञ्च 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति वाक्यमुदाहृत्य सशयपूर्वोत्तरपक्षैरधिकरण परिसमाप्य 'वस्तुतस्तु–"अग्निर्वायु सूर्य ते वै वाजिन" इत्यादिवाक्यशेषतो वाजिशब्दस्य त्रिवृच्चर्वश्ववालादिशब्दवत्पदार्थान्तरपरतया निश्चितत्वेन तस्य विश्वदेवपरत्वमुखेन तद्यागानुवादकतामवलम्ब्य कथ पूर्वपक्षप्रवृत्ति । अत उदाहरणान्तरमन्वेषणीयम्' इत्युपसहरति । एव द्वितीयतृतीये–अश्वदाभ्याधिकरणे 'योऽदाभ्य गृहीत्वा सोमाय यजते, योऽशु गृह्णाति' इत्यनारभ्यवाक्यमुदाहृत्याधिकरण समाप्य 'अत्रेद वक्तव्यम्' इत्यादिना द्रव्यदेवतयो प्राप्ति प्रदर्श्य द्रव्यदेवतासम्बन्धाक्षिप्तयागविधित्वमेवास्य वाक्यस्य न तु ग्रहणसस्कारविधित्वमित्युपपाद्यान्तेऽधिकरणस्य 'यत्पृश्नयो गृह्यन्ते' 'प्राणग्रहान् गृह्णाति' इत्युदाहरणमिति वदति ।

एवमय ग्रन्थकार क्वचिद्भाष्य क्वचिद्वार्तिक क्वचिदुभय क्वचिच्च शास्त्रदीपिकासन्दर्भं विमृशन् तत्र तत्र विद्यमानान् दोषानुद्घाटयन्, क्वचिच्च भाष्यकारान् विशेषतश्च 'वैदिकशिरोमणीना वार्तिककाराणाम्' इति निर्दिशन् भट्टपादाश्च प्रशसन् कल्पसूत्रकाराणा याज्ञिकानाञ्च पक्ष समर्थयति ।

एवमादिभिरनेकैस्सन्दर्भैरिद निश्चेतु शक्यते–यद् यो नाम वेदेषु वेदयो वेदे वा, श्रौतसूत्रेषु, श्रौतप्रयोगेषु च परिनिष्णातस्स एव मीमासामधिगन्तुमध्यापयितु ग्रन्थाश्च लिखितु क्षम , पदार्थांश्च विवेचयितु समर्थ इति । तदस्य परिज्ञानं न केवल ग्रन्थानामध्ययनेनैव सिध्यति, किन्तु श्रौतकर्मप्रयोगदर्शनेन विशेषत तेषामनुष्ठानेन च । तदत्र श्रीवासुदेवदीक्षित परम वैदुष्यमाविभर्तीति कुतूहलवृत्तिरेव तदीया कथयति । यावदुपलम्भ सर्वं वैदिकवाङ्मय

दीक्षितस्य पुरतो नृत्यतीति कथनं नातिशयोक्तये कल्पेत । आर्षग्रन्थेष्वस्य महानादरः । भगवतो जैमिने वेदवाक्यार्थनिर्णयौपयिकन्यायाविष्काराय सूत्राणि रचयितु प्रवृत्तस्य मनसि नैकस्य वेदस्य काचन शाखाऽऽसीत्, किन्तु सर्वा अपि शाखा पारिप्लवेनोपस्थिता आसन् । भाष्यवार्तिककाल एव तास्वनेकासा विलय शबरस्वामिभट्टपादप्रभृतिभिरन्वभावि । संस्कृत-वाङ्मयस्य तत्रापि वैदिकस्येतिहासस्य प्राचीनतमत्वव्यवस्थापने यथेय भगवती मीमांसोपक-रोति न तथाऽन्यच्छास्त्रमिति प्रसिद्धम् । तत्राय श्रीवासुदेवदीक्षित भाष्य वार्तिक तदनन्त-रवर्तिनस्सकलान् ग्रन्थान् परिशील्य वैदिकवाङ्मयञ्च पर्यालोच्य जैमिनेर्हृदयञ्च निर्धार्य प्रत्यक्षत श्रौतप्रयोगाननुसृत्य वृत्तिग्रन्थमिम प्रणिनाय । क्वचित्क्वचिद् विषयवाक्यार्थप्रवे-शाय तत्रत्य सन्दर्भं 'इति स्थितिः' इति लिखन् प्रदर्शयति, येन चाध्येतृणा करिष्यमाणविषय-विवेचने सुखेन प्रवेशो जायेत । यतोऽस्य श्रौतेषु विषयेष्वप्रतिहता गतिः तत एव भाष्य-वार्तिकादिखण्डनमण्डनयोर्निर्भीकास्य प्रवृत्ति । अतिदुरूहानामपि विषयाणा सरलया प्रसन्नया च भाषया प्रतिपादनमस्य सहजो गुण । क्वचित् शास्त्रसिद्धशैल्यैव निरूपणीयेष्वपि स्थलेषु वाक्यरचनाऽस्य सरला परिदृश्यते । यद्यप्यय ग्रन्थः मीमांसाध्येतृणा प्रारम्भिकः तथाप्यस्य सर्वात्मनावगतिः प्रौढावस्थायामेव भवति । द्वादशाध्यायात्मकमिम ग्रन्थ सम्यग्योऽधीते, मन्ये तस्य नान्य कश्चन ग्रन्थो विशेषेणाध्येतुमवशिष्टस्स्यादिति । प्राय प्रत्यधिकरण पूर्वपक्षे सिद्धान्ते वा विषयविवेचनावसरेऽधिकरणान्तरसिद्धान् न्यायान् सञ्चार्य प्रकृतविषयपरिपोषणे सिद्धहस्तोऽय ग्रन्थकारः । शास्त्रान्तरेषु वेदान्तादिषु यथा मीमांसान्यायसञ्चारः क्रियते तथैव मीमांसका अपि स्वीयेषु ग्रन्थेषु विषयपरिष्कारायाधिकरणान्तरसिद्धान् सञ्चारयन्ति न्यायान् । तत्र श्रीमन्तः अप्पय्यदीक्षितेन्द्रा प्राथम्यमावहन्ति, तदनन्तरस्थानमाबिभर्ति श्रीवा-सुदेवदीक्षित ।

अथ भागस्तृतीयाध्यायान्त । धर्मप्रमाण भेद शेषशेषिभावश्चेति त्रयाणामध्यायाना विषयाः । तत्र प्रथमेऽध्याये अथातो धर्मजिज्ञासा' इति सूत्रेण प्रमाणस्वरूपसाधनफलैर्धर्मस्य विचार प्रतिज्ञाय प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनाया पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानि-राकरणपूर्वक प्रामाण्यमुपपाद्य शब्दतदर्थतत्सम्बन्धानित्यत्व वेदापौरुषेयत्वञ्चोपपादितम् । द्विती-यपादेऽर्थवादमन्त्रभागयो विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयार्थस्मृतिसमर्पकतया, तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्याचारादीना मूलवेदाद्यनुमापकतया, चतुर्थपादे 'उद्भिदा यजेत पशुकाम' 'चित्रया यजेत पशुकाम' 'अग्निहोत्र जुहोति' 'श्येनेनाभिचरन् यजेत' इत्यादिविधि-वाक्यगतानामुद्भिदादिपदाना नाम्ना कर्मभेद, नाम्ना धर्मातिदेश, नाम्ना दूरस्थस्यानुवाद

करणे 'सर्वोऽपरपक्ष पूर्णमासस्य कालः सर्वं पूर्वपक्षो दर्शस्य' इति निदानसूत्र 'अमावास्यायाममावास्यया यजेत, पौर्णमास्या पौर्णमास्या यजेत' इति प्रत्यक्षश्रुतिविरुद्धत्वादप्रमाणम् प्रतिपादयता भाष्यकाराणा मतमुल्लिख्य 'अत्रेद चिन्त्यम्' इत्यादिना बोधायनापस्तम्बादिभि प्रदर्शिता 'अथैकेषा वि वा एतस्य यज्ञश्छिद्यते, यस्य यज्ञे प्रततेऽन्तरामेतामिष्टि निर्वपन्ति' इति श्रुतिमुदाहृत्य निदानसूत्रस्य प्रामाण्य व्यवस्थापयन् अन्ते 'सर्वोऽपरपक्ष पूर्णमासस्य' इति कल्पसूत्रमिद प्रत्यक्षश्रुतिविरोधादप्रमाण्ये कथमुदाहृत भाष्यकृता' इति पृच्छति ग्रन्थकार। एव तत्रैव प्रत्यक्षश्रुतिविरुद्धत्वात् कात्यायनापस्तम्बादीनामपि वचनाना न्यायाभासमूलकत्वेनाप्रामाण्य व्यवस्थापयता वार्तिककाराणामपि मतम् 'यच्च वार्तिकादिग्रन्थेषु' इत्यादिनानूद्य तदुद्धारस्तु तत्तदधिकरणे निरूपयिष्यते। तथा च किञ्चित्कल्पसूत्रवाक्यान्तरमुदाहरणान्तरमत्रान्वेषणीयम्' इत्युपसहरति।

तथैव गुणाधिकरणे यथाभाष्य यथावार्तिकञ्च 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति वाक्यमुदाहृत्य सशयपूर्वोत्तरपक्षैरधिकरण परिसमाप्य 'वस्तुतस्तु—"अग्निर्वायु सूर्य ते वै वाजिन" इत्यादिवाक्यशेषतो वाजिशब्दस्य त्रिवृच्चर्वश्ववालादिशब्दवत्पदार्थान्तरपरतया निश्चितत्वेन तस्य विश्वदेवपरत्वमुखेन तद्यागानुवादकतामवलम्ब्य कथ पूर्वपक्षप्रवृत्ति। अत उदाहरणान्तरमन्वेषणीयम्' इत्युपसहरति। एव द्वितीयतृतीये—अश्वदाभ्याधिकरणे 'योऽदाभ्य गृहीत्वा सोमाय यजते, योऽशु गृह्णाति' इत्यनारभ्यवाक्यमुदाहृत्याधिकरण समाप्य 'अत्रेद वक्तव्यम्' इत्यादिना द्रव्यदेवतयो प्राप्ति प्रदर्श्य द्रव्यदेवतासम्बन्धाक्षिप्तयागविधित्वमेवास्य वाक्यस्य न तु ग्रहणसस्कारविधित्वमित्युपपाद्यान्तेऽधिकरणस्य 'यत्पृश्नयो गृह्यन्ते' 'प्राणग्रहान् गृह्णाति' इत्युदाहरणमिति वदति।

एवमय ग्रन्थकार क्वचिद्भाष्य क्वचिद्वार्तिक क्वचिदुभय क्वचिच्च शास्त्रदीपिकासन्दर्भं विमृशन् तत्र तत्र विद्यमानान् दोषानुद्घाटयन्, क्वचिच्च भाष्यकारान् विशेषतश्च 'वैदिकशिरोमणीना वार्तिककाराणाम्' इति निर्दिशन् भट्टपादाश्च प्रशसन् कल्पसूत्रकाराणा याज्ञिकानाञ्च पक्ष समर्थयति।

एवमादिभिरनेकैस्सन्दर्भैरिद निश्चेतु शक्यते—यद् यो नाम वेदेषु वेदयो. वेदे वा, श्रौतसूत्रेषु, श्रौतप्रयोगेषु च परिनिष्णातस्स एव मीमासामधिगन्तुमध्यापयितु ग्रन्थाश्च लिखितु क्षम, पदार्थांश्च विवेचयितु समर्थ इति। तदस्य परिज्ञानं न केवल ग्रन्थानामध्ययनेनैव सिध्यति, किन्तु श्रौतकर्मप्रयोगदर्शनेन विशेषत तेषामनुष्ठानेन च। तदत्र श्रीवासुदेवदीक्षित परम वैदुष्यमाविभर्तीति कुतूहलवृत्तिरेव तदीया कथयति। यावदुपलम्भ सर्वं वैदिकवाङ्मय

दीक्षितस्य पुरतो नृत्यतीति कथनं नातिशयोक्तये कल्पेत । आर्षग्रन्थेष्वस्य महानादरः । भगवतो जैमिने वेदवाक्यार्थनिर्णयौपयिकन्यायाविष्काराय सूत्राणि रचयितुं प्रवृत्तस्य मनसि नैकस्य वेदस्य काचन शाखाऽऽसीत्, किन्तु सर्वा अपि शाखा पारिप्लवेनोपस्थिता आसन् । भाष्यवार्तिककाल एव तास्वनेकासां विलयः शबरस्वामिभट्टपादप्रभृतिभिरन्वभावि । संस्कृतवाङ्मयस्य तत्रापि वैदिकस्येतिहासस्य प्राचीनतमत्वव्यवस्थापने यथेयं भगवती मीमांसोपकरोति न तथाऽन्यच्छास्त्रमिति प्रसिद्धम् । तत्रायं श्रीवासुदेवदीक्षितः भाष्य वार्तिक तदनन्तरवर्तिनस्सकलान् ग्रन्थान् परिशील्य वैदिकवाङ्मयञ्च पर्यालोच्य जैमिनेर्हृदयञ्च निर्धार्य प्रत्यक्षतः श्रौतप्रयोगाननुभूय वृत्तिग्रन्थमिमं प्रणिनाय । क्वचित्क्वचिद् विषयवाक्यार्थप्रवेशाय तत्रत्यं सन्दर्भं 'इति स्थितिः' इति लिखन् प्रदर्शयति, येन चाध्येतॄणां करिष्यमाणविषयविवेचने सुखेन प्रवेशो जायेत । यतोऽस्य श्रौतेषु विषयेष्वप्रतिहता गतिः तत एव भाष्यवार्तिकादिखण्डनमण्डनयोर्निर्भीकास्य प्रवृत्तिः । अतिदुरूहानामपि विषयाणां सरलया प्रसन्नया च भाषया प्रतिपादनमस्य सहजो गुणः । क्वचित् शास्त्रसिद्धशैल्यैव निरूपणीयेष्वपि स्थलेषु वाक्यरचनाऽस्य सरला परिदृश्यते । यद्यप्ययं ग्रन्थः मीमांसाध्येतॄणां प्रारम्भिकः तथाप्यस्य सर्वात्मनावगतिः प्रौढावस्थायामेव भवति । द्वादशाध्यायात्मकमिमं ग्रन्थं सम्यग्योऽधीते, मन्ये तस्य नान्यः कश्चन ग्रन्थो विशेषेणाध्येतुमवशिष्टस्स्यादिति । प्रायः प्रत्यधिकरणं पूर्वपक्षे सिद्धान्ते वा विषयविवेचनावसरेऽधिकरणान्तरसिद्धान् न्यायान् सञ्चार्य प्रकृतविषयपरिपोषणे सिद्धहस्तोऽयं ग्रन्थकारः । शास्त्रान्तरेषु वेदान्तादिषु यथा मीमांसान्यायसञ्चारः क्रियते तथैव मीमांसका अपि स्वीयेषु ग्रन्थेषु विषयपरिष्कारायाधिकरणान्तरसिद्धान् सञ्चारयन्ति न्यायान् । तत्र श्रीमन्तः अप्पय्यदीक्षितेन्द्राः प्राथम्यमावहन्ति, तदनन्तरस्थानमाबिभर्ति श्रीवासुदेवदीक्षितः ।

अयं भागस्तृतीयाध्यायान्तः । धर्मप्रमाण भेद शेषशेषिभावश्चेति त्रयाणामध्यायानां विषयाः । तत्र प्रथमेऽध्याये अथातो धर्मजिज्ञासा' इति सूत्रेण प्रमाणस्वरूपसाधनफलैर्धर्मस्य विचारं प्रतिज्ञाय प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनायाः पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानिराकरणपूर्वकं प्रामाण्यमुपपाद्य शब्दतदर्थतत्सम्बन्धानित्यत्वं वेदापौरुषेयत्वञ्चोपपादितम् । द्वितीयपादेऽर्थवादमन्त्रभागयोः विध्यपेक्षितद्रव्यदेवतादिस्स्तुत्यनुष्ठेयार्थस्मृतिसमर्पकतया, तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्याचारादीनां मूलवेदाद्यनुमापकतया, चतुर्थपादे 'उद्भिदा यजेत पशुकाम' 'चित्रया यजेत पशुकाम' 'अग्निहोत्रं जुहोति' 'श्येनेनाभिचरन् यजेत' इत्यादिविधिवाक्यगतानामुद्भिदादिपदानां नाम्ना कर्मभेदः, नाम्ना धर्मातिदेशः, नाम्ना दूरस्थस्यानुवादः

इत्यादिप्रोजनतया कर्मनामतया च धर्मे प्रामण्य व्यवस्थापितम्। आहृत्य चतुर्षु पादेषु चोदना, अर्थवाद, मन्त्र, स्मृति, आचार, नामधेय, वाक्यशेष, सामर्थ्यश्चेत्यष्टौ धर्मे प्रमाणानीति निरूपितम्। एव प्रमाणसिद्धस्य धर्मस्य परस्परभिन्न स्वरूप द्वितीयाध्याये निरूपितम्। तत्र प्रथमपादे धात्वर्थातिरिक्ता भावना अपूर्वं तत्प्रसक्तानुप्रसक्ताश्च विषयान् सस्थाप्य द्वितीये पादे 'यजति ददाति जुहोति' इति चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमाना भेद, 'समिधो यजति' 'तनूनपात यजति' इत्यादिविधिषु 'यजति' इति पञ्चकृत्वोऽभ्यासेनाविशेषपुन श्रुतिरूपेण प्रयाजाना भेद,, 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र द्रव्यदेवतासम्बन्धभेदिन्या सप्तदशसख्यया तदनुमेययागाना भेद, 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योति' इत्यत्र ज्योतिरादिनामधेयैस्तन्नामकयागाना प्रकृतज्योतिष्टोमाद्भेद, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्रामिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागाद्भेद इति शब्दान्तराभ्याससख्यासज्ञागुणै पञ्चभि प्रमाणै कर्मभेद व्यवस्थाप्य प्रसक्तानुप्रसक्त समाप्य तृतीये पादे प्रकरणान्तरेण नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद, चतुर्थपादे प्रयोगभेदश्चेति द्वितीयाध्याये कर्मभेदस्सापवाद प्रपञ्चित। तृतीयाध्याये भिन्नाना कर्मणा श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपै प्रमाणै शेषशेषिभावो निरूपित। तत्र श्रुतिप्रमाण प्रथमे पादे। निरपेक्षश्शब्द श्रुति। सा त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति। लिङादिश्श्रुतिर्विधात्री, इन्द्रादिश्श्रुतिरभिधात्री, विनियोक्त्री च–एकप्रत्ययरूपा एकपदरूपा, विभक्तिरूपा। तत्राद्या 'पशुना यजेत' इत्यत्र तृतीयाप्रत्ययरूपा। सा हि स्वोक्तकरणकारक प्रति स्वोक्तैकत्वसख्यायाश्शेषत्वमुपदिशति। द्वितीया 'यजेत' इति पदम्। तेन प्रत्ययोक्ता भावना प्रति प्रकृत्यभिहितयागस्य शेषतोपनीयते। तृतीया विभक्तिरूपा–शेषित्वबोधिका शेषत्वबोधिका चेति द्विविधा। 'व्रीहीन् प्रोक्षति' इत्यत्र द्वितीया व्रीह्यादीना प्रोक्षणादिक्रिया प्रति ईप्सिततमत्वरूपशेषित्वबोधिका। 'मैत्रावरुणाय दण्ड प्रयच्छति' इत्यत्र चतुर्थीश्रुति मैत्रावरुणस्य प्रदानक्रियेप्सिततमेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका। 'अरुणया क्रीणाति' इत्यत्र क्रयभावना प्रत्यारुण्यस्य, 'अग्नेस्तृणान्यपचिनोति' इत्यत्र तृणापचयक्रिया प्रत्यग्ने, 'वेद्या हवींष्यासादयति' इत्यत्र हविरासादनक्रिया प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्य शेषत्वबोधिका। षष्ठी तु क्वचित् 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ शेषित्वबोधिका 'यजमानस्य याज्या' इत्यादौ शेषत्वबोधिका च, सम्बन्धमात्रेऽनुशिष्टायाः षष्ठ्याः योग्यतानुसारेणोभयथापि पर्यवसानात्। एव प्रथमपादे श्रुतिं विचार्य द्वितीयपादे लिङ्ग विचारितम्। वस्तुसामर्थ्यं

लिङ्गम् । तदिद्द्विविधम्—शब्दसामर्थ्यमर्थसामर्थ्यञ्च । तत्र 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गाल्लवनशेषता । अर्थसामर्थ्यस्य 'स्वधितिनावद्यति' 'हस्तेनावद्यति' 'स्रुवेणावद्यति' इत्यादौ तत्तत्सामर्थ्यरूपलिङ्गाद्विशिष्य तत्तच्छेपनानीवकत्व प्रथमचतुर्थान्ते निरूपितम् । एव द्वितीयपादे लिङ्ग प्रमाण सापवाद विचार्य तृतीयपादे वाक्यप्रकरण स्थानसमाख्यारूपाणि चत्वारि प्रमाणानि पण्णामपि प्रमाणानामेकत्र समवाये कि प्रबल किञ्च दुर्बलमिति बलाबल, विरोधसद्भाव क्व भवति क्व च न भवतीति प्रसक्तानुप्रसक्तादिकञ्च विचार्यावशिष्टेषु पञ्चसु पादेषु शेषकार्याणि तदपवादा अनारभ्यवादेष्वङ्गाङ्गिभाव वाक्यप्रकरणयोर्विरोधाविरोध तदपवादाश्च बलाबलाधिकरणसम्बन्धिनो विषया विवेचिता ।

एवमध्यायत्रयात्मकेऽस्मिन् प्रथमभागे ग्रन्थकारेण तत्तदधिकरणविषयवाक्यैस्सह नानाशाखागतानि भूयांसि वैदिकवाक्यानि कल्पसूत्राणि स्मृतिवाक्यानि च सहस्राधिकानि निर्दिष्टानि । तेषा यथोपलम्भमाकरनिर्देशो लोकानामुपकाराय स्यादिति तत्तदाकरस्थानानि सङ्कलितानि । अस्मिन्नेव प्रथमभागे तानि योजयितुमीहमान तत्र प्रावर्तिपि, किन्तु मन्मित्रैः कैश्चन यदि द्वादशाध्यायान्ते सर्वाणि योजितानि स्युस्तर्हि समीचीन स्यादिति बोधितोऽह तदप्युचित मत्वानस्तस्मान्मति न्यवर्तयम् । यद्यपि अजादिवाक्यान्यायनाक्षरैर्योजितानीति तानि प्रथमभागे समावेशयम्, तथाप्यन्ते सर्वाणि सम्मेल्य प्रकाशयितु निरचिनवम् । तदिदमागो विद्वद्भि क्षन्तव्यमिति प्रार्थये । ग्रन्थकारेण तत्र तत्र सञ्चारितानां विवरणनापेक्षाणा न्यायाना विशदीकरणाय 'अ' 'क' 'ख' इत्येवमक्षराणि ग्रन्थे निवेशितानि, तेषा विवरणपर पुस्तकं पृथगनुपदमेव प्रकाशयिष्यते । तस्मिश्च शास्त्रान्तरेषु मीमासान्यायाना सञ्चारप्रकार लौकिकन्यायैस्सह तेषा सम्बन्धप्रकारश्च सुविशद निरूपयिष्यते । प्रथमभागस्य वैपुल्यात् प्रकाशनशैघ्र्याच्च कार्यमिदमुपसहृतम् । तदिदमप्याग क्षन्तव्य कारुणिकैर्विद्वद्भि ।

अत्युत्तमस्यास्य सुविस्तृतस्य च ग्रन्थस्य प्रकाशनाय दत्तचित्ताना श्रीलालबहादुरशास्त्रि राष्ट्रियसंस्कृतविद्यापीठकार्यनिर्वाहकसभाध्यक्षाणा काश्मीरराजवंशमुक्तामणीना भारतीयसंस्कृतिप्रतीकाना श्रीकर्णसिंह महोदयाना नून वयमधमर्णा । विद्यापीठग्रन्थप्रकाशनसमितिसदस्येभ्य कार्यमिदमुचितमिति प्रकाशनाय स्वीकृति प्रदत्तवद्भ्य म. म. परमेश्वरानन्द–श्रीरामकरणशर्मप्रभृतिभ्य स्वीया कृतज्ञतामाविष्करोमि । विशेषतश्च विद्यापीठनिदेशकः मीमासासाहित्याचार्यः डाक्टर–मण्डनमिश्रशास्त्री कार्येऽस्मिन्नितरामभिरुचिमादधानः प्रकाशनानुकूलसामग्रीसम्पादने सतत चेष्टमानो मामस्मिन् कर्मणि प्रावर्तयदिति नून शतशो

इत्यादिप्रोजनतया कर्मनामतया च धर्मे प्रामण्य व्यवस्थापितम् । आहृत्य चतुर्षु पादेषु चोदना, अर्थवाद , मन्त्र , स्मृति , आचार , नामधेय, वाक्यशेष , सामर्थ्यश्चेत्यष्टौ धर्मे प्रमाणानीति निरूपितम् । एव प्रमाणसिद्धस्य धर्मस्य परस्परभिन्न स्वरूप द्वितीयाध्याये निरूपितम् । तत्र प्रथमपादे धात्वर्थातिरिक्ता भावना अपूर्वं तत्प्रसक्तानुप्रसक्ताश्च विषयान् संस्थाप्य द्वितीये पादे 'यजति ददाति जुहोति' इति चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमाना भेद , 'समिधो यजति' 'तनूनपात यजति' इत्यादिविधिषु 'यजति' इति पञ्चकृत्वोऽभ्यासेनाविशेषपुन श्रुतिरूपेण प्रयाजाना भेद,, 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र द्रव्यदेवतासम्बन्धभेदिन्या सप्तदशसख्यया तदनुमेययागाना भेद , 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योति ' इत्यत्र ज्योतिरादिनामधेयैस्तन्नामकयागाना प्रकृतज्योतिष्टोमाद्भेद , 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्रामिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागाद्भेद इति शब्दान्तराभ्याससख्यासज्ञागुणै पञ्चभि प्रमाणै कर्मभेदं व्यवस्थाप्य प्रसक्तानुप्रसक्त समाप्य तृतीये पादे प्रकरणान्तरेण नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद , चतुर्थपादे प्रयोगभेदश्चेति द्वितीयाध्याये कर्मभेदस्सापवाद प्रपञ्चित । तृतीयाध्याये भिन्नाना कर्मणा श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपै प्रमाणै शेषशेषिभावो निरूपित । तत्र श्रुतिप्रमाण प्रथमे पादे । निरपेक्षश्शब्द श्रुति । सा त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति । लिङादिश्रुतिर्विधात्री, इन्द्रादिश्रुतिरभिधात्री, विनियोक्त्री च–एकप्रत्ययरूपा एकपदरूपा, विभक्तिरूपा । तत्राद्या 'पशुना यजेत' इत्यत्र तृतीयाप्रत्ययरूपा । सा हि स्वोक्तकरणकारक प्रति स्वोक्तैकत्वसख्यायाश्शेषत्वमुपदिशति । द्वितीया 'यजेत' इति पदम् । तेन प्रत्ययोक्ता भावना प्रति प्रकृत्यभिहितयागस्य शेषतोपनीयते । तृतीया विभक्तिरूपा–शेषित्वबोधिका शेषत्वबोधिका चेति द्विविधा । 'व्रीहीन् प्रोक्षति' इत्यत्र द्वितीया व्रीह्यादीना प्रोक्षणादिक्रिया प्रति ईप्सिततमत्वरूपशेषित्वबोधिका । 'मैत्रावरुणाय दण्ड प्रयच्छति' इत्यत्र चतुर्थीश्रुति मैत्रावरुणस्य प्रदानक्रियेप्सिततमेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका । 'अरुणया क्रीणाति' इत्यत्र क्रयभावना प्रत्यारुण्यस्य, 'अग्नेस्तृणान्यपचिनोति' इत्यत्र तृणापचयक्रिया प्रत्यग्ने , 'वेद्या हवीष्यासादयति' इत्यत्र हविरासादनक्रिया प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्य शेषत्वबोधिका । षष्ठी तु क्वचित् 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ शेषित्वबोधिका 'यजमानस्य याज्या' इत्यादौ शेषत्वबोधिका च, सम्बन्धमात्रेऽनुशिष्टायाः षष्ठ्याः योग्यतानुसारेणोभयथापि पर्यवसानात् । एव प्रथमपादे श्रुतिं विचार्य द्वितीयपादे लिङ्ग विचारितम् । वस्तुसामर्थ्यं

लिङ्गम् । तदिद्विविधम्—शब्दसामर्थ्यमर्थसामर्थ्यञ्च । तत्र 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गाल्लवनशेषता । अर्थसामर्थ्यस्य 'स्रुवधितिनावद्यति' 'हस्तेनावद्यति' 'स्रुवेणावद्यति' इत्यादौ तत्तत्सामर्थ्यरूपलिङ्गाद्विनियोगः तत्तदवदानाङ्गत्वं प्रथमचतुर्थान्ते निरूपितम् । एवं द्वितीयपादे लिङ्गप्रमाणं साधनादि विचार्य तृतीयपादे वाक्यप्रकरणस्थानसमाख्यारूपाणि चत्वारि प्रमाणानि षण्णामपि प्रमाणानामेकत्र समवाये किं प्रबलं किञ्च दुर्बलमिति बलाबलं, विरोधसद्भावः क्व भवति कुत्र च न भवतीति प्रसक्तानुप्रसक्तादिकञ्च विचार्यावशिष्टेषु पञ्चसु पादेषु शेषकार्याणि तदपवादा अनारभ्यवादेष्वङ्गाङ्गिभाव वाक्यप्रकरणयोर्विरोधाविरोध तदपवादाश्च बलाबलाधिकरणसम्बन्धिनो विषया विवेचिता ।

एवमध्यायत्रयात्मकेऽस्मिन् प्रथमभागे ग्रन्थकारेण तत्तदधिकरणविषयवाक्यैस्सह नानाशाखागतानि भूयांसि वैदिकवाक्यानि कल्पसूत्राणि स्मृतिवाक्यानि च सहस्राधिकानि निर्दिष्टानि । तेषां यथोपलम्भमाकरनिर्देशो लोकानामुपकाराय स्यादिति तत्तदाकरस्थानानि सङ्कलितानि । अस्मिन्नेव प्रथमभागे तानि योजयितुमीहमानः तत्र प्रावर्तिषि, किन्तु मन्मित्रैः कैश्चन यदि द्वादशाध्यायान्ते सर्वाणि योजितानि स्युस्तर्हि समीचीनं स्यादिति बोधितोऽहं तदप्युचितं मन्वानस्तस्मान्मतिं न्यवर्तयम् । यद्यपि अजादिवाक्यान्यायसाक्षरैर्योजितानीति तानि प्रथमभागे समावेशयम्, तथाप्यन्ते सर्वाणि सम्मेल्य प्रकाशयितुं निरचिनवम् । तदिदमागो विद्वद्भिः क्षन्तव्यमिति प्रार्थये । ग्रन्थकारेण तत्र तत्र सञ्चारितानां विवरणसापेक्षाणां न्यायानां विशदीकरणाय 'अ' 'क' 'ख' इत्येवमक्षराणि ग्रन्थे निवेशितानि, तेषां विवरणपरं पुस्तकं पृथगनुपदमेव प्रकाशयिष्यते । तस्मिंश्च शास्त्रान्तरेषु मीमांसान्यायानां सञ्चारप्रकारः लौकिकन्यायैस्सह तेषां सम्बन्धप्रकारश्च सुविशदं निरूपयिष्यते । प्रथमभागस्य वैपुल्यात् प्रकाशनशैघ्र्याच्च कार्यमिदमुपसंहृतम् । तदिदमप्यागः क्षन्तव्यं कारुणिकैर्विद्वद्भिः ।

अत्युत्तमस्यास्य सुविस्तृतस्य च ग्रन्थस्य प्रकाशनाय दत्तचित्तानां श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठकार्यनिर्वाहकसभाध्यक्षाणां काश्मीरराजवंशमुक्तामणीनां भारतीयसंस्कृतिप्रतीकानां श्रीकर्णसिंह महोदयानां नूनं वयमधमर्णाः । विद्यापीठग्रन्थप्रकाशनसमितिसदस्येभ्यः कार्यमिदमुचितमिति प्रकाशनाय स्वीकृतिं प्रदत्तवद्भ्यः म. म. परमेश्वरानन्द-श्रीरामकरणशर्मप्रभृतिभ्यः स्वीयां कृतज्ञतामाविष्करोमि । विशेषतश्च विद्यापीठनिदेशकः मीमांसासाहित्याचार्यः डाक्टर-मण्डनमिश्रशास्त्री कार्येऽस्मिन्नितरामभिरुचिमादधानः प्रकाशनानुकूलसामग्रीसम्पादने सततं चेष्टमानो मामस्मिन् कर्मणि प्रावर्तयदिति नूनं शतशो

धन्यवादार्हं । शीघ्रमेव समग्रस्यास्य ग्रन्थस्य प्रकाशने तदर्थं सामग्रीसम्पादने च विहितमते श्रीमण्डनमिश्रस्याभिनिवेश प्रशसन्नुमारमण श्रीविश्वनाथ स्तौमि–यदेतादृशानि ग्रन्थप्रकाशन कार्याणि भूयसा कुर्वन् श्रीमण्डनमिश्रो विद्यापीठस्य गौरवं विश्वस्मिन् जगति प्रतिष्ठापयत्विति : सस्कृतवाङ्मयस्य प्रसाराय, सस्कृतविदुषा सत्काराय, विशेषत प्राचीनग्रन्थप्रकाशनाय च बद्धदीक्षेषु कलिकाताविश्वविद्यालयतो मामत्र समाहूय नियुक्तवत्सु वाराणसेय-सस्कृतविश्वविद्यायलयस्योपकुलपतिपद भूषयत्सु सत्कुलप्रसूतेषु डा० श्रीगौरीनाथशास्त्रि-महाभागेषु मदीया कृतज्ञतामावेद्यान्ते सवात्सल्य मामध्यापितवता ग्रन्थप्रकाशनादिकार्येषु च किञ्चिदिव सामर्थ्यमुत्पादितवतामस्मत्पूज्यपादाना म. म. स्वर्गीय श्रीचिन्नस्वामि-श्रीचरणानाम्, सर्वतन्त्रस्वतन्त्राणा तुरीयाश्रम प्राप्तवता काशीपीठशङ्कराचार्याणा श्रीमहेश्वरानन्दश्रीपादानाञ्च गुरुचरणाना चरणसरोरुहेषु कोटिशः प्रणामकुसुमाञ्जलीन् समर्प्य तान् प्रार्थयते–यत्ते एतादृशेषु कार्येषु बुद्धिशक्तिमुत्साहशक्ति ग्रन्थस्यास्य समग्रस्य शीघ्रमेव प्रकाशनयोग्यताञ्च मह्य प्रदाय मामनुगृह्णन्त्विति ।

स० २०२६
वै० शु० पञ्चमी
२१–४–६९

इति विदुषामाश्रव
**पट्टाभिरामशास्त्री**



# अध्वरमीमांसाकुतूहलवृत्तेरधिकरण-

# सूची

## प्रथमाध्यायस्य

### प्रथम पादः


| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| १ जिज्ञासाधिकरणम् | १–३ |
| २ धर्मलक्षणाधिकरणम् | ३–४ |
| ३ निमित्तपरीष्ट्यधिकरणम् | ४ |
| ४ सत्सम्प्रयोगाधिकरणम् | ५ |
| ५ शब्दार्थसम्बन्धनित्यताधिकरणम् | ५–८ |
| ६ शब्दनित्यत्वाधिकरणम् | ८–१४ |
| ७ वाक्याधिकरणम् | १५–१६ |
| ८ वेदापौरुषेयत्वाधिकरणम् | १६–१९ |


### द्वितीय पादः


| | |
|---|---|
| १ अर्थवादाधिकरणम् | २०–३५ |
| २ औदुम्बराधिकरणम् | ३६–३९ |
| ३ हेतुमन्निगदाधिकरणम् | ३९–४२ |
| ४ मन्त्राधिकरणम् | ४२–५८ |


### तृतीय पादः


| | |
|---|---|
| १ स्मृत्यधिकरणम् | ५९–६० |
| २ हेतुदर्शनाधिकरणम् | ६०–६२ |
| ३ विरोधाधिकरणम् | ६२–६५ |
| ४ शिष्टाकोपाधिकरणम् | ६५–६९ |
| ५ यववराहाधिकरणम् | ६९–७४ |
| वार्तिककारीय आर्यम्लेच्छाधिकरणम् | ७४–७५ |
| ,, स्मृत्याचारविरोधाधिकरणम् | ७५–७७ |
| " त्रिवृदधिकरणम् | ७७–७९ |
| ६ पिकनेमाधिकरणम् | ८० |



| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| ७ कल्पसूत्राधिकरणम् | ८०–८५ |
| ८ होलाकाधिकरणम् | ८५–८७ |
| ९ व्याकरणाधिकरणम् | ८७–९५ |
| १० लोकवेदाधिकरणम् | ९५–९८ |
| ११ आकृत्यधिकरणम् | ९८–१०२ |


### चतुर्थ पादः


| | |
|---|---|
| १ नामधेयप्रामाण्याधिकरणम् | १०३–१०४ |
| २ उद्भिदधिकरणम् | १०४–१०७ |
| ३ चित्राधिकरणम् | १०७–११० |
| ४ तत्प्रख्याधिकरणम् | ११०–११६ |
| ५ तद्व्यपदेशाधिकरणम् | ११६–११९ |
| ६ वाजपेयाधिकरणम् | ११९–१२३ |
| ७ आग्नेयाधिकरणम् | १२३–१२५ |
| ८ बर्हिराज्याधिकरणम् | १२५–१२७ |
| ९ प्रोक्षण्यधिकरणम् | १२७–१२९ |
| १० निर्मन्थ्याधिकरणम् | १२९–१३० |
| ११ वैश्वदेवाधिकरणम् | १३०–१३३ |
| १२ वैश्वानराधिकरणम् | १३३–१३६ |
| १३ तत्सिद्ध्यधिकरणम् | १३६–१३८ |
| १४ जात्यधिकरणम् | १३८ |
| १५ सारूप्याधिकरणम् | १३८–१३९ |
| १६ प्रशंसाधिकरणम् | १३९ |
| १७ भूमाधिकरणम् | १३९–१४१ |
| १८ लिङ्गसमवायाधिकरणम् | १४२ |
| १९ वाक्यशेषाधिकरणम् | १४२–१४४ |
| २० सामर्थ्याधिकरणम् | १४४–१४६ |


आहत्याधिकरणसंख्या = ४३

## द्वितीयाध्यायस्य

### प्रथमः पाद-


| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| १ प्रतिपदाधिकरणम् | १४७–१४८ |
| २ भावार्थाधिकरणम् | १४८–१५४ |
| ३ अपूर्वाधिकरणम् | १५४–१५७ |
| ४ तानि द्वैधाधिकरणम् | १५७–१५९ |
| ५ समार्गाधिकरणम् | १५९–१६४ |
| ६ स्तुतशस्त्राधिकरणम् | १६४–१७२ |
| ७ विधिमन्त्राधिकरणम् | १७२–१७४ |
| ८ मन्त्रलक्षणाधिकरणम् | १७५–१७६ |
| ९ ब्राह्मणलक्षणाधिकरणम् | १७६–१७७ |
| १० प्रवराद्यमन्त्रताधिकरणम् | १७७–१७८ |
| ११ ऋग्लक्षणाधिकरणम् | १७८ |
| १२ सामलक्षणाधिकरणम् | १७८–१७९ |
| १३ यजुर्लक्षणाधिकरणम् | १७९ |
| १४ निगदाधिकरणम् | १७९–१८२ |
| १५ अर्थैकत्वाधिकरणम् | १८२–१८२ |
| १६ अनुषङ्गाधिकरणम् | १८४–१८६ |
| १७ व्यवायाधिकरणम् | १८६–१८८ |


### द्वितीय पादः


| | |
|---|---|
| १ शब्दान्तराधिकरणम् | १८२–१९१ |
| २ अभ्यासाधिकरणम् | १९१–१९८ |
| ३ पौर्णमास्यधिकरणम् | १९८–२१० |
| ४ उपांशुयाजाधिकरणम् | २०७–२१० |
| ५ आघाराग्निहोत्राधिकरणम् | २१०–२१३ |
| ६ पशुसोमाधिकरणम् | २१३–२२२ |
| ७ सख्याधिकरणम् | २२२–२२७ |
| ८ सज्ञाधिकरणम् | ९२७–२२९ |
| ९ गुणाधिकरणम् | २२९–२३२ |
| १० गुणापवादाधिकरणम् | २३२–२३३ |
| ११ इन्द्रियकामाधिकरणम् | २३३–२३६ |
| १२ रेवत्यधिकरणम् | २३६–२४० |
| १३ सोमराधिकरम् | २०७–२१० |


### तृतीयः पाद


| अधिकरणनामानि | पृष्ठसख्या |
|---|---|
| १ रथन्तराधिकरणम् | २४३–२४५ |
| २ अवेष्टयधिकरणम् | २४५–२४८ |
| ३ आधानाधिकरणम् | २४८–२५१ |
| ४ दाक्षायणयज्ञाधिकरणम् | २५१–२५४ |
| ५ ईपालम्भाधिकरणम् | २५४–२५७ |
| ६ विशयाधिकरणम् | २५७–२५८ |
| ७ चरुप्रधानाधिकरणम् | २५८–२६० |
| ८ पात्नीवताधिकरणम् | २६०–२६२ |
| ९ अभ्यदाभ्याधिकरणम् | २६२–२६५ |
| १० चयनाधिकरणम् | २६५–२६७ |
| ११ प्रकरणान्तराधिकरणम् | २६७–२७१ |
| १२ फलसंस्कार्याधिकरणम् | २७१–२७२ |
| १३ प्रकरणान्तरप्रत्युदाहरणाधिकरणम् | २७२–२७५ |
| १४ आग्नेयद्विरुक्त्यधिकरणम् | २७५–२७६ |


### चतुर्थः पाद


| | |
|---|---|
| १ यावज्जीवाधिकरणम् | २७७–२८३ |
| २ शाखान्तराधिकरणम् | २८३–२९८ |


आहत्याधिकरणसंख्या ४६

## तृतीयाध्यायस्य

### प्रथम पादः


| | |
|---|---|
| १ शेषलक्षणप्रतिज्ञाधिकरणम् | २९९–३०० |
| २ शेषलक्षणाधिकरणम् | ३००–३०१ |
| ३ बादर्यधिकरणम् | ३०१–३०४ |
| ४ तेषामर्थाधिकरणम् | ३०४–३०७ |
| ५ स्फ्यकपालाधिकरणम् | ३०७–३०८ |
| ६ अरुणाधिकरणम् | ३०८–३१६ |
| ७ ग्रहैकत्वाधिकरणम् | ३१६–३११ |
| ८ चमसाधिकरणम् | ३१९–३२१ |
| ९ आनर्थक्यतदङ्गाधिकरणम् | ३२१–३२३ |
| १० अभिक्रमणाधिकरणम् | ३२३–३२७ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| ११ उपवीताधिकरणम् | ३२७–३२९ |
| १२ वारणाधिकरणम् | ३२९–३३१ |
| १३ वार्त्रघ्न्यधिकरणम् | ३३१–३३३ |
| १४ हस्तावनेजनाधिकरणम् | ३३३–३३५ |
| १५ चतुर्धाकरणाधिकरणम् | ३३५–३४० |
| **द्वितीय पाद** | |
| १ लिङ्गाधिकरणम् | ३४१–३४२ |
| २ ऐन्द्रयधिकरणम् | ३४२–३४५ |
| ३ हविष्कृदाह्वानाधिकरणम् | ३४५–३४८ |
| ४ उत्थानविसर्जनाधिकरणम् | ३४८–३४९ |
| ५ सूक्तवाकाधिकरणम् | ३४९–३५४ |
| ६ सूक्तवाकस्य विभज्यविनियोगाधिकरणम् | ३५४–३५६ |
| ७ लिङ्गक्रमसमाख्याधिकरणम् | ३५६–३५७ |
| ८ आग्नेय्यधिकरणम् | ३५७–३६१ |
| ९ भक्षाधिकरणम् | ३६१–३६३ |
| १० गुणाभिधानाधिकरणम् | ३६३ |
| ११ इन्द्रपीताधिकरणम् | ३६३–३६५ |
| १२ अभ्युन्नीताधिकरणम् | ३६५–३६८ |
| १३ पात्नीवताधिकरणम् | ३६८–३६९ |
| १४ त्वष्ट्रधिकरणम् | ३६९–३७० |
| १५ त्रिंशदधिकरणम् | ३७०–३७१ |
| १६ अनुवषट्काराधिकरणम् | ३७१–३७२ |
| १७ अनैन्द्राणाममन्त्रकभक्षाधिकरणम् | ३७२–३७३ |
| १८ ऐन्द्राग्नभक्षे मन्त्राभावाधिकरणम् | ३७३–३७४ |
| १९ गायत्रीच्छन्दस्केऽपि भक्षमन्त्रविनियोगाधिकरणम् | ३७४–३७५ |
| २० इन्द्रपीताधिकरणम् | ३७५–३७८ |
| **तृतीय पादः** | |
| १ उपक्रमाधिकरणम् | ३७९–३८४ |
| २ गुणमुख्यव्यतिक्रमाधिकरणम् | ३८४–३८८ |
| ३ भूयस्त्वाधिकरणम् | ३८८–३८९ |
| ४ प्रकरणाधिकरणम् | ३८९–३९२ |
| ५ क्रमाधिकरणम् | ३९३–३९४ |
| ६ समाख्याधिकरणम् | ३९४ |
| ७ बलाबलाधिकरणे श्रुतिप्राबल्याधिकरणम् | ३९४–३९७ |
| ८ लिङ्गप्राबल्याधिकरणम् | ३९७–३९९ |
| ९ वाक्यप्राबल्याधिकरणम् | ३९९–४०० |
| १० प्रकरणप्राबल्याधिकरणम् | ४००–४०१ |
| ११ क्रमप्राबल्याधिकरणम् | ४०१–४०२ |
| १२ बाधयोग्यताधिकरणम् | ४०२ |
| १३ अहीनाधिकरणम् | ४०२–४०४ |
| १४ प्रतिपदधिकरणम् | ४०४–४०६ |
| १५ जाघन्यधिकरणम् | ४०६–४०८ |
| १६ सन्तर्दनाधिकरणम् | ४०८–४१३ |
| १७ प्रवर्ग्याधिकरणम् | ४१३–४१७ |
| १८ पौष्णपेषणाधिकरणम् | ४१७–४१८ |
| १९ पौष्णपेषणस्य चरावेव निवेशाधिकरणम् | ४१८–४१९ |
| २० पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् | ४१९–४२४ |
| **चतुर्थः पाद** | |
| १ निवीताधिकरणम् | ४२५–४२९ |
| २ उपवीताधिकरणम् | ४२९–४३१ |
| ३ उपवीतविध्यधिकरणम् | ४३१ |
| ४ उदक्त्वाधिकरणम् | ४३१–४३४ |
| ५ उपरिधारणाधिकरणम् | ४३४ |
| ६ द्विविभागाधिकरणम् | ४३४–४३५ |
| ७ पर्वविदिनाधिकरणम् | ४३५–४३७ |
| ८ कर्त्रधिकरणम् | ४३७–४४६ |
| ९ जञ्जभ्यमानाधिकरणम् | ४४६–४५० |
| १० अपगोरणाधिकरणम् | ४५०–४५१ |
| ११ मलवद्वाससम्वादनिषेधाधिकरणम् | ४५२–४५३ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| १२ सुवर्णधारणाधिकरणम् | ४५३–४५६ |
| १३ जयहोमाधिकरणम् | ४५६–४५८ |
| १४ अश्वप्रतिग्रहेष्ट्यधिकरणम् | ४५८–४६४ |
| १५ पानव्यापदधिकरणम् | ४६५–४६६ |
| १६ सोमेन्द्रचरोर्याज्ञिमानताधिकरणम् | ४६६–४६७ |
| १७ सर्वप्रदानाधिकरणम् | ४६७–४७८ |
| १८ सर्वहविर्भि स्विष्टकृदनुष्ठानाधिकरणम् | ४७८–४७९ |
| १९ स्विष्टकृतिकृत्वाचिन्ताधिकरणम् | ४८० |
| २० पुरोडाशविभागाधिकरणम् | ४८०–४८२ |
| **पञ्चम पादः** | |
| १ उपांशुयाजाज्यस्विष्टकृदननुष्ठानाधिकरणम् | ४८३–४८६ |
| २ साकम्प्रस्थायीये शेषकार्याननुष्ठानाधिकरणम् | ४८६–४८८ |
| ३ सौत्रामण्यधिकरणम् | ४८८–४८९ |
| ४ सर्वपृष्ठेष्टौ स्विष्टकृत्सकृदनुष्ठानाधिकरणम् | ४८९–४९१ |
| ५ सोमे शेषभक्षणाधिकरणम् | ४९१–४९४ |
| ६ उद्गातृचमसभक्षणाधिकरणम् | ४९४–४९७ |
| ७ हारियोजनाधिकरणम् | ४९७–४९८ |
| ८ वषट्कर्तृप्रथमभक्षाधिकरणम् | ४९८–४९९ |
| ९ होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् | ४९९–५०० |
| १० भक्षनिमित्तसमुच्चयाधिकरणम् | ५००–५०१ |
| ११ भक्षकर्तृव्यवस्थाधिकरणम् | ५०१–५०२ |
| १२ भक्षस्यानुज्ञानानुज्ञापनाधिकरणम् | ५०२–५०४ |
| १३ एकपात्राणामनुज्ञाधिकरणम् | ५०४ |
| १४ स्वयमयष्टुर्भक्षाधिकरणम् | ५०४–५०६ |
| १५ फलचमसाधिकरणम् | ५०६–५०८ |
| १६ अनुप्रसर्प्यधिकरणम् | ५०८–५०९ |
| **षष्ठ पादः** | |
| १ पर्णमय्यधिकरणम् | ५१०–५१३ |
| २ सामधेन्यधिकरणम् | ५१३–५१४ |
| ३ मासदश्याधिकरणम् | ५१४–५१७ |
| ४ पवमानेष्ट्यधिकरणम् | ५१७–५२० |
| ५ आधानस्य प्रकृतिविकृत्यर्थताधिकरणम् | ५२०–५२१ |
| ६ पवनमानेष्ट्यनतिदेशाधिकरणम् | ५२१ |
| ७ पशुधर्माणामग्नीषोमीयमात्रार्थताधिकरणम् | ५२२–५२९ |
| ८ शाखाहरणादीनामुभयदोहार्थताधिकरणम् | ५३०–५३१ |
| ९ ग्रहधर्माणां सवनत्रयार्थताधिकरणम् | ५३१ |
| १० रशनाधर्मसाधारण्याधिकरण | ५३१–५३२ |
| ११ अश्वदाभ्याधिकरणम् | ५३२–५३४ |
| १२ चित्रिण्यधिकरणम् | ५३४ |
| १३ अभिप्लवादीनां सोमार्थताधिकरणम् | ५३४–५३६ |
| १४ मुख्यप्रतिनिध्योस्सामानविध्यधिकरणम् | ५३६–५३८ |
| १५ प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् | ५३८–५३९ |
| १६ सत्त्राधिकरणम् | ५३९–५४७ |
| **सप्तम पादः** | |
| १ वेदिर्बहिरधिकरणम् | ५४८–५५० |
| २ भ्राजमानानां प्रधानार्थत्वाधिकरणम् | ५५०–५५१ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| ३ वेदिहविरभिमर्शनयोरङ्गप्रधानार्थत्वाधिकरणम् | ५५१–५५३ |
| ४ दीक्षादक्षिणयो प्रधानार्थत्वाधिकरणम् | ५५३–५५४ |
| ५ यूपावटदेशलक्षणाधिकरणम् | ५५४–५५८ |
| ६ हविर्द्धानस्य सामिधेन्यनङ्गताधिकरणम् | ५५८–५५९ |
| ७ यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम् | ५५९–५६१ |
| ८ अनृत्विक् सख्यानियमाधिकरणम् | ५६१–५६३ |
| ९ चमसाध्वर्य्वधिकरणम् | ५६३ |
| १० चमसाध्वर्यूणां बहुत्वाधिकरणम् | ५६३–५६४ |
| ११ चमसाध्वर्यूणामियत्ताधिकरणम् | ५६४ |
| १२ शमित्रधिकरणम् | ५६५–५६७ |
| १३ उपगात्रधिकरणम् | ५६७–५६८ |
| १४ सोमविक्रेतुः पृथक्त्वाधिकरणम् | ५६८ |
| १५ ऋत्विक्छब्दवाच्यताधिकरणम् | ५६८–५७० |
| १६ ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम् | ५७०–५७१ |
| १७ यजमानसप्तदशत्वाधिकरणम् | ५७१–५७२ |
| १८ ऋत्विजां नियतपदार्थकर्तृत्वाधिकरणम | ५७२–५७४ |
| १९ प्रैषानुवचनस्य मैत्रावरुणकर्तृत्वाधिकरणम् | ५७४–५७५ |
| २० चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम् | ५७५–५७७ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| २१ वाजपेयादेरनेककर्तृकत्वाधिकरणम् | ५७७–५७९ |
| **अष्टमः पादः** | |
| १ दक्षिणादानस्य स्वामिकर्तृत्वाधिकरणम् | ५८०–५८२ |
| २ फलिसंस्काराणां याजमानताधिकरणम् | ५८२–५८४ |
| ३ तपसो याजमानताधिकरणम् | ५८४–५८५ |
| ४ हिरण्यमालित्वाधिकरणम् | ५८५–५८६ |
| ५ गुणकामानां याजमानताधिकरणम् | ५८६–५८७ |
| ६ प्रोत्साहनमन्त्राणां याजमानताधिकरणम् | ५८७–५८९ |
| ७ द्व्याम्नाताधिकरणम् | ५८९–५९० |
| ८ अभिज्ञवाचनाधिकरणम् | ५९०–५९२ |
| ९ द्वादशद्वन्द्वाधिकरणम् | ५९२–५९३ |
| १० होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् | ५९३–५९५ |
| ११ प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् | ५९५ |
| १२ प्रैषस्याध्वर्यवत्वाधिकरणम् | ५९५–५९८ |
| १३ करणमन्त्रफलस्य याजमानताधिकरणम् | ५९८ |
| १४ क्वचित्करणमन्त्रफलस्यर्त्विग्गामिताधिकरणम् | ५९८–६०० |
| १५ भद्रादेरुभयगामिताधिकरणम् | ६००–६०१ |
| १६ प्राकृतधर्माणां वैकृतापूर्वपदार्थानङ्गत्वाधिकरणम् | ६०१ |
| १७ लवनादेरसर्वार्थताधिकरणम् | ६०१–६०२ |

श्रीः

# अध्वरमीमांसा-

# कुतूहलवृत्तिः

## प्रथमोऽध्यायः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥ १ ॥

जैमिनिमतिप्रसृष्टां[1] शबरकुमारप्रकामनिष्कृष्टाम् ।
मीमासा[2] दीदासारीत्या वृत्त्या परिष्कुर्वे ॥ २ ॥

स्फायच्छाबरभाष्यवार्तिकमहाग्रन्थैकलोलीभव-
त्क्षुभ्यज्जैमिनिसूत्रजालमपृथग्भूरिप्रचारं श्लथम्[3] ।
उद्धृत्य स्फुटबालबोधनकृते श्रीवासुदेवाध्वरी
तत्कौतूहलवृत्तिमाकलयते सन्तो दयन्तामिह ॥ ३ ॥

१

अथेयमध्वरमीमांसा नारब्धव्या प्रयोजनाभावात् । न चाध्ययनविधिसाध्यार्थज्ञानस्य विचारमन्तरेणानुपपत्तेस्तदेव प्रयोजनमिति वाच्यम्, अर्थज्ञानस्याध्ययनविधिभाव्यत्वाश्रवणात्, अध्ययनमर्थज्ञानहेतुरध्ययनत्वाद्भारताद्यध्ययनवदित्यनुमानेन तदर्थमध्ययनस्य प्राप्तत्वाच्च । न च लिखितपाठादिना [4]पक्षप्राप्तमध्ययनमत्र नियम्यत इति वाच्यम्, वैयर्थ्यात् । नियमादृष्टस्य हि न तावदर्थज्ञान उपयोगः, तस्य तदन्तरेणापि जायमानत्वात् । नापि क्रत्वपूर्वे, अध्ययनविधेरनारभ्य[5] विहितत्वेन तदयोगात् । किञ्च 'अधीत्य स्नायात्' इति स्मृतेरध्ययनानन्तरं समावर्तनं विदधानाया[6] गुरुकुलवास्त-

---

1 जैमिनिमतप्रसृष्टा. अ, ख, ग, मु. पा. 2 मीमासा. क, ख, अ, ग, मु. पा.
3 मूर्यंवृषत् स्वयम् क, ग, अ, मु. पा. 4 प्राप्ताध्ययन घ. 5 स्याधीतत्वेन. घ.
6. समावर्तनविधानाय. ख, घ, मु. पा.

श्रीः

# अध्वरमीमांसा-

# कुतूहलवृत्तिः

## प्रथमोऽध्यायः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थाने ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥ १ ॥

जैमिनिमतिप्रसृष्टां[1] शबरकुमारप्रकामनिष्कृष्टाम् ।
मीमासा[2] दीदासारीत्या वृत्त्या परिष्कुर्वे ॥ २ ॥

स्फायच्छाबरभाष्यवार्तिकमहाग्रन्थैकलोलीभव-
त्क्षुभ्यज्जैमिनिसूत्रजालमपृथग्भूरिप्रचारं श्लथम्[3] ।
उद्धृत्य स्फुटबालबोधनकृते श्रीवासुदेवाध्वरी
तत्कौतूहलवृत्तिमाकलयते सन्तो दयन्तामिह ॥ ३ ॥

१

अथेयमध्वरमीमासा नारब्धव्या प्रयोजनाभावात् । न चाध्ययनविधिसाध्यार्थज्ञानस्य विचारमन्तरेणानुपपत्तेस्तदेव प्रयोजनमिति वाच्यम्, अर्थज्ञानस्याध्ययनविधिभाव्यत्वाश्रवणात्, अध्ययनमर्थज्ञानहेतुरध्ययनत्वाद्भारताद्यध्ययनवदित्यनुमानेन तदर्थमध्ययनस्य प्राप्तत्वाच्च । न च लिखितपाठादिना [4]पक्षप्राप्तमध्ययनमत्र नियम्यत इति वाच्यम्, वैयर्थ्यात् । नियमादृष्टस्य हि न तावदर्थज्ञान उपयोगः, तस्य तदन्तरेणापि जायमानत्वात् । नापि क्रत्वपूर्वे, अध्ययनविधेरनारभ्य[5] विहितत्वेन तदयोगात् । किञ्च 'अधीत्य स्नायात्' इति स्मृतेरध्ययनानन्तरं समावर्तनं विदधानाया[6] गुरुकुलवास-

1 जैमिनिमतप्रसृष्टा. अ, ख, ग, मु. पा. 2 मीमासा. क, ख, अ, ग, मु. पा.
3 सूर्यंवृषत् स्वयम् क, ग, अ, मु. पा. 4. प्राप्ताध्ययन घ. 5 स्याधीतत्वेन. घ.
6. समावर्तनविधानाय. ख, घ, मु. पा.

व्येन विचारकरणे बाध स्यात्। अथाध्ययनविधेः किं भाव्यमिति चेत्, विश्वजिदादिवत्स्वर्ग इति गृहाण। अतः प्रयोजनाभावादत एव च विषयाद्यभावान्नारब्धव्या धर्ममीमांसा। (क) 'प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसम्भवात्' इति न्यायेन पुरुषविशेषप्रणीतवेदस्य प्रामाण्यानवधारणाच्चेत्यादिशङ्कापरिहारायाध्वरमीमांसाशास्त्रस्येदमादिमं सूत्रम्—

## अथातो धर्मजिज्ञासा ॥ १ ॥

अत्राथशब्द आनन्तर्ये वर्तते। तच्चानन्तर्यमर्थाद्वेदाध्ययननिरूपितमवगम्यते। न हि वेदैकबोध्यो धर्मो वेदाध्ययनमन्तरा शक्यो विचारयितुम्। अत शब्दो वृत्तं वेदाध्ययनं हेतुत्वेन स्थिरीकुर्वन्नथशब्दस्यानन्तर्यातिरिक्तार्थपरतां निराचष्टे। ज्ञातुमिच्छा जिज्ञासा। सा च धर्मे विशिष्य ज्ञाते न सम्भवति, अज्ञाते च[1] नतरामिति सामान्यतो ज्ञाते विशेषजिज्ञासा। विशेषज्ञानञ्च विचारमन्तरा न सम्भवतीत्यन्तभूतो विचारो जिज्ञासेत्यनेनोच्यते। कर्तव्येत्यध्याहार्यम्। तथा च वेदाध्ययनानन्तरं तद्धेतुको धर्मविचार कर्तव्य इति सूत्रार्थः। तत्र धर्मस्वरूपविचारस्तावच्छक्तपदश्रुतिरूपया श्रुत्या गम्यमानत्वाच्छ्रौतः। तदतिरिक्तप्रमाणादिविचारस्त्वार्थिकः। न हि वेदैकगम्यधर्मविचारो वेदप्रामाण्यविचारमन्तरा सम्भवति। नापि साधनफलनिर्णयमन्तरा तत्सम्भवः। साधनफलनिर्णयाभावे ह्यनुष्ठानद्वारा तदभ्युदयपर्यवसानाभावादलौकिकश्रेय साधनता कर्मरूप कथं सिध्येत्। नापि बुद्धाद्यागमाभासतदवगतधर्मस्वरूपसाधनफलाभावनिरूपण विना तद्विलक्षणप्रमाणस्वरूपसाधनफलनिर्णयसम्भव। तदेव श्रुत्यर्थाभ्यां प्रमाणस्वरूपसाधनफलैस्तदभावैश्च धर्मस्य जिज्ञास्यत्वं प्रतिज्ञातं प्रतीमः। तथा चायमर्थ —अथ वेदाध्ययनानन्तरम्, अत विचारहेतुभूताध्ययनस्य [2]धृतत्वाद्धेतो, धर्मस्य प्रमाणस्वरूपसाधनफलैरग्रे निरूपयिष्यमाणे जिज्ञासा विचारात्मिका चिन्ता, कर्तव्येति शेष।

अयमाशय —अध्येतव्य[3] इति नियमविधि। तत्र यथा दर्शपूर्णमासापूर्वेऽवघातनियमादृष्टस्योपयोगो विधिबलात्कल्प्यते, तथा सर्वक्रत्वपूर्वेष्वध्ययननियमादृष्टस्याप्युपयोग कल्प्य —अध्ययनगृहीतेनैव स्वाध्यायेन प्रणाड्या क्रत्वपूर्वं जन्यत इति। अनारभ्याधीतस्याप्यध्ययनस्य सामर्थ्यादेव क्रतुविध्याक्षिप्तार्थज्ञान उपयोग सम्भवति।

1 नितरा. ग, घ, मु पा 2 प्राप्तत्वात् क, घ, ङ.
3 अध्येतव्य. क, ग, घ, मु पा.

किञ्च—असत्यध्ययननियमविधावग्निहोत्रादिशास्त्राणि विद्वांसमलभमानान्यविद्वांसमेवाधिकृत्य, विद्यामन्तरेणानुष्ठानासम्भवाद्विद्यामाक्षिपन्तीति तान्यविशेषेण चतुरो वर्णानधिकुर्युः। सति त्वध्ययननियमविधौ "वसन्ते ब्राह्मणमुपनयीत" इत्यादिवाक्यावगतोपनयनसंस्कृतानां [1]त्रैवर्णिकानां क्वचिद्विनियोगापेक्षाया तत्सन्निधौ पठितस्य चाध्ययनस्यानिर्दिष्टकर्तृकस्य कर्त्रपेक्षायां परस्परमन्वये सत्यध्ययनमुपनयनसंस्कृतत्रैवर्णिककर्तृकम्, तच्चार्थज्ञानपरम्परया क्रतुसाध्यस्वर्गादिपुरुषार्थपर्यवसायीति लभ्यते। एवञ्चाग्निहोत्रादिशास्त्राण्यपि विद्वत्त्रैवर्णिकाधिकारिलाभान्न शूद्रमधिकुर्वन्तीत्यपशूद्राधिकरणे वक्ष्यमाणोऽधिकारिनियमोऽप्यध्ययनविधिमूलकः सङ्गच्छते। न[2] चाधीतसाङ्गस्यार्थज्ञानं विचारमन्तरेणापि सम्भवतीति वाच्यम्, ज्ञानोत्पत्तावपि[3] निर्णयस्य विचाराधीनत्वात् "अक्ता शर्करा उपदधाति" इत्यञ्जनं येन केनचित्, उत घृतेनैवेति संशयस्य (ख) 'सन्दिग्धे तु वाक्यशेषात्' इत्यनेनैव निरासात्। 'अधीत्य स्नायात्' इत्यत्र तु क्त्वाप्रत्ययात् पूर्वकालत्वमवगतम्, न[4] त्वानन्तर्यम्। तच्च[5] क्वचिद्गम्यते न तु सर्वत्र। न हि भुक्त्वा दण्डद्वय स्थित्वा व्रजति पुरुषे भुक्त्वा व्रजति इति न प्रयुञ्जते[6]। प्रयुक्तमपि नापप्रयोगं मन्यन्ते। तस्माद्धर्मावबोधफलकत्वाद् अत एव च विषयादिलाभाद् आरब्धव्या धर्ममीमांसा। अत्र सूत्रे धर्मपदमधर्मस्याप्युपलक्षणम्। अकारप्रश्लेषेण वा योज्यम्, हानाय तस्यापि जिज्ञास्यत्वात्॥

इति प्रथम जिज्ञासाधिकरणम्॥ १॥

२

ननु तथापि धर्मविचारो न कर्तुं शक्यः, धर्मस्य लौकिकाकारहीनत्वेन लक्षणप्रमाणयोरसम्भवात्। न ह्यस्य लौकिकाकारः कश्चिद्दृश्यते, नापि प्रमाणमस्ति। न तावत्प्रत्यक्षम्, रूपादिरहितत्वात्। नाप्यनुमानोपमाने, तयोः प्रत्यक्षपूर्वकत्वात्। नाप्यर्थापत्तिः, धर्मं विना कस्याप्यनुपपन्नत्वाभावात्। नापि शब्दः, सङ्गतिग्रहणस्य प्रत्यक्षानुमानमूलकत्वात्। नाप्यनुपलब्धिः, तस्याभावमात्रविषयकत्वात्। अत आह—

---

1. संस्कृतत्रैवर्णिकानां क, घ. 2. अधीताङ्गस्यार्थं॰ ग, घ, मु पा. 3. ज्ञानोपपत्तावपि क, घ, ङ. 4. नानन्तर्यं अ, घ. 5. तत्तु ग, घ. 6. प्रयुज्यते घ.

न्येन विचारकरणे बाध. स्यात्। अथाध्ययनविधेः किं भाव्यमिति चेत्, विश्वजिदादिवत्स्वर्गं इति गृहाण। अतः प्रयोजनाभावादत एव च विषयाद्यभावान्नारब्धव्या धर्ममीमासा। ( क ) 'प्रायेणानृतवादित्वात्पुंसा भ्रान्त्यादिसम्भवात्' इति न्यायेन पुरुषविशेषप्रणीतवेदस्य प्रामाण्यानवधारणाच्चेत्यादिशङ्कापरिहारायाध्वरमीमांसाशास्त्रस्येदमादिम सूत्रम्—

## अथातो धर्मजिज्ञासा ॥ १ ॥

अत्राथशब्द आनन्तर्ये वर्तते। तच्चानन्तर्यमर्थाद्वेदाध्ययननिरूपितमवगम्यते। न हि वेदैकबोध्यो धर्मो वेदाध्ययनमन्तरा शक्यो विचारयितुम्। अत शब्दो वृत्तं वेदाध्ययनं हेतुत्वेन स्थिरीकुर्वन्नथशब्दस्यानन्तर्यातिरिक्तार्थपरता निराचष्टे। ज्ञातुमिच्छा जिज्ञासा। सा च धर्मे विशिष्य ज्ञाते न सम्भवति, अज्ञाते च[1] नतरामिति सामान्यतो ज्ञाते विशेषजिज्ञासा। विशेषज्ञानञ्च विचारमन्तरा न सम्भवतीत्यन्तभूतो विचारो जिज्ञासेत्यनेनोच्यते। कर्तव्येत्यध्याहार्यम्। तथा च वेदाध्ययनानन्तरं तद्धेतुको धर्मविचार कर्तव्य इति सूत्रार्थः। तत्र धर्मस्वरूपविचारस्तावच्छक्तपदश्रुतिरूपया श्रुत्या गम्यमानत्वाच्छ्रौतः। तद्व्यतिरिक्तप्रमाणादिविचारस्त्वार्थिकः। न हि वेदैकगम्यधर्मविचारो वेदप्रामाण्यविचारमन्तरा सम्भवति। नापि साधनफलनिर्णयमन्तरा तत्सम्भवः। साधनफलनिर्णयाभावे ह्यनुष्ठानद्वारा तदभ्युदयपर्यवसानाभावादलौकिकश्रेयःसाधनता कर्मरूप कथ सिध्येत्। नापि बुद्धाद्यागमाभासतदवगतधर्मस्वरूपसाधनफलाभावनिरूपण विना तद्विलक्षणप्रमाणस्वरूपसाधनफलनिर्णयसम्भव.। तदेव श्रुत्यर्थाभ्या प्रमाणस्वरूपसाधनफलैस्तदभावैश्च धर्मस्य जिज्ञास्यत्वं प्रतिज्ञातं प्रतीम। तथा चायमर्थ —अथ वेदाध्ययनानन्तरम्, अत विचारहेतुभूताध्ययनस्य [2]वृत्तत्वाद्धेतो, धर्मस्य प्रमाणस्वरूपसाधनफलैरग्रे निरूपयिष्यमाणैः जिज्ञासा विचारात्मिका चिन्ता, कर्तव्येति शेष।

अयमाशय —अध्येतव्य[3] इति नियमविधि। तत्र यथा दर्शपूर्णमासापूर्वेऽवघातनियमादृष्टस्योपयोगो विधिबलात्कल्प्यते, तथा सर्वक्रत्वपूर्वेष्वध्ययननियमादृष्टस्याप्युपयोग कल्प्य —अध्ययनगृहीतेनैव स्वाध्यायेन प्रणाड्या क्रत्वपूर्वं जन्यत इति। अनारभ्याधीतस्याप्यध्ययनस्य सामर्थ्यादेव क्रतुविध्याक्षिप्तार्थज्ञान उपयोग सम्भवति।

1 नितरा. ग, घ, मु. पा  2 प्राप्तत्वात्. क, घ, ङ.

3. अध्येतव्य. क, ग, घ, मु पा.

किञ्च—असत्यध्ययननियमविधावग्निहोत्रादिशास्त्राणि विद्वासमलभमानान्यविद्वासमेवाधिकृत्य, विद्यामन्तरेणानुष्ठानासम्भवाद्विद्यामाक्षिपन्तीति तान्यविशेषेण चतुरो वर्णानधिकुर्यु.। सति त्वध्ययननियमविधौ "वसन्ते ब्राह्मणमुपनयीत" इत्यादिवाक्यावगतोपनयनसंस्कृताना [1]त्रैवर्णिकाना कचिद्विनियोगापेक्षाया तत्सन्निधौ पठितस्य चाध्ययनस्यानिर्दिष्टकर्तृकस्य कर्त्रपेक्षाया परस्परमन्वये सत्यध्ययनमुपनयनसस्कृतत्रैवर्णिककर्तृकम्, तच्चार्थज्ञानपरम्परया क्रतुसाध्यस्वर्गादिपुरुषार्थपर्यवसायीति लभ्यते। एवञ्चाग्निहोत्रादिशास्त्राण्यपि विद्वत्त्रैवर्णिकाधिकारिलाभान्न शूद्रमधिकुर्वन्तीत्यपशूद्राधिकरणे वक्ष्यमाणोऽधिकारिनियमोऽप्यध्ययनविधिमूलक· सङ्गच्छते। न[2] चाधीतसाङ्गस्यार्थज्ञान विचारमन्तरेणापि सम्भवतीति वाच्यम्, ज्ञानोत्पत्तावपि[3] निर्णयस्य विचाराधीनत्वात् "अक्ता शर्करा उपदधाति" इत्यञ्जनं येन केनचित्, उत घृतेनैवेति सशयस्य (ख)'सन्दिग्धे तु वाक्यशेषात्' इत्यनेनैव निरासात्। 'अधीत्य स्नायात्' इत्यत्र तु क्त्वाप्रत्ययात् पूर्वकालत्वमवगतम्, न[4] त्वानन्तयम्। तच्च[5] कचिद्गम्यते न तु सर्वत्र। न हि भुक्त्वा दण्डद्वय स्थित्वा व्रजति पुरुषे भुक्त्वा व्रजति इति न प्रयुञ्जते[6]। प्रयुक्तमपि नापप्रयोगं मन्यन्ते। तस्माद्धर्मावबोधफलकत्वाद् अत एव च विषयादिलाभाद् आरब्धव्या धर्ममीमांसा। अत्र सूत्रे धर्मपदमधर्मस्याप्युपलक्षणम्। अकारप्रश्लेषेण वा योज्यम्, हानाय तस्यापि जिज्ञास्यत्वात्॥

इति प्रथम जिज्ञासाधिकरणम्॥ १ ॥

२

ननु तथापि धर्मविचारो न कर्तुं शक्य., धर्मस्य लौकिकाकारहीनत्वेन लक्षणप्रमाणयोरसम्भवात्। न ह्यस्य लौकिकाकार. कश्चिद्दृश्यते, नापि प्रमाणमस्ति। न तावत्प्रत्यक्षम्, रूपादिरहितत्वात्। नाप्यनुमानोपमाने, तयोः प्रत्यक्षपूर्वकत्वात्। नाप्यर्थापत्ति, धर्म विना कस्याप्यनुपपन्नत्वाभावात्। नापि शब्द. सङ्गतिग्रहणस्य प्रत्यक्षानुमानमूलकत्वात्। नाप्यनुपलब्धि, तस्याभावमात्रविषयकत्वात्। अत आह—

1. सस्कृतत्रैवर्णिकाना क, घ. 2. अधीताङ्गस्यार्थ० ग, घ, मु पा. 3. ज्ञानोपपत्तावपि क, घ, ङ. 4. नानन्तर्यं अ, घ. 5. तत्तु ग, घ. 6. प्रयुज्यते घ.

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

सत्य न तस्य लौकिकाकारोऽस्ति, तथापि चोदनागम्यः स्वर्गादिसाधनताख्य आकारोऽस्त्येव । लक्षणमपि सुवचम् । प्रवर्तनाबोधकलिङादिसमभिव्याहृतं वाक्यं चोदना, सा लक्षणं प्रमाण यस्य स. अर्थ. धर्म इति धर्मस्वरूपनिर्वचनात् । श्येनाद्य-भिचारवारणाय अर्थ इति । अनर्थफलकत्वानाक्रान्त श्रेय.साधनत्वं विवक्षितम् । अन्ये तु चोदनाशब्देन प्रवर्तकं निवर्तकं च वाक्यमुच्यते । ततश्च "न हिंस्यात्" इत्यादिनिषेधवाक्यगम्यहिंसादीनां धर्मत्ववारणायार्थपदम् । अनिषिद्धत्व-मत्र विवक्षितम् । तथा च प्रवर्तकवाक्यगम्यत्वे सत्यनिषिद्धत्वं धर्मत्वमिति फलति । श्येनाद्यभिचारस्य तु धर्मत्वमेव । न च न हिंस्यादिति निषेधः श्येनाद्यभिचारे प्रवर्तते, निषेधस्य हिंसाविषयत्वाच्छ्येनादेश्चाहिंसात्वात् । अत एव 'यो हिंसितु-मिच्छेत्तस्यायमभ्युपाय.'[1] इति श्येनफलस्यैव हिंसात्वपर भाष्य सङ्गच्छते । न चाभिचारस्य धर्मत्वे शिष्टाना तत्र प्रवृत्त्यापत्ति., तेषा तत्फलेच्छाभावात् । श्येनानुष्ठा-यिष्वधार्मिकत्वव्यवहारस्य फलमादायैवोपपत्तेश्चेत्याहु । वस्तुतस्तु—अधर्म इत्यपि च्छेद' । पूर्वसूत्रे अधर्मविचारस्यापि प्रतिज्ञातत्वेन तल्लक्षणावश्यकत्वात् । चोदनेति प्रवर्तक निवर्तकञ्च वाक्यमुच्यते । अर्थपदेन इष्टसाधनमनिष्टसाधनं चोच्यते । ततश्च प्रवर्तकवेदवाक्यबोधितश्रेयःसाधनताकत्व धर्मत्वम् । निवर्तकवेदवाक्य-बोधितानिष्टसाधनताकत्वमधर्मत्वमिति फलति । अस्ति चेदं यागादौ हिंसादौ च, प्रवर्तनानिवर्तनाभ्यामिष्टानिष्टसाधनत्वकल्पनात् । अभिचारस्त्वधर्म एव, "नाभि-चरित वै" इति निषेधात्, मन्वादिभिरुपपातकेषु तस्य परिगणनाच्च । अत्र लक्षणो-क्त्या प्रवर्तक निवर्तकञ्च वेदवाक्यं धर्माधर्मयो. प्रमाणमित्यप्यर्थादुक्त भवति ॥

इति द्वितीय धर्मलक्षणाधिकरणम् ॥ २ ॥

३

अथ धर्मप्रमाणपरीक्षा प्रतिजानीते—

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

तस्य धर्मस्य यत् निमित्तं प्रमाणम्, तस्य परीष्टि परीक्षा क्रियत इति शेषः ॥

इति तृतीय निमित्तपरीष्ट्यधिकरणम् ॥ ३ ॥

1. तस्याय ह्युपाय. क, ग, घ, मु पा

४

ननु चोदनैव धर्मे प्रमाणमित्यनुपपन्नम्, धर्मस्य यागादिक्रियारूपस्य प्रत्यक्षत्वात्। अनुमानमपि तत्र प्रमाणम्, अर्थापत्तिर्वा, जगद्वैचित्र्यानुपपत्त्या तत्कल्पनात्। तत्राह—

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥**

इन्द्रियाणां सत्सम्प्रयोगे विषयसन्निकर्षे सति पुरुषस्य बुद्धिजन्म प्रत्यक्षस्योत्पत्तिर्भवति। तत् प्रत्यक्षं धर्मस्यानिमित्त स्वरूपनिश्चायकं न भवति। कुत ? विद्यमानमात्रग्राहित्वात्। अनुमानादेरप्युपलक्षणमेतत्। यद्यपि यागादिक्रिया प्रत्यक्षेण गृह्यते, तथापि श्रेय साधनत्वरूपेणाग्रहणान्न[1] दोष। अलौकिकश्रेयःसाधनताकत्वमेव हि धर्मस्वरूपम्। अत एव शूद्रकृतयागादिर्न धर्म। न च योगिप्रत्यक्षमेव तत्र प्रमाणमिति वाच्यम्, योगिनां हि तत्सामर्थ्यं नाकस्मिकम्, किन्तु धर्मानुष्ठानादेव भवति। तच्च न धर्मज्ञान विना भवितुमर्हति। अथ तेषा धर्मज्ञानं योग्यन्तरादिति चेन्न, अनवस्थापत्ते। तस्माच्चोदनैव शरणम्। अनुमानमर्थापत्तिश्च यागादिर्धर्मो हिंसादिरधर्म इति विशिष्य विवेचनासमर्थत्वात्तत्समर्था चोदनामेवापेक्षेते। सा चेदङ्गीकृता, अलमनुमानार्थापत्तिभ्याम्। तस्माच्चोदनैव धर्मे प्रमाणम् ॥

इति चतुर्थं सत्सम्प्रयोगाधिकरणम् ॥ ४ ॥

५

ननु कथ चोदनाया धर्मप्रामाण्यम्, तस्या. शक्तिग्रहापेक्षत्वात्, शक्तिग्रहस्य चालौकिके धर्मेऽसम्भवात्, सङ्केतरूपशक्ते. पुरुषकल्पिततया तस्या. पुरुषदोषादिमूलकत्वसम्भवाच्च। किञ्च "चित्रया यजेत पशुकाम." इत्यादिचोदना अप्रमाणमेव, यागानुष्ठानानन्तरमेव फलादर्शनात्। न च कालान्तरे तत्सम्भवतीति वाच्यम्, अनन्तरमेवासञ्जातस्य [2]पश्चाद्भवनोत्प्रेक्षाया मनोरथमात्रत्वात्। किञ्च शब्दानामनित्यत्वेन तद्विशेषात्मकतया काठकादिसमाख्यया च वेदस्य पौरुषेयत्वात्कथं प्रामाण्यम्, प्रायेण पुरुषस्यानृतवदनभ्रमप्रमादादिदोषबहुलत्वात्। तस्मान्न चोदनाप्रमाणकत्व धर्मस्येत्यत आह—

1. ग्रहणाददोषः घ, ङ. 2 पश्चात्तद्भवन घ.

**चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥**

सत्यं न तस्य लौकिकाकारोऽस्ति, तथापि चोदनागम्यः स्वर्गादिसाधनताख्य आकारोऽस्त्येव। लक्षणमपि सुवचम्। प्रवर्तनाबोधकलिङादिसमभिव्याहृत वाक्यं चोदना, सा लक्षण प्रमाणं यस्य स' अर्थ. धर्म इति धर्मस्वरूपनिर्वचनात्। श्येनाद्य-भिचारवारणाय अर्थ इति। अनर्थफलकत्वानाक्रान्त श्रेय साधनत्वं विवक्षितम्। अन्ये तु चोदनाशब्देन प्रवर्तकं निवर्तक च वाक्यमुच्यते। ततश्च "न हिंस्यात्" इत्यादिनिषेधवाक्यगम्यहिंसादीना धर्मत्ववारणायार्थपदम्। अनिषिद्धत्व-मत्र विवक्षितम्। तथा च प्रवर्तकवाक्यगम्यत्वे सत्यनिषिद्धत्वं धर्मत्वमिति फलति। श्येनाद्यभिचारस्य तु धर्मत्वमेव। न च न हिंस्यादिति निषेध. श्येनाद्यभिचारे प्रवर्तते, निषेधस्य हिंसाविषयत्वाच्छ्येनादेश्चाहिंसात्वात्। अत एव 'यो हिंसितु-मिच्छेत्तस्यायमभ्युपाय.'[1] इति श्येनफलस्यैव हिंसात्वपर भाष्य सङ्गच्छते। न चाभिचारस्य धर्मत्वे शिष्टाना तत्र प्रवृत्त्यापत्ति', तेषा तत्फलेच्छाभावात्। श्येनानुष्ठा-यिष्वधार्मिकत्वव्यवहारस्य फलमादायैवोपपत्तेश्चेत्याहु। वस्तुतस्तु—अधर्म इत्यपि च्छेद.। पूर्वसूत्रे अधर्मविचारस्यापि प्रतिज्ञातत्वेन तल्लक्षणावश्यकत्वात्। चोदनेति प्रवर्तक निवर्तकञ्च वाक्यमुच्यते। अर्थपदेन इष्टसाधनमनिष्टसाधन चोच्यते। ततश्च प्रवर्तकवेदवाक्यबोधितश्रेय साधनताकत्व धर्मत्वम्। निवर्तकवेदवाक्य-बोधितानिष्टसाधनताकत्वमधर्मत्वमिति फलति। अस्ति चेदं यागादौ हिंसादौ च, प्रवर्तनानिवर्तनाभ्यामिष्टानिष्टसाधनत्वकल्पनात्। अभिचारस्त्वधर्म एव, "नाभि-चरित वै" इति निषेधात्, मन्वादिभिरुपपातकेषु तस्य परिगणनाच्च। अत्र लक्षणो-क्त्या प्रवर्तक निवर्तकञ्च वेदवाक्यं धर्माधर्मयोः प्रमाणमित्यप्यर्थादुक्त भवति॥

इति द्वितीय धर्मलक्षणाधिकरणम्॥ २॥

३

अथ धर्मप्रमाणपरीक्षा प्रतिजानीते—

**तस्य निमित्तपरीष्टिः॥ ३॥**

तस्य धर्मस्य यत् निमित्तं प्रमाणम्, तस्य परीष्टि परीक्षा क्रियत इति शेषः॥

इति तृतीय निमित्तपरीष्ट्यधिकरणम्॥ ३॥

---

1. तस्याय ह्युपाय क, ग, घ, मु. पा.

४

ननु चोदनैव धर्मे प्रमाणमित्यनुपपन्नम्, धर्मस्य यागादिक्रियारूपस्य प्रत्यक्षत्वात्। अनुमानमपि तत्र प्रमाणम्, अर्थापत्तिर्वा, जगद्वैचित्र्यानुपपत्त्या तत्कल्पनात्। तत्राह—

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥**

इन्द्रियाणा सत्सम्प्रयोगे विषयसन्निकर्षे सति पुरुपस्य बुद्धिजन्म प्रत्यक्षस्योत्पत्तिर्भवति। तत् प्रत्यक्षं धर्मस्यानिमित्त स्वरूपनिश्चायक न भवति। कुत ? विद्यमानमात्रग्राहित्वात्। अनुमानादेरप्युपलक्षणमेतत्। यद्यपि यागादिक्रिया प्रत्यक्षेण गृह्यते, तथापि श्रेय साधनत्वरूपेणाग्रहणान्न[1] दोष। अलौकिकश्रेयःसाधनताकत्वमेव हि धर्मस्वरूपम्। अत एव शूद्रकृतयागादिर्न धर्म। न च योगिप्रत्यक्षमेव तत्र प्रमाणमिति वाच्यम्, योगिना हि तत्सामर्थ्यं नाकस्मिकम्, किन्तु धर्मानुष्ठानादेव भवति। तच्च न धर्मज्ञानं विना भवितुमर्हति। अथ तेषा धर्मज्ञान योग्यन्तरादिति चेन्न, अनवस्थापत्ते.। तस्माच्चोदनैव शरणम्। अनुमानमर्थापत्तिश्च यागादिर्धर्मो हिंसादिरधर्म इति विशिष्य विवेचनासमर्थत्वात्तत्समर्थां चोदनामेवापेक्षेते। सा चेदङ्गीकृता, अलमनुमानार्थापत्तिभ्याम्। तस्माच्चोदनैव धर्मे प्रमाणम् ॥

इति चतुर्थं सत्सम्प्रयोगाधिकरणम् ॥ ४ ॥

५

ननु कथं चोदनाया धर्मप्रामाण्यम्, तस्या. शक्तिग्रहापेक्षत्वात्, शक्तिग्रहस्य चालौकिके धर्मेऽसम्भवात्, सङ्केतरूपशक्ते. पुरुषकल्पिततया तस्या पुरुषदोषादिमूलकत्वसम्भवाच्च। किञ्च "चित्रया यजेत पशुकाम." इत्यादिचोदना अप्रमाणमेव, यागानुष्ठानानन्तरमेव फलादर्शनात्। न च कालान्तरे तत्सम्भवतीति वाच्यम्, अनन्तरमेवासञ्जातस्य [2]पश्चाद्भवनोत्प्रेक्षाया मनोरथमात्रत्वात्। किञ्च शब्दानामनित्यत्वेन तद्विशेषात्मकतया काठकादिसमाख्यया च वेदस्य पौरुषेयत्वात्कथं प्रामाण्यम्, प्रायेण पुरुषस्यानृतवदनभ्रमप्रमादादिदोषबहुलत्वात्। तस्मान्न चोदनाप्रमाणकत्व धर्मस्येत्यत आह—

1 ग्रहणाददोषः घ, ङ 2 पश्चात्सद्भवन घ.

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥**

शब्दस्यार्थेन सम्बन्धः प्रत्याय्यप्रत्यायकभावलक्षणः औत्पत्तिकः–नित्यः, जातेः शब्दार्थत्वस्याकृत्यधिकरणे व्युत्पादयिष्यमाणत्वात्, जातेश्च नित्यत्वात्, शब्दनित्यत्वस्य चानुपदमेव वक्ष्यमाणत्वात्। एतेन शक्तेरनित्यत्वदोषो निवारितः। तस्य-शब्दार्थसम्बन्धस्य शक्तेः, ज्ञान–शक्तिग्रहमिति यावत्। उपदेशः–वेदवाक्यम्, जनयति प्रसिद्धपदसमभिव्याहारादिति शेषः। उपदेश इत्यस्य प्रसिद्धपदसमभिव्याहार इत्यप्यर्थ इत्यन्ये। 'कमलोदरे मधूनि मधुकरः पिबति' इत्यत्र मधुकरशब्दस्यार्थमजानतोऽन्येषां पदानामर्थमवगत्य तत्समभिव्याहारात्कमलमध्यगते मधुपानं कुर्वति दृश्यमाने भ्रमरे मधुकरशब्दस्य सङ्गतिं गृह्णतो वाक्यार्थबोधवत्[1] "चित्रया यजेत पशुकामः" इत्यादावपि लोकप्रसिद्धपश्वादिपदसमभिव्याहारात्पशुभाव्यकयागकरणकभावनायामलौकिक्या[2] लिङः सङ्गतिं गृह्णतो यागः पशुसाधनमिति बोधः सम्भवति। तेन धर्मे सङ्केतग्रहासम्भवो निरस्तः। अलौकिकश्रेयःसाधनत्वमेव हि धर्मस्वरूपम्। अनुपलब्धे–प्रत्यक्षाद्यगृहीतेऽर्थे, विधिवाक्यजन्यज्ञानस्य अव्यतिरेकश्च–व्यभिचारोऽपि नास्ति, विपर्ययसंशयजनकत्वं नास्तीति यावत्। अनुपलब्ध इत्यनेनानुवादत्वनिरासः। तत्–तस्मात् अगृहीतार्थविषयकत्वे सति भ्रमसंशयान्यज्ञानजनकत्वात् चोदनावाक्यं प्रमाणम्। तुरवधारणे, प्रमाणमेव। अनपेक्षत्वात्–पुरुषान्तरे प्रत्ययान्तरे चापेक्षाराहित्यात्। वाक्येषु हि त्रेधा पुरुषानुप्रवेशः–पदपदार्थसम्बन्धद्वारेण, वाक्यतदर्थसम्बन्धद्वारा वा, सन्दर्भस्यैव वा भारतादिवत्पौरुषेयत्वेन। तत्र पदपदार्थसम्बन्धस्य नित्यत्वमौत्पत्तिकशब्देनोक्तम्। वाक्यार्थबोधस्य पदार्थमूलकत्वं वेदस्यापौरुषेयत्वञ्चोपरिष्टाद्वक्ष्यते। न च संवादाभावादप्रामाण्यं शङ्क्यम्, "कारीर्या वृष्टिकामो यजेत" इत्यादौ समनन्तरभाविदृष्टफलके संवादसत्त्वात्, स्वतःप्रामाण्येन संवादानपेक्षत्वाच्च। बादरायणग्रहणमादरार्थम्, अनधिगतार्थगन्तृत्वमेव प्रमाणलक्षणमादर्तव्यं न त्वन्यदिति।

---

1 बोध इव क, घ, मु. पा 2 अलौकिकलिङः क, घ, मु, पा

तार्किकास्तु प्रमाकरणं प्रमाणम्। प्रमात्वञ्च यथार्थानुभवत्वम्। याथार्थ्यञ्च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्। अनुभवत्वन्तु-अनुभवामीति प्रतीतिसिद्धः साक्षात्कारानुमित्युपमितिशाब्दबोधसाधारण स्मृतिव्यावृत्तो जातिविशेष', न त्वगृहीतग्राहित्वम्, [1]धारावाहिके अव्याप्तेरित्याहु'। तदेतदयुक्तम्, अनुभवामीति प्रतीतिसिद्धानुभवत्वस्य साक्षात्कार एव सत्त्वेनानुमित्यादावव्याप्ते', स्वर्गमनुभवामि पर्वते वह्निमनुभवामीति प्रतीत्यभावेनानुमित्यादौ तत्सत्त्वे मानाभावात्। तस्मादनधिगतार्थगन्तृत्वमेवानुभवत्वम्। न च धारावाहिकेऽव्याप्ति, तत्तत्क्षणविशिष्टघटादेः पूर्वपूर्वज्ञानागृहीतस्यैवोत्तरोत्तरज्ञानविषयत्वात्। इदानी स्पृशामि, इदानीं पश्यामीत्यादिप्रतीत्या कालस्यापि षडिन्द्रियवेद्यत्वात्, कालान्यद्रव्यचाक्षुषत्वस्यैव रूपकार्यतावच्छेदकत्वात्, अनुभवानुसारेण कार्यकारणभावकल्पनात्, अन्यथा लाघवाच्चाक्षुषत्वस्यैव कार्यतावच्छेदकत्वापत्तेः। न च कालोऽतिसूक्ष्मत्वात्कथं प्रत्यक्षग्राह्य इति वाच्यम्। ज्ञानधाराया ह्युपरताया किमत्र घटोऽवस्थित इति पृष्टः सन् कथयति— अस्मिन्क्षणे मयोपलब्ध इति, प्रातरारभ्यैतावन्तं काल मयोपलब्ध इति च। कालभेदे त्वगृहीते कथमेव भवेत्। शतपत्रपत्रशत मया सूच्या युगपद्भिन्नमिति तु स्थूलकालविषयकम्। वस्तुतस्तु धारावाहिकस्थले तावत्कालव्यापिन्येकैव ज्ञानव्यक्ति, कारणभेदाभावात्, तद्भेदकल्पने मानाभावात्, [2]योग्यविभुविशेषगुणाना त्रिक्षणावस्थायित्वस्य परिभाषामात्रत्वात्। (ग) वस्तुतस्तु स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वमेवानधिगतार्थगन्तृत्वम्। अत कालभेदस्येन्द्रियवेद्यत्वाभावेऽपि न क्षतिः। दिनान्तरे गृहीतस्य घटादेर्दिनान्तरे पुनर्ज्ञानमपि प्रमैव। याथार्थ्यमपि प्रमालक्षणे देयम्। तच्च तद्वति तत्प्रकारकत्व विशेष्यावृत्त्यप्रकारकत्व वा। अनुमितेरपि वह्निविशिष्ट' पर्वतो विषय इत्यनधिगतार्थगन्तृत्वम्। न च पर्वतस्यानुमितिविषयत्वे पर्वतमनुमिनोमीत्यनुव्यवसायापत्ति, विधेयताख्यविषयताशालिन एवानुमिनोमीत्यनुव्यवसायमाननियमात्। एवमुपमितावप्यनधिगतार्थगन्तृत्व बोध्यम्। लौकिशब्दजन्यज्ञानं तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात्। न च लौकिकशब्द' प्रमाणम्, उक्तप्रमाकरणत्वाभावात्। लौकिके शब्दे तज्जन्यज्ञाने च प्रामाण्यव्यवहारस्तु तद्वति तत्प्रकार-

1. धारावाहिकेरव्याप्ते क, ग, घ, मु पा. 2. योग्यविशेषगुणाना ख, ग, घ, मु. पा.

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥**

शब्दस्यार्थेन सम्बन्ध' प्रत्याय्यप्रत्यायकभावलक्षण औत्पत्तिक –नित्यः, जातेः शब्दार्थत्वस्याकृत्यधिकरणे व्युत्पादयिष्यमाणत्वात्, जातेश्च नित्यत्वात्, शब्दनित्यत्वस्य चानुपदमेव वक्ष्यमाणत्वात् । एतेन शक्तेरनित्यत्वदोषो निवारित. । तस्य-शब्दार्थसम्बन्धस्य शक्ते, ज्ञानं–शक्तिग्रहमिति यावत् । उपदेशः–वेदवाक्यम्, जनयति प्रसिद्धपदसमभिव्याहारादिति शेष' । उपदेश इत्यस्य प्रसिद्धपदसमभिव्याहार इत्यप्यर्थ इत्यन्ये । 'कमलोदरे मधूनि मधुकर पिबति' इत्यत्र मधुकरशब्दस्यार्थमजानतोऽन्येपा पदानामर्थमवगत्य तत्समभिव्याहारात्कमलमध्यगते मधुपान कुर्वति दृश्यमाने भ्रमरे मधुकरशब्दस्य सङ्गति गृह्णतो वाक्यार्थबोधवत्[1] "चित्रया यजेत पशुकाम." इत्यादावपि लोकप्रसिद्धपश्वादिपदसमभिव्याहारात्पशुभाव्यकयागकरणकभावनायामलौकिक्या[2] लिङ सङ्गतिं गृह्णतो याग. पशुसाधनमिति बोधः सम्भवति । तेन धर्मे सङ्केतग्रहासम्भवो निरस्त' । अलौकिकश्रेयःसाधनत्वमेव हि धर्मस्वरूपम् । अनुपलब्धे–प्रत्यक्षाद्यगृहीतेऽर्थे, विधिवाक्यजन्यज्ञानस्य अव्यतिरेकश्च–व्यभिचारोऽपि नास्ति, विपर्ययसशयजनकत्व नास्तीति यावत् । अनुपलब्ध इत्यनेनानुवादत्वनिरास । तत्–तस्माद् अगृहीतार्थविषयकत्वे सति भ्रमसंशयान्यज्ञानजनकत्वात् चोदनावाक्यं प्रमाणम् । तुरवधारणे, प्रमाणमेव । अनपेक्षत्वात्–पुरुषान्तरे प्रत्ययान्तरे चापेक्षाराहित्यात् । वाक्येषु हि त्रेधा पुरुषानुप्रवेश –पदपदार्थसम्बन्धद्वारेण, वाक्यतदर्थसम्बन्धद्वारा वा, सन्दर्भस्यैव वा भारतादिवत्पौरुषेयत्वेन । तत्र पदपदार्थसम्बन्धस्य नित्यत्वमौत्पत्तिकशब्देनोक्तम् । वाक्यार्थबोधस्य पदार्थमूलकत्व वेदस्यापौरुपेयत्वञ्चोपरिष्टाद्वक्ष्यते । न च सवादाभावादप्रामाण्य शङ्क्यम्, "कारीर्या वृष्टिकामो यजेत" इत्यादौ समनन्तरभाविदृष्टफलके संवादसत्त्वात्, स्वत'-प्रामाण्येन सवादानपेक्षत्वाच्च । बादरायणग्रहणमादरार्थम्, अनधिगतार्थगन्तृत्वमेव प्रमाणलक्षणमादर्तव्य न त्वन्यदिति ।

---

1 बोध इव क, घ, मु. पा 2 अलौकिकलिङ क, घ, मु, पा.

तार्किकास्तु प्रमाकरणं प्रमाणम्। प्रमात्वञ्च यथार्थानुभवत्वम्। याथार्थ्यञ्च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्। अनुभवत्वन्तु–अनुभवामीति प्रतीतिसिद्धः साक्षात्कारानुमित्युपमितिशाब्दबोधसाधारण स्मृतिव्यावृत्तो जातिविशेष', न त्वगृहीतग्राहित्वम्; [1]धारावाहिके अव्याप्तेरित्याहु'। तदेतदयुक्तम्, अनुभवामीति प्रतीतिसिद्धानुभवत्वस्य साक्षात्कार एव सत्त्वेनानुमित्यादावव्याप्ते', स्वर्गमनुभवामि पर्वते वह्निमनुभवामीति प्रतीत्यभावेनानुमित्यादौ तत्सत्त्वे मानाभावात्। तस्मादनधिगतार्थगन्तृत्वमेवानुभवत्वम्। न च धारावाहिकेऽव्याप्ति', तत्तत्क्षणविशिष्टघटादे: पूर्वपूर्वज्ञानागृहीतस्यैवोत्तरोत्तरज्ञानविषयत्वात्। इदानी स्पृशामि, इदानीं पश्यामीत्यादिप्रतीत्या कालस्यापि षडिन्द्रियवेद्यत्वात्, कालान्यद्रव्यचाक्षुषत्वस्यैव रूपकार्यतावच्छेदकत्वात्, अनुभवानुसारेण कार्यकारणभावकल्पनात्, अन्यथा लाघवाच्चाक्षुषत्वस्यैव कार्यतावच्छेदकत्वापत्तेः। न च कालोऽतिसूक्ष्मत्वात्कथ प्रत्यक्षग्राह्य इति वाच्यम्। ज्ञानधाराया ह्युपरतायां किमत्र घटोऽवस्थित इति पृष्ट' सन् कथयति— अस्मिन्क्षणे मयोपलब्ध इति, प्रातरारभ्यैतावन्तं कालं मयोपलब्ध इति च। कालभेदे त्वगृहीते कथमेव भवेत्। शतपत्रपत्रशत मया सूच्या युगपद्भिन्नमिति तु स्थूलकालविषयकम्। वस्तुतस्तु धारावाहिकस्थले तावत्कालव्यापिन्येकैव ज्ञानव्यक्ति', कारणभेदाभावात्, तद्भेदकल्पने मानाभावात्, [2]योग्यविभुविशेषगुणाना त्रिक्षणावस्थायित्वस्य परिभाषामात्रत्वात्। (ग) वस्तुतस्तु स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वमेवानधिगतार्थगन्तृत्वम्। अत कालभेदस्येन्द्रियवेद्यत्वाभावेऽपि न क्षतिः। दिनान्तरे गृहीतस्य घटादेर्दिनान्तरे पुनर्ज्ञानमपि प्रमैव। याथार्थ्यमपि प्रमालक्षणे देयम्। तच्च तद्वति तत्प्रकारकत्व विशेष्यावृत्त्यप्रकारकत्व वा। अनुमितेरपि वह्निविशिष्टः पर्वतो विषय इत्यनधिगतार्थगन्तृत्वम्। न च पर्वतस्यानुमितिविषयत्वे पर्वतमनुमिनोमीत्यनुव्यवसायापत्ति, विधेयताख्यविषयताशालिन एवानुमिनोमीत्यनुव्यवसायभाननियमात्। एवमुपमितावप्यनधिगतार्थगन्तृत्व बोध्यम्। लौकिशब्दजन्यज्ञान तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात्। न च लौकिकशब्द प्रमाणम्, उक्तप्रमाकरणत्वाभावात्। लौकिके शब्दे तज्जन्यज्ञाने च प्रामाण्यव्यवहारस्तु तद्वति तत्प्रकार-

---

1. धारावाहिकैरव्याप्ते क, ग, घ, मु पा. 2. योग्यविशेषगुणाना ख, ग, घ, मु. पा.

कत्वांशमादाय गौणः। आप्तत्वञ्चात्रैवोपयुज्यते। वेदस्तु प्रमाणम्, तस्योक्तलक्षणाक्रान्तत्वात्। "व्रीहिभिर्यजेत" इत्यादिवाक्येषु यागादिपदार्थविषयेऽप्रामाण्यमिष्टमेव। तदुक्तम्—'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युरनर्थका'॥ इति। प्रामाण्य च स्वतः, अप्रामाण्यन्तु परत.। स्वतस्त्व कारणगुणसवाद्यर्थक्रियाज्ञानानधीनत्वम्। परतस्त्व तु बाधकज्ञानकारणदोषविसवादज्ञानाधीनत्वम्। याथार्थ्यघटितप्रामाण्यस्य स्वतस्त्वम्, अयाथार्थ्यरूपाप्रामाण्यस्य च परतस्त्वम्, ज्ञानग्राह्यत्व कारणदोषादिज्ञानग्राह्यत्वञ्च क्रमेण बोध्यमित्यन्यत्र विस्तर.॥

इति पञ्चम शब्दार्थसम्बन्धनित्यताधिकरणम्॥ ५॥

६

अथ यदुक्त शब्दार्थयोर्नित्य. सम्बन्ध इति, तत्राक्षिपति—

"कर्मैके तत्र दर्शनात्॥ ६॥

क्रियत इति कर्म कार्य शब्द', अतस्तत्सम्बन्धोऽप्यनित्य इति केचिन्मन्यन्ते। कुतः? तत्र दर्शनात्—तत्र तस्मिन्प्रयत्नोत्तरकाले दर्शनात् प्रयत्नजन्यत्वनिश्चयात्। न च प्रयत्नव्यङ्ग्यत्वेन तदुत्तरदर्शनमुपपद्यत इति वाच्यम्, प्राक्तत्सत्त्वे मानाभावात्। अभिव्यक्तिरपि किं प्रतिबन्धकनिरासेन? उत संस्कारविशेषाधानेन? नाद्य', प्रतिबन्धकानुपलब्धे। अथ कर्णे स्तिमितैरवयवैराच्छादननिरासे च तदभिव्यक्तिरिति चेन्न, एव सति सर्वेषा शब्दानां सर्वगतत्वेन श्रोत्रसन्निकृष्टतया प्रतिबन्धकाभावदशायां युगपच्छ्रवणापत्ते'। न द्वितीय., संस्कारोऽपि हि तै शब्दस्य? उत श्रोत्रस्य? अथोभयो? नाद्य, तस्यैकत्वात्सर्वगतत्वादनवयवत्वेन चावयवसंस्कारायोगात्कुम्भस्थैर्वायुभि. सस्कृतस्य पाटलीपुत्रेऽप्युपलम्भापत्ते। न च द्वितीय, श्रोत्रं ह्याकाशम्, तस्य सर्वेषामेकतया एकदेशस्थध्वनिभिरपि सस्कारात्सर्वेषा शब्दोपलब्धिप्रसङ्ग.। न तृतीय., पक्षद्वयोक्तदोषप्रसङ्गात्। अत शब्दोऽनित्य। न च तस्यानित्यत्वेऽपि समवायवत्तत्सम्बन्धो नित्योऽस्त्विति वाच्यम्। समवायनित्यत्वस्यापि परिभाषामात्रत्वात्॥

इतोऽप्येवमित्याह—

अस्थानात्॥ ७॥

न च शब्दस्योच्चारणानन्तरं ज्ञातस्य चिरकालं स्थितिरुपलभ्यते। अतोऽपि तदनित्यत्वम् ॥

इतोऽप्येवमित्याह—

**करोतिशब्दात् ॥ ८ ॥**

शब्दं कुर्वकार्षीत्करोतीत्यादिव्यवहारादपि[1] न नित्यः शब्दः, कृञ उत्पत्त्यर्थकत्वादिति भावः ॥

इतोऽप्येवमित्याह—

**सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥**

सत्त्वान्तरे-प्राण्यन्तरे यौगपद्यात्, उपलम्भस्येति शेष'। नानादेशस्थैर्वक्तृभिरुच्चारिता युगपन्नानादेशेषूपलभ्यन्ते। न चेद नित्यस्यैकस्य सम्भवति। न च नित्यत्वेऽप्यनेकत्वादिदमुपपद्यते। न हि नित्यमेकमेवेति नियम इति वाच्यम्। प्रत्यभिज्ञा हि नित्यत्वे मानम्। यथा ह्यस्तनाह्यस्तनयोस्तथा नानावक्तृकशब्देऽपि प्रत्यभिज्ञाबलान्नित्यत्वे तदैक्यमपीति नानादेशेषु युगपदुपलब्धिर्विरुद्धेत्याशय ॥

इतोऽप्येवमित्याह—

**प्रकृतिवि त्योश्च ॥ १० ॥**

दृध्यत्रेत्यत्र प्रकृतेरिकारस्य विकृतेर्यकारस्य च दर्शनादिति शेषः। न हि विक्रियमाणस्य नित्यत्वं सम्भवतीति भावः ॥

इतोऽप्येवमित्याह—

**वृद्धिश्च कर्तृभूम्नास्य ॥ ११ ॥**

कर्तृभूम्ना-उच्चारयितृबाहुल्येन वृद्धिः-महत्त्वं दृश्यते। अवयवप्रचयकृतं महत्त्वमित्यवयविजननं तत्रेति गम्यते। अभिव्यङ्ग्यत्वे तु नेदमुपपद्यते। न हि बहुभिरल्पैर्वाभिव्यङ्ग्यो घटोऽन्यथोपलभ्यते। अवयवाल्पत्वबहुत्वाभ्यान्तु घटादिरन्यथैवोपलभ्यते। अतो घटादिवदनित्यः शब्द इति भाव। यद्यपि तार्किकैः शब्दस्य द्रव्यत्वं नाङ्गीकृतं नापि तस्यावयवित्वम्, तन्मते गुणत्वात्[2], तथापि तदन्य एवात्र पूर्वपक्षीत्याशय. ॥

अनित्यत्व दूषयति—

1. अप्यनित्य. घ. 2. गुणत्वादिति. ख, ग.

**समन्तु तत्र दर्शनम् ॥ १२ ॥**

तुरनित्यत्वं व्यावर्तयति । अत-प्रयत्नोत्तरकाले दर्शनं समम्, कार्यत्वाभिव्यङ्ग्यत्वयोरिति शेष' ॥

यदुक्तमुच्चारितप्रध्वस्तः शब्द इति तत्राह—

**: परमदर्शनं विषयानागमात् ॥ १३ ॥**

परमित्यव्यय युक्तमित्यर्थे 'खल. प्रमाद्यतु पर सज्जने तदसाम्प्रतम्' इति यथा । स एवायं गकार इति प्रत्यभिज्ञया सत-स्थिरस्यैव शब्दस्य अदर्शनं युक्तम् । कुतः ? विषयानागमात्-विषय शब्द प्रत्यभिव्यञ्जकानामनागमात्-असम्बन्धात् । प्रयत्नोत्तरकालिक शब्दस्य दर्शन न शब्दस्य कार्यत्वं साधयति, प्रयत्नव्यङ्ग्यत्वेनापि तदुपपत्ते । यत्तु कथमभिव्यङ्ग्यत्वमिति ? श्रोत्रेन्द्रियसंस्कारेणेति ब्रूम । श्रोत्रेन्द्रियञ्च कर्णशष्कुल्यवच्छिन्नमाकाशम् । तच्च [1]प्रतिपूरुषं भिन्नमिति नातिप्रसङ्ग । अधिष्ठानभेदाच्च संस्कारव्यवस्था । न चैकेनाधिष्ठानेनाकाशस्य सस्कृतत्वात्सर्वेषामुपलब्धिः स्यादिति वाच्यम् । भोगायतने हि स्वशरीरे पुंसां ज्ञानमुत्पद्यते, न त्वन्यत्र । शब्दज्ञानाङ्ग चायमधिष्ठानसस्कार. । प्रधानसमदेशत्वञ्चाङ्गानां गुण । तेन देहान्तरवत पुरुषस्य यत्स्वदेहे निष्पादयितव्य ज्ञानं तस्य तद्देहगत एव सस्कारो निष्पादक, न तु देहान्तरगत' । विगुणो हि स, प्रधानदेशत्वाभावात् ।

नन्वेवमपि संस्कार्यस्यैकत्वात्तद्द्वारत्वाच्च सस्काराङ्गभावस्य देशभेदोऽकिञ्चित्कर [2]बर्हिरेकत्वेन ( घ ) तत्सस्काराणामातिथ्याकालानामप्युपसदग्नीषोमीयाङ्गत्वादिति चेत्, न ह्येकस्मिन्नधिष्ठाने सर्वेषा ज्ञानमुपलभ्यते । साधारणमपीन्द्रिय विज्ञानसमानदेशसस्कारसचिव विज्ञानमुत्पादयति, नान्यथेति कल्पनेनानतिप्रसङ्गात् । किञ्च-यद्यप्याकाशमेकमनवयवञ्च, तथापि तस्य परिच्छिन्नैर्घटादिभिर्ये सयोगास्तेऽपि परिच्छिन्ना एव । एवञ्च कर्णशष्कुलीसयोगाना [3]प्रतिपूरुप भिन्नत्वात्तदवच्छिन्नाकाशस्य च श्रोत्रत्वात्सत्यपि स्वरूपैक्येऽवच्छिन्नरूपाणा तेषा भिन्नत्वाद्व्यवस्थासिद्धि । न चैवमपि सकृत्सस्कृत श्रोत्र सर्वशब्दान् प्रकाशयेदिति वाच्यम् । ध्वनयो हि ताल्वादिसम्पर्काद्विजातीया [4]विलक्षणसामर्थ्या निष्पद्यन्ते । ततश्च कश्चिदेव ध्वनि

1 प्रति पुरुष क, घ. 2 बर्हिरेकत्वेन क घ, बर्हिन्यायेन ग 3 प्रतिपुरुष क, घ.
4. सम्पर्काद्विलक्षणसामर्थ्यात् ग, विजातीया विलक्षणसामर्थ्यात् क, ग.

कश्चिदेव शब्दमभिव्यनक्तीति व्यवस्थोपपत्ति'। दृष्टा च समानेन्द्रियग्राह्याणामप्यभिव्यञ्जकव्यवस्था। सावित्र हि तेजो घटादीनामेवाभिव्यञ्जकं न तु नक्षत्राणाम्। निम्बत्वक् चन्दनगन्धस्यैवाभिव्यञ्जिका न तु गन्धान्तराणाम्। किञ्च शब्दसंस्कारपक्षेऽपि न सर्वपुंसामुपलब्धिप्रसङ्ग, ध्वनीनां परिच्छिन्नत्वेन तद्देश एव शब्दस्य संस्कारात्। सस्कृतेन शब्देन यस्येन्द्रिय सनिकृष्टम्, स एव शृणोतीति कल्पनान्नाभिव्यङ्ग्यत्वे कश्चिद्दोषः॥

यदुक्त करोतिशब्दादिति तत्राह—

## प्रयोगस्य परम्॥ १४॥

परम्—अन्यत् यत्कारणमुक्त करोतिशब्दादिति, तत् प्रयोगस्य—उच्चारणस्य, [1]शब्द करोतीत्यत्र शब्दोच्चारणस्योत्पत्तिर्विवक्षितेत्यर्थ॥

एकस्य नित्यस्य युगपन्नानादेशोपलम्भः कथम्? तत्राह—

## आदित्यवद्यौगपद्यम्॥ १५॥

आदित्यस्यैकस्य यथा युगपद्दर्शन तथा शब्दस्यापीत्यर्थं। 'सर्वगतो हि शब्दो भिन्नदेशैर्ध्वनिभि. स्वे स्वे देशेऽभिव्यज्यमानो भिन्नदेशेऽवभासते। ध्वनयो हि श्रोत्रदेशमागत्यापि शब्द व्यञ्जयन्त. स्वोत्पत्तिदेशमिव शब्दं[2] भासयन्तीति दर्शनबलादभ्युपगम्यते। ननु—अप्राप्यकारि श्रोत्रम्, न च ध्वन्युत्पत्तिदेशाः श्रोत्रेण प्राप्यन्त इति कथ[3] तद्विशिष्टशब्दग्रहणं श्रोत्रेणेति चेत्, श्रोत्रं हि स्वदेशावस्थितमेव शब्दं बोधयदपि न तद्विशिष्ट बोधयति, किन्तु स्वरूपेणैव। शब्दोच्चारणदिश[4] आगता ध्वनयस्तु तया विशिष्ट शब्दं बोधयन्ति। सा च दिक् श्रोत्रप्राप्ता कालवच्छब्दविशेषणतया शक्यते श्रोत्रेण ग्रहीतुम्। ध्वनयश्च क्रमेण मन्दीभवन्त' प्रत्यासन्नाद्दूरतराच्च देशादागतास्तीव्र मन्दं मन्दतरञ्च शब्दं बोधयन्ति। बोधविशेषाच्च प्रत्यासन्नदूरादिरूपेणानुमानाद्ध्वन्युत्पत्तिदेशो हृदय[5] तद्रूपेणागच्छति। तत्र यः शब्दस्य परमार्थदेशस्तस्याग्रहणाद्विशिष्टस्य शब्दस्वरूपस्य च ग्रहणात् ध्वन्युत्पत्तिदेशस्य च ग्रहणात्

1 श्रेयम्। शब्द क, घ ग 2 प्रकाशयन्ति क, ख, ग 3 तद्विशेषशब्दग्रण क, घ, मु पा, तद्विशेषे शब्दग्रहण मु. पा 4 दिश आगता क, ख, ग, मु. पा. 5 हृदयदेश तद्रूपेण क, ग मु पा

त्रयाणां संसर्गभ्रमादेवंविधः प्रत्ययो भवति—प्राच्यां दिश्येतावदन्तराले शब्दः' इति शास्त्रदीपिकायां व्यक्तम्। अत्र '[1]आगता ध्वनयः' इत्युक्त्या ध्वनीनां द्रव्यत्व सूचितम्। 'वायुगुणत्वं तु युक्तम्' इत्यादिसन्दर्भेण गुणत्वमपि प्रपञ्चितम्। तत्र गुणत्वपक्षे ध्वनिमद्वायव एव स्वदेशे यत्नेनोत्पन्ना' श्रोत्रमायान्ति। वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा तार्किकाणा शब्दगुणस्येन्द्रियसन्निकर्षो वा बोध्यः। भाष्ये तु 'वायवीयाः संयोगविभागा एव व्यञ्जका.' इति स्थितम्। ध्वनय एव च लोके नादशब्देन व्यवह्रियन्ते। न चाकाशगुणत्वं शब्दस्य युक्तम्। तस्य शङ्खाद्यवच्छिन्ने तस्मिन्नुत्पत्तेर्वाच्यतया सन्निकर्षाभावेन श्रोत्रेन्द्रियेण ग्रहणानापत्तेः। वस्तुतस्तु वायोरभिघातकारणत्वेनावश्यकत्वात्तद्गुणत्वमेव युक्तम्। वर्णास्तु नित्यानि द्रव्याणि, वर्णा न गुणा, ध्वन्यन्यत्वे सति श्रावणत्वात् शब्दत्ववद्दिग्वत्कालवच्चेत्यनुमानेनागुणत्वे सिद्धे परिशेषेण द्रव्यत्वसिद्धेः। दिक्कालयोश्च श्रावणत्वस्य [2]अनुभवसिद्धत्वान्नासिद्धिः। एतेन अस्पर्शत्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपादिवद्गुणत्वमिति प्रत्युक्तम्, शब्दत्वे व्यभिचारात्। ननु वर्णा अनित्याः[3]सामान्यान्यत्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद् इत्यनुमानादिति चेन्न, अस्यानुमानस्य श्रोत्र नित्यद्रव्यग्राहक निरवयवेन्द्रियत्वात् मनोवद् इति सत्प्रतिपक्षतया असाधकत्वात्। न च श्रोत्र नित्यद्रव्याग्राहकम् अनित्यभूतविशेषगुणग्राहक वा बहिरिन्द्रियत्वादिन्द्रियत्वाद्वा चक्षुर्वदिति प्रत्यनुमानबाधः। प्रथमेऽनुमाने दृष्टान्ते साध्यवैकल्यात्, चक्षुष आकाशादिनित्यग्राहकत्वात्। द्वितीये च ध्वनिग्राहकतया सिद्धसाधकत्वात्। किञ्च व्यक्तिभेदाभावात्स एवायं गकार इति प्रत्यभिज्ञाया जातिविषयकत्वकल्पनानुपपत्त्या प्रत्यभिज्ञाविरोधोऽपि दुर्वार.। न च द्रुतो गकारो विलम्बितो गकार इति विरुद्धधर्मससर्गित्वाद्गकारव्यक्तिभेद इति वाच्यम्, तस्या. प्रतीतेर्ध्वनिविषयत्वात्। एतेनोदात्तत्वादिप्रतीतिरपि व्याख्याता। ध्वन्युत्पत्तिश्च ताल्वादिव्यापारात्। स्थानभेदात्तु मन्द्रोदात्तत्वादिव्यवहार। किं बहुना? शब्दानित्यत्वपक्षेऽपि नानादेशोपलब्धेर्भ्रान्तित्वमपरिहार्यम्,[4] श्रोत्रस्य प्राप्यकारित्वाभावेन वक्त्रमुखादिरूपदेशग्रहणस्य भ्रान्तित्वावश्यकत्वात्। तस्मान्नित्य' शब्द ॥

यदुक्त विक्रियमाणत्वादनित्यत्व तत्राह—

1. दिश आगता क, ग, मु पा  2. युक्त्यनुभवसिद्धत्वात् क, ग, मु पा
3 सामान्यवत्वे सति क, ग, ल, मु, पा.  4. अपरिहारम् घ, मु. पा.

## [1]शब्दान्तरमविकारः ॥ १६ ॥

दधि अत्र इत्यस्मात् दध्यत्र इति शब्दान्तरम्। न यकार इकारस्य विकारः। यथा कटं चिकीर्षुस्तृणान्यादत्ते न तथा यकार प्रयुयुक्षोरिकारोपादान सम्भवति, त्वया तस्य गुणत्वस्वीकारात्, अस्मन्मते विभुत्वेन द्रव्यान्तराप्रकृतित्वात्। व्याकरणन्तु साधुत्वमात्रज्ञापकम्, न तु प्रकृतिविकारबोधकम्। अत एव 'सिद्धन्तु नित्यशब्दत्वात्' 'किमर्थं शास्त्रमिति चेत्, निवर्तकत्वात्सिद्धम्' इति वृद्धिसूत्रस्थ तद्वार्तिक तद्भाष्यञ्च सङ्गच्छते। अभियुक्ताश्चाहुः—'उपाया' शिक्ष्यमाणानां बालानामुपकारका। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति ॥

यदुक्तं वक्तृबहुत्वाच्छब्दमहत्त्वमिति तत्राह—

## नादवृद्धि' परा ॥ १७ ॥

परा–अन्या वृद्धिर्या उक्ता वक्तृबहुत्वाच्छब्दस्य वृद्धिरिति, सा वृद्धिर्न शब्दस्य, किन्तु नादवृद्धिः–नादो ध्वनिः तस्य वृद्धि., शब्दस्यानवयवत्वेन[2] महत्त्वानुपपत्ते। बहुभिर्नैरन्तर्येणोच्चार्यमाणैर्नादैः सर्वतः कर्णशष्कुलीं प्राप्नुवद्भि' शब्दो महानिति भ्रमः, न तु तस्य महत्त्वमिति भावः ॥

एव परमतं दूषयित्वा स्वमतमाह—

## नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

तुरवधारणे। नित्य एव शब्द' स्यात्। दृश्यते अनेनेति दर्शनमुच्चारणम्, तस्य परं प्रत्यर्थप्रत्यायनार्थत्वात्। न ह्युच्चारितस्य[3] शब्दस्य नाशेऽन्यस्माच्छब्दज-शब्दादर्थप्रतीति' सम्भवति, उच्चारिताच्छब्दादर्थं प्रत्येमीत्यनुभवविरोधात् शक्तिग्रहाभावाच्च ॥

इतोऽप्येवमित्याह—

## सर्वत्र यौगपद्यात् ॥ १९ ॥

सर्वव्यक्तिषु बोधस्य यौगपद्यात् नित्य' शब्द.। गोशब्देऽभ्युच्चारिते युगपत्सर्वासा गोव्यक्तीनां प्रतीतेरानुभाविकत्वेनाकृतिवचनत्व शब्दस्याध्यवसीयते। न

---

1. वर्णान्तरम् मु. पा. 2. महत्त्वाभावात् क, ग.
3. शब्दस्येति नास्ति. ग, घ.

चाकृत्या अनित्यशब्दस्य सम्बन्धः कर्तुं शक्यः । नित्यत्वे तु पूर्वपूर्वप्रयोगात् स शक्यग्रह इत्यर्थः ॥

इतोऽप्येवमित्याह—

**सङ्ख्याभावात् ॥ २० ॥**

दश गोशब्दानुच्चारयतीति सङ्ख्याप्रतीतेरभावादपि नित्यः शब्दः । दशकृत्वो गोशब्दमुच्चारयतीत्येव प्रतीतेः ॥

इतोऽप्येवमित्याह—

**अनपेक्षत्वात् ॥ २१ ॥**

यथा घटादि कार्यं स्वोत्पत्तौ समवाय्यसमवायिनिमित्तकारणमपेक्षते तन्नाशे च नश्यति नैव शब्दः, तस्य समवाय्यादिकारणाभावात् । तस्मान्नित्यः ॥

ननु वायुकारणकः शब्दः, वायुसंयोगवियोगैर्जायमानत्वात् 'वायुरापद्यते शब्दताम्' इति शिक्षाकृदुक्तेश्च । तत्राह—

**[1]प्रेक्षाभावाच्च संयोगस्य ॥ २२ ॥**

शब्दे वाय्ववयवसंयोगस्यानुपलब्धेः न वायुकारणकः शब्दः । 'प्रख्याभावाच्च योग्यस्य' इति पाठे योग्यस्येति जातावेकवचनम् । वाय्ववयवानां प्रख्यायाः—उपलब्धेः अभावादित्यर्थः । यथा पटादौ तन्तवस्तदवयवा उपलभ्यन्ते नैव शब्दे । ननु वायुर्न प्रत्यक्षः, किन्तु तदीय एव स्पर्शः स्पार्शनप्रत्यक्षः, अतः शब्दे वाय्ववयवानुपलब्धिरिति चेन्न, वायुं स्पृशामीति[2] प्रतीत्या तस्यापि प्रत्यक्षत्वात् स्पर्शमात्रोपलम्भापत्तिसम्भवाच्च । न च शब्देऽनुद्भूतस्पर्शकल्पनान्न दोष इति वाच्यम्, तथा कल्पने मानाभावात् । चकारः अनुक्तसमुच्चयार्थः इममेव शङ्कापरिहारं समुच्चिनोति ॥

नित्यत्वं शब्दस्य वेदसम्मतमपीत्याह—

**लिङ्गदर्शनाच्च ॥ २३ ॥**

"वाचा विरूप नित्यया" इति [3]नित्यत्वानुवादाल्लिङ्गादपि नित्यः शब्दः ॥

इति षष्ठं शब्दनित्यत्वाधिकरणम् ॥ ६ ॥

1 प्रख्याभावाच्च योग्यस्य मु. पा. 2. इति तस्यापि क, ख, ग, मु. पा. 3. ०१-ऽनित्यत्व घ, मु. पा.

७

ननु तथापि वाक्यार्थे धर्मे चोदनायाः प्रामाण्यं न सम्भवतीत्याक्षिपति—

**उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥**

वाशब्दः प्रत्यवस्थाने। उत्पद्यते अवगम्यत इत्युत्पत्ति—वाक्यार्थो धर्मः अलौकिकश्रेयःसाधनताकयागादिभावनात्मकः, तत्र विषये चोदना अवचनाः—करणे ल्युट्, अप्रमाणानि। कुतः ? अर्थस्यातन्निमित्तत्वात्—धर्मावबोधलक्षणकार्यस्य[1] चोदनाहेतुकत्वाभावात्। चोदनावाक्यस्य धर्मावबोधेऽसामर्थ्यादिति यावत्। तथा हि—किं पदानि प्रत्येकं वाक्यार्थं धर्मं बोधयन्ति ? उत तत्समूहात्मक वाक्यम् ? पदार्था वा ? नाद्यः, इतरवैयर्थ्यात्प्रत्येकं बोधादर्शनात्, पदानां वाक्यार्थविशेषे सङ्केतग्रहाभावाच्च। अत एव न द्वितीयतृतीयौ, सङ्केतमनपेक्ष्य बोधकत्वे तु व्युत्पत्तिवैयर्थ्यं बालानामपि बोधप्रसङ्गश्च ॥

समाधत्ते—

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥**

तद्भूताना—[2]सिद्धपदार्थेषु विद्यमानानां पदाना [3]क्रियार्थेन—भावनार्थकेन पदेन सह समाम्नायः—पाठो दृश्यते। अतो वाक्यार्थबोध सम्भवति। कुत ? अर्थस्य—वाक्यार्थबोधस्य, तन्निमित्तत्वात्—पदार्थोपस्थितिद्वारा पदनिमित्तकत्वात्। पदैरभिहिताः पदार्था एव हि वाक्यार्थं बोधयन्ति, न तु पदानां वाक्यस्य वा तत्र व्यापार, पदार्थबोधनेनैव कृतार्थत्वात्। अत एव सत्यपि वाक्यश्रवणेऽनवहितस्य वाक्यार्थानवबोधः, दीर्घवाक्यैकदेशविस्मरणेऽपि पदार्थस्मृतिशालिनो वाक्यार्थबोधश्च। न च पदार्थानां वाक्यार्थे सम्बन्धग्रहाभावान्नैतदुपपद्यत इति वाच्यम्, वाक्यार्थलक्षणायां सम्बन्धग्रहस्यानुपयोगात्, स्वरूपसत सम्बन्धस्यैवोपयोगात्। एतेनात्यन्ताप्रसिद्धे वेदार्थे धर्मे सम्बन्धग्रहासम्भवादप्रामाण्यमिति परास्तम्। न चाव्युत्पन्नस्य वाक्यार्थबोधप्रसङ्गः, पदपदार्थसम्बन्धग्रहस्यावश्यकत्वात्। समभिव्याहारस्य च नियामकत्वान्नातिप्रसङ्गोऽपि। एवञ्च वाक्यार्थबोधस्य पदार्थमूलकत्वेन निर्मूलकत्वाभावात् पुरुषापेक्षाभावाच्च निष्प्रत्यूह धर्मे वाक्यार्थे प्रामाण्यं चोदनाया ॥

---

1 धर्मावबोधकस्य घ, ङ, मु. पा  2 प्रसिद्ध क, ङ, मु पा.
3. क्रियार्थेनेति नास्ति अ, मु. पु.

चाकृत्या अनित्यशब्दस्य सम्बन्धः कर्तुं शक्यः। नित्यत्वे तु पूर्वपूर्वप्रयोगात् स शक्य-ग्रह इत्यर्थः ॥

इतोऽप्येवमित्याह—

**सङ्ख्याभावात् ॥ २० ॥**

दश गोशब्दानुच्चारयतीति सङ्ख्याप्रतीतेरभावादपि नित्यः शब्दः। दशकृत्वो गोशब्दमुच्चारयतीत्येव प्रतीतेः ॥

इतोऽप्येवमित्याह—

**अनपेक्षत्वात् ॥ २१ ॥**

यथा घटादि कार्यं स्वोत्पत्तौ समवाय्यसमवायिनिमित्तकारणमपेक्षते तन्नाशे च नश्यति नैव शब्दः, तस्य समवाय्यादिकारणाभावात्। तस्मान्नित्यः ॥

ननु वायुकारणकः शब्दः, वायुसंयोगवियोगैर्जायमानत्वात् 'वायुरापद्यते शब्दताम्' इति शिक्षाकृदुक्तेश्च। तत्राह—

**[1]प्रेक्षाभावाच्च संयोगस्य ॥ २२ ॥**

शब्दे वाय्ववयवसंयोगस्यानुपलब्धेः न वायुकारणकः शब्दः। 'प्रख्याभावाच्च योग्यस्य' इति पाठे योग्यस्येति जातावेकवचनम्। वाय्ववयवानां प्रख्यायाः—उपलब्धेः अभावादित्यर्थः। यथा पटादौ तन्तवस्तदवयवा उपलभ्यन्ते नैव शब्दे। ननु वायुर्न प्रत्यक्षः, किन्तु तदीय एव स्पर्शः स्पार्शनप्रत्यक्षः, अतः शब्दे वाय्ववयवानुपलब्धिरिति चेन्न, वायुं स्पृशामीति[2] प्रतीत्या तस्यापि प्रत्यक्षत्वात् स्पर्शमात्रोपलम्भापत्तिसम्भवाच्च। न च शब्देऽनुद्भूतस्पर्शकल्पनान्न दोष इति वाच्यम्, तथा कल्पने मानाभावात्। चकारः अनुक्तसमुच्चयार्थं इममेव शङ्कापरिहारं समुच्चिनोति ॥

नित्यत्वं शब्दस्य वेदसम्मतमपीत्याह—

**लिङ्गदर्शनाच्च ॥ २३ ॥**

"वाचा विरूप नित्यया" इति [3]नित्यत्वानुवादाल्लिङ्गादपि नित्यः शब्दः ॥

इति षष्ठं शब्दनित्यत्वाधिकरणम् ॥ ६ ॥

---

1 प्रख्याभावाच्च योग्यस्य मु पा 2. इति तस्यापि क, ख, ग, मु पा 3. ...-इनित्यन्न घ, मु पा

७

ननु तथापि वाक्यार्थे धर्मे चोदनाया' प्रामाण्यं न सम्भवतीत्याक्षिपति—

**उत्पत्तौ वा वचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥**

वाशब्दः प्रत्यवस्थाने । उत्पद्यते अवगम्यत इत्युत्पत्ति'--वाक्यार्थो धर्मः अलौकिकश्रेयःसाधनताकयागादिभावनात्मकः, तत्र विषये चोदना अवचना'–करणे ल्युट्, अप्रमाणानि । कुतः ? अर्थस्यातन्निमित्तत्वात्–धर्मावबोधलक्षणकार्यस्य[1] चोदनाहेतुकत्वाभावात् । चोदनावाक्यस्य धर्मावबोधेऽसामर्थ्यादिति यावत् । तथा हि—किं पदानि प्रत्येक वाक्यार्थं धर्मं बोधयन्ति ? उत तत्समूहात्मक वाक्यम् ? पदार्थो वा ? नाद्य, इतरवैयर्थ्यात्प्रत्येकं बोधादर्शनात्, पदानां वाक्यार्थविशेषे सङ्केतग्रहाभावाच्च । अत एव न द्वितीयतृतीयौ, सङ्केतमनपेक्ष्य बोधकत्वे तु व्युत्पत्तिवैयर्थ्यं बालानामपि बोधप्रसङ्गश्च ॥

समाधत्ते—

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥**

तद्भूताना—[2]सिद्धपदार्थेषु विद्यमानानां पदाना [3]क्रियार्थेन—भावनार्थकेन पदेन सह समाम्नायः—पाठो दृश्यते । अतो वाक्यार्थबोध सम्भवति । कुत ? अर्थस्य–वाक्यार्थबोधस्य, तन्निमित्तत्वात्–पदार्थोपस्थितिद्वारा पदनिमित्तकत्वात् । पदैरभिहिता पदार्था एव हि वाक्यार्थं बोधयन्ति, न तु पदानां वाक्यस्य वा तत्र व्यापार', पदार्थबोधनेनैव कृतार्थत्वात् । अत एव सत्यपि वाक्यश्रवणेऽनवहितस्य वाक्यार्थानवबोधः, दीर्घवाक्यैकदेशविस्मरणेऽपि पदार्थस्मृतिशालिनो वाक्यार्थबोधश्च । न च पदार्थानां वाक्यार्थे सम्बन्धग्रहाभावान्नैतदुपपद्यत इति वाच्यम्, वाक्यार्थलक्षणायां सम्बन्धग्रहस्यानुपयोगात्, स्वरूपसत' सम्बन्धस्यैवोपयोगात् । एतेनात्यन्ताप्रसिद्धे वेदार्थे धर्मे सम्बन्धग्रहासम्भवादप्रामाण्यमिति परास्तम् । न चाव्युत्पन्नस्य वाक्यार्थबोधप्रसङ्ग', पदपदार्थसम्बन्धग्रहस्यावश्यकत्वात् । समभिव्याहारस्य च नियामकत्वान्नातिप्रसङ्गोऽपि । एवञ्च वाक्यार्थबोधस्य पदार्थमूलकत्वेन निर्मूलकत्वाभावात् पुरुषापेक्षाभावाच्च निष्प्रत्यूह धर्मे वाक्यार्थे प्रामाण्यं चोदनाया ॥

---

1 धर्मावबोधकस्य घ, ङ, मु. पा. 2. प्रसिद्ध क, ङ, मु पा.
3. क्रियार्थेनेति नास्ति अ, मु. पु

वेद. पौरुषेयः वाक्यत्वात् भारतादिवद् इत्यनुमान त्वेवं निराकर्तव्यम्—किमिद पौरुषेयत्वं पुरुषाधीनोत्पत्तिकत्व वा ? मानान्तरेणार्थमुपलभ्य रचितत्वं वा ? नाद्य ; सिद्धसाधनत्वात् । आकाशवन्नित्यानां सर्वगतानां कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्तिक्रमविशिष्टाना पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्तत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्याना पुरुषाधीनोत्पत्तिकत्वात् । न द्वितीय , कालिदासादिकृतरघुवशादिसाधारण्यापत्ते । किञ्च पुरुषोऽपि कस्तवाभिमत' ? कश्चिन्मनुष्यो वा योगी वा ईश्वरो वा ? नाद्य., मनुष्ये धर्मादिज्ञानस्य वेदजन्यत्वेन तत्र तस्य कर्तृत्वासम्भवात् । न द्वितीय', योगिनोऽपि हि धर्माधर्मादिप्रमापक न तावद्बाह्येन्द्रियम्, धर्मादेस्तदयोग्यत्वात् । नापि मनः, तज्जनितज्ञानस्य[1] आत्मयोग्यतद्गुणातिरिक्ताविषयत्वात् । नन्वस्मदादिज्ञानस्य तथात्वेऽपि विवेकवैराग्यादिबहुगुणशालिनां योगिना तादृशज्ञानमस्त्विति चेन्न, एव सति वेदस्यानादित्वेनास्मदिष्टापौरुषेयत्वसिद्धे. । न हि तेषा [2]तादृशसम्पत्तिर्वेदाध्ययनतदर्थाचरणमन्तरेण सम्भवति, आकस्मिकत्वापातात् । न तृतीय , वेदादीश्वरसिद्धावन्योन्याश्रयात् "ब्रह्म स्वयम्भु" "वाचा विरूप नित्यया" "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" 'स्वयम्भूरेप भगवान्वेदो गीत स्वयम्भुवा । शिवाद्या ऋपिपर्यन्ता स्मर्तारोऽस्य न कारका ॥' इति श्रुतिस्मृतिपुराणवचनैर्वेदाना नित्यत्वावगमेनेश्वरकर्तृकत्वकल्पनायोगाच्च ।

नन्वेपामन्यपरत्वान्नैभ्यो नित्यत्वसिद्धिरिति चेन्न, अन्यपराणामपि मानान्तरप्राप्तिविरोधयोरसतोः स्वार्थे प्रामाण्यस्यार्थवादाधिकरणे ( ङ ) वक्ष्यमाणत्वात् । अत एव विशिष्टविधेर्विशेष्यविशेषणोभयपरत्वे वाक्यभेदापत्त्या विशिष्टमात्रपरस्य विशेषणांशेऽपि प्रामाण्यमिष्यत एवेति रेवत्यधिकरणे ( च ) वक्ष्यते । अप्राप्ताबाधितार्थबोधकत्वमेव हि प्रामाण्यम्, न तु तात्पर्यघटितमपि, शब्दान्यप्रमाणे तदभावात् । नन्वेवमन्यपरस्यापि "वज्रहस्त' पुरन्दर" इत्याद्यर्थवादस्य स्वार्थेपि प्रामाण्ये देवताधिकरणविरोध इति चेन्न, देवताधिकरणे ( छ ) 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वेन देवताश्रुति.' इति सूत्रकृता याग एव फलस्य प्रयोजक , देवता तु यागस्य गुण , न तु यागाराधिता

1 तज्जनितस्य आ म घ, ट, मु. पा 2 तादृशगुणसम्पत्ति घ, ट, मु पा,

देवता फलं प्रयोजयतीत्येव देवताया गुणभावो यागं प्रतीत्येतावदेव व्यवस्थापयिष्यते। देवताविग्रहादिकं तु भाष्यकृतैवोत्सूत्रं निराकरिष्यते प्रौढिवादेनेति तत्रैवास्माभिः ( ज ) प्रपञ्चयिष्यते। न च काठकादिसमाख्या कर्तृनिबन्धनैवोपपाद्येति वाच्यम्, तस्याः [1]प्रवचनातिशयनिबन्धनताया उक्तत्वात्। पदविभागक्रमपाठतदर्थख्यापनादिकमेव तदतिशयः। न च वेदा अनाप्ताप्रणीतत्वादाप्तप्रणीताः इदानीन्तनवाक्यविशेषवदिति वाच्यम्, आत्माकाशादौ व्यभिचारात्। अशब्दत्वे सतीति विशेषणमिति चेन्न, आप्तप्रणीतत्वमात्रस्योक्तविधया वेदेऽप्यङ्गीकारात्। वेदा अपौरुषेयाः सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वात् आत्मवदिति[2] सत्प्रतिपक्षत्वाच्च। न च सत्यन्तासिद्धिः, संसारचक्रप्रवर्तकत्वेन सम्प्रदायविच्छेदाभावात्। नन्वाप्तप्रणीतत्वाभावे बालोन्मत्तादिवाक्यवदप्रामाण्यं स्यादिति चेन्न, प्रमाणानां स्वतःप्रामाण्याभ्युपगमात्। अनाप्तवाक्येष्वनाप्तसम्बन्धात्प्रतिबन्ध इत्याद्याकरे स्पष्टम्। एवञ्च बोधकत्वात्सप्रयोजनत्वान्निरपेक्षत्वाच्च चोदना धर्मे प्रमाणमिति सिद्धं चोदनालक्षणोऽर्थो धर्म इति ॥

इत्यष्टमं वेदापौरुषेयत्वाधिकरणम् ॥ ८ ॥

## इति प्रथमाध्याये प्रथमः पाद. ॥

---

1. प्रवचनादि क, ख, ग, ङ, मु पा. 2. सत्प्रतिपक्षाच्च क, ग.

भेदः। अथवा पूर्वत्र विधिवाक्येन विरोधः, इह तु "अमुष्मिन् लोके स्त्रियं सम्भवति" इत्याद्यर्थवादान्तरेण विरोध इति भेद ॥

इतोऽप्येवमित्याह—

## तथा फलाभावात् ॥ ३ ॥

गर्गत्रिरात्रब्राह्मण प्रकृत्य श्रूयते "शोभतेऽस्य मुख य एव वेद" इति। अत्र गर्गत्रिरात्रब्राह्मणार्थं जानानस्य शोभत इति लटा वर्तमानमुखशोभालक्षणस्य फलस्य तदानीमविद्यमानस्य प्रतिपादनात्स्वार्थेऽप्यप्रामाण्यम्। न हि तदानीं मुखशोभास्ति, प्रत्युत पदपदार्थसङ्गमनव्यापृतचित्तविक्षोभप्रयुक्तमुखविकारस्यैवानुभूयमानत्वात् ॥

इतोऽप्येवमित्याह—

## [1]अन्यानर्थक्यात् ॥ ४ ॥

आधाने श्रूयते—"पूर्णाहुत्या सर्वान् कामानवाप्नोति" इति। अत्रापि लटा तदानीं सर्वकामावाप्तेरविद्यमानाया प्रतिपादनादप्रामाण्य पूर्वसूत्रात्सिद्धमेव। अथापि लेट्कल्पनया फलाय विधिरिति कश्चिद्ब्रूयात्, तं प्रत्युच्यते—नैप फलाय विधिः, तथा सत्यग्निहोत्रादिकर्मणा स्वर्गादिफलाय विधानानर्थक्यप्रसङ्गात्। [2]क्रतुभिर्हि फलान्याजिहीर्पमाण क्रतुसाधिनीभूताहवनीयाद्यग्निनिर्वर्तकाग्न्याधेयान्तर्गतपूर्णाहुत्यैव[3] सर्वक्रतुफलावाप्तौ सत्या किमिति क्रतुपु प्रवर्तेत। तदाहु—"[4]अत्के चेन्मधु विन्देत किमर्थं पर्वत व्रजेत्। इष्टस्यार्थस्य सम्प्राप्तौ को विद्वान्यत्नमाचरेत्" इति। "गृहकोणोऽत्क इत्यपि" इति जयन्त ॥

इतोऽप्येवमित्याह—

## अभागिप्रतिपेधात्[5] ॥ ५ ॥

भाग भजनं प्राप्तिः प्रसङ्गः अस्यास्तीति भागि प्रसक्तम्, अभागि अप्रसक्तम्, तस्य प्रतिपेधादित्यर्थः। "न पृथिव्या नान्तरिक्षे न दिव्यग्निश्चेतव्य" इत्यप्रतिपेध्य-

---

1 आनर्थक्यात् मु पा  2 क्रतु माण' इति ख, ग, ट पुस्तकेपु नास्ति  3 त्यैवंतराग्न्याधाना ग, ग, मु पा.  4. अक ख, ग, घ, मु पा. शाबरभाष्ये—अत्क इत्येव पाठ।  5 प्रतिपेधाच्च, मु. पा

प्रतिषेधादप्रमाणम्। पृथिव्यां हि चयनं विहितत्वादप्रतिषेध्यम्। अन्तरिक्षे दिवि च चयनमप्रसक्तमेव॥

इतोऽप्येवमित्याह—

## अनित्यसंयोगात्॥ ६॥

"बबरः प्रावाहणिरकामयत" इत्याद्यप्रमाणम्, अनित्यैर्जनिमद्भिः प्रवाहणादि-तदपत्यबबरादिभिरर्थैर्वाच्यतया संयोगात्। न हीदानीन्तनान् पुरुषान् प्रतिपादयदिदं स्वार्थे प्रमाणं भवितुमर्हति, आदिमत्तादोषप्रसङ्गात्। अतो नैवञ्जातीयकमर्थवादजातं स्वार्थेऽपि प्रमाणम्, किमुत धर्मे॥

अथ सिद्धान्तयति—

## विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः॥ ७॥

तु पूर्वपक्षव्यावृत्तौ। विधीनामित्यवयवषष्ठी। अर्थवादा विध्येकदेशाः स्युः। विधिभागस्य च प्रामाण्यं पूर्वस्मिन् पादे [1]व्यवस्थापितमिति भवत्येषां प्रामाण्यम्। कुत एषा विध्येकदेशता? स्तुत्यर्थेन विधिना एकवाक्यत्वात्। स्तुतिः प्ररोचना प्राशस्त्यवर्णना, तामर्थयते अपेक्षत इति स्तुत्यर्थो विधिः। तेन सम्भूय विशिष्टैकार्थप्रतिपत्तिजनकत्वादित्यर्थः[2]। तथा हि—लिङादिप्रत्ययाः प्रवर्तनायां विहिताः। प्रवर्तयितुर्व्यापारः प्रेरणाख्यः प्रवर्तना। आचार्यो हि गामानयतु देवदत्त इति वदति[3]। ततो गामानयन्देवदत्तो ब्रवीति—आचार्यप्रेरितोऽहं गामानयामीति। स च प्रेरणाख्यव्यापारो नियोजयितृपुरुषनिष्ठोऽभिप्रायविशेषो लोके। वेदे त्वनीश्वरवादे लिङादिनिष्ठो धर्मविशेषः कल्प्यः। सेश्वरवादे तु ईश्वरेच्छैव प्रवर्तना। सा च लिङादिशब्दनिष्ठत्वाद्वा ततः प्राधान्येन गम्यमानत्वाद्वा शब्दभावनेत्युच्यते। तया च किं केन कथमित्यंशत्रयवती पुरुषप्रवृत्तिर्भाव्यते। सेयं प्रवृत्तिः शब्दभावनाभाव्यत्वात् फलोत्पादनव्यापारात्मकत्वाच्चार्थभावनेत्युच्यते फलभावनेति च। इमाञ्चार्थभावनां प्रति गृहीतशक्तिकलिङादितो ज्ञाता शब्दभावना प्रयोजिका। ततश्च लिङादिशक्तिग्रहः शब्दभावनाज्ञानद्वारा शब्दभावनाभाव्यार्थभावनानिर्वर्तकत्वात् शब्दभावनां प्रति करणम्।

1. साधित क, घ, ङ. 2. प्रतीति क, ख, ग. 3. ब्रवीति क, घ, मु. पा.

इष्टसाधनताज्ञानमपि करणम्, तस्य शब्दभावनाभाव्यप्रवृत्तिं प्रति कारणत्वात्। अर्थवादलब्धप्राशस्त्यन्तु तत्राङ्गत्वेनान्वेति।

तथा हि—लोके इष्टसाधनादन्यत्र प्रेक्षावतः प्रवृत्तेरभावादिष्टतृप्तिसाधनेऽपि विषसंसृष्टान्नभक्षणे प्रवृत्तेरभावादनिष्टाननुबन्धीष्टसाधनतामप्यर्थाद्विधिप्रत्ययो गमयति तज्ज्ञानस्य प्रवर्तकत्वात्। सर्वस्यापि लौकिकवैदिककर्मणः किञ्चिदायासाधायकस्य कष्टात्मकस्यानिष्टसाधनताया अपि सत्त्वात् प्रवृत्तिनिवृत्त्योरौदासीन्यापत्तेर्बलवत्त्वेनानिष्टं विशेषणीयम्[1]—बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानं प्रवर्तकमिति। भोजनाद्यायासस्य चानिष्टस्येष्टतृप्त्याद्यपेक्षया न बलवत्त्वम्, तृप्त्यादिफलोत्कर्षस्य तत्रानुभवसिद्धत्वात्। अत एवोत्कटेच्छापरनामधेया तत्र रुचिर्भवति, निकृष्टतया ज्ञाते फले तदसम्भवात्। सा च रुचिरिष्टसाधनतावगत्या निष्पद्यते। तदुत्पादने च कर्तव्ये सतोऽसतो वा गुणस्य कथनेन बलवदनिष्टाननुबन्धित्वज्ञापने सति नान्तरीयककिञ्चिदनिष्टाधायकेऽपीष्टसाधने द्वेषनिरास इति लोकसिद्धमेतत् 'औषध पिब, शिखा ते वर्धिष्यते' इत्यादौ। ततश्च विधीनां प्रवर्तकानां फलोत्कर्षकथनापेक्षाणाम्, अर्थवादानाञ्च धर्मप्रमित्युपयोगेन सार्थक्यमपेक्षमाणाना श्रुतशब्दशक्तिविधया साक्षाद्धर्मप्रमितिजननेऽक्षमाणा परम्परया च तज्जनने द्वारविशेषमपेक्षमाणानां परस्पराकाङ्क्षावशात् विध्यपेक्षितफलोत्कर्षापरनामधेयप्राशस्त्यलक्षकत्वमर्थवादाना पर्यवस्यति। स्वाध्यायविधिरेव च प्रयोजनवदर्थावबोधपर्यवसानं कृत्स्नस्य वेदस्य बोधयन् प्राशस्त्यतात्पर्यकत्वमर्थवादाना गमयति। तात्पर्यानुपपत्त्या च लक्षणेत्यन्यत्र विस्तर। प्राशस्त्यप्रतिपादनप्रकारस्तु—क्षिप्रदेवतासाध्यकं कर्म क्षिप्रमेव फल दास्यति, अत प्रशस्तोऽय याग इत्येव यथायथमूह्य। अर्थवादपदानि च न प्रत्येक प्राशस्त्य लक्षयन्ति, पदान्तरवैयर्थ्यापत्ते किन्तु पदसमुदाय.। न च समुदायस्य कञ्चिदप्यशक्तत्वात्स्वशक्यसम्बन्धरूपलक्षणा कथं तत्र स्यादिति वाच्यम्, अवयवद्वारा शक्यसम्बन्धस्य समुदायेऽपि[2] सत्त्वात्। साक्षात्स्वावयवद्वारकत्वसाधारण्येन स्वनिष्ठशक्त्या स्वप्रतिपाद्यसम्बन्ध एव हि लक्षणा, न तु साक्षादेव स्वनिष्ठशक्त्या स्वप्रतिपाद्यसम्बन्ध., गौरवात्। अवयवशक्तिलभ्यैश्च वायुक्षेपिष्ठत्वादिभिरर्थैर्वायुदेवताकयागीयप्राशस्त्यस्योत्कृष्टफलाधायकत्वलक्षणस्याविनाभावलक्षणो ज्ञाप्यज्ञापकभाव सम्बन्ध.। वायुक्षेपिष्ठादिपदशक्यै-

1. बलवत्त्वमनिष्टे विशेषणीयम् ख, ग, मु. पा. 2. अपि नास्ति ग, घ.

रर्थैर्हि प्राशस्त्यं ज्ञाप्यते—क्षिप्रतमो महात्मा[1] वायुरतिक्षिप्रमुत्कृष्टफलं दास्यति, अतः प्रशस्तं तद्देवताक[2] कर्मेति। ततश्च वायुक्षेपिष्ठादिपदेषु स्वशक्यार्थद्वारा प्राशस्त्यज्ञापकता तद्द्वारा तत्समुदायेष्वपीति सिद्धम्। तदेतत् 'तथा यूपस्य वेदि' इत्यधिकरणे 'अर्ध-मन्तर्वेदि, अर्धं बहिर्वेदि' इति समुदायेन देशविशेषो लक्ष्यत इति भाष्यवार्तिकादिषु ध्वनितम्। स्पष्टीकृतञ्च चूडामणिदीक्षितैः। सैषा अर्थवादविध्युद्देशयो पदैकवाक्यता विज्ञेया, अन्यतरविनाभूतयोस्तयो साकाङ्क्षत्वात्। तथा च वक्ष्यति 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति। केचित्तु—अङ्गप्रधानविध्युद्देशानामिव विधायकलिङादिभेदात्स्वार्थेनिराकाङ्क्षतया प्रयोजनवशेन सम्बन्धाद्वाक्यैकवाक्यते-त्याहु। निरर्थवादविधिप्रदेशेषु तु विधीनामेव द्वे शक्ती कल्पयाम.। न च सर्वत्र विधेरेव शक्तिद्वयकल्पनोपपत्तौ किमर्थवादैरिति वाच्यम्। आम्नातस्यैव हि वयमर्थं वक्तुं प्रभवामः, नाम्नानं पर्यनुयोक्तुमित्यास्तां तावत्॥

ननु पौरुषेयाण्येवार्थवादवाक्यानि वेदेषु प्रमादपठितानि कुतो न स्युः, तत्राह—

**तुल्यश्च साम्प्रदायिकम्॥ ८॥**

चो ह्यर्थे। साम्प्रदायिकं—मन्वादिस्मर्तृपारम्पर्यसिद्धं नियमाध्ययनम्, तदेतत् शिष्टवैदिकपरम्परया विधिभागानामर्थवादभागानाञ्च तुल्यम्—आद्रियमाणं दृश्यते। अत अर्थवादानां पौरुषेयत्वं न युक्तमाश्रयितुम्॥

अथ 'शास्त्रदृष्टविरोधाच्च' इत्यादिना केषाञ्चिदर्थवादानां स्वार्थेऽप्यप्रामाण्य-मुपक्षिप्तं परिहर्तुमुपक्षिपति—

**अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः शब्दार्थ-स्त्वप्रयोगभूतस्तस्मादुपपद्यते॥ ९॥**

उक्ता अनुपपत्ति. 'स्तेनं मन.' इत्यादिवाक्यम् अप्राप्ता वेदितव्या। कुतः? हि—यस्मात् विधिकल्पनया स्तेयादिप्रयोगे उच्यमाने विरोधः स्यात्। नैवमस्ति, विधि-कल्पनाया अनभ्युपगमात्। तर्हि प्रतीयमानार्थे मन स्तैन्यादावस्ति विरोध इत्यत आह—शब्दार्थस्त्वप्रयोगभूत इति। शब्दतो वाच्यविधया प्रतीयमानो मनःस्तेयादि-रर्थस्तु, अप्रयोगभूत'—प्रयुज्यतेऽनेनेति प्रयोगः तात्पर्यनामधेयोऽभिप्रायविशेषः, तं

1. महात्मेति नास्ति अ, ङ 2. ताककर्म क, ग, घ,

इष्टसाधनताज्ञानमपि करणम्, तस्य शब्दभावनाभाव्यप्रवृत्तिं प्रति कारणत्वात्। अर्थवादलब्धप्राशस्त्यन्तु तत्राङ्गत्वेनान्वेति।

तथा हि—लोके इष्टसाधनादन्यत्र प्रेक्षावतः प्रवृत्तेरभावादिष्टतृप्तिसाधनेऽपि विषसंसृष्टान्नभक्षणे प्रवृत्तेरभावादनिष्टाननुबन्धीष्टसाधनतामप्यर्थाद्विधिप्रत्ययो गमयति तज्ज्ञानस्य प्रवर्तकत्वात्। सर्वस्यापि लौकिकवैदिककर्मण किञ्चिदायासाधायकस्य कष्टात्मकस्यानिष्टसाधनताया अपि सत्त्वात् प्रवृत्तिनिवृत्त्योरोदासीन्यापत्तेर्बलवत्त्वेनानिष्टं विशेषणीयम्[1]—बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानं प्रवर्तकमिति। भोजनाद्यायासस्य चानिष्टस्येष्टतृप्त्याद्यपेक्षया न बलवत्त्वम्, तृप्त्यादिफलोत्कर्षस्य तत्रानुभवसिद्धत्वात्। अत एवोत्कटेच्छापरनामधेया तत्र रुचिर्भवति, निकृष्टतया ज्ञाते फले तदसम्भवात्। सा च रुचिरिष्टसाधनतावगत्या निष्पद्यते। तदुत्पादने च कर्तव्ये सतोऽसतो वा गुणस्य कथनेन बलवदनिष्टाननुबन्धित्वज्ञापने सति नान्तरीयककिञ्चिदनिष्टाधायकेऽपीष्टसाधने द्वेषनिरास इति लोकसिद्धमेतत् 'औषधं पिब, शिखा ते वर्धिष्यते' इत्यादौ। ततश्च विधीनां प्रवर्तकानां फलोत्कर्षकथनापेक्षाणाम्, अर्थवादानाञ्च धर्मप्रमित्युपयोगेन सार्थक्यमपेक्षमाणानां श्रुतशब्दशक्तिविधया साक्षाद्धर्मप्रमितिजननेऽक्षमाणा परम्परया च तज्जनने द्वारविशेषमपेक्षमाणानां परस्पराकाङ्क्षावशात् विध्यपेक्षितफलोत्कर्षापरनामधेयप्राशस्त्यलक्षकत्वमर्थवादाना पर्यवस्यति। स्वाध्यायविधिरेव च प्रयोजनवदर्थावबोधपर्यवसानं कृत्स्नस्य वेदस्य बोधयन् प्राशस्त्यतात्पर्यकत्वमर्थवादाना गमयति। तात्पर्यानुपपत्त्या च लक्षणेत्यन्यत्र विस्तर। प्राशस्त्यप्रतिपादनप्रकारस्तु—क्षिप्रदेवतासाध्यक कर्म क्षिप्रमेव फल दास्यति, अत प्रशस्तोऽयं याग इत्येव यथायथमूह्य। अर्थवादपदानि च न प्रत्येकं प्राशस्त्यं लक्षयन्ति, पदान्तरवैयर्थ्यापत्ते, किन्तु पदसमुदाय। न च समुदायस्य क्वचिदप्यशक्तत्वात्स्वशक्यसम्बन्धरूपलक्षणा कथ तत्र स्यादिति वाच्यम्, अवयवद्वारा शक्यसम्बन्धस्य समुदायेऽपि[2] सत्त्वात्। साक्षात्स्वावयवद्वारकत्वसाधारण्येन स्वनिष्ठशक्त्या स्वप्रतिपाद्यसम्बन्ध एव हि लक्षणा, न तु साक्षादेव स्वनिष्ठशक्त्या स्वप्रतिपाद्यसम्बन्धः, गौरवात्। अवयवशक्तिलभ्यैश्च वायुक्षेपिष्ठत्वादिभिरर्थैर्वायुदेवताकयागीयप्राशस्त्यस्योत्कृष्टफलाधायकत्वलक्षणस्याविनाभावलक्षणो ज्ञाप्यज्ञापकभाव सम्बन्ध। वायुक्षेपिष्ठादिपदशक्यै-

---

1. बलवत्त्वमनिष्टे विशेषणीयम् ख, ग, मु. पा.  2. अपि नास्ति ग, घ.

रर्थैर्हि प्राशस्त्यं ज्ञाप्यते—क्षिप्रतमो महात्मा[1] वायुरतिक्षिप्रमुत्कृष्टफलं दास्यति, अतः प्रशस्तं तद्देवताकं[2] कर्मेति। ततश्च वायुक्षेपिष्ठादिपदेषु स्वशक्यार्थद्वारा प्राशस्त्यज्ञापकता तद्द्वारा तत्समुदायेष्विति सिद्धम्। तदेतत् 'तथा यूपस्य वेदि' इत्यधिकरणे 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति समुदायेन देशविशेषो लक्ष्यत इति भाष्यवार्तिकादिषु ध्वनितम्। स्पष्टीकृतञ्च चूडामणिदीक्षितै.। सैषा अर्थवादविध्युद्देशयो पदैकवाक्यता विज्ञेया, अन्यतरविनाभूतयोस्तयो साकाङ्क्षत्वात्। तथा च वक्ष्यति 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति। केचित्तु—अङ्गप्रधानविध्युद्देशानामिव विधायकलिङ्गादिभेदात्स्वार्थेनिराकाङ्क्षतया प्रयोजनवशेन सम्बन्धाद्वाक्यैकवाक्यतेत्याहु। निरर्थवादविधिप्रदेशेषु तु विधीनामेव द्वे शक्ती कल्पयामः। न च सर्वत्र विधेरेव शक्तिद्वयकल्पनोपपत्तौ किमर्थवादैरिति वाच्यम्। आम्नातस्यैव हि वयमर्थं वक्तुं प्रभवामः, नाम्नानं पर्यनुयोक्तुमित्यास्ता तावत॥

ननु पौरुषेयाण्येवार्थवादवाक्यानि वेदेषु प्रमादपठितानि कुतो न स्युः, तत्राह—

**तुल्यश्च साम्प्रदायिकम्॥ ८॥**

चो ह्यर्थे। साम्प्रदायिक—मन्वादिसमर्तृपारम्पर्यसिद्धं नियमाध्ययनम्, तदेतत् शिष्टवैदिकपरम्परया विधिभागानामर्थवादभागानाञ्च तुल्यम्—आद्रियमाणं दृश्यते। अत अर्थवादाना पौरुषेयत्वं न युक्तमाश्रयितुम्॥

अथ 'शास्त्रदृष्टविरोधाच्च' इत्यादिना केषाञ्चिदर्थवादानां स्वार्थेऽप्यप्रामाण्यमुपक्षिप्तं परिहर्तुमुपक्षिपति—

**अप्राप्ता चानुपपत्ति· प्रयोगे हि विरोधः च्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते॥ ९॥**

उक्ता अनुपपत्ति· 'स्तेनं मन·' इत्यादिवाक्यम् अप्राप्ता वेदितव्या। कुतः? हि-यस्मात् विधिकल्पनया स्तेयादिप्रयोगे उच्यमाने विरोधः स्यात्। नैवमस्ति, विधिकल्पनाया अनभ्युपगमात्। तर्हि प्रतीयमानार्थे मन स्तैन्यादावस्ति विरोध इत्यत आह—शब्दार्थस्त्वप्रयोगभूत इति। शब्दतो वाच्यविधया प्रतीयमानो मनःस्तेयादिरर्थस्तु, अप्रयोगभूत·—प्रयुज्यतेऽनेनेति प्रयोगः तात्पर्यनामधेयोऽभिप्रायविशेष', तं

1. महात्मेति नास्ति अ, ड. 2. ताककर्म क, ग, घ,

प्राप्तो न भवति, अविवक्षित इति यावत् । अतस्तद्विषये विरोधो नास्ति । विधेयस्तुतिमात्रपरत्वादिति भावः । तस्मादनुपपत्त्यभावात् 'स्तेनं मनः' इत्यादिवाक्यम् उपपद्यते—सङ्गतार्थकं भवति ॥

ननु "वेतसशाखया चावकाभिश्च विकर्षति" ( ङ ) इत्यग्न्याख्यस्थण्डिलविकर्षणे वेतसशाखा अवकाश्च विधीयन्ते, आपश्च स्तूयन्ते "आपो वै शान्ता." इति । एवञ्जातीयकानां विधेयस्तावकत्वस्याप्यभावात्कथ धर्मप्रामाण्यम् ? तत्राह—

## गुणवादस्तु ॥ १० ॥

तुरवधारणे । गुणवाद'—गुणाभिधानमेव, स्तुतिरेवेति यावत् । अपा स्तुत्या हि तत्प्रभवा वेतसशाखा अवकाश्च स्तुता भवन्ति, यथा वंशे स्तुते देवदत्तादय । गुणादागतश्च वादो गुणवादः । गौण. शब्द इति यावत् । आप इत्यय शब्द. अप्कार्यत्वगुणयोगाद्वेतसशाखासु वर्तते; अतो विधेयस्तावकत्वमुपपद्यते । एवमन्यत्रापि यथायथमूह्यम् । उत्तरसूत्राणि गुणवादत्वस्यैव प्रपञ्चनपराणि ॥

[1]"स्तेनं मनोऽनृतवादिनी वाक्" इत्यत्र गुणवादत्वमुपपादयति—

## रूपात्प्रायात् ॥ ११ ॥

गुणवाद इत्यनुवर्तते । तच्चावर्तते । गुणाभिधानं स्तुतिरित्येकोऽर्थ , [2]गौणः शब्द इत्यन्योऽर्थ । 'हिरण्यं हस्ते भवत्यथ गृह्णाति' इत्यंशुग्रहग्रहणे ( च ) विहित हिरण्य स्तूयते 'स्तेनं मनोऽनृतवादिनी वाक्' इति । तत्र स्तेनमिति प्रच्छन्न रूप लक्ष्यते । अनृतवादिनीति प्रायेण अनृतवदनस्वभावत्व लक्ष्यते । मन. स्तेनवत्प्रच्छन्नम्, वाक् प्रायेण अनृतवदनशीला । हिरण्यन्तु तद्दोषद्वयरहितमित्यभ्यर्हितमिति विधेयस्तुतिरुपपद्यते ॥

"धूम एवाग्नेर्दिवा [3]ददृशे" इत्यत्र गुणवादत्वमाह—

## दूरभूयस्त्वात् ॥ १२ ॥

गुणवाद इत्यनुवर्तते । पूर्ववदर्थद्वयम् । "धूम एवाग्नेर्दिवा ददृशे" इत्यत्र "अग्निं वावादित्य साय प्रविशति, तस्मादग्निर्दूरान्नक्त ददृशे" इति पूर्वतरवाक्यात्

1 तत्र स्तेन मनो क ग, घ, मु पा 2. गुणशब्द . क, ख, मु पा. 3. ददृश्ये ख, मु. पा.

दूरादित्यनुवर्तते। तत्र दूरादिति दूरभूयस्त्वे गौणम्। दिवा अग्नेः धूमोऽतिदूराद्दृश्यते। अतः "उद्यन्तं वावादित्यमग्निरनुसमारोहति" इति पूर्ववाक्योक्त युज्यते। तस्मात् "अग्निर्ज्योतिर्ज्योतिः सूर्यं स्वाहेत्येव सायं होतव्यम्, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः" इति विहितससृष्टहोममन्त्रस्तुतिरुपपद्यत इति न विरोधः।

अथ "न चैतद्विद्म" इत्यत्र गुणवादत्वमाह—

## [1]स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात् ॥ १३ ॥

गुणवाद इत्यनुवर्तते। "देवा पितर पितरो देवा योऽहमस्मि स सन्यजे। यस्यास्मि न तमन्तरेमि" इति "प्रवरे प्रव्रियमाणे यजमानो जपति" इत्यत्र एतच्छ्रूयते "न चैतद्विद्म" इत्यादि। न विद्म इति ब्राह्मण्यस्य दुर्ज्ञानत्वे गौणम्। कुत. ? स्त्र्यपराधात् मातुर्व्यभिचारसम्भवात्। व्यभिचारश्च जारिणीजारयोरेव सुविज्ञान। पुत्रस्योत्पादक तु बीजिनं जारिणी जानाति न तु जारोऽपि, जारान्तरसम्भवात्। ततश्च 'सवर्णेभ्य· सवर्णासु जायन्ते हि सजातयः। विन्नास्वेष विधि स्मृत' इति स्मृतिसिद्धं ब्राह्मणात्स्वभार्यायां ब्राह्मण्यामुत्पन्नत्वलक्षण ब्राह्मण्य मातुरेवैकस्या सुविज्ञानम्। नन्वेव सति 'श्राद्धे ब्राह्मणान्निमन्त्रयेत' इत्युपक्रम्य कुण्डगोलकयोर्निमन्त्रणनिषेधान्यथानुपपत्त्या ब्राह्मणमातापितृकत्वमेव ब्राह्मण्यम्, तत्तु क्षेत्रिणमादाय सर्वस्यापि सुविज्ञानमित्यत आह—कर्तुश्च पुत्रदर्शनादिति। 'उत्पादयितु पुत्र इति हि ब्राह्मणम्' इत्युपक्रम्य 'रेतोधा. पुत्रं नयति' इत्यादिना बीजावापस्य कर्तुर्जारस्यैव पुत्र, न तु क्षेत्रिण इत्यर्थस्य [2]आपस्तम्बादिभिर्निर्धारणादित्यर्थ। श्राद्धीयब्राह्मणनिमन्त्रणे कुण्डगोलकनिषेधस्तु 'सगुणानामलाभे तु निमन्त्र्या निर्गुणा अपि' इति प्रसक्तत्वात्सङ्गच्छत इति (छ) विज्ञानेश्वरादिभिरुक्तं परिहारमनुक्तसमुच्चयार्थश्चकार समुच्चिनोति। ततश्च स्वभार्याया ब्राह्मण्या ब्राह्मणादुत्पन्नत्वलक्षणमेव ब्राह्मण्यम्। तच्च मात्रैकसमधिगम्यम्, इतरस्य तु दुर्विज्ञानम्। तदेवंविधमपि ब्राह्मण्यमेतन्मन्त्रजपेनाब्राह्मणस्यापि सम्पद्यत इति स्तुतिरुपपाद्या ॥

---

1. अपराधात् 2. आपस्तम्बादिभि स्मर्तृभि क, घ, ङ, मु. पा.

अथ "को हि तद्वेद" इत्यत्राह—

**आकालिकेप्सा ॥ १४ ॥**

'आकालिकडाद्यन्तवचने' इति पाणिनि । समानकालावाद्यन्तौ उत्पत्तिविनाशौ यस्येत्यर्थे समानकालशब्दात् ठञ् [1]प्रकृतेराकालादेशश्च निपात्यते । समानशब्द एकत्ववाची । उत्पन्नमात्रविनष्टमित्यर्थ इति तद्भाष्यकैयटयोः स्पष्टम् । इह त्वामुष्मिकफलापेक्षया आशुतरविनश्वरमैहिकं फल लक्ष्यते । आप्तुमिच्छा ईप्सा । आकालिकस्य ईप्सा आकालिकेप्सा । गुणवाद इत्यनुवर्तते । पूर्ववदर्थद्वयम् । "अमुष्मिन् लोके अस्ति वा न वा" इति संशयवचनमामुष्मिकस्य कालान्तरदेहान्तरभावित्वलक्षणपरोक्षत्वे गौणम् । विदिश्चेप्सायां गौण. । दिक्ष्वतीकाशान्करोति" इति सौमिकशालाया गवाक्षकरणं विहितम् । तस्य च धूमोपद्रवनिवृत्तिरैहिक फल सद्य प्रत्यक्षम् । ज्योतिष्टोमकर्मजन्यमामुष्मिकन्तु फलं कालान्तरदेहान्तरभावि परोक्षमेव । प्रत्यक्षत्वात्तात्कालिकत्वाच्चैहिक एव फले आगोपालाङ्गनमीप्सा भवति । अत ऐहिकं फलमनादृत्य परोक्षमामुष्मिक फलं को वेद क ईप्सति । तस्मात्सद्यो धूमनिवृत्तिफलकमतीकाशकरण श्रेष्ठमिति स्तुतिरुपपद्यते ॥

अथ "शोभतेऽस्य मुखं य एवं वेद" इत्यत्राह—

**विद्याप्रशं ॥ १५ ॥**

गुणवाद इति पूर्ववत् । ब्राह्मणतो गर्गत्रिरात्रस्य ज्ञानादेव मुखशोभाफलं भवति चेत् तदनुष्ठानात् कीदृक्फल[2] भवेदित्येव विद्यया ज्ञानेन गर्गत्रिरात्रस्य[3] प्रशसा क्रियते । यद्यपि पदपदार्थसङ्गमनव्यापृतक्षुब्धचित्ततया[4] तदानीं मुखवैवर्ण्यमस्ति, तथापि पदवाक्यन्यायविजृम्भितै. शिष्यस्पृहणीयै. शब्दै शोभमानैर्मुखशोभावचनं गौणम् ॥

"पूर्णाहुत्या सर्वान्" इत्यत्राह—

**सर्वत्वमाधिकारिकम् ॥ १६ ॥**

गुणवाद इति पूर्ववत् । तत्तत्सर्वफलसाधकसर्वक्रत्वपेक्षिताहवनीयादिनिष्पादकत्वात् सर्वफलार्थेत्याग्न्याधेयिकी पूर्णाहुतिः स्तूयते । वर्तमानत्वमविवक्षितम् । सर्व-

1. तत्प्रकृते क, ख, ग, मु, पा 2 कीदृश क, ग, ङ 3 त्रिरात्रप्र क, ग.
4. व्यापृतचित्तक्षुब्धतया ख, मु. पा.

पदमाधिकारिकं तत्तदधिकृतसर्वक्रतुफलापेक्षं गौणम्। अतोऽश्वमेधादीनां राजन्यादिमात्राधिकृतत्वेऽपि न दोषः॥

फलवादत्वमभ्युपगम्य यदुक्तम् 'अन्यानर्थक्यात्' इति तत्राह—

**फलस्य निष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेष.[1] स्यात्॥ १७॥**

स्वर्गादिफलस्य पूर्णाहुत्यग्निहोत्रादिगुरुलघुकर्मभिर्निष्पत्तिश्रवणात्तेषां कर्मणा परिमाणत—अल्पत्वभूयस्त्वतारतम्यात् फलविशेषः—फलतारतम्य स्यात्, लोकवत्—लोके सेवादितारतम्यात्फलतारतम्यवत्। ततश्च पूर्णाहुत्या स्वर्गादिसर्वफलान्यल्पानि भवन्ति, अग्निहोत्रादितस्तु ततस्ततो भूयांसीत्युक्तं भवति॥

"न पृथिव्याम्" इत्यत्र "बबरः प्रावाहणि" इत्यत्र चाह—

**अन्त्ययोर्यथोक्तम्॥ १८॥**

पूर्वपक्षे 'अभागिप्रतिषेधात्' 'अनित्यसंयोगात्' इत्यन्तिमसूत्रोक्तयोर्दोषयोः उक्तप्रकारेण परिहारो वेदितव्यः। तथा हि—"स्तेन मनोऽनृतवादिनी वाक्" इति वाङ्मनसयोर्निन्दा हिरण्यविधिस्तुत्यर्थेत्युक्त प्राक्। एवमेव पृथिव्या चयनप्रतिषेधो हिरण्यान्तर्हितचयनविधिस्तुत्यर्थः, "नान्तरिक्षे न दिवि" इति तु नित्यानुवाद. "अग्निर्हिमस्य भेषजम्" इत्यादिवत्। तथा 'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इति न्यायेन प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया चन्द्रसूर्यादिवद्वैदिकपदगोचरास्सन्तो नैव वेदस्य नित्यतां विरुन्धत[2] इत्यादि पूर्वपादे 'परं तु श्रुतिसामान्यम्' इत्यत्रोक्तम्। अत. "बबरः प्रावाहणि" इत्यादावप्यनित्यसयोगदोष' परिहृत। न च पौनरुक्त्यम्, चन्द्रसूर्यबबरादीनां प्रवाहनित्यतावचनस्यापि पूर्वपक्षदशायामप्रामाण्यास्कन्दितत्वेन तद्विषये अनित्यसंयोगदोषस्य पुन समुन्मेषे सति सिद्धान्तदशायामर्थवादजातस्य साधितप्रामाण्यतया 'यथर्तावृतुलिङ्गानि' इति बबरादीनां प्रवाहनित्यत्वेनानित्यसंयोगदोषपरिहारस्य पुनरुदयावश्यम्भावात्। अत्र लोकवेदविरोधाभावेऽर्थवादाना स्वार्थेऽपि प्रामाण्यम्,

1. सारतो वा फल. मु. पु पा   2. विरुन्धन्ति क, ह.

तद्विरोधे तु[1] स्तावकत्वमेव। विरोधे गुणवाद स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत.॥ ततश्च, अचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयादिकमप्यस्तीति वार्तिककारैर्वैदिकशिरोमणिभि प्रपञ्चितम्। अनीश्वरवादिनस्तु प्राभाकरादयो वैदिकैरनादृत्या.।

अत्रेद वक्तव्यम्—"स्वाध्यायोऽध्येतव्य" इति वेदार्थज्ञानायाध्ययनविधिः। अत्र हि विधौ कर्मणि तव्यप्रत्यय। उत्पाद्यत्वमाप्यत्व सस्कार्यत्व वा कर्मत्वम्, यथा 'घट करोति' 'ग्राम गच्छति' "व्रीहीन्प्रोक्षति" इति। अध्ययनञ्च भावार्थाधिकरणन्यायेन भावनाया करणत्वेनान्वेति। स्वाध्यायस्य च तेनोत्पाद्यत्वासम्भवादाप्यत्वं संस्कार्यत्व वा कर्मत्व भवति। ततश्चाध्ययनेन स्वाध्याय प्राप्नुयादिति वचनव्यक्ति., अध्ययनेन स्वाध्याय सस्कुर्यादिति वा। तत्राध्ययनेनावाप्तस्य सस्कृतस्य वा स्वाध्यायस्य स्वतोऽपुरुषार्थत्वात्, फलाकाङ्क्षायामधीतवेदजन्यधर्मावबोधस्य दृष्टस्य स्वर्गादिसाधनतया फलत्वात्, सति च सम्भवेऽदृष्टकल्पनायोगात्, तमेव प्रयोजनवदर्थावबोधापरनामधेयमधीतस्वाध्याय फलत्वेन गृह्णाति, अनारभ्याधीतस्याप्यध्ययनस्य सामर्थ्यादेव क्रतुविध्याक्षिप्तार्थज्ञाने उपयोगसम्भवात्। ततश्चाधीतेन स्वाध्यायेनार्थावबोध भावयेदिति पर्यवसन्नोऽर्थः। तत्रार्थवादाना वाच्यविधया धर्मप्रमितिजननशक्त्यभावेऽपि कृत्स्नस्य वेदस्य प्रयोजनवदर्थावबोधपर्यवसानं बोधयता अध्ययनविधिनैव विध्यपेक्षितप्राशस्त्यतात्पर्योन्नयनमुखेनोत्थापितलक्ष्यविधया तत्प्रतिपादनद्वारा विध्युपयोगात् धर्मप्रामाण्यमुपपद्यत इति वार्तिकादिग्रन्थेषु स्थितम्।

वस्तुतस्तु—स्वाध्यायविधिरक्षरानुपूर्व्यवधारणरूपग्रहणार्थ.। अर्थावबोधस्तु गृहीतपदपदार्थसङ्गतिकस्य स्वत एव भवति, न तु तत्राध्ययनविधेर्व्यापार., धर्मावबोधान्तत्वेऽध्ययनाकार्त्स्न्यप्रसङ्गात्[2]। ब्राह्मणस्य राजसूयाद्यभावेन तन्मन्त्रब्राह्मणाध्ययनस्य व्यर्थत्वात्। किञ्च—अग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात्प्राक्सन्ध्योपासनवत् पित्राद्युपदेशतो ज्ञाने सति ज्ञातत्वादेव तदवबोधस्य काम्यत्वाभावात्फलत्वानुपपत्ति। तत प्राक्तदज्ञाने तु न स कामयितु शक्य, ज्ञात एवेच्छानियमात्। अथ सामान्यतो ज्ञाते विशिष्याज्ञाते तदिच्छा सम्भवति, पित्राद्युपदेशतो विशिष्यावगतेऽप्यौपदेशिक-

---

1 तु गौण्या क, ख, मु पा.　　2. कार्त्स्न्याप्रसङ्गात् क, घ, ङ.

ज्ञानस्य प्रामाण्यनिश्चयाय पुनर्बोधकामना च युक्तेति चेन्न, अग्निहोत्रादिविशेषज्ञानानां हि न तावदेकबुद्ध्या विशेषाकारेणोद्देशः, अनन्तत्वात्। सामान्याकारेणोद्देशे च सामान्यज्ञानमेव विधिफलं स्यात्, न[1] तु विशेषज्ञानम्। अतः अर्थाववोधस्योद्देश्यत्वायोगान्न फलत्वम्। न चाध्ययनविधेरर्थाववोधान्तत्वाभावे वेदस्य कथ स्वार्थे तात्पर्यावगम इति वाच्यम्। उपक्रमादिसहकृतशब्दबलादेव तत्सम्भवात्। तस्माद्ध्ययनविधिरक्षरग्रहणमात्रफलक एव। तथा च पुरुषार्थानुशासनसूत्राणि वेदभाष्योदाहृतानि 'बोधान्तत्वेऽध्ययनाकार्त्स्न्यम्' 'सोऽकाम्य' प्राग्बोध्यभानाभानयोः' 'उद्देशायोगाच्च' इत्यादीनि। एवञ्च व्याकरणमहाभाष्ये पस्पशाह्निके "ब्राह्मणेन निष्कारणो वेद. षडङ्गोऽध्येयो ज्ञेयश्च" इत्युदाहृतायां श्रुतौ ज्ञेयश्चेति पृथग्ज्ञानविधिरर्थवान् भवति। अध्ययनविधेर्बोधान्तत्वे तु तदानर्थक्य स्पष्टमेव। निष्कारण'—कार्यते अनेनेति कारण फलम्, दृष्टप्रयोजननिरपेक्ष' शिक्षाव्याकरणादिषडङ्गसहितो वेदः अध्ययनेन ग्राह्यः तदर्थश्च प्रतिपत्तव्य'। सोऽय धर्मो न दृष्टफल, नित्य इति यावत्। तदभावे हि प्रत्यवायः स्मर्यते 'स्थाणुरयं भारहार किलाभूदधीत्य वेद न विजानाति योऽर्थम्' इत्यादि। न च गृहीतपदपदार्थसङ्गतिकस्य स्वत एव ज्ञानसम्भवात्तद्विधिर्व्यर्थ इति वाच्यम्। न ह्यवश्यं गृहीतपदपदार्थसङ्गतिकेन भाव्यमिति लोकतो लभ्यम्, अव्युत्पन्नानामपि बहुलमुपलम्भात्, पदपदार्थसङ्गतिग्रहणमात्रसत्त्वेऽप्यतिगहनवेदार्थज्ञानस्य न्यायविचारमन्तरा अनुपपत्तेश्च। अतः पदपदार्थसङ्गतिमधिगम्य न्यायविचारतो यथावद्वेदार्थज्ञानमात्रं नित्यतया विधीयते। तदपि स्वस्वपित्रादिक्रमागतवेदभागशाखामात्रस्य, नेतरस्य वेदभागस्य। स्वाध्यायविधौ स्वपदानर्थक्यापातात्। तथा च स्वशाखाया अध्ययनमर्थज्ञानं च नित्यम्। [2]इतरशाखानान्त्वध्ययनमर्थज्ञानञ्च क्रतुविधिप्रयुक्तमार्थिकमेव। न च तत्र स्वाध्यायविधेर्व्यापारः। एवञ्च स्वशाखायामपि [3]स्वाधिकृतकर्मविधिभागमात्रस्यार्थज्ञानेनापि कर्मसिद्धिरप्रत्यूहा। पुरुषस्तु पर प्रत्यवेष्यतीति तृतीये (ज) 'ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति' इत्यत्र भाष्यवार्तिकयो स्पष्टम्। न च स्वाध्यायविधिगतस्वशब्दानुसारेण

---

1 तु नास्ति क, घ.    2 शाखान्तराणा क, ग, घ

3. स्वाधिकृतकर्मविभागमात्रस्य ग, घ, मु. पा; कर्मविधिमन्त्रभागस्य क, ड, मु. पा.

वेदोऽध्येय इति वेदशब्दस्य स्वशाखामात्रपरत्वेऽपि ज्ञेय इत्यंशे वेदशब्दस्य तथा सङ्कोचे मानाभाव इति वाच्यम्। अध्येय इत्यत्रान्वितस्यैव वेदशब्दस्य स्वशाखामात्रपरतया निश्चितस्य ज्ञेय इत्यत्राप्यन्वयवशादेव तथा सङ्कोचलाभात्। कृत्स्नवेदार्थज्ञानस्याध्ययनविधिप्रयुक्तत्वाभावादेव कल्पसूत्रप्रणयनमर्थवत्। उक्तञ्च भवस्वामिभाष्ये 'ब्राह्मणानां बहुत्वादेकैकस्या शाखायामपरिसमाप्तत्वादर्थस्य च दुर्बोधत्वादसर्वजनीनत्वाच्च सहृत्य विवरणार्थं सुख बुद्ध्वा कर्माण्यनुष्ठाय फलानि सर्वे प्राप्नुयुरिति कल्प आरब्ध आचार्येण' इति।

किञ्चैवम् "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वापद्यते पापीयान् भवति प्रवामीयते यातयामान्यस्य च्छन्दांसि भवन्ति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति ताण्डकतलवकारादिशाखासु मन्त्रप्रतिपाद्यदेवतानां विनियोजकब्राह्मणानाञ्च स्मरणविधानं कृत्स्नवेदार्थज्ञानस्यावश्यकत्वेऽनर्थक स्यात्। मन्त्रेषु देवतागमस्तु कात्यायनादिप्रणीतसर्वानुक्रमणिकादिग्रन्थतो वेदार्थज्ञानाभावेऽपि सुलभ एव। विनियोजकब्राह्मणवाक्यज्ञानञ्च कल्पसूत्रतस्सुलभमेव, नानाशाखागतविनियोजकब्राह्मणवाक्यसङ्ग्रहात्मकत्वात्कल्पसूत्राणाम्। "एवंविदमेवाध्वर्युं कुर्वीत नानेवंविदम्" "एवंविदमेव होतार कुर्वीत नानेवंविदम्" "एवविदमेवोद्गातारं कुर्वीत नानेवविदम्" "एवंविदमेव ब्रह्माण कुर्वीत नानेववविदम्" इत्यादिवाजसनेयकादिशाखागतानि स्रगादानादिब्राह्मणतदर्थविदामेवाध्वर्य्वादिवरणपराणि च कृत्स्नवेदार्थज्ञानस्यानावश्यकता गमयन्ति। अत एव च कल्पसूत्रेषु सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कृत्स्नवेदार्थज्ञानं कर्माधिकारिविशेषणतया नोपनिबद्धम्।

किञ्च ब्रह्ममीमांसाया तृतीयचतुर्थाद्याधिकरणे 'शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनि' इति सूत्रेणात्मज्ञानं कर्मशेषभूतकर्तृद्वारा पर्णतादिवत्कर्माङ्गम्। "तरति शोकमात्मवित् इति फलश्रुतिस्तु अपापश्लोकश्रवणादिवदर्थवाद इति जैमिनिमत पूर्वपक्षतयोद्भाव्य 'तद्वतो विधानात्' इति [1]सूत्रान्तरेण "आचार्यकुलाद्वेदमधीत्य" इति श्रुत्या सकलवेदार्थज्ञानवत' कर्मविधानादपि लिङ्गात्कर्माङ्गमात्मविद्येति स्वय युक्त्यन्तरमुद्भाव्य 'अधिकोपदेशात्तु बादरायणस्यवं तद्दर्शनात्' इति सिद्धान्त-

1. सूत्रेण क, घ, ङ.

मुपक्षिप्य 'अध्ययनमात्रवतः' इति सूत्रेण आचार्यकुलाद्वेदमधीत्येति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते, न तु तदर्थज्ञानवतः; येन कृत्स्नवेदार्थज्ञानवतः कर्मविधानादौपनिषदात्मज्ञानस्य कर्मशेषता स्यात्। क्रतुविधिप्रयुक्तार्थज्ञानं तु आर्थिकत्वान्न कर्माङ्गम्, व्रीह्यादिविधौ कर्षणादिवत्। एवञ्च क्रतुविधिभिर्यावदुपयुक्तवेदभागमात्रार्थज्ञानस्यापेक्षणान्न तद्विरुद्धनिर्गुणात्मज्ञानस्य कर्मशेषता युज्यत इत्यास्थित भगवता बादरायणेन। तदेतद्भाष्ये भगवत्पादैस्तद्व्याख्यातृभिश्च वाचस्पतिमिश्रप्रभृतिभिर्बहुधा प्रपञ्चितमिति नेह तन्यते।

किञ्च—'न प्रथमयज्ञे प्रवृञ्ज्यादप्रवृञ्ज्याद्वा' इत्युपक्रम्य 'योऽनूचानश्रोत्रियस्तस्य प्रवृञ्ज्यात्' इत्यापस्तम्बसत्याषाढभारद्वाजाद्युदाहृतबह्वृचब्राह्मणे "एकां शाखामधीत्य श्रोत्रियो भवति" इति लक्षितश्रोत्रियस्य 'साङ्गाध्याय्यनूचान' इति लक्षितानूचानस्य च प्रथमयज्ञे प्रवर्ग्यनियमविधानात्, अतथाविधस्य प्रथमयज्ञे प्रवर्ग्यानियमविधौ पर्यवसानावगमात्, कृत्स्नवेदार्थज्ञानस्य कर्मशेषता दूरापास्ता। ततश्च स्वाध्यायविधिः स्वशाखामात्राध्ययन प्रयोजयति। ज्ञेयश्चेति विधिरपि स्वशाखामात्रार्थज्ञानस्य प्रयोजक। तदनुवर्तनोल्लङ्घनयोः पुरुषस्याभ्युदयप्रत्यवायौ। क्रतुविधयस्तु यावदुपयुक्तवेदतदर्थावगममात्रेणापि कृतार्थाः कृत्स्नवेदतदर्थाधिगमे तावन्नैव व्याप्रियन्ते। एवञ्चार्थवादविषये स्वाध्यायविधित फलवदर्थपर्यवसानालाभात् तेषां विध्युद्देशाकाङ्क्षानुत्थानात् विध्यर्थवादानां परस्पराकाङ्क्षावशादेकवाक्यत्वमिति सिद्धान्तो वार्तिककाराद्युक्तोऽनुपपन्नः।

अर्थवादानां स्तुतिपरतया विध्येकवाक्यता त्वन्यतराकाङ्क्षयैवोपपाद्या[1]। तथाहि—यथा रक्त पटो भवतीति वाक्ये पटो भवतीत्येतावति निराकाङ्क्षेऽपि रक्त इत्यस्य भवतिक्रियान्वय विना [2]आनर्थक्यापत्त्या सन्निधिपाठवैयर्थ्यापत्त्या च पटवाक्यस्य रक्तपदे आकाङ्क्षोत्थितौ पटविशेषणसमर्पकतया रक्तपद पटवाक्यान्तर्भावमापद्यते, तथार्थवादाना स्वार्थतो निराकाङ्क्षत्वेऽपि विधिप्रत्ययगम्याया शब्दभावनाया अंशत्रयमपेक्षमाणाया विधिप्रत्ययत एव भाव्यांश पुरुषप्रवृत्तिं करणांश शक्तिग्रहादिकञ्च व्याकरणादितो लब्धवत्यास्तृतीयांश स्तुतिमपेक्षमाणायाः स्तुतिलाभमन्तरानुपपत्त्या विध्युद्देशसन्निध्याम्नानवैयर्थ्यापत्त्या[3] चार्थवादाना विध्युद्देशाकाङ्क्षोत्तिष्ठति।

1 उपपादनीया क, ग. 2. आनर्थक्यान्यथानुपपत्त्या क, ख, ग, मु. पा.
3. वैयर्थ्यान्यथानुपपत्त्या. ख, ग.

तद्वशाच्च लक्षणया तेषां स्तुतिपरत्वमिति भाष्यानुयायी सुगम पन्था । किञ्च 'औषध पिब, शिखा ते वर्धिष्यते' इत्यादिलौकिकवाक्येष्विव "स आत्मनो वपामुदखिदत्" "गावो वा एतत्सत्रमासत" इत्याद्यर्थवादवाक्येष्वपि असद्वृत्तावलम्बनेन केवलविधेयस्तुतिपरत्वम्, न तु स्वार्थपरत्वमपि, तथा सत्यप्रामाण्यप्रसङ्गात् । न हि वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते । तथा च 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेन तदितरेषामपि "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादाना न स्वार्थपरत्वम्, किन्तु जहत्स्वार्थलक्षणया केवलविधेयस्तुतिपरत्वमपि प्रच्छन्नबौद्धाः केचिन्मीमांसकम्मन्या सङ्गिरन्ते। ( ङ ) वैदिकशिरोमणयो वार्तिककृतस्तु सर्वेष्वप्यर्थवादवाक्येषु अवयवार्थानतिक्रमेणैवाजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम्, "स आत्मनो वपाम्" इत्यत्रापि सर्गादौ परमेश्वर एव स्वमहिम्ना पशुरूपमन्यदेकं स्वीकृत्य तद्वपोत्कर्तनेन कर्म प्रायुङ्क्तेत्येवंप्रकारेण सर्वत्र स्वार्थे सत्यता उन्नेया, "आत्मा वा इदमेक एवाग्र आसीत्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्याद्यर्थवादवाक्यैरचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयाद्यङ्गीकारात्, "आदित्यो यूप" इत्यादावप्यूर्ध्वत्वादिगुणयोगात्स्वार्थपरतापि । तथा च 'विरोधे गुणवाद स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' इति मन्यन्ते । युक्तञ्चैतत्—'गुणवादस्तु' 'रूपात्प्रायात्' 'दूरभूयस्त्वात्' 'स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात्' 'आकालिकेप्सा' इत्यादिभिरर्थवादाधिकरणगुणसूत्रै. "स्तेन मन." इत्यादिषु गौण्या वृत्त्यावयवार्थपरत्वस्यापि प्रदर्शनात् ।

किञ्चार्थवादानामवयवार्थपरत्वाभावे 'विधिशब्दाश्च' इति मन्त्राधिकरणस्थगुणसूत्रविरोध. । तत्र "अग्ने गृहपते सुगृहपतिः" इत्यादिमन्त्रेषु "शत हिमाः" इत्याद्यंशानाम् "शतं त्वा हेमन्तानिन्धिषीयेति वा वैतदाह" इत्यादिवाक्यशेषा मन्त्राणा विवक्षितार्थत्वे लिङ्गमिति व्यवस्थापनात् । किञ्च स्मृतिपादे यववराहाधिकरणविरोधः । तत्र यववराहवेतसशब्दाना क्रमेण प्रियङ्गुवायसजम्बूषु दीर्घशूकसूकरवञ्जुलेषु च लोके प्रयुज्यमानानामपि वेदे "यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते" "वैतसे कटे प्राजापत्यान् सञ्चिनोति" इत्यत्र "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" "वराहं गावोऽनुधावन्ति" "अप्सुजो वेतस." इति वाक्यशेषैर्दीर्घशूकसूकरवञ्जुलपरत्वव्यवस्थापनात् । किञ्च त्रिवृद्बर्हिराद्यधिकरणविरोधः ।

तत्राश्ववालशब्दस्य "यज्ञो वै देवेभ्योऽश्वो भूत्वापाक्रामत्, सोऽपः प्राविशत्; स वालधौ गृहीत', स वालान्मुक्त्वा विवेश, ते वालाः काशा अभवन्" इति वाक्यशेषेण काशपरताव्यवस्थापनात्। किञ्च चित्राज्याधिकरणविरोध'। तत्र [1]"यदाजिमयुस्तदाज्यानामाज्यत्वम्" इत्याज्यशब्दनिर्वचनेन "आपो वा ऋत्विजमाच्छंस्तासां वायुः पृष्ठे व्यवर्तत" इत्यार्तवयुक्तानामपां वायुस्पर्शाद्रथन्तरादीनामुत्पत्तिप्रतिपादनेन स्पर्शजन्यं पृष्ठमिति निर्वचनेन चाज्यपृष्ठशब्दयोर्नामधेयत्वव्यवस्थापनात्। किञ्च 'तद्व्यपदेशञ्च' इत्यधिकरणविरोध'। तत्र "यथा ह वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते" इति वाक्यशेषसिद्धां गौणीं वृत्तिमाश्रित्य नामधेयत्वव्यवस्थापनात्।

किञ्च नामधेयपादे 'वैश्वदेवे विकल्प इति चेत्' इत्यधिकरणविरोधः। तत्र "यद्विश्वे देवा समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति निर्वचनमाश्रित्य वैश्वदेवशब्दस्य नामधेयत्वव्यवस्थापनात्। किञ्च तत्सिद्ध्यधिकरणविरोध'। तत्र "यजमान' प्रस्तर." इति यजमानशब्दस्य क्रतुनिर्वर्तकत्वगुणयोगाद्गौण्या वृत्त्या प्रस्तरे वृत्तेर्व्यवस्थापनात्। किञ्च जात्यधिकरणविरोध.। तत्र "अग्निर्वै ब्राह्मणः" इति अग्निशब्दस्य "स मुखतस्त्रिवृत निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री च्छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनाम्" इति मुखजातत्वगुणयोगाद्गौण्या वृत्त्या ब्राह्मणे वृत्तेर्व्यवस्थापनात्। किञ्च सारूप्याधिकरणविरोधः। तत्र "यजमानो यूप." इति यजमानशब्दस्य ऊर्ध्वत्वगुणयोगाद्गौण्या वृत्त्या यूपे वृत्तेर्व्यवस्थापनात्। किञ्च प्रशंसाधिकरणविरोध.। तत्र "अपशवो वा अन्ये गोअश्वेभ्य. पशव'" इत्यपशुशब्दस्याप्राशस्त्यगुणयोगाद्गौण्या वृत्त्या अजादिपशुषु वृत्तेर्व्यवस्थापनात्। किञ्च 'सन्दिग्धेषु वाक्यशेषात्' इत्यधिकरणविरोध। तत्र "अक्ता. शर्करा उपदध्यात्" इति विधितः सामान्यावगतमञ्जनसाधनम् "तेजो घृतम्" इति, वाक्यशेषाद् घृते व्यवतिष्ठत इति व्यवस्थापनात्। एवमधिकरणान्तराणि बहूनि विरुध्येरन्। विस्तरभिया विरम्यते[2] ॥

इति प्रथममर्थवादाधिकरणम् ॥ १ ॥

---

1 यदाजिमीयु क, ग, ङ

2 विरुध्येरन्नित्यादि तत्र तत्र स्फुट भविष्यति क, घ, मु. पा.

२

अस्ति काम्यः पशुः "सोमापौष्णं त्रैतमालभेत पशुकामः" इति । त्रिभिः सहजैः इतः [1]त्रीतः यो वा तिस्रः पिबति । ततः स्वार्थिकोऽण् । तत्रेदमाम्नायते "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै" इति । अस्मै इति षष्ठ्यर्थे चतुर्थी । अस्य यूपस्य ऊर्जा ऊर्ग्रूपेण उदुम्बरेण प्रकृतिद्रव्येण ऊर्ग्रूपान् पशूनाप्नोति । ऊर्क् बलं जीवनं वा । अत्र ऊर्ग्वा उदुम्बर इत्यादिराप्नोतीत्यन्तोऽर्थवादः, वैशब्दोपबन्धात् आप्नोतीति वर्तमानापदेशाच्चेति निर्विवादम् । औदुम्बरो यूपो भवति ऊर्जोऽवरुद्ध्या इति तु अप्राप्तत्वात्फलाय औदुम्बरता विधिः उत अर्थवाद इति संशये पूर्वपक्षयति—

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥**

वाशब्दः प्रत्यवस्थाने । "वायुर्वै क्षेपिष्ठा" इत्यादीनामर्थवादत्वमस्तु । अयं तु फलाय विधिः स्यात् । कुतः ? अपूर्वत्वात् । पूर्वं प्रापकं प्रमाणं यस्य नास्ति तदपूर्वम् । ऊर्गवरोधे फले औदुम्बरतायाः साधनस्य प्रमाणान्तरेणाप्राप्तत्वादित्यर्थः । अप्राप्तप्रापकत्वे च वाक्यमर्थवत्, नार्थवादत्वे । कुतः ? वादमात्रं ह्यनर्थकम् । हि—यस्मात् वादमात्र—कृत्स्नमर्थवादवाक्यम् अनर्थकप्रायम्, निरर्थवादवाक्यादपि प्रवृत्तिदर्शनात् । नन्वौदुम्बरतायाः कथमूर्गवरोधं प्रति साधनतावगमः ? कथं वा तत्र प्रवृत्तिः ? इष्टसाधनतावगमकविधिप्रत्ययाभावादिति चेन्मैवम्, साध्यत्वाव्यभिचरिततादर्थ्यचतुर्थ्या साध्यत्वेन प्रतीतस्य ऊर्गवरोधस्य साधनापेक्षतया तन्निर्वाहाय भवेदितिव्यत्ययेन तत्साधनताबोधकविधिप्रत्ययकल्पनया तदुपपत्तेः । ततश्च औदुम्बरतया ऊर्गवरोधं भावयेदिति वचनव्यक्तिः फलति ॥

ननु 'वादमात्रं ह्यनर्थकम्' इत्यनुपपन्नमित्याशङ्क्य निराकरोति—

**[2]लोकवदिति चेन्न पूर्ववत्त्वात् ॥ २० ॥**

सप्तम्यन्ताद्वतिः । इयं गौर्बहुक्षीरा जीवत्त्र्यपत्या नवप्रसूता क्रयणार्हा इत्यादिवाक्यं विधिप्रत्ययरहितं स्तुतिपरमेव प्रवर्तकतया सार्थकं दृश्यते लोके । तद्वदौदुम्बरो यूपो भवतीत्यारभ्य ऊर्जोऽवरुद्ध्या इत्यन्तं स्तुतिपरमेव सार्थकमस्त्विति चेन्न, कुतः ? पूर्ववत्त्वात्—प्रमाणान्तरविदितत्वादित्यर्थः । लोके बहुक्षीरत्वादिकं विद्यमानमेव क्रय-

---

1 सहितः त्रीतः क, ग, घ, मु, पा  2 सूत्रद्वयमिदं क्वचिन्नुपलभ्यते

णादिप्रवर्तकतया प्रत्यक्षसिद्धमिति तद्वाक्यं विधिप्रत्ययरहितं स्तुतिपरमपि प्रवर्तक सत्सार्थकमिति युक्तम्। वेदे त्विहाविद्यमानमूर्गवरोधं फलम्, औदुम्बरताथा तत्साधनत्वञ्च प्रमाणान्तरानवगतमविद्यमानमेव वर्तमानतयावलम्ब्य क्रियमाणा स्तुति कथं प्रवर्तिका स्यादिति वैषम्यम्। अतः कालान्तरभाव्यूर्गवरोधफलसाधनताबोधन-पर्यवसन्नं फलविधित्वमेवास्थेयम्॥

इति प्राप्ते सिद्धान्तयति—

## उक्तन्तु वाक्यशेषत्वम्॥ २१॥

तु पूर्वपक्षव्यावृत्तौ। विधिवाक्यशेषत्वमर्थवादानामुक्तं पूर्वाधिकरणे। तदिहापि प्रत्येतव्यम्। तथा हि—तादर्थ्यचतुर्थी तावद्ब्राह्मणाय सूप इत्यादौ साध्यत्व व्यभिचरति। अतो न तद्भाव्यकत्वमौदुम्बरतायाः सा गमयितुमीष्टे, येन तदन्यथानुप-पत्त्या विधिः कल्प्येत। ततश्च यूपस्यौदुम्बरताया स्वतो भवनासम्भवाद्भवतेरन्तर्भा-वितण्यर्थतामाश्रित्य भावयतीत्यर्थो वक्तव्य। तत्र चौदुम्बरतैव सन्निहितत्वाद्भाव्या स्यात् औदुम्बरं यूपं भावयतीति। न तूर्गवरोधः, व्यवहितत्वात्। न चौदुम्बरताय [1]अपुरुषार्थत्वान्न भाव्यत्वसम्भव इति वाच्यम्। प्रवर्तनात्मकविधिप्रत्यये सति हि, अपुरुषार्थे पुरुषस्य प्रवर्तयितुमशक्यत्वात् ऊर्गवरोधफलसम्बन्ध सिध्येत्। न चात्रास्ति विधिप्रत्ययः। तस्मादौदुम्बरो यूपो भवतीत्यादि. ऊर्जोऽवरुद्ध्या इत्यन्तोऽर्थवादः। अर्थवादानाञ्च विधिवाक्यशेषत्व पूर्वाधिकरणे निरूपितम्। अतोऽस्याप्यर्थवादस्य विध्यविनाभूतत्वादौदुम्बरं यूप कुर्वीतेति विधिः कल्प्य॥

तदेतद्द्रढयति—

## विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्या-दितरेषु तथात्वम्॥ २२॥

"अप्सुयोनिर्वा अश्वोऽप्सुजो वेतस." "आपो वै शान्ता. शान्ताभिरेवास्य शुच शमयति" इति कस्यिच्छाखाया श्रूयते। तत्राप्सुयोनिरश्व. कर्तव्य., अप्सुजो वेतस कर्तव्य इति विधिरशक्यार्थक। तस्माद्विधित्वासम्भवात् शमयित्रीभिरद्भिर-श्वस्य वेतसानाञ्च सम्बन्धो यजमानस्य कष्ट शमयतीति स्तुतिरस्माद्वाक्यात् प्रतीयेत—

1. अपुष्टार्थत्वात् ख, ग, घ, मु. पा

ज्ञातव्या। तत्सामान्यात्-विध्यसम्भवतः स्तुतिसम्भवतश्च तत्सादृश्यात् उक्तवाक्य-सादृश्यात्, इतरेषु-औदुम्बरो यूपो भवतीत्यादिषु तथात्व-स्तुतिवादत्वं प्रत्येतव्यम्। इयांस्तु विशेषः—अप्सुयोनिरश्वः कर्तव्य इति विधिरशक्यत्वान्न सम्भवति। इह त्वौदुम्बरं यूपं कुर्वीतेति विधिकल्पना निर्बाधेति ॥

नन्वेवमर्थवादतो विधिकल्पने "यो विदग्धः स नैर्ऋतः" इत्यादीनामपि विधिकल्पकता स्यादित्याक्षिप्य समाधत्ते—

**प्रकरणे च सम्भवन्नपकर्षो न कल्पेत विध्यानर्थक्यं हि तं प्रति ॥ २३ ॥**

चोऽवधारणे। केवलस्तुतिवादत्वे सत्येव विदग्धस्य नैर्ऋतत्वनिन्दया "तस्माद्-विदहता शृतं कृत्यः" इति विधेः शेषीभवन् "यो विदग्धः" इति वाक्यशेषः। दर्श-पूर्णमासयोः प्रकरणे इतिकर्तव्यताकाङ्क्षालक्षणे सम्भवन्-लब्धनिवेशः सन् अपकर्ष-कर्मणि घञ्, अपकृष्यमाणः, दर्शपूर्णमासाभ्यामन्यत्र विकृतिषु निविशमानो भवितुं न कल्पेत-न समर्थो भवेत्। विधिकल्पकत्वे तु विकृतिष्वपकर्षः प्रसज्येतेति यावत्। कुतः? हि-यस्मात् तं प्रति-दर्शपूर्णमासकर्मविशेषं प्रति। दर्शपूर्णमासयोरिति यावत्। विध्यानर्थक्यम्-"यो विदग्धः स नैर्ऋतः" इति विधेरसम्भवन्निवेशत्वम्। [1]"तस्माद्-विदहता शृतं कृत्यः" इत्यविदाहविधानेन "यो विदग्धः" इत्यनुवादस्यासम्भवात्। अतो महापितृयज्ञे "विदह्यमाना परिशेरते" इति विदग्धविषयतया अपकर्षः स्यात्। [2]अथ प्रकृतौ "रक्षसां भागोऽसि" इति निरस्तो यस्तुषनिचयः नैर्ऋतः स विदग्धः कर्तव्य इति विधिकल्पनन्तु यत्तच्छब्दयोर्व्युत्क्रमप्रसङ्गादनुचितम्। एतत्सूचनार्थोऽपि चकारः। ततश्च बाधकसत्त्वान्नैवञ्जातीयकेभ्यो विधिकल्पनमिति भावः ॥

नन्वौदुम्बरं यूपं कुर्वीतेति कल्पितेऽपि विधावार्थवादिक ऊर्गवरोधः कुतो न फलत्वेन सम्बध्यते? तत्राह—

**विधौ च वाक्यभेदः स्यात् ॥ २४ ॥**

विधिकल्पनार्थम् "ऊर्जोऽवरुद्ध्यै" इत्यस्य स्तुतौ तात्पर्यं वक्तव्यम्। स्तुति-पराच्च तस्मात् कल्पिते विधौ पुनस्तस्यैव फलसम्बन्धे व्यापारात् वाक्यस्यावृत्तिः

1 अतोविदहता क, घ, ङ, मु पा 2 'अथ' इति ख, ग, घ पुस्तकेषु न दृश्यते.

स्यात्। चकारोऽनुक्तसमुच्चयार्थः। तथा हि—न तावत्केवलौदुम्बरताया ऊर्गवरोधः फलम्, यूपपदस्यानर्थक्यात्। नापि केवलयूपस्य, औदुम्बरपदस्यानर्थक्यात्। नाप्युभयोः, औदुम्बरतया ऊर्गवरोधं कुर्यात् यूपेनोर्गवरोधं कुर्यादिति [1]वाक्यभेदप्रसङ्गात्। विशिष्टविधौ तु [2]गौरवम्। औदुम्बरत्वलक्षणविशेषणस्य [3]यूपलक्षणविशेष्यान्वयद्वारा फलान्वयस्य विशेष्यान्वयानन्तरभावित्वात् यूपेनोर्गवरोध कुर्यादौदुम्बरत्वविशिष्टेनेति वाक्यभेदतादवस्थ्यञ्च। ततश्च औदुम्बरं यूपं कुर्वीतेति कल्पितो विधिरार्थवादिकमूर्गवरोध फलमुपेक्ष्य प्रकरणलब्धं क्रतूपकारमेव फलं स्वीकरोति, यूपश्च प्रकृतिप्राप्तोऽनूद्यत इति न तत्कृतोऽपि वाक्यभेदः। औदुम्बरत्वगुणस्य यूपाश्रयसम्बन्धमात्रे वाक्यस्य व्यापारात्। तस्मान्नात्र कल्पिते विधावूर्गवरोधः फलत्वेनान्वेतुमर्हतीत्यर्थवाद एवेति स्थितम्। 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति (च) चातुर्थिकतृतीयाद्याधिकरणपुनरुक्तिस्तु तत्रैव परिहरिष्यते॥

इति द्वितीयमौदुम्बराधिकरणम्॥ २ ॥

३

वरुणप्रघासेषु "करम्भपात्राणि जुहोति" इति प्रकृत्य श्रूयते "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" इति। किमत्र होमसाधनत्वेऽन्नकरणत्वस्य हेतुत्व प्रतिपाद्यते? उत अर्थवादः? इति संशये पूर्वपक्षयति—

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्॥ २६ ॥

वाशब्दः प्रत्यवस्थाने। "ऊर्जोऽवरुद्ध्यै" इत्यर्थवादोऽस्तु। अत्र त्वन्नकरणत्वं होमसाधनत्वे हेतु प्रतिपाद्य स्यात्। कुतः? अर्थवत्त्वोपपत्तिभ्याम्—अर्थवत्त्वादुपपत्तेश्च, हिशब्दस्य हेत्वर्थकत्वात् निरर्थवादवाक्यादिव प्रवृत्त्युपपत्तेश्च। ननु हेतुवादत्वे आनर्थक्यम् वैदिकार्थस्य [4]हेत्वनपेक्षत्वात्। तेनेति तृतीयागम्यं साधकतमत्वलक्षणमन्नकरणत्वमपि शूर्पस्यानुपपन्नम्, अन्नोत्पत्तौ शूर्पस्य प्रकृष्टसाधकत्वाभावात्,

1 वाक्यभेदात्. क, ख. 2. गौरवप्रसङ्गात्. क, ख.
3. विशेषणविशिष्टस्य ख, ग, मु. पा. 4 अपेक्षाभावात् क, घ.

ज्ञातव्या । तत्सामान्यात्–विध्यसम्भवत' स्तुतिसम्भवतश्च तत्सादृश्यात् उक्तवाक्य-सादृश्यात्, इतरेषु–औदुम्बरो यूपो भवतीत्यादिषु तथात्व–स्तुतिवादत्व प्रत्येतव्यम् । इयास्तु विशेष —अप्सुयोनिरश्व' कर्तव्य इति विधिरशक्यत्वान्न सम्भवति । इह त्वौदुम्बरं यूपं कुर्वीतेति विधिकल्पना निर्बाधेति ॥

नन्वेवमर्थवादतो विधिकल्पने "यो विदग्धः स नैर्ऋत" इत्यादीनामपि विधिकल्पकता स्यादित्याक्षिप्य समाधत्ते—

## प्रकरणे च सम्भवन्नपकर्षो न कल्पेत विध्या-नर्थक्यं हि तं प्रति ॥ २३ ॥

चोऽवधारणे । केवलस्तुतिवादत्वे सत्येव विदग्धस्य नैर्ऋतत्वनिन्दया "तस्माद-विदहता शृत कृत्यः" इति विधे' शेषीभवन् "यो विदिग्ध" इति वाक्यशेषः । दर्श-पूर्णमासयो. प्रकरणे इतिकर्तव्यताकाङ्क्षालक्षणे सम्भवन्–लब्धनिवेश' सन् अपकर्षः–कर्मणि घञ्, अपकृष्यमाण., दर्शपूर्णमासाभ्यामन्यत्र विकृतिषु निविशमानो भवितुं न कल्पेत–न समर्थो भवेत् । विधिकल्पकत्वे तु विकृतिष्वपकर्पः प्रसज्येतेति यावत् । कुत' ? हि–यस्मात् त प्रति–दर्शपूर्णमासकर्मविशेष प्रति । दर्शपूर्णमासयोरिति यावत् । विध्यानर्थक्यम्–"यो विदग्धः स नैर्ऋत." इति विधेरसम्भवन्निवेशत्वम् । [1]"तस्माद-विदहता शृत कृत्य." इत्यविदाहविधानेन "यो विदग्धः" इत्यनुवादस्यासम्भवात् । अतो महापितृयज्ञे "विदह्यमाना परिशेरते" इति विदग्धविषयतया अपकर्ष. स्यात् । [2]अथ प्रकृतौ "रक्षसां भागोऽसि" इति निरस्तो यस्तुपनिचय' नैर्ऋत स विदग्ध' कर्तव्य इति विधिकल्पनन्तु यत्तच्छब्दयोर्व्युत्क्रमप्रसङ्गादनुचितम् । एतत्सूचनार्थोऽपि चकार । ततश्च बाधकसत्त्वान्नैवञ्जातीयकेभ्यो विधिकल्पनमिति भावः ॥

नन्वौदुम्बर यूप कुर्वीतेति कल्पितेऽपि विधावार्थवादिक ऊर्गवरोधः कुतो न फलत्वेन सम्बध्यते ? तत्राह—

## विधौ च वाक्यभेदः स्यात् ॥ २४ ॥

विधिकल्पनार्थम् "ऊर्जोऽवरुद्ध्यै" इत्यस्य स्तुतौ तात्पर्यं वक्तव्यम् । स्तुति-पराच तस्मात् कल्पिते विधौ पुनस्तस्यैव फलसम्बन्धे व्यापारात् वाक्यस्यावृत्तिः

1 अत्राविदहता क, घ, ङ, मु. पा 2. 'अथ' इति ख, ग, घ पुस्तकेषु न दृश्यते.

स्यात्। चकारोऽनुक्तसमुच्चयार्थः। तथा हि—न तावत्केवलौदुम्बरताया ऊर्गवरोधः फलम्, यूपपदस्यानर्थक्यात्। नापि केवलयूपस्य, औदुम्बरपदस्यानर्थक्यात्। नाप्युभयोः, औदुम्बरतया ऊर्गवरोधं कुर्यात् यूपेनोर्गवरोधं कुर्यादिति [1]वाक्यभेदप्रसङ्गात्। विशिष्टविधौ तु [2]गौरवम्। औदुम्बरत्वलक्षणविशेषणस्य [3]यूपलक्षणविशेष्यान्वयद्वारा फलान्वयस्य विशेष्यान्वयानन्तरभावित्वात् यूपेनोर्गवरोधं कुर्यादौदुम्बरत्वविशिष्टेनेति वाक्यभेदतादवस्थ्यञ्च। ततश्च औदुम्बरं यूपं कुर्वीतेति कल्पितो विधिरार्थवादिकमूर्गवरोधं फलमुपेक्ष्य प्रकरणलब्धं क्रतूपकारमेव फलं स्वीकरोति, यूपश्च प्रकृतिप्राप्तोऽनूद्यत इति न तत्कृतोऽपि वाक्यभेदः। औदुम्बरत्वगुणस्य यूपाश्रयसम्बन्धमात्रे वाक्यस्य व्यापारात्। तस्मान्नात्र कल्पिते विधावूर्गवरोधः फलत्वेनान्वेतुमर्हतीत्यर्थवाद एवेति स्थितम्। 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति (अ) चातुर्थिकतृतीयाद्याधिकरणपुनरुक्तिस्तु तत्रैव परिहरिष्यते॥

इति द्वितीयमौदुम्बराधिकरणम्॥ २॥

३

वरुणप्रघासेषु "करम्भपात्राणि जुहोति" इति प्रकृत्य श्रूयते "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" इति। किमत्र होमसाधनत्वेऽन्नकरणत्वस्य हेतुत्वं प्रतिपाद्यते? उत अर्थवादः? इति संशये पूर्वपक्षयति—

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्॥ २६॥

वाशब्दः प्रत्यवस्थाने। "ऊर्जोऽवरुद्ध्यै" इत्यर्थवादोऽस्तु। अत्र त्वन्नकरणत्वं होमसाधनत्वे हेतुः प्रतिपाद्यः स्यात्। कुतः? अर्थवत्त्वोपपत्तिभ्याम्—अर्थवत्त्वादुपपत्तेश्च, हिशब्दस्य हेत्वर्थकत्वात् निरर्थवादवाक्यादिव प्रवृत्त्युपपत्तेश्च। ननु हेतुवादत्वे आनर्थक्यम् वैदिकार्थस्य [4]हेत्वनपेक्षत्वात्। तेनेति तृतीयागम्यं साधकतमत्वलक्षणमन्नकरणत्वमपि शूर्पस्यानुपपन्नम्, अन्नोत्पत्तौ शूर्पस्य प्रकृष्टसाधकत्वाभावात्,

---

1 वाक्यभेदात्. क, ख.
2. गौरवप्रसङ्गात्. क, ख.
3. विशेषणविशिष्टस्य ख, ग, मु पा.
4 अपेक्षाभावात्. क, घ.

ततोऽपि तण्डुलाधिश्रयणादेः प्रकृष्टत्वादित्यत्राप्येतदेवोत्तरम्—[1]अर्थवत्त्वोपपत्तिभ्यामिति। अर्थशब्दाद्भूम्नि मतुप्। यतः शूर्पमन्नकरणम् अतस्तेन होतव्यमित्युक्त्या येन येनान्नं क्रियते तेन तेन दर्वीपिठरादिना होतव्यमित्यधिकार्थलाभेन हेतुवादस्य प्रयोजनवत्त्वात् प्रणाडिकया अन्नकरणत्वस्योपपत्तेश्च। स्तुतिपरत्वेऽपि शूर्पस्यान्नकरणताया एवमेवोपपाद्यत्वात्, अन्यथा स्तुतेर्निरवलम्बनत्वापत्तेः। शूर्पं होमसाधनम् अन्नकरणत्वादिति हेतुवादः। एवञ्च यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्तिं कल्पयति, तथाविधव्याप्तेर्वेदेषु प्रत्यक्षमनुपलम्भात् लोकतश्च [2]तदवगमासम्भवात्। ततश्च श्रुतानुमितैकदेशनिष्पन्नमीदृश वाक्यजातं सम्पद्यते—शूर्पमन्नकरणत्वाद्धोमसाधनम्, यद्यदन्नकरण तेन तेन होतव्यमिति। तत्र शूर्पमित्यादि प्रत्यक्षश्रुतम्, यद्यदन्नकरणमित्यादि त्वनुमितम्। तत्र प्रथमप्रवृत्तेन शूर्पवाक्येन प्रत्यक्षश्रुतेन शूर्पस्य होमसाधनत्व प्राप्तम्। अनुमितन्तु सामान्यव्याप्तिवचन शूर्पदर्व्यादीनां सर्वेषामेवान्नकरणाना होमसाधनत्व विदधत् प्राप्ताप्राप्तविवेकेन शूर्पव्यतिरिक्तदर्व्यादिमात्रे पर्यवस्यति। शूर्पांशे तु तस्यानुवादत्वमेव॥

तदेव हेतुवादत्वे प्राप्ते सिद्धान्तयति—

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २६ ॥

तु पूर्वपक्षव्यावृत्तौ। "शूर्पेण जुहोति" इति विधिः। "तेन ह्यन्न क्रियते" इति तस्य स्तुति, न तु हेतुवाद.। कुत ? शब्दपूर्वत्वात्—अन्नकरणत्वे होमसाधनता प्रति हेतुत्वस्य वेदैकसमधिगम्यत्वात्। न हि तल्लोकतो गम्यम्। वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगतमन्नकरणत्व हेतुरित्याह, न तु दर्व्यादिगतमपि, तेनेति [3]सर्वनाम्ना प्रकृतस्य शूर्पस्यैव परामर्शात्। अतस्तस्य च दर्व्यादिकस्यापि, अचोदना—यद्यदन्नकरण तेन तेन होतव्यमिति विधेरभाव। यदि हि "शूर्पेण जुहोति" इति प्रत्यक्षवचन शूर्पविधायक 'यद्यदन्नकरण तेन तेन होतव्यम्' इति कल्पितवचनञ्च दर्व्यादिविधायक शूर्पांशे चानुवादकमिति स्यात् तर्हि विषमशिष्टविकल्पापत्ति। अतोऽधिकार्थलाभासम्भवात् "तेन ह्यन्न क्रियते" इति शूर्पस्यैवान्नकरणत्वेन स्तुतिपरमित्येव युज्यते। न

---

1 अर्थवादत्वोप० मु पा. 2. तदवगमाभावात् क, ख, घ. 3. शब्देन. क, ग, तच्छब्देन० घ, ङ.

च विकल्पाभावे आनुमानिकं वचनं व्यर्थं स्यादिति तत्सार्थक्याय विषमशिष्टविकल्पोऽप्यङ्गीकार्य इति वाच्यम्। अपेक्षितस्तुतिसमर्पणेनैव सार्थक्ये सम्भवति [1]हेतुवादत्वस्यावश्यवक्तव्यत्वाभावेन तन्निर्वाहकसामान्यव्याप्तिवचनस्यानपेक्षितत्वात्[2]। न च निरर्थवादविधेरिव शक्तिद्वयकल्पनोपपत्तौ किमनेनार्थवादेनेति वाच्यम्, सार्थवादस्थले आम्नानबलेनार्थवादत एव प्ररोचनाया सम्पाद्यतया तद्वैयर्थ्यकथनस्यायुक्तत्वात्। अतो न हेतुवाद ॥

ननु तेनेति न करणतृतीया, शूर्पापेक्षया तण्डुलाधिश्रयणादेरेव प्रकृष्टत्वात्। नापि हेतुतृतीया, वैतुष्यमुत्पाद्याशुनष्टेऽपि शूर्पेऽन्नस्योत्पत्त्या कुलालजनकवदन्यथासिद्धत्वात्। ततश्चान्नं प्रति करणत्वेन हेतुत्वेन वा कथं शूर्पस्य स्तुति । क्रियत इति [3]लटा वर्तमानान्नक्रियानिष्पादकत्वेन स्तुतिरपि शूर्पस्यानुपपन्ना, होमान्ननिष्पादनयोः शूर्पेण युगपत्कर्तुमशक्यत्वादित्याक्षिप्य समाधत्ते—

## [4]व्यर्थे स्तुतिरन्याय्येति चेदर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २७ ॥

अर्थस्याभावो व्यर्थम्। अर्थाभावेऽव्ययीभाव । 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावाभाव । उक्तरीत्या स्तुत्यवलम्बनस्यार्थस्याभावे सति स्तुतिरनुचितेति चेन्मन्यसे तत्रोत्तरं ब्रूम , अर्थस्तु—तुरवधारणे। गौणमन्त्रकरणत्वमत्र तृतीयार्थः स्तुत्यवलम्बनो भवत्येव। [5]विधिशेषत्वात्—"तेन ह्यन्नं क्रियत" इति स्तुतेः शूर्पविधिशेषत्वात्। विधावेव हि लक्षणा दुष्यति, 'न विधौ परः शब्दार्थ' इति न्यायात्। ततश्च गौणमन्त्रकरणत्वमादाय तेनेति स्तुतिरुपपद्यते। यथा तावल्लोके बलवानयं देवदत्तो यज्ञदत्तादीन् प्रसहत इत्यतिशायने मतुबन्तो बलवच्छब्द प्रकृष्टबले सिंहशार्दूलगजादौ मुख्यो[6] वर्तमानो यज्ञदत्तादीन्निकृष्टबलानपेक्ष्य देवदत्ते प्रयुज्यते, तद्वदिहाप्युत्कृष्टमन्त्रकरणमग्निसंयोगादिकमपेक्ष्य साधकतमत्वाभावेऽपि लाङ्गलादिकमपेक्ष्य प्रकृष्टमन्त्रसाधकत्वमवलम्ब्य तेनेति तृतीया प्रयुज्यते [7]स्तोतुम्। वर्तमानापदेशोऽपि स्तुतौ न दुष्यति। प्रत्युत प्ररोचनामुपजनयन्सामञ्जस्यमश्नुते। न हि भूते भाविनि वा

1 हेतुवादस्य ख, ग, ङ, मु. पा 2. अनपेक्षत्वात् ख 3. लकारेण क, घ
4. अन्यत्रेद सूत्र द्विधा विभज्य पठ्यते. 5. कुत ? विधि क, घ, मु पा.
6. मुख्ये क, घ, मु पा. 7. स्तोतुमिति नास्ति. क, घ, ङ.

तादृशी प्रीतिर्यादृशी वर्तमाने। इयं गौः पूर्वस्मिन् प्रसवे बहुक्षीरासीदिति वा आगामिनि प्रसवे बहुक्षीरा भविष्यतीति वा उक्तेऽपीदानीं बहुक्षीरेतिवत्प्ररोचनातिशयस्यादर्शनात्। हेतुवादत्वे तु लटा अन्ननिष्पत्तावर्तमानत्व लक्षयित्वा भविष्यदन्ननिष्पत्तिकरणत्वस्य होमसाधनत्वे हेतुत्वमवलम्ब्य यद्यद्भविष्यदन्ननिष्पत्तिकरण तेन तेन होतव्यमिति विधौ लक्षणा स्यात्। तद्वर स्तुतौ लक्षणाश्रयणम्। अतो न हेतुवादः॥

अभ्युपेत्याप्याह—

**यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात्॥ २८॥**

यद्यपि हेतुवादत्वमभ्युपगम्यते, तथापि शूर्पमात्रे होमसाधनत्व पर्यवस्येत्। कुतः? निर्देशात्—तेनेति शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वनिर्देशात्। विशेषहेतुना च साध्यविशेष एवानुमीयते, यथा तृणधूमात्तृणजन्माग्नि, तथा यतोऽयं बलवदुपध्मातोऽग्निरतस्तेन गृहं दग्धमित्युक्तेऽग्निरेव बलवदुपध्मातो दहतीति गम्यते, न त्वनग्निरपि बलवदुपध्मातो दहतीति। नन्वन्नकरणत्वस्य शूर्पमात्रगतस्य होमसाधनत्वकथनवैयर्थ्याद्दर्व्याद्यधिकार्थलाभाय सामान्यरूपेणान्नकरणत्वमात्रस्य हेतुत्वमिति चेद्ब्रूषे, तत्र वदाम[1]—अव्यवस्था विधीनां स्यात्। विधीनां—विधेयाना दर्व्यादीनाम्, अव्यवस्था—अनवधारण स्यात्। वस्तुमात्रस्य कयाचित्प्रणाड्या अन्ननिष्पत्तिकरणत्वाद्धोमसाधनत्वेन विधानं स्यादिति यावत्। तथा च "करम्भपात्राणि जुहोति" इत्येतावतैव तत्सिद्धमित्यन्नकरणेन होतव्यमिति सामान्यविधिवैयर्थ्यम्। न च 'जुह्वा जुहोति" इति विहितजुहूनियमव्युदासात्तत्सार्थक्यमिति वाच्यम्, तर्हि करणेन होतव्यमित्येव सिद्धावन्नपदवैयर्थ्यात्, "शूर्पेण जुहोति" इति वैयर्थ्याच्च। तस्मान्न हेतुवादोऽयम्॥

इति हेतुमन्निगदाधिकरणम्॥ ३॥

४

मन्त्रा[1] किमुच्चारितमात्रा अविवक्षितार्था अदृष्टद्वारा क्रत्वङ्गतां भजन्ते[1],

1. प्राप्नुवन्ति. क

उतानुष्ठेयार्थप्रकाशनरूपदृष्टद्वारेति संशयः। तत्र पूर्वपक्षयति—

**तदर्थशास्त्राद्वाक्यनियमादबुद्धशास्त्रादविद्यमानवचना-दचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचना-दविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ २९ ॥**

'तदर्थशास्त्रवाक्यनियमबुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनार्थविप्रतिषेधस्वाध्यायवदवचनाविज्ञेयानित्यसंयोगेभ्यो मन्त्रानर्थक्यम्' इति केचित्पठन्ति, भाष्ये 'तदर्थशास्त्रात्' इति सूत्रभङ्गस्तु व्याख्यासौकर्यायेति च वदन्ति। मन्त्रानर्थक्यमित्यावर्तते। एकं पूर्वपक्षमुख्ययुक्तिपरम्। तथा हि—नानुष्ठेयार्थप्रकाशकता मन्त्राणाम्; यतो मन्त्रानर्थक्यम् अनुष्ठेयार्थप्रकाशनार्थत्वे मन्त्राणा नित्यवदाम्नानानर्थक्यम्, विनियोजकब्राह्मणकल्पसूत्राद्युपायान्तरेणाप्यनुष्ठेयार्थप्रकाशनसिद्धे। न च मन्त्रेणैवानुष्ठेयार्थ. प्रतिपत्तव्य इत्युपायनियमलाभाय नित्यवत्तदाम्नानमिति वाच्यम्, उपायनियमस्य दृष्टप्रयोजनाभावाद् अदृष्टकल्पनस्य चासम्भवात्। मन्त्रोच्चारणजन्यार्थप्रकाशनाश्रयनियमादृष्टकल्पनापेक्षया मन्त्रोच्चारणादेव तत्कल्पनौचित्यात्। किञ्च स्वव्यापारगोचरे पुरुषो नियुज्यते मन्त्रेणैवेत्युपायनियमश्चोपायान्तरव्यावृत्त्यात्मा न साक्षात्पुरुषव्यापारगोचर। मन्त्रोच्चारणमेव च साक्षात्पुरुषव्यापारगोचरः[1]। यत्र नियुज्यते तत्रैव फलाकाङ्क्षा भवतीत्युच्चारणादेवादृष्टं कल्पयितुमुचितम्। तस्मान्मन्त्रा अविवक्षितार्था उच्चारणमात्रेणादृष्टार्थाः। द्वितीय मन्त्रानर्थक्यमित्येतत्तदर्थशास्त्रादिषु प्रत्येक सम्बध्यते। ततश्च, तदर्थशास्त्रान्मन्त्रानर्थक्यं वाक्यनियमान्मन्त्रानर्थक्यमित्यादीनि नव वाक्यान्युक्तेऽर्थेऽभ्युच्चयपराणि।

तदर्थशास्त्रात्। मन्त्रानर्थक्यमिति सम्बध्यते। अर्थप्रकाशनरूपदृष्टप्रयोजनराहित्य मन्त्राणाम्। कुत. ? तदर्थशास्त्रात्—मन्त्रप्रकाशितेऽर्थे मन्त्रविधायकशास्त्रात्। सन्ति हि अग्निचयने मन्त्रसमाम्नाये "देवस्य त्वा" "अभ्रिरसि" 'नारिरसि" "हस्त आधाय" इत्यादय "आददेऽङ्गिर स्वत्" इत्यन्ताश्चात्वारो मन्त्रा। अस्ति तेषा विनियोजक शास्त्रम् "चतुर्भिरभ्रिमादत्ते' इति। अभ्रि कुद्दालविशेष। मन्त्राणा विवक्षितार्थकत्वेऽर्थप्रकाशनसामर्थ्यरूपलिङ्गादेव मन्त्रप्रकाश्ये अभ्र्यादाने विनियोगस्य

1. साक्षादिति नास्ति ड.

तादृशी प्रीतिर्यादृशी वर्तमाने। इयं गौः पूर्वस्मिन् प्रसवे बहुक्षीरासीदिति वा आगामिनि प्रसवे बहुक्षीरा भविष्यतीति वा उक्तेऽपीदानीं बहुक्षीरेतिवत्प्ररोचनातिशयस्यादर्शनात्। हेतुवादत्वे तु लटा अन्ननिष्पत्तावर्तमानत्वं लक्षयित्वा भविष्यदन्ननिष्पत्तिकरणत्वस्य होमसाधनत्वे हेतुत्वमवलम्ब्य यद्यद्भविष्यदन्ननिष्पत्तिकरणं तेन तेन होतव्यमिति विधौ लक्षणा स्यात्। तद्वरं स्तुतौ लक्षणाश्रयणम्। अतो न हेतुवादः॥

अभ्युपेत्याप्याह—

## यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात्॥ २८॥

यद्यपि हेतुवादत्वमभ्युपगम्यते, तथापि शूर्पमात्रे होमसाधनत्वं पर्यवस्येत्। कुतः? निर्देशात्—तेनेति शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वनिर्देशात्। विशेषहेतुना च साध्यविशेष एवानुमीयते, यथा तृणधूमात्तृणजन्माग्निः, तथा यतोऽयं बलवदुपध्मातोऽग्निरतस्तेन गृहं दग्धमित्युक्तेऽग्निरेव बलवदुपध्मातो दहतीति गम्यते, न त्वनग्निरपि बलवदुपध्मातो दहतीति। नन्वन्नकरणत्वस्य शूर्पमात्रगतस्य होमसाधनत्वकथनवैयर्थ्याद्दर्व्याद्यधिकार्थलाभाय सामान्यरूपेणान्नकरणत्वमात्रस्य हेतुत्वमिति चेद्ब्रूषे, तत्र वदामः—अव्यवस्था विधीनां स्यात्। विधीनां—विधेयानां दर्व्यादीनाम्, अव्यवस्था—अनवधारणं स्यात्। वस्तुमात्रस्य कयाचित्प्रणाड्या अन्ननिष्पत्तिकरणत्वाद्धोमसाधनत्वेन विधानं स्यादिति यावत्। तथा च "करम्भपात्राणि जुहोति" इत्येतावतैव तत्सिद्धमित्यन्नकरणेन होतव्यमिति सामान्यविधिवैयर्थ्यम्। न च 'जुह्वा जुहोति" इति विहितजुहूनियमव्युदासात्तत्सार्थक्यमिति वाच्यम्, तर्हि करणेन होतव्यमित्येव सिद्धावन्नपदवैयर्थ्यात्, "शूर्पेण जुहोति" इति वैयर्थ्याच्च। तस्मान्न हेतुवादोऽयम्॥

इति हेतुमन्निगदाधिकरणम्॥ ३॥

४

मन्त्रा किमुच्चारितमात्रा अविवक्षितार्था अदृष्टद्वारा क्रत्वङ्गतां भजन्ते[1],

---

1. प्राप्नुवन्ति क

उतानुष्ठेयार्थप्रकाशनरूपदृष्टद्वारेति संशय'। तत्र पूर्वपक्षयति—

**तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचना-दचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचना-दविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ २९ ॥**

'तदर्थशास्त्रवाक्यनियमबुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनार्थविप्रतिषेध-स्वाध्यायवदवचनाविज्ञेयानित्यसंयोगेभ्यो मन्त्रानर्थक्यम्' इति केचित्पठन्ति, भाष्ये 'तदर्थशास्त्रात्' इति सूत्रभङ्गस्तु व्याख्यासौकर्यायेति च वदन्ति। मन्त्रानर्थक्यमित्या-वर्तते। एकं पूर्वपक्षमुख्ययुक्तिपरम्। तथा हि—नानुष्ठेयार्थप्रकाशकता मन्त्राणाम्; यतो मन्त्रानर्थक्यम् अनुष्ठेयार्थप्रकाशनार्थत्वे मन्त्राणा नित्यवदाम्नानानर्थक्यम्, विनि-योजकब्राह्मणकल्पसूत्राद्युपायान्तरेणाप्यनुष्ठेयार्थप्रकाशनसिद्धे। न च मन्त्रेणैवानुष्ठे-यार्थ प्रतिपत्तव्य इत्युपायनियमलाभाय नित्यवत्तदाम्नानमिति वाच्यम्, उपाय-नियमस्य दृष्टप्रयोजनाभावाद् अदृष्टकल्पनस्य चासम्भवात्। मन्त्रोच्चारणजन्यार्थ-प्रकाशनाश्रयनियमादृष्टकल्पनापेक्षया मन्त्रोच्चारणादेव तत्कल्पनौचित्यात्। किञ्च स्वव्यापारगोचरे पुरुषो नियुज्यते मन्त्रेणैवेत्युपायनियमश्चोपायान्तरव्यावृत्त्यात्मा न साक्षात्पुरुषव्यापारगोचर। मन्त्रोच्चारणमेव च साक्षात्पुरुषव्यापारगोचरः[1]। यत्र नियुज्यते तत्रैव फलाकाङ्क्षा भवतीत्युच्चारणादेवादृष्ट कल्पयितुमुचितम्। तस्मान्मन्त्रा अविवक्षितार्था उच्चारणमात्रेणादृष्टार्था'। द्वितीयं मन्त्रानर्थक्यमित्येतत्तदर्थशास्त्रादिषु प्रत्येक सम्बध्यते। ततश्च, तदर्थशास्त्रान्मन्त्रानर्थक्यं वाक्यनियमान्मन्त्रानर्थक्य-मित्यादीनि नव वाक्यान्युक्तेऽर्थेऽभ्युच्चयपराणि।

तदर्थशास्त्रात्। मन्त्रानर्थक्यमिति सम्बध्यते। अर्थप्रकाशनरूपदृष्टप्रयोजन-राहित्य मन्त्राणाम्। कुत ? तदर्थशास्त्रात्—मन्त्रप्रकाशितेऽर्थे मन्त्रविधायकशास्त्रात्। सन्ति हि अग्निचयने मन्त्रसमाम्नाये "देवस्य त्वा" "अभ्रिरसि" 'नभ्रिरसि" "हस्त आधाय" इत्यादय "आददेऽङ्गिर स्वत्" इत्यन्ताश्चात्वारो मन्त्रा। अस्ति तेषा विनि-योजक शास्त्रम् "चतुर्भिरभ्रिमादत्ते" इति। अभ्रि कुद्दालविशेष। मन्त्राणां विवक्षि-तार्थकत्वेऽर्थप्रकाशनसामर्थ्यरूपलिङ्गादेव मन्त्रप्रकाश्ये अभ्र्यादाने विनियोगस्य

1 साक्षादिति नास्ति ङ.

सिद्धत्वात्तद्विनियोजकमिदं शास्त्रमनर्थकं स्यात्। तथा तत्रैवास्ति मन्त्रः "इमामगृभ्णन् रशनामृतस्य" इति। तस्य चेद विनियोजक शास्त्रम् "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति। अभिधीयते बध्यते अनयेत्यभिधानी रशना। मन्त्राणां विवक्षितार्थत्वे लिङ्गादेवाश्वरशनादानेऽस्यापि मन्त्रस्य विनियोगसिद्धेस्तद्विनियोजकमिदमनर्थकं स्यात्। न च गर्दभरशनापरिसङ्ख्यानाय तदिति वाच्यम्, तर्हि "अश्वाभिधानीमादत्ते" इत्यस्याश्वरशनाग्रहणरूपस्वार्थत्यागः गर्दभरशनाग्रहणनिवृत्तिरूपपरार्थस्वीकार' गर्दभरशनाग्रहणे प्राप्तस्य मन्त्रस्य बाधश्चेति त्रैदोष्यापत्ते'। तथा दार्शपूर्णमासिकमन्त्रसमाम्नाये पठितस्य "उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्" इति मन्त्रस्य विनियोजक शास्त्र ब्राह्मणभागे पठ्यते "उरु प्रथस्वेति पुरोडाश प्रथयति यज्ञपतिमेव तत्प्रथयति" इति। तदिद मन्त्राणा विवक्षितार्थत्वे लिङ्गादेव विनियोगसिद्धेरनर्थक स्यात्। न च मन्त्रलिङ्गकल्पितविधेरयमर्थवाद इति वाच्यम्, ब्राह्मणभागे पठितस्यास्य वाक्यस्य मन्त्रसमाम्नायदेशकमन्त्रलिङ्गकल्पितविध्यपेक्षया भिन्नदेशत्वेन तदर्थवादत्वानुपत्ते'। तस्मादविवक्षितार्था मन्त्राः। यद्यपि तदर्थशास्त्रविरोधो न सार्वत्रिकस्तथापि क्वचित्सत्त्वमुक्तन्याये लिङ्गमित्यदोष'।

**वाक्यनियमात्**। पदसमूहात्मकमन्त्रवाक्यस्य पदक्रमनियमादपि लिङ्गाम्नार्थप्रकाशनार्थत्व मन्त्राणाम्, व्युत्क्रमेण पाठेऽप्यर्थप्रकाशनसम्भवात्। अदृष्टार्थत्वे तु यथाक्रममेव प्रयुक्ता अदृष्टमादधते, नान्यथेति क्रमनियमोऽर्थवान्[1]। क्रमनियमसहकृतोच्चारणकमन्त्रजन्यमर्थज्ञानमदृष्टायेति कल्पनापेक्षया तदुच्चारणस्यैवादृष्टार्थत्वकल्पना लघीयसी। यद्यपि पदक्रमनियमोऽपि न सार्वत्रिक, एकपदात्मकेषु 'भू.' इत्यादिमन्त्रेषु तदसम्भवात्, तथापि क्वचित्तत्सत्त्वमुक्तन्याये लिङ्गमित्यदोष'।

**बुद्धशास्त्रात्**। बुद्धस्य शास्त्रान्तरेण ज्ञातस्यैवार्थस्य विषये शासनात् सम्प्रेषणात् अविवक्षितार्था मन्त्रा। अस्ति हि सोमे आग्नीध्र प्रति सम्प्रैप' "अग्नीदग्नीन्विहर" इति। तत्र "अ.मीध्राद्धिष्णियान्विहरति" इत्यग्निविहरण सप्रकारमुपदिष्टम्। तच्च सम्प्रैषमात्रान्न[2] ज्ञातु [3]शक्यते। बुद्धे च तस्मिन् किं तज्ज्ञापनार्थसम्प्रैषेण। सम्प्रैषजन्यादर्थज्ञानाददृष्टकल्पनात्तदुच्चारणादेव तत्कल्पन लघीय। बुद्धशासनमपि क्वाचित्कमेव।

---

1 प्रयोजनवान् क 2 सोमे प्रैषमात्रात् क. घ मु पा

3 शक्यम् क, ग, घ.

**अविद्यमानवचनात्** । "चत्वारि शृङ्गा त्रयो अस्य पादाः" इत्यविद्यमानस्य चतुःशृङ्गत्वाद्युपेतवृषभस्य प्रतिपादनादप्रामाण्यप्रसङ्गादविवक्षितार्थत्वम् । इदमपि काचित्कमेव ।

**अचेतनार्थबन्धनात्** । 'अर्थ' याच्ञायाम् । अर्थनमर्थ प्रार्थना । भावे घञ् । "शृणोत ग्रावाण." इत्यादिमन्त्रेषु अचेतने-ग्रावादौ श्रवणादिप्रार्थनस्य, निबन्धनात्-प्रतिपादनाद् अविवक्षितार्था मन्त्रा. । इदमपि काचित्कमेव । क्वचिद्भाष्यपुस्तकेषु 'अचेतने अर्थबन्धनात्' इति अचेतनपदं सप्तम्यन्तं विगृह्यैव पठ्यते । तथा पाठः 'तदर्थशास्त्राद्वाक्यनियमात्' इत्येव विगृह्य सूत्रपाठस्यानुगुणः । 'अचेतनार्थबन्धनात्' इति क्वचित्समस्तपाठो दृश्यते । स तु 'तदर्थशास्त्रवाक्यनियम०' इत्यादिसमस्तपाठस्य न विरुध्यते ।

**अर्थविप्रतिषेधात्** । "अदितिर्द्यौरदितिरन्तरिक्षम्" इत्यदितेर्द्युत्वान्तरिक्षत्वाद्यर्थस्य विरोधादविवक्षितार्थता । इदमपि काचित्कमेव ।

**स्वाध्यायवदवचनात्** । स्वाध्यायशब्देन तदध्ययन लक्ष्यते । षष्ठ्यन्ताद्वतिः । वचनशब्देन पुनर्वचन लक्ष्यते । अर्थप्रकाशनस्येति शेष. । अध्ययनकाले यावदक्षरानुपूर्व्यवधारणमध्ययनमुच्चारणाभ्यासात्मक मन्त्राणा यथा, तद्वल्लौकिकावघातपेषणादिकर्मसु तत्तन्मन्त्रैरुच्चारितैरर्थप्रकाशनाभ्यासस्याभावादविवक्षितार्था मन्त्राः । न ह्युच्चारणाभ्यासात्मकाध्ययनवदर्थप्रकाशनाभ्यासस्य विधिरस्ति । अर्थप्रकाशनस्यावश्यकत्वे हि तदभ्यासोऽपि विधातव्य. स्यात् । अतो मन्त्राणामुच्चारणाभ्यासमात्रस्य विधेरुच्चारणमेव प्रयोजनवदित्यवगच्छाम. ।

**अविज्ञेयात्** । "सृण्येव जर्भरी तुर्फरीतू" इत्यादिमन्त्राणा केषाञ्चिदर्थस्य विज्ञातव्यस्याभावान्नार्थप्रकाशकत्वम् ।

**अनित्यसंयोगात्** । "नमो वय वैश्रवणाय कुर्महे" इत्यादिमन्त्रेषु क्वचिद् अनित्यै इदानीन्तनै· [1]विश्रवस्तदपत्यादिभि· वाच्यतया सयोगाद् अविवक्षितार्थता । तथा च मन्त्राणा [2]रथघोषदुन्दुभिघोषादिवदङ्गत्वेऽपि न शब्दविधया प्रमितिजनकत्वमिति पूर्व पक्ष· ॥

---

1. वैश्रवण क, ख, ग, मु. पा 2 दुन्दुभ्यादिवत् क, घ, मु पा.

अथ सिद्धान्तयति—

## अविशिष्टस्तु वाक्यार्थः ॥ ३० ॥

तुः पूर्वपक्षव्यावृत्तौ। वाक्यतः प्रतीयमानः क्रियाकारकसम्बन्धो वाक्यार्थः। स तावल्लोके वेदे चाविशिष्टः। लोके चार्थप्रत्यायनार्थैव वाक्यानि प्रयुज्यन्ते। तथा वेदेऽपि मन्त्रवाक्यानि प्रत्यायनार्थान्येव भवितुमर्हन्ति। अदृष्टार्थत्वे हि अदृष्टस्य स्वरूपम्, तस्योच्चारणफलत्वम्, उच्चारणे च तज्जननसामर्थ्यं कल्पनीयम्। प्रत्यायनार्थत्वे तु प्रत्यायनस्य स्वरूपम् उच्चारणे तज्जनकत्वं प्रत्यायने उच्चारणफलत्वञ्च तज्जन्यत्वात्सिद्धमिति लाघवम्। अर्थज्ञानस्योपायान्तरेणापि सम्भवे मन्त्रेणा नित्यवदाम्नानन्तु तत एव प्रतिपत्तव्यमिति नियमार्थत्वान्नानर्थकम्। न चैवं सति नियमस्य दृष्टप्रयोजनाभावाददृष्टकल्पने गौरवं तुल्यमिति वाच्यम्, फलमुखगौरवस्यादोषत्वात्। मन्त्राणामदृष्टार्थत्वप्रत्यायनार्थत्वविप्रतिपत्तौ ह्यदृष्टार्थत्वे गौरवं प्रत्यायनार्थत्वे च लाघवं युगपत्पर्यालोच्य लाघवानुगृहीतं प्रत्यायनार्थत्वमेव निश्चिनोति, गौरवदोषानुविद्धमदृष्टार्थत्वन्तु परित्यजति। तदेव मन्त्रोच्चारणफलत्वे[1] प्रत्यायनस्य सिद्धे प्रत्यायनस्योपायान्तरतोऽपि सिद्ध्या तन्नियमार्थत्वे स्थिते तन्नियमस्य कैमर्थ्याकाङ्क्षायामदृष्टार्थत्वे कल्प्यमाने गौरवमुन्मिषति। तच्च प्रत्यायनार्थतां न विरुणद्धि, [2]पूर्वप्रवृत्तलाघवानुगृहीतनिश्चयदशायामस्य गौरवस्यालब्धात्मकत्वात्। तथा च प्रत्यायनात्मकफलसिद्ध्यनन्तरोन्मेषकमिदं गौरवं न दोषावहम्। यथा चैतत्तथा 'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' इति (८) षष्ठप्रथमान्त्याधिकरणे वक्ष्यते। यद्यपि प्रत्यायनाश्रयनियमो न पुरुषस्य साक्षाद्व्यापारगोचरः, तथापि दृष्टलाभानुरोधादुच्चारणादिप्रणाड्या पुरुषव्यापारगोचरस्यापि नियमस्याश्रयणं युज्यते॥

अथ तदर्थशास्त्रादिकं परिहरन्नभ्यादाने तावदाह—

## गुणार्थेन पुनः श्रुतिः ॥ ३१ ॥

अभ्यादानमन्त्रेणा चतुर्णां लिङ्गादेव विनियोगे सिद्धे "ता चतुर्भिरादत्ते" इति पुनर्वचनं गुणार्थेन। 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति तृतीया। चतु-

1. फलकत्वे क, ख, घ  2 पूर्वं ग्रहकृततत्त्रि क, ', ग, मु पा

ष्टसङ्ख्यारूपगुणलाभलक्षणप्रयोजनायेत्यर्थः। पाठादेव चतुष्टसिद्धौ चतुर्भिरिति वचनं समुच्चयसिद्ध्यर्थम्, अन्यथा विकल्पः स्यादिति द्वादशस्य तृतीये 'संख्याविहितेषु समुच्चयोऽसन्निपातित्वात्' इत्यधिकरणे व्यक्तं (ठ) भविष्यति।

"इत्यश्वाभिधानीमादत्ते" इत्यत्राह—

## परिसङ्ख्या ॥ ३२ ॥

मन्त्रेणादाने गर्दभरशनाव्यावृत्तिरनेन विधिना लभ्यत इत्यर्थः। न च त्रैदोष्यप्रसङ्गः, फलत. परिसङ्ख्याभ्युपगमात्। तथा हि—मन्त्रलिङ्ग [1]तावद्रशनाद्वयसाधारणमन्त्रविधायकश्रुतिकल्पनामुखेन गर्दभरशनायामपि मन्त्रविनियोजकमिति वक्तव्यम्। तत्र यावद्गर्दभरशनायां लिङ्गान्मन्त्र' प्राप्नोति, ततः प्रागेव 'इत्यश्वाभिधानीमादत्ते" इति प्रत्यक्षं वाक्यं झटिति प्रवृत्तिकमश्वरशनायां मन्त्रं प्रापयति। ततश्च मन्त्रस्य निराकाङ्क्षत्वान्न गर्दभरशनाया [2]लिङ्गात्प्राप्तिसम्भव.। अतो न प्राप्तबाधः। अश्वरशनायामेव मन्त्रविधानाच्च न स्वार्थत्याग.। अश्वरशनायां विनियोगे सति तत एव मन्त्रस्य शान्ताकाङ्क्षतया गर्दभरशनाया तन्निवृत्तेरार्थिकत्वान्न परार्थग्रहणम्। न चैवं सत्यपूर्वविधित्वापात इति वाच्यम्। यस्य हि विधे प्रवृत्तिरप्राप्तप्रापणफला सोऽयमपूर्वविधि, यथा "व्रीहीन्प्रोक्षति" इति। यस्य तु विधे प्रवृत्तिरप्राप्तांशपूरणफला स नियमविधि, यथा "व्रीहीनवहन्ति" इति। एतदभावेऽपि पुरोडाशविध्याक्षेपादेवावघातः प्राप्नोति। किन्तु नखविदलनादिकमपि पक्षे प्राप्नुयात्। ततश्च नखविदलनादिप्राप्तिपक्षेऽवघातस्याप्राप्तत्वात्तदप्राप्तांशपूरणरूपनियम एव विधिप्रवृत्तेः फलम्। न च नखविदलनादिनिवृत्तिरेव फलं किं न स्यादिति वाच्यम्। एव हि वदन् प्रष्टव्यः—अप्राप्तांशपूरणरूपनियम किं नावघातविधितात्पर्यगोचर' ? उत तद्गोचर' ? इति। नाद्य, तर्ह्यवघातस्य प्राप्तावप्युपायान्तरस्य निराकरणासम्भवात्। न द्वितीय, नियमस्य विधितात्पर्यगोचरत्वेऽर्थादेव तदितरनिवृत्ते' सिद्धतया तस्या विधिफलत्वासम्भवात्। यस्य तु विधे. प्रवृत्तिरन्यनिवृत्तिफला स परिसङ्ख्याविधिः, यथा "इत्यश्वाभिधानीमादत्ते" इति। एतद्विध्यभावेऽप्यश्वरशनादाने मन्त्रस्य लिङ्गादेव नित्यप्राप्तत्वात् न तत्प्राप्तिर्नियमो वा फलम्। किन्तु गर्दभरशनादाने मन्त्रनिवृत्तिरेव फलत्वेनाश्रीयते। तदेव[3] फलत परिसङ्ख्यात्वान्न त्रैदोष्यप्रसङ्ग इत्यन्यत्र विस्तर ॥

1 ताव साधारणं क, ग, घ, सु पा 2. लिङ्गात्प्राप्ति घ, ग. 3. एवञ्च. क, ग.

अथ सिद्धान्तयति—

## अविशिष्टस्तु वाक्यार्थः ॥ ३० ॥

तुः पूर्वपक्षव्यावृत्तौ । वाक्यतः प्रतीयमानः क्रियाकारकसम्बन्धो वाक्यार्थः । स तावल्लोके वेदे चाविशिष्टः । लोके चार्थप्रत्यायनार्थैव वाक्यानि प्रयुज्यन्ते । तथा वेदेऽपि मन्त्रवाक्यानि प्रत्यायनार्थान्येव भवितुमर्हन्ति । अदृष्टार्थत्वे हि अदृष्टस्य स्वरूपम्, तस्योच्चारणफलत्वम्, उच्चारणे च तज्जननसामर्थ्यं कल्पनीयम् । प्रत्यायनार्थत्वे तु प्रत्यायनस्य स्वरूपम् उच्चारणे तज्जनकत्वं प्रत्यायने उच्चारणफलत्वञ्च तज्जन्यत्वात्सिद्धमिति लाघवम् । अर्थज्ञानस्योपायान्तरेणापि सम्भवे मन्त्रेणा नित्यवदाम्नानन्तु तत एव प्रतिपत्तव्यमिति नियमार्थत्वान्नानर्थकम् । न चैवं सति नियमस्य दृष्टप्रयोजनाभावाददृष्टकल्पने गौरवं तुल्यमिति वाच्यम्, फलमुखगौरवस्यादोषत्वात् । मन्त्राणामदृष्टार्थत्वप्रत्यायनार्थत्वविप्रतिपत्तौ ह्यदृष्टार्थत्वे गौरवं प्रत्यायनार्थत्वे च लाघवं युगपत्पर्यालोच्य लाघवानुगृहीतं प्रत्यायनार्थत्वमेव निश्चिनोति, गौरवदोषानुविद्धमदृष्टार्थत्वन्तु परित्यजति । तदेवं मन्त्रोच्चारणफलत्वे[1] प्रत्यायनस्य सिद्धे प्रत्यायनस्योपायान्तरतोऽपि सिद्ध्या तन्नियमार्थत्वे स्थिते तन्नियमस्य कैमर्थ्याकाङ्क्षायामदृष्टार्थत्वे कल्प्यमाने गौरवमुन्मिषति । तच्च प्रत्यायनार्थतां न विरुणद्धि, [2]पूर्वप्रवृत्तलाघवानुगृहीतनिश्चयदशायामस्य गौरवस्यालब्धात्मकत्वात् । तथा च प्रत्यायनात्मकफलसिद्ध्यनन्तरोन्मेषकमिदं गौरवं न दोषावहम् । यथा चैतत्तथा 'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' इति ( ८ ) षष्ठप्रथमान्त्याधिकरणे वक्ष्यते । यद्यपि प्रत्यायनाश्रयनियमो न पुरुषस्य साक्षाद्व्यापारगोचरः, तथापि दृष्टलाभानुरोधादुच्चारणादिप्रणाड्या पुरुषव्यापारगोचरस्यापि नियमस्याश्रयणं युज्यते ॥

अथ तदर्थशास्त्रादिकं परिहरन्नभ्र्यादाने तावदाह—

## गुणार्थेन पुनः श्रुतिः ॥ ३१ ॥

अभ्र्यादानमन्त्रेणा चतुर्णां लिङ्गादेव विनियोगे सिद्धे "ता चतुर्भिरादत्ते" इति पुनर्वचनं गुणार्थेन । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति तृतीया । चतु-

---

1. फलकत्वे क, ख, घ        2 पूर्वं प्रहृक्ततत्नि क, ?, ग, मु पा

ष्ट्वसङ्ख्यारूपगुणलाभलक्षणप्रयोजनायेत्यर्थः। पाठादेव चतुष्ट्वसिद्धौ चतुर्भिरिति वचनं समुच्चयसिद्ध्यर्थम्, अन्यथा विकल्प स्यादिति द्वादशस्य तृतीये 'सङ्ख्याविहितेषु समुच्चयोऽसन्निपातित्वात्' इत्यधिकरणे व्यक्त (ठ) भविष्यति।

"इत्यश्वाभिधानीमादत्ते" इत्यत्राह—

## परिसङ्ख्या ॥ ३२ ॥

मन्त्रेणादाने गर्दभरशनाव्यावृत्तिरनेन विधिना लभ्यत इत्यर्थ । न च त्रैदोष्यप्रसङ्गः, फलत. परिसङ्ख्याभ्युपगमात्। तथा हि—मन्त्रलिङ्ग [1]तावद्रशनाद्वयसाधारणमन्त्रविधायकश्रुतिकल्पनामुखेन गर्दभरशनायामपि मन्त्रविनियोजकमिति वक्तव्यम्। तत्र यावद्गर्दभरशनाया लिङ्गान्मन्त्र' प्राप्नोति, ततः प्रागेव 'इत्यश्वाभिधानीमादत्ते" इति प्रत्यक्षं वाक्यं झटिति प्रवृत्तिकमश्वरशनायां मन्त्रं प्रापयति। ततश्च मन्त्रस्य निराकाङ्क्षत्वान्न गर्दभरशनाया [2]लिङ्गाप्राप्तिसम्भव'। अतो न प्राप्तबाध.। अश्वरशनायामेव मन्त्रविधानाच्च न स्वार्थत्याग'। अश्वरशनायां विनियोगे सति तत एव मन्त्रस्य शान्ताकाङ्क्षतया गर्दभरशनाया तन्निवृत्तेरार्थिकत्वान्न परार्थग्रहणम्। न चैव सत्यपूर्वविधित्वापात इति वाच्यम्। यस्य हि विधे प्रवृत्तिरप्राप्तप्रापणफला सोऽयमपूर्वविधि, यथा "व्रीहीन्प्रोक्षति" इति। यस्य तु विधे प्रवृत्तिरप्राप्तांशपूरणफला स नियमविधि, यथा "व्रीहीनवहन्ति" इति। एतदभावेऽपि पुरोडाशविध्याक्षेपादेवावघात' प्राप्नोति। किन्तु नखविदलनादिकमपि पक्षे प्राप्नुयात्। ततश्च नखविदलनादिप्राप्तिपक्षेऽवघातस्याप्राप्तत्वात्तदप्राप्तांशपूरणरूपनियम एव विधिप्रवृत्तेः फलम्। न च नखविदलनादिनिवृत्तिरेव फल किं न स्यादिति वाच्यम्। एव हि वदन् प्रष्टव्यः—अप्राप्तांशपूरणरूपनियम किं नावघातविधितात्पर्यगोचर ? उत तद्गोचरः ? इति। नाद्य, तर्ह्यवघातस्य प्राप्तावप्युपायान्तरस्य निराकरणासम्भवात्। न द्वितीय, नियमस्य विधितात्पर्यगोचरत्वेऽर्थादेव तदितरनिवृत्ते सिद्धतया तस्या विधिफलत्वासम्भवात्। यस्य तु विधे' प्रवृत्तिरन्यनिवृत्तिफला स परिसङ्ख्याविधिः, यथा "इत्यश्वाभिधानीमादत्ते" इति। एतद्विध्यभावेऽप्यश्वरशनादाने मन्त्रस्य लिङ्गादेव नित्यप्राप्तत्वात् न तत्प्राप्तिर्नियमो वा फलम्। किन्तु गर्दभरशनादाने मन्त्रनिवृत्तिरेव फलत्वेनाश्रीयते। तदेव[3] फलत परिसङ्ख्यानान्न त्रैदोष्यप्रसङ्ग इत्यन्यत्र विस्तर'॥

---

1 ताव साधारणं क, ग, घ, मु पा 2. लिङ्गात्प्राप्ति घ, ग. 3. एवञ्च. क, ग,

"उरु प्रथस्व" इत्यत्राह—

**अर्थवादो वा ॥ ३३ ॥**

वाशब्दोऽवधारणे। लिङ्गादेव सिद्धे "उरु प्रथस्वेति पुरोडाशं प्रथयति" इति पुन श्रवणम् "यज्ञपतिमेव तत्प्रथयति" इत्यर्थवादार्थत्वादर्थवाद एव। न चास्य मन्त्रसमाम्नायदेशकमन्त्रलिङ्गकल्प्यविध्यपेक्षया भिन्नदेशत्वात्कथ तदर्थवादत्वमिति वाच्यम्, मन्त्रलिङ्गकल्प्यविधिशेषत्वासम्भवेऽपि प्रथनविधिशेषत्वोपपत्तेः। अत्र हि "पुरोडाश प्रथयति" इत्यशेन पुरोडाशप्रथनं विधीयते। तच्च प्रथनमेतन्मन्त्रकरणकत्वाद्यज्ञपतेर्यजमानस्य प्रजापशुवृद्धिसाधनमिति स्तोतु [1]मन्त्रस्य पुनरुपादानमिति नानर्थक्यम्॥

'वाक्यनियमात्' इत्यत्राह—

**अविरुद्धं परम् ॥ ३४ ॥**

परं तदर्थशास्त्रादित्यनन्तरोक्तं वाक्यनियमादित्येतन्मन्त्राणामर्थप्रत्यायनार्थत्वेऽविरुद्धम्। न च वयं मन्त्रगतपदक्रमादृष्ट निवारयामः। किन्तर्हि? नियतपदक्रमकमन्त्रोच्चारणतो जायमानमर्थज्ञानमपि फल दृष्टत्वान्नोपेक्षणीयमिति ब्रूम'। गौरवन्तु फलमुखत्वान्न दुष्यति॥

'बुद्धशास्त्रात्' इत्यत्राह—

**[2]सम्प्रैषकर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ३५ ॥**

ज्ञातविपयेऽपि "अग्नीदग्नीन्विहर" इत्यत्र सम्प्रैषमन्त्रे पुनर्ज्ञापनरूपकर्मणो गर्हा निन्दा या अभिहिता सा अनुपालम्भ —अदोष। कुत' ? संस्कारत्वात्—संस्क्रियते अतिशयविशेषवत्तया क्रियते अनुष्ठेयोऽर्थ' अनेनेति संस्कार', पुनर्ज्ञापनस्यादृष्टार्थत्वादिति यावत्। दृष्टसम्भवे ह्यदृष्टकल्पना न [3]युज्यते। न चात्र दृष्ट किञ्चिदुपलभामहे। तस्माददृष्टार्थ· सम्प्रैष॥

'अविद्यमानवचनात्' इत्यत्र 'अचेतनेऽर्थबन्धनात्' इत्यत्र चाह—

**अभिधानेऽर्थवादः ॥ ३६ ॥**

अभिधीयते अनेनेत्यभिधानो मन्त्र। तस्मिन्नविद्यमानवचनत्वेनोदाहृते "चत्वारि शृङ्गा" इति मन्त्रे, अचेतने अर्थबन्धनत्वेनोदाहृते "शृणोत ग्रावाण" इति

1. मन्त्रस्येति नास्ति ग 2 सम्प्रैषे कर्म, सम्प्रैषकर्मणि मु पा. 3 युक्ता क, ख.

मन्त्रे चार्थवादः गौणस्यार्थस्याभिधानम्। तथा हि—अस्य यज्ञस्य होत्रध्वर्युब्रह्मोद्गातारो महर्त्विजश्चत्वारि शृङ्गाणि। प्रातर्माध्यन्दिनतृतीयसवनानि त्रय' पादा। यजमानः पत्नी च द्वे शिरसी। गायत्र्यादिसप्तच्छन्दांसि सप्त हस्ताः। त्रिधा बद्ध त्रिभिर्वेदैर्विहित अस्य यजमानस्य वृषभः कामाना वर्पिता रोरवीति स्तोत्रशस्त्रादि-शब्दैर्गर्जति। सोऽयं यज्ञ मह महान् पाकयज्ञहविर्यज्ञसोमयज्ञभेदैर्विस्तृत देव द्योतमानः मर्त्यान् मनुष्यान् ·आविवेश अधिकारितया स्वीकृतवान् इत्येव रूपकेण यज्ञ. स्तूयते 'चक्रवाकस्तनी हसदन्ता शैवलकेशिनी। काशाम्बरा फेनहासा नदी कापि विराजते' इत्यादिवत्। "शृणोत ग्रावाण." इत्यत्रापि ग्रावाणोऽपि शृण्वन्ति किमुत विद्वास इति कर्मोत्साहनार्थं चैतन्यमारोप्य गुणवादेनापि दृष्टार्थत्वोपपत्तौ नोच्चारणमात्राददृष्टकल्पनोचिता। वार्तिकाभिमतदेवताचैतन्यपक्षे तु ग्रावशब्दस्त-दभिमानिदेवताविशेषे गौण इति निर्बाधम्॥

'अर्थविप्रतिषेधात्' इत्यत्राह—

## गुणादविप्रतिषेध. स्यात्॥ ३७॥

"अदितिर्द्यौः" इत्यत्र अविप्रतिषेध.—अविरोध. स्यात्, गुणवादात् 'त्वमेव माता च पिता त्वमेव' इत्यादिवत्स्तुत्यर्थमारोपितद्युत्वादिगुणकथनादित्यर्थ'॥

'स्वाध्यायवदवचनात्' इत्यत्राह—

## विद्यावचनमसंयोगात्॥ ३८॥

विद्याया' अर्थप्रकाशनस्य अवचनम्—अध्ययनवदनभ्यासः मन्त्राणामविवक्षितार्थत्वे लिङ्गं न भवति। कुत ? असंयोगात्—तदानीं लौकिकावघातादिक्रियायाः सन्निहितत्वेऽपि तस्या यज्ञसंयोगाभावात्। 'यज्ञकर्म प्रधानम्' इति नवमाद्याधिकरण-न्यायेन[1] ( ङ ) यज्ञसंयुक्ताया एव अवघातादिक्रियाया मन्त्रप्रकाश्यत्वात्॥

'अविज्ञेयात्' इत्यत्राह—

## सतः परमविज्ञानम्॥ ३९॥

परमित्यव्ययं युक्तमित्यर्थे—'खल. प्रमाद्यतु परं सज्जने तदसाम्प्रतम्' इति यथा। "सृण्येव जर्भरी" इत्यादिमन्त्रेषु सत —विद्यमानस्यैवार्थस्य [2]तज्ज्ञानोपायभूतनिगम-

1. नवमाद्यन्यायेन क, घ, ङ. 2. तदिति नास्ति. ग.

निरुक्तव्याकरणाद्यध्ययनाभावे सति युक्तमविज्ञानम्। नैतावता तदर्थस्यासत्यत्व वक्तुं[1] शक्यम्, 'न ह्येप स्थाणोरपराधो यदेनमन्धो न पश्यति' इति न्यायात्। अधीतनिगमनिरुक्तव्याकरणादिकलापस्य सुलभो हि तत्रार्थावबोध । तथा हि— "उभाउनूनन्तदिदर्थयेथे" इति सूक्तमाश्विनम्, "अश्विनोः काममप्रा" इति सूक्तान्ते उपसंहारात्। तत्रेयमृगाम्नायते "सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी फर्फरीका[2]। उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु" इति। सृणिरङ्कुश तत्र साधू सृण्या गजौ। प्रथमाद्विवचनस्य आकारश्छान्दस । ताविव बलवन्तौ। जर्भरी— भृञो यङन्तात्पचाद्यच्। यङो लुक्। छान्दसोऽभ्यासस्य जकारो विभक्तेरीकारश्च। स्वानुग्राह्याणामतिशयेन भर्तारौ। तुर्फरीतू–शत्रूणा हिंसितारौ। 'तुर्फ' हिंसायाम्। औणादिक रूपम्। नैतोशेव–नितोशतिर्वधार्थक । पचाद्यजन्तात्स्वार्थे अण्। प्रथमाद्विवचनस्याकारश्छान्दस.। योधाविव तुर्फरीतू इत्यन्वय । तुर्फरी–त्वरमाणौ। त्वरेरौणादिकं रूपम्। प्रथमाद्विवचनस्य ईकारश्छान्दस । फर्फरीका–शोभमानौ। फर्फेरौणादिक रूपम्। प्रथमाद्विवचनस्याकारश्छान्दस । उदन्यजा–उदन्या पिपासा चातकस्य विवक्षिता। तया च प्रावृट्कालो लक्ष्यते। प्रावृषि जातौ। विभक्तेराकारश्छान्दस.। जेमना–जेमानौ उदकलाभेन पिपासाया जेतारौ। छान्दस रूपम्। मदेरू–मत्तौ चातकाविव स्थितौ। ता तौ। विभक्तेराकारश्छान्दस । प्रसिद्धौ युवा, मे–मम, जरायु–जराधर्मकम्, मरायु–मरणधर्मक शरीरम् अजर–जरामरणरहितं कुरुतमिति ॥

'अनित्यसयोगात्' इत्यत्राह—

**उक्तश्चानित्यसंयोगः ॥ ४० ॥**

श्रुतियुगमनुवर्तमाना वैश्रवणादय प्रवाहनित्यतया नैव वेदस्यानित्यतामापादयन्तीत्येव प्रथमे पादे 'पर तु श्रुतिसामान्यमात्रम्' इत्यत्रानित्यसयोग अदोषत्वेनोक्त ॥

तदेव मन्त्राणा विवक्षितार्थत्वे न्यायमुपन्यस्य बाधकानि[3] च लिङ्गानि शिथिलीकृत्य साधकमपि लिङ्गमस्तीत्याह—

---

1. वक्तुमिति नास्ति, शक्यमिति स्थाने शङ्क्यम्. ग

2. पर्फरीका इति ऋग्वेदपुस्तकेषु दृश्यते

3 लिङ्गानि च ग, घ

## लिङ्गोपदेशश्च तदर्थवत्[1] ॥ ४१ ॥

चकार उक्तसमुच्चये। "आग्नेय्यर्चाग्नीध्रमुपतिष्ठते" इत्यादौ, आग्नेयीत्यादि-विशेषणोपादानेन मन्त्राणामुपदेशोऽपि-विधिरपि, तत-मन्त्रजातम् अर्थवत-विवक्षितार्थकमिति गमयति। अविवक्षितार्थकत्वे हि 'आग्नेय्या' इत्येव देवतातद्धित-निर्देशोऽनुपपन्न स्यात्। मन्त्रान् प्रति हि देवतात्वं तत्प्रतिपाद्यत्वमेव, न तु जाति-विशेष.। तथा सत्यौपस[2] सूक्तं पित्र्य सूक्तमित्यादौ देवतातद्धितानुपपत्ते ॥

मन्त्राणा विवक्षितार्थकत्वे लिङ्गान्तरमाह—

## ऊहः ॥ ४२ ॥

चेत्यनुवर्तते। प्रकृतावाम्नातमन्त्रगतपदस्य विकृतावर्थान्तराभिधानाय तदु-चितपदान्तरप्रक्षेप ऊह। सोऽपि तावत्कचित्प्रतिपिध्यमानो मन्त्राणा विवक्षितार्थत्वे लिङ्गम्। तथा हि—अस्ति ज्योतिष्टोमे अग्नीषोमीयपशौ अध्रिगुर्नाम कश्चित्प्रैप "दैव्या शमितार." इत्यादि.। तत्रैव पठ्यते "अन्वेनं माता मन्यतामनु पिता" इति। एन संज्ञपनाय नीयमानं पशु तस्य पिता अनुमन्यता माता चानुमन्यता-मित्यर्थः। तत्रेदमामनन्ति-"न माता वर्धते न पिता" इति। तत्र पशुमातापित्रो शरीरस्य वृद्धिरशक्यत्वान्न निषेद्धु[3] शक्यते। अतस्तत्प्रतिपादकस्य मातृशब्दस्य पितृशब्दस्य च वृद्धि प्रतिषेद्धव्या। तद्वृद्धिश्च द्विबहुपशुपु विकृतिपु प्रसक्तास्ति। सा च न वर्णान्तरोपजननात्, तथा सति पदान्तरत्वापातात्। नाप्युच्चैरुच्चारणात्, उच्चै-स्त्वस्य नादधर्मत्वेन शब्दवृद्धावनुपयोगात्। अतो द्विबहुपशुपु विकृतिपु 'एनम्' इत्यस्य 'एनौ' 'एनान्' इतिवत् मातृशब्दस्य पितृशब्दस्य च द्विवचनबहुवचनान्तत्वेनार्थगता-धिक्यद्वारा शब्दवृद्धिरूप ऊह प्रसक्त' प्रतिषिध्यत इति वक्तव्यम्। प्रसक्तिश्च मातृ-शब्दस्य पितृशब्दस्य च प्रकृतौ विवक्षितार्थत्वे [4]सत्येव घटते, नान्यथा। क्वचिदूह-प्रतिषेधश्च सर्वेषा मन्त्राणा विवक्षितार्थत्वं गमयति। अधिकरणप्रयोजनपरश्चेद सूत्रम्। मन्त्राणा विवक्षितार्थत्वे [5]सत्येव विकृतिषु तदर्थाभिधाननिबन्धन ऊह सिध्यति, नान्यथेत्यर्थ। अत्र "तस्माद्च नोहेत्" इत्यप्युदाहार्यम्।

---

1. तदर्थत्वात् मु. पा
2. औषध क, ख, ग, मु पा
3. प्रतिषेद्धु क, ग
4, 5. सत्येव नास्ति ग

सूत्राक्षरतः स्पष्टं न निर्धारितम्। तत्रानुष्ठानहेतुभूतानुष्ठेयस्मरणार्थत्व करणमन्त्राणा वदन्तो भाष्यवार्तिकादिकृतो मन्त्रप्रयोक्तुरेव मन्त्रजन्य शाब्दबोध मन्यन्ते। तत्त वय न मृष्यामहे, किन्तु श्रोतुरेव मन्यामहे। शब्दोच्चारणस्य परं प्रत्येव शाब्दबोध-जनकत्वस्वाभाव्यात्। न हि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोगोऽर्थवान् भवति, वक्तुस्तदर्थावबोधस्य शब्दप्रयोगात्पूर्वमवश्यभावित्वात्। न ह्यबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारोऽपि 'अविशिष्टस्तु वाक्यार्थः' इति लौकिकस्य वैदिकस्य च वाक्य-स्यार्थावबोध निर्विशेष ब्रुवन् श्रोतुरेव मन्त्रजन्यं शाब्दबोधमभ्युपगच्छति। अन्यथा लोके श्रोतु शाब्दबोध, मन्त्रेषु तु उच्चारयितुरिति वैरूप्यापत्तेः। किञ्च श्रोतुरेव मन्त्रतः शाब्दबोध इत्ययमर्थो मन्त्रगतपदशक्त्यैव स्पष्टं लभ्यते। प्रायेण हि सर्वे मन्त्रा सम्बोध्यविषया। तथा हि—"इषे त्वोर्जे त्वा" इत्यय मन्त्र शाखाच्छेदने विनियुक्त। तत्र साकाङ्क्षत्वात्त्वाशब्दस्य सम्बोध्यैकविषयत्वाद्विनियोगबलाच्च 'शाखे च्छिनद्मि' इत्यध्याहार्यम्। शाखे इति सम्बोधने प्रथमा 'सम्बोधने च' इति व्याकरण-सूत्रेण विहिता। सम्बोधन ज्ञापनम्। इषे त्वोर्जे त्वा च्छिनद्मीति शाखा प्रति ज्ञाप्योऽर्थ। मन्त्र प्रयुञ्जानो ज्ञापयति। तज्ज्ञात्वा शाखा अनुजानाति। शाखा-शब्देन हि तदभिमानिनी देवता अभेदेनोपचर्यते। ततश्च च्छेदनस्य तज्ज्ञापनस्य च तत्रान्वयो न विरुध्यते। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति बादरायण-सूत्रे तद्भाष्यादौ च स्पष्टमेतत्। "विष्णो हव्य रक्षस्व" इत्यादौ तु सूपपादमेतत्।

ननु देवताविग्रहचैतन्यादिक नवमे निराकरिष्यते। सत्य निराकरिष्यत उत्सूत्र भाष्यकृता, न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिकाभिमत चेति [1]षाष्ठतिर्यगधिकरणे(ढ) प्रपञ्चयिष्यते। किञ्च स्तोत्रशस्त्रीया ऋचो देवतास्तुतिपरा स्तुत्यदेवता प्रत्येव तद्गुणबोधिका। स्तुतिवाक्याना स्तुत्य प्रत्येव बोधकत्वस्य लोकसिद्धत्वात्। लोके हि स्तोता गद्यपद्यादिभि स्तुत्य स्तौति। स्तुत्यश्च तत्कृत चमत्कार जानान प्रसीदति। वेदेऽपि तथा भाव्यम्। न च सामानि गातु शस्त्राणि च शंसितु अग्निवायुसूर्यादिस्तुत्यगुणबोध स्तोत्रीया शस्त्रीयाश्च ऋच शक्नु-वन्ति कर्तुम्, 'अग्न आयाहि वीतये' इत्यादिसम्बोधनविभक्त्यनुपपत्ते। किञ्च शस्त्रीयाणामृचा सान्तत्य विहितम् 'सन्ततमन्वाह' इति। पूर्वपूर्वस्या ऋच उत्तरमुत्तर-

1 षष्ठे तिर्यगधिकरणे क घ मु पा

मर्धर्चं प्रणवान्तमुक्त्वा अविरतमेवोत्तरोत्तरस्या ऋच पूर्वपूर्वमर्धर्चमुक्त्वा विरमतीति सान्तत्यलक्षणम्। न ह्येव शसितु होतु प्रत्यृचमर्थावबोध कथमपि सम्भवति। तत्तदृगवसाने तत्तदर्थावबोधव्यापृतचित्तस्योत्तरोत्तरस्या ऋच सान्तत्येन स्फुरणासम्भवात्। तत्तत्स्तुत्यदेवताया एव प्रत्यृचमर्थावबोधे तु न किञ्चिद्विरुध्यते। किञ्च द्वादशस्य तृतीये 'मन्त्राणा करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपात स्यात्सर्वस्य वचनार्थत्वात्' इत्यधिकरणे करणमन्त्रेषु मन्त्रान्तेन कर्मादिसन्निपात. सिद्धान्तित। मन्त्रार्थस्मरणस्य प्रयोक्तृगतस्यानुष्ठानहेतुत्वे चादौ मन्त्रोच्चारण ततोऽनुष्ठेयार्थस्मरण ततोऽनुष्ठानमिति क्रमः स्यात्। ततश्चानुष्ठेयार्थस्मरणेन व्यवहितत्वात्कथ मन्त्रान्तेन कर्मादिसन्निपातो घटेत। मन्त्रबोध्यदेवताया एव मन्त्रत शाब्दबोधाभ्युपगमे तु न कश्चिद्विरोध.। न चैव सति करणमन्त्राणामदृष्टार्थत्वापत्ति., देवतागतशाब्दबोधस्य मन्त्रजन्यस्यानुष्ठानहेतुत्वाभावादिति वाच्यम्। देवतागत शाब्दबोधमादायैव दृष्टार्थत्वसम्भवात्, जपानुमन्त्रणादिमन्त्रेषु कर्मसमवेतानभिधायिषु तथैवाभ्युपगतत्वाच्च[1]। न च श्रोतृदेवतागतशाब्दबोधस्य कथ दृष्टत्वम्, देवतानामप्रत्यक्षत्वादिति वाच्यम्। तर्हि लोकेऽपि वाक्यस्य परप्रत्यायकतया दृष्टत्वानुपपत्ति, परबुद्धेरप्रत्यक्षत्वात्। अनुमानादिना लोके परस्मिन् शाब्दबोधस्य दृष्टत्वमिति चेत्, वेदेऽपि तुल्यम्, देवतासम्बोधनादिलिङ्गात्तस्य तदुपपत्ते'। "देवाना परिपूतमसीत्याह। यद्वा इद किञ्च। तद्देवानां परिषूतम्। अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति। एवमेव तदध्वर्युर्देवेभ्य प्रतिप्रोच्य बर्हिर्दाति। आत्मनोऽहिंसायै", "अग्नाविष्णू मावामवक्रमिषमित्याह। अग्नि. पुरस्तात्। विष्णुर्यज्ञ' पश्चात्। ताभ्यामेव प्रतिप्रोच्यात्याक्रामति", "अग्निँ होतारमिह तँ हुवे इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते", "यदाह। ब्रह्मन्नश्व मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्य प्रजापतये प्रतिप्रोच्याश्व मेध्य बध्नाति। न देवताभ्य आवृश्च्यते। वसीयान्भवति" इत्यादिवाक्यशेषा अप्यत्रानुकूला।

इयास्तु विशेष—लोके वाक्यरचनस्य[2] प्रयोक्तृपुरुषाधीनत्वादज्ञाते चार्थे वाक्यरचनायोगात्प्रयोक्तुरर्थज्ञान नान्तरीयकमस्ति। न तु तत्प्रयोक्तृतात्पर्यविषयीभूतम्, [3]परप्रत्यायनेच्छयैव वाक्यप्रयोगात्। मन्त्राणा त्वपौरुषेयत्वेन नित्यसिद्धतया

1 अभ्युपगमाच्च. ग.　2 रचनाया. ग, घ.　3. परप्रत्यायनार्थैव क, घ मु पा.

सूत्राक्षरत स्पष्ट न निर्धारितम्। तत्रानुष्ठानहेतुभूतानुष्ठेयस्मरणार्थत्व करणमन्त्राणा वदन्तो भाष्यवार्तिकादिकृतो मन्त्रप्रयोक्तुरेव मन्त्रजन्य शाब्दबोध मन्यन्ते। तत्त् वय न मृष्यामहे, किन्तु श्रोतुरेव मन्यामहे। शब्दोच्चारणस्य पर प्रत्येव शाब्दबोध-जनकत्वस्वाभाव्यात्। न हि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोगोऽर्थवान् भवति, वक्तुस्तदर्थावबोधस्य शब्दप्रयोगात्पूर्वमवश्यभावित्वात्। न ह्यबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारोऽपि 'अविशिष्टस्तु वाक्यार्थ' इति लौकिकस्य वैदिकस्य च वाक्य-स्यार्थावबोध निर्विशेष ब्रुवन् श्रोतुरेव मन्त्रजन्य शाब्दबोधमभ्युपगच्छति। अन्यथा लोके श्रोतु शाब्दबोध, मन्त्रेषु तु उच्चारयितुरिति वैरूप्यापत्ते। किञ्च श्रोतुरेव मन्त्रत शाब्दबोध इत्ययमर्थो मन्त्रगतपदशक्त्यैव स्पष्टं लभ्यते। प्रायेण हि सर्वे मन्त्रा सम्बोध्यविषया। तथा हि—"इषे त्वोर्जे त्वा" इत्यय मन्त्र' शाखाच्छेदने विनियुक्त। तत्र साकाङ्क्षत्वात्त्वाशब्दस्य सम्बोध्यैकविषयत्वाद्विनियोगबलाच्च 'शाखे च्छिनद्मि' इत्यध्याहार्यम्। शाखे इति सम्बोधने प्रथमा 'सम्बोधने च' इति व्याकरण-सूत्रेण विहिता। सम्बोधन ज्ञापनम्। इषे त्वोर्जे त्वा च्छिनद्मीति शाखां प्रति ज्ञाप्योऽर्थ। मन्त्र प्रयुञ्जानो ज्ञापयति। तज्ज्ञात्वा शाखा अनुजानाति। शाखा-शब्देन हि तदभिमानिनी देवता अभेदेनोपचर्यते। ततश्च च्छेदनस्य तज्ज्ञापनस्य च तत्रान्वयो न विरुध्यते। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति बादरायण-सूत्रे तद्भाष्यादौ च स्पष्टमेतत्। "विष्णो हव्य रक्षस्व" इत्यादौ तु सूपपादमेतत्।

ननु देवताविग्रहचैतन्यादिक नवमे निराकरिष्यते। सत्य निराकरिष्यत उत्सूत्र भाष्कृता, न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिकाभिमत चेति [1]षाष्ठतिर्यगधिकरणे(ढ) प्रपञ्चयिष्यते। किञ्च स्तोत्रशस्त्रीया ऋचो देवतास्तुतिपरा स्तुत्यदेवता प्रत्येव तद्गुणबोधिका। स्तुतिवाक्याना स्तुत्य प्रत्येव बोधकत्वस्य लोकसिद्धत्वात्। लोके हि स्तोता गद्यपद्यादिभि स्तुत्य स्तौति। स्तुत्यश्च तत्कृत चमत्कार जानान प्रसीदति। वेदेऽपि तथा भाव्यम्। न च सामानि गातु शस्त्राणि च शंसितु अग्निवायुसूर्यादिस्तुत्यगुणबोध स्तोत्रीया शस्त्रीयाश्च ऋच शक्नु-वन्ति कर्तुम्, 'अग्न आयाहि वीतये' इत्यादिसम्बोधनविभक्त्यनुपपत्ते। किञ्च शस्त्रीयाणामृचा सान्तत्य विहितम् 'सन्ततमन्वाह' इति। पूर्वपूर्वस्या ऋच उत्तरमुत्तर-

---

1 षष्ठे तिर्यगधिकरणे क घ मु पा

मर्धर्चं प्रणवान्तमुक्त्वा अविरतमेवोत्तरोत्तरस्या ऋच' पूर्वपूर्वमर्धर्चमुक्त्वा विरमतीति सान्तत्यलक्षणम्। न ह्येवं शसितु' होतु' प्रत्यृचमर्थावबोध कथमपि सम्भवति। तत्तदृगवसाने तत्तदर्थावबोधव्यापृतचित्तस्योत्तरोत्तरस्या ऋच सान्तत्येन स्फुरणासम्भवात्। तत्तत्स्तुत्यदेवताया एव प्रत्यृचमर्थावबोधे तु न किञ्चिद्विरुध्यते। किञ्च द्वादशस्य तृतीये 'मन्त्राणा करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपात स्यात्सर्वस्य वचनार्थत्वात्' इत्यधिकरणे करणमन्त्रेषु मन्त्रान्तेन कर्मादिसन्निपात सिद्धान्तित.। मन्त्रार्थस्मरणस्य प्रयोक्तृगतस्यानुष्ठानहेतुत्वे चादौ मन्त्रोच्चारणं ततोऽनुष्ठेयार्थस्मरण ततोऽनुष्ठानमिति क्रमः स्यात्। ततश्चानुष्ठेयार्थस्मरणेन व्यवहितत्वात्कथ मन्त्रान्तेन कर्मादिसन्निपातो घटेत। मन्त्रबोध्यदेवताया एव मन्त्रत. शाब्दबोधाभ्युपगमे तु न कश्चिद्विरोध। न चैव सति करणमन्त्राणामदृष्टार्थत्वापत्ति., देवतागतशाब्दबोधस्य मन्त्रजन्यस्यानुष्ठानहेतुत्वाभावादिति वाच्यम्। देवतागत शाब्दबोधमादायैव दृष्टार्थत्वसम्भवात्, जपानुमन्त्रणादिमन्त्रेषु कर्मसमवेतानभिधायिषु तथैवाभ्युपगतत्वाच्च[1]। न च श्रोतृदेवतागतशाब्दबोधस्य कथं दृष्टत्वम्, देवतानामप्रत्यक्षत्वादिति वाच्यम्। तर्हि लोकेऽपि वाक्यस्य परप्रत्यायकतया दृष्टत्वानुपपत्ति, परबुद्धेरप्रत्यक्षत्वात्। अनुमानादिना लोके परस्मिन् शाब्दबोधस्य दृष्टत्वमिति चेत्, वेदेऽपि तुल्यम्, देवतासम्बोधनादिलिङ्गात्तस्य तदुपपत्ते'। "देवाना परिषूतमसीत्याह। यद्वा इद किञ्च। तद्देवाना परिषूतम्। अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति। एवमेव तदध्वर्युर्देवेभ्य प्रतिप्रोच्य बर्हिर्दाति। आत्मनोऽहिंसायै", "अग्नाविष्णू मावामवक्रमिषमित्याह। अग्नि पुरस्तात्। विष्णुर्यज्ञ पश्चात्। ताभ्यामेव प्रतिप्रोच्यात्याक्रामति", "अग्निँ होतारमिह तँ हुवे इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते", "यदाह। ब्रह्मन्नश्व मेध्यं भन्त्स्यामि देवेभ्य' प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्य प्रजापतये प्रतिप्रोच्याश्व मेध्यं बध्नाति। न देवताभ्य आवृश्च्यते। वसीयान्भवति" इत्यादिवाक्यशेषा अप्यत्रानुकूला।

इयांस्तु विशेष—लोके वाक्यरचनस्य[2] प्रयोक्तृपुरुषाधीनत्वादज्ञाते चार्थे वाक्यरचनायोगात्प्रयोक्तुरर्थज्ञान नान्तरीयकमस्ति। न तु तत्प्रयोक्तृतात्पर्यविषयीभूतम्, [3]परप्रत्यायनेच्छयैव वाक्यप्रयोगात्। मन्त्राणा त्वपौरुषेयत्वेन नित्यसिद्धतया

1 अभ्युपगमाच्च. ग. 2 रचनाया. ग, घ. 3. परप्रत्यायनायैव क, घ मु पा.

सूत्राक्षरतः स्पष्ट न निर्धारितम्। तत्रानुष्ठानहेतुभूतानुष्ठेयस्मरणार्थत्व करणमन्त्राणा वदन्तो भाष्यवार्तिकादिकृतो मन्त्रप्रयोक्तुरेव मन्त्रजन्य शाब्दबोध मन्यन्ते। तत्तु वय न मृष्यामहे, किन्तु श्रोतुरेव मन्यामहे। शब्दोच्चारणस्य पर प्रत्येव शाब्दबोध-जनकत्वस्वाभाव्यात्। न हि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोगोऽर्थवान् भवति, वक्तुस्तदर्थावबोधस्य शब्दप्रयोगात्पूर्वमवश्यभावित्वात्। न ह्यबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारोऽपि 'अविशिष्टस्तु वाक्यार्थ' इति लौकिकस्य वैदिकस्य च वाक्य-स्यार्थावबोध निर्विशेष ब्रुवन् श्रोतुरेव मन्त्रजन्य शाब्दबोधमभ्युपगच्छति। अन्यथा लोके श्रोतु शाब्दबोध, मन्त्रेषु तु उच्चारयितुरिति वैरूप्यापत्ते। किञ्च श्रोतुरेव मन्त्रत शाब्दबोध इत्ययमर्थो मन्त्रगतपदशक्त्यैव स्पष्ट लभ्यते। प्रायेण हि सर्वे मन्त्रा सम्बोध्यविषया। तथा हि—"इषे त्वोर्जे त्वा" इत्ययं मन्त्र' शाखाच्छेदने विनियुक्त। तत्र साकाङ्क्षत्वात्त्वाशब्दस्य सम्बोध्यैकविषयत्वाद्विनियोगबलाच्च 'शाखे च्छिनद्मि' इत्यध्याहार्यम्। शाखे इति सम्बोधने प्रथमा 'सम्बोधने च' इति व्याकरण-सूत्रेण विहिता। सम्बोधन ज्ञापनम्। इषे त्वोर्जे त्वा च्छिनद्मीति शाखा प्रति ज्ञाप्योऽर्थ। मन्त्र प्रयुञ्जानो ज्ञापयति। तज्ज्ञात्वा शाखा अनुजानाति। शाखा-शब्देन हि तदभिमानिनी देवता अभेदेनोपचर्यते। ततश्च च्छेदनस्य तज्ज्ञापनस्य च तत्रान्वयो न विरुध्यते। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति बादरायण-सूत्रे तद्भाष्यादौ च स्पष्टमेतत्। "विष्णो हव्य रक्षस्व" इत्यादौ तु सूपपादमेतत्।

ननु देवताविग्रहचैतन्यादिक नवमे निराकरिष्यते। सत्य निराकरिष्यत उत्सूत्र भाष्कृता, न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिकाभिमत चेति [1]षाष्ठतिर्यगधिकरणे(ढ) प्रपञ्चयिष्यते। किञ्च स्तोत्रशस्त्रीया ऋचो देवतास्तुतिपरा स्तुत्यदेवता प्रत्येव तद्गुणबोधिका। स्तुतिवाक्याना स्तुत्य प्रत्येव बोधकत्वस्य लोकसिद्धत्वात्। लोके हि स्तोता गद्यपद्यादिभि स्तुत्य स्तौति। स्तुत्यश्च तत्कृत चमत्कार जानान प्रसीदति। वेदेऽपि तथा भाव्यम्। न च सामानि गातु शस्त्राणि च शंसितु अग्निवायुसूर्यादिस्तुत्यगुणबोध स्तोत्रीया शस्त्रीयाश्च ऋच शक्नु-वन्ति कर्तुम्, 'अग्न आयाहि वीतये' इत्यादिसम्बोधनविभक्त्यनुपपत्ते। किञ्च शस्त्रीयाणामृचा सान्तत्य विहितम् 'सन्ततमन्वाह' इति। पूर्वपूर्वस्या ऋच उत्तरमुत्तर-

1 षष्ठे तिर्यगधिकरणे क घ मु पा

देवताप्रतिपादकस्य अग्न्यादिशब्दस्य श्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावाच्छब्दे कार्यसम्भवे सत्येवार्थे कार्यविज्ञानाद् इह च शब्दे ध्यानसम्भवाद्देवताशब्दस्यैव ध्यानमिति सिद्धान्तितम्। तन्न्यायेन मन्त्रे मन्त्रे विद्यादित्यत्रापि देवताशब्दध्यानस्यैव विवक्षितत्वान्मन्त्रजन्यवाक्यार्थज्ञानरूपं तदिति दूरापास्तम्। न च मन्त्रजन्यशाब्दबोधस्य देवतागतस्यानुष्ठेयक्रियानुपयोगात्करणमन्त्रत्वव्यवहारोच्छेदः, 'इति शाखामाच्छिनत्ति' इत्यादावितिकरणावगतकरणत्वविरोध, "चतुर्भिरभ्रिमादत्ते" इत्यादौ तृतीयाविरोधश्चेति वाच्यम्। प्रयोक्तुरर्थज्ञानाभ्युपगमेऽपि तुल्यत्वात्। "इषे त्वा" इति मन्त्रो हि साकाङ्क्ष. 'शाखे छिनद्मि' इत्यध्याहारेण शाखाच्छेदनप्रकाशक.। तदध्याहारश्च 'इति शाखामाच्छिनत्ति' इति विनियोजकवाक्यलभ्य। एवञ्चादौ विनियोजकवाक्यत एव शाखाच्छेदनेऽवगते पुनर्मन्त्रतस्तत्स्मरणस्यादृष्टार्थत्वमवश्यमास्थेयम्। एवञ्च मन्त्रजन्यार्थस्मरणस्यानुष्ठेयक्रियास्वरूपनिष्पत्तावनुपयोगात्कथं तद्द्वारा मन्त्राणा करणत्वसम्भव'। तस्मादतिशयविशेषवत्त्वेन छेदनाद्युत्पत्तौ मन्त्राणां साधनतया तृतीयाश्रुत्यादेरविरोध उपपाद्यः। अन्यथा "रथघोषेण [1]माहेन्द्रस्य स्तोत्रमुपाकरोति" इत्यादौ तृतीयायाः का गति.। "व्यृद्ध वा एतद्यज्ञस्य यदयजुष्केण क्रियते। इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजुष्कृत्यै यज्ञस्य समृद्ध्यै। सम्भृत्या एव सम्भाराः कर्तव्यं यजुः यज्ञस्य समृद्ध्यै" इत्यादिवाक्यशेषा अप्यत्रानुकूलाः। न च मन्त्रजन्यशाब्दबोधस्य प्रयोक्तृगतत्वाभावे दृष्टोपकाराभावादूहोच्छेद इति वाच्यम्। न ह्यूहे शाब्दबोधस्य दृष्टार्थत्वमपि प्रयोजकम्, शाब्दबोधसामान्ये तस्य व्यापारात्। किन्तु प्राकृतस्य वैकृतार्थाभिधानशक्त्यभावस्तत्र बीजम्। तथा च "अग्नये वो जुष्टं प्रोक्षामि" इति प्राकृतस्याग्निदेवत्यव्रीहिप्रोक्षणमन्त्रस्य अग्निं प्रति व्रीहिप्रोक्षणज्ञापने समर्थस्य सौर्येष्टौ सूर्यदेवत्यव्रीहिप्रोक्षणाभिधानेऽशक्त्या अग्निपदस्य स्थाने सूर्यपदं प्रक्षेप्यम्। "न माता वर्धते न पिता। तस्याह्च नोहेत्" इत्याद्यूहदर्शनमत्रैव लिङ्ग भवति। अनुमन्त्रणादिमन्त्रा अपि तत्तुल्यदेवताया एव शाब्दबोधजनका., न तु प्रयोक्तु'। 'प्रस्थिता गा अनुमन्त्रयते—अभिसन्धाय मन्त्रं जपति' 'स्प्यमभिमन्त्रयते—अभिमृश्य मन्त्र जपति, अभिमुखेनाभिसन्धाय वा जपति' इति कल्पभाष्यकृत.। 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। शेषिण तन्मना भूत्वा'

1. माहेन्द्रस्तोत्रम् क, ग. मु. पा.

तत्प्रयोक्तुरर्थज्ञानं नावश्यकम् । तथा चाव्युत्पन्नस्यापि मन्त्रप्रयोगो न विरुध्यते । न हि वक्तुरर्थज्ञानमपि श्रोतृवाक्यार्थबोधे प्रयोजकम् । अव्युत्पन्नपुरुषशुकशारिकाद्युदीरितकालिदासादिरचितगद्यपद्येभ्यो व्युत्पन्नानां शाब्दबोधदर्शनात् । 'देवदत्त घटमानय' इत्यत्र सम्बोधने प्रथमा । सम्बोधनमभिमुखीकृत्य ज्ञापनम् । ज्ञानं श्रोतरि, ज्ञापनं प्रयोक्तरि । ततश्चाभिमुखीभूतदेवदत्तनिष्ठं यद्घटानयनज्ञानं तदनुकूलं प्रयोक्तृगतव्यापारो वाक्यार्थः । एवंविधबोधश्च सम्बोध्यस्य तदितरेषां श्रोतॄणां प्रयोक्तुश्च सम्भाव्यमानोऽपि न सर्वेषां कार्यकारी । सम्बोध्यगतं घटानयनज्ञानमेव कार्यकारि, अन्यथा देवदत्तेत्यस्य वैयर्थ्यात् । एवमत्रापि । न च छान्दोग्यब्राह्मणे "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा" इत्युपक्रम्य "तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति विधानात्प्रयोक्तुरप्यर्थज्ञानमावश्यकमिति वाच्यम् । न ह्यत्र देवताज्ञानं वाक्यार्थज्ञानरूपं विधेयम्, व्युत्पन्नस्य मन्त्रोच्चारणादेव तत्सिद्धेः, ऋषिच्छन्दोविषये तदसम्भवाच्च । किन्त्वस्य मन्त्रस्याग्निर्देवता इन्द्रो देवतेत्येवं व्युत्पन्नाव्युत्पन्नसाधारण्येन देवतापरिज्ञानमात्रमृषिच्छन्दोज्ञानवद्विवक्षितम् । तच्च कात्यायनादिप्रणीतसर्वानुक्रमणिकादिग्रन्थतो मन्त्रार्थज्ञानाभावेऽपि सुलभमेव । प्रयोक्तुर्मन्त्रार्थज्ञानस्यावश्यकत्वे देवताज्ञानविधिवैयर्थ्यादपि न प्रयोक्तुस्तदावश्यकमिति प्रतीमः । अत एव चोपनीयमानस्य वटोरुपनीतमात्रस्य च मन्त्रविधयः सङ्गच्छन्ते । न हि तस्य मन्त्रार्थज्ञानं कथमपि सम्भाव्यते। अस्य मन्त्रस्येयं देवतेत्येतावन्मात्रं तु कथञ्चिदपि ग्राहयितुं शक्यते[1]। ग्राहयन्ति च शिष्टाः । यथा 'गायत्र्या विश्वामित्र ऋषिः गायत्री च्छन्दः सविता देवता' इत्यादि । अत एव च सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कल्पसूत्रेषु क्वापि मन्त्रार्थस्मरणमङ्गतया नोपनिबद्धम्। न च तेषु ऋषिच्छन्दोज्ञानस्याप्यनुपबन्धादङ्गत्वं[2] न स्यादिति वाच्यम् ,इष्टापत्तेः । न हि कर्मकाले प्रतिमन्त्रमृष्यादिज्ञानं तत्र विवक्षितम्, शस्त्रीयास्वृक्षु सान्तत्येन शस्यमानासु तदसम्भवात् । किन्तु बहिर्भूतं याजयित्रध्यापयितृपुरुषयोग्यताविधायकं तत् । किञ्च सङ्कर्षकाण्डे चतुर्थस्य तृतीये 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति वाक्यमुदाहृत्य इतिहासपुराणमन्त्रार्थवादप्रत्यायितदेवतारूपध्यानमत्र विवक्षितमिति पूर्वपक्षयित्वा आग्नेयमैन्द्रमित्यादौ

---

1. शक्यम् ग. 2 अनुपनिबन्धनात् क, ग

देवताप्रतिपादकस्य अग्न्यादिशब्दस्य श्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावाच्छब्दे कार्यासम्भवे सत्येवार्थे कार्यविज्ञानाद् इह च शब्दे ध्यानसम्भवाद्देवताशब्दस्यैव ध्यानमिति सिद्धान्तितम्। तन्न्यायेन मन्त्रे मन्त्रे विद्यादित्यत्रापि देवताशब्दध्यानस्यैव विवक्षितत्वान्मन्त्रजन्यवाक्यार्थज्ञानरूपं तदिति दूरापास्तम्। न च मन्त्रजन्यशाब्दबोधस्य देवतागतस्यानुष्ठेयक्रियानुपयोगात्करणमन्त्रत्वव्यवहारोच्छेदः, 'इति शाखामाच्छिनत्ति' इत्यादाविति करणावगतकरणत्वविरोध, "चतुर्भिरभ्रिमादत्ते" इत्यादौ तृतीयाविरोधश्चेति वाच्यम्। प्रयोक्तुरर्थज्ञानाभ्युपगमेऽपि तुल्यत्वात्। "इषे त्वा" इति मन्त्रो हि साकाङ्क्ष. 'शाखे छिनद्मि' इत्यध्याहारेण शाखाच्छेदनप्रकाशकः। तदध्याहारश्च 'इति शाखामाच्छिनत्ति' इति विनियोजकवाक्यलभ्य। एवञ्चादौ विनियोजकवाक्यत एव शाखाच्छेदनेऽवगते पुनर्मन्त्रतस्तत्स्मरणस्यादृष्टार्थत्वमवश्यमास्थेयम्। एवञ्च मन्त्रजन्यार्थस्मरणस्यानुष्ठेयक्रियास्वरूपनिष्पत्तावनुपयोगात्कथ तद्द्वारा मन्त्राणा करणत्वसम्भवः। तस्मादतिशयविशेषवत्त्वेन छेदनाद्युत्पत्तौ मन्त्राणां साधनतया तृतीयाश्रुत्यादेरविरोध उपपाद्य। अन्यथा "रथघोषेण [1]माहेन्द्रस्य स्तोत्रमुपाकरोति" इत्यादौ तृतीयायाः का गति.। "व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते। इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजुष्कृत्यै यज्ञस्य समृद्ध्यै। सम्भृत्या एव सम्भाराः कर्तव्यं यजु यज्ञस्य समृद्ध्यै" इत्यादिवाक्यशेषा अप्यत्रानुकूलाः। न च मन्त्रजन्यशाब्दबोधस्य प्रयोक्तृगतत्वाभावे दृष्टोपकाराभावादूहोच्छेद इति वाच्यम्। न ह्यूहे शाब्दबोधस्य दृष्टार्थत्वमपि प्रयोजकम्, शाब्दबोधसामान्ये तस्य व्यापारात्। किन्तु प्राकृतस्य वैकृतार्थाभिधानशक्त्यभावस्तत्र बीजम्। तथा च "अग्नये वो जुष्टं प्रोक्षामि" इति प्राकृतस्याग्निदेवत्यव्रीहिप्रोक्षणमन्त्रस्य अग्निं प्रति व्रीहिप्रोक्षणज्ञापने समर्थस्य सौर्येष्टौ सूर्यदेवत्यव्रीहिप्रोक्षणाभिधानेऽशक्त्या अग्निपदस्य स्थाने सूर्यपदं प्रक्षेप्यम्। "न माता वर्धते न पिता। तस्यादृचं नोहेत्" इत्याद्यूहदर्शनमत्रैव लिङ्ग भवति। अनुमन्त्रणादिमन्त्रा अपि तत्स्तुत्यदेवताया एव शाब्दबोधजनका., न तु प्रयोक्तु.। 'प्रस्थिता गा अनुमन्त्रयते—अभिसन्धाय मन्त्र जपति' 'स्वयमभिमन्त्रयते—अभिमृश्य मन्त्र जपति, अभिमुखेनाभिसन्धाय वा जपति' इति कल्पभाष्यकृत.। 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। शेषिण तन्मना भूत्वा'

1. माहेन्द्रस्तोत्रम् क, ग. मु. पा.

इति लक्षणस्य प्रामाणिकत्वेऽपि संस्मरेदित्यनेन वाक्यार्थविधया मन्त्रजन्यज्ञानं न विवक्षितम्। किन्तु मन्त्रार्थत्वप्रकारकमेव विवक्षितम्। तच्च विनियोगबलादव्युत्पन्नस्यापि सुलभम्। अत एव मन्त्रोच्चारणतदर्थस्मरणयोः [1]समानकालकत्वबोधकस्य 'उच्चारयन्नेव' इति शतुरुपपत्तिः। "इति गार्हपत्यमुपतिष्ठते" इत्यस्य च इति मन्त्रेण गार्हपत्यमुपेत्य तद्गुणान्प्रख्यापयतीत्यर्थः। तदाहुर्नाग्निरुपस्थेय. कः श्रेयासं सुप्तं बोधयिष्यति" इत्यादिवाक्यशेषश्चेह लिङ्गम्। 'उपस्थितिस्तु बोधः स्यात्' इत्यत्र च ण्यन्ताद्बुधि ज्ञापनमुच्यते। वस्तुतस्तु समीप प्राप्यावस्थानमुपतिष्ठतेरर्थः। मन्त्रेण गार्हपत्यमुपेत्य तिष्ठतीत्यर्थः। अतस्तत्रापि मन्त्रार्थज्ञानं न प्रयोक्तुर्विवक्षितम्। तथा च कर्मकाले कल्पसूत्रादितो विनियोगमात्रं जानानस्यार्थज्ञानशून्यस्यापि मन्त्रप्रयोगः सिद्धः। मन्त्रार्थज्ञानपूर्वकमनुष्ठाने त्वभ्युदयः। योऽर्थज्ञ इत्सकल भद्रमश्नुते" इति श्रवणात्। "स्थाणुरयं भारहारः किलाभूदधीत्य वेद न विजानाति योऽर्थम्" इत्यादिनिन्दा तु (ण) नहिनिन्दान्यायेन ज्ञानप्रशंसार्थेति निरुक्ते यास्काचार्यैः स्पष्टमेवाभिहितम्। एतेन—

'मन्त्रार्थज्ञो जपञ्जुह्वत्तथैवाध्यापयन्द्विजः।
स्वर्गं लोकमवाप्नोति नरकं तु विपर्यये'॥

इत्याद्यपि व्याख्यातम्॥

इति चतुर्थं मन्त्राधिकरणम्॥ ४॥

## इति प्रथमाध्याये द्वितीयः पादः॥

---

1 समानकालार्थं. क, ग, मु पा.

# तृतीयः पादः

१

निमथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

प्रमाणाध्यायेऽस्मिन् प्रथमपादे साक्षाद्धर्मप्रमाणत्वादादौ विधिभागस्य प्रामाण्यं विचार्य द्वितीयपादे तदेकदेशभूतयोरर्थवादमन्त्रभागयोः प्रामाण्यं[1] विशिष्य विचारितम् । इदानीं वेदमूलकस्मृतिपुराणेतिहासकल्पसूत्राचारादिप्रामाण्य विचार्यते । यद्यपि नामधेयभागस्यापि वेदैकदेशत्वात्तद्विचारानन्तरमेव स्मृत्यादिविचारो युक्त, तथापि नामधेयभागस्याल्पत्वान्मन्त्रार्थवादमूलकस्मृतिपुराणवचसा बहुलत्वात्तत्प्रामाण्यविचारात्प्राङ्मन्त्रार्थवादमूलकस्मृत्यादिविचार एव [2]तदुपजीव्यकत्वायुच्यते । नामधेयभागस्तु न स्मृत्यादिमूलमिति वैषम्यम् ।

तत्राष्टकादिस्मृति प्रमाण न वेति सशये, पूर्वपक्षयति—

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं[3] स्यात् ॥ १ ॥**

स्मृतिवाक्यजात धर्मप्रमाणतया अनादरणीयं स्यात् । कुत ? धर्मस्य शब्दमूलत्वात् धर्मस्य वेदैकप्रमाणकत्वात् स्मृतिवाक्यानाञ्च पौरुषेयत्वात् । ननु तेषां वेदमूलकतया धर्मे प्रामाण्यमस्तु तत्राह—अशब्दमिति । स्मृतिवाक्यजातं मूलभूतवेदवाक्यरहितम्, अतो वेदमूलकतयापि न तेषां प्रमाण्यसम्भवः, तन्मूलभूतवेदवाक्याना श्रावणान्यप्रत्यक्षागोचरत्वात्, श्रावणप्रत्यक्षस्य चापठ्यमानेषु तेष्वप्रसरात्, - मानत्वे च स्मृतिप्रणयनवैयर्थ्यात् । स्मृतयस्तु न तल्लिङ्ग भवितुमर्हन्ति, तासां श्रुत्यविनाभावाभावात् । स्मृतय प्रमाणमित्येवविधागमोऽपि कृतकश्चेन्न विस्रम्भणीयः । नित्यस्तु नोपलभ्यते । उपमान त्वदृष्टे दृष्टासदृशे चार्थे न[4] प्रसर्तुमीष्टे । अर्थापत्तिरपि

---

1. विशेषेण क, ग.
2. तदुपजीवकत्वात् क, घ, मु. पा.
3. अनपेक्षं
4 प्रवर्तितु . ग.

# तृतीयः पादः

१

निमथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

प्रमाणाध्यायेऽस्मिन् प्रथमपादे साक्षाद्धर्मप्रमाणत्वादादौ विधिभागस्य प्रामाण्यं विचार्य द्वितीयपादे तदेकदेशभूतयोरर्थवादमन्त्रभागयोः प्रामाण्य[1] विशिष्य विचारितम् । इदानीं वेदमूलकस्मृतिपुराणेतिहासकल्पसूत्राचारादिप्रामाण्य विचार्यते । यद्यपि नामधेयभागस्यापि वेदैकदेशत्वात्तद्विचारानन्तरमेव स्मृत्यादिविचारो युक्त, तथापि नामधेयभागस्याल्पत्वान्मन्त्रार्थवादमूलकस्मृतिपुराणवचसां बहुलत्वात्तत्प्रामाण्यविचारात्प्राङ्मन्त्रार्थवादमूलकस्मृत्यादिविचार एव [2]तदुपजीव्यकत्वादुच्यते । नामधेयभागस्तु न स्मृत्यादिमूलमिति वैषम्यम् ।

तत्राष्टकादिस्मृति प्रमाणं न वेति सशये, पूर्वपक्षयति—

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं[3] स्यात् ॥ १ ॥**

स्मृतिवाक्यजात धर्मप्रमाणतया अनादरणीयं स्यात् । कुत ? धर्मस्य शब्दमूलत्वात् धर्मस्य वेदैकप्रमाणकत्वात् स्मृतिवाक्यानाञ्च पौरुषेयत्वात् । ननु तेषां वेदमूलकतया धर्मे प्रामाण्यमस्तु तत्राह—अशब्दमिति । स्मृतिवाक्यजातं मूलभूतवेदवाक्यरहितम्, अतो वेदमूलकतयापि न तेषा प्रमाण्यसम्भवः, तन्मूलभूतवेदवाक्याना श्रावणान्यप्रत्यक्षागोचरत्वात्, श्रावणप्रत्यक्षस्य चापठ्यमानेषु तेष्वप्रसरात्, पठ्यमानत्वे च स्मृतिप्रणयनवैयर्थ्यात् । स्मृतयस्तु न तल्लिङ्ग भवितुमर्हन्ति, तासां श्रुत्यविनाभावाभावात् । स्मृतय प्रमाणमित्येवंविधागमोऽपि कृतकश्चेन्न विस्रम्भणीयः । नित्यस्तु नोपलभ्यते । उपमान त्वदृष्टे दृष्टासदृशे चार्थे न[4] प्रसर्तुमीष्टे । अर्थापत्तिरपि

1. विशेषेण क, ग.
2. तदुपजीवकत्वात्. क, घ, मु. पा.
3 अनपेक्ष
4 प्रवर्तितु . ग.

स्मर्तॄणां मन्वादीना सम्भवद्भ्रमप्रमादकतया अप्रामाण्यस्याप्युपपत्तेः, अन्यथानुपपत्त्यभावान्न सम्भवत्प्रसरा । अतः षष्ठप्रमाणगोचरत्वमेव स्मृतीनां धर्मे प्रामाण्यस्य ॥

इति प्राप्ते, सिद्धान्तयति—

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

अपि वेति पूर्वपक्षव्यावृत्तौ । श्रुतिमूलकतया स्मृतिः प्रमाण स्यात्, यतः स्मृतिमूलभूतश्रुतावनुमापक लिङ्गमस्ति स्मृतिरेव । ननु सम्भवद्भ्रमप्रमादमूलकत्वात्स्मृतेः कथं तथाविधश्रुत्यनुमापकता, तत्राह—कर्तृसामान्यादिति । "धन्वन्निव प्रपा असि" "स्थलयोदकं परिगृह्णन्ति" इत्यादिमन्त्रार्थवादात्मकास्मदादिप्रत्यक्षवेदमूलकस्मृतिविहितकर्मसु अस्मदाद्यनुपलब्धवेदमूलकस्मृतिविहितकर्मसु च तत्कर्तॄणा सकलवैदिकशिष्टाना वेदकमूलकतया दृढपरिगृहीतस्मृतिविहितत्वस्य समानत्वादित्यर्थः । न हि वेदमूलकतया सकलवैदिकशिष्टपरिग्रहणं स्मृतेर्भ्रान्त्यादिमूलकतया वेदमूलकत्वाभावे घटते । तथा चाष्टकादि कर्म वेदमूलक भवितुमर्हति, वेदमूलकतया वैदिकदृढपरिगृहीतस्मृतिविहितत्वात्, अस्मदादिप्रत्यक्षवेदमूलकस्मृतिविहितप्रपादिवत् इति [1]प्रयोगो बोध्यः । एवमितिहासपुराणाद्यप्युदाहार्यम् ॥

इति प्रथम स्मृत्यधिकरणम् ॥ १ ॥

२

"औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षश्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः प्रमाणमप्रमाण वेति संशय । प्रत्यक्षश्रुतिविरुद्धापि स्मृतिः प्रमाणम्, पूर्वाधिकरणन्यायेनानुमितवेदमूलकत्वात् । न ह्यनुमितेत्येवानुमिता श्रुतिर्दुर्बला प्रत्यक्षेत्येव प्रत्यक्षा प्रबला । बाधिताबाधितार्थकत्वमेव हि तत्र बीजम् । न चेहान्यतरत्र तत्सम्भवः, उभयोरपि प्रत्यक्षानुमितयोः श्रुतित्वाविशेषात् । तथा च षोडशिग्रहणाग्रहणवद्व्रीहियववच्च विकल्प इति प्राप्ते, सिद्धान्तयति—

## विरोधे त्वनपेक्षं[2] स्यादसति ह्यनुमानम् ॥ ३ ॥

तुरष्टकादिस्मृतिवैषम्ये । प्रत्यक्षश्रुतिविरोधे सति अनपेक्ष—मूलप्रमाणानपेक्ष श्रुतिवाक्यमेव प्रमाण स्यात् न तु स्मृतिवाक्यम्, तस्य मूलश्रुत्यपेक्षत्वात् तथाविधश्रुतौ च प्रमाणाभावात् । ननु स्मृत्या श्रुतिरनुमीयताम्, तत्राह—असति ह्यनुमान-

1. अनुमान बोध्यम् ग 2 अनपेक्ष्य.

मिति। असति हि प्रत्यक्षविरोधे अनुमानमिति। अस्ति चात्र प्रत्यक्षश्रुतिविरोध। तथा च वन्हावौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य स्पर्शनश्रुतिप्रत्यक्षेण सर्ववेष्टनश्रुत्यनुमानस्य [1]बाधितत्तया सर्ववेष्टनश्रुतेर्गगनकुसुमायमानत्वात्स्पर्शनसर्ववेष्टनयोरभित्तिचित्रायितो विकल्पः। ग्रहणादिविपये तु तच्छास्त्रयो' प्रत्यक्षत्वाद्विकल्पो युक्त ॥

इतोऽपि सर्ववेष्टनश्रुतिरप्रमाणमित्याह—

## हेतुदर्शनाच्च ॥ ४ ॥

लोभादिना हेतुना सर्ववेष्टनस्मृतेः प्रवृत्तिसम्भवादित्यर्थ.। सर्ववेष्टनस्य महतैव वाससा साध्यत्वात्तद्ग्रहणलोभेन सर्ववेष्टनस्मृति॰ प्रवृत्ता स्यात्। अतो लोभादिमूलिका एवञ्जातीयका स्मृतिरप्रमाणम्। चकारोऽभ्युच्चये। प्रत्यक्षश्रुतिविरोधे सति स्मृत्यनुमानस्यानुन्मेषे पूर्वसूत्रेण वर्णिते परिशेपादेव यथोचित लोभादिमूलकत्वकल्पनस्य सिद्धे ॥

## इति द्वितीय विरोधाधिकरणम् ॥ २ ॥

३

अत एव वाधिकरणान्तरपरमस्तु। तथा हि—सन्ति ज्योतिष्टोमे वैसर्जनाख्या होमाः "वैसर्जनानि जुहोति" इति। तत्र "अध्वर्युं यजमानोऽन्वारभते यजमानं पत्नी पत्नीमितरे पुत्रभ्रातरोऽहतेन वाससा सम्प्रच्छन्ना भवन्ति" इति विहितं वास॰ प्रकृत्य स्मरन्ति—'वैसर्जनीयं[2] वासोऽध्वर्युर्गृह्णाति' इति। तदिद वैदिकपरिगृहीतत्वात्प्रत्यक्षश्रुतिविरोधाभावाच्च प्रमाणम्। न च सर्ववेष्टनादिस्मृतिवल्लोभादिमूलकल्पनसम्भव। तत्र हि प्रत्यक्षविरोधात्तथा कल्पनम्। न चात्र तद्विरोधोऽस्ति येन तथा कल्प्येत। सम्भावनामात्रेण च लोभादिमूलकत्वकल्पनायां दानविषयस्मृतिमात्रस्य प्रामाण्योच्छेदापत्ति.। अत एवञ्जातीयक स्मरण प्रमाणम्। इति प्राप्ते, सिद्धान्तयति—

## हेतुदर्शनाच्च ॥ ४ ॥

चोऽप्यर्थे। प्रत्यक्षश्रुतिविरुद्धा स्मृतिरप्रमाणमित्युक्तम्। एषा स्मृतिस्तदविरुद्धापि न प्रमाणम्। कुत ? हेतुदर्शनात्। उक्तोऽर्थ.। [3]प्रकीर्णकतया पठ्यमानत्वेन

1. बाधितत्वात् ग.  2. वैसर्जनहोमीय. क, ग.  3. प्रकीर्णतया ख, घ, मु. पा.

वैसर्जनस्मृतेर्लोभादिमूलकत्वकल्पनसम्भवेऽपि मन्वादिप्रणीताष्टकादिसहपठिततया दानादिस्मृतीनां न लोभादिमूलकत्वावकाश । ततश्च लोलुपेन केनचिदध्वर्युणा प्रवर्तितेयं स्मृतिरप्रमाणम् । तदेव प्रत्यक्षश्रुतिविरुद्धं लोभादिमूलकमपि स्मरणमप्रमाणमिति भाष्यानुयायी पन्थाः ।

इति तृतीयं हेतुदर्शनाधिकरणम् ॥ ३ ॥

## वार्तिककारमतम्

तत्र प्रत्यक्षश्रुतिविरुद्धं स्मरणमप्रमाणमिति प्रथमाधिकरणमनुपपन्नम् । तथा हि—औष्ण्यशैत्ययो स्वरूपेण परस्परविरोधित्वाद्वह्नावौष्ण्यप्रत्यक्षेण शैत्यानुमानबाधो युज्यते[1] । स्पर्शनश्रुतिप्रत्यक्षेण तु सर्ववेष्टनश्रुत्यनुमानस्य बाधो न सम्भवति तयोः श्रुत्यो स्वरूपेण विरोधाभावात् । अर्थतो विरोधस्तु सर्ववेष्टनश्रुत्यनुमानोत्तरकालिकस्फूर्तिको न तदनुमानप्रवृत्तिं बाधितु क्षमते, विरोधस्य तदानीमलब्धात्मकत्वात् । प्रवृत्ते तु तदनुमाने प्रत्यक्षानुमितश्रुत्योरुभयोरपि श्रुतित्वाविशेषात्सन्नप्यर्थतो विरोधो युगपदेव तदनुष्ठानद्वयं बाधते, स्पर्शनसर्ववेष्टनयोर्युगपत्कर्तुमशक्यत्वात् । कस्मिंश्चित्प्रयोगे स्पर्शनं प्रयोगान्तरे सर्ववेष्टनमित्येवं कालभेदेन तदुभयानुष्ठानं तु निर्बाधमेव, विरोधाभावात् । तथा च व्रीहियवादिशास्त्रवत्कालभेदेन स्पर्शनसर्ववेष्टनश्रुत्योरपि प्रामाण्यं निर्बाधमिति सर्वदा तदप्रामाण्यवर्णनमनुपपन्नम् । तथा द्वितीयाधिकरणमप्यनुपपन्नम्, प्रकीर्णकस्मृतीनामपि सकलवैदिकशिष्टैर्धर्मबुद्ध्या तदर्थानुष्ठानस्याद्रियमाणतया दानादिस्मृतिवत्प्रामाण्यस्यावश्याङ्गीकार्यत्वादित्यादिदूषणान्युद्भाव्य सूत्रद्वयमिदमन्यथा योजितं वार्तिके । तद्यथा—प्रथमसूत्रे 'अनुष्ठाने' इत्यध्याह्रियते । प्रमाणमिति पूर्वसूत्रादनुवर्तते । श्रुतिस्मृत्योर्विस्रम्भाविस्रम्भाभ्यामनुष्ठानविरोधे सति विस्रम्भानपेक्ष प्रत्यक्षश्रुतिवाक्यमेवानुष्ठाने प्रमाणम्, न तु स्मृतिः, तस्या मूलभूतश्रुत्यपेक्षत्वात् । मूलभूतश्रुतिप्रत्यक्षस्य च परकीयतया तद्विस्रम्भविषये मूलानुसन्धानापेक्षत्वात् । विस्रम्भणीयस्वप्रत्यक्षश्रुतिवाक्येऽसति स्मृतिमूलश्रुतिप्रत्यक्षस्य परकीयस्य विस्रम्भाविपर्येऽनुमानं मूलानुसन्धानं क्लिष्टमपेक्ष्यते । स्वप्रत्यक्षस्य हि विस्रम्भणीत्वात् तस्मिन्सत्यनुष्ठानप्रतीतिः स्वारसिकी । परकीयप्रत्यक्षस्य तु विस्रम्भमूलानु-

1 युक्त ग घ.

सन्धानसापेक्षत्वात्तस्मिन्सति नैवम्। अस्ति चात्र विस्रम्भणीया स्वप्रत्यक्षा श्रुतिः। अत सैवानुष्ठाने प्रमाणं यावत्स्मृतिमूलश्रुतिः प्रत्यक्षतो नोपलभ्यते। तदुपलम्भोत्तरं तु द्वयोरपि व्रीहियवादिश्रुतिवद्विकल्प आदर्तव्यः। ततश्च कदाचित्फलत अप्रामाण्य प्रत्यक्षश्रुतिविरुद्धस्मृतेरिति सिद्धम्। हेतुदर्शनादिति सूत्रमप्यत्रैवार्थे युक्त्यन्तरपरं योज्यम्–स्मर्तॄणां सर्ववेष्टनश्रुतिप्रत्यक्षे सत्यपि न्यायाभासात्मकहेतुदर्शनसम्भावनया विस्रम्भः प्रतिबध्यत इति ॥

## वर्णकान्तरम्

तदेव योजनायामनुष्ठानपदाध्याहारे गौरवं मत्वा वर्णकान्तर वर्णित वार्तिके। तद्यथा—यानि वैदिकैः शिष्टैरपरिगृहीतानि शाक्यादिनिबन्धनानि त्रयीविपरीतार्थानि अहिंसासत्यवचनशमदमदानादिप्रतिकञ्चुकच्छायाबहुलानि साङ्ख्ययोगपाञ्चरात्रादीनि च धर्मशास्त्राभासानि तेषा प्रत्यक्षादिमूलकतया प्रामाण्यं निराकृत तर्कपादे 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणाम्' इत्यादिसूत्रे वार्तिके। इदानीं सम्भावितवेदमूलकतया प्रामाण्यं तेषा निराकर्तुमधिकरणमिदमारभ्यते। मन्वादिस्मृतिवत्तेषामप्यस्ति वेदमूलकतया प्रामाण्यम्। न च तन्मूलश्रुतीना मन्वाद्यदृष्टतया कथ तत्प्रामाण्यमिति वाच्यम्, मन्वादिदृष्टवेदचतुष्टयाद्भिन्नप्रस्थानानामेव वेदाना तत्र मूलत्वसम्भवात्। न च 'चत्वारो वेदा' इति लोकवेदप्रसिद्धिविरोधः, प्रसिद्धेर्मन्वादिदृष्टमात्राभिप्रायकत्वात्। सर्वदा च प्रवाहनित्यतया मन्वादिस्वीकारान्नानित्यसयोग। अत एव "यद्वै किञ्च मनुरवदत्" इत्यादि सङ्गच्छते। अस्तु वा चत्वार एव वेदा इति, तथापि वेदमूलकत्वमेषा न विरुध्यते। ऋग्यजुःसामवेदेषु हि धर्मबोधकेषु असङ्ख्येया शाखा सन्ति। तत्र काश्चिदेव ऋषिभिर्दृष्टा। नहि सर्वा अपि शाखाः पुरुषायुषेणापि कथमपि केनचिद्द्रष्टुं शक्याः[1], आनन्त्याच्छाखानामल्पत्वाच्च पुरुषायुषस्य। अत एव भरद्वाजस्य महानुभावस्यापि सर्ववेदाध्ययनाय[2] सगर्वं प्रवृत्तस्य कतिपयशाखाध्ययनमात्रेण जराप्रवृत्तिमनधीतानाञ्च शाखानामानन्त्यादशक्याध्ययनत्वञ्च दर्शयति काठकश्रुति—"भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तꣳ ह जीर्णꣳ स्थविरꣳ शयानमिन्द्र उपव्रज्योवाच, भरद्वाज यत्ते चतुर्थमायुर्दद्या किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तꣳ ह त्रीन् गिरिरूपानविज्ञातानिव

1. शक्यन्ते. ग.                    2. अध्ययने क, ग, घ, मु. पा.

दर्शयाञ्चकार । तेषां ह्येकैकस्मान्मुष्टिमाददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरद्-ननूक्तमेव" इति । अन्ववोचथाः-अधीतवानसि । अननूक्तम्-अनधीतम् । स्पष्टमन्यत् । तथा च मन्वाद्यदृष्टवेदमूलकत्वसम्भवादेषामस्ति प्रामाण्यम् । यद्यपि वेदा अप्रमाण-मित्यभ्युपगच्छद्भिः शाक्यादिभिस्तद्ग्रन्थानां वेदमूलकतया प्रामाण्यानङ्गीकारात्ते कथं वेदमूलकत्वमाशङ्केरन् तन्निराकरणाय वा किमर्थमधिकरणप्रवृत्तिः, तथापि न शाक्या-दीनामिय शङ्का । किन्तु वैदिकानामेव मध्ये केषाञ्चिन्मन्दानामष्टकादिस्मृतिवत्तेषामपि वेदमूलकतया प्रामाण्यशङ्कया तत्परिग्रहः प्रसज्येतेति तामिमां शङ्कां मन्दविषन्यायेन निराकरोति—**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ।**

प्रमाणमित्यनुवर्तते । तुशब्दः शङ्काव्यावृत्तौ । शाक्यादिग्रन्थानां वैदिकशिष्ट-परिगृहीतप्रत्यक्षश्रुतिविरोधे सति मूलान्तरानपेक्षं श्रुतिवाक्यजातमेव प्रमाणं न तु तद्विरुद्धशाक्यादिग्रन्थजातम्, पौरुषेयत्वात् । न च श्रुतिमूलकतया प्रामाण्यम्, मूलश्रुतौ प्रमाणाभावात् । ननु स्मृत्यैव श्रुतिरनुमीयताम्, तत्राह—असति ह्यनुमानमिति । असति हि प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमानमुदेतुमुत्सहेत । अय भावः—वेदेषु दृढ-विस्रब्धमन्वादिस्मृतीना तथाविधवैदिकदृढपरिग्रहान्यथानुपपत्त्या मूलश्रुतिकल्पकत्व युज्यते । शाक्यादिग्रन्थेषु त्विद विपरीतम्, वैदिकपरिग्रहाभावात् वेदविद्वेषिपरि-ग्रहाच्च । न च वैदिकपरिग्रहाभावेऽपि अहिंसादिकतिपयवैदिकार्थगन्धवासितत्वेन हेतुना मूलश्रुत्यनुमान स्यादिति वाच्यम् । वेदविद्वेषिजनपरिग्रहेण वेदमूलकत्वव्यति-रेकस्य निश्चिततया हेत्वन्तरेणापि मूलश्रुत्यनुमानाप्रवृत्ते साङ्ख्ययोगादिशास्त्रेषु वैदिक-परिग्रहो यदंशेऽस्त्युपासनादिविषये तदंशे प्रामाण्यमिष्टमेव । यदंशे तु प्रपञ्चसत्यत्व-मिथ्यात्वद्वैताद्वैतादिविषये[1] विहितस्य [2]हिंसादोपास्तित्वादिविचारविषये च प्रत्यक्ष-श्रुतिविरोधोऽस्ति तदंशेऽप्रामाण्यमेव । पाञ्चरात्राद्यागमानान्तु वैदिकविरुद्धवामागम-प्रचुरत्वात्सर्वथैवाप्रामाण्यम्[3] । "भरद्वाजो ह त्रिभि" इत्यादि सावित्रार्थवाद । तत्रा-नन्तपदमेकविंशतिर्बाह्वृच्यमित्यादिशाखापरिमाणस्यातिविस्तृतत्वपरमित्यदोष । अत एव श्वेतकेतुं प्रकृत्य "सर्वान्वेदानधीत्य" इति छान्दोग्यश्रुतिः सङ्गच्छते । यदपि

1 विचारविषये क, ग, मु. पा 2. हिंसादोपास्तित्वनास्तित्वादि, क, ग, मु पा. 3, न प्रामाण्यम्, ग.

शाक्यादिनिबन्धनेषु[1] पाञ्चरात्राद्यागमेषु च क्वचित्क्वचिद्वेदबोधितमेवाहिंसादिक-मुपासनादिकञ्चोपनिबद्धं तदागमप्रचारसिद्ध्यर्थमेवोपनिबद्धमिति तदनुष्ठानं वैदिकाना न तन्मूलकतया, किन्तु वेदमूलकतयैवेति। तदेव शाक्यादिग्रन्थानामविगीतवैदिक-शिष्टपरिग्रहाभावाद्वेदविद्वेपिजनपरिग्रहाच्च न वेदमूलकतया प्रामाण्यम् ॥

इतोऽपि तेपामप्रामाण्यमित्याह—हेतुदर्शनाच्च। असद्धेतुदर्शनाच्चेत्यर्थ.। शाक्यादिभिर्हि स्वप्रतिपाद्यानि सर्वाणि हेतुभिरेव प्रायेणोपन्यस्यन्ते—

"अष्टका पितृदैवत्या इत्ययं प्रसृतो जनः।
अन्नस्योपद्रव पश्य मृतो हि किमशिष्यति ॥
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति।
दद्यात्प्रवसत. श्राद्धं न तत्पथ्यशनं भवेत् ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते।
स्वपिता यजमानेन किं नु तेन न हन्यते ॥
जीवस्यावरणं देहो देहस्यावरण कुतः।
यदि तस्यापि कार्यं स्यात्तस्यापि ह्यनवस्थिति' ॥
मलभाण्डं शुचि भवेद्वहि' क्षालनत. कथम्।
गव्यं पयश्चेत्पीयेत मांसैः किमपराध्यते" ॥ इत्यादिना।

न च मन्वादय. स्वप्रतिपाद्ये सर्वत्र हेतूनुपन्यस्यन्ति। न चैवं हेतुमूलकतयैव शाक्यादिग्रन्थाना प्रामाण्य किं न स्यादिति वाच्यम्। तदीयहेतूनाम-सद्धेतुत्वेनासाधकत्वात्। अतोऽपि शाक्यादिग्रन्थानामप्रामाण्यमिति स्थितम् ॥

इति तृतीय विरोधाधिकरणम् ॥ ३ ॥

४

प्रत्यक्षश्रुतिविरोधे स्मृतीना स्वरूपेणैवाप्रामाण्य भाष्यकारमते, वार्तिककारमते त्वननुष्ठानलक्षणमप्रामाण्यमिति स्थितम्। सम्प्रति स विरोध. क्वास्ति नास्तीति विचार्यते। इद स्मरन्ति—क्षुतजृम्भणादिनिमित्ते 'आचान्तेन कर्म कर्तव्यम्' इति। तथा च कर्ममध्येऽपि निमित्ते सत्याचमन प्राप्यते। तथा 'यज्ञोपवीतिना कर्तव्यम्'

1, निबन्धेषु ग

दर्शयाञ्चकार। तेषां ह्येकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरद्-ननूक्तमेव" इति। अन्ववोचथाः—अधीतवानसि। अननूक्तम्—अनधीतम्। स्पष्टमन्यत्। तथा च मन्वाद्यदृष्टवेदमूलकत्वसम्भवादेषामस्ति प्रामाण्यम्। यद्यपि वेदा अप्रमाण-मित्यभ्युपगच्छद्भिः शाक्यादिभिस्तद्ग्रन्थानां वेदमूलकतया प्रामाण्यानङ्गीकाराते कथं वेदमूलकत्वमाशङ्केरन् तन्निराकरणाय वा किमर्थमधिकरणप्रवृत्तिः, तथापि न शाक्या-दीनामियं शङ्का। किन्तु वैदिकानामेव मध्ये केषाञ्चिन्मन्दानामष्टकादिस्मृतिवत्तेषामपि वेदमूलकतया प्रामाण्यशङ्कया तत्परिग्रहः प्रसज्येतेति तामिमां शङ्कां मन्दविषन्यायेन निराकरोति—**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्।**

प्रमाणमित्यनुवर्तते। तुशब्दः शङ्काव्यावृत्तौ। शाक्यादिग्रन्थानां वैदिकशिष्ट-परिगृहीतप्रत्यक्षश्रुतिविरोधे सति मूलान्तरानपेक्ष श्रुतिवाक्यजातमेव प्रमाण न तु तद्विरुद्धशाक्यादिग्रन्थजातम्, पौरुषेयत्वात्। न च श्रुतिमूलकतया प्रामाण्यम्, मूलश्रुतौ प्रमाणाभावात्। ननु स्मृत्यैव श्रुतिरनुमीयताम्, तत्राह—असति ह्यनुमानमिति। असति हि प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमानमुदेतुमुत्सहेत। अय भावः—वेदेषु दृढ-विस्रब्धमन्वादिस्मृतीना तथाविधवैदिकदृढपरिग्रहान्यथानुपपत्त्या मूलश्रुतिकल्पकत्व युज्यते। शाक्यादिग्रन्थेषु त्विद विपरीतम्, वैदिकपरिग्रहाभावात् वेदविद्वेषिपरि-ग्रहाच्च। न च वैदिकपरिग्रहाभावेऽपि अहिंसादिकतिपयवैदिकार्थगन्धवासितत्वेन हेतुना मूलश्रुत्यनुमान स्यादिति वाच्यम्। वेदविद्वेषिजनपरिग्रहेण वेदमूलकत्वव्यति-रेकस्य निश्चिततया हेत्वन्तरेणापि मूलश्रुत्यनुमानाप्रवृत्ते. साङ्ख्ययोगादिशास्त्रेषु वैदिक-परिग्रहो यदंशेऽस्त्युपासनादिविषये तदंशे प्रामाण्यमिष्टमेव। यदंशे तु प्रपञ्चसत्यत्व-मिथ्यात्वद्वैताद्वैतादिविषये[1] विहितस्य [2]हिंसादोषास्तित्वादिविचारविषये च प्रत्यक्ष-श्रुतिविरोधोऽस्ति तदंशेऽप्रामाण्यमेव। पाञ्चरात्राद्यागमानान्तु वैदिकविरुद्धवामागम-प्रचुरत्वात्सर्वथैवाप्रामाण्यम्[3]। "भरद्वाजो ह त्रिभि" इत्यादि सावित्रार्थवाद। तत्रा-नन्तपदमेकविंशतिर्बाह्वृच्यमित्यादिशाखापरिमाणस्यातिविस्तृतत्वपरमित्यदोषः। अत एव श्वेतकेतु प्रकृत्य "सर्वान्वेदानधीत्य" इति छान्दोग्यश्रुति. सङ्गच्छते। यदपि

---

1 विचारविषये क, ग, मु. पा 2 हिंसादोषास्तित्वनास्तित्वादि, क, ग, मु पा.
3. न प्रामाण्यम्, ग.

शाक्यादिनिबन्धनेषु[1] पाञ्चरात्राद्यागमेषु च क्वचित्क्वचिद्वेदबोधितमेवाहिंसादिक-मुपासनादिकञ्चोपनिबद्धं तदागमप्रचारसिद्ध्यर्थमेवोपनिबद्धमिति तदनुष्ठान वैदिकाना न तन्मूलकतया, किन्तु वेदमूलकतयैवेति । तदेव शाक्यादिग्रन्थानामविगीतवैदिक-शिष्टपरिग्रहाभावाद्वेदविद्वेषिजनपरिग्रहाच्च न वेदमूलकतया प्रामाण्यम् ॥

इतोऽपि तेषामप्रामाण्यमित्याह—हेतुदर्शनाच्च । असद्धेतुदर्शनाच्चेत्यर्थ । शाक्यादिभिर्हि स्वप्रतिपाद्यानि सर्वाणि हेतुभिरेव प्रायेणोपन्यस्यन्ते—

"अष्टका पितृदैवत्या इत्ययं प्रसृतो जन ।
अग्नस्योपद्रव पश्य मृतो हि किमशिष्यति ॥
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात्प्रवसत. श्राद्धं न तत्पथ्यशनं भवेत् ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किं नु तेन न हन्यते ॥
जीवस्यावरणं देहो देहस्यावरण कुतः ।
यदि तस्यापि कार्यं स्यात्तस्यापि ह्यनवस्थिति ॥
मलभाण्डं शुचि भवेद्वहि क्षालनत' कथम् ।
गव्यं पयश्चेत्पीयेत मांसैः किमपराध्यते" ॥ इत्यादिना ।

न च मन्वादयः स्वप्रतिपाद्ये सर्वत्र हेतूनुपन्यस्यन्ति । न चैवं हेतुमूलकतयैव शाक्यादिग्रन्थाना प्रामाण्यं किं न स्यादिति वाच्यम् । तदीयहेतूनाम-सद्धेतुत्वेनासाधकत्वात् । अतोऽपि शाक्यादिग्रन्थानामप्रामाण्यमिति स्थितम् ॥

इति तृतीय विरोधाधिकरणम् ॥ ३ ॥

४

प्रत्यक्षश्रुतिविरोधे स्मृतीना स्वरूपेणैवाप्रामाण्य भाष्यकारमते, वार्तिककारमते त्वननुष्ठानलक्षणमप्रामाण्यमिति स्थितम् । सम्प्रति स विरोध क्वास्ति नास्तीति विचार्यते । इव स्मरन्ति—क्षुतजृम्भणादिनिमित्ते 'आचान्तेन कर्म कर्तव्यम्' इति । तथा च कर्ममध्येऽपि निमित्ते सत्याचमन प्राप्यते । तथा 'यज्ञोपवीतिना कर्तव्यम्'

1, निबन्धेषु. ग.

सिद्धम्। परिमाणस्यापि प्रयोगविधिलभ्यत्वात्सकलपदार्थप्राप्त्यपेक्षत्वमविवादम्। न चैवं स्मार्तानामपि पदार्थानामनुष्ठाने पूर्वोह्लाद्यतिक्रमापत्तिः, तदनतिक्रमस्यापि कथञ्चित्सम्पाद्यत्वात्। अन्यथा भिन्नस्कन्नहोमादौ का गति.। ततश्च क्रमकालपरिमाणानां श्रौतस्मार्तसकलपदार्थप्रवृत्त्युत्तरकालप्रवृत्तिकत्वात्कथ तैर्विरोधः? अविरोधाच्च कर्ममध्ये क्षुतादिनिमित्ते आचमनादिस्मरण प्रमाणम्॥

इति चतुर्थे शिष्टाकोपाधिकरणे प्रथम वर्णकम्॥

अत्र क्रमादे. पदार्थगुणस्य पदार्थापेक्षया दुर्बलतया प्रबलै. पदार्थैर्दुर्बलक्रमादिबाधेन शाखान्तरोपसंहारस्य शाखान्तराधिकरणे व्यवस्थापयिष्यमाणत्वात्तेनैव गतार्थमिदमित्यस्वरसाद्विरोधमभ्युपगम्य प्रकारान्तरेण सशयमुद्भाव्याधिकरणमिदमुत्प्रेक्षितमाकरे। तद्यथा—श्रौतानि क्रमकालपरिमाणानि प्रबलप्रमाणगम्यतया स्मार्ताचमनाद्यर्थापेक्षया प्रबलानि, स्वरूपेण तु दुर्बलानि पदार्थान्प्रति [1]गुणभूतत्वात्। स्मार्तास्त्वाचमनादिपदार्था दुर्बलप्रमाणगम्यतया श्रौतक्रमाद्यपेक्षया दुर्बलत्वेऽपि पदार्थत्वात्स्वरूपेण प्रबला.। तदेव प्रमाणप्रमेयबलाबलविसवादे किं प्रमाणबलं ज्याय उत प्रमेयबलमिति सशयः। तत्र सिद्धान्तमुपक्षिप्य पूर्वपक्षी प्रत्यवतिष्ठते—

शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात्।

प्रमेयबलस्य ज्यायस्त्वाद्दुर्बलप्रमाणगम्यस्याप्याचमनादिपदार्थस्य स्वरूपतो बलवत्तरस्य श्रौतैरपि क्रमादिभिर्विरोधो[2] न युज्यते। ततश्च शिष्टे श्रुतिविहितै क्रमादिभि. पदार्थगुणै स्मार्ताचमनादिपदार्थस्य अकोपे-अबाधे सति तत्स्मरण श्रतिप्रमाणेन अविरुद्ध प्रतीयते। बलवतैव हि विरोध. श्रुतिप्रमाणञ्चात्र दुर्बलमिति सिद्धान्ती [3]मन्यसे चेत्, तन्न, कुत? शास्त्रपरिमाणत्वात्, क्रमादीना श्रुतिसिद्धत्वात्, श्रुतेश्च प्रबलप्रमाणत्वात्, प्रमेयबलापेक्षया च प्रमाणबलस्य ज्यायस्त्वात्। स्वरूपतो दुर्बलैरपि प्रबलतरप्रमाणश्रुतिगम्यै क्रमादिभिराचमनादि बाध्यत इति न तत्स्मरण प्रमाणम्। तथा हि—प्रमेयबलात्प्रमाणबल ज्याय., प्रमेयावगमस्य प्रमाणाधीनत्वात्। न चैवमपि प्रमेयबलापेक्षया प्रमाणबलस्य उपस्थित्यलाभात्कथ तस्य ज्यायस्त्वमिति वाच्यम्। श्रुतिस्मृति-

---

1. गुणत्वात् ग. 2. बाधो क, ग, मु पा 3 मन्यते घ

लक्षणं हि प्रमाणं न चक्षुरादिवदनवगतमपि प्रमेयावगतिहेतु:, किन्त्ववगतमेव। ततश्च प्रमेयावगमात्पूर्वमेव श्रुतिलक्षणप्रमाणावगमावश्यम्भावेन तदवगमदशायामेव तद्गतबलाबलावगमात् श्रुतिस्मृतिप्रमाणबलावल प्रमेयबलावगमात्पूर्वमेवावगम्यते। ततश्चासञ्जातविरोधिप्रथमोपस्थितिकेन श्रुतिबलेन स्मृत्यबलेन च क्रमादिप्राबल्ये आचमनादिदौर्बल्ये च निर्णीते सत्याकाङ्क्षाशान्ते:, पश्चात्स्मार्तप्रमेयबलस्यानादर: फलति। तस्मादाचमनादिस्मरणमप्रमाणमिति पूर्व: पक्ष.। सिद्धान्तयति—

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।

अपि वेति पूर्वपक्षव्यावृत्तौ। स्मार्तप्रमेयाचमनादिबाधे कारणस्य प्रमाणबलस्य स्मार्तप्रमेयाचमनाद्यवगमात्पूर्वम् अग्रहणे अनवगमे सति तस्य ज्यायस्त्वाभावात् कर्ममध्ये स्मर्तृभि: प्रयुक्तानि आचमनादीनि आदरणीयतया प्रतीयेरन्। तथा हि—श्रुतिस्मृतिप्रमाणयोर्न स्वरूपेणाहिनकुलवद्विरोध, किन्तु विरुद्धप्रमेयप्रमापकतयैव। ततश्च प्रथमं प्रमाणस्वरूपालोचनेऽपि प्रमेयस्वरूपालोचन विना विरोधस्याप्रतीते प्रमेयस्वरूपालोचनानन्तरमेव विरोधप्रतिसन्धानं वाच्यम्। तत्र प्रमेयस्वरूपावगमवेलायां तद्गतबलस्यावगततया तेनासञ्जातविरोधिप्रथमोपस्थितिकतया अधिकेन स्मृतिप्रमेयबलेन आचमनादीनां श्रौतक्रमादिभिरबाध्यत्वे प्रत्युत तद्बाधकत्वे तत्स्मरणस्य च प्रामाण्ये निश्चिते सति तत एवाकाङ्क्षाशान्तेस्तदुत्तरमवगम्यमानमपि प्रमाणबलमकिञ्चित्करमेव भवति। न चैवमाचमनादिभि क्रमादिबाधे श्रुतेरत्यन्तबाधापत्तिरिति वाच्यम्। तस्याचमनादिनिमित्तोपनिपाताभावे सावकाशत्वात्। तस्मात्सत्यपि विरोधे बलवद्विरोधाभावाद्युक्तमाचमनादिस्मृतीनां प्रामाण्यम्॥

इति चतुर्थे शिष्टाकोपाधिकरणे द्वितीय वर्णकम्॥

## वार्तिककारमतम्

तदिदमप्यनुपपन्नम्, क्रमादीनामाचमनादीनाञ्च विरोधाभावस्य स्फुटमनुपदमुपपादितत्वेनाभ्युपगम्य विरोध पूर्वपक्षप्रवर्तनायोगात्। एवमन्यान्यपि दूषणानि भाष्योत्प्रेक्षिते शिष्टाकोपाधिकरणद्वयेऽस्मिन्नुद्भाव्य वार्तिककार. सूत्रद्वयमन्यथा व्याचष्ट। तत्राद्य सूत्र पूर्वाधिकरणचोद्यनिराकरणपरगुणसूत्रतया व्याचख्यौ। 'अपि वा

धृतराष्ट्रस्यान्धस्य याग , युधिष्ठिरस्यार्जुनभार्यापरिणय., तस्यैवाचार्यविप्रद्रोणवधार्थमनृतभाषणम्, अर्जुनस्य मातुलदुहितृसुभद्रापरिणय , व्यासस्य गृहीतब्रह्मचर्यस्य भातृभार्ययोरम्बिकाम्बालिकयोर्विधवयोर्धृतराष्ट्रपाण्डूत्पादनम् , तस्यैव दास्या विदुरोत्पादनम् , इदानीन्तनानामप्याहिच्छत्रमथुरानिवासिब्राह्मणाना सुरापानम् , उदीच्याना केसर्यश्वतरखरोष्ट्रोभयतोदत्क्रयविक्रयभार्यानुपनीतसहभोजनम् , दाक्षिणात्याना मातुलदुहितृपरिणयः आसन्दीस्थभोजनादीनि च । एव [1]प्रतिपुरुषजातिकुलावस्थितान्यधर्माचरणान्यनन्तानि । [2]ततश्च श्रुतिस्मृतिविरुद्धान्याचरता वसन्तोत्सवाद्याचारविषये कथं प्रामाण्यम् । किञ्च सदाचारानुष्ठातार' शिष्टा. शिष्टानुष्ठिताश्च सदाचारा इत्यन्योन्याश्रयात्सदाचारस्वरूपमेव दुर्निरूपम् । तस्मान्न सदाचाराणां धर्मप्रामाण्यमिति प्राप्ते सिद्धान्तयति—

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।

अपि वेति पूर्वपक्षव्यावृत्तौ । आचारप्रामाण्यविरोधकारणस्योक्तदोषसमूहस्य अग्रहणे निमित्तसप्तम्येषा, अग्रहणाद्धेतोः शिष्टै. प्रयुक्तानि वसन्तोत्सवाद्याचरणानि प्रमाणतया प्रतीयेरन् , पूर्वपक्षोक्तदोषाभावात् । आचारस्य प्रामाण्यमविरुद्धमिति यावत् । तथा हि—यदुक्त मन्वादिभिर्विशिष्यानिबद्धा' सदाचारा इति तन्न, मन्वादिभिर्हि लाघविकैर्मूलश्रुतीर्विशिष्य दृष्ट्वैव 'सदाचार. प्रमाणम्' इति सामान्यतो निबद्धम् । न चैतावता कश्चिद्विरोध । यदपि सामान्यनिबन्धन प्रत्यक्षश्रुतिसवाद्याचारविषय भविष्यतीति, तदपि न, तथा सति श्रुत्यैव तदवगमसम्भवेन निबन्धनवैयर्थ्यात् , 'वेदोऽखिलो धर्ममूल स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनाम्' इति पृथगुपादानवैयर्थ्यात् , चकारवैयर्थ्याच्च । यत्तु प्रजापत्यादेर्विरुद्धाचरणमुपन्यस्त तत् 'प्रजाना पतिरादित्य. उषस प्रात सन्ध्याम् [3]आदित्यादुद्भूतत्वेन स्वा दुहितरम् उद्यन्नभ्यैत्[4]' इत्येवमर्थान्तरपरतया, अमनुष्यत्वेन शास्त्रीयविधिनिषेधाविषयत्वाद्वा[5] तेजोविशेषाद्वा तेषा न दोषावहम् , इतरेषा तु दोषावहमेवेति नातिप्रसङ्ग । उक्तञ्च भट्टपादै —

---

1. प्रतिपुरुपजातिकालावस्थितानि ख, ग, मु पा 2 तथा च ख, ग 3. आदित्योद्भूतत्वेन क, घ, ग, मु पा 4. अभ्येति. ख, क, ग, मु पा. 5. विषयत्वाभावाद्वा. ग.

'श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥
यथा वा न विरुद्धत्वं तथैतद्गमयिष्यते' ॥ इति ।

प्रजापतीन्द्रनहुषाद्याचरणेषूदाहृतेषु विशिष्य दोषोद्धारस्तु वार्तिकादावेवानुसन्धेयः । प्रत्यक्षवेदादिविहितानुष्ठातृत्वेन च शिष्टत्वस्यान्यतः सिद्धेर्नान्योन्याश्रयः । अतः सदाचारोऽपि धर्मे प्रमाणम् ॥

इति वार्तिककारीयं द्वितीय वर्णकम् ॥ ४ ॥

५

इदमामनन्ति "यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते" "वैतसे कटे प्राजापत्यान्सञ्चिनोति" इति । तत्र यववराहवेतसशब्दान् केचित्प्रियङ्गुवायसजम्बूषु प्रयुञ्जते । अन्ये तु दीर्घशूकसूकरवञ्जुलेषु प्रयुञ्जते । तत्र किमुभयत्र यवादिशब्दा मुख्याः अतश्च विकल्पः ? उत दीर्घशूकादिष्वेव मुख्या अन्यत्र गौणाः, अतश्च दीर्घशूकादय एव ग्राह्याः ? इति संशये, पूर्वपक्षयति—

[1]तेष्वदर्शनाद्विरोधस्य विप्रतिपत्तिः स्यात् ॥ ७ ॥

तेषु शब्दार्थेषु प्रियङ्ग्वादिषु दीर्घशूकादिषु च विप्रतिपत्तिः—विविधा शब्दस्य प्रतिपत्तिः समा स्यात् । यवादिशब्दानामुभयत्राभिधायकता मुख्येति यावत् । कुतः ? विरोधस्य उभयत्रापि अदर्शनात्, ततश्च प्रयोगद्वयस्यापि तुल्यबलत्वात् उभयेषामपि शब्दार्थत्वाध्यवसायाद्विकल्पेन[2] ग्रहणम् ॥

इति प्राप्ते, सिद्धान्तयति—

शास्त्रस्था वा तन्निमित्तत्वात् ॥ ८ ॥

वाशब्द एवार्थः पूर्वपक्षव्यावृत्तौ । शास्त्रस्था—शास्त्रानुसारिण्येव विप्रतिपत्तिः विशिष्टा प्रतिपत्तिः दीर्घशूकाद्यभिधायकता बलीयसी । कुतः ? तन्निमित्तत्वात्—शास्त्रस्य तन्निश्चायकत्वात् । यवान्हि प्रकृत्य वाक्यशेषः श्रूयते "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इति । अतो दीर्घशूका यवा निश्चीयन्ते, अन्यौषधिम्लानिकाले[3] वसन्ते दीर्घशूकानामेव मोदमानत्वात् प्रियङ्गूणाञ्च शारदानां वसन्ते

1. तेष्वदर्शनाद्विरोधस्येत्ययमंशः पूर्वसूत्रशेष इति केचित्
2. विकल्पः ग, घ.　　3. म्लानकाले. ग.

मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्' इति शातातपादिस्मृतिनिषिद्धमातुलसुतापरिणयाद्याचाराः प्रमाणमप्रमाणं वेति संशयः । तदर्थञ्च स्मृत्याचाराणां विरोधे तुल्यबलत्वम्, उत स्मृतय एव बलीयस्य इति चिन्त्यते । तत्र पूर्वपक्षयति—

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ।

तेषु-स्मृत्याचारेषु विप्रतिपत्ति'-विशिष्टा अधिका प्रतिपत्तिः महत्त्वबुद्धिः । बलवत्तेति यावत् । सा समा स्यात् । कुतः ? विरोधस्यादर्शनात् । न ह्याचारात्स्मृतीरनुमाय ताभिः श्रुतिरनुमीयते, येन तेषां द्व्यन्तरितप्रामाण्यकतया साक्षाच्छ्रुत्यनुमापिकाभ्य एकान्तरितप्रामाण्यकाभ्यः स्मृतिभ्यो बलवत्ता विरुध्यते । नैवमस्ति, प्रमाणाभावात् । धर्मबुद्ध्या शिष्टपरिग्रहस्य श्रुतिकल्पकताबीजस्य स्मृतिष्वाचारेषु चाविशिष्टत्वादिति प्राप्ते, सिद्धान्तयति—

## शास्त्रस्था वा तन्निमित्तत्वात् ।

वाशब्दः पूर्वपक्षव्यावृत्तौ । मन्वादिधर्मशास्त्रगतैव बलवत्ता, न त्वाचारगता । कुतः ? तन्निमित्तत्वात्-आचाराणा वेदमूलकत्वस्य स्मृतिकल्पनद्वारकत्वात् । तथा हि—आचारास्तावन्न नित्यानुमेयश्रुतिकल्पकाः, अन्धपरम्पराप्रसङ्गात् । किन्तु स्मृतिवदेव कस्यचित्प्रत्यक्षाः श्रुतीः कल्पयन्ति । न चेदानीन्तनानामाचरितॄणा प्रत्यक्षस्वस्वशाखागतवाक्यान्यप्युपसंहर्तुमर्थतश्च प्रतिपत्तुमसमर्थाना तद्विषयेऽपि स्मृतिकल्पसूत्राण्यपेक्षमाणानामितस्ततो विप्रकीर्णपरःसहस्रशाखागततदुपसंहारदुर्बोधानन्तश्रुतिवाक्येषु प्रत्यक्षस्य तदर्थानुभवस्य वा सम्भावनाप्यस्ति । अतोऽर्वाचीनाचारेभ्यः साक्षान्न श्रुतिकल्पनम् बाधितत्वात् । किन्तु महर्षिभिरेव तादृशश्रुतिवाक्यान्युपलभ्य स्मृत्वा शिष्याणामुपदिष्टम् । तैरन्येषामाचाराः प्रवर्तिताः । तान्दृष्ट्वान्येऽप्याचरन्तीत्येवं परम्परया इदानीन्तनपर्यन्तमाचाराः प्रवृत्ता इत्यास्थेयम् । ततश्चाचाराणा स्मृतिकल्पनामुखेनैव श्रुतिकल्पकत्वेन द्व्यन्तरितप्रामाण्यकतया स्मृतिभ्यो दुर्बलत्वम् ।

किञ्च-आचारेषु कर्मस्वरूपमात्रमवगतम् । कर्तव्यता तु विमर्शपूर्वक लोभादिकारणान्तरसम्भावनाविरहकृतेन[1] धर्मतया शिष्टपरिग्रहेण कल्पयितव्या । ताश्च

1 विरहितेन, ग.

कल्पयित्वा पश्चान्मूलकल्पनमिति विप्रकर्षः । सनिबन्धनासु[1] स्मृतिषु तु झटिति ग्रन्थत एव कर्तव्यतावगम्यते । मूलमात्रन्तु कल्पनीयमिति संनिकर्षाद्बलवत्ता । किञ्च, कामादिहेत्वन्तरसम्भवान्न मातुलसुतापरिणयनाद्याचाराणां श्रुतिकल्पकत्वसम्भावना-कथापि । 'मातुलस्य सुतामूढ्वा' इत्यादिस्मृतिविरोधादपि न तेषां श्रुतिकल्पकता । न च भाष्यकारीयविरोधाधिकरणभङ्गावसरे श्रुतिविरुद्धानामपि स्मृतीना प्रामाण्य व्यवस्थापितं वार्तिके, तद्वत्स्मृतिविरुद्धानामप्याचाराणा प्रामाण्यं किं न स्यादिति वाच्यम् । तत्र विकल्पेनोभयानुष्ठानसम्भवात्प्रामाण्यम्, इह तु वस्तुनि विकल्पासम्भ-वान्न प्रामाण्यमिति वैषम्यात् । मातुलसुताद्याचाराणा हि श्रुतिविहितत्वेन प्रत्यवाय-करत्वाभावो वक्तव्यः । निषेधबलाच्चावश्यं प्रत्यवायकरत्व वक्तव्यम् । न चैतदुभय-मेकत्र सम्भवति, विरोधात् । तत ईदृशस्थले विधिप्रतिषेधाभ्यां विकल्पो नाभ्युप-गन्तु युक्त । क्रत्वर्थषोडशिग्रहणाग्रहणविषये तु निषेधेन ग्रहणस्य क्रतूपकारकत्वाभावो न बोध्यते, किन्तु ग्रहणाभावस्य क्रतूपकारकतामात्रं बोध्यते । ततश्च तत्र विधिनिषेधा-भ्यामेकस्यैव वस्तुनो[2] विरुद्धस्वरूपद्वयानापादनात्सम्भवति विकल्पः । एव स्पर्शन-सर्ववेष्टनादिष्वपि श्रुतिस्मृतिविरुद्धेषु क्रत्वर्थेषु विकल्प सम्भवतीति वैषम्यम् । अत. स्मृतिविरुद्धाचाराणामक्रत्वर्थाना न प्रामाण्यम् ।

## इति वार्तिककारीय स्मृत्याचारविरोधाधिकरणम् ॥

इतोऽपि विषयान्तरे सूत्रद्वयमिदं योजितं वार्तिके[3] । यथा—यत्र त्रिवृदादि-शब्देषु लोकवेदयो' शब्दार्थविप्रतिपत्तिः तद्विषयमिद सूत्रद्वयम् । त्रिवृच्छब्दो हि लोके त्रिभिर्वर्तत इति व्युत्पत्त्या 'त्रिवृद्रज्जु' 'त्रिवृद्ग्रन्थिः' इत्यादौ त्रैगुण्यवाचितया प्रसिद्धः । वेदे तु कच्चिच्छाखायाम् "त्रिवृद्बहिष्पवमानम्" इत्युक्त्वा "उपास्मै गायता-नर:" इति नवर्चानुक्रमणात् "नवभिः स्तुवन्ति" इति शाखान्तरे श्रवणाच्च स्तोत्रीया-नवकपरता प्रतीयते । चरुशब्दस्तु लोके स्थाल्या प्रयुज्यते 'चरुमग्नावधिश्रित्य तण्डु-लानावपति' 'चरुर्भिन्न ' इत्यादौ । वेदे तु "आदित्य पयसि चरुः प्रायणीय." इति विधाय "आज्यस्यैन चरुमभिपूर्य चतुर आज्यभागान्यजति । पथ्यां स्वस्ति पुरस्ता-दग्निं दक्षिणत सोम पश्चात्सवितारमुत्तरतो मध्येऽदितिमोदनेन" इति क्रमदेशादि-विधिपरे वाक्ये सिद्धवदोदनानुवादादोदनपरता विज्ञायते । आज्यस्येति करणस्य

1 च स्मृतिषु. ग 2 विरुद्धस्वभाव. क, ग, घ, मु पा. 3. वार्तिककारेण. ग.

६

आर्यम्लेच्छप्रसिद्ध्योर्विरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमिति स्थितम्। इदानीमविरोधे सति म्लेच्छप्रसिद्धेः प्रामाण्यसम्भवोऽस्ति न वेति विचार्यते। "पिकमालभते" "प्र नेमस्मिन्दृदृशे" "सते हिरण्य निधाय" इत्यादौ[1] पिकादिशब्दाः श्रूयन्ते। तांश्चार्याः क्वापि न प्रयुञ्जते। म्लेच्छास्तु कोकिले, अर्धे, शतच्छिद्रदारुमये पात्रे, इत्यादौ प्रयुञ्जते। तत्र म्लेच्छानां शब्दार्थनिर्णयेऽभिनिवेशाभावात्तत्प्रसिद्धिरप्रमाणम्। न हि यथा शिष्टा धर्मलिप्सवः अधर्मभीरवः[2] श्रुत्यर्थतत्त्वं विविच्य पालयन्तस्तत्राभिनिविशन्ते, तथा म्लेच्छा दृष्टार्थव्यवहारस्य यथाकथञ्चित्सम्भवे सति प्रयोजनाभावात्तत्राभिनिविशन्ते। ततश्च विप्लवसम्भवान्न म्लेच्छप्रसिध्या शब्दार्थतत्त्वनिर्णय। ततश्च निरुक्तव्याकरणादितो धातुप्रत्ययादिकल्पनया अर्थो निर्णेयः।

इति प्राप्ते, सिद्धान्तयति—

## चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन ॥ ९ ॥

तु शब्दः पूर्वपक्षव्यावृत्तौ। अपिशब्दोऽध्याहर्तव्यः। म्लेच्छप्रसिद्ध्या पिकादिशब्दवाच्यतया चोदितम्—अवगतमपि कोकिलादिकं प्रमाणेन श्रुत्यादिना अविरोधात् आर्यैरपि प्रतीयेत—आद्रियेत। पिकादिपदानि हि वेदेषु तदङ्गेषु च स्थितानि नित्यानि। तेषाञ्च केनचिदर्थेन नित्येन भवितव्यम्। न च निरुक्तव्याकरणादितः प्रकृतिप्रत्ययादिकल्पनया तल्लाभ सम्भवति, प्रकृतिप्रत्ययादिकल्पनाया बहुप्रकारत्वसम्भवेन ततो नियतस्य कस्यचिदर्थस्यालाभात्। "सृण्येव जर्भरी" इत्यादौ त्वगत्या तदनुसरणम्[3]। अस्ति चात्र गतिर्म्लेच्छप्रसिद्धि। [4]अतस्तयैवार्थनिर्णय। तत्सिद्धमविरोधे म्लेच्छप्रसिद्धेरप्यस्ति प्रामाण्यम्॥

इति षष्ठ पिकनेमाधिकरणम् ॥ ६ ॥

७

कल्पसूत्राणा तावद्वेदमूलकतया प्रामाण्यं स्मृत्यधिकरणे तुल्यन्यायतयावगतम्[5]। तदाक्षिप्य समाधातुमिदमारभ्यते। कल्पसूत्राणि किं स्वतन्त्रतया प्रमाणम्? उत पर-

1. इत्यादौ नास्ति ग. 2. भीरवश्च ग, घ.
3. तदाश्रयणम्. ग 4. अतस्तयैव. ग. 5. स्थितम्. ग. घ.

तन्त्रतया ? इति संशयः। तदर्थं चेदं चिन्त्यते किमिमानि पौरुषेयाणि ? उत अपौरुषेयाणि ? इति। अपौरुषेयाणीति ब्रूमः। कल्पसूत्रतो हि जायमाना धर्मावगतिः स्वत एव प्रमाणतया ज्ञायते। पौरुषेयत्वे च पुरुषदोषात्प्रामाण्यापत्तेर्ज्ञात प्रामाण्यं व्याहन्येत। तस्मादपौरुषेयत्व कल्पसूत्राणाम्। एवञ्च शाक्यादिग्रन्थानामप्यपौरुषेयत्व साधितं भवति। किञ्च कल्पसूत्राणां वैदिकपरिग्रहाद्धर्मप्रामाण्यमविवादम्। तदेषामेवापौरुषेयतया नित्यत्वं कल्पनीयम्। न तु मूलभूत वाक्यान्तर कल्पयित्वा तस्यापौरुषेयतया नित्यत्व कल्पयितुमुचितम्, गौरवात्। एतेन मन्वादिस्मृतीनामप्यपौरुषेयत्वमुपक्षिप्त भवति। किञ्च 'मन्त्रब्राह्मणयोर्वेदनामधेय षडङ्गमेके' इति स्मरणात्कल्पसूत्राणामपौरुषेयत्वं स्पष्टमेवावगतम्। एतेन शिक्षाव्याकरणादीनामप्यपौरुषेयत्वमुपक्षिप्त भवति। किञ्च यानि वाक्यानीदानीं वेदेष्वध्यापकपरम्परया प्रत्यक्षाणि पठ्यमानानि "प्राचीनवंशं करोति" इत्यादीनि तान्येव बहुल कल्पसूत्रेषूपलभ्यन्ते। न हीदं पौरुषेयत्वे घटते, प्रत्यक्षवेदवाक्यनिबन्धनवैयर्थ्यात्। अत शाखान्तरवदपौरुषेयत्वमेषां युक्तम्। न चैवं सति 'बोधायनीयम्' 'आपस्तम्बीयम्' इत्यादिसमाख्याविरोध शङ्कनीयः। 'शाकलम्' 'बाष्कलम्' 'तैत्तिरीयम्' इति वदुपपत्तेः। "यदृचोऽधीते" इत्युपक्रम्य "पुराणानि कल्पान्" इति कल्पानामप्यध्ययनविधिदर्शनाच्चापौरुषेयत्वम्। अन्यथा पौरुषेयतया अनित्यत्वे नित्यविधिविषयत्वं न घटेत। एतेन इतिहासादीनामप्यपौरुषेयत्वमुपक्षिप्तं [1]भवति। तथा चापौरुषेयत्वेन नित्यत्वादेषां स्वतन्त्रतया प्रामाण्यम् इति पूर्वपक्षमुपक्षिप्य [2]निराकरोति—

[3]प्रयोगशा मिति चेन्नासन्नियमात् ॥ १० ॥

प्रयोगस्य क्रत्वनुष्ठानस्य बोधक शास्त्र प्रयोगशास्त्र बोधायनापस्तम्बादिकल्पसूत्रजाळ स्वतन्त्रतया प्रमाणमस्त्विति चेत्—तन्न, कुत. ? असन्नियमात्—पूर्वमसद्भिः अविद्यमानैः जनिमद्भिः बोधायनादिभिः नियमात् निबन्धनात्। पौरुषेयत्वादित्यर्थ.। 'बोधायनीयम्' 'आपस्तम्बीयम्' इत्यादिसमाख्याबलात्पौरुषेयाण्येव कल्पसूत्राणि। 'इति बोधायनकृते, इत्यापस्तम्बकृते, इति भारद्वाजकृते, इत्याश्वलायनकृते, सूत्रे प्रथमोऽध्याय., प्रथम पटल.' इत्येवं तेष्वेव ग्रन्थेषु कर्तृनिबन्धनेन तन्मूलकर्तृस्मृतिपरम्पराया भ्रान्तिमूलकत्वस्य सम्भावयितुमशक्यत्वात्। ततश्च दृढकर्तृस्मरणात्स-

1 साधित. ग 2. उत्थाप्य क, घ, ङ, मु. पा. 3. अन्यत्रेद द्विधा विभज्य पठ्यते.

माख्या एता कर्तृनिबन्धना एव, न प्रवचननिबन्धनाः। अतः पौरुषेयत्वादेषां न स्वतन्त्रतया प्रामाण्यम्, किन्तु वेदमूलकतयैव। एतेन मन्वादिस्मृतिशिक्षादीनां शाक्यादिनिबन्धनानामपि स्वतन्त्रतया प्रामाण्यं निरस्तम्। तत्र वैदिकपरिग्रहवशात्स्मृत्यादीनां वेदमूलकतया प्रामाण्य निर्बाधम्। शाक्यादिनिबन्धनानान्तु वेदविद्वेषिजनप्रणीतपरिगृहीतानां वेदमूलकत्वासम्भवादप्रमाण्यमेव परिशिष्यते। यत्तु प्रत्यक्षशाखागतवाक्यनिबन्धनानर्थक्यमुक्तम्, तन्न; श्रुतिलिङ्गादिप्रमाणदुर्बोधानन्तशाखागतवाक्यान्युपसंहृत्य सुबोधकै शब्दैस्तदर्थग्रथनाय[1]तदावश्यकत्वात्। यच्च[2] कल्पाना नित्यब्रह्मयज्ञविधिविषयत्वान्यथानुपपत्त्या पौरुषेयत्वमनुपपन्नमिति, तन्न, "पञ्चावत्त जमदग्नीनाम्" "बबर प्रावाहणिरकामयत" इत्यादिवत्प्रवाहनित्यतया तदुपपत्तेस्तर्कपादे 'परं तु श्रुतिसामान्यमात्रम्' इत्यत्र, अर्थवादाधिकरणे 'अन्त्ययोर्यथोक्तम्' इत्यत्र, मन्त्राधिकरणे 'उक्तश्चानित्यसयोग.' इत्यत्र च [3]प्रपञ्चितत्वात्। यच्च 'षडङ्गमेके' इति वेदत्व कल्पसूत्राणामिति, तन्न, तस्य स्वानभिमतपरमतोपन्यासमात्रत्वात्। न च मतान्तरे वेदत्व स्वमते अवेदत्वञ्च युज्यते, वस्तुद्वैविध्यासम्भवात्[4] अङ्गशब्दविरोधाच्च।

अत्रैव युक्त्यन्तरमाह—

## अवाक्यशेषात्[5] ॥ ११ ॥

वाक्यस्य विधिवाक्यस्य शेषः अर्थवाद तस्य विध्यपेक्षितप्राशस्त्यसमर्पकत्वात्। तस्याभावात् अवाक्यशेषात्। अर्थाभावेऽव्ययीभाव.। 'अपञ्चम्या' इति पर्युदासादम्भावो न। वेदेषु हि वाक्यानि[6] सर्वाण्यर्थवादबहुलान्येव पठ्यन्ते। कल्पसूत्रेषु तु प्रायेण विधिवाक्यान्येव पठ्यन्ते। अर्थवादास्तु 'समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्सन्धी तस्मात्सन्धौ होतव्यम्' इत्यादय क्वचिदेव पठ्यन्ते। अतो वैलक्षण्यान्न वेदत्व कल्पसूत्राणाम्, किन्तु वेदमूलकतयैव प्रामाण्यम्॥

ननु वेदतया वेदमूलकतया वा कल्पसूत्राणा प्रामाण्ये कः फलभेद इत्याशङ्क्य प्रत्यक्षश्रुतिविरोधे अप्रामाण्यमेवैषा वेदमूलकत्वे फलतीत्याह—

---

1 ग्रन्थनाय ग 2. यत्तु. ग, घ 3. साधितत्वात् ग, घ
4. द्वैविध्यप्रसङ्गात्. ग. 5. षाच्च, 6. विधिवाक्यानि क, घ, ग, मु. पा.

## सर्वत्र च [1]प्रयुक्तत्वात्सन्निधानशास्त्राच्च ॥ १२ ॥

नेत्यनुवर्तते। निदानसूत्रे 'सर्वोऽपरपक्षः पूर्णमासस्य कालः सर्वः पूर्वपक्षो दर्शस्य' इति पूर्वपक्षापरपक्षतिथिषु सर्वत्रापि दर्शपूर्णमासयागत्रिकद्वयस्य प्रयुक्तत्वात्—प्रयोगविधानात्, न तदंशे प्रमाणं कल्पसूत्रमिति शेषः। कुतः? सन्निधानशास्त्रात्—सन्निधाने दर्शपूर्णमासविधिसंनिधौ विद्यमानं प्रत्यक्ष श्रुतिवाक्य सन्निधानशास्त्रम्। "अमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्या यजेत" इत्यादिप्रत्यक्षश्रुतिविरोधादिति यावत्। चकारो ह्यर्थो हेतौ—यतो वेदमूलकतयैव कल्पसूत्राणि प्रमाण न स्वतन्त्रतया, तानि च प्रत्यक्षश्रुतिविरोधे अप्रमाणमिति। द्वितीयश्चकारस्तु 'अविशेषादुभौ वा' इत्यादिविषयान्तरसमुच्चयार्थः।

अत्रेद चिन्त्यम्[2]—'सर्वोऽपरपक्षः पूर्णमासस्य सर्वः पूर्वपक्षो दर्शस्य' इति कल्पसूत्रम् "अमावास्यायाममावास्यया यजेत" इत्यादिप्रत्यक्षश्रुतिविरोधादप्रमाणमित्यनुपपन्नम्, पूर्वपक्षापरपक्षयोरपि दर्शपूर्णमासकर्मकालत्वस्य प्रत्यक्षश्रुतिसिद्धत्वात्। एवं ह्युदाहरन्ति श्रुतिवाक्यं बोधायनापस्तम्बसत्याषाढभारद्वाजाः—"अथैकेषा वि वा एतस्य यज्ञश्छिद्यते। यस्य यज्ञे प्रततेऽन्तरेतामिष्टिं निर्वपन्ति। य एवासावाग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमावास्याया तमग्नये पथिकृते कुर्यात्तेनैव पुनः पन्थानमवैति न यज्ञ विच्छिनत्तीति विज्ञायते" इति। अस्यार्थः—"अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्" इत्यादिना दर्शपूर्णमासयोः स्वकालातिक्रमे पाथिकृतीष्टि. प्रायश्चित्तत्वेन विहिता तैत्तिरीयादिशाखासु। तस्यास्तावदतिपन्नेन पूर्णमासेन दर्शेन च समानतन्त्रता शाखान्तरे विहिता। तन्निन्दापूर्वक दार्शपूर्णमासिकाग्नेययागस्यैव पथिकृद्गुणकत्व शाखान्तरे विधीयते "यस्य यज्ञे" इत्यादिना। यस्य यजमानस्य दर्शपूर्णमासयोरन्यतरस्मिन्नतिपन्ने यज्ञे प्रतते[3] कालान्तरे प्रक्रान्ते सति अन्तः मध्ये एता पाथिकृतीमिष्टिं निर्वपन्ति कुर्वन्ति ऋत्विजः; एतस्य यजमानस्य उपक्रान्तो यज्ञो विच्छिद्यते विगुण. स्यात्, अतः योऽयमाग्नेययागः अमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो विहित. तम् अग्नये पथिकृते कुर्यात्। तेन पथिकृत्त्वगुणेन पन्थान कालातिक्रमत. प्रच्युत[4] स्वर्गस्य पन्थानं पुनरवैति प्राप्नोति। न चोपक्रान्त यज्ञं

---

1. प्रयोगात् 2. वक्तव्यम्. ग, घ 3. वितते. ग.
4 स्वर्गपथात्प्रच्युत. ख, ग, घ, मु. मा.

विच्छिनत्ति न विगुणीकरोति इति अन्येषा शाखिना श्रुतिवाक्यं विज्ञायते प्रत्यक्ष ज्ञायत इति। अत्र शाखान्तरे समानतन्त्रतानिन्दा (ध) नहिनिन्दान्यायेन पथिकृत्त्वगुणविधिप्रशसार्थैव, न त्वेतन्निषेधार्था। समानतन्त्रता ह्येषा शाखान्तरे विद्यते वा न वा? न द्वितीय., अप्रसक्तत्वेन तन्निषेधायोगात्। नाद्यः, शाखान्तरे विहितत्वेन नित्यवत्प्रतिषेधानुपपत्ते। पाक्षिकनिषेधे च पक्षान्तरे तत्सत्त्वात्तन्निन्दानुपपत्ते। न हि विहितत्वे निन्दा युज्यते। अत. प्रशंसार्थैव सा। तथा च निन्दया समानतन्त्रतापि शाखान्तरेऽनुमीयते। अतो विकल्प। तदाहुर्बोधायनादयः कल्पकारा. 'समानतन्त्रे वा मुख्य कार्य.' इति। यदि च स्वकालातिक्रमे सति कालान्तरेऽतिपन्नयोर्दर्शपूर्णमासयोरनुष्ठानमेव न स्यात्[1], तर्हीद सर्वमभित्तिचित्रायितमेव स्यात्। अतो बोधायनादिबहुमुनिदृष्टश्रुत्यन्यथानुपपत्त्या कालान्तरेऽपि दर्शपूर्णमासयोः करणमनुमीयते। किञ्च—'अथातोऽनुग्रहान्व्याख्यास्याम.' इत्युपक्रम्य "सायं होम वोपोदय जुहुयात्। प्रातर्होम वोपास्तमय कालेन कालमनतिक्रम्य दर्शपूर्णमासयोरग्निहोत्रस्य च न स्कन्दते न व्यथत इति विज्ञायते" इति सक्षेपश्रुतिमुदाहृत्य तां व्याकुर्वन्नुदाहरणेषु विस्तारयामास बोधायन। 'आ प्रातराहुतिकालात् सायमाहुतिकालो नातीयात्' इत्यादिना 'औत्तरवसन्तज्योतिष्टोमस्य कालात्पूर्ववसन्तज्योतिष्टोमस्य कालो नातीयात्' इत्यन्तेन पूर्वस्य कर्मण कालेनोत्तरस्य कर्मण कालमनतिक्रम्यान्तरालकाले दर्शपूर्णमासयोरग्निहोत्रस्य चकारात्तज्जातीयानामाग्रयणवैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनिरूढपशुबन्धज्योतिष्टोमानाञ्चानुष्ठान शाखान्तरे विज्ञायत इत्यर्थ। अतः[2] सर्वोऽपरपक्ष ्र्णमासस्य' इति कल्पसूत्रमिद प्रत्यक्षश्रुतिविरोधाद प्रामाण्ये कथमुदाहृत भाष्यकृता।

यच्च वार्तिकादिग्रन्थेषु—'अविशेषादुभौ वा' इति कात्यायनसूत्रे सर्वपुरोडाशाना चतुर्धाकरणवचनम्[3] "आग्नेय चतुर्धा करोति" इति प्रत्यक्षश्रुतिविरोधात् 'शेषस्तु गुणसंयुक्त साधारण प्रतीयेत' इति (न) तृतीयाद्यपादीयान्त्याधिकरणपूर्वपक्षन्यायाभासमूलकमप्रमाणम्, तथा 'स कृताकृत' इत्यापस्तम्बादिसूत्रे सवनीयपशौ पशुपुरोडाशविकल्पवचन 'सवनीये च्छिद्रापिधानार्थत्वात्पुरोडाशो न स्यात्. अन्येषामेव-

---

1. अननुष्ठानमेव स्यात् क, ग, घ, ड, मु पा 2 अथ क, मु. पा

3 चतुर्धाकरणम् क, ख, ग, घ. मु पा

मर्थत्वात्' इति (प) द्वादशिकद्वितीयपादीयद्वितीयाधिकरणपूर्वपक्षमूलकमप्रमाणम्, "वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवने" इति प्रत्यक्षश्रुतिविरोधात्, तथा तीव्रसुति 'यावद्यूप वेदिमुद्धन्ति' इत्यापस्तम्बादिसूत्रे वेदेर्यूपाङ्गत्ववचनम्, "अर्धमन्तर्वेदि अर्धं बहिर्वेदि" इति प्रत्यक्षश्रुतिविरोधात्. 'तथा यूपस्य वेदि' इति (फ) तार्तीयीकसप्तमपादीयाधिकरणपूर्वपक्षन्यायाभासमूलकम-प्रमाणम्, तथा यूपैकादशिन्याम् जाघनीभिश्च पत्नी सयाजयन्ति' इत्यापस्तम्बादि-वचन "जाघन्या पत्नी संयाजयन्ति" इति प्रत्यक्षश्रुतिविरोधात् 'द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात्' इति (ब) द्वादशिकचतुर्थपादीयाधिकरणपूर्वपक्षन्यायाभास-मूलकमप्रमाणमित्यादि प्रपञ्चितम्। तदुद्धारस्तु तत्तदधिकरणे निरूपयिष्यते। तथा च किञ्चित्कल्पसूत्रवाक्यान्तरमुदाहरणान्तरमत्रान्वेषणीयमित्यास्तां तावत्॥

इति सप्तम कल्पसूत्राधिकरणम्॥ ७ ॥

८

सन्ति देशाचारा प्राच्यानां होलाकादय., दाक्षिणात्यानामाह्नीनैबुकादय, प्रतीच्यानां गणपूजादय., उदीच्यानामुद्वृषभादयः। ते किमाचारविशेषा यथादेश व्यवतिष्ठन्ते उत सर्वे सर्वत्रेति सशय.। तत्र पूर्वपक्षयति—

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्॥ १३॥**

अनुमीयते श्रुतिरनेनेत्यनुमान लिङ्गम् आचारः। तस्य व्यवस्थानात् देशभेदेन व्यवस्थितत्वात् तत्सयुक्त देशभेदसंयुक्तमेव श्रुतिरूप प्रमाण मूलभूतं कल्पनीय स्यात्॥

सिद्धान्तयति—

**अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य॥ १४॥**

अपि वेति पूर्वपक्षव्यावृत्तौ। न देशविशेषेणाचाराणा व्यवस्था, किन्तु सर्व-धर्म' स्यात्—सर्वे आचारा सर्वेषां स्यु।कुत ? विधानस्य तन्न्यायत्वात्—विधीयते अनुमीयते यत्तद्विधान मूलभूतश्रुतिवाक्यम्, तस्य तन्न्यायत्वात्—नीयते प्राप्यतेऽने-नेति न्याय। सर्वधर्मत्वप्रापकत्वादित्यर्थ.। कल्पिता मूलभूता हि श्रुति न प्राच्यत्वादि-कर्तृविशेषणमादाय होलाकाद्यधिकारं व्यवस्थापयितु शक्नोति। आकृतिव्यक्ति-

गुणसंस्थानक्रिया हि कर्तृपरिच्छेदिका । प्राच्यत्वादि च "ब्राह्मणो बृहस्पतिसवेन यजेत" इत्यत्रेव न जातिः, नापि "भार्गवो होता भवति" इत्यत्रेव व्यक्तिः, "शुक्लो होता" इतिवच्च न गुणः, "अन्यूनानतिरिक्ताङ्गा ऋत्विज" इत्यत्रेव च नावयवसंनिवेश, "सोमयाजी सनयेत्" इत्यत्रेव क्रिया च न भवति ॥

ननु तर्हि एकद्वित्रिपञ्चशिखाचाराणामपि कुलभेदेन व्यवस्था न स्यादित्यत आह—

## दर्शनाद्विनियोगस्य[1] ॥ १५ ॥

उपपत्तिरिति शेषः । विविध व्यवस्थया नियुज्यत इति विनियोग । "यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव" 'यथर्षि शिखा निदधाति' इति शिखार्थवादस्मृतिदर्शनात् । 'पञ्चावत्त जमदग्नीनाम्' इत्यवदानकल्पवद्गोत्रभेदेन व्यवस्थितस्य शिखाकल्पनस्योपपत्तिः, गोत्रभेदस्य व्यवस्थितत्वात् । न हि प्राच्यत्वादिक व्यवस्थितम्, तद्व्यवस्थापकलिङ्गाभावात् ॥

ननु दाक्षिणात्यादौ बृहत्त्वश्यामत्वलोहिताक्षत्वादिलिङ्गमस्तीत्यत आह—

## लिङ्गाभावाच्च नित्यस्य ॥ १६ ॥

नित्यस्य व्यवस्थितस्य कर्तुं यत् लिङ्ग व्यवस्थापक तस्याभावात् । अदाक्षिणात्यादिष्वपि बृहत्त्वादिसत्त्वादिति भाव ॥

ननु प्राच्यादिसमाख्या कर्तारं विशिनष्टु, तत्राह—

## आख्या हि देशसंयोगात् ॥ १७ ॥

प्राच्यत्वादिसमाख्यापि न कर्तृविशेषणम् । हि यत देशविशेषसयोगात्प्राच्यादिसमाख्या प्रवर्तते । न ह्येवविधा समाख्या कर्तृविशेषण भवितुमर्हति, देशसंयोगस्याव्यवस्थितत्वात् ॥

ननु प्राच्यादिसमाख्याया देशन्निमित्तत्वे दक्षिणदेशादिगतेषु प्राच्यादिषु प्राच्यादिव्यवहारो न स्यात् । अतो निमित्तान्तरप्रयुक्तैव समाख्या वाच्या । सा कर्तृविशेषण भवत्वित्याशङ्क्य परिहरति—

---

1. विनियोग स्यात्

## [1]न स्याद्देशान्तरेष्विति चेत्स्याद्योगाख्या हि माथुरवत् ॥ १८ ॥

चेदन्तं व्याख्यातम्। दक्षिणदेशादिगतेष्वपि प्राच्यादिषु प्राच्यादिव्यवहार' सम्भवति। कुतः ? हि यस्मात्कारणात् योगाख्या—'सोऽस्य निवास' 'तत्र जातः' 'तत आगतः' इति व्याकरणसिद्धेषु योगेष्वन्यतमयोगयुक्ता प्राच्यादिसमाख्या देशान्तर-गतेष्वपि न विरुद्धा देशसंयोगं न व्यभिचरति। माथुरवत्—यथा मथुरानिवास-निमित्तः माथुरशब्दः तद्वत्। अतो देशविशेषप्रयुक्तैव प्राच्यादिसमाख्या। न त्वेषा कर्तृविशेषणमाचारान्व्यवस्थापयितुमीष्टे, यः प्राच्यो दक्षिणदेशादिगतः तस्य कथञ्चित् 'तत आगतः' इत्यादियोगसम्भवेऽपि तत्पुत्रपौत्रप्रपौत्रादीनां कथमपि प्राच्यादि-समाख्याया असम्भवेन तदाचारस्य दर्शनेन व्यभिचारात्। अतः प्राच्यत्वादिकं न कर्तृविशेषणमिति न तत आचारस्य व्यवस्था युज्यते ॥

ननु मास्तु प्राच्यत्वादिकं कर्तृविशेषणतया आचारव्यवस्थापकम्, कर्मधर्मतया तद्व्यवस्थापकमस्तु, इति शङ्कते—

## कर्मधर्मो वा प्रवणवत् ॥ १९ ॥

वाशब्द' शङ्कायाम्। प्राच्यदेशो होलाकादेः दक्षिणदेश आह्नीनैबुकादे इत्येव देशविशेष' कर्मधर्म [2] तस्य तस्याचारस्य व्यवस्थितमङ्गम्, प्रवणवत् यथा "प्राचीन-प्रवणे वैश्वदेवेन यजेत" इति वैश्वदेवाङ्गं प्राचीनप्रवणो देशः तद्वत्। प्राचीनप्रवणः प्राचीनावनतः ॥

परिहरति—

## तुल्यं तु कर्तृधर्मेण ॥ २० ॥

तुशब्दः शङ्कानिवृत्तौ। न प्रागादिदेशजातमाचारव्यवस्थापकमङ्गं भवितुमर्हति। तद्धि कर्तृधर्मेण श्यामत्वादिना तुल्यमव्यवस्थापकत्वे तन्निवासिभिस्तदनाचरणात् ततो निर्गतैश्चाचरणात्। तस्माद्धोलाकाद्याचारः सर्वधर्म ॥

इत्यष्टम होलाकाधिकरणम् ॥ ८ ॥

९

एकस्मिन्नर्थे गोगावीगोण्यादिशब्दा. प्रयुज्यन्ते। ते किं सर्वे प्रयोक्तव्या', उत व्याकरणानुगता एव प्रयोक्तव्या इति चिन्त्यते, तदर्थञ्च किमेते सर्वेऽपि साधव,

1. अन्यत्रेद द्विधा विभज्य पठ्यते.	2. कर्मधर्मतया ख, घ, कर्मधर्मत ग, मु. पा.

उत व्याकरणानुगता एवेति ? तदर्थञ्च किं व्याकरण प्रमाणमप्रमाण वेति ? तदर्थञ्च किं व्याकरणस्य [1]मूलभूता श्रुति' सम्भवति उत न वेति ? तत्र पूर्वपक्षयति—

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २१ ॥**

अपशब्दपरिहारेण साधुशब्दाना प्रयोगस्य उत्पत्ति व्यवस्थापन यत्र सा प्रयोगोत्पत्ति —व्याकरणस्मृति । तस्या अशास्त्रत्वात्–मूलभूतश्रुतिरहितत्वाद् गोशब्द एव प्रयोज्यो न गाव्यादिशब्दा इति व्यवस्था न स्यात् । व्याकरणस्मृतेरप्रामाण्ये हि सति[2] गोगाव्यादिशब्दाना सर्वेषामविच्छिन्नपारम्पर्यप्रयोगजत्वेन साधुत्वात्प्रयोज्यत्व फलति । तथा हि—व्याकरण तावत् "साधूनेव प्रयुञ्जीत नासाधून्" इति प्रयोगनियम-परम्, 'गवादय एव साधवो न गाव्यादय' इति साधुत्वस्वरूपनियमपरञ्च । तत्र नाद्यो नियम सङ्गच्छते । स हि किं शब्दप्रयोगस्य यत्कार्यं तदर्थं, उत शब्दप्रयोगा-श्रितादृष्टार्थः ? नाद्य, शब्दप्रयोगस्य हि कार्यमर्थप्रत्यायनम् । अर्थश्चासाधुभ्योऽपि गम्यते वा न वा ? नाद्य, असाधुभ्योऽप्यर्थप्रतीतौ साधूनेव प्रयुञ्जीतेति नियमानर्थ-क्यात् । न द्वितीय, असाधुभ्योऽर्थप्रत्ययाभावेन तत्प्रयोगस्याप्रसक्तेस्तन्निवृत्त्यै साधु-शब्दप्रयोगस्य नियमविधानानर्थक्यात् नियमफलस्यासाधुप्रयोगव्यावृत्ते स्वत. सिद्धत्वात् । अथासाधुभ्योऽप्यर्थस्य गम्यमानत्वेऽपि प्रयोगमाश्रित्य धर्माय साधुनियम. क्रियते तृप्त्यर्थभोजनाश्रितप्राङ्मुखत्वनियम इवेत्यस्तु पक्ष इति चेत्–नैवम्, व्याकरण-प्रणेतृभिर्हि दृष्टार्थशब्दप्रयोगाश्रितसाधुनियमस्य धर्मार्थत्व ज्ञात्वा तच्छास्त्र प्रणेतव्यम् । तेषा तज्ज्ञानमेव न सम्भवति, मूलाभावात् । न हि तत्र लौकिकप्रमाणानि प्रत्यक्षानु-मानोपमानानि क्रमन्ते, धर्माधर्मयोरलौकिकत्वात् । नापि श्रुतिस्तत्र मूल भवितु-मर्हति । वेदवाक्यानि हि किं तथाविधानि गवाश्वादिषु भेदे॰ कल्प्यन्ते, उत केन-चित्साधारणधर्मेण सर्वान्धर्मान् क्रोडीकृत्य गवाश्वादिशब्दविषयमेकमेव श्रुतिवाक्यं कल्प्यते ? आद्ये किं प्रतिपदं कल्पितानि वाक्यानि कस्यचित्प्रत्यक्षाणि वा नित्यानु-मेयानि वा ? नाद्य, अपाठे प्रत्यक्षानुपपत्ते पाठस्य च शब्दानामनन्तत्वेन प्रतिपदम-सम्भवात् । न द्वितीय., अन्धपरम्परापातात् । न च प्रतिपदपाठो महानुभावाना केषाञ्चित्सम्भाव्यत[3] इति वाच्यम् । तस्य श्रुत्युदाहरणेन पातञ्जलभाष्ये निरस्तत्वात् । यथा—"अनभ्युपाय शब्दाना प्रतिपत्तौ प्रतिपदपाठ । एव हि श्रूयते 'बृहस्पतिरि-

1. मूलभूत वाक्यं ग. 2. गोगाव्यादीना. ग 3. सम्भवति. ग.

न्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दाना पारायण प्रोवाच, नान्तं जगाम' इति। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकाल, न चान्त जगाम, किं पुनरद्यत्वे गतायुषि प्रजायाम्" इत्यादि। अथ केनचित्सामान्यधर्मेण सर्वान् क्रोडीकृत्य गवाश्वादिविषयकमेकमेव श्रुतिवाक्य कल्प्यते यथा 'साधूनेव प्रयुञ्जीत नासाधून्' इति पक्षोऽस्त्विति चेन्मैवम्; साधुत्वं हि जातिरुपाधिर्वा ? नाद्य.; जातित्वे हि योग्यवृत्तिजातेर्योग्यत्वात्प्रत्यक्षेण गृह्येत। न द्वितीयः; निर्वक्तुमशक्यत्वात्। साधुत्व हि वाचकत्व वा, अनादित्व वा, अदृष्टसाधनत्व वा ? नाद्य; गाव्यादिष्वति-व्याप्ते', तेषामपि प्रयोगप्रत्ययान्यथानुपपत्त्या वाचकत्वस्य लोकसिद्धत्वात्। न द्वितीयः, अनादित्वं हि नित्यशब्दार्थसम्बन्धत्वम्[1]। तच्च गाव्यादिष्वप्यविशिष्टम्, तत्रापि सम्बन्धकर्तुरस्मरणात्[2]। न तृतीयः, अदृष्टसाधनत्वं हि वेदैकगम्यम्। तद्बोधकवाक्ये चोपलक्षणान्तराभावात्साधुत्वमेवोपलक्षणं वाच्यम्। तथा च 'अदृष्टसाधनभूताञ्शब्दानदृष्टार्थं प्रयुञ्जीत' इत्येवमुपलक्षणस्य प्रमेयस्य चैक्यादात्माश्रयापत्ति। एतेन गवादय एव साधवो न गाव्यादय इति द्वितीयोऽपि नियमो निरस्तः। अशास्त्रत्वादित्यस्य विगीतत्वादिना प्रामाण्यासम्भवादित्यप्यर्थः। विगीतत्व परस्परविरोध.। पाणिनिकात्यायनपतञ्जलिप्रणीतसूत्रवार्तिकभाष्यसन्दर्भो हि व्याकरणम्, 'त्रिमुनि व्याकरणम्' इति प्रसिद्धेः। सूत्रकारस्तावत् 'तुल्यास्यप्रयत्न सवर्णम्' इति वदन् ऋकारऌकारयोः स्थानभेदात्सवर्णसंज्ञां नानुमन्यते। वार्तिकभाष्यकृतौ तु ऋकारऌकारयो' सावर्ण्यविधिरित्याहतुः। तथा 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' इति नप्त्रादिपरिगणनाद् अन्यत्र पितरावित्यादौ दीर्घं नानुमन्यते सूत्रकृत्। भाष्यकारस्तु समर्थसूत्रे 'उद्गातारः' इति प्रायुङ्क्त। एवं परस्परविरोधाः पर सहस्र सन्ति। निष्फल चेद शास्त्रम्[3], उक्तरीत्या निर्मूलत्वेनाप्रमाणतया ततः कस्यचिदपि फलस्यासम्भवात्। वेदविरुद्धं चेद व्याकरणम्। 'दृष्टं साम' इत्यधिकारे 'वामदेवाड्ड्यड्ड्यौ' इति वदन् पाणिनि. वामदेवेन दृष्टं साम वामदेव्यमिति मन्यते। वेदे तु "वामं वा इद देवेभ्योऽजनीति तस्माद्वामदेव्यम्" इति निरुच्यत इति विरोधः। पूर्वोत्तरविरुद्धं चेद व्याकरणम्। पाणिनिर्हि 'चोः कु' इति पदान्ते चवर्गस्य कवर्गं शास्ति। स एव च 'वृद्धिरादैच्' इत्याह इत्यादि। ततश्च,

1 सम्बन्धित्व. ग. 2. स्मरणाभावात्. ग. 3. व्याकरणशास्त्रम् क, घ, ग, मु. पा.

उत व्याकरणानुगता एवेति ? तदर्थञ्च किं व्याकरण प्रमाणप्रमाणं वेति ? तदर्थञ्च किं व्याकरणस्य 'मूलभूता श्रुति' सम्भवति उत न वेति ? तत्र पूर्वपक्षयति—

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २१ ॥**

अपशब्दपरिहारेण साधुशब्दाना प्रयोगस्य उत्पत्ति व्यवस्थापन यत्र सा प्रयोगोत्पत्ति —व्याकरणस्मृति । तस्या अशास्त्रत्वात्—मूलभूतश्रुतिरहितत्वाद् गोशब्द एव प्रयोज्यो न गाव्यादिशब्दा इति व्यवस्था न स्यात् । व्याकरणस्मृतेरप्रामाण्ये हि सति[2] गोगाव्यादिशब्दाना सर्वेपामविच्छिन्नपारम्पर्यप्रयोगजत्वेन साधुत्वात्प्रयोज्यत्वं फलति । तथा हि—व्याकरण तावत् "साधूनेव प्रयुञ्जीत नासाधून्" इति प्रयोगनियमपरम्, 'गवादय एव साधवो न गाव्यादय' इति साधुत्वस्वरूपनियमपरञ्च । तत्र नाद्यो नियमः सङ्गच्छते । स हि किं शब्दप्रयोगस्य यत्कार्यं तदर्थं, उत शब्दप्रयोगाश्रितादृष्टार्थ ? नाद्य, शब्दप्रयोगस्य हि कार्यमर्थप्रत्यायनम् । अर्थश्चासाधुभ्योऽपि गम्यते वा न वा ? नाद्य, असाधुभ्योऽप्यर्थप्रतीतौ साधूनेव प्रयुञ्जीतेति नियमानर्थक्यात् । न द्वितीय, असाधुभ्योऽर्थप्रत्ययाभावेन तत्प्रयोगस्याप्रसक्तेस्तन्निवृत्त्यै साधुशब्दप्रयोगस्य नियमविधानानर्थक्यात् नियमफलस्यासाधुप्रयोगव्यावृत्ते स्वतः सिद्धत्वात् । अथासाधुभ्योऽप्यर्थस्य गम्यमानत्वेऽपि प्रयोगमाश्रित्य धर्माय साधुनियम क्रियते तृप्त्यर्थभोजनाश्रितप्राङ्मुखत्वनियम इवेत्यस्तु पक्ष इति चेत्—मैवम्, व्याकरणप्रणेतृभिर्हि दृष्टार्थशब्दप्रयोगाश्रितसाधुनियमस्य धर्मार्थत्वं ज्ञात्वा तच्छास्त्र प्रणेतव्यम् । तेषा तज्ज्ञानमेव न सम्भवति, मूलाभावात् । न हि तत्र लौकिकप्रमाणानि प्रत्यक्षानुमानोपमानानि क्रमन्ते, धर्माधर्मयोरलौकिकत्वात् । नापि श्रुतिस्तत्र मूल भवितुमर्हति । वेदवाक्यानि हि कि तथाविधानि गवाश्वादिषु भेदेन कल्प्यन्ते, उत केनचित्साधारणधर्मेण सर्वान्धर्मान् क्रोडीकृत्य गवाश्वादिशब्दविषयमेकमेव श्रुतिवाक्य कल्प्यते ? आद्ये किं प्रतिपद कल्पितानि वाक्यानि कस्यचित्प्रत्यक्षाणि वा नित्यानुमेयानि वा ? नाद्य, अपाठे प्रत्यक्षानुपपत्ते. पाठस्य च शब्दानामनन्तत्वेन प्रतिपदसम्भवात् । न द्वितीय, अन्धपरम्परापातात् । न च प्रतिपदपाठो महानुभावाना केषाञ्चित्सम्भाव्यत[3] इति वाच्यम् । तस्य श्रुत्युदाहरणेन पातञ्जलभाष्ये निरस्तत्वात् । यथा—"अनभ्युपाय शब्दाना प्रतिपत्तौ प्रतिपदपाठ. । एव हि श्रूयते 'बृहस्पतिरि-

1. मूलभूत वाक्यं ग. 2. गोगाव्यादीना. ग 3. सम्भवति. ग.

न्द्राय दिव्यं वर्षसहस्र प्रतिपदविहितानां शब्दानां पारायण प्रोवाच, नान्त जगाम' इति। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्य वर्षसहस्रमध्ययनकाल', न चान्तं जगाम, किं पुनरद्यत्वे गतायुषि प्रजायाम्" इत्यादि। अथ केनचित्सामान्यधर्मेण सर्वान् क्रोडीकृत्य गवाश्वादिविषयकमेकमेव श्रुतिवाक्य कल्प्यते यथा 'साधूनेव प्रयुञ्जीत नासाधून्' इति पक्षोऽस्त्विति चेन्नैवम्, साधुत्वं हि जातिरुपाधिर्वा ? नाद्यः; जातित्वे हि योग्यवृत्तिजातेर्योग्यत्वात्प्रत्यक्षेण गृह्येत। न द्वितीयः; निर्वक्तुमशक्यत्वात्। साधुत्वं हि वाचकत्व वा, अनादित्व वा, अदृष्टसाधनत्व वा ? नाद्य ; गाव्यादिष्वति-व्याप्ते', तेषामपि प्रयोगप्रत्ययान्यथानुपपत्त्या वाचकत्वस्य लोकसिद्धत्वात्। न द्वितीयः, अनादित्वं हि नित्यशब्दार्थसम्बन्धत्वम्[1]। तच्च गाव्यादिष्वप्यविशिष्टम्, तत्रापि सम्बन्धकर्तुरस्मरणात्[2]। न तृतीयः, अदृष्टसाधनत्वं हि वेदैकगम्यम्। तद्बो-धकवाक्ये चोपलक्षणान्तराभावात्साधुत्वमेवोपलक्षण वाच्यम्। तथा च 'अदृष्टसाधनभूताञ्शब्दानदृष्टार्थं प्रयुञ्जीत' इत्येवमुपलक्षणस्य प्रमेयस्य चैक्यादात्मा-श्रयापत्ति। एतेन गवादय एव साधवो न गाव्यादय इति द्वितीयोऽपि नियमो निरस्तः। अशास्त्रत्वादित्यस्य विगीतत्वादिना प्रामाण्यासम्भवादित्यप्यर्थ। विगीतत्व परस्परविरोधः। पाणिनिकात्यायनपतञ्जलिप्रणीतसूत्रवार्तिकभाष्यसन्दर्भो हि व्याक-रणम्, 'त्रिमुनि व्याकरणम्' इति प्रसिद्धेः। सूत्रकारस्तावत् 'तुल्यास्यप्रयत्नं सवर्णम्' इति वदन् ऋकारऌकारयो' स्थानभेदात्सवर्णसंज्ञां नानुमन्यते। वार्तिकभाष्यकृतौ तु ऋकारऌकारयो' सावर्ण्यविधिरित्याहतुः। तथा 'अप्तृन्तृच्स्वसृन-प्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' इति नप्त्रादिपरिगणनाद् अन्यत्र पितरावित्यादौ दीर्घं नानुमन्यते सूत्रकृत्। भाष्यकारस्तु समर्थसूत्रे 'सवितारः' इति प्रायुङ्क्त। एव परस्परविरोधा. पर सहस्र सन्ति। निष्फल चेवं शास्त्रम्[3], उक्तरीत्या निर्मूलत्वेना-प्रमाणतया ततः कस्यचिदपि फलस्यासम्भवात्। वेदविरुद्धं चेद व्याकरणम्। 'दृष्ट साम' इत्यधिकारे 'वामदेवाड्ड्यड्ड्यौ' इति वदन् पाणिनि' वामदेवेन दृष्ट साम वाम-देव्यमिति मन्यते। वेदे तु "वामं वा इदं देवेभ्योऽजनीति तस्माद्वामदेव्यम्" इति निरुच्यत इति विरोधः। पूर्वोत्तरविरुद्धं चेद व्याकरणम्। पाणिनिर्हि 'चोः कुः' इति पदान्ते चवर्गस्य कवर्गं शास्ति। स एव च 'वृद्धिरादैच्' इत्याह इत्यादि। ततश्च,

1. सम्बन्धित्व. ग 2. स्मरणाभावात्. ग 3 व्याकरणशास्त्रम् क, घ, ग, मु. पा.

'निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात् ।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भव ॥'

तदेवं व्याकरणस्य वेदमूलकत्वासम्भवादप्रामाण्ये 'साधूनेव प्रयुञ्जीत' इति नियमाभावादसाधुभ्योऽपि प्रयुक्तेभ्यः अर्थप्रत्ययस्य अनादिपारम्पर्यसिद्धत्वात् गोगाव्यादिशब्दाः सर्वेऽपि प्रयोक्तव्या इति[1] पूर्वं पक्षः ।

सिद्धान्तयति—

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २२ ॥

गाव्यादिशब्दे प्रयुज्यमाने अपराधस्य—अयथोच्चारणस्य भागित्वम्—भाग· भजन प्रवृत्तिः, जनकतासम्बन्धेन तद्वान्भागी, तस्य भावः तत्त्वम् । प्रवर्तकत्वमिति यावत् । कुतः ? प्रयत्ननिष्पत्ते·—प्रयत्नविशेषत एव शब्दस्वरूपस्य यथावदभिव्यक्ते· । तथा च शिक्षायाम्—

'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मन कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुत ।
वर्णाञ्जनयते' इत्यादि ।

आत्मा अन्तःकरण संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या [2]समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया युक्त मन· करोति । तन्मन कायाग्निं जाठराग्निमभिहन्ति । स· अग्नि मारुतं प्रेरयति । सोदीर्ण· । सः मारुतः । 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोप । उदीर्ण ऊर्ध्वं प्रेरितः मूर्ध्न्यभिहत· परावृत्त्य वक्त्रं ताल्वादिस्थान प्राप्य वर्णानभिव्यनक्तीति तदर्थ· । एवञ्च शब्दप्रयोगेच्छोत्पन्नयत्नाभिहताग्निप्रेरितनाभिप्रदेशगतवायुर्वेगान्मूर्धानं गत्वा प्रतिनिवृत्तो वक्त्र प्राप्य यत्नविशेषसहायः ताल्वादितत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकमभिहतो वर्णविशेषानभिव्यनक्तीति त एते आभ्यन्तरप्रयत्ना· । ततो यत्नविशेषैर्गलविवरविकासादीन् करोति । त एते बाह्यप्रयत्ना· । एतैश्च प्रयत्नैर्वर्णा यथावदभिव्यज्यन्ते । एतत्प्रयत्नशैथिल्यमपशब्दान् प्रवर्तयतीत्यर्थं । अय भाव·—गवादिशब्दा एव साधवो न गाव्यादिशब्दा इति स्वरूपनियम , साधूनेव प्रयुञ्जीत नासाधूनित्यदृष्टार्थं प्रयोगनियम इत्युभयविधोऽपि

1. इति प्राप्ते सिद्धान्तयति. ग. 2. सम्प्राप्य. ग.

नियमो व्याकरणगम्यः। तत्र प्रयोगनियमे मन्वादिस्मृतिवत्प्रत्ययिततमपाणिन्यादिप्रणीतत्वान्मूलश्रुत्यनुमानं सुलभम्, प्रत्यक्षञ्च वाजसनेयशाखादिषु श्रूयते—"ब्राह्मणेन न म्लेच्छितवै" "म्लेच्छो ह वा एष यदपशब्द" इत्यादि। 'कृत्यार्थे' इत्यादिना कर्मणि तवैप्रत्ययः। प्रकृतिभूतम्लेच्छधातोर्विवरणम् "म्लेच्छो ह वा एष यदपशब्दः" इति। ब्राह्मणेनापशब्दो न प्रयोज्य इत्यर्थं। तैत्तिरीयके च श्रूयते—"वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वर वृणै मह्य चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायव. सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते" इति। वाक् पराची—एकरूपा, अव्याकृता—साध्वसाधुविवेचनशून्या, अवदत्—अभवत्। ते देवा इत्यादि स्पष्टम्। तां—वाचम् इन्द्रः मध्यतः—शरीरस्य मध्यम् उरःकण्ठादिकं प्रदेशम्, अवक्रम्य व्याकरोत्—साधुतया विभक्तवान्। तस्मादिय व्याकृता—साधुतया विभक्ता उद्यते—प्रयुज्यत इत्यर्थ'। शाखान्तरीयं च वाक्य पातञ्जलभाष्ये उदाहृतम्—"आहिताग्निरपशब्द प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति। एवमादिभिश्च प्रयोगनियमपरैर्वाक्यैरर्थप्रत्यायनरूपदृष्टार्थं शब्दप्रयोगमाश्रित्य "एकः शब्दः सुष्ठु ज्ञात सम्यक्प्रयुक्त स्वर्गे लोके कामधुग्भवति" इति नियमोऽभ्युदयाय विधीयते, भोजनमाश्रित्य 'आयुष्य प्राङ्मुखो भुङ्क्ते' इति नियमवत्। 'साधूनेव शब्दान्प्रयुञ्जीत, नासाधून्' इति वाक्याभ्यामेव समस्तसुशब्दापशब्दप्रयोगविधिप्रतिषेधसिद्धेर्नानन्तवाक्यकल्पनापत्ति·। साधुत्वासाधुत्वाभ्यामेव विधेयनिषेध्यसङ्ग्रहान्नाननुगमः[1]। अनादित्वे सत्यर्थप्रत्यायकत्वमेव साधुत्वम्। तद्विपर्ययश्चासाधुत्वम्। गाव्यादिष्वतिप्रसङ्गवारणाय सत्यन्तम्। हुंफडादिस्तोभेषु पादपूरणाद्यर्थतुह्यिचस्मेत्यादिषु चातिप्रसङ्गवारणाय विशेष्यम्। न चेदमाधुनिकीषु टिघुभादिसञ्ज्ञासु[2] देवदत्तादिसञ्ज्ञासु चाव्याप्तमिति वाच्यम्।

'व्यवहाराय नियम सञ्ज्ञायाः सञ्ज्ञिनि क्वचित्।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत्॥'

इति गोत्रसञ्ज्ञासूत्रभाष्यकैयटसमते पक्षे तासामप्यनादित्वात्।

'यास्त्वेता· स्वेच्छया सञ्ज्ञा क्रियन्ते टिघुभादय।
अनपभ्रंशरूपत्वान्नास्त्यासामपशब्दता॥

1. नानुगमाभाव . ग 2 आधुनिकटिघुभादिसञ्ज्ञासु क, ग, मु. पा.

हस्तचेष्टा यथा लोके तथा सङ्केतिता मताः ।
नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत् ॥'

इति पक्षे तु तासामलक्ष्यत्वान्नाव्याप्तिः । आधुनिकसंज्ञानां साध्वसाधुवहिर्भावादेव 'रघुनाथ' इत्याधुनिकसञ्ज्ञोपपत्तिः । अन्यथा 'पूर्वपदात्संज्ञायामगः' इति विहितस्य णत्वस्याकरणादसाधुत्वापत्ते । [1]तदन्तर्भावपक्षेऽपि तत्र न णत्वम् । तथा सति संज्ञात्वभङ्गापत्तेः । णत्वेन चेत्सञ्ज्ञा रूढ्यर्थो गम्यत इति हि सूत्रार्थः । तदाहुरभियुक्ताः—'सञ्ज्ञाशब्दा अनादिप्रयुक्ता नियतानुपूर्वीका एव सिद्धाः । तत्रेदानीं कस्तद्विपरीतं प्रयोक्तुमर्हति' इति । तदेतत् 'भून्योऽसंज्ञायाम्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । विस्तरस्तु शब्देन्दुशेखरादावनुसन्धेय इत्यलमतिप्रसङ्गेन । प्रकृतमनुसरामः । न च गाव्यादिशब्दानामप्यनादिपरम्परया गवादिप्रत्यायकत्वात्तेषामपि साधुत्वापत्तिरिति वाच्यम् । आदौ हि कदाचित्केनचित् गामानयेति प्रयोक्तव्ये करणापाटवादिना गावीमानयेत्युक्ते श्रोतृपुरुषेण गोशब्दं प्रयोक्तुमुद्यतस्य अशक्तिजोऽयं शब्द इति निश्चित्य सास्नादिमदर्थे आनीते व्युत्पित्सवस्तदुभयव्यवहारं पश्यन्तः अशक्तिजत्वमजानाना गावीशब्दस्यैव सास्नादिमदर्थे सञ्ज्ञासञ्ज्ञिसम्बन्धं व्युत्पद्य व्यवहरन्ति । तेभ्यश्च शिक्षित्वा[2] अन्येऽपीत्येवं प्रयोगप्रत्यययोः प्रयोक्तृपुरुषकरणापाटवादिरूपवाचकाशक्तिजतया मूलभूतगोशब्दोपस्थापनेनान्यथासिद्धत्वान्न गाव्यादिशब्दानामनादिवाचकत्वरूपं साधुत्वमध्यवसातुं[3] शक्यते ।

नन्वशक्तिजत्वं वा कल्पनीयं वाचकत्वं वा ? कोऽत्र विशेष इत्यत आह—

## अन्यायश्चानेकशब्दत्वम् ॥ २३ ॥

चशब्द उक्तसमुच्चये । अनेकः शब्दो वाचको यस्य एकस्यार्थस्य स अनेकशब्दः । तस्य भावस्तत्त्वम् । नीयत इति न्यायः । कर्मणि घञ् । 'घञबन्ता' पुंसि' इति नित्यपुंलिङ्गता । नञ्तत्पुरुषे 'परवल्लिङ्गम्' इति पुंस्त्वम् । एकस्यानेकशब्दवाच्यत्वं युक्तं न भवतीति यावत् । अदृष्टानेकशक्तिकल्पनापेक्षया प्रयोक्तृपुरुषाशक्तिजत्वस्यैव दृष्टस्य कल्पयितुमुचितत्वात् प्रयोगवेलायामदृष्टदोषदुष्टविकल्पापत्तेश्च । वाच्यवाचकयोरैककर्म्यावधारितस्य नियमस्य वाचकानेकत्वे बाधप्रसङ्गाच्च । तथा हि—

1 तदन्तर्भाव इति हि सूत्रार्थं घपुस्तके न दृश्यते. 2. शिक्षितत्वात् क, मु पा.
3. निश्चेतु ग.

गोशब्देन सास्नादिमानभिधीयत इत्याप्तवाक्याद्वाचकत्वग्रहदशायामभिधानक्रिया-द्वारा[1] तत्कर्मकरणयोर्वाच्यवाचकयो: "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' इति तार्तीयीकाधिकरणन्यायेन (म) क्रयद्वारा एकहायन्यरुणिम्नोरिव नियमः पर-स्परान्वयरूपः सम्बन्धोऽवगतः। ततश्च गाव्यादेरपि सास्नादिमदर्थवाचकत्वस्वीकारे सास्नादिमत्कर्मकाभिधानक्रियायां गोशब्द एव करणमित्येवरूपस्य नियमस्य व्युत्पत्तिकालावगतस्य बाधः स्यात्। तस्मादेकस्यैव वाचकता। इतरेषां तु पुरुषा-शक्तिजतया वाचकशब्दोपस्थापकतैव, न वाचकता। हस्तपाणिकरादिशब्देषु त्वगत्या-नेकशब्दत्वम्॥

नन्वस्त्वेकस्य वाचकता इतरेषा त्वशक्तिजता। तथापि गवादिशब्दा एव वाचकाः साधव, गाव्यादिशब्दास्त्वशक्तिजा इत्यत्र विनिगमक किमित्यत आह—

## तत्र तत्त्वमभियोगविशेषात्स्यात्॥ २४॥

तत्र—गोगाव्यादिशब्देषु वाचकत्वावाचकत्वविसंवादे[2], तत्त्वं—गवादिशब्दा एव वाचका न गाव्यादिशब्दा इति साध्वसाधुतत्त्वविवेचनम्, अभियोगविशेषात्स्यात्—व्याकरणशास्त्राभ्यासहेतुकं कूलङ्कष ज्ञानमभियोगः, तत्कृतो विशेषः विविधलक्ष्यभेद-परिज्ञानम्, तस्मादभियोगविशेषात् निर्धारितं स्यात्। गवादिशब्दा एव साधवो न गाव्यादिशब्दा इत्येवरूपेषु साध्वसाधुस्वरूपनियमेषु व्याकरणस्मृतिरेव[3] प्रमाणम् इत्युक्तं भवति। साधुस्वरूपनियमे च व्याकरणस्मृतेरन्या स्मृतिर्मूलम्, तस्याश्चान्येत्येव स्मृतिपरम्परानुसन्धेया। न चान्धपरम्परापातः, साधुत्वस्य [4]तत्तत्कालीनपुरुषगम्यत्वेन केवलानुमानगम्यत्वाभावात्। सर्वे हि स्वे स्वे काले गवादिशब्दान् प्रत्यक्षत उप-लभन्ते। तत्र पूर्वतरवृद्धेभ्यो गवादिशब्दसत्तां गाव्यादीना चासत्तामवधारयन्ति। सर्वकालमपि केचन वृद्धा सन्तीति तत्प्रत्यक्षसम्भवान्न कदाचिदपि प्रत्यक्षविच्छेदः। न चैतावता सर्वस्मिन् काले शब्दस्वरूपप्रत्यक्षमात्रसिद्धावपि साधुत्वस्य प्रत्यक्षतोऽ-सिद्धेर्नान्धपरम्परापरिहार इति वाच्यम्। न हि सर्वकालवर्तित्वादनादित्वमतिरिच्यते

---

1 अभिधानद्वारा. ग 2. सन्देहे. ग 3 व्याकरणमेव. ग.
4 तत्तत्कालीनतत्तत्पुरुष—क, घ, मु. पा.

येन सर्वस्मिन् काले प्रत्यक्षतया सिद्धेषु साधुत्व प्रत्यक्षतो न गृह्यते। सर्वकालवर्तित्व-रूपानादित्वञ्च साधुत्वमभियुक्तस्मरणपरम्परया तत्तत्कालीनवृद्धप्रत्यक्षसध्रीचीनया साक्षादिमदर्थेषु गवादिशब्दाना स्वध्यवसानम्। गाव्यादिशब्देषु तु केवलप्रत्यक्षमात्र-परम्परा सम्भाव्येतापि। न च तन्मात्रेण [1]साधुत्वनिश्चयः, अशक्तिजत्वस्यापि सम्भ-वात्। अतोऽभियुक्तस्मरणाभावान्न गाव्यादिशब्दानामनादित्वनिश्चय इति भवति वैषम्यम्॥

ननु गवादिशब्दोच्चारणाशक्तिर्गाव्यादिशब्दानामेव प्रयोगे निमित्त न त्वन्येषाम् 'अग्व्या' 'अप्पा' इत्यादीना प्रयोगे इत्यत्र किं विनिगमकमित्यत्राह—

**तदशक्तिश्चानुरूपत्वात्[2] ॥ २९ ॥**

चकार उक्तसमुच्चये। गवादिशब्दोच्चारणाशक्ति गाव्यादिशब्दानामेव प्रयोगे निमित्तम्, न त्वन्येषाम्, 'अग्व्या' 'अप्पा' इत्यादीनाम्। कुत ? अनुरूपत्वात्। गाव्यादिशब्दा एव हि गाव्यादिशब्दस्वरूपमूलभूतगवादिशब्दस्मरणद्वारा अर्थं प्रत्याय-यन्ति, न तु तद्विजातीयाः। सारूप्यस्य स्मरणप्रयोजकत्वात्॥

तदेतद्दृष्टान्तेन द्रढयति—

**एकदेशाच्च विभक्तिव्यत्यये प्रत्ययः स्यात् ॥ ३० ॥**

चशब्दो व्युत्क्रमो विभक्तिव्यत्यये इत्यनन्तर द्रष्टव्य.। व्याकरणशिक्षितेष्वेव शब्देषु विभक्तिविपर्यासेऽपि अर्थप्रत्ययो दृश्यते। यथा कुत इति पृष्टे 'अश्मकेभ्य आगच्छामि' इति वक्तव्ये 'अश्मकैरागच्छामि' इति मूर्खेणोक्ते श्रोतार एकदेशादश्मक-शब्दात्प्रातिपदिकादुपलब्धात् 'अश्मकेभ्य' इति शब्दस्मरणादर्थं [3]प्रतियन्ति, तद्वद्गाव्यादिशब्दतोऽपि गवादिशब्दस्मृत्यार्थप्रत्ययो युक्त. स्यात्। नापि 'तुल्यास्य-प्रयत्नं सवर्णम्' 'ऋकारलृकारयो सावर्ण्यविधि' इति परस्परविरोधादप्रमाणमिति। विरोधाद्विकल्पोपपत्ते.। एतेन 'उद्गातार' इत्यादावपि विरोध परिहृत.। 'यथोत्तर मुनीना प्रामाण्यम्' इति तु वैयाकरणसमय.। तथा सति परस्परविरोधे पूर्वपूर्वस्या-प्रामाण्यमेव, सर्ववेष्टनस्मृतिवत्। अविरोधे तु प्रामाण्यमेव। एतेन 'वामदेवाड्ड्यड्ड्यौ' इत्यपि व्याख्यातम्। 'आदैच्' इति निर्देशादेव कुत्वशास्त्र तद्व्यतिरिक्तविषयमिति न

1 साधुत्व ग. 2. तदनुरूपत्वात् 3. प्रतिपद्यन्ते. ग.

विरोध । रक्षोहादिकमपि महाभाष्ये स्थितम् । तत्र दूषणभूषणानि वार्तिके भट्टाचार्यैः प्रपञ्चितानि तत एवानुसन्धेयानि । तदेवं गवादिशब्दा एव साधवः, त एव प्रयोज्याः । गाव्यादिशब्दास्त्वशक्तिजत्वादसाधवः अप्रयोज्याः । उभयत्र च व्याकरणं प्रमाणमिति सिद्धम् ॥

इति नवम व्याकरणाधिकरणम् ॥ ९ ॥

१०

व्याकरणं प्रमाणं तदनुगता गवादिशब्दा एव वाचका साधवः प्रयोज्या इति स्थितम् । इदानीं वाचकप्रसङ्गाद्वाच्यांशनिर्धारणाय प्रवर्तिष्यमाणाकृत्यधिकरणोपोद्घातत्वेन लौकिकानां वैदिकानाञ्च शब्दानां तदर्थाना चानन्यत्वं निर्णेतु लोकवेदाधिकरणमारभ्यते । आकृत्यधिकरणे हि व्यक्तिः शब्दार्थ इति पूर्वपक्षः, सामान्यात्मा जातिरिति सिद्धान्त । तत्र व्यक्तेः शब्दार्थत्वे आहवनीयशास्त्रं सकृच्छ्रुतमपि विनिगमनाविरहात्प्रतिव्यक्त्युपतिष्ठासया एकत्वे च तदनुपपत्त्या यावद्व्यक्ति भिन्नमेव सत्सर्वासु व्यक्तिषूपतिष्ठते । यथाहुर्वैयाकरणाः 'प्रतिलक्ष्यं शास्त्राणि भिद्यन्ते' इति । एवञ्च सामान्यविशेषशब्दयोरुभयोरपि व्यक्तिवाचित्वाविशेषेण सामान्यविशेषशास्त्रयोस्तुल्यबलत्वान्न बाध्यबाधकभावः, किन्तु विकल्पः । आकृतेः शब्दार्थत्वे तु सामान्यशास्त्रेण होमत्वरूपव्यापकजातावभिहितायां तद्द्वारा यावत्सकलव्यक्त्युपस्थितिः, तत प्रागेव विशेषशब्दाभिहितावान्तरजातिद्वारा तक्रकौण्डिन्यादिशब्दवद्विशेषशब्दस्य व्यक्तिविशेषवाचित्वाद्वा व्यक्तिविशेषप्रतीतिरिति शीघ्रप्रवृत्तेन विशेषशास्त्रेण मन्थरप्रवृत्तसामान्यशास्त्रस्य बाध इति फलभेदः । न ह्येवफलकमिदमधिकरणं लोकवेदयोः पदपदार्थानामन्यत्वे लौकिकशब्दविषये तावदर्थवद्भवितुमर्हति । न हि 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यादौ [1]पुमिच्छानुसारिलौकिकवाक्यार्थनिर्णये धर्मानुपयुक्ते न्यायापेक्षास्ति, येन तत्रार्थवत्तदधिकरण स्यात् । तथा वैदिकविषयेऽपि नार्थवद्भवितुमर्हति । लोकव्यवहारादेव हि वैदिकानामपि शब्दानामर्थनिर्णयेन भवितव्यम् । न चैतद्वैदिकाना लौकिकान्यत्वे घटते, तेषां लोकव्यवहाराननुपातित्वेनोपायाभावात् । न च लोकव्यवहाराननुपातित्वेऽपि यूपादिशब्दवदर्थनिर्णयोऽस्त्विति वाच्यम् । लोकसिद्धलक्षणादिसमभि-

1. इच्छानुसारि क, घ, ङ, मु. पा.

व्याहारलक्षणोपायाद्धि यूपादिशब्दार्थनिर्णयः। तत्र समभिव्याहृततक्षणादिपदानामपि लौकिकान्यत्वे तादृशोपायाभावात्स कथं स्यात्। तस्माल्लौकिकवैदिकानामन्यत्वे अनारम्भणीयमेवेदमाकृत्यधिकरणं स्यात्। तदुभयेषामनन्यत्वे तु लोके कृतः शब्दार्थ-निर्णयस्तत्रानुपयुक्तोऽपि वेदे उपयुक्तो भविष्यति इत्याकृत्यधिकरणोपोद्घातत्वेन लोकवेदयोः पदपदार्थानामन्यत्वानन्यत्वे विचार्येते।

वर्णाभेदेऽपि नियतानियतस्वरादिभेदाल्लोकवेदयोः पदान्यत्वम्। वेदे हि नियतः स्वरः, लोके त्वनियतः। यद्यपि व्याकरणे स्वरविधौ छन्दोऽधिकारा-भावाद्भाषायामपि स्वरनियम आवश्यकः, अत एव 'झल्युपोत्तमम्' इति स्वरविशेषं प्रकृत्य 'विभाषा भाषायाम्' इति लोके विकल्पविधानं सङ्गच्छते, तथापि 'एकश्रुति' इत्यनुवृत्तौ 'विभाषाच्छन्दसि' इति लोके ऐकश्रुत्यस्य चातुःस्वर्येण विकल्पविधानान्न दोषः। अत्र हि 'अच्छन्दसि' इति च्छेदः। अत एव पस्पशाह्निकभाष्ये 'श्वेतो धावति' इति द्व्यर्थं वाक्यमित्युक्तं सङ्गच्छते। तत्र हि 'श्वा' इत्यन्तोदात्तम् 'ऊडिदम्' इत्यादिना। 'इतः' इत्यपि तथा। 'एकादेश उदात्तेनोदात्तः' इति एकार उदात्तः। तथा च 'श्वा इतः' इत्यर्थे एकाराकारावुदात्तौ। 'शुक्ल' इत्यर्थे तु घृतादित्वादन्तोदात्तत्वे अकार उदात्तः। 'अनुदात्तं पदमेकवर्जम्' इत्येकारोऽनुदात्तः। तथा च स्वरभेदात्सकृ-दुच्चारितस्य कथं द्व्यर्थता स्यात्। अत एव च 'एकश्रुति स्वरसर्वनाम' इति 'दाण्डिनायन' इति सूत्रे भाष्यं सङ्गच्छते। यथा सर्वनामशब्दास्तदेतदादयः सर्वपदस्थाने प्रयुज्यन्ते, एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्येत्यर्थः। 'विभाषा भाषायाम्' इत्यत्र भाषाग्रहणं तु चातुःस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेत्यन्यत्र विस्तरः। 'देवाः' इति लोके, 'देवासः' इति वर्णागमश्छन्दसि। 'आत्मना' इति लोके, 'त्मना देवेषु' इत्यादौ आकारलोपश्छन्दसि। 'उद्ग्राहः' 'निग्राहः' इति लोके, 'उद्ग्राभं च निग्राभं च' इति भकारविकारश्छन्दसि। तथा वेदवाक्यान्यध्याय एवोच्यन्ते, लौकिकानि त्वनध्यायेऽपि। तथा वेदवाक्यान्युपनीतत्रैवर्णिकैरेव प्रयुज्यन्ते, लौकिकानि तु तदन्यैरपि। तथा इमे लौकिका इमे वैदिका इति भेदेन व्यपदेशः। इत्येवं नियतस्वरादितद्विपर्ययतो लोकवेदयोः स्पष्टः पदभेदः। स्पष्टभेदकस्वरुयूपादि-शब्दसाहचर्यादपि लोकवेदयोः पदभेदः। पदभेदादेव चार्थोऽपि भिद्यते। 'संज्ञा चोत्पत्तिसंयोगात्' इति (म) द्वैतीयीकाधिकरणन्यायात्, 'उत्ताना वै देवगवा

वहन्ति' इति वाक्यशेषे लोकविलक्षणार्थदर्शनाच्च। ये उत्ताना वहन्ति ते देवाना गोशब्दवाच्या इत्येवं लोकविलक्षणवस्त्वन्तरस्यैवानेन गोशब्दवाच्यत्वप्रतिपादनेन वाच्यभेदावश्यम्भावात्। त्रिवृच्चर्वाश्ववालादिशब्दानाञ्च लोकतोऽर्थान्तरपरत्व स्पष्टमुपपादितमनुपदमेव। अतो लोकवेदयोः पदपदार्थानामन्यत्वमिति प्राप्ते, सिद्धान्तयति—

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ २७ ॥

अर्थस्य शब्दरूपस्य अभिधेयरूपस्य च वस्तुन एकत्वं लोकवेदयोरङ्गीकर्तव्यम्। कुत ? प्रयोगचोदनाभावात्। प्रयुज्यत इति प्रयोगः वाक्यम्। तस्य चोदना उच्चारणा। तस्या' भावात्[1], अभावात् इति च च्छेदः। लोकवेदयोः पदपदार्थानामन्यत्वे वैदिकपदाना लोकव्यवहाराननुपातित्वेन अगृहीतसङ्गतिकतया वेदवाक्यार्थबोधाय वाक्योच्चारणस्यासम्भवात्, अनन्यत्वे तत्सम्भवाच्चेत्यर्थ। यदुक्तं नियतस्वरादिभेदात्पदान्यत्वम्, ततश्चार्थान्यत्वमिति तत्राह—अविभागादिति। वर्णानामभेदादित्यर्थ.। तथा हि—य एव लौकिका वर्णास्त एवामी वेदेऽपीति लौकिकाभेदेन प्रत्यभिज्ञायन्ते वैदिका वर्णा। वर्णात्मकञ्च पद तद्भेदान्न भिद्यते। तथा वर्णसमूहात्मकं वाक्यम्। तदेकत्वाच्चार्थैकत्वम्। [2]पदैकत्वाच्च (य) संज्ञाधिकरणन्यायस्यात्राप्रवृत्ति'। ननु वर्णैक्येऽपि धर्मभेदात्पदभेदो दुर्वार। उक्त च—

'पदावधारणोपायान्बहूनिच्छन्ति सूरयः।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुती'' ॥ इति।

जरा राजेत्यादिषु क्रमभेदादन्यत्वम्। ब्रह्मन्राह्मण इत्यादिषु न्यूनातिरेकवशादन्यत्वम्। इन्द्रशत्रुरित्यादौ पूर्वपदप्रकृतिस्वरान्तोदात्तत्वाभ्यामन्यत्वम्। पदान्तरसमभिव्याहाररूपवाक्यादप्यन्यत्वम्। यथा 'पचते' इति पद नामत्वेनाख्यातत्वेन च सम्भाव्यमानम् 'भोक्तुकाम पचते' 'पचते दक्षिणा देहि' इति समभिव्याहाराद्भेदेन निश्चीयते। व्याकरणस्मृतेरपि पदान्यत्वम्। 'अश्वस्त्वम्' इत्यत्र 'अश्व' इति सुबन्तम् 'टुओश्वि गतिवृद्धयो.' इति धातूत्पन्न तिङन्तमध्यमपुरुषैकवचनञ्च। प्रथमान्ताख्यातपदयो सामानाधिकरण्यमिह श्रुति.। 'यात पुनरायाति' इत्यत्र 'आयाति' इत्याख्यातपदसामानाधिकरण्यात् 'यात' इति प्रथमान्त नाम, 'देवदत्तयज्ञदत्तौ यात.' इत्यत्र

1 भावात्सम्भवात् क, ट न, गु पा　2. तदेकत्वात्. ख, ग, मु पा.

व्याहारलक्षणोपायाद्धि यूपादिशब्दार्थनिर्णय'। तत्र समभिव्याहृततक्षणादिपदानामपि लौकिकान्यत्वे तादृशोपायाभावात्स कथ स्यात्। तस्माल्लौकिकवैदिकानामन्यत्वे अनारम्भणीयमेवेदमाकृत्यधिकरण स्यात्। तदुभयेषामनन्यत्वे तु लोके कृत शब्दार्थ-निर्णयस्तत्रानुपयुक्तोऽपि वेदे उपयुक्तो भविष्यति इत्याकृत्यधिकरणोपोद्घातत्वेन लोकवेदयो पदपदार्थानामन्यत्वानन्यत्वे विचार्येते।

वर्णाभेदेऽपि नियतानियतस्वरादिभेदाल्लोकवेदयोः पदान्यत्वम्। वेदे हि नियतः स्वरः, लोके त्वनियत। यद्यपि व्याकरणे स्वरविधौ छन्दोऽधिकारा-भावाद्भाषायामपि स्वरनियम आवश्यकः, अत एव 'ज्ञल्युपोत्तमम्' इति स्वरविशेषं प्रकृत्य 'विभाषा भाषायाम्' इति लोके विकल्पविधानं सङ्गच्छते, तथापि 'एकश्रुति' इत्यनुवृत्तौ 'विभाषाच्छन्दसि' इति लोके ऐकश्रुत्यस्य चातुस्वर्येण विकल्पविधानान्न दोषः। अत्र हि 'अच्छन्दसि' इति च्छेद। अत एव पस्पशाह्निकभाष्ये 'श्वेतो धावति' इति द्व्यर्थं वाक्यमित्युक्त सङ्गच्छते। तत्र हि 'श्वा' इत्यन्तोदात्तम् 'ऊडिदम्' इत्यादिना। 'इत.' इत्यपि तथा। 'एकादेश उदात्तेनोदात्त' इति एकार उदात्तः। तथा च 'श्वा इतः' इत्यर्थे एकाराकारावुदात्तौ। 'शुक्ल' इत्यर्थे तु घृतादित्वादन्तोदात्तत्वे अकार उदात्त। 'अनुदात्तं पदमेकवर्जम्' इत्येकारोऽनुदात्त'। तथा च स्वरभेदात्सकृ-दुच्चारितस्य कथ द्व्यर्थता स्यात्। अत एव च 'एकश्रुति.स्वरसर्वनाम' इति 'दाण्डिनायन' इति सूत्रे भाष्य सङ्गच्छते। यथा सर्वनामशब्दास्तदेतदादयः सर्वपदस्थाने प्रयुज्यन्ते, एव सर्वस्वरस्थाने एकश्रुति प्रयोक्तव्येत्यर्थ। 'विभाषा भाषायाम्' इत्यत्र भाषाग्रहणं तु चातुस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेत्यन्यत्र विस्तर। 'देवा' इति लोके, 'देवास' इति वर्णागमश्छन्दसि। 'आत्मना' इति लोके, 'त्मना देवेषु' इत्यादौ आकारलोपश्छन्दसि। 'उद्ग्राहः' 'निग्राह' इति लोके, 'उद्ग्राभ च निग्राभं च' इति भकारविकारश्छन्दसि। तथा वेदवाक्यान्यध्याय एवोच्यन्ते, लौकिकानि त्वनध्यायेऽपि। तथा वेदवाक्यान्युपनीतत्रैवर्णिकैरेव प्रयुज्यन्ते, लौकिकानि तु तदन्यैरपि। तथा इमे लौकिका इमे वैदिका इति भेदेन व्यपदेशः। इत्येवं नियतस्वरादितद्विपर्ययतो लोकवेदयो स्पष्ट पदभेद। स्पष्टभेदकस्वरुयूपादि-शब्दसाहचर्यादपि लोकवेदयो पदभेद। पदभेदादेव चार्थोऽपि भिद्यते। 'संज्ञा चोत्पत्तिसयोगात्' इति (म) द्वैतीयीकाधिकरणन्यायात्, 'उत्ताना वै देवगवा

वहन्ति' इति वाक्यशेषे लोकविलक्षणार्थदर्शनाच्च। ये उत्ताना वहन्ति ते देवाना गोशब्दवाच्या इत्येवं लोकविलक्षणवस्त्वन्तरस्यैवानेन गोशब्दवाच्यत्वप्रतिपादनेन वाच्यभेदावश्यम्भावात्। त्रिवृद्बर्हिरश्ववालादिशब्दानाञ्च लोकतोऽर्थान्तरपरत्व स्पष्टमुपपादितमनुपदमेव। अतो लोकवेदयोः पदपदार्थानामन्यत्वमिति प्राप्ते, सिद्धान्तयति—

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ २७ ॥

अर्थस्य शब्दरूपस्य अभिधेयरूपस्य च वस्तुन एकत्वं लोकवेदयोरङ्गीकर्तव्यम्। कुत ? प्रयोगचोदनाभावात्। प्रयुज्यत इति प्रयोगः वाक्यम्। तस्य चोदना उच्चारणा। तस्या' भावात्[1], अभावात् इति च च्छेद'। लोकवेदयोः पदपदार्थानामन्यत्वे वैदिकपदाना लोकव्यवहाराननुपातित्वेन अगृहीतसङ्गतिकतया वेदवाक्यार्थबोधाय वाक्योच्चारणस्यासम्भवात्, अनन्यत्वे तत्सम्भवाच्चेत्यर्थ। यदुक्तं नियतस्वरादिभेदात्पदान्यत्वम्, ततश्चार्थान्यत्वमिति तत्राह—अविभागादिति। वर्णानामभेदादित्यर्थ। तथा हि—य एव लौकिका वर्णास्त एवामी वेदेऽपीति लौकिकाभेदेन प्रत्यभिज्ञायन्ते वैदिका वर्णा'। वर्णात्मकञ्च पद तदभेदान्न भिद्यते। तथा वर्णसमूहात्मकं वाक्यम्। तदेकत्वाच्चार्थैकत्वम्। [2]पदैकत्वाच्च (य) संज्ञाधिकरणन्यायस्यात्राप्रवृत्ति'। ननु वर्णैक्येऽपि धर्मभेदात्पदभेदो दुर्वार। उक्तं च—

> 'पदावधारणोपायान्बहूनिच्छन्ति सूरय।
> क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुती'॥ इति।

जरा राजेत्यादिषु क्रमभेदादन्यत्वम्। ब्रह्मब्राह्मण इत्यादिषु न्यूनातिरेकवशादन्यत्वम्। इन्द्रशत्रुरित्यादौ पूर्वपदप्रकृतिस्वरान्तोदात्तत्वाभ्यामन्यत्वम्। पदान्तरसमभिव्याहाररूपवाक्यादप्यन्यत्वम्। यथा 'पचते' इति पद नामत्वेनाख्यातत्वेन च सम्भाव्यमानम् 'भोक्तुकाम पचते' 'पचते दक्षिणां देहि' इति समभिव्याहारभेदेन निश्चीयते। व्याकरणस्मृतेरपि पदान्यत्वम्। 'अश्वस्त्वम्' इत्यत्र 'अश्व' इति सुबन्तम् 'टुओश्वि गतिवृद्ध्योः' इति धातूत्पन्न तिङन्तमध्यमपुरुषैकवचनञ्च। प्रथमान्ताख्यातपदयो सामानाधिकरण्यमिह श्रुति.। 'यात पुनरायाति' इत्यत्र 'आयाति' इत्याख्यातपदसामानाधिकरण्यात् 'यात' इति प्रथमान्त नाम, 'देवदत्तयज्ञदत्तौ यात' इत्यत्र

1 भावात्सम्भवात् क, ट अ, गु पा 2. तदेकत्वात्. ख, ग, मु पा,

च द्विवचनान्तप्रातिपदिकसामानाधिकरण्यात् 'यात' इत्याख्यात निश्चीयते, [1]इत्यस्ति श्रुत्या पदभेद'। एवञ्च क्रमादिनियतानियतस्वरत्वादिधर्मभेदात्पदभेदः स्यादिति चेत्[2] नैष दोष', पद्यते गम्यते अनेनेति व्युत्पत्त्या गमकं पदम्, तद्रूपस्य च न धर्म-मात्रभेदाद्भेद.। किन्तु अर्थप्रतीत्यौपयिकधर्मभेदादेव। जरा राजा, ब्रह्म ब्राह्मण., इन्द्रशत्रुः इत्यादौ च क्रमादिभेदादर्थभेदो लोकसिद्ध.। नैव लोकवेदयोरर्थौपयिक-धर्मभेदोऽस्ति। नियतस्वरत्वानियतस्वरत्वानध्यायवर्जनावर्जनलौकिकवैदिकव्यपदेश-भेदानामर्थप्रतीतिविशेषौपयिकत्वासम्भवात्। 'देवास' 'त्मना' इत्यादावपि लौकि-केभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि अर्थप्रतीत्यौपयिकधर्मभेदाभावान्न पदभेद। तेभ्योऽर्थभेदानवगमाद् एकदेशन्यूनातिरेकमात्रेऽपि तदभेदप्रत्यभिज्ञानाच्च, चतुरङ्गु-लषडङ्गुलवत्। यदुक्त स्वरुयूपादिसाहचर्यात्सर्वेषामपि वैदिकपदानां लौकिकान्यत्व-मिति, तन्न, न हि केषाञ्चिल्लौकिकभेदमात्रेण सर्वेषां तथात्वम्, प्रमाणाभावात्। अन्यथा सर्वेषां वैदिकपदानां लौकिकान्यत्वे व्यवहारानुपातित्वाभावेन तेभ्योऽर्थावगम एव न स्यात्। यच्चोक्तम् 'उत्ताना वै देवगवा वहन्ति' इत्यर्थभेदज्ञापकमिति, तदपि न, तत्र ये उत्ताना वहन्तीत्युद्दिश्य गोशब्दवाच्यत्व न विधातुं शक्यम्, उत्तानवहनस्या-प्रसिद्धत्वात्। अतो (र) वायुपुराणोक्तरीत्या त्रैलोक्यभ्रमणवशाद्देवा अपि कदाचिदिम लोकमुपरि पश्यन्तीत्येतां दृष्टिमाश्रित्य एतेषामेव गवा दक्षिणात्वादिना देवसम्बन्धि-नामुत्तानवहनं स्तुत्यर्थमनुकीर्त्यत इति न तद्भेदे ज्ञापकम्। त्रिवृच्चर्वोश्ववालाद्यर्थभेदे सत्यपि सर्वेषा भेदस्तु स्वरुयूपादिभेदस्य तद्भेदनिरासेनैव निरस्त.। अत सिद्धमेकत्व लोकवेदयो' पदपदार्थानाम्॥

इति दशम लोकवेदाधिकरणम्॥ १० ॥

११

तदेव सिद्धे लोकवेदयो' पदपदार्थानन्यत्वे गवादिशब्दानधिकृत्येदं विचार्यते। किं व्यक्ति शब्दार्थ ? उत आकृतिविशिष्टा व्यक्तिः ? अथवा आकृतिरेव ? इति। तत्र पूर्वपक्षयति—

---

1 इत्यन ख, ग, मु गा 2. चेन्न. ग.

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ २८ ॥

व्यक्ति शब्दार्थो नाकृतिः। कुतः? प्रयोगचोदनाभावात्, अभावादिति च च्छेदः। "व्रीहीनवहन्ति" 'पशुं संज्ञपयन्ति' इत्यादिप्रयोगविधयो हि व्यक्तिवाचित्व एव सम्भवन्ति नाकृतिवाचित्वे, आकृतेरवहननाद्ययोग्यत्वात्। ननु सति सम्भवे आकृति. शब्दार्थो भवतु 'गाः पश्य' इत्यादौ, "व्रीहीनवहन्ति" इत्यादौ त्वसम्भवे व्यक्तिः शब्दार्थ इत्यत आह—अर्थैकत्वमिति। एकस्य शब्दस्यैकार्थत्वमेव युक्तं न त्वनेकार्थत्वम्, अनेकशक्तिकल्पनाप्रसङ्गात्, प्रयुक्ते शब्दे अन्यतरनिर्धारणाभावेन व्यवहारानुपपत्तेश्च। अष्टदोषदुष्टविकल्पापत्तेश्च। 'गोशब्देन सास्नादिमानभिधीयते' इत्याप्तवाक्याद्वाच्यवाचकताग्रहदशायामभिधानक्रियाकरणकर्मणो' सास्नादिमद्व्यक्ति-गोशब्दयोरभिधानक्रियाद्वारा 'ऐककर्म्यान्नियम स्यात्' इति (छ) तार्तीयीकन्याया-त्प्रथममवगतस्य सम्बन्धस्य नियमरूपस्य कदाचिद्व्यक्तिपरिहारेणाकृतिवाचित्वे बाधप्रसङ्गाच्च। ननु केवलव्यक्तेः शब्दार्थत्वे यस्यां व्यक्तौ [1]गोशब्दशक्तिग्रह. ततोऽन्यत्र तत्प्रयोगो न स्यात्। न च गोत्वजात्या सर्वव्यक्तो' क्रोडीकृत्य शक्तिग्रहान्न दोष इति वाच्यम्। जातिर्हि शब्दादप्रतीयमाना न क्रोडीकर्तुं प्रभवति। केवलव्यक्तिवाचित्वे चाशब्दार्थत्वात्सा कथं शब्दात्प्रतीयेतेत्यत आह—अविभागादिति। तादात्म्यादविनाभावाच्च जाते प्रतीति' सम्भवतीत्यर्थः। शक्तिग्रहे च जातिरुपलक्षण न तु विशेषणमिति तस्या प्रतीतिमात्रेण शब्दार्थत्वं न शङ्क्यम् 'योऽय शुक्लवासाः स देवदत्त' इतिवत्। तत्र हि उपलक्षणभूत वासोऽनभिधायैव देवदत्तोऽभिधीयते। एवमत्राप्युपलक्षणमात्रत्वान्न जातिरभिधीयते। व्यक्तय एव केवला अभिधीयन्ते। एकोपलक्षणत्वादेव व्यक्तिवाचित्वे अनेकार्थत्वदोषोऽपि निरस्त। अथवा किमेतावता श्रमेण। आकृतिविशिष्टा एव व्यक्तयोऽभिधीयन्ताम्। सूत्रञ्चैव योजनीयम्—"व्रीहीनवहन्ति" इत्यादिप्रयोगविध्यनुसाराद्व्यक्तीनामभिधेयता। आकृतिविशिष्टानामेव व्यक्तीना शब्दार्थत्वादर्थैकत्व न त्वनेकार्थता, आकृत्या व्यक्तीनामनुगमात्। आकृतेश्च व्यक्तितादात्म्यादविनाभावाद्वा प्रतीतिसत्त्वाद्विशेषणत्व युज्यते। तथा च विशेषणभूतया क्रोडीकृतासु सर्वासु व्यक्तिषु शक्तिग्रहश्चोपपद्यत इति। तदेव केवलव्यक्तीना वा जातिविशिष्टाना वाभिधेयता, न तु केवलमाकृते ॥

1 गोशब्दस्य न

आकृतिमात्रवाचित्वे बाधकमाह—

**अद्रव्यशब्दत्वात् ॥ २९ ॥**

द्रव्यम् आश्रयव्यक्तिः। तद्वृत्तिधर्मवचनः शब्दः द्रव्यशब्दः। तस्य भावस्त्त्वम्। एकार्थवृत्तित्वस्यासम्भवादिति यावत्। 'षड्गावो देयाः, द्वादश देयाः' इत्यादौ षडादिशब्दाना गोशब्देन एकार्थवृत्तित्वलक्षण सामानाधिकरण्यं गम्यते। तदेतदाकृतेरेव शब्दार्थत्वेऽनुपपन्न स्यात्, गोशब्दस्य षडादिशब्दानाञ्च जातिसख्यावचनानां भिन्नार्थवृत्तित्वात्। व्यक्तिवचनत्वे तु तेषा तदुपपद्यते। विशिष्टव्यक्तिवाचित्वे तु विशेषणभेदे सत्यपि विशेष्याभेदात्तदुपपद्यते। अतो न केवलमाकृतिवाचिता॥

आकृतिमात्रवाचित्वे बाधकान्तरमाह—

**अन्यदर्शनाच्च ॥ ३० ॥**

"यदि पशुरुपाकृत पलायेतान्य तद्वर्णं तद्वयसमालभेत" इत्यन्यशब्दो दृश्यते। यद्याकृतिरेव वाच्या, तर्ह्यन्यस्मिन्नालभ्यमानेऽपि सैवाकृतिरित्यन्यशब्दो नोपपद्येत। केवलव्यक्तिवाचित्वे तूपपद्यते। विशिष्टव्यक्तिवाचित्वेऽपि विशेष्यभेदमादाय तदुपपत्तिः। तस्मादपि नाकृतिरेव वाच्या॥

इति प्राप्ते, सिद्धान्तयति—

**आकृतिस्तु क्रियार्थत्वात् ॥ ३१ ॥**

तुशब्द पूर्वपक्षव्यावृत्तौ। आकृति गोत्वादिजाति। सैव शब्दार्थ, न तु व्यक्ति। कुत ? क्रियार्थत्वात्—आकृतेर्वाच्यत्वे सत्येव "श्येनचित चिन्वीत" इत्यादिवाक्याना श्येनसदृशाग्न्याख्यस्थण्डिलविशेषनिष्पादकचयनादिक्रियाप्रतिपादकत्वसम्भवात्, व्यक्तेर्वाच्यत्वे तदसम्भवात्। तथा हि—चे, क्विप्, इति चानुवृत्तौ 'कर्मण्यग्न्याख्यायाम्' इति सूत्रात्कर्मण्युपपदे चिनोतेरग्न्याख्यस्थण्डिलविशेषे कर्मण्येव वाच्ये क्विप्प्रत्ययो भवतीत्यर्थकात् श्येनशब्दे कर्मवाचके उपपदे चिनोते क्विप्। श्येनशब्दस्तत्सदृशे लाक्षणिक। श्येन इव चीयते श्येनचिद् अग्न्याख्यस्थण्डिलविशेष। त चिन्वीत चयनेन कुर्यात्। 'ज्योतिष्टोमेन यज्ञेन यजेत' 'टित्करण करोति' इत्यादिवत्सामान्यविशेषभावेन कथञ्चित्पुनरुक्तिपरिहार। श्येनसदृशमग्न्याख्यस्थण्डिलविशेष चयनेन निष्पादयेदित्यर्थ। श्येनसादृश्यञ्च नैकया व्यक्त्या, तदत्यये

शब्दार्थविलोपप्रसङ्गात्। नापि सर्वाभिर्व्यक्तिभि, असम्भवात्, अतीतानागताना वर्तमानानाञ्च व्यवहितान्यवहितानां सकृदुच्चारितेन श्येनशब्देन युगपत्तद्बुद्ध्यनारोहात्, सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वनियमात्, एकस्य पदस्यानेकार्थत्वापाताच्च। तथा चानन्तशक्तिकल्पनाद्युक्तदोषापातात्। न च जातेरुपलक्षणत्वान्न दोष इति वाच्यम्। एवमपि शक्त्यानन्त्यस्य तदवस्थत्वात्। तथा हि—देवनविभीतकरथावयवात्मकमक्षत्रयमेकापवरकस्थमधिकृत्य कश्चिदाह—'य एतेऽस्मिन्नपवरके [1]स्थितास्तेऽक्षशब्दवाच्या:[2]' इति। तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थितिरुपलक्षणमासीत्तथापि तदनादरेणान्यत्र स्थिता अपि व्यक्तीरक्षशब्दोऽयं स्वरूपेणैवाभिधत्ते इति भवति शक्तित्रयम्। एवमिहापि व्युत्पत्तिसमये जातेरुपलक्षणत्वेऽपि तामस्पृशन्नेव सर्वा अपि व्यक्ती: प्रातिस्विकतत्तत्स्वरूपेणैवाभिधत्ते इति शक्त्यानन्त्य दुर्वारम्। अभिधानसमये जातिसस्पर्शाभावेन शब्दान्निर्विकल्पकस्यैवापाताच्च। जात्यादिधर्मविशिष्टज्ञान हि सविकल्पकम्। न चैतद्दोषपरिहारायाभिधानसमयेऽपि जातेरुपलक्षणत्वं स्वीक्रियत इति वाच्यम्। एव तर्हि 'नागृहीतविशेषणा विशेष्यबुद्धिरुत्पद्यते' इति न्यायेन जात्यभिधानावश्यम्भावे तत एव व्यक्ते प्रतीतिसिद्धे अभिधेयत्वासम्भवात्। एतेन विशिष्टाभिधानमपि प्रत्युक्तम्। किञ्च 'गामानय' इत्युक्ते 'गोव्यक्तिषु का गौरानेया' इति भवति सशय इति न व्यक्तीनामभिधेयता, शब्दस्य निश्चयजनकत्वात्। गोसामान्यरूपजातेस्तु गोशब्दान्निश्चयात्मिका बुद्धिर्भवतीति स्यात्तस्या अभिधेयता। एव श्येनादिशब्देऽप्यूह्यम्। एवञ्च श्येनजातिसदृशाग्न्याख्यस्थण्डिलविशेषनिष्पादकचयनक्रियाद्यनुग्रहाय जातेरभिधेयता। जातिसादृश्य च तदुपस्थितव्यक्तिद्वारा॥

अथ जातिवाचित्वे उक्तबाधकान्यनूद्य निराकरोति—

**न क्रिया स्यादिति [3]चेन्नार्थान्तरे विधानं न द्रव्यमिति चेत्तदर्थत्वात्प्रयोगस्याविभागः ॥ ३२ ॥**

विधानमित्यनन्तरम् 'इति चेत्' इत्यनुषज्यते। न द्रव्यमित्यत्र तु तस्यानुषङ्गो न भवति, वाक्यान्तरेण व्यवहितत्वात्। तथा च सूत्रकारो वक्ष्यति 'व्यवायान्नानुषज्यते' इति। अतस्तत्र 'इति चेत्' इति पृथगुपात्तम्। बाधकत्रयमप्येकेनैव हेतुना परिह्रियत इति युगपत्तदनुवाद। तदर्थत्वादित्यत पूर्वं नेत्यध्याहार। तथा च, न

1. अधुना स्थिता क, घ, ग, मु पा. 2 शब्दाभिधेया. क, ग, घ, मु पा
3. चेदर्थान्तरे

क्रिया स्यादिति चेन्न तदर्थत्वात्प्रयोगस्याविभाग, नार्थान्तरे विधानमिति चेन्न तदर्थत्वात्प्रयोगस्याविभागः, न द्रव्यमिति चेन्न तदर्थत्वात्प्रयोगस्याविभाग इति त्रीणि वाक्यानि [1]सम्पन्नानि। तत्र प्रथमस्यायमर्थः—जातेर्वाच्यत्वे तत्र अवहननादिक्रिया न स्यादिति चेत्तन्न। कुत ? अवहननादिप्रयोगस्य तदर्थत्वात् व्यक्त्यर्थत्वेनैव बोधनात्। ननु तत्र व्रीह्यादिशब्दानामाकृतिवाचित्वे कथमवहननादेर्व्यक्त्यर्थता, तत्राह—अविभाग इति। न हि जातिर्नाम व्यक्तित पृथग्भूता पदार्थान्तर शब्दाद्गम्यते, किन्तु व्यक्तितादात्म्यापन्नैव। एकमेव हि वस्तु विशेषात्मना सामान्यात्मना च गम्यते। तत्र शब्दत सामान्यात्मनैव गम्यत इति सामान्यमेव शब्दार्थ। सामान्यात्मना प्रतीते विशेषवस्तुनि च क्रियासम्बन्धो न विरुध्यते, सामान्यस्य विशेषानतिरेकात्। द्वितीय तु वाक्यमेव योजनीयम्—जातेर्वाच्यत्वे 'अन्य तद्वर्णं तद्वयसम्' इत्यर्थान्तरे विधान न स्यादिति चेत्तन्न, तदर्थत्वात् इत्यादि पूर्ववत्। जातिव्यक्त्योरनतिरेकात् व्यक्त्यभिप्रायेणान्यत्वमुपपद्यत इति भाव। तृतीय त्वेव योज्यम्—आकृतेर्वाच्यत्वे 'षड्गावो देया.' इत्यादौ गवादिद्रव्य षट्त्वाद्याश्रयतयोपदिश्यमान युक्त न स्यात्। 'न द्रव्यवचनम्' इति पाठे तु गवादिद्रव्याश्रयषट्त्वादिप्रतिपादन न स्यादिति चेत्तन्न, तदर्थत्वादिति पूर्ववत्। यदा तु जातिव्यक्त्योर्भेद एवाश्रीयते, तदा जातौ प्रोक्षणादिबाधादेव लक्षणया तत्र व्यक्तिपरत्वम्। न तदर्थत्वादित्यादि त्वेव योज्यम्—प्रयुज्यत इति प्रयोग.। प्रोक्षणादिसयोगेन प्रयुज्यमानस्य गवादिपदस्य तदर्थत्वात् लक्षणया व्यक्तिवाचित्वान्नोक्तदोषत्रयम्। अविभाग. जातिव्यक्त्योरविनाभावश्च लक्षणापादक शक्यसम्बन्ध इति। तत्र 'पशुना यजेत' 'अरुणया गवा क्रीणाति' इत्यादौ यत्र करणत्वश्रवण तत्रामूर्तयोरपि जातिगुणयोर्द्रव्यपरिच्छेदद्वारा मुख्यमेव करणत्वम्। द्वारवदेव हि कारण करणमित्युच्यते। 'स्थाल्यामपो गृह्णाति' इत्यादावधिकरणत्वमपि द्रव्यस्यैव, न जाते, असम्भवात्। तथा 'विप्राय गां ददाति' इत्यादौ सम्प्रदानत्वादिकमपि द्रव्यप्रतिग्रहीतृत्वादिलक्षण जातेरमूर्तत्वान्न सम्भवतीति व्यक्तिपरतैव विप्रादिशब्दानामित्याद्यूह्यम्॥

इत्येकादशमाकृत्यधिकरणम्॥ ११ ॥

इति प्रथमाध्याये तृतीयः पादः॥

---

1. सम्पद्यन्ते ग

# चतुर्थः पादः ॥

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

प्रमाणाध्याये प्रथमपादे विध्यर्थवादमन्त्रनामधेयात्मकवेदस्य विध्यंशे प्रामाण्यं विचार्य, द्वितीये अर्थवादमन्त्राणां प्रामाण्यं विचार्य, विध्यर्थवादमन्त्रमूलकस्मृत्यादीना तृतीये प्रामाण्यं विचार्य, चतुर्थपादेऽस्मिन्नामधेयभागस्य[1] प्रामाण्य विचार्यते ।

१

तदिह "उद्भिदा यजेत" इत्याद्युदाहृत्य चिन्त्यते, किमत्रोद्भिदादिपदानां धर्मप्रामाण्यमस्ति, उत नेति ? नेति ब्रूम.। तथा हि—विध्यर्थवादमन्त्रभागाना विधानस्तुतिप्रकाशनैर्धर्मे प्रामाण्यं व्यवस्थापित प्राक्। तत्र नामधेयभागस्य किं विधिभागेऽन्तर्भावः, उतार्थवादभागे, आहोस्विन्मन्त्रभागे। आद्येऽपि नामधेयभागस्य विध्यन्तर्भावः कि साध्याभिधानात्, साधनाभिधानाद्वा, गुणविधानेनेतिकर्तव्यतान्तर्भावाद्वा, स्वरूपेणैव तदन्तर्भावाद्वा ? नाद्यः, उद्भिदादिशब्दस्य फलेष्वप्रसिद्धत्वात्। न द्वितीय, भावनाया समानपदोपात्तधात्वर्थावरुद्धत्वेन तत्र साधनान्तरसमर्पकत्वासम्भवात्। न च धात्वर्थ एव यागो नाम्ना परिच्छिद्यत इति वाच्यम्, प्रवृत्तिविशेषकरत्वाभावेन वैयर्थ्यात्। न तृतीय., उद्भिदादिरूपस्य लोके गुणत्वेनाप्रसिद्धत्वात्, 'यागेत पशून्कुर्यात्' 'उद्भिदा याग कुर्यात्' इति वाक्यभेदप्रसङ्गात्, उद्भिद्वता यागेनेत्यर्थे मत्वर्थलक्षणादोषाच्च। न [2]चतुर्थ, जुह्वादिवदङ्गविधिविधेयत्वाभावेन नामस्वरूपस्य इतिकर्तव्यतान्तर्भावानुपपत्ते। न हि "जुह्वा जुहोति" इत्यादिवत् 'नाम्ना इद कुर्यात्' इति विधिरस्ति। उद्भिदादिशब्दस्य नामत्वासम्भवाच्च। न ह्युद्भिदादिशब्दो रूढ्या कर्मणि प्रसिद्धः। नापि योगेन, ऊर्ध्वविदारणसाधनखनित्रादावेव तस्य सत्त्वात्। नापि मुख्यद्वितीय, उद्भिदादिनामधेयतः स्तुतेरनवगमात्। नापि मुख्य-

1. नामधेयस्य क, घ, ग, मु. पा.     2 तुरीय ग.

क्रिया स्यादिति चेन्न तदर्थत्वात्प्रयोगस्याविभाग, नार्थान्तरे विधानमिति चेन्न तदर्थत्वात्प्रयोगस्याविभागः, न द्रव्यमिति चेन्न तदर्थत्वात्प्रयोगस्याविभाग इति त्रीणि वाक्यानि [1]सम्पन्नानि। तत्र प्रथमस्यायमर्थ.—जातेर्वाच्यत्वे तत्र अवहननादिक्रिया न स्यादिति चेत्तन्न। कुत ? अवहननादिप्रयोगस्य तदर्थत्वात् व्यक्त्यर्थत्वेनैव बोधनात्। ननु तत्र व्रीह्यादिशब्दानामाकृतिवाचित्वे कथमवहननादेर्व्यक्त्यर्थता, तत्राह—अविभाग इति। न हि जातिर्नाम व्यक्तित पृथग्भूता पदार्थान्तर शब्दाद्गम्यते, किन्तु व्यक्तितादात्म्यापन्नैव। एकमेव हि वस्तु विशेषात्मना सामान्यात्मना च गम्यते। तत्र शब्दत· सामान्यात्मनैव गम्यत इति सामान्यमेव शब्दार्थ। सामान्यात्मना प्रतीते विशेषवस्तुनि च क्रियासम्बन्धो न विरुध्यते, सामान्यस्य विशेषानतिरेकात्। द्वितीय तु वाक्यमेव योजनीयम्—जातेर्वाच्यत्वे 'अन्यं तद्वर्णं तद्वयसम्' इत्यर्थान्तरे विधान न स्यादिति चेत्तन्न, तदर्थत्वात् इत्यादि पूर्ववत्। जातिव्यक्त्योरनतिरेकात् व्यक्त्यभिप्रायेणान्यत्वमुपपद्यत इति भाव। तृतीय त्वेव योज्यम्—आकृतेर्वाच्यत्वे 'षड्गावो देया' इत्यादौ गवादिद्रव्य षट्त्वाद्याश्रयतयोपदिश्यमान युक्त न स्यात्। 'न द्रव्यवचनम्' इति पाठे तु गवादिद्रव्याश्रयषट्त्वादिप्रतिपादन न स्यादिति चेत्तन्न, तदर्थत्वादिति पूर्ववत्। यदा तु जातिव्यक्त्योर्भेद एवाश्रीयते, तदा जातौ प्रोक्षणादिबाधादेव लक्षणया तत्र व्यक्तिपरत्वम्। न तदर्थत्वादित्यादि त्वेवं योज्यम्—प्रयुज्यत इति प्रयोग। प्रोक्षणादिसंयोगेन प्रयुज्यमानस्य गवादिपदस्य तदर्थत्वात् लक्षणया व्यक्तिवाचित्वान्नोक्तदोषत्रयम्। अविभाग जातिव्यक्त्योरविनाभावश्च लक्षणापादक शक्यसम्बन्ध इति। तत्र 'पशुना यजेत' 'अरुणया गवा क्रीणाति' इत्यादौ यत्र करणत्वश्रवण तत्रामूर्तयोरपि जातिगुणयोर्द्रव्यपरिच्छेदद्वारा मुख्यमेव करणत्वम्। द्वारवदेव हि कारण करणमित्युच्यते। 'स्थाल्यामपो गृह्णाति' इत्यादावधिकरणत्वमपि द्रव्यस्यैव, न जाते, असम्भवात्। तथा 'विप्राय गा ददाति' इत्यादौ सम्प्रदानत्वादिकमपि द्रव्यप्रतिग्रहीतृत्वादिलक्षण जातेरमूर्तत्वान्न सम्भवतीति व्यक्तिपरतैव विप्रादिशब्दानामित्याद्यूह्यम्॥

इत्येकादशमाकृत्यधिकरणम्॥ ११॥

इति प्रथमाध्याये तृतीयः पादः॥

---

1. सम्पद्यन्ते ग

# चतुर्थः पादः ॥

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

प्रमाणाध्याये प्रथमपादे विध्यर्थवादमन्त्रनामधेयात्मकवेदस्य विध्यंशे प्रामाण्यं विचार्य, द्वितीये अर्थवादमन्त्राणां प्रामाण्य विचार्य, विध्यर्थवादमन्त्रमूलकस्मृत्यादीना तृतीये प्रामाण्यं विचार्य, चतुर्थपादेऽस्मिन्नामधेयभागस्य[1] प्रामाण्य विचार्यते ।

१

तदिह "उद्भिदा यजेत" इत्याद्युदाहृत्य चिन्त्यते, किमत्रोद्भिदादिपदाना धर्मप्रामाण्यमस्ति, उत नेति ? नेति ब्रूम । तथा हि—विध्यर्थवादमन्त्रभागाना विधानस्तुतिप्रकाशनैर्धर्मे प्रामाण्य व्यवस्थापित प्राक् । तत्र नामधेयभागस्य किं विधिभागेऽन्तर्भावः, उतार्थवादभागे, आहोस्विन्मन्त्रभागे । आद्येऽपि नामधेयभागस्य विध्यन्तर्भावः कि साध्याभिधानात्, साधनाभिधानाद्वा, गुणविधानेनेतिकर्तव्यतान्तर्भावाद्वा, स्वरूपेणैव तदन्तर्भावाद्वा ? नाद्य', उद्भिदादिशब्दस्य फलेष्वप्रसिद्धत्वात् । न द्वितीयः, भावनाया. समानपदोपात्तधात्वर्थावरुद्धत्वेन तत्र साधनान्तरसमर्पकत्वासम्भवात् । न च धात्वर्थ एव यागो नाम्ना परिच्छिद्यत इति वाच्यम्, प्रवृत्तिविशेषकरत्वाभावेन वैयर्थ्यात् । न तृतीय, उद्भिदादिरूपस्य लोके गुणत्वेनाप्रसिद्धत्वात्, 'यागेन पशून्कुर्यात्' 'उद्भिदा याग कुर्यात्' इति वाक्यभेदप्रसङ्गात्, उद्भिद्वता यागेनेत्यर्थे मत्वर्थलक्षणादोषाच्च । न [2]चतुर्थ, जुह्वादिवदङ्गविधिविधेयत्वाभावेन नामस्वरूपस्य इतिकर्तव्यतान्तर्भावानुपपत्ते । न हि "जुह्वा जुहोति" इत्यादिवत् 'नाम्ना इद कुर्यात्' इति विधिरस्ति । उद्भिदादिशब्दस्य नामत्वासम्भवाच्च । न ह्युद्भिदादिशब्दो रूढ्या कर्मणि प्रसिद्ध । नापि योगेन, ऊर्ध्वविदारणसाधनखनित्रादावेव तस्य सत्त्वात् । नापि मुख्यद्वितीय, उद्भिदादिनामधेयतः स्तुतेरनवगमात् । नापि मुख्य-

1. नामधेयस्य क, घ, ग, मु. पा. 2. तुरीय . ग

तृतीय , वैदिकानां तत्र मन्त्रप्रसिद्ध्यभावात् । अतो नामधेयभागस्य न धर्मे प्रामाण्यमिति पूर्व. पक्षः ।

सिद्धान्तयति—

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥**

समाम्नायस्य समस्तस्य वेदस्य ऐदमर्थ्यम् अस्मै धर्मप्रमितिजननायायमिदमर्थं अर्थेन नित्यसमास., तस्य भावः ऐदमर्थ्यम् । उक्तम्—अध्ययनविधिवशादर्थवादाधिकरणे व्यवस्थापितम् । तस्मात्—तथा व्यवस्थापितत्वात् । उद्भिद्वलभिदादिसर्वनामधेयमपि तदर्थं धर्मप्रमितिजननार्थं स्यात् । ततश्चाध्ययनविधिपरिगृहीतस्य नामधेयभागस्यापि विध्येकवाक्यतया प्रामाण्येन भाव्यमित्येतावदिहाधिकरणे स्थितम् । तदेतदर्थवादाधिकरणे विचारितमपि करिष्यमाणगुणविधिनामधेयविचाराय स्मार्यते । यदि हि उद्भिदादिपदानां प्रामाण्यमविचार्यैव गुणविधिनामधेयविचार क्रियेत, तर्हि तद्विचारस्य स्वातन्त्र्यापत्त्या प्रमाणाध्यायासङ्गति स्यात् । नामधेयप्रामाण्यविचारपूर्वकमेव गुणविधिनामधेयविचारे तु विचारितनामधेयप्रामाण्यप्रतिष्ठार्थत्वाद्गुणविधिनामधेयविचारस्य नासाङ्गत्यमिति फलति । अतोऽत्र नामधेयभागस्य व्यवस्थापितमपि धर्मप्रामाण्यमिहावश्य स्मारणीयम् । तदेतत् 'उक्तम्' इत्यनेन ध्वनितम् । तस्य हि उक्त न विस्मर्तव्यमित्यर्थ ॥

इति प्रथमं नामधेयप्रामाण्याधिकरणम् ॥ १ ॥

२

तदेवं नामधेयभागस्य विध्येकवाक्यतया सिद्धे प्रामाण्ये "उद्भिदा यजेत" इत्यत्र भवत्येषा चिन्ता—किमुद्भिच्छब्दो गुणविधि ? उत नामधेयम् ? इति । गुणविधिरिति ब्रूम । नामधेयत्वे हि यजिना यावती प्रवृत्ति , तावत्येव नाम्नापि भवति न ततोऽतिशयितेति नाम्नो नैरर्थक्य स्यात् । अत. उद्भिनत्ति ऊर्ध्वं विदारयतीति व्युत्पत्त्या उद्भिच्छब्दस्य खनित्रादिपरत्वमाश्रित्य प्रकृतज्योतिष्टोमयागानुवादेन खनित्रलक्षणगुणविधिरिति युक्तमाश्रयितुम् । प्रकृतो हि ज्योतिष्टोमयागः, ताण्डकब्राह्मणे ज्योतिष्टोमानन्तरमेव उद्भिदाद्याम्नानात् । यद्यपि, ताण्डके एकाहब्राह्मणे प्रथमेऽध्याये "प्रजापतिर्वा इदमेक आसीत्" इत्यादिना ज्योतिष्टोमं प्रस्तुत्य, "एष वाव प्रथमो यज्ञो

यज्ञानाम्" इति तस्य प्राथम्यं विधाय, "गौश्चाश्वतरश्च" इत्यादिना दक्षिणाविधानेनोपसंहृत्य, "अथैष गौ. अथैष आयुः" इत्यादिना गवायुर्विश्वजिदाद्येकत्रिकान्तान्क्रतूननुक्रम्य, द्वितीयाध्याये व्रात्यस्तोमादींश्चातुर्मास्यसोमान्तान्क्रतूननुक्रम्य, तृतीयेऽध्याये उपहव्यादीन्द्विरात्रान्तान्क्रतूननुक्रम्य, चतुर्थेऽध्याये "अथैष राट्" इत्यादिना राड्विराडौपशदपुनःस्तोमचतुष्टोमान्क्रतूननुक्रम्य, सप्तमखण्डिकायाम् "असुराणां वै बलः" इत्यादिना उद्भिद्बलभिदावनुक्रान्तौ। अतः उद्भिद्वाक्ये यजिना बहुव्यवहितस्य ज्योतिष्टोमस्य कथमनुवाद इति, तथापि गवायुरादीनामप्यत्रोदाहरणत्वान्न दोष। नन्वेवमुद्भिच्छब्दस्य गुणविधित्वे तत्र यागस्य साध्यत्वेनान्वयात्पशुकामपदस्यानन्वयापत्तिरिति चेत्—तर्हि ज्योतिष्टोममाश्रित्य उद्भिद्गुणस्य फलाय विधिरस्तु। तत्र तृतीयानिर्देशात्करणभूतमुद्भित्फले विधीयते। तच्च कुत्र करणभूतमित्यपेक्षायां सन्निधानात्प्रकृतयाग प्रतीति गम्यते। ततश्च ज्योतिष्टोमयागसाधनेन उद्भिदा पशून् भावयेदिति वचनव्यक्ति. सम्पद्यते[1] इति प्राप्ते, सिद्धान्तयति—

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

अपि वेति पूर्वपक्षव्यावृत्तौ। उद्भिदेति न गुणविधि., किन्तु नामधेय स्यात्। यत्-यत कारणात्। नामधेयत्वे सति, उत्पत्तौ—"उद्भिदा यजेत" इति विधिवाक्ये, अपूर्व-ज्योतिष्टोमाद्यागान्तरं विधेयतया लभ्यते। गुणविधित्वे तु ज्योतिष्टोमयागोऽनूद्येतेति यागान्तरविधिर्न लभ्येत। एवञ्च नामधेयत्वे आनर्थक्यमिति निरस्तम्। ननु लोकवेदयोरुद्भिच्छब्दस्य कर्मणि कथञ्चिदप्यप्रसिद्धत्वेन नामधेयत्वासम्भवाद्गुणविधानमेव युक्तमित्यत आह—अविधायकत्वादिति। सति नामत्वसम्भवे गुणविधायकत्वासम्भवादित्यर्थ। तथा हि—फलाय गुणविधौ[2] धातोर्न विधेयसमर्पकत्वम्, धात्वर्थस्याविधेयत्वात्। नाप्युद्देश्यसमर्पकत्वम्, धात्वर्थोद्देशेन कस्यचिदविधानात्। अतो न धातो· स्वार्थमुच्चारणम्। किन्तूद्भित्पशुसम्बन्धविधानाय विधिप्रत्ययस्यावश्यकत्वे केवलस्य तस्य प्रयोगानर्हत्वात्तदर्थं धातूच्चारणमित्यत्यन्तपारार्थ्यं यजेः प्रसज्येत। विधायकप्रत्ययस्य समानपदोपात्तसन्निहितधात्वर्थमुल्लङ्घ्य पदान्तरोपात्तगुणविधायकत्वे विधिविधेययोर्विप्रकर्षश्चापद्येत। यद्यपि कर्मणि गुणविधिपक्षे धातोरुद्देश्य-

1. सम्पन्ना ग    2 गुणेति नास्ति ग.

समर्पकत्वेन विध्युपयोगान्नात्यन्तपारार्थ्यम्, तथापि विधिप्रत्ययस्य समानपदोपात्त-धात्वर्थमुल्लङ्घ्य पदान्तरोपात्तगुणविधायकत्वात्स्यादेव किञ्चित्पारार्थ्यं विप्रकर्षः। पशुकामपदानर्थक्यं च दुर्वारमेव। न चैवं सति "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादौ फलाय गुणविधिः 'व्रीहिभिर्यजेत" इत्यादौ कर्मणि गुणविधिश्च न स्यादिति वाच्यम्। दधिव्रीह्यादिशब्दाना निरूढत्वेन कथञ्चिदपि धातुसामानाधिकरण्यासम्भवेन तथाश्रयणेऽप्युद्भिच्छब्दस्य उद्भिनत्ति पशून्प्रकाशयतीति व्युत्पत्त्या यागवाचकस्य धातुसामानाधिकरण्येन नामधेयत्वसम्भवेन गुणविधानासम्भवात्। धातूनामनेकार्थ-त्वादुपसर्गवशाच्च उत्पूर्वकभिदेः प्रकाशनार्थत्वात्, "उद्भिन्नविद्युद्वलयो घनस्ते' इत्यादि-प्रयोगदर्शनाच्च। न च धातुपारार्थ्यादिदोषाभावादुद्भिद्वता यागेनेति गुणविशिष्टकर्म-विधि किं न स्यादिति वाच्यम्, मत्वर्थलक्षणादोषप्रसङ्गात्। "सोमेन यजेत" इत्यादौ सोमादिशब्दानामर्थान्तरेऽत्यन्तरूढाना यागे कथञ्चिदप्यप्रसिद्धत्वादप्रसिद्ध-कल्पनातो वर प्रसिद्धार्थद्वारेण लक्षणाश्रयणमित्यगत्या मत्वर्थलक्षणामाश्रित्य सोमवता यागेन समीहितं कुर्यादिति विशिष्टविधानमङ्गीकृतम्। इह त्ववयवद्वारेण कर्मणि प्रसिद्धेर्नामधेयत्वमेव युक्तम्। नन्वत्र किमुद्भित्त्वेन यागस्य बोध, उत उद्भिन्नाम-कत्वेन? नाद्य., उद्भित्त्वं हि न जाति, लौकिकानुगतव्यवहाराभावात्। नापि पशूद्भेदनसाधनत्वम्। तर्हि पशूद्भेदनसाधनेन यागेन पशून्भावयेदित्यर्थपर्यव-सानेन पौनरुक्त्यापातात्। न द्वितीय, उद्भिन्नाम्न. उद्भिच्छब्दानभिहितत्वेन शाब्दबोधे प्रकारत्वानुपपत्ते, शब्दोपस्थितस्यैवान्वयबोधविषयत्वनियमादिति चेत्—सत्यम्, उद्भिन्नामकत्वेन यागस्य बोधः। उद्भित्पदं हि स्वेना-नभिहितमपि प्रत्यक्षश्रुतत्वमात्रेण स्ववाच्यकर्मविशेषमन्यस्माद्व्यावर्तयद्विशेषणभाव-मनुभवति, शब्दोपस्थितस्यैवान्वयबोधविषयत्वनियमस्य संज्ञाशब्दव्यतिरिक्तविषय-त्वात्। न चैव सति पशूद्भेदनसाधनत्वस्य शाब्दप्रतीतिविषयत्वाभावात्तदर्थकयोगा-श्रयणवैयर्थ्यमिति वाच्यम्, उद्भिच्छब्दस्य योगेन खनित्रादिलक्षणगुणविध्यर्थत्वस्यैव प्रसक्तौ योगस्य कर्मण्यपि समानत्वान्न गुणविधित्वनिर्णायकतेति दर्शयितु योगोप-पादनोपपत्तेरित्यन्यत्र विस्तर। न च नामधेयत्वे [1]उद्भिच्छब्दस्यानर्थक्यमिति वाच्यम्, कर्मभेदाख्यापनार्थत्वस्य[2] सूत्रे 'यदुत्पत्तावपूर्वम्' इत्यनेन दत्तोत्तरत्वात्।

---

1. उद्भित्पदस्य क, ग, घ, मु. पा 2. व्याख्यानार्थत्वस्य. क, मु पा.

यथा चैतत्तथा द्वितीयस्य द्वितीये 'सञ्ज्ञा चोत्पत्तिसंयोगात्' इत्यत्र (व) स्फुटीभविष्यति। वस्तुतस्तु ताण्डकतलवकारवाजसनेयकादिब्राह्मणेषु नाम्नामेवञ्जातीयकाना निर्वचनं बहुलमुपलभ्यते। तत्र ताण्डके तावत् "यद्वै तद्देवा असुरानेभ्यो लोकेभ्योऽगोपयत्तदेव गोर्गोत्वम्" "अथैष आयुरायुषा वै देवा असुरानयुवत यद्विश्वमजयत्तस्माद्विश्वजित्। स एतमभिजितमपश्यत्तेनानभिजितमभ्यजयत्" इत्यादि, तलवकारब्राह्मणे च "बलभिदैव बलमभिदन्" "उद्भिदा गा उदसृजन्त" "यत्पृतनामजयस्तत्पृतनाजितः पृतनाजित्त्वम्" "यदुपाह्वयत तदुपहव्यस्योपहव्यत्वम्" इत्यादि, वाजसनेयके च "स वै दक्षो नाम। तद्यदनेन सोऽयजत तस्माद्दाक्षायणयज्ञ इत्याख्या। तदु हैके वसिष्ठयज्ञ इत्याचक्षते। स वा एकेन नाम्ना वसिष्ठस्तमेनमन्वाचक्षते" इत्यादि। तैत्तिरीयके च "तं वा एतं वाजपेय इत्याहु। वाजाप्यो वा एष.। वाजं ह्येतेन देवा ऐप्सन्" "यद्व्यहन्, तद्विघनस्य विघनत्वम्" इत्यादि। ततश्च यत्रैवं निर्वचन नोपलभ्यते, तद्विषयेयमधिकरणप्रवृत्तिः॥

इति द्वितीयमुद्भिदधिकरणम्॥ २॥

३

"चित्रया यजेत पशुकाम." "त्रिवृद्बहिष्पवमानम्" "पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि" इत्यत्र किं चित्राबहिष्पवमानाज्यपृष्ठशब्दा गुणविधयः? उत नामधेयानि? इति संशय.। तत्रोद्भिदादिशब्दस्य यौगिकस्य कर्मण्यपि सम्भवद्योगस्य कर्मनामधेयत्व युज्यते। चित्रादिशब्दास्तु व्रीह्यादिशब्दवद्रूढ्यार्थान्तरवाचिनः कथं कर्मनामता भजेरन्? अतो गुणविधय एवैते। तथा हि—"चित्रया यजेत" इत्यत्र स्त्रीत्वस्य प्राणिन्येव मुख्यत्वात्तदनुसारेण प्राणिद्रव्यकाग्नीषोमीयपशुयागविषयकत्व वाक्यस्य गम्यते, न तु "दधि मधु घृतमापो धाना" इत्यादिवाक्यलब्धप्रकृतयागपरत्व कर्मान्तरपरत्व वा। ततश्च बहुरूपत्वलक्षणचित्रत्वं स्त्रीत्व करणकारकमिति त्रीण्यग्नीषोमीययागानुवादेन विधीयन्ते। न चैव सति विध्यावृत्तिलक्षणवाक्यभेद. स्यादिति वाच्यम्, चित्रत्वस्त्रीत्वविशिष्टकारकस्य पृथग्विधिव्यापार विनैवैकपदोपादानतो लाभात्। न चैवमपि यागे चित्रत्वस्त्रीत्वविशिष्टकारकस्य फले यागस्य च विधानाद्वाक्यभेदो दुष्परिहर इति वाच्यम्, पशुयाग कुर्वतोऽवश्य पश्वर्जनेच्छावत्त्वेन पशुकामपदस्य तदनुवादत्वोपपत्ते.। "त्रिवृद्बहिष्पवमानम्" इत्यत्र च 'सदसो

बहिर्व्यंजनादिना त्रिगुण वायु सम्पादयेत्' इति गुणविधित्व स्तुतावुपपाद्यम्। "पञ्चदशान्याज्यानि" इत्यत्र च आज्यस्य संसर्गिद्रव्यस्य स्वत. सङ्ख्यायोगासम्भवात्पञ्चदशपात्रनिहितत्वेन पञ्चदशपलादिपरिमितत्वेन वा सङ्ख्यायोगो भवति। आज्यस्य च स्वरूपेण स्तोत्राङ्गत्वासम्भवात्सन्निधानेन तद्वाच्यम्। तच्च सन्निधापन विना न सम्भवतीति पञ्चदशत्वसङ्ख्याकान्याज्यानि स्तोत्रकाले सन्निधापयेदिति पर्यवसानात्सुगम गुणविधानम्। "सप्तदशानि पृष्ठानि" इत्यत्रापि स्तोत्रकाले सप्तदश पुरुषाः स्वस्वपृष्ठानि प्रदर्शयेयुरिति स्तोत्रसाधनत्वमुपपाद्यम्। एषु च त्रिवृत्त्वादिविशिष्टपवमानादिविधानान्न वाक्यभेदः। एवं च "बहिष्पवमानेन स्तुवते" "आज्यै. स्तुवते" "पृष्ठैः स्तुवते" इति वाक्येषु बहिष्पवमानादिपद प्रदर्शितगुणवाक्यप्राप्तगुणानुवादकमेव, न तु नामधेयमिति प्राप्ते सिद्धान्तयति—

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ २ ॥

नामधेय स्यादित्यनुवर्तते। यस्मिन्—"चित्रया यजेत" इत्यादिवाक्ये गुणोपदेश -अनेकगुणविधानं सम्भाव्यते, तत्र वाक्यभेदप्रसङ्गेन तस्यायुक्तत्वान्नामधेयं स्यात्। गुणविधित्वे बाधकमुक्त्वा नामधेयत्वे साधकमाह—प्रधानतोऽभिसम्बन्ध इति। प्रधानेन धात्वर्थेन अभिसम्बन्ध' सामानाधिकरण्य यत, यतश्च प्रधानेन धात्वर्थेन अभिसम्बन्ध वाचकत्वम् अन्वाख्यानार्थवादतो गम्यत इत्यर्थ। तथाहि— "चित्रया यजेत" इत्यत्र गुणविधिरिति वदन् प्रष्टव्य.—किं पश्वनुवादेन चित्रत्वस्त्रीत्वविधि ? उत यागानुवादेन तयोर्विधि. ? उत पशुयागानुवादेन तदुभयविशिष्टकारकविधि ? नाद्यद्वितीयौ, वाक्यभेदप्रसङ्गात्, अग्नीषोमीयपशौ केवललोहितत्वलोहितसारङ्गत्वकृष्णसारङ्गत्वविधिभिर्विरोधप्रसङ्गाच्च। विकल्पस्य चाष्टदोषदुष्टत्वाद् अग्नीषोमीययागस्योत्पत्तिशिष्टपुंस्त्वविशिष्टपशुलक्षणकारकावरुद्धत्वेन तत्र स्त्रीत्वादिविधानानुपपत्तेश्च। अत एव न तृतीय, उत्पत्तिशिष्टकारकान्तरावरुद्धत्वादुभयविशिष्टकारकविधाने गौरवाच्च। पशुकामपदस्यानर्थक्यप्रसङ्गाच्च। न चाय द्रव्यार्जनाङ्गपशुकामानुवाद इति युक्तम्, तदनुवादत्वस्य स्वर्गकामाधिकरणे निराकरिष्यमाणत्वात्, अग्नीषोमियययागगुणविधित्वे "दधिमधुघृतमापो धाना भवन्ति" इति प्रकृतदध्यादियागातिक्रमापत्तेश्च। अतश्चित्रापदस्य प्रकृतदध्यादिविचित्रद्रव्यकेष्टिनामधेयत्वमेव युक्तम्।

"त्रिवृद्बहिष्पवमानम्" इत्यत्रापि त्रिवृत्त्वबहिष्पवमानानामनेकपदोपात्तानां विशिष्टप्रतिपत्तिनियमाभावे सति विध्यन्वयस्यापेक्षितत्वेन त्रिवृद्बहिष्पवमानानां परस्परसम्बन्ध विनैव स्वातन्त्र्येण विधिसम्बन्धार्थं त्रयविधानेन वाक्यभेदापत्तेर्न गुणविधिः। अतो बहिष्पवमानशब्देन स्तोत्रमनूद्य त्रिवृत्त्वमात्रस्य विधिरिति वक्तव्यम्। तच्च "बहिष्पवमानेन स्तुवते" इत्युत्पत्तिवाक्ये बहिष्पवमानशब्दस्य नामधेयत्वे सत्येव सङ्गच्छते, नन्यथा। उत्पत्तिवाक्येऽस्मिन् बहिष्पवमानशब्दस्य नामधेयत्वाभावे हि उत्पन्नं स्तोत्रं गुणवाक्यगतबहिष्पवमानशब्द' कथमनुवदितुं शक्नुयात्[1]। एवम "पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि" इत्यत्रापि "आज्यै. स्तुवते" "पृष्ठै स्तुवते" इत्याज्यपृष्ठशब्दकत्वेन श्रुतानि स्तोत्राण्यनूद्य पञ्चदशत्वसप्तदशत्वयोर्विधानमूह्यम्। तदेव चित्राबहिष्पवमानाज्यपृष्ठशब्दाना नामधेयत्वे "चित्रया यजेत" "बहिष्पवमानेन स्तुवते" "आज्यै' स्तुवते" "पृष्ठे स्तुवते" इति तृतीयानिर्देशगम्यं भावनाकरणीभूतयजिस्तुतिसामानाधिकरण्यमप्यनुगृहीतं भवति। शक्नुवन्ति च चित्रादिशब्दा. कर्मण्यपि योगेन वर्तितुम्।

तथाहि—चित्राशब्दस्तावद्दध्यादिविचित्रद्रव्यकत्वलक्षणयोगेन इष्टिविशेषे वर्तत इति प्राञ्चः। वस्तुतस्तु—तैत्तिरीयके चित्रेष्टौ दध्यादिद्रव्याणि न श्रुतानि, किन्तु "अग्नये दात्रे पुरोडाशमष्टाकपाल निर्वपेत्" इत्युपक्रम्य "दधि मधु घृतमापो धानाः" इत्यादिना इष्ट्यन्तर एव विहितानि। चित्राशब्दश्च तत्र प्रकारान्तरेण निरुक्तः "यद्वा अस्या विश्व भूतमधिप्रजायते तेनेय चित्रा" इति। चीयते द्विपाच्चतुष्पात्पशुलक्षणं सर्वं प्राणिजातमस्यामिष्टौ साध्यसाधनभावसम्बन्धेन वर्तत इति व्युत्पत्त्येत्यर्थ.। दध्यादिविचित्रद्रव्यकत्वयोगाश्रयणे तु शाखान्तरमन्वेषणीयम्। पवमानसोमदेवत्यमन्त्रसाध्यत्वात्सदसो बहि क्रियमाणत्वाच्च बहिष्पवमान. स्तोत्रम्। यैर्वा इमाँल्लोकानाजयस्तान्याज्यानि स्तोत्राणि। आङ्पूर्वाज्जयतेरौणादिकं रूपम्। यद्वा आजिर्गन्तव्योऽवधि काष्ठेति पर्याय। येषु निमित्तेषु देवा परस्परं कलहायमाना गिरिमेक काष्ठा कृत्वा ये तामग्रे धावन्त प्रतिपद्यन्ते तेषामिमानि स्तोत्राणीति समयं कृत्वा धावन्त कतिपये देवा प्रत्यपद्यन्त तान्याज्यानि। आजिमर्हन्तीत्यर्थे च्छान्दसो य'। एव हि तलवकारब्राह्मणे "त एतान्याज्यानि स्तोत्राण्यपश्यन्" इत्युपक्रम्य श्रूयते

1 शक्यम् ग

"यदिमान् लोकानाजयन् तदाज्यानामाज्यत्वम्" इति, "तेऽब्रुवन्, आजिमेपामयाम गिरिं काष्ठां कृत्वेति यदब्रुवन्नाजिमेपामयामेति तदेषा द्वितीयमाज्यत्वम्" इत्यादि द्वितीय निर्वचनमित्यर्थः। ताण्डकब्राह्मणे "आपो वा ऋत्वियमार्च्छन् तासा वायु' पृष्ठे व्यवर्तत" इत्यार्तवयुक्तानामपां पृष्ठे वायो' स्पर्शनं निमित्तमुपक्रम्य वामदेव्यतो रथन्तरादिपृष्ठानामुत्पत्तिरनुक्रान्ता। ततश्च स्पर्शाज्जन्यत इति पृष्ठमिति व्युत्पाद्यम्। "तिथपृष्ठ" इत्यादिना औणादिकस्थप्रत्यय. सकारलोपश्च। अतश्चित्रादिपदानि नामधेयानीति स्थितम्॥

इति तृतीय चित्राधिकरणम्॥ ३ ॥

४

"अग्निहोत्रं जुहोति" "आघारमाघारयति" इति श्रूयते। तत्राग्निहोत्रपद-माघारपदञ्च गुणविधिर्नामधेय वेति सशय । तत्र गुणविधायकत्वमुद्भिदादिपदाना यौगिकाना मत्वर्थलक्षणादोषान्निराकृत्य कर्मणि योगेन सम्भवद्वृत्तिकत्वात्कर्मनाम-धेयत्वं साधितम्। तदेतदत्र विपरीतम्, मत्वर्थलक्षणाभावेन गुणविधित्वे बाधका-भावात्कर्मनामत्वे बाधकसत्त्वाच्च। तथाहि—हूयत इति होत्र पयोदध्यादि द्रव्यम्। 'हुयामाश्रुभसि' इत्यादिना त्रन्प्रत्यय.। अग्नये होत्रमस्मिन्निति बहुव्रीहिणैव मत्वर्थस्य लाभान्न मत्वर्थलक्षणा। 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहि, 'कण्ठेकाल.' 'उरसिलोमा' 'सच्छास्त्रजन्मा हि विवेकलाभ' इत्यादिवत्। ततश्चाग्न्युद्देश्यकपयोदध्यादिहूयमानद्रव्यकहोमोऽवगत । तत्राग्निहोत्रपदे[1] होमो न विधेय, जुहोतिनैव तल्लाभात्। नापि पयोदध्यादि द्रव्यम्, "पयसा जुहोति" इत्यादिभिस्तल्लाभात्। अत उपसर्जनीभूतोऽप्यग्निरेव विधेय इति प्राञ्च । वस्तुतस्तु होत्रशब्दो भावसाधन । अग्नये होत्र होम अग्निहोत्रम्। यद्वा हूयते यस्मिन्कर्मणि तद्धोत्रम्, अग्नये होत्रमग्निहोत्रम्। प्रकृतिविकारभाव एव चतुर्थीसमासविधावपि 'सुप्सुपा' इति समास । 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेपु' इति वार्तिकव्याख्यानावसरे 'धर्माय नियमो धर्मनियम' इति पातञ्जलभाष्ये चतुर्थीसमासप्रदर्शनात् व्यक्तोक्तत्वाच्च कैयटादिभि । ततश्च मत्वर्थ-लक्षणा विनैव गुणविधिसम्भव । बहुव्रीह्याश्रयणे तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति

1 पदेन ग

बहुव्रीहिस्वरेण अग्निशब्दे इकारस्य उदात्तत्वे सतिशिष्टस्वरेणावशिष्टानामचामनुदात्तत्वे ओकारस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वे रेफादकारस्य 'स्वरितात्संहितायामनुदात्तानाम्' इति प्रचयः स्यात्। सुप्सुपा' इति समासाश्रयणे तु समासस्य' इत्यन्तोदात्त भवति। अन्तोदात्तमेव चाग्निहोत्रपद प्रयुञ्जते तैत्तिरीयादय इत्यन्यदेतत्।

प्रकृतमनुसरामः। अग्निहोत्रपदस्य नामधेयत्वे कर्मणो विधेयस्यारूपत्व स्यात्। द्रव्यदेवते हि यागस्य रूपम्, देवतोद्देश्यकद्रव्यत्यागात्मकत्वाद्यागस्य। तत्र द्रव्यं यद्यपि "पयसा जुहोति" इत्यादिभिः प्राप्तम्। देवता तु नामधेयत्वे सति न प्राप्नोतीत्यरूपत्व कर्मण प्रसज्येत। न च "यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रात" इति वाक्याभ्यां देवतालाभान्नारूपत्वमिति वाच्यम्। तयोर्हि वाक्ययो' किमग्न्यादयो गुणा[1] विधीयन्ते, उताग्निप्रजापत्योः सूर्यप्रजापत्योश्च समुच्चितयोर्विधि', उत तयो· समुच्चय, उताग्निसमुच्चितस्य सूर्यसमुच्चितस्य च प्रजापतेर्विधानम्, उत प्रजापतिमात्रविधानम्? नाद्यद्वितीयौ, वाक्यभेदात्। न तृतीय·, चशब्दार्थस्य समुच्चयस्य स्वातन्त्र्येणोपस्थित्यभावेन विशेष्यत्वानुपपत्ते। न चतुर्थ·, "पञ्चदशान्याज्यानि" इत्यत्र सङ्ख्याविशिष्टाज्यानामिव समुच्चयविशिष्टप्रजापतेरपि विधानायोगात्। न पञ्चम', प्रजापतिमात्रविधौ हि 'अग्नये' इत्यस्य 'सूर्याय' इत्यस्य च विधित्वासम्भवादनुवादत्व वक्तव्यम्। तच्च न सम्भवति, प्रापकाभावात्। न च "अग्निर्ज्योतिः" "सूर्यो ज्योतिः" इति मन्त्रवर्णतस्तत्प्राप्तिरिति वाच्यम्। प्रबलब्राह्मणगतचतुर्थ्युपात्तदेवतावरुद्धे कर्मणि दुर्बलमन्त्रवर्णतस्तद्विरुद्धदेवतानिवेशायोगात्। न च प्रजापतिदेवताके कर्मणि कथमग्निसूर्यप्रकाशनसमर्थयोर्मन्त्रयोर्निवेशसम्भव इति वाच्यम्। 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति (श) तार्तीयीकाधिकरणन्यायेन वाचनिकविनियोगबलेन प्रजापतिलक्षकतया तदुपपत्ते·, प्रजापतिमात्रविधौ "यत्सूर्याय प्रजापतये" इति पुनर्विधानवैयर्थ्याच्च। न च "यदग्नये च प्रजापतये च सायम्" इत्येवोच्यमाने प्रातर्होमे प्रजापतिदेवता न स्यात्, "यत्सूर्याय" इत्युच्यमाने सायंहोमे न स्यादित्युभयोद्देशेन तद्विधिरिति वाच्यम्। योऽयं होम स चेत्सायं तर्हि 'प्रजापतये' इति

1 गुणाश्चत्वार. ङ, घ, ग, मु पा.

"यदिमान् लोकानाजयन् तदाज्यानामाज्यत्वम्" इति, "तेऽब्रुवन्, आजिमेपामयाम गिरिं काष्ठां कृत्वेति यदब्रुवन्नाजिमेपामयामेति तदेपा द्वितीयमाज्यत्वम्" इत्यादि द्वितीय निर्वचनमित्यर्थ.। ताण्डकब्राह्मणे "आपो वा ऋत्विजमार्च्छन् तासा वायुः पृष्ठे व्यवर्तत" इत्यार्तवयुक्तानामपां पृष्ठे वायो. स्पर्शनं निमित्तमुपक्रम्य वामदेव्यतो रथन्तरादिपृष्ठानामुत्पत्तिरनुक्रान्ता। ततश्च स्पर्शाज्जन्यत इति पृष्ठमिति व्युत्पाद्यम्। "तिथपृष्ठ" इत्यादिना औणादिकस्थप्रत्यय' सकारलोपश्च। अतश्चित्रादिपदानि नामधेयानीति स्थितम्॥

## इति तृतीय चित्राधिकरणम्॥ ३॥

४

"अग्निहोत्रं जुहोति" "आघारमाघारयति" इति श्रूयते। तत्राग्निहोत्रपदमाघारपदञ्च गुणविधिर्नामधेयं वेति सशय। तत्र गुणविधायकत्वमुद्भिदादिपदानां यौगिकाना मत्वर्थलक्षणादोषान्निराकृत्य कर्मणि योगेन सम्भवद्वृत्तिकत्वात्कर्मनामधेयत्वं साधितम्। तदेवदत्र विपरीतम्, मत्वर्थलक्षणाभावेन गुणविधित्वे बाधकाभावात्कर्मनामत्वे बाधकसत्त्वाच्च। तथाहि—हूयत इति होत्र पयोदध्यादि द्रव्यम्। 'हुयामाश्रुभसि' इत्यादिना त्रन्प्रत्ययः। अग्नये होत्रमस्मिन्निति बहुव्रीहिणैव मत्वर्थस्य लाभान्न मत्वर्थलक्षणा। 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहि', कण्ठेकाल.' 'उरसिलोमा' 'सच्छास्त्रजन्मा हि विवेकलाभः' इत्यादिवत्। ततश्चाग्न्युद्देश्यकपयोदध्यादिहूयमानद्रव्यकहोमोऽवगत। तत्राग्निहोत्रपदे[1] होमो न विधेय., जुहोतिनैव तल्लाभात्। नापि पयोदध्यादि द्रव्यम्, "पयसा जुहोति" इत्यादिभिस्तल्लाभात्। अत उपसर्जनीभूतोऽप्यग्निरेव विधेय इति प्राञ्च.। वस्तुतस्तु होत्रशब्दो भावसाधन। अग्नये होत्रं होम अग्निहोत्रम्। यद्वा हूयते यस्मिन्कर्मणि तद्धोत्रम्, अग्नये होत्रमग्निहोत्रम्। प्रकृतिविकारभाव एव चतुर्थीसमासविधावपि 'सुप्सुपा' इति समास। 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेपु' इति वार्तिकव्याख्यानावसरे 'धर्माय नियमो धर्मनियम' इति पातञ्जलभाष्ये चतुर्थीसमासप्रदर्शनात् व्यक्तोक्तत्वाच्च कैयटादिभि। ततश्च मत्वर्थलक्षणा विनैव गुणविधिसम्भव। बहुव्रीह्याश्रयणे तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति

1 पदेन ग

बहुव्रीहिस्वरेण अग्निशब्दे इकारस्य उदात्तत्वे सतिशिष्टस्वरेणावशिष्टानामचामनुदात्तत्वे ओकारस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वे रेफादकारस्य 'स्वरितात्संहितायामनुदात्तानाम्' इति प्रचय. स्यात्। सुप्सुपा' इति समासाश्रयणे तु समासस्य' इत्यन्तोदात्त भवति। अन्तोदात्तमेव चाग्निहोत्रपद प्रयुञ्जते तैत्तिरीयादय इत्यन्यदेतत्।

प्रकृतमनुसरामः। अग्निहोत्रपदस्य नामधेयत्वे कर्मणो विधेयस्यारूपत्व स्यात्। द्रव्यदेवते हि यागस्य रूपम्, देवतोद्देश्यकद्रव्यत्यागात्मकत्वाद्यागस्य। तत्र द्रव्यं यद्यपि "पयसा जुहोति" इत्यादिभिः प्राप्तम्। देवता तु नामधेयत्वे सति न प्राप्नोतीत्यरूपत्व कर्मण प्रसज्येत। न च "यदग्नये च प्रजापतये च साय जुहोति, यत्सूर्याय च प्रजापतये च प्रात" इति वाक्याभ्या देवतालाभान्नारूपत्वमिति वाच्यम्। तयोर्हि वाक्ययो किमग्न्यादयो गुणा[1] विधीयन्ते, उताग्निप्रजापत्यो. सूर्यप्रजापत्योश्च समुच्चितयोर्विधि', उत तयो. समुच्चय', उताग्निसमुच्चितस्य सूर्यसमुच्चितस्य च प्रजापतेर्विधानम्, उत प्रजापतिमात्रविधानम्? नाद्यद्वितीयौ; वाक्यभेदात्। न तृतीय, चशब्दार्थस्य समुच्चयस्य स्वातन्त्र्येणोपस्थित्यभावेन विशेष्यत्वानुपपत्ते। न चतुर्थ, "पञ्चदशान्याज्यानि" इत्यत्र सङ्ख्याविशिष्टाज्यानामिव समुच्चयविशिष्टप्रजापतेरपि विधानायोगात्। न पञ्चम', प्रजापतिमात्रविधौ हि 'अग्नये' इत्यस्य 'सूर्याय' इत्यस्य च विधित्वासम्भवादनुवादत्व वक्तव्यम्। तच्च न सम्भवति, प्रापकाभावात्। न च "अग्निर्ज्योति." "सूर्यो ज्योति." इति मन्त्रवर्णतस्तत्प्राप्तिरिति वाच्यम्। प्रबलब्राह्मणगतचतुर्थ्युपात्तदेवतावरुद्धे कर्मणि दुर्बलमन्त्रवर्णतस्तद्विरुद्धदेवतानिवेशायोगात्। न च प्रजापतिदेवताके कर्मणि कथमग्निसूर्यप्रकाशनसमर्थयोर्मन्त्रयोर्निवेशसम्भव इति वाच्यम्। 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति (श) तार्तीयीकाधिकरणन्यायेन वाचनिकविनियोगबलेन प्रजापतिलक्षकतया तदुपपत्ते, प्रजापतिमात्रविधौ "यत्सूर्याय प्रजापतये" इति पुनर्विधानवैयर्थ्याच्च। न च "यदग्नये च प्रजापतये च सायम्" इत्येवोच्यमाने प्रातर्होमे प्रजापतिदेवता न स्यात्, "यत्सूर्याय" इत्युच्यमाने सायंहोमे न स्यादित्युभयोद्देशेन तद्विधिरिति वाच्यम्। योऽयं होम स चेत्सायं तर्हि 'प्रजापतये' इति

1. गुणाश्चत्वार. रू, घ, ग, मु पा.

विशिष्टोद्देशे वाक्यभेदापातात्। ततश्च 'यदग्नये च' इत्यादिवाक्यद्वये अग्निसूर्यसायंप्रातर्विशिष्टकर्मान्तरविधिरिति वक्तव्यम्। एवञ्च ततः कथमग्निहोत्रवाक्यविहितकर्मणि देवतालाभः स्यात्। न च "अग्निर्ज्योतिः" "सूर्यो ज्योतिः" इति मन्त्रवर्णतस्तल्लाभसम्भव इति शङ्क्यम्। 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति साय जुहोति" "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः" इति मन्त्रविध्योः सायंप्रातःप्रत्यभिज्ञाबलेन 'यदग्नये च' इति वाक्यद्वयविहितविशिष्टकर्मान्तरविषयत्वावगमेनाग्निहोत्रवाक्यविहिते कर्मणि ततो देवतालाभासम्भवात्। तस्मादत्राग्निहोत्रशब्दस्य नामधेयत्वे कर्मणोऽरूपत्वापाताद्गुणविधानमेव युक्तम्। ए ाग्निहोत्रमिति द्वितीयाप्युपपन्ना भवति। नामधेयत्वे हि भावनाकरणीभूतधात्वर्थवाचित्वात्तृतीया स्यात् "उद्भिदा यजेत" इत्यादिवत्। गुणविधित्वे तु अग्नये होम कुर्यादित्यर्थपर्यवसानात्सा न विरुध्यते। न च कस्मिन्होमेऽयं देवताविधिः, न तावत् 'यदग्नये च' इति विहिते कर्मणि, उत्पत्तिशिष्टदेवतान्तरावरुद्धत्वात्[1], अत एव न दर्शपूर्णमासादिगतहोमेष्विति वाच्यम्। अविहितदेवताकेषु नारिष्ठादिदर्वीहोमेष्वग्निदेवताविधिसम्भवात्। न च मान्त्रवर्णिकदेवतान्तरावरोधात्तत्र[2] नाग्निविधिः सम्भवतीति वाच्यम्। मन्त्रवर्णप्रवृत्तेः प्रागेव झटिति प्रवृत्तेनाग्निहोत्रवाक्येन तत्राग्नेरेव निवेशाद्देवतान्तरपदानाञ्च तत्रत्यमन्त्रगतानामैन्द्रीन्यायेनाग्निलक्षकत्वोपपत्तेः।

वस्तुतस्तु यत्र दर्वीहोमेषु न देवताविः, न वा मन्त्राम्नान तत्र गुणविधानं भविष्यति। अस्ति हि वाजसनेयके हव्यवाट्काण्डे सप्तमाध्यायान्ते 'दर्शपूर्णमासयोरुत्तममनूयाजमिष्ट्वा समानीय जुहोति' इति तादृशदर्वीहोमविधिः। औपभृतमाज्य जुह्वा समानीय जुहोतीति तदर्थ। एवं चाग्निहोत्रमिति गुणविधिरेव, न तु नामधेयम्। "यदग्नये च" इत्यादिवाक्यद्वय तु विशिष्टकर्मान्तरविधायकम्। "दध्ना जुहोति" इत्यादिस्तु तत्रैव गुणविधिः। "साय जुहोति" "प्रातर्जुहोति" इति च तयोरेव विशिष्टकर्मणोर्विश्वजिन्न्यायकल्प्ये फले समुच्चयविधि। अन्यथा "यदग्नये च" इति "यत्सूर्याय च" इति पृथग्विधिबलात्पृथगेव फल कल्प्येत। "अग्निहोत्र जुहुयात्स्वर्गकाम' "यावज्जीवमग्निहोत्र जुहुयात्" इति च दर्वीहोमाश्रिताग्निदेवताफले निमित्ते च विधीयते, यावज्जीवानुष्ठितदर्वीहोमाश्रिताग्निना फल कुर्यादिति। तदेवमग्निहोत्रपद गुणविधि, न तु नामधेयमिति स्थितम्।

---

1. अवरोधात् क, ग, घ, मु पा.   2. देवतावरोधात्तत्र, क, घ, ग. मु. पा.

तथा क्षरणार्थकघृधातुतः कर्मणि घञन्ताघारशब्दोपात्तक्षरणसमर्थद्रव्यमाज्य-पयोमध्वादि द्वितीयानिर्देशतः क्षरणक्रियासंस्कार्यतयावगम्यमान प्रयोजनाकाङ्क्षा-लक्षणप्रकरणाद्दर्शपूर्णमासार्थतामुपगतमाग्नेयादीनामुत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वादुत्प-न्नावद्द्रव्यकमुपांशुयाजात्मकं प्रधानमास्कन्दतीति तत्र गुणविधित्वमध्यवस्याम। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति त्वाज्यभागादिविषय भविष्यति। ततश्चोपांशुयाजवाक्ये उपांशुयाज विधाय पर्यवसिते सति उपांशुयाजमनूद्य प्रक-रणकल्पितवाक्येन द्रव्यविधिः, क्षरणसंस्कृतेनाघारेण उपांशुयाजं कुर्यादिति। अतो वैयाधिकरण्येनैव गुणस्य विधेयतया मतुप्प्रत्ययकल्पनाभावान्न मत्वर्थलक्षणावकाशः। यदि चोपांशुयाजवाक्यमेव प्रकरणसनाथं संस्कृताघारद्रव्यविशिष्टोपांशुयाजविधायक तदापि न मत्वर्थलक्षणा, क्षरणसंस्कृताघारवता उपांशुयाजेन भावयेदिति मतुप्प्रत्यय-युक्तस्यैव वाक्यस्य प्रकरणेन कल्पनात्। न च प्रकरणतो वाक्यकल्पनापेक्षया अस्मि-न्नेव वाक्ये यागविधिर्युक्त[1], ततश्चाघारपद नामधेयमेव भविष्यतीति वाच्यम्, प्रत्यक्षयज्यश्रवणात् द्रव्यदेवतारूपालाभाच्च। "चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य" इति प्रयाजार्थचतुर्गृहीताज्यस्यैकदेशमाघारं क्षरणसमर्थमुद्दिश्य क्षारणं विधीयत इति न ततो द्रव्यलाभ। "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इत्यनेन तु मन्त्र-मात्रं क्षारणसंस्काराङ्गतया विधीयते, "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति निर्वापे हस्ताभ्यामित्यन्तसावित्रमन्त्रवत्। न तु मान्त्रवर्णिकदेवताकल्पनं [2]तद्बलेन वा यागकल्पनम्, गौरवात्[3]। अस्तु वा देवताकल्पनं तद्बलाद्यागकल्पनञ्च, तथापि तन्नामधेयत्वमाघारपदस्य न सङ्गच्छते; तथा सति यजे करणत्वेन तद्वाचकनामधेयस्यास्य तृतीयान्तत्वापातात्। गुणविधित्वे तु आघारस्य संस्कार्यत्वाद्द्वितीया न विरुध्यते। अत "आघारमाघारयति" इत्यपि गुणविधिरिति प्राप्ते, सिद्धान्तयति—

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

'यस्मिन्गुणोपदेश प्रधानतोऽभिसम्बन्ध' इति 'नामधेय स्यात्' इति चानु-वर्तते। यस्मिन् "अग्निहोत्रं जुहोति" इत्यादिवाक्ये अग्न्यादिगुणविधिः सम्भाव्यते तत्र नामधेयमेव स्यात्। कुत ? यतो नामधेयत्वे प्रधानतोऽभिसम्बन्ध. विधेयेन

1. युज्यते ग  2 यद्बलेन याग. ग.  3. गौरवप्रसङ्गात्. ग.

धात्वर्थेन विधिप्रत्ययस्य अभिसम्बन्धः एकपदवृत्तित्वं लभ्यते। गुणविधित्वे तु विधेयस्य गुणस्य विधिप्रत्ययस्य च भिन्नपदवृत्तित्व लभ्यते। तथा च गुणस्य विधेश्च सम्बन्धः पदद्वयसमभिव्याहारवाक्यगम्य., न तु धात्वर्थविधिसम्बन्धवच्छ्रुतिगम्यः। न हि समानपदवृत्तित्वलक्षणश्रुत्या धात्वर्थस्य विधिसम्भवे वाक्येन गुणविधानं युक्तम्। यद्यप्याघारवाक्ये क्षरणसमर्थाज्यादिद्रव्योद्देशेन विधेयस्याघारणसंस्कारस्य विधिप्रत्ययस्य च समानपदवृत्तित्वान्नोक्तदोष', तथापि प्रकरणपरिकल्पिते 'क्षारणसंस्कृताज्यादिद्रव्येणोपांशुयाजं कुर्यादिति' वाक्ये आघारद्रव्यवता उपांशुयाजेन भावयेदिति वाक्ये वा विधिप्रत्ययस्य विधेयाज्यादिद्रव्यस्य च भिन्नपदवृत्तित्वाद्वाक्येन विधानं वाक्यार्थस्य विशिष्टस्य च विधानं दोषः। ननु नामधेयत्वे अरूपत्व दोषः स्यादित्यत्र उत्तरम्—तत्प्रख्य चान्यशास्त्रमिति। चशब्दो ह्यर्थः उक्तसमुच्चयार्थो वा। तच्छब्देन 'गुणोपदेश' इत्युपात्तो गुण. परामृश्यते। यागनामधेयत्वे यागस्य रूपलाभाय यो गुणो विधेयतयापेक्षित', तं प्रचष्टे विधत्त इति तत्प्रख्यम्। 'आतश्चोपसर्गे' इति कः। विधित्सितस्याग्न्यादिगुणस्य विधायकमन्यच्छास्त्रमस्ति। अतस्तदग्निहोत्रादिपदमपि नामधेयं स्यादित्यर्थः। तथाहि—"अग्निहोत्र जुहोति" इत्यग्निहोत्रनामधेयकस्य होमस्य विधिः। "अग्निर्ज्योतिर्ज्योतिरग्नि स्वाहेति साय जुहोति, सूर्यो ज्योतिर्ज्योति. सूर्यं स्वाहेति प्रात." इति विहितमन्त्रवर्णतोऽग्निसूर्यदेवतालाभ.। न च योऽय होम. स चेत्सायमिति वाक्यभेद. शङ्क्य', होमस्य प्रकरणत एवोपस्थित्या तदंशे शब्दस्य व्यापाराभावात्। "यदग्नये च प्रजापतये च" इत्यादिवाक्यद्वये अग्निसमुच्चित सूर्यसमुच्चितश्च प्रजापतिर्विधीयते। तत्र मन्त्रवर्णप्राप्ताग्निसूर्यांशे विधिव्यापाराभावान्न विशिष्टविधिगौरवम्। एवञ्चाग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधि [1] पर्यवस्यति। एतेन [2]समुच्चयस्य चार्थस्य विशेष्यत्वाभावान्न विधेयत्वमिति निरस्तम्, तद्विधेरार्थिकत्वात्। "सायं जुहोति" "प्रातर्जुहोति" इति कालविधि.। सायप्रातर्व्यवस्थितमन्त्रवर्णलब्धाग्निसूर्यानुवादेन प्रजापतिसमुच्चयो विधीयमानोऽपि तदनुवाद्यदेवतानुसारेण व्यवस्थयैव प्राप्नोतीति 'यदग्नये च' इति वाक्यद्वये सायं प्रातरित्यनुवाद। अग्निहोत्रमिति द्वितीया तु फलभावनाकरणस्यापि यागस्य 'नासाधित करणम्' इति न्यायेनार्थाक्षिप्तसाध्यत्वाभिप्रायेति प्राञ्च।

1. विधौ फ, घ, ग, मु प। 2. समुच्चितार्थस्य. ग.

अत्रेदं वक्तव्यम्—तैत्तिरीयकब्राह्मणे[1] "प्रजापतिरग्निमसृजत" इत्युपक्रम्य "त प्रजापतिरब्रवीज्जायस्वेति सोऽब्रवीत्कि भागधेयमभिजनिष्य इति। तुभ्यमेवेदँ हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम्। तस्मादग्निहोत्र-मुच्यते। तद्धूयमानमादित्योऽब्रवीत्। मा हौषीः। उभयोर्वै नावेतदिति। सोऽग्निर-ब्रवीत्। कथ नौ होष्यन्तीति। सायमेव तुभ्य जुहवन्। प्रातर्मह्यमित्यब्रवीत्। तस्मा-दग्नये सायँ हूयते। सूर्याय प्रात" इति देवताविधिः, केवलाग्निसूर्ययोर्देवतयोर्विधा-नात्। मन्त्रवर्णप्राप्तो ज्योतिष्टोमगुणो नादर्तव्यः, आग्नेयादियागे "अग्निर्मूर्धा दिवः" इत्यादियाज्यापुरोनुवाक्यागम्यगुणवत्। "तूष्णीमुत्तरामाहुतिं जुहोति" "यत्तूष्णीं तत्प्राजापत्यम्" इति द्वितीयाहुतिरङ्गत्वेन विधीयते, अग्निसूर्यहोमयोरेव प्राधान्या-वगमात्। श्रूयते हि वाजसनेयके—"यामग्रे जुहोति सा तस्यै देवतायै यस्या अग्नि-होत्रम् अथ या द्वितीया स्विष्टकृद्भाजनमेव सा" इति। एवञ्च "यदग्नये च प्रजापतये च" इति वाक्यद्वयमपि यच्छब्दबलादनुवाद एव। एतेन "चतस्रो गार्हपत्ये जुहोति चतस्रोऽन्वाहार्यपचने द्वे आहवनीये दश सम्पद्यन्ते दशाक्षरा विराड्विराजा यज्ञः समितः" इति बह्वृचब्राह्मणे विराट्सम्पत्तिश्रवणाद्दशानामपि होमाना प्राधान्यमिति वदन्तो निरस्ताः। यदि हि विराट्सम्पत्तिरेव प्राधान्यप्रयोजिका, तर्हि वैश्वदेवे पर्वणि "नव प्रयाजा इज्यन्ते, नवानूयाजाः, अष्टौ हवीँषि, द्वावाघारौ, द्वावाज्यभागौ, त्रिँशत्सम्पद्यन्ते, त्रिँशदक्षरा विराट्' इति श्रवणात्प्रयाजादीनामपि प्राधान्यापत्तिः। अत. "अग्निहोत्र जुहोति" इत्यग्निहोत्रपद पूर्वाहुतेरेव नामधेयम्। एकस्यैवाग्निहोत्रस्य "साय जुहोति" "प्रातर्जुहोति" इत्यभ्यासविधिः। अत प्रातर्होमस्य सूर्यदेवत्यत्वेऽपि सायहोमस्याग्निदेवत्यत्वमात्रेण अग्निहोत्रशब्दस्योपपत्ति। कदाचिदग्निदेवत्यत्व-योगेन समाख्यानोपपत्ते, श्रवणादिनक्षत्रयोगाभावेऽपि श्रावणी पौर्णमासीत्यादि-व्यपदेशवत्।

आघारवाक्येऽपि श्रुत्या विधिसम्भवे वाक्यतो विधानस्यायुक्तत्वान्न गुण-विधित्वमित्युक्तमेव। आङ्पूर्वात् घृधातोर्भावघञन्तमाघारपदमुपसर्गवशाद्यागोत्तर-क्षारणरूपहोमस्य नामधेयम्। यागोत्तरक्षारणमेव हि होम। तथा च सूत्रकारो वक्ष्यति 'जुहोतिरासेचनाधिक स्यात्' इति। "प्राञ्चमाघारयति" "सन्ततमाघारयति"

1. तैत्तिरीयब्राह्मणे ग, घ

धात्वर्थेन विधिप्रत्ययस्य अभिसम्बन्धः एकपदवृत्तित्वं लभ्यते। गुणविधित्वे तु विधेयस्य गुणस्य विधिप्रत्ययस्य च भिन्नपदवृत्तित्व लभ्यते। तथा च गुणस्य विधेश्च सम्बन्धः पदद्वयसमभिव्याहारवाक्यगम्य., न तु धात्वर्थविधिसम्बन्धवच्छ्रुतिगम्यः। न हि समानपदवृत्तित्वलक्षणश्रुत्या धात्वर्थस्य विधिसम्भवे वाक्येन गुणविधानं युक्तम्। यद्यप्याघारवाक्ये क्षरणसमर्थाज्यादिद्रव्योद्देशेन विधेयस्याघारणसंस्कारस्य विधिप्रत्ययस्य च समानपदवृत्तित्वान्नोक्तदोष, तथापि प्रकरणपरिकल्पिते 'क्षारणसंस्कृताज्यादिद्रव्येणोपांशुयाजं कुर्यादिति' वाक्ये आघारद्रव्यवता उपांशुयाजेन भावयेदिति वाक्ये वा विधिप्रत्ययस्य विधेयाज्यादिद्रव्यस्य च भिन्नपदवृत्तित्वाद्वाक्येन विधानं वाक्यार्थस्य विशिष्टस्य च विधानं दोषः। ननु नामधेयत्वे अरूपत्व दोषः स्यादित्यत्र उत्तरम्—तत्प्रख्य चान्यशास्त्रमिति। चशब्दो ह्यर्थः उक्तसमुच्चयार्थो वा। तच्छब्देन 'गुणोपदेश' इत्युपात्तो गुणः परामृश्यते। यागनामधेयत्वे यागस्य रूपलाभाय यो गुणो विधेयतयापेक्षितः, तं प्रचष्टे विधत्त इति तत्प्रख्यम्। 'आतश्चोपसर्गे' इति कः। विधित्सितस्याग्न्यादिगुणस्य विधायकमन्यच्छास्त्रमस्ति। अतस्तदग्निहोत्रादिपदमपि नामधेयं स्यादित्यर्थः। तथाहि—"अग्निहोत्र जुहोति" इत्यग्निहोत्रनामधेयकस्य होमस्य विधिः। "अग्निर्ज्योतिर्ज्योतिरग्नि स्वाहेति साय जुहोति, सूर्यो ज्योतिर्ज्योति सूर्य स्वाहेति प्रातः" इति विहितमन्त्रवर्णतोऽग्निसूर्यदेवतालाभः। न च योऽयं होमः स चेत्सायमिति वाक्यभेद शङ्क्य., होमस्य प्रकरणत एवोपस्थित्या तदंशे शब्दस्य व्यापाराभावात्। "यदग्नये च प्रजापतये च" इत्यादिवाक्यद्वये अग्निसमुच्चित' सूर्यसमुच्चितश्च प्रजापतिर्विधीयते। तत्र मन्त्रवर्णप्राप्ताग्निसूर्यांशे विधिव्यापाराभावान्न विशिष्टविधिगौरवम्। एवञ्चाग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधि'[1] पर्यवस्यति। एतेन [2]समुच्चयस्य चार्थस्य विशेष्यत्वाभावान्न विधेयत्वमिति निरस्तम्, तद्विधेरार्थिकत्वात्। "साय जुहोति" "प्रातर्जुहोति" इति कालविधिः। सायप्रातर्व्यवस्थितमन्त्रवर्णलब्धाग्निसूर्यानुवादेन प्रजापतिसमुच्चयो विधीयमानोऽपि तदनुवाद्यदेवतानुसारेण व्यवस्थयैव प्राप्नोतीति 'यदग्नये च' इति वाक्यद्वये सायं प्रातरित्यनुवाद। अग्निहोत्रमिति द्वितीया तु फलभावनाकरणस्यापि यागस्य 'नासाधित करणम्' इति न्यायेनार्थाक्षिप्तसाध्यत्वाभिप्रायेति प्राञ्च।

1. विधी. क, घ, ग, मु पा 2. रापुच्चितार्थस्य ग.

अत्रेदं वक्तव्यम्—तैत्तिरीयकब्राह्मणे[1] "प्रजापतिरग्निमसृजत" इत्युपक्रम्य "त प्रजापतिरब्रवीज्जायस्वेति सोऽब्रवीत्कि भागधेयमभिजनिष्य इति। तुभ्यमेवेदꣳ हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम्। तस्मादग्निहोत्र-मुच्यते। तद्धूयमानमादित्योऽब्रवीत्। मा हौषीः। उभयोर्वै नावेतदिति। सोऽग्निर-ब्रवीत्। कथं नौ होष्यन्तीति। सायमेव तुभ्य जुहवन्। प्रातर्मह्यमित्यब्रवीत्। तस्मा-दग्नये सायꣳ हूयते। सूर्याय प्रात" इति देवताविधिः, केवलाग्निसूर्ययोर्देवतयोर्विधा-नात्। मन्त्रवर्णप्राप्तो ज्योतिष्टोमगुणो नादर्तव्य', आग्नेयादियागे "अग्निर्मूर्धा दिवः" इत्यादियाज्यापुरोनुवाक्यागम्यगुणवत्। "तूष्णीमुत्तरामाहुतिं जुहोति" "यत्तूष्णीं तत्प्राजापत्यम्" इति द्वितीयाहुतिरङ्गत्वेन विधीयते, अग्निसूर्यहोमयोरेव प्राधान्या-वगमात्। श्रूयते हि वाजसनेयके—"यामग्ने जुहोति सा तस्यै देवतायै यस्या अग्नि-होत्रम् अथ या द्वितीया स्विष्टकृद्भाजनमेव सा" इति। एवञ्च "यदग्नये च प्रजापतये च" इति वाक्यद्वयमपि यच्छब्दबलादनुवाद एव। एतेन "चतस्रो गार्हपत्ये जुहोति चतस्रोऽन्वाहार्यपचने द्वे आहवनीये दश सम्पद्यन्ते दशाक्षरा विराड्विराजा यज्ञः समितः" इति बह्वृचब्राह्मणे विराट्सम्पत्तिश्रवणाद्दशानामपि होमाना प्राधान्यमिति वदन्तो निरस्ता'। यदि हि विराट्सम्पत्तिरेव प्राधान्यप्रयोजिका, तर्हि वैश्वदेवे पर्वणि "नव प्रयाजा इज्यन्ते, नवानूयाजाः, अष्टौ हवीꣳषि, द्वावाघारौ, द्वावाज्यभागौ, त्रिꣳशत्सम्पद्यन्ते, त्रिꣳशदक्षरा विराट्' इति श्रवणात्प्रयाजादीनामपि प्राधान्यापत्तिः। अतः "अग्निहोत्रं जुहोति" इत्यग्निहोत्रपदं पूर्वाहुतेरेव नामधेयम्। एकस्यैवाग्निहोत्रस्य "सायं जुहोति" "प्रातर्जुहोति" इत्यभ्यासविधि.। अत्र प्रातर्होमस्य सूर्यदेवत्यत्वेऽपि सायंहोमस्याग्निदेवत्यत्वमात्रेण अग्निहोत्रशब्दस्योपपत्ति'। कदाचिदग्निदेवत्यत्व-योगेन समाख्यानोपपत्ते, श्रवणादिनक्षत्रयोगाभावेऽपि श्रावणी पौर्णमासीत्यादि-व्यपदेशवत्।

आघारवाक्येऽपि श्रुत्या विधिसम्भवे वाक्यतो विधानस्यायुक्तत्वान्न गुण-विधित्वमित्युक्तमेव। आङ्पूर्वात् घृधातोर्भावघञन्तमाघारपदमुपसर्गवशाद्यागोत्तर-क्षारणरूपहोमस्य नामधेयम्। यागोत्तरक्षारणमेव हि होम। तथा च सूत्रकारो वक्ष्यति 'जुहोतिरासेचनाधिक स्यात्' इति। "प्राञ्चमाघारयति" "सन्ततमाघारयति"

1. तैत्तिरीयब्राह्मणे ग, घ

इत्यादिस्तु गुणविधिः। तथा च आघारसंज्ञकेन होमेनोपकुर्यादित्यर्थः। तत्र "चतुर्गृहीत वा एतदभूत्" इत्यत्राघारपदेनाघारमनूद्य "चतुर्गृहीत वा एतदभूत्तस्य" इत्यंशेन द्रव्यविधिः। तस्येत्यवयवषष्ठी। यच्चतुर्गृहीत प्रयाजार्थमाज्यमभूत्तस्यैकदेशेनाघाराख्य कर्माभिनिर्वर्त्येत्यर्थः। एवञ्चैकमेवाघारणं लभ्यत इति लाघवम्। गुणविधित्वे तु "चतुर्गृहीतं वा एतत्" इति जौहवाज्यस्याघारणम्, आघारवाक्येन उपांशुयाजाज्यस्याघारणमित्याघारणविधिद्वयकल्पनागौरवम्। तथा "इत इन्द्र ऊर्ध्वोऽध्वरः" इति मन्त्रवर्णाद्देवतालाभः। न च निर्वापे सावित्रमन्त्रवन्न देवताकल्पकत्वमिति वाच्यम्, वैषम्यात्। निर्वापे तावत् "यदाग्नेयोऽष्टाकपालः" इति वाक्यगतदेवतान्तरावरुद्धत्वान्न सावित्रांशस्य देवताकल्पकत्वम्। इह तु देवताकल्पकत्वे न किञ्चिद्बाधकमस्ति। तथा च "सूक्तवाकेन प्रस्तरं प्रहरति" इति करणतया निर्दिष्टसूक्तवाकप्रतिपाद्याग्न्यादिदेवताकल्पनवदिहापि इतिकरणेन मन्त्रस्य करणतया विनियोगबलात्तत्प्रतिपाद्यस्येन्द्रस्यापि देवतात्वकल्पनं न विरुध्यते। न च नामधेयत्वे प्रयाजादिवदारादुपकारकत्वमेव स्यात्, न तु संस्कारकर्मत्वमिति वाच्यम्, "यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तत्" इति प्रयाजार्थतया विहितस्य चतुर्गृहीतस्य स्वतन्त्रकर्मणि विनियोगासम्भवेन प्रयाजार्थाज्यसंस्कारत्वस्याप्यवश्यम्भावात्। उपपद्यते च पीतशेषस्य पुन पास्यमानस्य जलस्येव प्रयाजेषूपयोक्ष्यमाणस्याज्यस्य किञ्चित्क्षारणेन संस्कार'। एवञ्च प्रस्तरप्रहरणवत्स्विष्टकृद्वच्च यागरूपत्व सस्कारकर्मत्वञ्च न विरुध्यते। न च सस्कारकर्मणा नाम्ना विधान क्वापि न दृष्टमिति वाच्यम्, "अंशु गृह्णाति" "अदाभ्यं गृह्णाति" इत्यादौ तथा दृष्टत्वात्। आघारमिति द्वितीया त्वग्निहोत्रमितिवदर्थाक्षिप्तसाध्यत्वाभिप्राया। तस्मादाघारपदमपि नामधेयमिति। प्रयोजन पूर्वपक्षे अविहितदेवताकेषु दर्वीहोमेष्वग्निदेवतालाभ', उपांशुयाजाज्यस्य सस्कारलाभश्च। सिद्धान्ते तु दर्वीहोमेषु तथाविधेषु मान्त्रवर्णिकीभि. प्राकरणिकप्रधानदेवताभिरेव वा स्वरूपलाभ। तथा च नैरुक्ताः 'येऽन्येनादिष्टदेवता मन्त्रा यद्देवत' स यज्ञो यज्ञाङ्ग वा तद्देवता भवन्ति' इति। उपांशुयाजार्थस्याज्यस्य क्षारणसस्काराभावः कर्मान्तरलाभश्चेत्याद्यूह्यम्॥

इति चतुर्थं तत्प्रख्याधिकरणम्॥ ४॥

५

"श्येनेनाभिचरन्यजेत" इत्यत्र गुणविधिर्नामधेयं वेति संशय'। तत्राभिचरण शत्रुवधः। 'लक्षणहेत्वोः क्रियायाः' इति फलस्यापि हेतुत्वात् शतृप्रत्यय. 'अधीयान' श्वसिति' इतिवत्। यजिश्च प्रकृतज्योतिष्टोमपरः। तथा च ज्योतिष्टोमसाधनेन श्येनेन शत्रुवधं कुर्यादित्यर्थः। तथा च वैयधिकरण्यान्वयेन मत्वर्थलक्षणाभावात्पक्षिविशेप एवात्यन्तनिरूढत्वाच्च श्येनशब्दस्य कर्मणि कथञ्चिदप्यप्रसिद्धत्वान्नोद्भिन्न्यायः। वाक्य-भेदाभावाच्च न चित्राख्याधिकरणन्याय'। तत्प्रख्यशास्त्रान्तराभावाच्च न पूर्वाधिकरण-न्याय.। श्येनगुणश्चाय काम्यत्वाद्गोदोहनगुणश्चमसमिव "सोमेन यजेत" इत्युत्पत्ति-शिष्टमपि सोमं बाधते। तथा चागत्या गुणविधिरिति प्राप्ते, सिद्धान्तयति—

## तद्व्यपदेशाच्च ॥ ५ ॥

'यस्मिन्गुणोपदेशः प्रधानतोऽभिसम्बन्ध' इति 'नामधेय स्यात्' इति चानु-वर्तते। यस्मिन् श्येनवाक्ये गुणविधानमाशङ्क्यते[1] तत्र श्येनपदं नामधेयमेव स्यात्, न तु गुणविधि। यत' तद्व्यपदेश वाक्यं प्रधानतोऽभिसम्बन्धश्चास्ति तत इति योजना। तद्व्यपदेशमिति बहुव्रीहिः। तस्माद्विधेयत्वेनाभिमताच्छ्येनाद्व्यपदेश भेदेनाभिधानं वस्तुतो विधेयकर्मण यत्र तत् तद्व्यपदेशं वाक्यम्—"यथा वै श्येनो निपत्यादत्ते एवमय द्विषन्त भ्रातृव्य निपत्यादत्ते यमभिचरति श्येनेन" इत्येवरूपम्। अत्र च अयमिति निर्दिष्टस्य विधेयस्य प्रतीयमानं श्येनसादृश्यं श्येन-गुणविधौ कथं घटेत। इदंशब्दो हि न तावद्यागपरः। न ह्यन्यस्य विधेयता अन्यस्य च स्तुतिरिति युक्तम्। न च 'अयम्' इति श्येनस्यैव निर्देशो युक्त। स्वस्यैव स्वसादृश्यानुपपत्ते। ननु तर्हि, श्येनविशिष्टकर्मविधानमेवास्तु, श्येनविशिष्टस्य यागस्य श्येनरूपविशेषणाद्भिन्नत्वेन सादृश्योपपत्ते.। न चैवं सति सामानाधिकरण्यनिर्वाहाय मत्वर्थलक्षणा स्यादिति वाच्यम्। कर्मण्यप्रसिद्धनामधेयत्वकल्पनापेक्षया प्रसिद्धार्था-परित्यागिन्या मत्वर्थलक्षणाया एव युक्तत्वात्। न च नामधेयत्वेऽपि यथा श्येनो मत्स्यादीन्निपत्यादत्ते एवमयमपि यज्ञो द्विषन्त भ्रातृव्य निपत्यादत्त इति वाक्यशेष-गम्येन निपत्यादानक्रियासादृश्येन गौण्या वृत्त्या श्येनशब्दस्य कर्मण्यपि प्रसिद्ध्या नाप्रसिद्धार्थकल्पनमिति वाच्यम्। एव हि श्येनगतनिपत्यादानसदृशनिपत्यादानवत्त्वेन

1 आशङ्कित ग

इत्यादिस्तु गुणविधिः। तथा च आघारसंज्ञकेन होमेनोपकुर्यादित्यर्थः। तत्र "चतुर्गृहीत वा एतदभूत्" इत्यत्राघारपदेनाघारमनूद्य "चतुर्गृहीत वा एतदभूत्तस्य" इत्यंशेन द्रव्यविधिः। तस्येत्यवयवषष्ठी। यच्चतुर्गृहीत प्रयाजार्थमाज्यमभूत्तस्यैकदेशेनाघाराख्य कर्माभिनिर्वर्त्येत्यर्थः। एवञ्चैकमेवाघारण लभ्यत इति लाघवम्। गुणविधित्वे तु "चतुर्गृहीतं वा एतत्" इति जौहवाज्यस्याघारणम्, आघारवाक्येन उपांशुयाजाज्यस्याघारणमित्याघारणविधिद्वयकल्पनागौरवम्। तथा "इत इन्द्र ऊर्ध्वोऽध्वरः" इति मन्त्रवर्णाद्देवतालाभ.। न च निर्वापे सावित्रमन्त्रवन्न देवताकल्पकत्वमिति वाच्यम्, वैषम्यात्। निर्वापे तावत् "यदाग्नेयोऽष्टाकपाल." इति वाक्यगतदेवतान्तरावरुद्धत्वान्न सावित्रांशस्य देवताकल्पकत्वम्। इह तु देवताकल्पकत्वे न किञ्चिद्बाधकमस्ति। तथा च "सूक्तवाकेन प्रस्तरं प्रहरति" इति करणतया निर्दिष्टसूक्तवाकप्रतिपाद्याग्न्यादिदेवताकल्पनवदिहापि इतिकरणेन मन्त्रस्य करणतया विनियोगबलात्तत्प्रतिपाद्यस्येन्द्रस्यापि देवतात्वकल्पनं न विरुध्यते। न च नामधेयत्वे प्रयाजादिवदारादुपकारकत्वमेव स्यात्, न तु सस्कारकर्मत्वमिति वाच्यम्, "यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तत्" इति प्रयाजार्थतया विहितस्य चतुर्गृहीतस्य स्वतन्त्रकर्मणि विनियोगासम्भवेन प्रयाजार्थाज्यसस्कारत्वस्याप्यवश्यम्भावात्। उपपद्यते च पीतशेषस्य पुन पास्यमानस्य जलस्येव प्रयाजेषूपयोक्ष्यमाणस्याज्यस्य किञ्चित्क्षारणेन संस्कार'। एवञ्च प्रस्तरप्रहरणवत्स्विष्टकृद्वच्च यागरूपत्व संस्कारकर्मत्वञ्च न विरुध्यते। न च संस्कारकर्मणा नाम्ना विधानं क्वापि न दृष्टमिति वाच्यम्, "अंशु गृह्णाति" "अदाभ्यं गृह्णाति" इत्यादौ तथा दृष्टत्वात्। आघारमिति द्वितीया त्वग्निहोत्रमितिवदर्थाक्षिप्तसाध्यत्वाभिप्राया। तस्मादाघारपदमपि नामधेयमिति। प्रयोजन पूर्वपक्षे अविहितदेवताकेषु दर्वीहोमेष्वग्निदेवतालाभ., उपांशुयाजाज्यस्य सस्कारलाभश्च। सिद्धान्ते तु दर्वीहोमेषु तथाविधेषु मान्त्रवर्णिकीभि. प्राकरणिकप्रधानदेवताभिरेव वा स्वरूपलाभ.। तथा च नैरुक्ताः 'येऽन्येनादिष्टदेवता मन्त्रा यद्देवतः स यज्ञो यज्ञाङ्ग वा तद्देवता भवन्ति' इति। उपांशुयाजार्थस्याज्यस्य क्षारणसस्काराभावः कर्मान्तरलाभश्चेत्याद्यूह्यम्॥

इति चतुर्थं तत्प्रख्याधिकरणम्॥ ४॥

५

"श्येनेनाभिचरन्यजेत" इत्यत्र गुणविधिर्नामधेयं वेति संशय'। तत्राभिचरण शत्रुवधः। 'लक्षणहेत्वोः क्रियायाः' इति फलस्यापि हेतुत्वात् शतृप्रत्यय' 'अधीयान. श्वसिति' इतिवत्। यजिश्च प्रकृतज्योतिष्टोमपर'। तथा च ज्योतिष्टोमसाधनेन श्येनेन शत्रुवधं कुर्यादित्यर्थः। तथा च वैयधिकरण्यान्वयेन मत्वर्थलक्षणाभावात्पक्षिविशेप एवात्यन्तनिरूढत्वाच्च श्येनशब्दस्य कर्मणि कथञ्चिदप्यप्रसिद्धत्वान्नोद्भिन्न्याय'। वाक्य-भेदाभावाच्च न चित्राख्याधिकरणन्यायः। तत्प्रख्यशास्त्रान्तराभावाच्च न पूर्वाधिकरण-न्यायः। श्येनगुणश्चायं काम्यत्वाद्गोदोहनगुणश्चमसमिव "सोमेन यजेत" इत्युत्पत्ति-शिष्टमपि सोम बाधते। तथा चागत्या गुणविधिरिति प्राप्ते, सिद्धान्तयति—

## तद्व्यपदेशाच्च ॥ ५ ॥

'यस्मिन्गुणोपदेशः प्रधानतोऽभिसम्बन्ध' इति 'नामधेय स्यात्' इति चानु-वर्तते। यस्मिन् श्येनवाक्ये गुणविधानमाशङ्क्यते[1] तत्र श्येनपदं नामधेयमेव स्यात्, न तु गुणविधि। यत' तद्व्यपदेश वाक्य प्रधानतोऽभिसम्बन्धश्चास्ति तत इति योजना। तद्व्यपदेशमिति बहुव्रीहिः। तस्माद्विधेयत्वेनाभिमताच्छ्येनाद्व्यपदेश भेदेनाभिधान वस्तुतो विधेयकर्मण यत्र तत् तद्व्यपदेश वाक्यम्—"यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्त भ्रातृव्य निपत्यादत्ते यमभिचरति श्येनेन" इत्येवंरूपम्। अत्र च अयमिति निर्दिष्टस्य विधेयस्य प्रतीयमानं श्येनसादृश्य श्येन-गुणविधौ कथ घटेत। इदंशब्दो हि न तावद्यागपरः। न ह्यन्यस्य विधेयता अन्यस्य च स्तुतिरिति युक्तम्। न च 'अयम्' इति श्येनस्यैव निर्देशो युक्त। स्वस्यैव स्वसादृश्यानुपपत्ते। ननु तर्हि, श्येनविशिष्टकर्मविधानमेवास्तु, श्येनविशिष्टस्य यागस्य श्येनरूपविशेपणाद्भिन्नत्वेन सादृश्योपपत्ते। न चैवं सति सामानाधिकरण्यनिर्वाहाय मत्वर्थलक्षणा स्यादिति वाच्यम्। कर्मण्यप्रसिद्धनामधेयत्वकल्पनापेक्षया प्रसिद्धार्था-परित्यागिन्या मत्वर्थलक्षणाया एव युक्तत्वात्। न च नामधेयत्वेऽपि यथा श्येनो मत्स्यादीन्निपत्यादत्ते एवमयमपि यज्ञो द्विषन्त भ्रातृव्य निपत्यादत्त इति वाक्यशेष-गम्येन निपत्यादानक्रियासादृश्येन गौण्या वृत्त्या श्येनशब्दस्य कर्मण्यपि प्रसिद्ध्या नाप्रसिद्धार्थकल्पनमिति वाच्यम्। एव हि श्येनगतनिपत्यादानसदृशनिपत्यादानवत्त्वेन

1 आशङ्कित ग.

कर्मण' श्येनशब्देनोपस्थितिर्वाच्या । तथा सति श्येनशब्दोऽयं स्वमुख्यार्थश्येनगत-निपत्यादानं लक्षयित्वा तन्मुखेन तत्सदृश निपत्यभ्रातृव्यादानमपि लक्षयित्वा तद्वन्त यागमपि लक्षयेदित्यत्यन्तविप्रकृष्टार्थः स्यात् । तद्वरं साक्षान्मुख्यार्थसम्बन्धिनि यागे मत्वर्थलक्षणाश्रयणम् । किञ्च गौणत्वे मुख्यार्थश्येनस्य भावनानन्वयाच्छ्रुत्यर्थपरित्याग' स्यात् । श्येनवता यागेनेति मत्वर्थलक्षणायान्तु श्येनशब्दस्य तद्वल्लक्षकत्वेऽपि विशेष्यांशस्य धातुनैत्र लाभाद्विशेषणीभूतमुख्यार्थश्येनपरत्वमेवेति भवेच्छ्रुत्यर्थानुग्रह । तस्माद्गुणविशिष्टकर्मविधिरित्यत आह—प्रधानतोऽभिसम्बन्ध इति । चशब्दोऽत्र सम्बद्ध्यते । यतस्तद्व्यपदेश वाक्यमस्ति अतो न गुणविधि. । यतश्च नामधेयत्वे प्रधानत. धात्वर्थेन केवलेन विधिप्रत्ययस्य सम्बन्धो लभ्यते । केवलस्य धात्वर्थस्य विधिर्लभ्यत इति यावत् । विशिष्टविधौ तु—श्येनविशिष्टस्य धात्वर्थस्य विधान स्यात् । न चैतद्युक्तम् ।

तथाहि—श्येनविशिष्टस्य यागस्य पदद्वयसमभिव्याहारलक्षणवाक्यगम्यत्वा-द्वाक्यार्थविधाने उपस्थितिगौरवम् । नामधेयत्वे तु यागस्य केवलस्यैकेनैव पदेन गम्यमानत्वादुपस्थितिलाघवम् । तथा विशिष्टविधौ विशेषणांशेऽपि विधिप्रत्ययस्य व्यापारो वाच्यः । तथा च तदंशे विधिप्रत्ययस्य विधेयस्य च समानपदवृत्तित्वलक्षण-श्रुतिबाध' स्यात् । नामधेयत्वे तु धात्वर्थस्य समानपदोपात्तस्यैव विधानमिति श्रुत्यनुग्रह । अतो विधिलाघवानुसरणादत्यन्तक्लिष्टामपि गौणीं वृत्तिं वाक्यशेष-सिद्धामाश्रित्य श्येनशब्दस्य कर्मनामधेयत्वमेव युक्तमाश्रयितुम् । ननु केवलगुणविधौ तद्व्यपदेशमित्यनेन सादृश्यप्रतिपादकवाक्यशेषविरोधोद्भावनमनुपपन्नम्, 'इन्दुरिन्दु-रिव श्रीमान्' इत्यादिवदनन्वयालङ्कारोपपत्तेरिति चेन्न । अनन्वयालङ्कारस्य धर्मैक्ये धर्म्यैक्ये च प्रवृत्ते. । आहुश्चालङ्कारिका.—

'उपमानोपमेयत्व यदेकस्यैव वस्तुन ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वय ॥' इत्यादि ।

प्रकृते च श्येनात्पृथगेवायमिति धर्मिनिर्देशात् मत्स्याद्यादानभ्रातृव्यादानरूप-धर्मभेदाच्च न तदवकाश । एतेन 'धर्मार्थकामेषु समं प्रपेदे यथा तथैवावरजेषु वृत्तिम्' इत्यादाविव धर्मिभेदनिबन्धनोपमालङ्कारोऽपि प्रत्युक्त , तस्यापि धर्मैक्यविषयत्वात् । तस्माच्छ्येनपद नामधेयम् । एवम् "सन्दंशेनाभिचरन्यजेत" "यथा सन्दंशेन

दुरादेयमादत्ते" इत्याद्यप्युदाहृतं भाष्यादौ। वस्तुतस्तु सन्दंशेनेत्यनुदाहरणम्। तथाहि—'जातिशब्दा इमे न शक्नुवन्ति यागमभिवदितुम्' इति भाष्यात् 'अत्यन्तरूढा इहोदाहरणम्' इति वार्तिकादिग्रन्थतश्च यौगिकाना क्रियानिमित्तानामिहानुदाहरणत्वमवगतम्। सन्दंशशब्दश्च सन्दश्यते पार्श्वद्वये निपीड्य दुरादेयं परिगृह्यते अनेनेति व्युत्पत्त्या तप्तायोगोलादीन्सन्दंशेन गृह्णातीत्यादौ दुरादेयादानसाधनविशेषे प्रसिद्धः, कर्मण्यपि दुरादेयशत्रुप्राणादानसाधने वर्तितुमर्हतीति उद्भिन्न्यायेनैव तस्य नामधेयत्वं सिद्धमिति कथमिह तदुदाहरणमित्यास्तां तावत्॥

इति पञ्चम तद्व्यपदेशाधिकरणम्॥ ५॥

६

तदेवम् 'अपि वा नामधेयं स्यात्' इत्यादिभिश्चतुर्भिः सूत्रैरुद्भिदादिपदानां नामधेयत्व व्यवस्थापितम्। एभिरेव न्यायैरन्येषामपि सर्वेषा ज्योतिर्गौरायुर्वाजपेयोऽश्वमेध इषुर्वज्र इत्यादीना यथायोगं नामधेयत्वं सिद्धम्। तत्र "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयपदस्य यौगिकस्योद्भिन्न्यायेन सिद्धमपि नामधेयत्वमाक्षिप्य समाधातुमिदमारभ्यते—वाजपेयपदं गुणविधिर्नामधेयं वेति सशयः। गुणविधिरिति ब्रूमः। न चोद्भिन्न्यायान्नामधेयत्वनिश्चयसम्भव[1]। तत्र ह्यधिकरणे सामानाधिकरण्येनान्वये मत्वर्थलक्षणादोषः, वैयधिकरण्येनान्वये तु यागाश्रितेन गुणेन फल कुर्यादिति फलाय गुणविधौ गुणेन याग कुर्यादिति कर्मणि गुणविधौ च यजेरुद्देश्यविधेयसमर्पकत्वाभावात्समानपदोपात्तधात्वर्थं परित्यज्य भिन्नपदोपात्तगुणस्य विधानाच्च धातो' पारार्थ्यं विधिविधेययोर्विप्रकर्षश्च दोषः, कर्मणि गुणविधौ तु कर्मपदानन्वयश्चेति स्थितम्। तत्र कर्मणि गुणविधौ वैयधिकरण्येनैवान्वयाभ्युपगमान्नात्र मत्वर्थलक्षणा प्रसज्यते। नापि कर्मपदानन्वय। न ह्यत्र केवल कर्मणि गुणविधि' येन कर्मपदानन्वय स्यात्। किन्तु कर्मणोऽपि करणत्वेन फले विधानम्। न च वाक्यभेदः शङ्क्यः। वाजपेयेन यागं कुर्यात्, यागेन स्वाराज्य कुर्यादिति विध्यावृत्तौ हि वाक्यभेद प्रसज्यते। विध्यावृत्तिश्च यागस्य कर्मत्वेन करणत्वेन च पृथगुपस्थितौ सत्या सम्भाव्यते। नात्र तथा पृथगुपस्थितिः, कर्मत्व-

1. निश्चय ग.

करणत्ववाचकशब्दाभावात्। यजेतेत्यत्र हि लिङा भावनोच्यते, यजिना यागः, तयो. सम्बन्धस्तु सामान्यरूपेणैव समभिव्याहारादुगम्यते। तेन च सम्बन्धसामान्यरूपेण कर्मत्वकरणत्वयोः सम्भवति युगपदुपस्थितिः। तथा च यागं यागेन च कुर्यादिति यागस्य कर्मत्वकरणत्वाभ्या युगपदेव भावनान्वयः। एकाप्येषा भावना विषयभेदाद्भिद्यते—याग कुर्याद्यागेन कुर्यादिति, न तु वस्तुतः। तत्र यागकर्मकांशे यजिद्वारा गुणसम्बन्ध यागकरणकांशे फलसम्बन्धश्च युगपदेव भावना लभते वाजपेयगुणसाध्ययागेन स्वाराज्यं कुर्यादिति। अतो न विध्यावृत्तिलक्षणवाक्यभेदः। यजेरुद्देश्यविधेयसमर्पकत्वाच्च नात्यन्तपारार्थ्यम्। नापि विप्रकृष्टविधानम्, यागकरणकांशे समानपदोपात्तधात्वर्थस्यैव विधानात्। यागकर्मकांशेऽपि वाजपेयगुणस्य करणत्वेन तृतीयानिर्दिष्टस्य फलकरणे यागेऽन्वयो न सम्भवति, कारकाणा मिथः सम्बन्धाभावात्। नापि साक्षात्फलभावनायाम्, समानपदोपात्तयागरूपकरणान्तरावरुद्धत्वात्। अतो वाजपेयसाध्यत्वेन यागेन कुर्यादिति यजिद्वारा गुणस्य सम्बन्धो वाच्य.। ततश्च शाब्दमर्यादया वाजपेयसाध्यत्वेन रूपेण यागस्यैव फले विधानम्, कर्मणि गुणविधानं त्वार्थिकम्। तथा च समानपदोपात्तधात्वर्थस्यैव विधानान्न विप्रकृष्टविधानम्। किञ्च नामधेयत्वे सामानाधिकरण्यादेव करणत्वलाभात्तृतीया तदनुवादिन्यनर्थकप्राया। अतो वाजपेयशब्दो गुणविधिः। ए यवाग्वौषधद्रव्यकत्वात् 'वायव्या यवागूं निर्वपेत्' इत्यादिवदैष्टिको विध्यन्तः प्रवर्तत इति पूर्वपक्षमुद्भाव्य निराकरोति—

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्तुल्यत्वात्क्रिययोर्न ॥ ६ ॥**

प्राचीनैश्चतुर्भिरधिकरणै. सर्वत्र नामधेयत्वे विचारितेऽपि वाजपेयवाक्ये गुणविधिरेव स्यात्। कुतः? गुणश्रुते—गुणात्तृतीयाश्रुते। गुणविधौ हि वैयधिकरण्येनान्वीयमानवाजपेयशब्दात्तृतीया वाजपेयलक्षणगुणगत करणत्वं बोधयन्ती साफल्यमश्नुते। नामधेयत्वे तु यजिना वाजपेयशब्दस्य सामानाधिकरण्येनान्वयाद्यागतं करणत्वमनुभाषमाणा भवेदनर्थप्राया। अतस्तृतीयाश्रुत्या वैयधिकरण्येनैवान्वयलाभान्न मत्वर्थलक्षणादोष.। किञ्च गुणयोर्धर्मयोर्यागगतसाध्यत्वकरणत्वरूपयो. सम्बन्धसामान्यरूपेण यजिलिङ्समभिव्याहारतोऽवगमादित्यर्थः। ततश्चोक्तरीत्या धातोरत्यन्तपारार्थ्यं विप्रकृष्टविधानं कर्मपदानर्थक्यं वाक्यभेद इत्येते दोपा निरस्ताः।

अतो गुणविधिः स्यात् इति चेत्—तन्न, कुतः ? क्रिययोस्तुल्यत्वात्—गुणविधौ वाजपेयशब्दलभ्ययवाग्वादिद्रव्यकस्यास्य कर्मणो दर्शपूर्णमासकर्मणश्चौषधद्रव्यकत्वेन तुल्यत्वापातात्। ततश्च दार्शपूर्णमासिकविध्यन्तापत्तौ[1] "सप्तदशदीक्षो वाजपेय" "सप्तदशोपसत्को वाजपेय" इति सोमाङ्गदीक्षोपसदनुवादेन सङ्ख्याविधानं नोपपद्येत। न च दीक्षोपसदोऽप्यपूर्वास्तत्र विधीयन्तामिति शङ्क्यम्, सप्तदशत्वस्य दीक्षोपसदाञ्च विधाने वाक्यभेदापत्तेः॥

अथ यदुक्तं साध्यत्वकरणत्वाभ्यां सम्बन्धसामान्यरूपेणोपस्थिताभ्यां यागस्य युगपदेकभावनायामन्वयाद्यागकर्मकयागकरणकोभयरूपायां तस्या गुणफले युगपदेवान्वयं लभेते। ततश्च न वाक्यभेदधातुपारार्थ्यादिदोष इति। तत्राह—

## ऐकशब्द्ये[2] परार्थवत् ॥ ७ ॥

शब्दन शब्दः। भावे घञ्। एकः शब्द उच्चारण यस्य यजेः स एकशब्दः। तस्य भावः ऐकशब्द्यम्। परार्थवदिति स्वार्थिको वतिः 'नित्यवदाम्नानम्' इतिवत्। यजेस्तावद्यागकरणांशे स्वार्थमुच्चारण स्वाभिधेययागविधानार्थत्वादित्युभयवादिसम्प्रतिपन्नमेव। यागकर्मकांशे तु परार्थमपि तस्योच्चारणं स्यात्, स्वानभिधेयवाजपेयगुणविधानार्थत्वात्। स्वार्थं परार्थञ्च यजेरुच्चारणं स्यादिति यावत्। साध्यत्वेन करणत्वेन च यागस्य यजिनाभिधानादिति फलितम्। न चैतदैकशब्द्ये युज्यते। सकृदुच्चारिताद्यजे. साध्यत्वकरणत्वोभयरूपेण यागस्योपस्थितिर्न सम्भवतीति सूत्रस्य निर्गलितोऽर्थः।

तथाहि—सम्बन्धसामान्यरूपेणोपस्थितस्य यागस्य गुणफलाभ्यां न सम्बन्धयोग्यता। करणत्वेनोपस्थितस्यैव हि तस्य फलाकाङ्क्षा, साध्यत्वेनोपस्थितस्य च साधनाकाङ्क्षा। अत. साध्यत्वेन करणत्वेन च यागस्य भावनायामन्वयो वाच्यः। स च क्रमेण युगपद्वा ? नाद्य., यदि हि साध्यत्वेन यागस्य भावनायामन्वयो यागं कुर्यादिति तदा वाजपेयेनेति गुण एवान्वीयते, न तु फलम्। यदि च करणत्वेनान्वयः तदा यागेन स्वाराज्यं कुर्यादिति फलमेव यागेनान्वीयेत, न तु गुणः। उभयथाश्रयणे तु विध्यावृत्तिलक्षणो भवेद्वाक्यभेद। न द्वितीय., यस्मिन्नेव क्षणे यागस्य साध्यतया बोधस्तस्मिन्नेव क्षणे करणतया बोधस्यानुभवपराहतत्वात्। किञ्च गुणफलाभ्या

1. प्रवृत्तौ ग 2. एकशब्दे,

यागस्यान्वये सति न केवलं साध्यत्वसाधनत्ववैरूप्यकृत एव वाक्यभेदः, किन्तु विरुद्धत्रिकद्वयकृतोऽपि ।

तथाहि—यागस्य स्वाराज्यं प्रति साधनत्वे साध्यसिद्ध्यर्थत्वात्मकशेषत्वापरपर्यायं गुणत्वम्, तस्य च पारतन्त्र्यरूपत्वात्परार्थोत्पाद्यत्वलक्षणमुपादेयत्वम्, तस्य च विध्यधीनत्वाद्विधेयत्वम्, इति साधनत्वे गुणत्वोपादेयत्वविधेयत्वात्मकमेकं त्रिकम् । गुणं प्रति यागस्य साध्यत्वे च शेषित्वलक्षणं प्राधान्यम्, तस्य च कृत्युद्देश्यत्वं विनानुपपत्तेस्तदुद्देश्यत्वम्, अप्राप्तस्य चोद्देष्टुमशक्यत्वात्प्राप्तानुकीर्तनरूपमनुवाद्यत्वमित्यपरं त्रिकम् । [1]तदेवंविधत्रिकद्वयाक्रान्तो याग एकेन गुणतया प्रधानतया च, उपादेयतया उद्देश्यतया च, विधेयतया अनुवाद्यतया च वाक्यभेदमन्तरा कथं लभ्येत ? अतो वाजपेयगुणस्य यागे यागस्य च स्वाराज्यफले विधिरित्ययुक्तम् । फलाय गुणविधौ केवलगुणविधौ च धातुपारार्थ्यादयो दोषा उक्ताः प्रसज्येरन् । विशिष्टविधौ च मत्वर्थलक्षणादोषः । तस्मात्कर्मनामधेयमेव वाजपेयशब्दः । तृतीयाविभक्तिश्च यागगतं करणत्वं बोधयति । न चार्थात्तदवगमः । ततः प्रागेवास्याः प्रवृत्तेः । अस्तु वा यागगतकरणत्वानुवादिन्येव सा, अगतेः, स्वाराज्यकरणत्वविशिष्टं केवलञ्च यागं प्रति केवलञ्च फलं प्रति वाजपेयगुणकरणत्वस्योक्तरीत्या निरस्तत्वात् । "देवा वै यथादर्शं यज्ञानाहरन्त" इत्युपक्रम्य "ते सहैव सर्वे वाजपेयमपश्यन्" इति प्रस्तुत्य "स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः तं वा एतं वाजपेय इत्याहुः" इति प्रवृत्तो वाक्यशेषोऽपि नामधेयत्व एवानुकूलः । तस्मान्नामधेयं वाजपेयशब्दः । एवमुद्भिदादिवाक्यमप्यत्रोदाहार्यम् । वाजपेयवाक्यमेव प्राचामनुरोधेनोदाहृतम् ।

यत्तु 'तुल्यत्वात्क्रिययोर्न' इति सोमाङ्गदीक्षोपसदादिलिङ्गोपन्यासाय तदुदाहरणमिति सोमनाथादयस्तन्न, तलवकारीयताण्डकादिब्राह्मणेषु उद्भिदादिष्वपि "अथैष उद्भित्सप्तदशो भवति बृहत्सामा निषेधब्रह्मसामा" "पञ्चदशो बलभिद्भवति रथन्तरसामा उत्सेधब्रह्मसामा" इत्यादिना स्तोत्रपरिमाणब्रह्मसामादिसोमाङ्गदर्शनात् । माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्राय गीयमानं साम ब्रह्मसाम । उत्सेधाख्यब्रह्मसामकः निषेधाख्यब्रह्मसामको भवेदित्यर्थः । यदपि वदन्ति, वाजः अन्नं पेयं सुराग्रहविधिलब्धसुरारूपं यस्येति बहुव्रीह्याश्रयणेन तत्प्रख्यतया नामधेयत्वं वाजपेयस्येति

1. तदेव विरुद्धत्रिक. क, घ, ग, मु. पा

तन्न, तथा सति बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वापत्तेः, 'सप्तमीविशेषणे बहुव्रीहौ' इति पेयशब्दस्य पूर्वनिपातापत्तेश्च। जातिक्रियासमभिव्याहारे क्रियाशब्दस्य विशेषणताया एव तत्र व्यवस्थापितत्वात्।

वस्तुतस्तु–पिबन्ति सोमं यस्मिन्सः पेयः। 'अचो यत्' इत्यधिकरणे यत्प्रत्ययः। 'ईद्यति' इतीत्त्वम्। ईकारस्य गुणः। वाजाय अन्नाय पेयः वाजपेय इति तादर्थ्यचतुर्थ्या 'सुप्सुपा' इति समासः, धर्माय नियमो धर्मनियम इतिवत्। कृदुत्तरपदप्रकृतिस्वरत्वेन 'यतोऽनावः' इत्याद्युदात्तत्वम्। वाजार्थं होमं हुतशेष यत्र पिबन्ति स वाजपेय इति फलितम्। एवं हि तैत्तिरीयके श्रूयते—"स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः। तं वा एतं वाजपेय इत्याहु.। वाजाप्यो वा एषः। वाजं ह्येतेन देवा ऐप्सन्" इति, "वाज वा एषोऽवरुरुत्सते यो वाजपेयेन यजते" इति च। वाजः आप्यते अनेनेति वाजाप्यः। करणे कृत्यप्रत्यय.। तदाह वाज ह्येतेनेति। ऐप्सन् प्राप्तुमैच्छन्। अवरुरुत्सते प्राप्तुमिच्छति। तथा च अन्नप्राप्तिफलको वाजपेय इति फलितम्। तदेतद्भट्टभास्करीये वेदभाष्ये स्पष्टम्। "वाजपेयेनान्नाद्यकामो यजेत" इत्येव तलवकारीयम्। स्वाराज्यफलकत्वेऽपि कदाचिदन्नफलकत्वयोगेन प्रातर्होमादावग्निहोत्रादिशब्दवन्नामधेयत्वोपपत्ति'। यद्वा वाजाय अमृताय पेय. वाजपेयः। अन्नकाम इत्यत्रापि अन्नशब्दस्यामृतमेवार्थ'। स्वाराज्यकाम इति पर्यवस्यति। परमार्थतस्तु वाजश्चासौ पेयश्चेति कर्मधारयसमासे पेयशब्दस्य पूर्वनिपातापत्तेः बहुव्रीहेश्चोक्तरीत्या निरस्तत्वेन विशिष्टविधिमाश्रित्य विशेषणे पर्यवसानस्याप्यलाभात् उक्तवाक्यशेषे प्रकारान्तरेण तन्निर्वचनेन नामधेयत्वसिद्धेः गुणविधिपूर्वपक्षस्यैवानुन्मेषादुदाहरणान्तरमेवात्रापि युक्ततरं पश्यन्तु॥

इति षष्ठं वाजपेयाधिकरणम्॥ ६॥

७

नामधेयत्व क्वचिदपवदितुमिदमारभ्यते। इदमामनन्ति "आग्नेयोऽष्टाकपालोऽमावास्याया च पौर्णमास्या चाच्युतो भवति" इति। अग्नीषोमीयादियागो दर्शाच्च्यवते। ऐन्द्रादि पूर्णमासाच्च्यवते। आग्नेयस्तु नोभयस्माच्च्यवत इत्यच्युत। तत्राग्नेयशब्दो गुणविधि कर्मनामधेय वेति संशय.। नामधेयत्वमेव स्यात्। आग्नेयत्वस्याष्टाना कपालानाममावास्यापौर्णमासीकालयोरिति बहूनां गुणाना विधौ

वाक्यभेदापत्तेः। न च विशिष्टविधौ न वाक्यभेद इति वाच्यम्, गौरवात्, बहुष्वपि विशेषणांशेषु गुणेषु विधिपर्यवसानस्य विध्यावृत्तिं विना असम्भवेन वाक्यभेदस्य तदवस्थत्वाच्च। न च "उद्भिदा यजेत" इत्यत्र नामार्हकर्मविशेषस्य यजिनोपात्तत्वात्तन्नामधेयमुद्भित्पदमिति युक्तम्, इह तु नामार्हकर्मविशेषानुपादानात्कथमाग्नेयपदं नामधेयमिति वाच्यम्, अष्टाकपाल इत्यनेनैव [1]तल्लाभात्। तेन ह्यष्टाकपालद्रव्यककिञ्चिद्धात्वर्थविशिष्टभावना गम्यते। धात्वर्थानुरागमन्तरेण द्रव्यस्य तस्य भावनान्वयानुपपत्तेः। स च धात्वर्थः "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इति वाक्यशेषे उपांशुयाजादिसमभिव्याहाराद्यागरूप [2]उन्नीयते। न च प्रवृत्तिनिमित्तस्याग्निदेवतागुणस्यान्यतोऽप्राप्तेः कथं नामधेयत्वमिति वाच्यम्। "अग्निर्मूर्धा भुवो यज्ञस्य" इति मन्त्रवर्णतस्तत्प्राप्तेः। अतोऽग्निहोत्रादिशब्दवत्कर्मनामधेयमाग्नेयशब्द इति प्राप्ते, सिद्धान्तयति—

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शि ः ॥८॥**

तुशब्दोऽवधारणे। गुणशब्दसमभिव्याहृततच्छब्दः प्रधानभूतधात्वर्थं याग परामृशति। स च गुणाश्च तद्गुणाः—याग अग्न्यादयश्च अत्रावश्य विधीयेरन्, न तु नामधेयमाग्नेयशब्दः। कुतः? न चेदन्येन शिष्टा। चेच्छब्दो ह्यर्थे।

'ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत्प्रमाण स्युस्ते यान्ति परमा गतिम्'॥ इति यथा।

यतः अन्येन प्रमाणान्तरेण न शिष्टाः। 'शासु' अनुशिष्टौ। अनुशासनं विधानम्। न विहिताः यागे अग्न्यादयश्च गुणाः। अतः अग्निदेवतागुणयोगं निमित्तीकृत्याग्नेयशब्दस्य नामधेयत्वमाश्रयितुं नयुक्तम्। न च "अग्निर्मूर्धा" इत्यादिमन्त्रवर्णतो देवताप्राप्तिसम्भवः। तथाहि—अष्टाकपालभवनाक्षिप्तभावनायामष्टाकपालद्रव्यस्य धात्वर्थानुरागमन्तरेणान्वयासम्भवाद्धात्वर्थं कश्चित्कल्प्यमानः पुरोडाशस्वरूपनिर्माणरूप एव पर्यवस्यति। स च स्वानुष्ठानाय मन्त्रानपेक्षमाणोऽपि "मखस्य शिरोऽसि" इत्यादिपुरोडाशस्वरूपनिर्माणमन्त्रैः शान्ताकाङ्क्षत्वाद्देवतोद्देश्यकद्रव्यत्यागरूपयागत्वानिश्चयाच्च देवताप्रतिपादकमन्त्रानपेक्षतया तत्र मन्त्रान्वयासम्भवेन कथ मन्त्रवर्णतो देवताप्राप्तिसम्भवः। न च "शिरो वा एतद्यज्ञस्य यदाग्नेय" इति वाक्य-

1 तस्य लाभात्. ग    2. उन्नेय. ग, घ.

शेषे उपांशुयाजसाहचर्याद्यागत्वनिश्चयसम्भवः। तत्र हि वाक्यशेषे[1] आग्नेयशब्दस्य कर्मनामधेयत्वे निश्चिते[2] सत्याग्नेयशब्दाभिधेयस्य कर्मण उपांशुयाजसाहचर्याद्यागत्वनिश्चयः। यागत्वनिश्चये च मान्त्रवर्णिकदेवताप्राप्त्या आग्नेयशब्दस्य कर्मनामधेयत्वमित्यन्योन्याश्रयः प्रसज्यते। न च प्रथमं यागत्वानिश्चयेऽप्याघारवन्मन्त्रान्वयोऽप्यस्त्विति वाच्यम्, वैषम्यात्। आघारे हि प्रथमं यागत्वानिश्चयेऽपि "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इति विनियोगवचनबलान्मन्त्रान्वयः। नात्र तथा याज्यापुरोनुवाक्यायुगलस्याष्टाकपालद्रव्यव्यापारे विनियोजकं वचनमस्ति, येन तत्र मन्त्रोऽन्वीयेत। ततश्च मन्त्रवर्णतो देवतालाभासम्भवादाग्नेयशब्देन देवताविधिरेव स्वीकर्तव्यः।

ननु-अष्टत्वादिगुणानां यागस्य च विधानाद्वाक्यभेदः, न च विशिष्टविधानान्न दोष इति वाच्यम्, यज्यश्रवणेन तदसम्भवात् इत्यत आह—अविभागाद्विधानार्थं इति। द्रव्यदेवतादिविशिष्टविधानपरेऽस्मिन्वाक्ये प्रत्यक्षयज्यश्रवणेऽपि अष्टाकपालद्रव्यस्याग्नेय इति तद्धितेन गम्यमानादग्निदेवतासम्बन्धाद्यागः कल्प्यते। कुतः? अविभागात् द्रव्यदेवतासम्बन्धस्य यागेनाविनाभावात् देवतात्वस्य त्यज्यमानद्रव्योद्देश्यतारूपत्वात्। ततश्च विशिष्टविधौ नानुपपत्तिः। तत्र विशेषणानामार्थिकानेकविधिविधेयत्वेऽपि श्रूयमाणविधेरावृत्त्यभावान्न वाक्यभेददोषः। विशेषणेष्वार्थिकविधिभेदनिबन्धनञ्च गौरवमगत्या स्वीकार्यम्। तस्माद्गुणविधिरेवाग्नेयशब्दः, न तु नामधेयम्। प्रयोजनमाग्नेयशब्दस्य नामधेयत्वे "तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेत्" इत्यादिविकृतावग्न्यन्वाधानयाजमानमन्त्रे "पौर्णमासं हविरिदमेषां मयि" इत्यत्र पौर्णमासमित्यस्य स्थाने आग्नेयमित्यूहः। गुणविधौ तु तदभावः। ऐष्टमित्येवोह्यम्। नामधेयत्वे याज्यानुवाक्यामन्त्रवर्णाद्द्रव्यवदानमात्रस्यैवाग्निदेवतासम्बन्धः, तावन्मात्रस्य याज्यान्ते क्रियमाणहोमसम्बन्धात्। गुणविधौ तु कृत्स्नस्य पुरोडाशस्याग्निदेवतासम्बन्धः सिध्यति। यथा चैतत्तथा निवीतपादे 'सर्वप्रदानं हविषस्तदर्थत्वात्' (ष) इत्यत्र व्यक्तं भविष्यति॥

इति सप्तममाग्नेयाधिकरणम्॥ ७॥

---

1. वाक्ये ग 2. स्थिते ग, घ.

वाक्यभेदापत्तेः। न च विशिष्टविधौ न वाक्यभेद इति वाच्यम्, गौरवात्, बहुष्वपि विशेषणांशेषु गुणेषु विधिपर्यवसानस्य विध्यावृत्तिं विना असम्भवेन वाक्यभेदस्य तदवस्थत्वाच्च। न च "उद्भिदा यजेत" इत्यत्र नामार्हकर्मविशेषस्य यजिनोपात्तत्वात्तन्नामधेयमुद्भित्पदमिति युक्तम्, इह तु नामार्हकर्मविशेषानुपादानात्कथमाग्नेयपदं नामधेयमिति वाच्यम्, अष्टाकपाल इत्यनेनैव [1]तल्लाभात्। तेन ह्यष्टाकपालद्रव्यकर्कश्चिद्धात्वर्थविशिष्टभावना गम्यते। धात्वर्थानुरागमन्तरेण द्रव्यस्य तस्य भावनान्वयानुपपत्तेः। स च धात्वर्थः "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इति वाक्यशेषे उपांशुयाजादिसमभिव्याहाराद्यागरूप [2]उन्नीयते। न च प्रवृत्तिनिमित्तस्याग्निदेवतागुणस्यान्यतोऽप्राप्तेः कथं नामधेयत्वमिति वाच्यम्। "अग्निर्मूर्धा भुवो यज्ञस्य" इति मन्त्रवर्णतस्तत्प्राप्तेः। अतोऽग्निहोत्रादिशब्दवत्कर्मनामधेयमाग्नेयशब्द इति प्राप्ते, सिद्धान्तयति—

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥८॥**

तुशब्दोऽवधारणे। गुणशब्दसमभिव्याहृततच्छब्दः प्रधानभूतधात्वर्थं यागं परामृशति। स च गुणाश्च तद्गुणाः—यागः अग्न्यादयश्च अत्रावश्यं विधीयेरन्, न तु नामधेयमाग्नेयशब्दः। कुतः? न चेदन्येन शिष्टा। चेच्छब्दो ह्यर्थे।

'ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत्प्रमाणं स्युस्ते यान्ति परमां गतिम्'॥ इति यथा।

यतः अन्येन प्रमाणान्तरेण न शिष्टाः। 'शासु' अनुशिष्टौ। अनुशासनं विधानम्। न विहिता यागे अग्न्यादयश्च गुणाः। अतः अग्निदेवतागुणयोगं निमित्तीकृत्याग्नेयशब्दस्य नामधेयत्वमाश्रयितुं न युक्तम्। न च "अग्निर्मूर्धा" इत्यादिमन्त्रवर्णतो देवताप्राप्तिसम्भवः। तथाहि—अष्टाकपालभवनाक्षिप्तभावनायामष्टाकपालद्रव्यस्य धात्वर्थानुरागमन्तरेणान्वयासम्भवाद्धात्वर्थः कश्चित्कल्प्यमानः पुरोडाशस्वरूपनिर्माणरूप एव पर्यवस्यति। स च स्वानुष्ठानाय मन्त्रानपेक्षमाणोऽपि "मखस्य शिरोऽसि" इत्यादिपुरोडाशस्वरूपनिर्माणमन्त्रैः शान्ताकाङ्क्षत्वाद्देवतोद्देश्यकद्रव्यत्यागरूपयागत्वानिश्चयाच्च देवताप्रतिपादकमन्त्रानपेक्षतया तत्र मन्त्रान्वयासम्भवेन कथं मन्त्रवर्णतो देवताप्राप्तिसम्भवः। न च "शिरो वा एतद्यज्ञस्य यदाग्नेयः" इति वाक्य-

1 तस्य लाभात्. ग 2 उन्नेय. ग, घ.

शेषे उपांशुयाजसाहचर्याद्यागत्वनिश्चयसम्भवः। तत्र हि वाक्यशेषे[1] आग्नेयशब्दस्य कर्मनामधेयत्वे निश्चिते[2] सत्याग्नेयशब्दाभिधेयस्य कर्मण उपांशुयाजसाहचर्याद्यागत्वनिश्चयः। यागत्वनिश्चये च मान्त्रवर्णिकदेवताप्राप्त्या आग्नेयशब्दस्य कर्मनामधेयत्वमित्यन्योन्याश्रयः प्रसज्यते। न च प्रथमं यागत्वानिश्चयेऽप्याघारवन्मन्त्रान्वयोऽप्यस्त्विति वाच्यम्, वैषम्यात्। आघारे हि प्रथम यागत्वानिश्चयेऽपि "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इति विनियोगवचनबलान्मन्त्रान्वयः। नात्र तथा याज्यापुरोनुवाक्यायुगलस्याष्टाकपालद्रव्यव्यापारे विनियोजक वचनमस्ति, येन तत्र मन्त्रोऽन्वीयेत। ततश्च मन्त्रवर्णतो देवतालाभासम्भवादाग्नेयशब्देन देवताविधिरेव स्वीकर्तव्यः।

ननु-अष्टत्वादिगुणाना यागस्य च विधानाद्वाक्यभेदः, न च विशिष्टविधानान्न दोष इति वाच्यम्, यज्यश्रवणेन तदसम्भवात् इत्यत आह—अविभागाद्विधानार्थं इति। द्रव्यदेवतादिविशिष्टविधानपरेऽस्मिन्वाक्ये प्रत्यक्षयज्यश्रवणेऽपि अष्टाकपालद्रव्यस्याग्नेय इति तद्धितेन गम्यमानादग्निदेवतासम्बन्धाद्यागः कल्प्यते। कुतः? अविभागात् द्रव्यदेवतासम्बन्धस्य यागेनाविनाभावात् देवतात्वस्य त्यज्यमानद्रव्योद्देश्यतारूपत्वात्। ततश्च विशिष्टविधौ नानुपपत्तिः। तत्र विशेषणानामार्थिकानेकविधिविधेयत्वेऽपि श्रूयमाणविधेरावृत्त्यभावान्न वाक्यभेददोष। विशेषणेष्वार्थिकविधिभेदनिबन्धनञ्च गौरवमगत्या स्वीकार्यम्। तस्माद्गुणविधिरेवाग्नेयशब्दः, न तु नामधेयम्। प्रयोजनमाग्नेयशब्दस्य नामधेयत्वे "तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपाल पुरस्तान्निर्वपेत्" इत्यादिविकृतावग्न्यन्वाधानयाजमानमन्त्रे "पौर्णमास हविरिदमेषा मयि" इत्यत्र पौर्णमासमित्यस्य स्थाने आग्नेयमित्यूहः। गुणविधौ तु तदभाव·। ऐष्टमित्येवोह्यम्। नामधेयत्वे याज्यानुवाक्यामन्त्रवर्णाद्द्रव्यवदानमात्रस्यैवाग्निदेवतासम्बन्ध, तावन्मात्रस्य याज्यान्ते क्रियमाणहोमसम्बन्धात्। गुणविधौ तु कृत्स्नस्य पुरोडाशस्याग्निदेवतासम्बन्ध· सिध्यति। यथा चैतत्तथा निवीतपादे 'सर्वप्रदान हविषस्तदर्थत्वात्' (ष) इत्यत्र व्यक्त भविष्यति॥

इति सप्तममाग्नेयाधिकरणम्॥ ७॥

---

1 वाक्ये ग 2. स्यते ग, घ.

वाक्यभेदापत्तेः। न च विशिष्टविधौ न वाक्यभेद इति वाच्यम्, गौरवात्, बहुष्वपि विशेषणांशेषु गुणेषु विधिपर्यवसानस्य विध्यावृत्तिं विना असम्भवेन वाक्यभेदस्य तदवस्थत्वाच्च। न च "उद्भिदा यजेत" इत्यत्र नामार्हकर्मविशेषस्य यजिनोपात्तत्वात्तन्नामधेयमुद्भित्पदमिति युक्तम्, इह तु नामार्हकर्मविशेषानुपादानात्कथमाग्नेयपदं नामधेयमिति वाच्यम्, अष्टाकपाल इत्यनेनैव [1]तल्लाभात्। तेन ह्यष्टाकपालद्रव्यककिञ्चिद्धात्वर्थविशिष्टभावना गम्यते। धात्वर्थानुरागमन्तरेण द्रव्यस्य तस्य भावनान्वयानुपपत्तेः। स च धात्वर्थः "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इति वाक्यशेषे उपांशुयाजादिसमभिव्याहाराद्यागरूप [2]उन्नीयते। न च प्रवृत्तिनिमित्तस्याग्निदेवतागुणस्यान्यतोऽप्राप्तेः कथं नामधेयत्वमिति वाच्यम्। "अग्निर्मूर्धा भुवो यज्ञस्य" इति मन्त्रवर्णतस्तत्प्राप्तेः। अतोऽग्निहोत्रादिशब्दवत्कर्मनामधेयमाग्नेयशब्द इति प्राप्ते, सिद्धान्तयति—

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥८॥**

तुशब्दोऽवधारणे। गुणशब्दसमभिव्याहृततच्छब्दः प्रधानभूतधात्वर्थं याग परामृशति। स च गुणाश्च तद्गुणाः—याग अग्न्यादयश्च अत्रावश्यं विधीयेरन्, न तु नामधेयमाग्नेयशब्दः। कुतः? न चेदन्येन शिष्टा। चेच्छब्दो ह्यर्थे।

'ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत्प्रमाण स्युस्ते यान्ति परमां गतिम्'॥ इति यथा।

यतः अन्येन प्रमाणान्तरेण न शिष्टा। 'शासु' अनुशिष्टौ। अनुशासन विधानम्। न विहिताः यागे अग्न्यादयश्च गुणा। अत अग्निदेवतागुणयोगं निमित्तीकृत्याग्नेयशब्दस्य नामधेयत्वमाश्रयितुं न युक्तम्। न च "अग्निर्मूर्धा" इत्यादिमन्त्रवर्णतो देवताप्राप्तिसम्भवः। तथाहि—अष्टाकपालभवनाक्षिप्तभावनायामष्टाकपालद्रव्यस्य धात्वर्थानुरागमन्तरेणान्वयासम्भवाद्धात्वर्थं कश्चित्कल्प्यमानः पुरोडाशस्वरूपनिर्माणरूप एव पर्यवस्यति। स च स्वानुष्ठानाय मन्त्रानपेक्षमाणोऽपि "मखस्य शिरोऽसि" इत्यादिपुरोडाशस्वरूपनिर्माणमन्त्रैः शान्ताकाङ्क्षत्वाद्देवतोद्देश्यकद्रव्यत्यागरूपयागत्वानिश्चयाच्च देवताप्रतिपादकमन्त्रानपेक्षतया तत्र मन्त्रान्वयासम्भवेन कथ मन्त्रवर्णतो देवताप्राप्तिसम्भव। न च "शिरो वा एतद्यज्ञस्य यदाग्नेय" इति वाक्य-

---

1. तस्य लाभात् ग. 2 उन्नेय. ग, घ

शेषे उपांशुयाजसाहचर्याद्यागत्वनिश्चयसम्भवः। तत्र हि वाक्यशेषे[1] आग्नेयशब्दस्य कर्मनामधेयत्वे निश्चिते[2] सत्याग्नेयशब्दाभिधेयस्य कर्मण उपांशुयाजसाहचर्याद्यागत्वनिश्चयः। यागत्वनिश्चये च मान्त्रवर्णिकदेवताप्राप्त्या आग्नेयशब्दस्य कर्मनामधेयत्वमित्यन्योन्याश्रयः प्रसज्यते। न च प्रथमं यागत्वानिश्चयेऽप्याघारवन्मन्त्रान्वयोऽप्यस्त्विति वाच्यम्, वैषम्यात्। आघारे हि प्रथम यागत्वानिश्चयेऽपि "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इति विनियोगवचनबलान्मन्त्रान्वयः। नात्र तथा याज्यापुरोनुवाक्यायुगलस्याष्टाकपालद्रव्यव्यापारे विनियोजक वचनमस्ति, येन तत्र मन्त्रोऽन्वीयेत। ततश्च मन्त्रवर्णतो देवतालाभासम्भवादाग्नेयशब्देन देवताविधिरेव स्वीकर्तव्यः।

ननु-अष्टत्वादिगुणानां यागस्य च विधानाद्वाक्यभेदः, न च विशिष्टविधानान्न दोष इति वाच्यम्, यज्यश्रवणेन तदसम्भवात् इत्यत आह—अविभागाद्विधानार्थे इति। द्रव्यदेवतादिविशिष्टविधानपरेऽस्मिन्वाक्ये प्रत्यक्षयज्यश्रवणेऽपि अष्टाकपालद्रव्यस्याग्नेय इति तद्धितेन गम्यमानादग्निदेवतासम्बन्धाद्यागः कल्प्यते। कुतः? अविभागात् द्रव्यदेवतासम्बन्धस्य यागेनाविनाभावात् देवतात्वस्य त्यज्यमानद्रव्योद्देश्यतारूपत्वात्। ततश्च विशिष्टविधौ नानुपपत्तिः। तत्र विशेषणानामार्थिकानेकविधिविधेयत्वेऽपि श्रूयमाणविधेरावृत्त्यभावान्न वाक्यभेददोषः। विशेषणेष्वार्थिकविधिभेदनिबन्धनञ्च गौरवमगत्या स्वीकार्यम्। तस्माद्गुणविधिरेवाग्नेयशब्दः, न तु नामधेयम्। प्रयोजनमाग्नेयशब्दस्य नामधेयत्वे "तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपाल पुरस्तान्निर्वपेत्" इत्यादिविकृतावग्न्यन्वाधानयाजमानमन्त्रे "पौर्णमास हविरिदमेषा मयि" इत्यत्र पौर्णमासमित्यस्य स्थाने आग्नेयमित्यूहः। गुणविधौ तु तदभावः। ऐष्टमित्येवोह्यम्। नामधेयत्वे याज्यानुवाक्यामन्त्रवर्णाद्द्रव्यवदानमात्रस्यैवाग्निदेवतासम्बन्धः, तावन्मात्रस्य याज्यान्ते क्रियमाणहोमसम्बन्धात्। गुणविधौ तु कृत्स्नस्य पुरोडाशस्याग्निदेवतासम्बन्धः सिध्यति। यथा चैतत्तथा निवीतपादे 'सर्वप्रदान हविषस्तदर्थत्वात्' (ष) इत्यत्र व्यक्त भविष्यति॥

इति सप्तममाग्नेयाधिकरणम्॥ ७॥

---

1 वाक्ये ग  2. स्थिते ग, घ.

८

कर्मनामधेयप्रसङ्गाद्द्रव्यनामधेयेषु विचार्यते । "बर्हिर्लुनाति" "आज्यं निर्वपति" इत्यादौ बर्हिराज्यशब्दौ संस्कारनिमित्तौ जातिनिमित्तौ वेति संशय । यूपाहवनीयादिशब्दवत्संस्कारनिमित्तौ स्याताम् । तथाहि—नात्र बर्हिराज्योद्देशेन लवननिर्वपणादिविधिः, किन्तु 'वृक्षं छिनत्ति यूपं कर्तुम्' 'अग्निमादधात्याहवनीय कर्तुम्' इत्यादिवत् लुनाति बर्हि. कर्तुम्, निर्वपत्याज्यं कर्तुमित्येव संस्कारविधानम् । न च "पालाशो यूपो भवति" "अग्नीनादधीत" इत्यादिविधिपर्यालोचनया पलाशादिवृक्षस्याग्नेश्च कर्मतया लाभाद्वृक्ष छिनत्ति यूपीकर्तुमग्निमादधात्याहवनीयीकर्तुमिति संस्कारविधिर्युज्यते । इह तु बर्हिराज्यशब्दौ विना लवननिर्वपणकर्मसमर्पकस्य शब्दान्तरस्याभावात्कथं संस्कारविधिरिति वाच्यम् । "दर्भैः स्तृणीत हरितैः" इति मन्त्रैर्दर्भाणाम् "घृतञ्च वै मधु च प्रजापतिरासीत्" इत्यादिवाक्यशेषे घृतस्य च प्रस्तुतत्वेन कर्मत्वोपपत्ते । अतो दर्भाल्लुनाति बर्हिः कर्तुम्, घृतं निर्वपत्याज्यं कर्तुमिति बर्हिराज्यात्मकसंस्कारविधानाद्बर्हिराज्यशब्दौ संस्कारनिमित्तौ । यद्यपि 'बर्हिरादाय गावो गता.' 'आज्यं वणिजो विक्रीणन्ति' इति लोके असंस्कृतेऽपि प्रयोगो दृश्यते, तथापि 'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यनुपदमेव लोकप्रसिद्ध्यपेक्षया शास्त्रप्रसिद्धेर्बलवत्त्वस्य निर्णीतत्वेन याज्ञिकप्रसिद्ध्यनुसारेण संस्कारनिमित्तत्वमेवाश्रयितुं युक्तम् इति प्राप्ते, सिद्धान्तयति—

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः**[1] ॥ ९ ॥

संस्काराभावेऽपि बर्हिराज्यशब्दयोरस्ति वृत्ति. । कुत. ? शब्दलाभात् असंस्कृतेऽपि 'बर्हिरादाय गावो गता.' 'आज्यं वणिजो विक्रीणन्ति' इति लोके बर्हिराज्यशब्दप्रयोगदर्शनात् । तस्माद् बर्हिःशब्द आज्यशब्दश्च अतच्छब्द.—संस्कारवाचको न भवति । न च शास्त्रप्रसिद्धेर्बलवत्त्वाल्लोकप्रसिद्धिबाधः शङ्क्य. । आश्ववालादिशब्दस्य हि काशादावश्वपुच्छादौ च याज्ञिकलौकिकप्रसिद्ध्योर्विरोधाद्याज्ञिकप्रसिद्धेर्लौकिकप्रसिद्धिबाधन युक्तम् । नेह तथा, याज्ञिकानामपि जातिविशेष विना क्वापि प्रयोगाभावात् । न च जात्यवच्छिन्ने सर्वत्र याज्ञिकाना प्रयोगाभावादस्त्येव

1. शब्द स्यात्.

विरोध इति वाच्यम्। न हि यो यत्र शक्तः स तत्र सर्वैः प्रयोक्तव्य इति नियमोऽस्ति, आलस्यादिना प्रयोगाभावस्य सर्वत्र सम्भवेन क्वापि शब्दे तथा नियमासम्भवात्। तस्माज्जातिनिमित्तावेव बर्हिराज्यशब्दौ। अत्र पुरोडाशामिक्षाधानादिशब्दा अप्युदाहार्याः, 'पुरोडाशेन मे माता प्रहेलकं ददाति' 'आमिक्षया बालका· क्रीडन्ति' 'मासं गुडधानाः खादन्ति' इत्यादिप्रयोगदर्शनात्। प्रयोजन संस्कारनिमित्तत्वे "बर्हिषा यूपावटं स्तृणाति" "आज्येन यूपमनक्ति" "एककपालेन पुरोडाशेन प्रातरनुवाकमुपाकरोति" "आमिक्षा वैश्यस्य व्रतं भवति" "धानाभिर्हारियोजनं श्रीणाति" इत्यादौ संस्काराणा प्रवृत्तिः। जातिनिमित्तत्वे तु तदप्रवृत्ति·॥

इत्यष्टम बर्हिराज्याधिकरणम्॥ ८॥

९

"प्रोक्षणीरासादय" इत्यत्र "प्रोक्षणीरुत्पुनाति" इत्याद्युत्पवनादिसंस्कारनिमित्तः प्रोक्षणीशब्दः? उत अप्त्वजातिनिमित्तः? किं वा यौगिकः क्रियानिमित्त·? इति संशये 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति संस्कारविहीनास्वप्यप्सु प्रोक्षणीशब्दस्य प्रयोगदर्शनाद्बर्हिराज्यादिशब्दवत्पूर्वाधिकरणन्यायेन जातिनिमित्तत्वं प्राप्तम्। न च प्रपूर्वात् 'उक्ष' सेचने इति धातोः करणे ल्युटि व्युत्पन्नस्यास्य प्रकृष्टसेचनसाधनतावाचकत्वस्य योगेनैव सम्भवाद्यौगिकत्वमेव न्याय्यमिति वाच्यम्। योगापेक्षया रूढेर्बलवत्त्वात् तत्तत्पदार्थशक्तपदसमूहरूपाद्वाक्याद्धि पदार्थसंसर्गरूपवाक्यार्थप्रतीतिस्तत्तत्पदशक्त्युपस्थापितमुख्यार्थरूपपदार्थनिबन्धनत्वाल्लाक्षणिकी। तथा अवयवद्वारेण पदार्थप्रतीतिरपि वाक्यार्थतुल्ययोगक्षेमत्वाल्लाक्षणिकी। समुदायप्रसिद्धिरूपया रूढ्या त्वर्थप्रतीतिः पदश्रवणमात्रनिबन्धनत्वाच्छ्रौती। तस्मात्प्रोक्षणीशब्देनापि रूढ्या अप्त्वजात्यभिधानमिति प्राप्ते, सिद्धान्तयति—

## प्रोक्षणीष्वर्थसंयोगात्॥ १०॥

स्त्रीलिङ्गबहुवचनान्तप्रोक्षणीशब्दे अवयवार्थसयोगाद्योग एवाश्रयणीयः, न तु रूढि·। न च रथकारशब्दवद्रूढिरिति युज्यते, वैषम्यात्। क्लृप्तैव रूढिर्योगं बाधते। रथकारशब्दस्य च त्रैवर्णिकबहिर्भूतऋभुसौधन्वनसात्त्वदादिनामधेये जातिविशेषे

"ऋभूणा त्वा देवानां व्रतपते" इत्याधानमन्त्रवर्णात् "सौधन्वना ऋभवः" इति मन्त्रे सामानाधिकरण्यनिर्देशाच्च रूढिः क्लृप्ता योग बाधत इति कृत्वा,

"व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च।
कारूषश्च विजन्मा च मैत्र. सात्त्वत एव च॥"

इति स्मृतिसिद्धजातिविशेषवाचित्व युज्यते। अश्वकर्णादिशब्देषु त्ववयवार्थासम्भवादेव रूढिराश्रीयते। न हि प्रोक्षणीशब्दे अप्त्वजातिरूढिसाधक वचनमवयवार्थासम्भवो वास्ति, येन रूढिर्योग बाधेत। न च 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति प्रयोगबलादेवाप्त्वजातौ रूढि क्लृप्ता स्यादिति वाच्यम्। अवयवार्थयोगेनैव प्रयोगस्योपपन्नत्वेन तस्य रूढिकल्पकत्वानुपपत्तेः। न च योगाश्रयणे अर्थप्रतीतिर्लाक्षणिकी स्यादिति वाच्यम्। दृष्टमुख्यार्थसम्बन्धरूपलक्षणाश्रयणापेक्षया अदृष्टसमुदायशक्तिकल्पनाया एव गरीयस्त्वात्। न च योगार्थसम्भवेऽपि पङ्कजादिवद्योगरूढत्वमस्त्विति वाच्यम्, वैषम्यात्। पङ्कजनिकर्तृत्वरूपयोगार्थसम्भवेऽपि पद्मत्वजाति विहाय कुमुदादौ पङ्कजशब्दप्रयोगाभावेन तत्र योगरूढिराश्रीयते। प्रकृते तु 'आज्य प्रोक्षणम्' इत्यप्त्वजात्यभावेऽपि प्रयोगदर्शनेन योगरूढ्यसम्भव.। तथा च यत्र रूढिसाधकं प्रमाणमस्ति रथकारादिशब्दे, यत्र वा अवयवार्थो न सम्भाव्यते अश्वकर्णादिशब्दे तत्र केवला रूढि। यत्र अवयवार्थे सम्भवत्यपि क्वचिदेव प्रयुज्यते न सर्वत्र, यथा पङ्कजादिशब्दे तत्र योगरूढिरिति निष्कर्ष। प्रकृते चाप्त्वजातौ प्रोक्षणीशब्दस्य न रूढिबोधक शास्त्रमस्ति अवयवार्थश्च सम्भवति। अतो न केवलरूढिः। आज्येऽपि प्रयोगदर्शनान्न योगरूढि। अत केवलयौगिक एवायं प्रोक्षणीशब्द क्रियानिमित्त.। न च घृतक्षीरादेरपि "प्रोक्षणीरासादय" इत्यत्र प्रतीति शङ्क्या। स्त्रीलिङ्गबहुवचनाभ्याम् "आपो वै रक्षोघ्नी" इति वाक्यशेषोपात्तानामपामेव विशेष्यत्वेनोपस्थिते[1]। तदेतत्सूत्रे स्त्रीलिङ्गबहुवचनान्तप्रोक्षणीशब्दोपादानेन सूचितम्।

प्रयोजनं संस्कारनिमित्तत्वे स्त्रीलिङ्गबहुवचनान्तस्यैव संस्कारवाचित्वात्सोमारौद्रचरौ "आज्य प्रोक्षणम्" इति विहिते आज्येऽपि प्रोक्षणीरित्यविकृत एव प्रयोज्यः। जातिनिमित्तत्वे आज्यत्वजातिप्रकाशनाय 'आज्यमासादय' इति प्रयोज्यम्। यौगिकत्वे तु 'प्रोक्षणमासादय' इति लिङ्गवचनोहेन प्रयोग इति। यत्त्वत्र सोमनाथदीक्षिता-

1. प्रतीते, ग.

'रथकारस्तु माहिष्यां करण्यां यस्य सम्भव' इति स्मृत्या रथकारशब्दस्य रूढिमाचख्युस्तद्रथकाराधिकरणे 'सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन्' इति सूत्रभाष्यवार्तिकतन्त्ररत्नादिग्रन्थविस्मरणविजृम्भितमेवेत्यास्तां तावत् ॥

इति नवमं प्रोक्षण्यधिकरणम् ॥ ९ ॥

१०

"निर्मन्थ्येनेष्टकाः पचन्ति" इत्यत्र किम् "गायत्रं छन्दोऽनुप्रजायस्वेति त्रिःप्रदक्षिणमग्निं मन्थति" इत्यादिसंस्कारनिमित्तो निर्मन्थ्यशब्दः ? उत अग्नित्वजातिनिमित्तः ? किं वा योगनिमित्त ? इति संशये 'निर्मन्थ्यमानय ओदनं पक्ष्यामहे' इत्यसंस्कारेऽपि प्रयोगदर्शनाद्बर्हिराज्यादिशब्दवत्संस्कारनिमित्तत्वनिरासेन जातिनिमित्तत्वमेवावतिष्ठामहे। न च निष्पूर्वान्मन्थते 'ऋहलोर्ण्यत्' इति कर्मणि ण्यति निष्पन्नस्य निर्मन्थ्यशब्दस्यावयवार्थयोगेन मन्थनकर्मतावाचित्वसम्भवात्प्रोक्षणीशब्दवद्यौगिकत्वमेव स्यादिति वाच्यम्, वैषम्यात्। प्रोक्षणीशब्दस्य [1]ह्यप्सु सेचनसाधनत्वस्य सर्वदा सत्त्वाद्यौगिकत्व युज्यते। [2]अरण्यस्थदण्डादिसाधारण्याय अनन्यथासिद्धनियतपूर्ववृत्तिजातीयत्वस्यैव कारणतात्वस्वीकारात्। प्रकृते तु मन्थनकर्मत्व मन्थनजन्यनिष्पत्त्यवस्थालक्षणफलशालित्वम्। तच्च निष्पन्नावस्थाया न सम्भाव्यते। निष्पन्ने चाग्नौ निर्मन्थ्यशब्दं प्रयुञ्जते लोके। न च भूतपूर्वगत्या प्रयोगस्योपपत्तिसम्भवः। व्यक्त्यैक्ये हि भूतपूर्वगति। अग्निस्तु प्रतिक्षणमधिकतुषकाष्ठादिव्यापनप्रयुक्तपरिमाणभेदाद्भिद्यते। ततश्च यस्यां व्यक्तौ निर्मन्थ्यशब्दः प्रयुज्यते न तस्या भूतपूर्वगत्या मन्थनकर्मत्वमस्ति, निष्पत्त्यवस्थापन्नव्यक्तेर्निष्पन्नव्यक्तेश्च भिन्नत्वात्। अतो योगार्थाभावेऽपि प्रयोगदर्शनादश्वकर्णादिशब्दवद्बर्हिराज्यादिशब्दवच्च केवलाग्नित्वजातिनिमित्त एव निर्मन्थ्यशब्द इति प्राप्ते, सिद्धान्तयति—

## तथा निर्मन्थ्ये ॥ ११ ॥

यथा प्रोक्षणीशब्दोऽवयवार्थसम्भवाद्यौगिकः तथा निर्मन्थ्यशब्दोऽपि स्यात्[3]। प्रतिक्षणं व्यक्तिभेदेऽपि मन्थनकर्माग्निसन्तानस्यैकत्वेन व्यक्तीनामप्येकत्वमापाद्य भूतपूर्वगत्या निष्पन्नावस्थायामप्यवयवार्थयोगसत्त्वेन यौगिकत्वे बाधकाभावात्। न

1 त्वप्सु. ग　　2. वनस्थ. ख, ग, मु. पा.　　3. निर्मन्थ्ये स्यात्. ख, ग, मु. पा.

च विनिगमनाविरहः। यथाकथञ्चिदवयवयोगेनैवोपपत्तावत्यन्तादृष्टरूढिशक्तिकल्पनाया अयुक्तत्वात्। एतेन प्रोक्षण्यधिकरणेन गतार्थता निरस्ता, उक्तरीत्या [1]अधिकशङ्कानिराकरणार्थत्वात्। प्रयोजन संस्कारनिमित्तत्वे संस्काराणां प्राप्तिः, जातिनिमित्तत्वे अग्निमात्रस्य प्राप्ति., यौगिकत्वे अचिरमन्थनजन्यस्यैवाग्नेः प्राप्तिरिति भाष्यकृतः। 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इति न्यायेन निरित्युपसर्गवशादचिरत्वलाभः। किञ्च 'इष्टकाः पचन्ति' इति पाकादेवाग्निविशेषे प्राप्ते लोहितोष्णीषादिवद्विशेषणपरो निर्मन्थ्यशब्दो मन्थनक्रियामेवाङ्गतया विदधदङ्गानां प्रधानदेशकालकर्तृकत्वनियमादचिरता मन्थनस्य गमयति। तस्मादचिरमन्थनक्रियानिमित्तो निर्मन्थ्यशब्द इत्यास्तां तावत्॥

इति दशम निर्मन्थ्याधिकरणम्॥ १०॥

११

सन्ति चातुर्मास्यानि "अक्षय्य ह वै चातुर्मास्ययाजिन' सुकृतं भवति" इति। तत्र सन्त्यष्टौ यागा'—"आग्नेयमष्टाकपाल निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुत सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्" इति। तत्सन्निधाविदमाम्नायते "वैश्वदेवेन यजेत" इति। तत्र वैश्वदेवशब्दो गुणविधि. कर्मनामधेय वेति संशय.। तत्र देवतातद्धितस्य 'सूक्तहविषोरेवेष्यते' इति वार्तिककृता कात्यायनेन नियमितत्वेन वैश्वदेवशब्दस्य यागनामत्वासम्भवात्प्रकृताष्टाकपालादिद्रव्याण्येव वैश्वदेवशब्देनाभिधीयन्ते। तत्र द्रव्याणामाग्नेयादिवाक्यैरेव प्राप्तत्वान्निर्मन्थ्यशब्दे मन्थनवदुपसर्जनीभूता अपि विश्वेदेवदेवता विधीयन्ते। न चाग्न्यादिदेवतावरुद्धेषु तेषु यागेषु देवतान्तरविधान विरुद्धमिति वाच्यम्। अत एव विरोधाद्विकल्पोपपत्ते.। अतो वैश्वदेवशब्दो गुणविधिरिति पूर्वपक्षमुद्भाव्य निराकरोति—

**वैश्वदेवे विकल्प इति चेन्न[2] प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य॥ १२॥**

वैश्वदेवशब्दे विश्वदेवलक्षणदेवतागुणो विधीयते। ततश्चाग्न्यादिभिस्तस्य गुणस्य विकल्प' स्यादिति चेत्—तन्न, कुत ? प्रकरणात् प्रत्यक्षविधानाच्च। वैश्वदेव-

1. अधिकाशङ्का. ग, घ    2. ग वा प्रकरणात्

वाक्ये हि यजिना यागसामान्यं शब्दशक्त्या गम्यते। आग्नेयादिवाक्योत्पन्नप्रकृत-यागीयद्रव्यपरत्वन्तु तस्य प्रकरणाल्लभ्यमिति विश्वदेवलक्षणगुण प्रकरणगम्य.। अग्न्यादयस्तु प्रकरणनिरपेक्षतया प्रत्यक्षशिष्टाः। चशब्दोऽनुक्तसमुच्चये। विश्वदेव-गुणस्तावद्यागाननूद्य विधानादुत्पन्नशिष्टः। अग्न्यादयस्तूत्पत्तिशिष्टाः। अतो न विकल्पो युज्यते। कुत ? हि यस्मात्कारणात् प्रकरणम् उत्पन्नशिष्टप्रकरणानुगृहीत-विश्वदेवगुणः द्रव्यस्य अष्टाकपालादिद्रव्यसयोगेन[1] उत्पत्तिवाक्येषु श्रुतस्याग्न्यादि-देवतागुणस्य न [2]पक्षे बाधक भवितुमर्हति। ( ख ) उत्पत्त्युत्पन्नशिष्टयोर्गुणाधिकरणे श्रुतिप्रकरणयोश्च श्रुतिलिङ्गादिसूत्रे प्राबल्यदौर्बल्ये व्यवस्थापयिष्येते ॥

गुणविधौ दोषान्तरमाह—

## मिथश्चानर्थसम्बन्धः ॥ १३ ॥

अयुक्तोऽर्थसम्बन्ध. अनर्थसम्बन्धः। गुणविधावामिक्षाया विश्वदेवदेवता-कत्वस्य "वैश्वदेवीमामिक्षाम्" इत्युत्पत्तिवाक्यत एव प्राप्तत्वात्तद्व्यतिरिक्तेषु सप्तस्वेव हवि षु विश्वे देवा विधीयन्त इति वक्तव्यम्। तथा चैकस्यैव वैश्वदेवशब्दस्य विधि-त्वानुवादत्वयोरर्थयो मिश्रः परस्परं सम्बन्ध. स्यात्, न चैतद्युज्यते ॥

इतोऽपि गुणविधौ दोषान्तरमाह—

## परार्थत्वाद्गुणानाम् ॥ १४ ॥

एकैवाहुति. स्यादिति शेष। "याज्याया अधि वषट्करोति" "वषट्कृते जुहोति" इति यागानुष्ठान विहितम्, प्रक्षेपशिरस्कदेवतोद्देश्यकद्रव्यत्यागस्यैवाहुति-शब्दार्थत्वात्। तथा च सूत्रम् 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' इति। तच्च यागानुष्ठानं द्रव्यभेदेऽपि न भिद्यते, बहूनामपि द्रव्याणां युगपदेव त्यागे विरोधाभावात्। न च विरोधाभावेऽपि द्रव्यभेदादेव यागानुष्ठानभेद. शक्यते वक्तुम्, पुरोडाशादिद्रव्याणा याग प्रति परार्थत्वेन गुणभूतानां स्वरूपेण प्रधान-भूतयागानुष्ठानभेदप्रयोजकत्वानुपपत्ते' गुणावृत्त्या प्रधानावृत्तेरयुक्तत्वात्। देवता-भेदस्तु पर तत्प्रयोजक, देवताप्रकाशकयाज्यादीना युगपत्प्रयोगासम्भवात्। तथा च गुणविधिपक्षे अष्टानामपि यागाना विश्वदेवदेवताकत्वे सति सम्प्रतिपन्नदेवताकतया

---

1 सम्बन्धेन ग.　　2. पाक्षिक. ग, घ

वाजपेयिकप्राजापत्यवपादिवत्पुरोडाशचर्वादीनामष्टानामपि हविषामेकैवाहुतिः स्यात्। तथा सति "नव प्रयाजा इज्यन्ते, नवानूयाजा', अष्टौ हवींषि, द्वावाघारौ, द्वावाज्यभागौ, त्रिंशदाहुतयः सम्पद्यन्ते" इत्याहुतीनां त्रिंशत्त्वसम्पत्तेर्नित्यवदनुवादो विरुध्येत। यद्यपि तैत्तिरीयशाखायां वाक्यशेषे "त्रिंशत्सम्पद्यन्ते" इत्येव दृश्यते नाहुतय इति, तथापि भाष्यादिबलात्तथाविधवाक्यशेष शाखान्तरे उन्नेय'। न च सूक्तहविषोरेव देवतातद्धितस्य कात्यायनेन वार्तिककृता नियमितत्वाद्वैश्वदेवशब्दस्य कथं यागनामत्वमिति वाच्यम्, तथाविधवार्तिकस्य पातञ्जलभाष्यादावदृष्टत्वेनोपेक्ष्यत्वात्।

ननु नामत्वे वैश्वदेवशब्दस्य विधेयधात्वर्थपरिच्छेदकत्वेन विध्युपयोगो वक्तव्य'। वैश्वदेववाक्ये च धात्वर्थो न विधेय'। तथा सति तस्य प्रकृतयागेभ्यः कर्मान्तरत्वापत्तावष्टौ हवींषीति विरुध्येत, तद्धविषा सहाग्नेयादीनां [1]नवत्वापातात्। यदि त्विह प्रकृता एव यागा यजिनानूद्यन्ते तर्हि विधेयपरिच्छेदकस्य नाम्न आनर्थक्यम्, विधेयस्य परिच्छेद्यस्यालाभात्। ततश्चागत्या विषमशिष्टविकल्पमङ्गीकृत्य प्रकृतकर्मगुणविधायकत्वमेव वैश्वदेववाक्यस्याभ्युपेयम्, 'आनर्थक्यप्रतिहतानां विपरीत बलाबलम्' इति न्यायादिति चेत्-नैवम्, वैश्वदेववाक्ये हि सकृदुच्चारितेन[2] यजिना तन्त्राभिधानशक्तिमहिम्ना आग्नेयादियागाः समुदिताः केवलमनूद्यन्ते वैश्वदेवसंज्ञा बोधयितुम्। तथा च वैश्वदेवसंज्ञक आग्नेयादियागसमुदाय इत्यर्थं पर्यवस्यति। तथा च "वसन्ते वैश्वदेवेन यजेत" "पशुकामो वैश्वदेवेन यजेत" इत्यादौ समुदायस्यैव ग्रहणम्। अन्यथा उत्पत्तिवाक्यसिद्धवैश्वदेवत्वप्रत्यभिज्ञानादामिक्षायागस्यैव तत्र ग्रहणं स्यात्। न चाग्नेयादियागसमुदायस्य कथं वैश्वदेवशब्दो नामधेयं स्यात्, आमिक्षायागमात्रस्य विश्वदेवदेवत्यत्वादिति वाच्यम्, छत्रिन्यायेन वैश्वदेवावैश्वदेवेषु लक्षणया तदुपपत्ते।

नन्वेवं लक्षणाश्रयणमेव दोष इति चेत्तर्हि वैश्वदेवशब्दोऽयं न देवतातद्धितान्त, येन लक्षणा शङ्क्येत, "यद्विश्वे देवा. समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति वाक्यशेषोपदर्शितया विश्वदेवकर्तृकत्वरूपसम्बन्धविशेषे 'तस्येदम्' इत्यणि व्युत्पत्त्या योगवशेन श्रुत्यैव यागसमुदायनामत्वाभ्युपगमात्। न च वाक्यशेषदर्शितयोगेनैव नामत्वसिद्धेर्वैश्वदेववाक्यानर्थक्यं शङ्क्यम्। वाक्यशेषतो हि संज्ञामात्रमवगम्यते,

1. नवत्वापत्ते ग, घ 2 सकृदुच्चरितेन ग

न तु संज्ञिस्वरूपम्। तत्र प्रकरणादिना आग्नेयादीनामुपस्थितौ प्रत्येकमेव तेषां सञ्ज्ञा स्यात्, न तु समुदायस्य। सति त्वस्मिन्वैश्वदेववाक्ये यजिना सकृदुच्चारितेन तन्त्राभिधानशक्त्या आग्नेयादियागसमुदायस्यैवोपस्थितिमुखेन भवति वैश्वदेवपद समुदायनामधेयम्। एतेन 'गुणश्चापूर्वसयोगः' इति सूत्रेण श्रुतिलिङ्गादिसूत्रेण च गतार्थता निरस्ता, उक्तानर्थक्यशङ्कापरिहारार्थत्वादित्यास्तां तावत्॥

इत्येकादश वैश्वदेवाधिकरणम्॥ ११ ॥

१२

इदमाम्नायते—"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते, यदष्टाकपालो भवति गायत्र्यैवैन ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्य दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति, यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति। तत्र सशयः—किमष्टाकपालादिशब्दा. प्रकृतस्य वैश्वानरयागस्य नामधेयानि ? उत गुणविधय. ? अथवा फलेषु गुणविधय. ? आहोस्विदर्थवादाः ? इति। तत्राग्निहोत्रवैश्वदेवादिशब्दवत्तत्प्रख्यन्यायेन द्वादशत्वान्तर्भूताष्टत्वाद्याश्रित्य नामधेयत्वमाशङ्क्य निराकुर्वन् गुणविधिपक्षमुत्थापयति—

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं　　ाये॥ १९॥**

अग्न्यादिगुणास्तावत् पूर्ववन्तः-प्रापकशास्त्रवन्त.। मन्त्रवर्णादिभि. प्राप्ता इति यावत्। अतस्तेषाम् अविधानार्था अग्निहोत्रादिशब्दा, किन्तु तत्प्रख्यन्यायेन नामधेयानीति युक्तम्। इह तु समाम्नाये-अष्टाकपालादिशब्दसमूहे तत्सामर्थ्य-गुणविधानसामर्थ्यं स्यात् न तु नामधेयत्वम्, अष्टाकपालादिशब्दानां यजिसामानाधिकरण्याभावात्तत्प्रख्याभावाच्च। तथाहि—द्वादशसु कपालेषु सस्कृत' पुरोडाशो द्वादशकपालः। 'सस्कृत भक्षा' इत्यणप्रत्ययस्तद्धित। तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। स च समर्थपरिभाषया सामर्थ्ये सत्येव भवति। असापेक्षत्वलक्षणमेकार्थीभावलक्षण च सामर्थ्यम्। ततश्च योऽय द्वादशकपालेषु सस्कृत पुरोडाशो नासावष्टाकपालशब्देन व्यपदेशमर्हति, तस्याष्टसु चतुर्षु च कपालेषु सस्कृतत्वेन तत्राष्टाना चतुःसापेक्षत्वेनासामर्थ्यात्तद्धितानुत्पत्ते.। किञ्च न्यूनाधिकसङ्ख्याव्यवच्छेदकत्वं सङ्ख्या-

शब्दस्य स्वभावसिद्धमेव[1]। ततश्च "द्वादशकपालं निर्वपेत्" इत्यत्र द्वादशत्वसङ्ख्या न्यूनाधिकसङ्ख्याव्यवच्छेदकत्वेन विधेया[2]। तथा च कथमष्टत्वादीनां प्राप्तिः। अप्राप्तत्वाच्च तत्सङ्ख्याभावात्कथमष्टाकपालादिशब्दाना नामधेयत्वम्। तस्माद्गुणविधय एते विरोधाद्विकल्प्यन्ते। न च द्वादशत्वस्योत्पत्तिशिष्टत्वादष्टत्वादीना चोत्पन्नशिष्टत्वाद्विषमशिष्टविकल्पापत्तिरिति वाच्यम्, सर्वेषामुत्पत्तिशिष्टत्वात्। अष्टाकपालादिशब्दा हि द्वितीयान्ततया विपरिणम्यन्ते। 'वैश्वानर निर्वपेत्' इति तेषु सम्बध्यते 'वैश्वानरमष्टाकपालं नवकपाल दशकपालमेकादशकपालं द्वादशकपालं निर्वपेत्' इति। "गायत्रियैवैनम्" इत्यादिः सर्वोऽप्यर्थवादः। ततश्च "वैश्वानरं निर्वपेत्" इत्यादि "पशुमान् भवति" इत्यन्तमेक वाक्य सम्पद्यते। ततश्च सर्वेषामुत्पत्तिशिष्टत्वान्न विषमशिष्टविकल्पदोष। अथवा सर्वेऽप्युत्पन्नशिष्टाः। "वैश्वानरं निर्वपेत्" इति प्रथम देवतामात्रविशिष्टयागविधानम्। उत्पन्ने च तस्मिन्यागे एकदेवताकत्वेनाग्नेयविध्यन्तग्राहिणि चोदकप्राप्तकपालानुवादेनाष्टत्वादिविधय। एवञ्च द्वितीयान्ततया विपरिणामो नाश्रयणीयः। भवतीत्यस्याप्यन्वय. सूपपाद। न चैव सति "वैश्वानरं द्वादशकपालम्" इति वाक्ये द्वादशकपालस्यापि श्रूयमाणत्वात्कथं देवताविशिष्टयागमात्रविधानमिति वाच्यम्। तत्र द्वादशकपालशब्दस्याष्टाकपालाद्युपलक्षणार्थत्वेनाविवक्षितार्थत्वात्। अत सर्वेषामुत्पन्नशिष्टत्वान्न विषमशिष्टविकल्पो दोषः। तस्मात्कर्मणि गुणविधय एवैते ॥

तमिम कर्मणि गुणविधिपक्ष [3]दूषयन्नर्थवादत्वसिद्धान्तमवलम्बते—

**गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥ १६ ॥**

तुशब्द [4]पूर्वपक्षव्यावृत्तौ। प्रयुज्यत इति प्रयोग। कर्मणि घञ्। प्रयोगे अष्टाकपालादिसमाम्नाये अष्टत्वादिगुणस्य विधानार्थे सति, तद्गुणा तस्मिन्नुत्पन्नवैश्वानरयागे चोदकप्राप्तकपालद्वारका गुणा अष्टत्वादय' अनर्थका निष्प्रयोजनका. स्यु। कुत ? हि यस्मात्कारणात् तम्—उत्पत्तिशिष्टद्वादशत्वगुणावरुद्ध याग प्रति एषाम्

---

1. स्वाभाविकमेव क, ग, मु पा  2. विधीयते. ग
3. दूषयित्वा ग.  4 पक्षव्यावृत्तौ. क, ग, घ, मु पा.

अर्थवत्ता प्रयोजनवत्ता नास्ति, विषमशिष्टविकल्पासम्भवात्। न ह्येते सर्वेऽप्युत्पत्तिशिष्टा इति शक्यते वक्तुम्, प्रथमान्तानां द्वितीयान्ततया विपरिणामापातात् भवतीत्यस्यानन्वयापाताच्च। नाप्युत्पन्नशिष्टा, तथा सत्युत्पत्तिवाक्ये द्वादशकपालमित्यस्याविवक्षितार्थत्वापत्तेः। न चाष्टाकपालादिवाक्यान्यथानुपपत्त्या तस्याविवक्षितार्थत्वं कल्पयितुं युक्तम्, अष्टाकपालादिवाक्यानां विहितद्वादशकपालयागस्तुतिपरत्वेनाप्युपपत्तेरिति भावः॥

नन्वष्टत्वादीनामविहितत्वात्कथं तत्स्तुतिरित्याशङ्क्य निराकरोति—

## [1]तच्छेषो नोपपद्यत इति चेदविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन्॥ १७॥

तेषामष्टत्वादीनामविहितानां स्तावको वाक्यशेष न उपपद्यते, विहितस्तुतिपरत्वादर्थवादानाम् इति चेत्—मैवम्, यत. विधानार्थे। कर्मणि ल्युट्। विधिविषयीभूते द्वादशकपाले यागे विषये स्तुत्या प्रयोजनेन अष्टाकपालादिवादा उपपद्येरन्। कुतः? अविभागात्। द्वादशसु ह्यष्टत्वादय' सन्त्यविभक्ता.। अतस्तत्स्तुत्या द्वादशकपाल. स्तुतो भवति 'ईदृशोऽय महाभागो द्वादशकपाल' पुरोडाश, यस्मिन् क्रियमाणे ब्रह्मवर्चसहेतुकपूतत्वादिफलसाधनभूता अष्टाकपालादयोऽपि भवन्ति, अत प्रशस्तोऽयम्' इति। दृश्यते ह्यवयवस्तुत्या अवयविस्तुति' 'सुन्दरं वदनम्' इत्यादौ। तस्मादर्थवादा एते॥

ननु तथापि "गायत्रियैवैन ब्रह्मवर्चसेन पुनाति" इत्याद्यर्थवादादौदुम्बराधिकरणन्यायेन (स) अष्टाकपालादिवाक्याना विधित्वकल्पने उक्तरीत्या कर्मणि गुणविध्यसम्भवेऽपि "पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इत्युपसंहारे संहृत्य कीर्त्यमानाना "गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति" "विराजैवास्मिन्नन्नाद्यं दधाति" इत्यादिभिर्मध्येऽपि प्रत्येकमुपात्ताना [2]कामपदाभावेऽपि (ह) रात्रिसत्रन्यायेन क्रमेणाष्टाकपालादिफलत्वकल्पनया फलेभ्यो गुणविधयोऽमी स्युरित्याशङ्क्य निराकरोति—

---

1 सूत्रद्वयमिदमन्यत्र　　　　2. कमि ग

शब्दस्य स्वभावसिद्धमेव[1] । ततश्च "द्वादशकपालं निर्वपेत्" इत्यत्र द्वादशत्वसङ्ख्या न्यूनाधिकसङ्ख्याव्यवच्छेदकत्वेन विधेया[2] । तथा च कथमष्टत्वादीनां प्राप्तिः । अप्राप्तत्वाच्च तत्प्रख्याभावात्कथमष्टाकपालादिशब्दानां नामधेयत्वम् । तस्माद्गुणविधय एते विरोधाद्विकल्प्यन्ते । न च द्वादशत्वस्योत्पत्तिशिष्टत्वादष्टत्वादीनां चोत्पन्नशिष्टत्वाद्विषमशिष्टविकल्पापत्तिरिति वाच्यम्, सर्वेषामुत्पत्तिशिष्टत्वात् । अष्टाकपालादिशब्दा हि द्वितीयान्ततया विपरिणम्यन्ते । 'वैश्वानरं निर्वपेत्' इति तेषु सम्बध्यते 'वैश्वानरमष्टाकपालं नवकपालं दशकपालमेकादशकपालं द्वादशकपालं निर्वपेत्' इति । "गायत्रियैवैनम्" इत्यादिः सर्वोऽप्यर्थवादः । ततश्च "वैश्वानरं निर्वपेत्" इत्यादि "पशुमान् भवति" इत्यन्तमेकं वाक्यं सम्पद्यते । ततश्च सर्वेषामुत्पत्तिशिष्टत्वान्न विषमशिष्टविकल्पदोषः । अथवा सर्वेऽप्युत्पन्नशिष्टाः । "वैश्वानरं निर्वपेत्" इति प्रथमं देवतामात्रविशिष्टयागविधानम् । उत्पन्ने च तस्मिन्यागे एकदेवताकत्वेनाग्नेयविध्यन्तग्राहिणि चोदकप्राप्तकपालानुवादेनाष्टत्वादिविधयः । एवञ्च द्वितीयान्ततया विपरिणामो नाश्रयणीयः । भवतीत्यस्याप्यन्वयः सूपपादः । न चैवं सति "वैश्वानरं द्वादशकपालम्" इति वाक्ये द्वादशकपालस्यापि श्रूयमाणत्वात्कथं देवताविशिष्टयागमात्रविधानमिति वाच्यम् । तत्र द्वादशकपालशब्दस्याष्टाकपालाद्युपलक्षणार्थत्वेनाविवक्षितार्थत्वात् । अतः सर्वेषामुत्पन्नशिष्टत्वान्न विषमशिष्टविकल्पो दोषः । तस्मात्कर्मणि गुणविधय एवैते ॥

तमिमं कर्मणि गुणविधिपक्षं [3]दूषयन्नर्थवादत्वसिद्धान्तमवलम्बते—

**गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका**
**न हि तं प्रत्यर्थवत्तास्ति ॥ १६ ॥**

तुशब्दः [4]पूर्वपक्षव्यावृत्तौ । प्रयुज्यत इति प्रयोगः । कर्मणि घञ् । प्रयोगे अष्टाकपालादिसमाम्नाये अष्टत्वादिगुणस्य विधानार्थे सति, तद्गुणाः तस्मिन्नुत्पन्नवैश्वानरयागे चोदकप्राप्तकपालद्वारका गुणा अष्टत्वादयः अनर्थका निष्प्रयोजनकाः स्युः । कुतः ? हि यस्मात्कारणात् तम्—उत्पत्तिशिष्टद्वादशत्वगुणावरुद्धं यागं प्रति एषाम्

---

1. स्वाभाविकमेव क, ग, मु पा.
2. विधीयते. ग
3. दूषयित्वा ग
4. पक्षव्यावृत्तौ क, ग, घ, मु पा

अर्थवत्ता प्रयोजनवत्ता नास्ति, विषमशिष्टविकल्पासम्भवात्। न ह्येते सर्वेऽप्युत्पत्तिशिष्टा इति शक्यते वक्तुम्, प्रथमान्ताना द्वितीयान्ततया विपरिणामापाताल् भवतीत्यस्यानन्वयापाताच्च। नाप्युत्पन्नशिष्टा', तथा सत्युत्पत्तिवाक्ये द्वादशकपालमित्यस्याविवक्षितार्थत्वापत्ते.। न चाष्टाकपालादिवाक्यान्यथानुपपत्त्या तस्याविवक्षितार्थत्वं कल्पयितुं युक्तम्, अष्टाकपालादिवाक्यानां विहितद्वादशकपालयागस्तुतिपरत्वेनाप्युपपत्तेरिति भावः॥

नन्वष्टत्वादीनामविहितत्वात्कथं तत्स्तुतिरित्याशङ्क्य निराकरोति—

[1]तच्छेषो नोपपद्यत इति चेदविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन्॥ १७॥

तेषामष्टत्वादीनामविहितानां स्तावको वाक्यशेष न उपपद्यते, विहितस्तुतिपरत्वादर्थवादानाम् इति चेत्—नैवम्, यत. विधानार्थे। कर्मणि ल्युट्। विधिविषयीभूते द्वादशकपाले यागे विषये स्तुत्या प्रयोजनेन अष्टाकपालादिवादा उपपद्येरन्। कुतः? अविभागात्। द्वादशसु ह्यष्टत्वादय' सन्त्यविभक्ता.। अतस्तत्स्तुत्या द्वादशकपाल. स्तुतो भवति 'ईदृशोऽय महाभागो द्वादशकपाल पुरोडाश, यस्मिन् क्रियमाणे ब्रह्मवर्चसहेतुकपूतत्वादिफलसाधनभूता अष्टाकपालादयोऽपि भवन्ति, अत प्रशस्तोऽयम्' इति। दृश्यते ह्यवयवस्तुत्या अवयविस्तुतिः 'सुन्दरं वदनम्' इत्यादौ। तस्मादर्थवादा एते॥

ननु तथापि "गायत्रियैवैन ब्रह्मवर्चसेन पुनाति" इत्याद्यर्थवादादौदुम्बराधिकरणन्यायेन (स) अष्टाकपालादिवाक्याना विधित्वकल्पने उक्तरीत्या कर्मणि गुणविध्यसम्भवेऽपि "पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इत्युपसंहारे संहृत्य कीर्त्यमानानां "गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति" "विराजैवास्मिन्नन्नाद्य दधाति" इत्यादिभिर्मध्येऽपि प्रत्येकमुपात्ताना [2]कामपदाभावेऽपि (ह)रात्रिसत्रन्यायेन क्रमेणाष्टाकपालादिफलत्वकल्पनया फलेभ्यो गुणविधयोऽमी स्युरित्याशङ्क्य निराकरोति—

---

1 ध्रुनद्वयमिवमन्यत्र  2. कर्मि ग

**'कारणं स्यादिति चेदानर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ १८ ॥**

उत्पत्तिवाक्योत्पन्नवैश्वानरयागप्रयोगे कपालान्याश्रित्याष्टत्वाद्यनुष्ठाने पूतत्वादिरूपं कारण—फलं स्यात्। पूतत्वादिफलेभ्योऽष्टत्वादिगुणा विधीयन्तामिति यावत्। एवञ्च गोदोहनेन चमसस्येव (क्ष) काम्यैरष्टत्वादिभिरुत्पत्तिसिद्धस्यापि द्वादशत्वस्य बाधो युज्यत इति चेत्, पूतत्वादिकमष्टत्वादीना अकारणं–अनिमित्त फलं न भवति। फलाय गुणविधान न सम्भवतीति यावत्। कुत. ? आनर्थक्यात्–एकार्थकत्वाभावप्रसङ्गात्। उपक्रमोपसहारमध्यपरामर्शै. "वैश्वानरं द्वादशकपालं निर्वपेत्" इत्यारभ्य "पशुमान् भवति" इत्यन्तमेक वाक्यमवगतम्। "पुत्रे जाते" इत्युपक्रान्ता हीष्टिः "यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इत्युपसह्रियते। तान्येव पूतत्वादीनि फलानि "ब्रह्मवर्चसेन पुनाति, त्रिवृतैवास्मिंस्तेजो दधाति, विराजैवास्मिन्नन्नाद्य दधाति, त्रिष्टुभैवास्मिन्निन्द्रिय दधाति, जगत्यैवास्मिन् पशून्दधाति" इति ब्रह्मवर्चसादिहेतूपपादनाय मध्येऽपि परामृश्यन्ते। ततश्चेष्टिकर्तुरेव कारणानि पुत्रगतपूतत्वादिफलानि उपक्रमोपसहारमध्यपरामर्शैरवगतानीति भवति सर्वमेकं वाक्यम्। तत्र पूतत्वादिफलेभ्यः अष्टत्वादिगुणेषु विधीयमानेषु बहुधा वाक्यभेदप्रसङ्गादेकवाक्यत्वं[2] भज्येत। तस्मान्न फलेषु गुणविधिः। एतेन इष्टिफलत्वेन श्रुतेषु पूतत्वादिषु इष्ट्यङ्गकपालाश्रिताष्टत्वादिविधिरत्यन्तानुपपन्न इत्यपि सूचितम्। उक्तमर्थमुपसहरति—गुणार्थो हीति। हि यस्मात् अष्टाकपालादिशब्दा न नामधेयानि, नापि कर्मणि गुणविधयः, नापि फलेषु गुणविधय, अत. गुणार्थः गुणेन स्तुत्या अर्थ प्रयोजन यस्य स. वैश्वानर एव याग' 'यदष्टाकपालो भवति" इत्याद्यर्थवादप्ररोचितो विधीयत इति यावत्॥

इति द्वादश वैश्वानराधिकरणम्॥ १२ ॥

१३

तदेवमष्टाकपालादिशब्दाना गुणविधित्वनिराकरणेनार्थवादत्वमवयवस्तुत्या व्यवस्थापितम्। इदानीमवयवस्तुत्यभावेऽपि प्रकारान्तरेण क्वचित्तद्व्यवस्थापनाय सूत्रमिदं प्रवृत्तम्—

1 अन्यत्रेद सूत्र द्विधा विभज्य पठ्यते गुणार्थे विधीयन्ते इति च पाठान्तरम्.

2. वाक्यत्वभङ्ग . ग.

## [1]तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः ॥ १९ ॥

तत्र गुणाश्रयशब्दस्य तत्सिद्ध्यादिशब्देषु प्रत्येकं सम्बन्धे सति षड्वाक्यानि सम्पन्नानि क्रमेण व्याख्यास्यामः। "यजमानः प्रस्तरः" इत्यत्र गुणविधिरर्थवादो वेति संशयः। नामधेयत्वकोटिस्तु नामधेयपादसङ्गत्यर्थं वार्तिककारैरुत्प्रेक्षितापि भिन्नार्थत्वेन प्रसिद्धतया असम्भवदुन्मेषत्वादुपेक्षिता। नामधेयपादसङ्गतिस्तु नामधेयत्वप्रतिपक्षतया प्रसक्तगुणविध्यर्थवादविचाररूपतया कथञ्चिद्बोध्या। तत्राष्टाकपालादिशब्दैरवयवद्वारा द्वादशकपालस्तुतिर्युज्यते। न च प्रस्तरावयववचनो यजमानशब्दः, प्रस्तरशब्दो वा यजमानावयववचनः। तथा च यजमानशब्दस्य प्रथमश्रुतस्यासञ्जातविरोधित्वेन लक्षणासहिष्णुत्वाभावेन जघन्यश्रुतस्यैव प्रस्तरशब्दस्य तत्कार्यकारित्वे लक्षणां स्वीकृत्य "प्रस्तरे स्रुच आसादयति" इत्यादिप्रस्तरकार्यं स्रुग्धारणादिकं यजमानः कुर्यादिति गुणविधानमभ्युपेयम्। एवं सम्भवति गुणविधौ निरर्थकप्रायमर्थवादत्वं नाभ्युपगन्तुं युक्तमिति प्राप्ते, सिद्धान्तयति—

तत्सिद्धिर्गुणाश्रयः।

यजमानस्यैव प्रस्तरकार्यकारित्वे प्रस्तरविधेरानर्थक्यम्। किञ्च—"प्रस्तरमाहवनीये प्रहरति" इत्याहवनीये प्रस्तरप्रहरणमाम्नातम्। एवञ्च कर्माङ्गभूताहवनीयादिनिर्वर्तिकासु पवमानेष्टिष्वेव यजमानस्याहवनीये प्रहरणे सति तदुत्तरभाविसर्वकर्मविलोपः स्यात्। अतोऽगत्या यजमानशब्दस्य प्रस्तरस्तावकतया अर्थवादत्वमाश्रयितुं युक्तम्। ननु यजमानशब्दस्य यागकर्तृवाचकस्य कथं प्रस्तरे वृत्तिरित्यत आह—गुणाश्रय इति। गुणः आश्रयः निमित्तं कार्यकारित्वगुणयोगेन यजमानशब्दस्य प्रस्तरे प्रवृत्तिरिति यावत्। साङ्गप्रधानस्य यजमानकार्यत्वेन प्रस्तरकार्यस्यापि यजमानकार्यतया प्रस्तरे यजमानकार्यकारित्वस्य सत्त्वात्। तथा च 'सिंहो माणवकः' इत्यत्र सिंहशब्दस्येव माणवके यजमानशब्दस्य गौण्या प्रस्तरे वृत्तिरिति फलितम्। ननु तथापि मुख्यार्थयजमानसम्बन्धिकार्यकारित्वगुणसम्बन्धेन लक्षितलक्षणयैव प्रस्तरस्योपस्थितिरुपपद्यते। अतो गौण्यात्मकं वृत्त्यन्तरं किमित्यङ्गीकर्तव्यमिति चेत्सत्यम्, "यजमानः प्रस्तरः" इति सामानाधिकरण्यनिर्वाहाय यजमानशब्दस्य प्रस्तरे वृत्तिरवश्य वक्तव्या। सामानाधिकरण्यं हि एकविशेष्यकबोधजनकत्वम्। न ह्येतत्प्रस्तरेऽपि यजमानशब्दस्य

1. अन्यत्रैव विभज्य पठ्यते

व्यापाराभावे घटते । सा च वृत्तिर्न लक्षितलक्षणा । लक्षणायां हि मुख्यार्थसम्बन्धित्व-रूपेण लक्ष्यार्थस्य प्रतीतिः । इह तु मुख्यार्थयजमानगतकार्यकरत्वगुणयोगित्वमात्रेण प्रस्तरस्य प्रतीतिः । एवञ्च मुख्यार्थेन परम्परासम्बन्धे विद्यमानेऽपि तद्रूपानादरेण गुण-योगित्वमात्रेण प्रतीतिसिद्ध्यर्थं गौणी वृत्तिरभ्युपगन्तव्या । तथा च यजमानवत्क्रतुकार्य-निर्वर्तकत्वात्प्रशस्तः प्रस्तर इति स्तुतिरुन्मीलनीया । एतेन (का) गुणमुख्याधिकरणेन गतार्थत्वं निरस्तम्, गौणवृत्तिसम्भवमात्रस्य तत्र प्रतिपादितत्वेऽपि उक्तरीत्या लक्षणा-व्यावृत्तगौणवृत्तिस्वरूपव्युत्पादनार्थत्वात् । अर्थवादाधिकरणे 'गुणवादस्तु' 'रूपात्प्रा-यात्' इत्यादिगुणसूत्रेषु एतदधिकरणसिद्धामेव गौणीं वृत्तिमाश्रित्य "आपो वै शान्ताः" "स्तेन मनः" इत्यादीना स्तावकत्व प्रतिपादितमिति न पौनरुक्त्यम् । अत्राभिधेय-सदृशे वृत्तिर्गौणत्वमध्यारोपितार्थत्व वेति विचारस्तु टुप्टीकावार्तिकादावनुसन्धेयः ॥

इति त्रयोदश तत्सिद्ध्यधिकरणम् ॥ १३ ॥

१४

"अग्निर्वै ब्राह्मण" इत्यत्रापि पूर्ववदेव ब्राह्मणकार्ये अग्निर्विधीयत इति पूर्वः पक्षः । तथा सति "ब्राह्मणानृत्विजो वृणीते" इति ऋत्विग्वरणादिविधिवैयर्थ्यान्मन्त्रो-च्चारणानुपपत्तेश्चाग्निवद्धोमादिनिर्वर्तकत्वगुणयोगादग्निशब्देन ब्राह्मण स्तूयत इति पूर्ववदेव सिद्धान्त । तत्राग्निशब्दस्य ब्राह्मणे वृत्तौ गुणान्तरमपि निमित्तमाह—

जातिर्गुणाश्रयः ।

जातिर्जननम् । "प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवतान्वसृज्यत, गायत्री च्छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामज. पशू-नाम्" इति वाक्यशेषावगतमुखजातत्व गुणस्य गौण्या वृत्त्या आश्रय. निमित्तमित्यर्थ' ॥

इति चतुर्दशं जात्यधिकरणम् ॥ १४ ॥

१५

"यजमानो यूप" इत्यत्रापि यूपकार्ये पशुनियोजनादौ यजमानस्य विधिरिति तथैव पूर्वः पक्ष' । तथा सति यूपविधिवैयर्थ्याद्यजमानवत्क्रतुनिर्वर्तकत्वगुणयोगाद्यज-मानशब्देन यूप' स्तूयत इति तथैव सिद्धान्त । तत्र यजमानशब्दस्य यूपे वृत्तौ गुणान्तरमपि निमित्तमाह—

**सारूप्यं गुणाश्रय.।**

समानं रूपं सरूपम्। तदेव सारूप्यम्। चतुर्वर्णादित्वात्स्वार्थे ष्यञ्प्रत्यय:। साधारणधर्मः। ऊर्ध्वत्वं यजमानशब्दस्य यूपे गौण्या वृत्त्या निमित्तमित्यर्थः। यद्यपि तत्सिद्ध्युदाहरणे सर्वत्र "यजमानः प्रस्तरः" इत्यादौ साधारणधर्म एव प्रवृत्तिनिमित्तं तथापि तत्र सारूप्यमचाक्षुषम्, इह तु चाक्षुषमूर्ध्वत्वमिति पृथगुक्ति॰॥

इति पञ्चदश सारूप्याधिकरणम्॥ १५॥

१६

"पशुशीर्षाण्युपदधाति" इत्युपक्रम्य "पुरस्तात्प्रतीचीनमश्वस्योपदधाति पश्चा त्प्रतीचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशव" इति श्रूयते। तत्रापि गवाश्वव्यतिरिक्ता अजादय पशव अपशव—पशुकार्यकरा न भवन्तीति पशुकार्ये अजादिप्रतिषेधः क्रियत इति प्राप्ते, तथा सति लौकिके दोहनादौ प्रतिषेधस्य कर्तुमशक्यत्वाद्वैदिकालम्भनादिकार्ये विहितत्वादेव प्रतिषेधानुपपत्तेर्गौण्या वृत्त्या अपशव इत्यस्याजादिपशुपरतया अर्थवादत्वमिति सिद्धान्तः। तत्र गुणयोगं दर्शयति—

**प्रशंसा गुणाश्रय.।**

प्राशस्त्यं गौण्या वृत्त्या निमित्तमित्यर्थ। तथाहि—अजादिपशुषु अपशुशब्दस्य घटादिवचनस्यानुपपत्ते. पशुशब्दस्य प्राशस्त्ये लक्षणा। तच्च प्राशस्त्यमर्थाद्गवाश्वगतमेव गम्यते। तच्च नञा पर्युदस्यते। अप्राशस्त्यं च मुख्यस्य अपशुशब्दार्थस्य घटादेरजादिपशूनाञ्च साधारणमिति तद्योगादपशुशब्दोऽजादिपशुषु वर्तते। तत्राजादिषु प्राशस्त्याभावकथनेन गवाश्वे प्रशसातिशयो गम्यते—उदितहोमनिन्दया अनुदितहोमप्रशसावत्। तस्मादजादय पशवोऽप्रशस्ता', गवाश्वन्तु प्रशस्तमिति तच्छीर्षोपधानं स्तूयते। न च प्राशस्त्याभावस्यैवात्र प्रवृत्तिनिमित्तत्वे प्रशसा गुणाश्रय इति सूत्रविरोध इति वाच्यम्, प्रशसाभावस्य निमित्तत्वे प्रतियोगिभूतप्रशंसाया अपि निमित्तत्वेन तदविरोधात्। तस्मादपशव इत्यर्थवाद.॥

इति षोडशं प्रशसाधिकरणम्॥ १६॥

१७

"सृष्टीरुपदधाति" इत्यत्र गुणविधिरर्थवादो वेति संशय'। तत्र सृष्टिप्रतिपादक. सृजिधातु सृष्टिशब्देन विवक्षित.। स येषु विद्यते ते सृष्टिमन्तो मन्त्राः। ते

यासामुपधानार्थास्ता इष्टकाः सृष्टयः। 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतो.' इति सृष्टिमच्छब्दाद्यत्प्रत्यये मतुपो लुक्। यत्प्रत्ययस्य च्छान्दसो लोप.। सृजिमन्मन्त्रोपधेयेष्टका इत्यर्थ । तत्रेष्टकाना तदुपधानस्य चान्यतः प्राप्तेर्न विधि.। "अग्निं चिन्वीत" इति हि चयनविधिः। चयन सङ्घातीकरणम्। तेन अग्न्याख्यं स्थण्डिलविशेषमुत्पादयेदित्यर्थ.। "इष्टकाभिरग्निं चिनुते" इति चयने इष्टकना करणत्वेन विधिः। तत्र स्वरूपसतीनामिष्टकाना व्यापारविशेष द्वार विना करणत्वासम्भवादुपधानमर्थादाक्षिप्यते। "यदेता इष्टका उपदधाति" इत्यादौ द्वितीया तु "अग्निहोत्रं जुहोति" इत्यादिवत् 'नासाधित करणम्' इति न्यायेनार्थाक्षिप्तसाध्यत्वाभिप्राया। इष्टकाभिरुपधानद्वारा चयन निष्पादयेदित्यर्थः। तथा च सृजिमन्तो मन्त्रा. "एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्" इत्यादय सप्तदश मन्त्रा एव विशेषणीभूता अपि लोहितोष्णीषादिवद्विधीयन्त इति पूर्वः पक्षः।

सिद्धान्तस्तु मन्त्रा अपि नात्र विधेया । तथाहि—चयनप्रकरणाधीतानाम् "एकयास्तुवत" इत्यादिमन्त्राणा सामान्यतश्चयनार्थत्वेऽवगतेऽपि पाकदेशत समानयनोपधातृसमीपस्थापनादि कार्यं व्यवहितचयनसाधनत्वादुपेक्ष्य सनिहितसाधनमुपधानमेव प्रकाश्यत्वेन परिगृहीतवताम् "सर्वास्विष्टकासु तया देवतमन्ततो दधाति" इति विधिना "तया देवतयाङ्गिरस्व ध्रुवासीद" इत्यनेन एकवाक्यभावमुपगमितानामुपधानप्रकाशनसामर्थ्यमश्नुवता सर्वोपधानार्थत्वस्य सृष्टिवाक्येन पुनर्विधाने परिसङ्ख्यापत्त्या तदितरेषाम् "व्युष्टीरुपदधाति" इत्यादिवाचनिकविनियोगरहिताना [1]प्रकरणाम्नातानाम् "पृथिव्युदपुरमन्नेन विष्टा" इत्यादीनामानर्थक्यं स्यात्। इष्टकानां तदुपधानस्य च विधानन्तु प्रागेव निराकृतम्। अत 'सृष्टीरुपदधाति" इति कृत्स्न वाक्यमनुवाद । स च "यथासृष्टमेवावरुन्धे" इत्यर्थवादावलम्बनार्थत्वादर्थवादः। तत्र हि यत' सृष्टिमन्त्रैरुपदधाति अतः "एकयास्तुवत" इत्यनुवाके येन क्रमेण ब्रह्मक्षत्रादिसृष्टिरनुक्रान्ता तेनैव क्रमेण तानि सर्वाणि यजमान' प्राप्नोतीति स्तुतिरुन्मीलति। तत्र "एकयास्तुवत" इति सप्तदश मन्त्राः। तेषु प्रथमचतुर्दशषोडशान्तिमेषु "एकयास्तुवत" "सप्तविंशत्यास्तुवत" "एकत्रिंशतास्तुवत" "त्रयस्त्रिंशतास्तुवत" इति मन्त्रेषु सृजिशब्दाभावात्तेषु सृष्टिशब्दो गौण । तत्र प्रवृत्तिनिमित्तमाह—

१. प्रकरणाधीतानाम् क, घ ग, मु पा ।

भूमा गुणाश्रयः ।

भूमा बहुत्वम् । 'बहोर्लोपो भू च बहोः' इति इमनिच इकारलोपो बहुशब्दस्य भूमावश्च । बाहुल्य गौण्या वृत्त्या निमित्तमित्यर्थः । तत्र त्रयोदशसु सृष्टिशब्दवाच्यास्विष्टकासु बाहुल्यमस्ति । तच्च सृष्टिबाहुल्यं सृष्टिरूपावयवद्वारा सृष्टयसृष्टिसमुदायेऽस्ति । समुदायद्वारा चासृष्टिष्वपीत्यसृष्टयोऽपि सृष्टिशब्देनोच्यन्ते । इयांस्तु विशेष—यजमानशब्दो गौण्या वृत्त्या प्रस्तरपर एव, न तु यजमानपरोऽपि । सृष्टिशब्दस्तु भूमगुणयोगात्सृष्ट्यसृष्टिपर इति । न च सृष्टिमात्रपरत्वमेवास्त्विति वाच्यम् । "यत्सप्तदशोपदधाति" इति वाक्यशेषबलेन सृष्टयसृष्टिपरतावगमात् । तादृशवाक्यशेषस्तु क्वचिच्छाखान्तर उन्नेयः । तस्मात् "सृष्टीरुपदधाति" इति कृत्स्न वाक्यमर्थवाद इति भाष्यानुयायी पन्थाः ।

केचित्तु सृष्टीरुद्दिश्य उपधान चयनविधितोऽर्थसिद्धमपि संस्कारतया विधीयते। तथा च प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात्पृथगुपधानमिष्टकानां सिध्यति, अन्यथा समुदितरूपेणापि तासामुपधान स्यादिति वदन्ति । तन्न, एकैकविधाभ्यासेन एकशतविधप्रभेदभिन्ने अग्नौ किञ्चिदधिकषडङ्गुलोत्सेधानामतिविस्तृतायतानामनेकपुरुषोद्धार्याणामेकेन कर्त्रा युगपदुपधानस्य कर्तुमशक्यतया पृथगुपधानस्यैवार्थसिद्धेः । एतेन सहायान्तरव्युदासार्थमिहोपधानविधिरिति निरस्तम्, असहायेन पृथगप्युपधानस्य कर्तुमशक्यत्वात् । यच्च आध्वर्यवकाण्डे विधानमन्तरेणाध्वर्युकर्तृकत्वसिद्ध्यनुपपत्तेरर्थप्राप्तस्याप्युपधानस्य पुनर्विधिरिति, तदपि न, "इष्टका उपधास्यञ्श्वेतमश्वमभिमृशेत्" इत्याध्वर्यवकाण्डविहिताश्वाभिमर्शनसमानकर्तृकत्वावगमादेव तत्सिद्धेः । "तावालभ्येष्टका उपदध्यात्" इत्युपधानविधि. । न चाश्वालम्भनोपधानयो' पौर्वापर्यमेवात्र विधीयत इति वाच्यम् । "इष्टका उपधास्यञ्श्वेतमश्वमभिमृशेत्पुरीषमुधास्यन्कृष्णम्" इत्येव तत्सिद्धे' । तथा चात्र पुनर्विधान व्यर्थमेव । यदपि च कृत्स्नवाक्यस्यार्थवादत्वे सन्निहितविध्यन्तराभावेनार्थवादत्वमेव न निर्वहतीति, तदप्यापाततः । 'अर्थवादो वा' इति मन्त्राधिकरणगुणसूत्ररीत्या "उरु प्रथस्वेति पुरोडाशं प्रथयति यज्ञपतिमेव तत्प्रथयति" इति प्रकरणपरिकल्पितविधिविहितभिन्नदेशमन्त्रस्तुतिवत्प्राकरणिकविधिविहितसृष्टिमन्त्राणामपि भिन्नदेशकानामेव कृत्स्नवाक्यस्य स्तावकत्वोपपत्ते. । अन्यथा 'न वा इद दिवा न नक्तमासीदव्यावृत्त ते देवा एता व्युष्टीरपश्यन् ता उपादधत ततो वा इद व्यौच्छद्यस्यैता उपधीयन्ते व्ये वास्मा उच्छत्यथो तम एवापहते" इत्युत्तरवाक्ये व्युष्टिविधिरहिते केवलार्थवादे का गतिरित्यास्ता तावत् ॥

इति सप्तदशं भूमाधिकरणम् ॥१७॥

१८

"प्राणभृत उपदधाति" इत्यत्र मन्त्रेषु प्राणभृच्छब्दाभावेन 'तद्वानसावुपधानः' इति व्युत्पत्त्यभावेऽपि प्राणशब्दं मन्त्रद्वारा बिभ्रतीति व्युत्पत्त्या प्राणशब्दकमन्त्रोपधेयेष्टका उपदधातीत्यर्थ । तत्रेष्टकानां तदुपधानस्य चान्यतः प्राप्तत्वात् "अयं पुरोभुवः" इत्यादय. प्राणभृतः पञ्चाशन्मन्त्रा विधीयन्त इति पूर्ववदेव पूर्व पक्ष । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वान्मन्त्रा अपि न विधेया. । अत. प्राणवन्मन्त्रेष्टकोपधानेन "रेतस्येव प्राणान्दधाति" इत्यर्थवादावलम्बनार्थः "प्राणभृत उपदधाति" इत्यनुवादोऽर्थवाद एवेति पूर्ववदेव सिद्धान्त. । तत्र "तस्य प्राणो भौवायनः" "वसन्त. प्राणायन." 'प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः" इति द्वितीयतृतीयदशममन्त्रेषु प्राणशब्दोऽस्तीति तदुपधेयास्तिस्र इष्टकाः प्राणभृत, इतराः सप्तचत्वारिंशदिष्टका अप्राणभृत । तत्र प्राणशब्दवता मन्त्राणामल्पत्वान्न भूम्ना प्राणभृच्छब्दस्य प्राणभृदप्राणभृत्सु गौणी वृत्तिर्युज्यत इत्यतो निमित्तान्तरमाह—

**लिङ्गसमवायो गुणाश्रय. ।**

लिङ्ग प्राणप्रतिपादनसामर्थ्यम् । तस्य समवाय सम्बन्धमात्र गौण्या वृत्त्या निमित्तमित्यर्थ. । तत्र प्राणभृन्मन्त्रसमुदाये प्राणप्रतिपादनसामर्थ्यं लिङ्गमस्ति । प्राणभृदप्राणभृत्समुदायेऽपि चैकदेशे पुष्पिते 'वन पुष्पितम्' इतिवत्तदस्ति । तादृशसमुदायद्वारा प्राणभृत्त्वप्राणभृत्सु च मन्त्रेषु तद्द्वारा तदुपधेयेष्टकासु च तत्सम्बन्ध इति लिङ्गसमवायमात्रेण सर्वत्र प्राणभृच्छब्दप्रवृत्ति । तदेवम् 'तत्सिद्धिजातिसारूप्यप्रशसाभूमलिङ्गसमवाया इति गुणाश्रया' इति सूत्र व्याख्यातम् । इतिशब्दस्तु प्रकारवचन । तेन 'रूपात्प्रायात्' इत्यर्थवादगुणसूत्रनिर्दिष्टम् 'स्तेन मन.' इत्यादौ प्रच्छन्नरूपादिकमपि सङ्गृहीत भवति ॥

( इत्यष्टादश लिङ्गसमवायाधिकरणम् । ॥१८॥ )

( इति तत्सिद्धिपेटिका )

१९

अर्थवादानां स्तावकत्वेन प्रामाण्यमुक्तम् । इदानीं कश्चित्प्रकारान्तरेण तत्प्रामाण्य प्रतिपादयितु नामधेयापवादत्वेन प्रसक्तार्थवादप्रसङ्गादिदमारभ्यते । "अक्ताः शर्करा उपदधाति, तेजो वै घृतम्" इत्यत्र किं घृततैलवसादीनामन्यतमेनाञ्जनं घृतेनैव वेति सशय । तत्र विधि प्रधानम्, प्रेरणात्मकशब्दभावनारूपत्वात् । अर्थ-

वादस्त्वितिकर्तव्यतारूपस्तुतिसमर्पकत्वात्तदङ्गमित्यर्थवादाधिकरणे स्थितम्। न चाङ्गेन प्रधानस्य बाधः सम्भवति। अतः कथमर्थवादगतघृतशब्देन विध्यवगताञ्जनसामान्यस्य विशेषसङ्कोचरूपो बाधः। न च (खा) उपक्रमाधिकरणेऽर्थवादानुरोधेन ऋगादिशब्दस्य वेदपरत्वं वक्ष्यते तृतीयस्य तृतीये, तथेहापि किं न स्यादिति वाच्यम्। तत्र विधेरुपसंहारगतस्यान्यथानयनेऽप्यत्रोपक्रमस्थस्यासञ्जातविरोधित्वेन स्वतःप्रबलस्य विधेरन्यथानयनस्यायुक्तत्वात्। न चैवमपि 'अधिकश्च गुणः साधारणे विरोधात्कांस्यभोजिवदमुख्येऽपि' इति (गा) द्वादशिकाधिकरणे गुणानुरोधेन प्रधाननयनस्य क्वचिद्व्यवस्थापयिष्यमाणतया प्रधानस्यापि विधेरङ्गभूतस्तुत्यनुरोधित्वमिति वाच्यम्, वैषम्यात्। यत्र हि गुणानुरोधित्वेऽपि प्रधानस्य न बाधः तत्रैव कांस्यभोजिन्यायः। इह तु गुणानुरोधित्वे तैलादिविषये बाधः स्यादिति कथमत्र तन्न्यायः। न च, विधावञ्जनसाधनद्रव्यसामान्यमाक्षेपाल्लभ्यत इति वक्तव्यम्, तच्च न सम्भवति, विधेः प्ररोचनार्थमर्थवादैकवाक्यत्वावश्यम्भावेन प्ररोचनार्थमपेक्षितार्थवादादेवाञ्जनद्रव्यविशेषलाभे तदाक्षेपायोगादिति वाच्यम्। 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायेन (घा) विधित एव प्ररोचनासम्भवेन विधेरवश्यमर्थवादानपेक्षत्वेन विधितः सामान्याक्षेपोपपत्तेः। यद्ध्यङ्गं प्रधानेनावश्यं नापेक्ष्यते तादृशाङ्गानुसारेण प्रधानस्य न सङ्कोचः। अत एव 'तास्वध्वर्यो इन्द्राय सोमं सोत" इत्यादिमन्त्रवर्णबलादैन्द्रप्रदानमात्रविषयतया सोमस्य न सङ्कोचः, किन्त्वैन्द्रानैन्द्रप्रदानसाधारण्यमेव। अनैन्द्रप्रदानेषु मन्त्रं विनाप्युपायान्तरतोऽनुष्ठेयस्मृतिसम्भवेन मन्त्रस्यानैन्द्रप्रदानैर्नियमेनानपेक्षितत्वात्। अन्यथा तत्राप्यैन्द्रप्रदानविषयतया सङ्कोचः स्यात्। न चैवमपि 'उपदधाति' इति वर्तमानापदेशतया स्फुटविध्यभावे औदुम्बराधिकरणन्यायेनार्थवादत एव विधिः कल्पनीय इति विधित्वसिद्ध्यर्थमर्थवादापेक्षेति वाच्यम्। "वसन्ताय कपिञ्जलानालभते" "ब्रह्मणे ब्राह्मणमालभते" इत्यादिनिरर्थवादवाक्येष्विवाप्राप्तार्थत्वादेव विधिकल्पनोपपत्तेः, शाखान्तरे "शर्करा अक्ता उपदध्यात् तेजो घृतम्" इति प्रत्यक्षविधिश्रवणाच्च। तस्माद्घृततैलाद्यन्यतमेनाञ्जनम्। अर्थवादगतघृतशब्दस्तु विध्यनुसारेण (ङा) छत्रिन्यायेन घृताघृतलक्षक इति प्राप्ते, सिद्धान्तयति—

## सन्दिग्धे तु वाक्यशेषात् ॥ २० ॥

तुशब्दः पूर्वपक्षव्यावृत्तौ। अनिर्धारितार्थके विधौ वाक्यशेषान्निर्णय इत्यर्थः। तथाहि—यदि घृततैलादिसर्वविशेषाः प्रातिस्विकरूपेण विधिना बोधिताः स्युस्तदा

एकविशेषघृतविषयेणार्थवादेन विधेः सङ्कोचरूपो बाधः स्यात्। यदि च सामान्यं व्यासज्यवृत्ति सत्प्रत्येकपर्यवसन्नं न भवेत्तदापि तैलादिसामान्यविधेर्विशेषघृतविषयार्थवादेन बाधः स्यात्। नैतदुभयमप्यस्ति, विधे' सामान्यरूपेणाञ्जनयोग्यतैलादिद्रवद्रव्योपस्थापकत्वात्सामान्यस्य प्रत्येक पर्यवसितत्वाच्च बाधाभावात्। न चैवमपि सामान्यरूपेण तैलादिविषयस्यापि विधेर्घृतमात्रे सङ्कोचादवर्जनीयो बाध इति वाच्यम्। व्यवहाराय विध्यनुमतत्वेन तादृशसङ्कोचस्यादोषत्वात्। अवश्य हि सामान्येनोपस्थितावपि यः कश्चिद्विशेष आदर्तव्यः, निर्विशेषसामान्येन व्यवहाराभावात्। न च घृतशब्दस्यापि नवपुराणगव्यमाहिषादिविशेषमनपेक्ष्य व्यवहारोपयोगित्ववत्सामान्यविधेरपि विशेषमनपेक्ष्य व्यवहारोपयोगित्वं किं न स्यादिति वाच्यम्, वैषम्यात्। घृतशब्दस्य हि नवपुराणादिविशेषनिर्धारकप्रमाणाभावाद्यं कञ्चिद्विशेषमाश्रित्य घृतत्वेन रूपेण व्यवहारोपयोगित्वं युज्यते। अञ्जनविधेस्तु विद्यते विशेषनिर्धारक प्रमाण घृतार्थवादः। तत्र घृतस्य स्तुतिबलादञ्जनसाधनत्वेनावश्यम्भावे तत एव सामान्यविधेः पर्यवसानसम्भवेन विधेरेव स्तुतिशक्ति कल्पयित्वा स्तुतिरहिततैलादिविधानकल्पनं गौरवपरास्तम्। एवञ्च प्रत्यक्षस्तुतिसद्भावे विधेः स्तुतिकल्पनानुपपत्तेः "अक्ताः" इत्यत्र स्तुत्यर्थमवश्यापेक्षितार्थवादत एवाञ्जनक्रियापेक्षितसाधनलाभे क्रिययाञ्जनद्रव्यसामान्याक्षेपस्यैवात्राप्रतीतेर्विरोधशङ्काया एवानवकाशः। तस्मादर्थवादगतघृतशब्दानुसारेण सामान्यविधेर्घृतमात्रविषयत्वम्। 'सन्दिग्धेषु' इति केचित्पठन्ति। "अक्ता. शर्करा उपदधाति, तेजो वै घृतम्" "वाससा दीक्षयति, सौम्य वै क्षौम देवतया" "ओषधीर्वपति" 'सप्त ग्राम्या ओषधय सप्तारण्याः' इत्यादिविधिष्वर्थवादनिर्धारितविशेषार्थकेष्वित्यर्थ. ॥

इत्येकोनविंशं वाक्यशेषाधिकरणम् ॥१९॥

२०

तदेव विध्यर्थवादमन्त्रनामधेयात्मके वेदे अर्थवादावयवस्य क्वचित्स्तावकत्वादन्येनापि प्रकारेण सामान्यविधिनिर्धारकत्वेन प्रामाण्ये प्रतिपादिते विधिरूपावयवस्यापि क्वचिद्विधायकत्वादन्येनापि प्रकारेण प्रामाण्यं प्रतिपादयितुमिदमारभ्यते। इदमामनन्ति—"स्रुवेणावद्यति" "हस्तेनावद्यति" "स्वधितिनावद्यति" इति। तत्र सशय.—किं द्रवद्रव्याणि दधिपयआदीनि कठिनद्रव्याणि पुरोडाशादीनि मांसादीनि

च स्रुवाद्यन्यतमेनाव्यवस्थयावदातव्यानि ? उत स्रुवेण द्रवद्रव्याणि हस्तेन पुरोडाशादीनि स्वधितिना मांसादीनीत्यर्थतो व्यवस्था ? इति। तत्र "अक्ता शर्करा:" इत्यत्रेवात्र व्यवस्थापकवाक्यशेषप्रमाणाभावादव्यवस्था। न चाशक्यार्थस्य विधानासम्भवात्सामर्थ्यानुसारेण व्यवस्था सिध्यतीति वाच्यम्। लिङ्गाच्छ्रुतेर्बलीयस्त्वस्य तृतीये वक्ष्यमाणतया सामर्थ्यरूपलिङ्गानुसारेणावद्यतिश्रुतिसङ्कोचस्यायुक्तत्वात्। न चाशक्यार्थविधानानुपपत्तेः सामर्थ्यानुसरणसम्भवः। मुख्यसामर्थ्याभावेऽपि सामान्यविषयश्रुत्यनुसारादैन्द्र्यान्यायेन [1]गौणीं वृत्तिमाश्रित्य शक्यार्थविधानस्य कथञ्चिदुपपाद्यत्वात्। अस्ति हि हस्तादेर्मांसाद्यवदानेऽप्यायसादिसहायेन गौणं सामर्थ्यम्। तस्मात्स्रुवादीनामव्यवस्था।

इति प्राप्ते, सिद्धान्तयति—

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ २१ ॥

वाशब्दोऽप्यर्थे। अवदाने स्रुवादिविधिषु पूर्ववद्वाक्यशेषाभावेऽपि अर्थात् सामर्थ्यादपि व्यवस्थाकल्पना भवति। कुतः ? एकदेशत्वात् शक्तेर्विधिसहकारित्वेन तदेकदेशत्वादित्यर्थः। न च शक्त्या लिङ्गेन अवद्यतिश्रुतिसङ्कोचो न युज्यत इति वाच्यम्। अशक्यार्थे विधेरसम्भवेन शक्त्या लिङ्गेनाप्यवद्यतिश्रुतेः सङ्कोचस्यावश्यानुसरणीयत्वात्। न चावद्यतिश्रुतिबाधापत्त्या आयसादिसहायेन गौणसामर्थ्याश्रयणं युज्यते। एवं सति निरपेक्षसाधनत्वबोधकतृतीयाश्रुतिबाधापत्तेः। 'समर्थः पदविधिः' इति परिभाषया 'कर्तृकरणयोस्तृतीया' इति तृतीयाविधेर्नैरपेक्ष्यविषयत्वावगमात्पदत्वापादकविधिविधेयो निरपेक्षत्वरूपसामर्थ्यप्रतिपादक इति हि तदर्थः। तत्र स्रुवादिविधे शक्त्यनुसरणे अवद्यतिश्रुतेः सङ्कोचमात्रम्। अवद्यतिश्रुत्यनुसारेण गौणसामर्थ्याश्रयणे तु नैरपेक्ष्यप्रतिपादकतृतीयाश्रुतेरत्यन्तबाधः स्यात्। तस्मात्सामर्थ्यानुसारेण स्रुवादीनां व्यवस्था। वैयाकरणास्तु 'समर्थसूत्रे एकार्थीभावलक्षणमेव सामर्थ्यं विवक्षितम्। लब्धपदसंज्ञकस्य कार्यं पदविधिरित्यनेन विवक्षितम्। विभक्तिविधौ तु न समर्थपरिभाषा प्रवर्तते। 'व्रीहिभिः' इत्यत्र हि व्रीहिरूपं करणमवगतम्। तत्र 'सर्वं विशेषण सावधारणम्' इति न्यायेन विशेषणस्यान्ययोगव्यवच्छेदार्थकतया व्रीहिरूपविशेषणेन तदितरव्यावृत्त्या इतरनिरपेक्षत्वमार्थिकम्। औचित्याच्च सजातीयेतरनिवृत्तिः फलति। 'घृतेन भुङ्क्ते' इत्यादौ हि सजातीयतैलादेरेव व्यावृत्तिः

[1]. गौणसामर्थ्यम् क, ग, घ, मु. पा

एकविशेषघृतविषयेणार्थवादेन विधेः सङ्कोचरूपो बाध स्यात्। यदि च सामान्यं व्यासज्यवृत्ति सत्प्रत्येकपर्यवसन्नं न भवेत्तदापि तैलादिसामान्यविधेर्विशेषघृतविषयार्थवादेन बाधः स्यात्। नैतदुभयमप्यस्ति, विधे' सामान्यरूपेणाञ्जनयोग्यतैलादिद्रवद्रव्योपस्थापकत्वात्सामान्यस्य प्रत्येक पर्यवसितत्वाच्च बाधाभावात्। न चैवमपि सामान्यरूपेण तैलादिविषयस्यापि विधेर्घृतमात्रे सङ्कोचादवर्जनीयो बाध इति वाच्यम्। व्यवहाराय विध्यनुमतत्वेन तादृशसङ्कोचस्यादोषत्वात्। अवश्य हि सामान्येनोपस्थितावपि यः कश्चिद्विशेष आदर्तव्यः, निर्विशेषसामान्येन व्यवहाराभावात्। न च घृतशब्दस्यापि नवपुराणगव्यमाहिषादिविशेषमनपेक्ष्य व्यवहारोपयोगित्ववत्सामान्यविधेरपि विशेषमनपेक्ष्य व्यवहारोपयोगित्वं किं न स्यादिति वाच्यम्, वैषम्यात्। घृतशब्दस्य हि नवपुराणादिविशेषनिर्धारकप्रमाणाभावाद्यं कश्चिद्विशेषमाश्रित्य घृतत्वेन रूपेण व्यवहारोपयोगित्वं युज्यते। अञ्जनविधेस्तु विद्यते विशेषनिर्धारक प्रमाण घृतार्थवाद'। तत्र घृतस्य स्तुतिबलादञ्जनसाधनत्वेनावश्यम्भावे तत एव सामान्यविधेः पर्यवसानसम्भवेन विधेरेव स्तुतिशक्ति कल्पयित्वा स्तुतिरहिततैलादिविधानकल्पनं गौरवपरास्तम्। एवञ्च प्रत्यक्षस्तुतिसद्भावे विधे स्तुतिकल्पनानुपपत्ते' "अक्ता" इत्यत्र स्तुत्यर्थमवश्यापेक्षितार्थवादत एवाञ्जनक्रियापेक्षितसाधनलाभे क्रिययाञ्जनद्रव्यसामान्याक्षेपस्यैवात्राप्रतीतेर्विरोधशङ्काया एवानवकाशः। तस्मादर्थवादगतघृतशब्दानुसारेण सामान्यविधेर्घृतमात्रविषयत्वम्। 'सन्दिग्धेषु' इति केचित्पठन्ति। "अक्ता॰ शर्करा उपदधाति, तेजो वै घृतम्" "वाससा दीक्षयति, सौम्य वै क्षौम देवतया" "ओषधीर्वपति" 'सप्त ग्राम्या ओषधय सप्तारण्याः' इत्यादिविधिष्वर्थवादनिर्धारितविशेषार्थकेष्वित्यर्थः॥

इत्येकोनविंश वाक्यशेषाधिकरणम्॥१९॥

२०

तदेवं विध्यर्थवादमन्त्रनामधेयात्मके वेदे अर्थवादावयवस्य क्वचित्स्तावकत्वादन्येनापि प्रकारेण सामान्यविधिनिर्धारकत्वेन प्रामाण्ये प्रतिपादिते विधिरूपावयवस्यापि क्वचिद्विधायकत्वादन्येनापि प्रकारेण प्रामाण्यं प्रतिपादयितुमिदमारभ्यते। इदमामनन्ति—"स्रुवेणावद्यति" "हस्तेनावद्यति" "स्वधितिनावद्यति" इति। तत्र सशयः—किं द्रवद्रव्याणि दधिपयआदीनि कठिनद्रव्याणि पुरोडाशादीनि मासादीनि

श्रीः

# अध्वरमीमांसा-
# कुतूहलवृत्तिः

## द्वितीयोऽध्यायः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानै ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

'अथातो धर्मजिज्ञासा' इति प्रमाणस्वरूपसाधनफलैर्धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः। तत्र प्रथमाध्याये धर्मप्रमाण निरूपितम्। तत्प्रमेयो धर्म इति सामान्यतो धर्मस्वरूपञ्च तत एवावगतम्। इदानीं द्वितीयेऽध्याये धात्वर्थभेदप्रयुक्तभावनाभेदाद्-पूर्व भिद्यत इत्येव धर्मभेदविचार' प्रक्रस्यते[1]।

तत्र धात्वर्थभेदस्य भावनाभेदकत्व धात्वर्थस्य भावना प्रति करणत्वं विना न निर्वहतीति भावार्थाधिकरणं धर्मभेदविचारोपोद्घातत्वेनारभ्यते। तत्र भावार्थाधि-करणप्रवृत्तेरेकस्मादपूर्वमिति निर्णयाधीनत्वात्तदुपोद्घातत्वेन प्रतिपदाधिकरणमा-रभ्यते। "उद्भिदा यजेत पशुकामः" "श्येनेनाभिचरन्यजेत" "चित्रया यजेत पशुकाम." "अग्निहोत्र जुहुयात्स्वर्गकाम." "य कामयेत पशुमान्त्स्यामिति, स पञ्चहोतारं प्रयुञ्जीत" इत्यादि श्रूयते। अभिपूर्वकश्चरति. शत्रुवधे वर्तते। फले हेतौ शतृप्रत्ययः। शत्रुवधार्थमिति यावत्। पञ्चहोता—"अग्निर्होता" इत्यादिमन्त्र.। त प्रयुञ्जीत-ब्रूयात्। एवञ्जातीयकेषु वाक्येषु "उद्भिदा यजेत पशुकामः" इत्येव क्रियापदानि द्रव्यगुणवचनानि नामपदानि च कि प्रत्येक फलपदेन सम्बध्यन्ते ततश्च सर्वाणि पदान्यपूर्वकल्पनसमर्थार्थाभिधायकानि? उत तेष्वेकमेव पदं फलपदेन सम्बध्यते तदेव चापूर्वकल्पनसमर्थार्थाभिधायकम्? इति सशय.। न चोद्भिदाद्यधिकरणेषूद्भि-

1. प्रस्तोष्यते. ग, घ.

प्रतीयते, न शाकादेरपि' इत्याहुः । सर्वथापि प्रकृते तृतीयया निरपेक्षसाधनं गम्यत इति निर्विवादम् । ननु वाजसनेयके "वसोर्धारां जुहोत्याज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा सा यदेवैषा धाराग्निं प्राप्नुयादथैतद्यजु. प्रतिपद्यते षष्टिश्च वै त्रीणि च शतानि एषा वसोर्धारा षडथ पञ्चत्रिंशत्" इत्यादिना औदुम्बर्यां स्रुचि स्रुवेण पञ्चकृत्वो-गृहीताज्यधारया एकाधिकचतुःशताहुतय. समाम्नाता । तत्राङ्गुष्ठपर्ववृत्तबिलस्रुवतः पञ्चगृहीताज्यस्य एकाधिकचतु.शतहोमनिर्वर्तकत्वान्यथानुपपत्त्या स्रुवपरिमाणमधिक कल्प्यते । तद्वदिहापि स्वधितेर्द्रवद्रव्यावदानसामर्थ्यसिध्यर्थं बिलवत्त्वं स्रुवस्य बिलतो मासावदानसामर्थ्यसिद्धयर्थं तीक्ष्णाग्रत्वं च कल्प्यतामिति चेन्न । अङ्गुष्ठपर्वबिलस्रुवेण पञ्चगृहीताज्यधारया वसोर्धाराहोमस्य श्रुतस्य निर्वाहाभावेन तत्र स्रुवस्य परिमाणाधिक्यकल्पनेऽपि क्लृप्तसामर्थ्यस्यैव स्वधितेर्मासावदानमात्रविनियोगकल्पनेन श्रुत्युपपत्त्या स्रुवादेस्तीक्ष्णाग्रत्वादिकल्पनाया गौरवग्रस्ताया अनाश्रयणीयत्वात् । अत एव "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्र अप्रकृताग्नेयीग्रहणे तस्या. क्रतुसम्बन्धस्यापि कल्पनीयतया कल्पनागौरवपरिहारार्थं ज्योतिष्टोमप्रकरणगताग्नेयीपरत्वमेवाङ्गीक्रियते । तस्मात्सामर्थ्यानुसारेण स्रुवादीनां व्यवस्थेत्यास्तां तावत् ॥

इति विंशतितमं सामर्थ्याधिकरणम् ॥ २० ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमानमहाग्नि-
विलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजिशरभजितुक्कोजिभोसलचोलमही-
महेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषी-
पोष्येण तदध्वर्युणा बाल्य एव तद्द्यानिर्वर्तितापरिमितमहाग्नि-
विजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामादिवरिष्ठसोममखसन्तर्पित-
शतमखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपेययाजि-
सुतेन अन्नपूर्णागर्भजातेन अपारपदवाक्यप्र-
माणपारावारपारीणाग्रजन्मविश्वेश्वरवा-
जपेययाजितो लब्धविद्यावैशद्येन
वासुदेवदीक्षितविदुषा
विरचितायां
जैमिनिसूत्रव्याख्यायाम्
अध्वरमीमासाकुतूहलवृत्तौ
प्रथमोऽध्यायः ॥१॥

श्रीः

# अध्वरमीमांसा-

# कुतूहलवृत्तिः

## द्वितीयोऽध्यायः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

'अथातो धर्मजिज्ञासा' इति प्रमाणस्वरूपसाधनफलैर्धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः। तत्र प्रथमाध्याये धर्मप्रमाण निरूपितम्। तत्प्रमेयो धर्म इति सामान्यतो धर्मस्वरूपञ्च तत एवावगतम्। इदानीं द्वितीयेऽध्याये धात्वर्थभेदप्रयुक्तभावनाभेदाद्-पूर्वं भिद्यत इत्येव धर्मभेदविचारः प्रक्रस्यते[1]।

तत्र धात्वर्थभेदस्य भावनाभेदकत्व धात्वर्थस्य भावना प्रति करणत्वं विना न निर्वहतीति भावार्थाधिकरणं धर्मभेदविचारोपोद्घातत्वेनारप्स्यते। तत्र भावार्थाधि-करणप्रवृत्तेरेकस्मादपूर्वमिति निर्णयाधीनत्वात्तदुपोद्घातत्वेन प्रतिपदाधिकरणमा-रभ्यते। "उद्भिदा यजेत पशुकाम." "श्येनेनाभिचरन्यजेत" "चित्रया यजेत पशुकाम." "अग्निहोत्र जुहुयात्स्वर्गकाम." "य कामयेत पशुमान्स्यामिति, स पञ्चहोतारं प्रयुञ्जीत" इत्यादि श्रूयते। अभिपूर्वकश्चरति' शत्रुवधे वर्तते। फले हेतौ शतृप्रत्यय। शत्रुवधार्थमिति यावत्। पञ्चहोता—"अग्निर्होता" इत्यादिमन्त्र.। तं प्रयुञ्जीत-ब्रूयात्। एवञ्जातीयकेषु वाक्येषु "उद्भिदा यजेत पशुकामः" इत्येव क्रियापदानि द्रव्यगुणवचनानि नामपदानि च किं प्रत्येक फलपदेन सम्बध्यन्ते ततश्च सर्वाणि पदान्यपूर्वकल्पनसमर्थार्थाभिधायकानि? उत तेष्वेकमेव पद फलपदेन सम्बध्यते तदेव चापूर्वकल्पनसमर्थार्थाभिधायकम्? इति सशय.। न चोद्भिदाद्यधिकरणेषूद्भि-

1. प्रस्तोष्यते. ग, घ

अकाङ्क्षा इति च्छेदः। काङ्क्षाया अभाव इत्यर्थः। कुतः ? स्वे प्रयोगे भूतत्वात्— स्वकीयशब्दप्रयोगकाले विद्यमानत्वात्। तस्मादित्यस्यैव विवरणमेतत्। येषान्तु शब्दानां स्वे—स्वकीये अर्थे उत्पत्तौ—उच्चारणदशायां प्रयोग [1] अर्थः न विद्यते—प्रयोगकाले अर्थो न विद्यत इति यावत्। तानि आख्यातानि—'यजेत' इत्यादितिङन्तानि। धात्वर्थानां साध्यरूपत्वात्तन्निष्पत्तौ साधनाकाङ्क्षास्तीति भाव.। तस्माद्धेतो: तेभ्य एवाख्यात-शब्देभ्यः क्रिया-अपूर्वं प्रतीयेत-कल्प्येत, न तु द्रव्यगुणशब्देभ्यः। द्रव्यगुणाना सिद्ध-रूपाणा धात्वर्थनिष्पाद्यत्वाभावेन तदर्थत्वे धात्वर्थानामदृष्टार्थत्वापत्तौ धात्वर्थेभ्यो द्रव्यगुणेभ्यश्च प्रत्येकमपूर्वकल्पनागौरवापत्तेः। धातुभ्य एवापूर्वकल्पनायान्तु द्रव्यगु-णाना तन्निष्पादकत्वेन दृष्टार्थत्वादपूर्वान्तर न कल्प्यमिति लाघवम्।

ननु द्रव्यगुणाना सिद्धरूपत्वेऽपि "दध्नेन्द्रियकामस्य" इत्यादावाश्रयस्येवात्रापि धात्वर्थानामपि फलोद्देशप्रवृत्तकर्तृव्यापारविषयत्वरूपकरणत्वसम्पादकतया अदृष्टार्थ-त्वसम्भवान्नादृष्टद्वयकल्पनाप्रसक्तिरित्यस्वरसाद्धातूनामेवापूर्वकल्पकत्वे युक्त्यन्त-रमाह—आश्रितत्वात्प्रयोगस्येति। प्रयुज्यमानधात्वर्थस्य भावनया सह एक पदमाश्रि-तत्वादेकपदश्रुत्या धात्वर्थस्यैव भावनाकरणत्वादिति यावत्। तस्मादेव क्रिया अपूर्वं प्रतीयेतेत्यन्वय । अय भावः—[2]तृतीयाश्रुत्या उद्भिच्छ्येनादि करणम् इत्येतावन्मात्रम-वगतम्, न तु भावनाकरणमिति। तत्तु 'यजेत' इत्यादिपदान्तरसमभिव्याहारलभ्यम्। 'यजेत' इत्यादिषु तु प्रकृत्यशेन धात्वर्थो प्रत्ययांशेन भावना तदुभयसमभिव्याहार-लक्षणपदश्रुत्या च धात्वर्थो भावनाकरणमित्यवगम्यते। ततश्च धात्वर्थकरणत्व पदा-न्तरसमभिव्याहारमनपेक्ष्य प्रकृतिप्रत्ययसमभिव्याहारमात्रगम्यमिति [3]तृतीयाश्रुत्य-पेक्षया पदश्रुतिरिह प्रबलेति। न च साध्यरूपस्य धात्वर्थस्य कथ साधनत्वमिति वाच्यम्। वाक्यार्थज्ञानदशाया सिद्धत्वाभावेऽपि पश्चात्स्वसाधनतो निष्पन्नस्य तस्य साधनत्वोपपत्ते। तस्माद्धात्वर्थस्यैव भावनाकरणत्वात्तत एवापूर्वमिति सिद्धम्। प्रयोजन पूर्वपक्षे—उद्भिच्छ्येनादिपदाना गुणविधित्वादुद्भिच्छ्येनादिद्रव्येण यष्टव्यम्, सिद्धान्ते तु—धात्वर्थस्य करणत्वेन करणतृतीयान्तानामुद्भिच्छ्येनादिपदाना तन्नाम-धेयत्वात् 'अव्यक्तासु तु सोमस्य' इति (चा) न्यायात्सोमेन यष्टव्यम्। 'सोमेन यजेत' इत्यत्र च सोमापचारे प्रतिनिधिर्नोपादातव्य पूर्वपक्षे, सोमस्यापूर्वार्थत्वेनादृष्टार्थत्वात्,

1. प्रयोज्य अर्थ. क ग. मु. सु. 2. तृतीयया ग
3 तृतीयपेक्षया. ग

अदृष्टार्थानां प्रतिनिध्यभावस्य तृतीये प्रतिनिधिपेटिकायां ( छा ) वक्ष्यमाणत्वात्। सिद्धान्ते तु सोमद्रव्यस्य धात्वर्थयागनिर्वर्तकत्वेन दृष्टार्थत्वादस्ति प्रतिनिधिरित्यादि यथायथमूह्यम्।

स्यादेतत्, प्रत्ययवाच्यां फलभावना प्रति धात्वर्थ· करणमित्यनुपपन्नम्, धात्वर्थातिरिक्तभावनास्वरूपस्य दुर्निरूपत्वात्। तथाहि—किं कर्तृव्यापारो भावना ? उत यत्नः ? आहोस्वित्स्पन्दः ? प्रयत्नस्पन्दान्यतरो वा ? नाद्य', कर्तृव्यापारस्याधिश्रयणादिनिचयस्य पचिधात्वर्थत्वेन तदतिरिक्तभावनानुपपत्तेः। न च विक्लित्तिरेव पचेरर्थ इति शङ्क्यम्। तथा सति कृष्णलानाम् "घृते श्रपयति" इति पाकविधानानुपपत्ते। एवं यज्यादावप्यूह्यम्। नन्वधिश्रयणादिकर्तृव्यापारस्य पचिधात्वर्थत्वेऽपि तदतिरिक्तस्य प्रयत्नस्य प्रत्ययवाच्यभावनात्वमिति द्वितीय· पक्षोऽस्त्विति चेत्—न; 'रथो गच्छति' इत्याद्यनुपपत्तेः, अचेतनस्य रथस्य प्रयत्नाभावात्। न च लक्षणया तन्निर्वाह शङ्क्य, 'देवदत्तो गच्छति' इत्याद्यपेक्षया प्रतीतिवैलक्षण्याभावात्। न तृतीय', 'यतते' 'जानाति' इत्यादिष्वात्मकर्तृकेषु व्यभिचारात् आत्मन स्पन्दाभावात्। न चतुर्थ, 'शब्दोऽभिदधाति' इत्यादौ व्यभिचारात्। न हि प्रयत्न स्पन्दो वा शब्दस्यास्ति। तस्माद्धात्वर्थातिरिक्तभावनास्वरूप दुर्निरूपमिति चेत्—नैष दोष, 'यजते' 'पचति' इत्यादौ 'यागं करोति' 'पाकं करोति' इत्यादिविवरणात्, तथैवानुभवात्, 'याग' 'पाक' इत्यादौ तदुभयाभावादाख्यातप्रत्ययस्य करोतिसमानार्थत्वं वक्तव्यम्। करोतिश्च उत्पादनार्थ· सकर्मक। तत्र कर्मोत्पद्यमानमेव भवति,

'नित्य न भवनं यस्य नित्य चापि न भूतता।
न तस्य क्रियमाणत्व खपुष्पाकाशयोरिव ॥'इति न्यायात्।

ततश्चोत्पद्यमानस्य वस्तुन उत्पत्त्यनुकूल उत्पादककर्तृव्यापार· करोतेरर्थः। भावयतेश्चायमेवार्थ·, भवतेरुत्पत्त्यर्थकत्वात् प्रयोजकव्यापारे 'तत्प्रयोजको हेतुश्च' 'हेतुमति च' इति णिचोऽनुशासनात्। एवञ्च 'पचति' 'पाक करोति' 'पाकं भावयति' इति च पर्यायाः। पचिधात्वर्थश्च विक्लित्तिरिति महाभाष्ये स्पष्टम्। तथा च तण्डुलरूपकर्मगतविक्लित्ति· पचिवाच्या। तत्प्रयोजको देवदत्तादिकर्तृव्यापारोऽधिश्रयणादिनिचयरूप आख्यातप्रत्ययवाच्य। स एव च कर्तृव्यापारो भावभावनाशब्दाभ्यामुच्यते। एवम् 'यजते, यागं भावयति' 'जुहोति, होमं भावयति' 'ददाति,

दानं भावयति' इत्याद्यूह्यम् । न च करोतिर्नोत्पादनार्थको येन तत्समानार्थकतया आख्यातप्रत्ययस्य उत्पत्त्यनुकूलव्यापाररूपभावनावाचित्वं लभ्येत; नैवमस्ति, करोतेर्यत्नार्थकत्वात्, तथा च प्रयत्नरूपभावनावाचित्वमेवाख्यातप्रत्ययस्य वक्तुमुचितम् इति वाच्यम् । 'स्तम्बकरिर्व्रीहि.' इत्यादावचेतनेऽपि प्रयुज्यमानस्य कृञो[1] यत्नार्थकत्वानुपपत्ते', कृञो यत्नार्थकत्वे सति यतधातुवदकर्मकत्वापत्तेश्च । न चेष्टापत्तिः, 'करोति' इत्युक्ते 'किम्' इत्याकाङ्क्षायाः 'यतते' इत्युक्ते तदनाकाङ्क्षायाश्च सर्वानुभवसिद्धाया अपह्नवायोगात्, 'भोजनाय यतते' इतिवत् 'भोजनाय करोति' इत्यापत्तेश्च । एतेनोत्पद्यतिपर्यायत्व करोतेर्निरस्तम् । तथा सत्यकर्मकत्वेन 'घटं करोति' इत्यनापत्ते', घट उत्पद्यत इत्यर्थे 'घटः करोति' इत्यापत्तेश्च । तस्मादन्योत्पादानुकूलव्यापाररूपा भावनैव करोत्यर्थ इति तत्समानार्थकाख्यातप्रत्ययेनापि सैवोच्यत इत्यास्थेयम् ।

ननु—अस्तु धात्वर्थातिरिक्ता भावना, तथापि तां प्रति धात्वर्थस्य 'पाक करोति' इति कर्मत्वेन लोके विवरणात्कथमिह तस्य करणत्व व्युत्पाद्यमिति चेत्—सत्यम्; धात्वर्थातिरिक्तकर्मपदासमभिव्याहारे 'पचति' इत्येवोक्ते 'पाकं करोति' 'ओदनं पचति' इत्युक्ते 'पाकेनौदन करोति' इति च विवरण लोके दृश्यते । तत्र यदा पाकस्य कर्मत्वेनान्वयस्तदा तदनुकूलाधिश्रयणादिव्यापारनिचय. अधिश्रयणत्वादिविशेषधर्मानादरेण पाकानुकूलो व्यापार इत्येव सामान्यरूपेणाख्यातप्रत्ययवाच्यता भजते । यदा तु 'ओदन पचति' इत्यत्र पाकेनौदनं करोतीति करणत्वेन धात्वर्थस्यान्वयस्तदा पाकानुकूलव्यापारत्वेनाधिश्रयणादिनिचयो न प्रत्ययेनोच्यते, पाकस्य कर्मत्वाभावादोदनस्यैव कर्मत्वात् । किन्त्वोदनोत्पत्त्यनुकूलव्यापारत्वेन सामान्यरूपेणैवाधिश्रयणत्वादिविशेषधर्मानादरेण स तद्वाच्यतां भजते । धात्वर्थस्तु पाकः प्रत्ययवाच्ये तस्मिन्व्यापारे करण न त्वोदने, कारकाणा मिथः सम्बन्धायोगात् । यद्यप्यधिश्रयणादिनिचयेन पाको जायते न तु पाकेनाधिश्रयणादिनिचयः, तथापि पाकस्याधिश्रयणादिनिचय प्रति साधकतमत्वरूपकरणत्वासम्भवेऽपि फलोद्देशप्रवृत्तकर्तृव्यापारनिष्पाद्यत्वरूपं करणत्व सम्भवतीति न दोषः । तत्र करणस्य कर्तृव्यापारेण निष्पत्तिर्द्वेधा—स्वरूपेणातिशयविशिष्टतया च । तत्र पाकस्याधिश्रयणादिनिचयेन

1. करोतेः क, घ, ग, मु. पा .

स्वरूपेण निष्पत्तिः। 'कुठारेण वृक्षं छिनत्ति' इत्यत्र तु द्वैधीभावानुकूलोद्यमननिपातनादिव्यापारनिचयेन कुठारस्य द्वैधीभावसम्पादकाभिघाताद्यतिशयविशिष्टतया निष्पत्तिः। एवं वेदेऽपि "व्रीहिभिर्यजेत" इत्यत्र यागस्यैव कर्मत्वात्तदनुकूलव्यापारत्वसामान्यात्मना प्रयत्नसङ्कल्पादिस्तद्विशेषरूपानादरेण गम्यते। व्रीहयस्तु तत्र करणम्। "यजेत स्वर्गकामः" इत्यत्र तु फलस्य कर्मत्वात्तदनुकूलव्यापारत्वसामान्यरूपेणाग्न्यन्वाधानादिसकलव्यापारनिचयस्तद्विशेषरूपानादरेण प्रत्ययेनाभिधीयते। तस्मिंश्च व्यापारे यागः करणम्, यागस्य दृष्टादृष्टार्थावघातप्रयाजादिकर्तृव्यापारेण स्वरूपेण स्वर्गसाधनतासम्पादकातिशयविशेषविशिष्टतया चोत्पत्त्या फलोद्देशप्रवृत्तव्यापारनिष्पाद्यत्वात्। यदि तु 'साधकतमं करणम्' इति व्याकरणानुसाराज्जनकविशेषस्यैव करणत्वमित्याग्रहस्तदाप्येवमुपपाद्यम्। 'कुठारेण च्छिनत्ति' इत्यत्र द्वैधीभावानुकूलोद्यमननिपातनादिव्यापारो न कुठारं प्रति स्वरूपेण साध्यः, कुठारोऽपि न तत्र स्वरूपेण साधनम्। किन्तु द्वैधीभावजननसामर्थ्यरूपाभिघाताद्यतिशयविशेषविशिष्टतया कुठार उद्यमननिपातनादिव्यापारनिचये द्वैधीभावानुकूलव्यापारत्वरूपापन्ने साधनम्। कुठारेऽभिघाताद्यतिशयविशिष्टे सत्येव ह्युद्यमनादिव्यापारो द्वैधीभावानुकूलव्यापारात्मना सम्पद्यते। ततश्च द्वैधीभावानुकूलव्यापारे उद्यमनादौ कुठारः करणमित्युक्ते 'सविशेषणे हि' इति (जा) न्यायेन द्वैधीभावनिष्पत्तौ कुठारः करणमिति पर्यवस्यति। एवम् "यजेत स्वर्गकामः" इत्यत्रापि दृष्टादृष्टोपकारविशिष्टयागस्यावघातप्रयाजादिकर्तृव्यापारे स्वर्गानुकूलव्यापारत्वरूपापन्ने साधनत्वम् 'सविशेषणे हि' इति न्यायात्स्वर्गोत्पत्तौ पर्यवस्यति। तत्र प्रयत्नादिभिरार्थिकैर्लौकिकैः साधनैरवघातादिभिश्च वैदिकैः स्वरूपेण निष्पन्नोऽपि यागोऽग्न्यन्वाधानप्रयाजादिभिर्व्यापारैस्तत्तद्रूपापन्नै फलसाधनात्मना निष्पद्यत इति तेन रूपेण यागस्याग्न्यन्वाधानादिसाध्यता। अग्न्यन्वाधानादिव्यापारस्य च तत्तद्रूपेण तत्साधनता। ततश्च रूपभेदाद्यागस्य कर्तृव्यापारं प्रति साध्यत्वं साधनत्वञ्च न विरुध्यते। तथा कर्तृव्यापारस्यापि यागं प्रति।

नन्वेवमप्यन्वाधानादिरूपव्यापारस्य "अग्नीनन्वादधाति" "व्रीहीनवहन्ति" 'व्रीहीन्प्रोक्षति" "तण्डुलान्पिनष्टि" "समिधो यजति" "तनूनपातं यजति" "विष्णुक्रमान्क्रमते" इत्यादितत्तद्वाक्यैरभिहितत्वात्कथं यजेतेति प्रत्ययवाच्यत्वम्।

किञ्च अन्वाधानादिव्यापारस्य 'किम्' 'केन' 'कथम्' इत्यंशत्रयविशिष्टभावनायां तृतीयाकाङ्क्षापूरकस्य भावनात्वमपि विरुद्धमिति चेत्—सत्यम्, अन्वादधाति इत्यादिभिस्तत्तद्रूपेणाग्न्यन्वाधानादिव्यापारनिचयस्याभिहितत्वेऽप्यन्योत्पादव्यापारत्वेन सामान्यात्मना प्रत्ययवाच्यत्वमविरुद्धम्। एवमग्न्यन्वाधानादिव्यापारनिचयस्य तृतीयाकाङ्क्षापूरकत्वेन भावनांशत्वं सामान्यात्मना अंशित्वं चाविरुद्धम्। तत्र प्रत्ययेन सामान्यात्मना प्रतीतो व्यापारः कोऽसाविति विशिष्याकाङ्क्षितोऽग्न्यन्वाधानादिः कथं व्यापरितव्यमित्याकाङ्क्षितोऽग्न्यन्वाधानादिजन्यदृष्टादृष्टोपकारसम्पादनरूप इति विवेकः। तत्सिद्धं धात्वर्थातिरिक्तं भावनास्वरूपम्। तत्र धात्वर्थः करणम्, तत एवापूर्वमिति। 'यजेत' इत्याद्याख्यातशब्द एवापूर्वमाक्षिपतीति पार्थसारथिमतानुसारी पन्था'। अत्र यद्वक्तव्यं तत्तृतीयस्य तृतीये ( ३ा ) प्रकरणाधिकरणे वक्ष्यामः॥

## इति द्वितीयं भावार्थाधिकरणम्॥ २॥

### ३

धात्वर्थादेवापूर्वमिति स्थितम्। तत्रापूर्वं साधयितुमिदमारभ्यते। "यजेत स्वर्गकामः" इत्यत्र यागस्वर्गातिरिक्तमपूर्वं नाम किञ्चिदस्ति न वेति संशयः। नास्त्यपूर्वम्, प्रमाणाभावात्। न ह्यत्र प्रत्यक्षं प्रमाणं क्रमते, रूपाद्यभावात्। अविनाभूतलिङ्गाभावाच्च नानुमानम्। आगमोऽपि नैवंविधोऽस्ति 'यागोऽपूर्वद्वारा स्वर्गं जनयति' इति। सादृश्याग्रहणाच्च नोपमानगम्योऽपि। न च यागस्य क्षणिकस्य श्रुतकालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या वस्त्वन्तरमपूर्वं नाम किञ्चित्कल्प्यत इति शक्यते वक्तुम्, कल्प्यमानस्य तस्य श्रुतसाधनत्वविरोधितया तदुपपादकत्वासम्भवात्, साधनत्वबोधकशास्त्रेणाव्यवहितस्य बोधितत्वेन मध्ये वस्त्वन्तरस्वीकारे तद्विरोधात्, व्यवहितस्य कुलालपित्रादिवदन्यथासिद्धत्वेन साधनत्वव्याघातात्। न च यागस्य स्वर्गजननशक्तिर्या सैवापूर्वमुच्यते। ततश्च शक्तेरवस्त्वन्तरतया साधनान्तरत्वाभावेनाव्यवधायकतया यागस्य साधनता न तया व्याहन्यते। अस्तु वा वस्त्वन्तरमपूर्वम्। तथापि व्यापारवत्त्वेन यागस्य साधनत्वं न तद्व्याहन्तुमीष्टे, 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायादिति वाच्यम्। शक्तिमति व्यापारवति च यागे क्षणिकत्वेन विनष्टे शक्तेर्व्यापारस्य चावस्थानायोगात्। कथं तर्हि क्षणिकस्य यागस्य कालान्तरभाविस्वर्ग-

जनकत्वमिति चेन्न, शास्त्रप्रामाण्याद्विनष्टस्यापि यागस्य स्वर्गसाधनत्वकल्पनोपपत्तेः। शास्त्रप्रामाण्यात्सूक्ष्मरूपेणावस्थानं वा यागस्य कल्प्यताम्। अतो नापूर्वं वस्त्वन्तरम् इति प्राप्ते, सिद्धान्तयति—

## चोदना पुनरारम्भः ॥ ३ ॥

पुन शब्दो यत इत्यर्थे। चोद्यत आक्षिप्यत इति चोदना अपूर्वम्। कर्मणि ल्युट्। अस्तीति शेष। कुतः ? यतः कर्मणा फलस्य आरम्भः-उत्पत्ति. श्रूयते। तथाहि शास्त्रप्रामाण्यात्कल्प्यमानमपि प्रमाणान्तरेणाविरुद्धमेव कल्प्यते। विनष्टस्य कार्यारम्भकत्वं च सर्वप्रमाणविरुद्धम्। न च पूर्वानुभवकृष्यध्ययनादीनामिव विनष्टस्यापि कार्यारम्भकत्वं किं न स्यादिति वाच्यम्। तेषा सस्कारविशेषनिष्पादनमुखेन तदुपपत्तेः इह च तदनभ्युपगमात्। अभ्युपगमे च गतं विवादेन। एवं क्षणिकस्य यागस्य यावत्कार्यारम्भमवस्थानमपि सर्वप्रमाणविरुद्धं न कल्पयितुं शक्यम्, 'न ह्यागमा' सहस्र घटं पटयितुमीशते' इति न्यायात्। कृतयागस्यात्मन एव फलमिति कल्पना त्वेकादशे 'कर्मण्यारम्भभाव्यत्वात्' इत्यधिकरणे 'सकृत्तु स्यात्कृतार्थत्वादङ्गवत्' इति गुणसूत्र उद्भाव्य (व्या) निराकरिष्यते। न चापूर्वकल्पनाया यागस्य साधनत्वव्याघात., स्वशक्त्यात्मन. स्वव्यापारात्मनो वा अपूर्वस्य यागे साधनत्वपरिपन्थित्वाभावात्। यद्यपि शक्तिमति व्यापारवति च यागे नष्टे तदवस्थानासम्भवस्तथापि कार्यबलात्कल्प्यमाना शक्तिर्यथा कार्यं निर्वहति तथा कल्प्या। इह च शक्तेरात्मनिष्ठतयैव कार्यनिर्वाहित्वे-स्यात्मनिष्ठैव यागस्य शक्ति. कल्प्यते। एव व्यापारोऽपि। तत्र हि समीहितसाध्योद्देशप्रवृत्तसाधनेन तत्सिद्ध्यर्थमन्तरासाध्यमानत्वमेवावान्तरव्यापारत्वम्। व्यापारिणः सत्त्वमपि न तत्र प्रयोजकम्। अन्यथा 'काष्ठै. पचति' इत्यत्र ज्वालाया. पूर्वानुभवादौ च सस्कारस्य व्यापारत्वानुपपत्ते.। तस्मादस्त्यपूर्वं वस्त्वन्तरम्।

तदिद श्रुतफलसाधनत्वान्यथानुपपत्त्या कल्पितमपूर्वमव्यवहितफलसाधनत्वा-
...र्वमिति वदन्ति। तत्रैकहविष्कायामिष्टौ तदुत्पत्तिप्रकारः कथ्यते। सर्वाङ्गोप-
...परमापूर्वमुत्पद्यते। अङ्गानि च कानिचिद्यागानुष्ठानस्य पुरस्तात्कानि-
...ष्ठीयन्ते। यथानुष्ठितानि चाङ्गानि मिलितानि युगपदेव यागे उपकारं
...ने। अङ्गाना च सर्वेषा क्रियात्मकाना क्षणिकाना मेलन

किञ्च अन्वाधानादिव्यापारस्य 'किम्' 'केन' 'कथम्' इत्यंशत्रयविशिष्टभावनायां तृतीयाकाङ्क्षापूरकस्य भावनात्वमपि विरुद्धमिति चेत्—सत्यम्; अन्वादधाति इत्यादिभिस्तत्तद्रूपेणाग्न्यन्वाधानादिव्यापारनिचयस्याभिहितत्वेऽप्यन्योत्पादव्यापारत्वेन सामान्यात्मना प्रत्ययवाच्यत्वमविरुद्धम्। एवमग्न्यन्वाधानादिव्यापारनिचयस्य तृतीयाकाङ्क्षापूरकत्वेन भावनांशत्वं सामान्यात्मना अंशित्वं चाविरुद्धम्। तत्र प्रत्ययेन सामान्यात्मना प्रतीतो व्यापारः कोऽसाविति विशिष्याकाङ्क्षितोऽग्न्यन्वाधानादिः कथ व्यापरितव्यमित्याकाङ्क्षितोऽग्न्यन्वाधानादिजन्यदृष्टादृष्टोपकारसम्पादनरूप इति विवेक'। तत्सिद्धं धात्वर्थातिरिक्त भावनास्वरूपम्। तत्र धात्वर्थः करणम्, तत एवापूर्वमिति। 'यजेत' इत्याद्याख्यातशब्द एवापूर्वमाक्षिपतीति पार्थसारथि-मतानुसारी पन्थाः। अत्र यद्वक्तव्यं तत्तृतीयस्य तृतीये ( ज्ञा ) प्रकरणाधिकरणे वक्ष्याम' ॥

## इति द्वितीयं भावार्थाधिकरणम् ॥ २ ॥

## ३

धात्वर्थादेवापूर्वमिति स्थितम्। तत्रापूर्वं साधयितुमिदमारभ्यते । "यजेत स्वर्गकाम." इत्यत्र यागस्वर्गातिरिक्तमपूर्वं नाम किञ्चिदस्ति न वेति सशयः। नास्त्य-पूर्वम्, प्रमाणाभावात्। न ह्यत्र प्रत्यक्षं प्रमाणं क्रमते, रूपाद्यभावात्। अविनाभूत-लिङ्गाभावाच्च नानुमानम्। आगमोऽपि नैवंविधोऽस्ति 'यागोऽपूर्वद्वारा स्वर्गं जनयति' इति। सादृश्याग्रहणाच्च नोपमानगन्धोऽपि। न च यागस्य क्षणिकस्य श्रुतकालान्तर-भाविस्वर्गसाधनत्वान्यथानुपपत्त्या वस्त्वन्तरमपूर्वं नाम किञ्चित्कल्प्यत इति शक्यते वक्तुम्, कल्प्यमानस्य तस्य श्रुतसाधनत्वविरोधितया तदुपपादकत्वासम्भवात्, साधन-त्वबोधकशास्त्रेणाव्यवहितस्य बोधितत्वेन मध्ये वस्त्वन्तरस्वीकारे तद्विरोधात्, व्यव-हितस्य कुलालपित्रादिवदन्यथासिद्धत्वेन साधनत्वव्याघातात्। न च यागस्य स्वर्ग-जननशक्तिर्या सैवापूर्वमुच्यते। ततश्च शक्तेरवस्त्वन्तरतया साधनान्तरत्वाभावेनाव्य-वधायकतया यागस्य साधनता न तया व्याहन्यते। अस्तु वा वस्त्वन्तरमपूर्वम्। तथापि व्यापारवत्त्वेन यागस्य साधनत्व न तद्व्याहन्तुमीष्टे, 'नहि स्वाङ्ग स्वव्यवधा-यकम्' इति न्यायादिति वाच्यम्। शक्तिमति व्यापारवति च यागे क्षणिकत्वेन विनष्टे शक्तेर्व्यापारस्य चावस्थानायोगात्। कथं तर्हि क्षणिकस्य यागस्य कालान्तरभाविस्वर्ग-

जनकत्वमिति चेन्न, शास्त्रप्रामाण्याद्विनष्टस्यापि यागस्य स्वर्गसाधनत्वकल्पनोपपत्तेः। शास्त्रप्रामाण्यात्सूक्ष्मरूपेणावस्थानं वा यागस्य कल्प्यताम्। अतो नापूर्वं वस्त्वन्तरम् इति प्राप्ते, सिद्धान्तयति—

## चोदना पुनरारम्भः ॥ ३ ॥

पुन शब्दो यत इत्यर्थे। चोद्यत आक्षिप्यत इति चोदना अपूर्वम्। कर्मणि ल्युट्। अस्तीति शेष। कुतः? यतः कर्मणा फलस्य आरम्भः-उत्पत्तिः श्रूयते। तथाहि शास्त्रप्रामाण्यात्कल्प्यमानमपि प्रमाणान्तरेणाविरुद्धमेव कल्प्यते। विनष्टस्य कार्यारम्भकत्वं च सर्वप्रमाणविरुद्धम्। न च पूर्वानुभवकृष्यध्ययनादीनामिव विनष्टस्यापि कार्यारम्भकत्वं किं न स्यादिति वाच्यम्। तेषा सस्कारविशेषनिष्पादनमुखेन तदुपपत्तेः इह च तदनभ्युपगमात्। अभ्युपगमे च गतं विवादेन। एवं क्षणिकस्य यागस्य यावत्कार्यारम्भमवस्थानमपि सर्वप्रमाणविरुद्धं न कल्पयितुं शक्यम्, 'न ह्यागमाः सहस्रं घटं पटयितुमीशते' इति न्यायात्। कृतयागस्यात्मन एव फलमिति कल्पना त्वेकादशे 'कर्मण्यारम्भभाव्यत्वात्' इत्यधिकरणे 'सकृत्तु स्यात्कृतार्थत्वादङ्गवत्' इति गुणसूत्र उद्भाव्य (व्या) निराकरिष्यते। न चापूर्वकल्पनायां यागस्य साधनत्वव्याघात, स्वशक्त्यात्मन. स्वव्यापारात्मनो वा अपूर्वस्य यागे साधनत्वपरिपन्थित्वाभावात्। यद्यपि शक्तिमति व्यापारवति च यागे नष्टे तदवस्थानासम्भवस्तथापि कार्यबलात्कल्प्यमाना शक्तिर्यथा कार्यं निर्वहति तथा कल्प्या। इह च शक्तिरात्मनिष्ठतयैव कार्यनिर्वाहिकेत्यात्मनिष्ठैव यागस्य शक्ति. कल्प्यते। एव व्यापारोऽपि। तत्र हि समीहितसाध्योद्देशप्रवृत्तसाधनेन तत्सिद्ध्यर्थमन्तरासाध्यमानत्वमेवावान्तरव्यापारत्वम्। व्यापारिणः सत्त्वमपि न तत्र प्रयोजकम्। अन्यथा 'काष्ठैः पचति' इत्यत्र ज्वालायाः पूर्वानुभवादौ च सस्कारस्य व्यापारत्वानुपपत्तेः। तस्मादस्त्यपूर्वं वस्त्वन्तरम्।

तदिद श्रुतफलसाधनत्वान्यथानुपपत्त्या कल्पितमपूर्वमव्यवहितफलसाधनत्वात्परमापूर्वमिति वदन्ति। तत्रैकहविष्कायामिष्टौ तदुत्पत्तिप्रकारः कथ्यते। सर्वाङ्गोपकृतेन यागेन परमापूर्वमुत्पद्यते। अङ्गानि च कानिचिद्यागानुष्ठानस्य पुरस्तात्कानिचित्परस्ताच्चानुष्ठीयन्ते। यथानुष्ठितानि चाङ्गानि मिलितानि युगपदेव यागे उपकारं जनयन्तीत्येकादशे वक्ष्यते। अङ्गाना च सर्वेषा क्रियात्मकानां क्षणिकाना मेलन

किञ्च अन्वाधानादिव्यापारस्य 'किम्' 'केन' 'कथम्' इत्यंशत्रयविशिष्टभावनायां तृतीयाकाङ्क्षापूरकस्य भावनात्वमपि विरुद्धमिति चेत्—सत्यम्; अन्वादधाति इत्यादिभिस्तत्तद्रूपेणाग्न्यन्वाधानादिव्यापारनिचयस्याभिहितत्वेऽप्यन्योत्पादव्यापारत्वेन सामान्यात्मना प्रत्ययवाच्यत्वमविरुद्धम्। एवमग्न्यन्वाधानादिव्यापारनिचयस्य तृतीयाकाङ्क्षापूरकत्वेन भावनांशत्वं सामान्यात्मना अंशित्वं चाविरुद्धम्। तत्र प्रत्ययेन सामान्यात्मना प्रतीतो व्यापारः कोऽसाविति विशिष्याकाङ्क्षितोऽग्न्यन्वाधानादिः कथं व्यापरितव्यमित्याकाङ्क्षितोऽग्न्यन्वाधानादिजन्यदृष्टादृष्टोपकारसम्पादनरूप इति विवेकः। तत्सिद्धं धात्वर्थातिरिक्त भावनास्वरूपम्। तत्र धात्वर्थः करणम्, तत एवापूर्वमिति। 'यजेत' इत्याद्याख्यातशब्द एवापूर्वमाक्षिपतीति पार्थसारथिमतानुसारी पन्थाः। अत्र यद्वक्तव्यं तत्तृतीयस्य तृतीये ( ५ ) प्रकरणाधिकरणे वक्ष्यामः॥

## इति द्वितीयं भावार्थाधिकरणम्॥ २॥

## ३

धात्वर्थादेवापूर्वमिति स्थितम्। तत्रापूर्वं साधयितुमिदमारभ्यते। "यजेत स्वर्गकामः" इत्यत्र यागस्वर्गातिरिक्तमपूर्वं नाम किञ्चिदस्ति न वेति संशयः। नास्त्यपूर्वम्, प्रमाणाभावात्। न ह्यत्र प्रत्यक्षं प्रमाणं क्रमते, रूपाद्यभावात्। अविनाभूतलिङ्गाभावाच्च नानुमानम्। आगमोऽपि नैवंविधोऽस्ति 'यागोऽपूर्वद्वारा स्वर्गं जनयति' इति। सादृश्याग्रहणाच्च नोपमानगन्धोऽपि। न च यागस्य क्षणिकस्य श्रुतकालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या वस्त्वन्तरमपूर्वं नाम किञ्चित्कल्प्यत इति शक्यते वक्तुम्, कल्प्यमानस्य तस्य श्रुतसाधनत्वविरोधितया तदुपपादकत्वासम्भवात्, साधनत्वबोधकशास्त्रेणाव्यवहितस्य बोधितत्वेन मध्ये वस्त्वन्तरस्वीकारे तद्विरोधात्, व्यवहितस्य कुलालपित्रादिवदन्यथासिद्धत्वेन साधनत्वव्याघातात्। न च यागस्य स्वर्गजननशक्तिर्या सैवापूर्वमुच्यते। ततश्च शक्तेरवस्त्वन्तरतया साधनान्तरत्वाभावेनाव्यवधायकतया यागस्य साधनता न तया व्याहन्यते। अस्तु वा वस्त्वन्तरमपूर्वम्। तथापि व्यापारवत्त्वेन यागस्य साधनत्वं न तद्व्याहन्तुमीष्टे, 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायादिति वाच्यम्। शक्तिमति व्यापारवति च यागे क्षणिकत्वेन विनष्टे शक्तेर्व्यापारस्य चावस्थानायोगात्। कथं तर्हि क्षणिकस्य यागस्य कालान्तरभाविस्वर्ग-

जनकत्वमिति चेन्न, शास्त्रप्रामाण्याद्विनष्टस्यापि यागस्य स्वर्गसाधनत्वकल्पनोपपत्तेः। शास्त्रप्रामाण्यात्सूक्ष्मरूपेणावस्थानं वा यागस्य कल्प्यताम्। अतो नापूर्वं वस्त्वन्तरम् इति प्राप्ते, सिद्धान्तयति—

## चोदना पुनरारम्भः ॥ ३ ॥

पुन शब्दो यत इत्यर्थे। चोद्यत आक्षिप्यत इति चोदना अपूर्वम्। कर्मणि ल्युट्। अस्तीति शेष.। कुतः? यतः कर्मणा फलस्य आरम्भः-उत्पत्तिः श्रूयते। तथाहि शास्त्रप्रामाण्यात्कल्प्यमानमपि प्रमाणान्तरेणाविरुद्धमेव कल्प्यते। विनष्टस्य कार्यारम्भकत्वं च सर्वप्रमाणविरुद्धम्। न च पूर्वानुभवकृष्यध्ययनादीनामिव विनष्टस्यापि कार्यारम्भकत्वं किं न स्यादिति वाच्यम्। तेषा सस्कारविशेषनिष्पादनमुखेन तदुपपत्ते' इह च तदनभ्युपगमात्। अभ्युपगमे च गतं विवादेन। एवं क्षणिकस्य यागस्य यावत्कार्यारम्भमवस्थानमपि सर्वप्रमाणविरुद्धं न कल्पयितुं शक्यम्, 'न ह्यागमा' सहस्रं घटं पटयितुमीशते' इति न्यायात्। कृतयागस्यात्मन एव फलमिति कल्पना त्वेकादशे 'कर्मण्यारम्भभाव्यत्वात्' इत्यधिकरणे 'सकृत्तु स्यात्कृतार्थत्वादङ्गवत्' इति गुणसूत्र उद्भाव्य (व्या) निराकरिष्यते। न चापूर्वकल्पनायां यागस्य साधनत्वव्याघात, स्वशक्त्यात्मन स्वव्यापारात्मनो वा अपूर्वस्य यागे साधनत्वपरिपन्थित्वाभावात्। यद्यपि शक्तिमति व्यापारवति च यागे नष्टे तदवस्थानासम्भवस्तथापि कार्यबलात्कल्प्यमाना शक्तिर्यथा कार्यं निर्वहति तथा कल्प्या। इह च शक्तिरात्मनिष्ठतयैव कार्यनिर्वाहिकेत्यात्मनिष्ठैव यागस्य शक्ति. कल्प्यते। एव व्यापारोऽपि। तत्र हि समीहितसाध्योद्देशप्रवृत्तसाधनेन तत्सिद्ध्यर्थमन्तरासाध्यमानत्वमेवावान्तरव्यापारत्वम्। व्यापारिणः सत्त्वमपि न तत्र प्रयोजकम्। अन्यथा 'काष्ठैः पचति' इत्यत्र ज्वालाया. पूर्वानुभवादौ च सस्कारस्य व्यापारत्वानुपपत्ते.। तस्मादस्त्यपूर्वं वस्त्वन्तरम्।

तदिदं श्रुतफलसाधनत्वान्यथानुपपत्त्या कल्पितमपूर्वमव्यवहितफलसाधनत्वात्परमापूर्वमिति वदन्ति। तत्रैकहविष्कायामिष्टौ तदुत्पत्तिप्रकार. कथ्यते। सर्वाङ्गोपकृतेन यागेन परमापूर्वमुत्पद्यते। अङ्गानि च कानिचिद्यागानुष्ठानस्य पुरस्तात्कानिचित्परस्ताच्चानुष्ठीयन्ते। यथानुष्ठितानि चाङ्गानि मिलितानि युगपदेव यागे उपकारं जनयन्तीत्येकादशे वक्ष्यते। अङ्गाना च सर्वेषा क्रियात्मकाना क्षणिकाना मेलनं

साक्षादसम्भवात्स्वस्वजन्यापूर्वमुखेन वक्तव्यमित्यङ्गापूर्वसिद्धिः। मिलितैरपि तैरङ्गापूर्वैर्मध्येऽनुष्ठितस्य यागस्योत्पन्नविनष्टत्वेन साक्षात्तस्मिन्नुपकारजननासम्भवात्स्वजन्यापूर्वमुखेनैव तस्मिन्नुपकारजनकत्वं तेषामङ्गपूर्वाणां वाच्यमित्युत्पन्नमात्रादनुपकृतादेव यागात्किञ्चिदपूर्वमुत्पद्यत इति वक्तव्यम्। तदिदमुत्पत्त्यपूर्वमित्युच्यते। तन्मुखेन सर्वाङ्गापूर्वैरुपकृताद्यागात्परमापूर्वमिति। न चोत्पत्त्यपूर्वमेवाङ्गोपकृतं फलं साधयतु, किं परमापूर्वेणेति वाच्यम्। यागफलयोः साध्यसाधनभावे निर्धारिते हि कथम्भावाकाङ्क्षा भवति, न त्वनिर्धारिते। तन्निर्धारणं च यागस्य नश्वरत्वेन द्वारकल्पनां विना न सम्भवतीति प्रथमं परमापूर्वमेव कल्प्यम्, न तूत्पत्त्यपूर्वम्। तत्त्वङ्गसाचिव्यनिर्वाहाय पश्चादेव कल्प्यमित्यपूर्वद्वयकल्पना आवश्यकी। एवमनेकहविष्कायामपीष्टौ यावन्तो यागास्तावन्त्युत्पत्त्यपूर्वाणीति विशेषः। तत्र प्रधानानां फलसाधनतानिर्वाहार्थं प्रथमं परमापूर्वमेकं सर्वप्रधानसाध्यं कल्प्यते, फलवाक्ये एकशब्दोपात्तानां प्रधानानामेकफलसाधनत्वस्यैकादशाद्याधिकरणे व्यवस्थापयिष्यमाणत्वात् (टा)। पश्चाच्चाङ्गसाहित्यसिद्ध्यर्थं प्रातिस्विकान्युत्पत्त्यपूर्वाणि कल्प्यन्ते। न च प्रधानानां साहित्यसिद्ध्यर्थं प्रथममुत्पत्त्यपूर्वाण्येव कल्प्यन्ताम्; ततश्च तैरेव फलसिद्धेः किं परमापूर्वेणेति वाच्यम्। फलाकाङ्क्षाया उत्कटत्वेन फलसाधनतानिर्वाहकतया प्रथमं परमापूर्वकल्पनाया एवोचितत्वात्। यदि च प्रतिप्रधानमपूर्वाणि प्रथमं कल्प्येरन्, तर्हि तानि फलापूर्वाण्येव स्युः, न तु उत्पत्त्यपूर्वाणि। ततश्च सप्तमाद्ये वक्ष्यमाणन्यायेन धर्माणामपूर्वार्थतया प्रथमकल्पितापूर्वार्थत्वमेव स्यात्। ततश्चाङ्गोपकृतेभ्यो यागेभ्योऽपूर्वसिद्ध्यर्थं पुनरपि प्रतिप्रधानमुत्पत्त्यपूर्वाणि कल्प्येरन्निति गौरवं स्यात्। तस्मात्फलवाक्ये एकशब्दसङ्गृहीतैर्बहुभिरपि यागैः स्वस्वोत्पत्त्यपूर्वमुखेन परमापूर्वमेकमेव जन्यते। उत्पत्त्यपूर्वाण्येव तु प्रतिप्रधानं भिद्यन्ते। तदेवमुत्पत्त्यपूर्वं परमापूर्वञ्च सर्वत्र साधारणम्।

दर्शपूर्णमासयोस्तु समुदायापूर्वद्वयमधिकम्। तथाहि—आग्नेयोऽष्टाकपालः पुरोडाशः, आज्यहविरुपांशुयाजः, अग्नीषोमीय एकादशकपालः पुरोडाश इति पौर्णमास्यां त्रीणि प्रधानानि। आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पयः इत्यमावास्यायां त्रीणि प्रधानानि। तत्र "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्ये सकृदुच्चरितेन यजिना तन्त्राभिधानशक्तिमहिम्ना[1] समुदितानां षण्णां यागानामेकफल-

1. शक्त्या ग.

जनकतया एकप्रयोगोपनिपाते प्राप्ते प्रतित्रिकं प्रयोगभेदं विधातुमिद वाक्यद्वयं प्रवृत्तम् "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इति। तदेतदेकादश एव स्पष्टं भविष्यति। तत्र पृथक्करणविभक्तिनिर्देशात्परस्परनिरपेक्षस्यैकैकस्य त्रिकस्य करणत्वमवगम्यते। न च तत् फलापूर्वं प्रति वक्तुं शक्यम्, तत्र परस्परसाहित्या-वश्यम्भावात्। ततश्च निरपेक्षसाधनत्वेनावगताभ्या त्रिकाभ्या युगपत्फलापूर्वारम्भे नैरपेक्ष्यबाधप्रसङ्गेन तदादाय पृथक्करणश्रुतिनिर्वाहासम्भवात् तदर्थं प्रतित्रिकमेकैक समुदायापूर्वमङ्गीकर्तव्यमिति। एवं चातुर्मास्येषु 'वसन्ते वैश्वदेवेन यजेत प्रावृषि वरुणप्रघासै" शरदि साकमेधै." "ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयेण यजेत" इत्यत्र चत्वारि समुदायापूर्वाण्यधिकानीत्यादि यथायथमूह्यम्। नन्वेवमपि सर्वाङ्गोपकृतयागतः परमापूर्वमित्यनुपपन्नम्, सन्निपत्यो-पकारकाणामवघातादीनामनुष्ठानसमये प्रधानापूर्वस्यैवासत्त्वेन तदुपकारस्यासम्भवात्; न च प्रयाजादिवदपूर्वद्वारा तत्सम्भव, अवघातादीना दृष्टार्थतया अपूर्वाभावादिति चेत्—सत्यम्, सन्निपत्योपकारकाण्यवघातादीनि नियमादृष्टरूपद्रव्यदेवतासस्कारद्वारा शक्तिविशेषविशिष्टयागजननद्वारा तदुत्पत्त्यपूर्वनिष्पत्तौ तद्द्वारा फलापूर्वनिष्पत्तौ च व्याप्रियन्ते, तथाविधयागजन्योत्पत्त्यपूर्वस्यैव फलापूर्वजनकत्वात्। आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्य. फलापूर्वनिष्पत्तौ व्याप्रियन्ते। न चैव सति साक्षादुपकार-जनने व्याप्रियमाणत्वादारादुपकारकाणां प्रयाजादीनामेवेत्थम्भावाकाङ्क्षया स्वीकार: स्यात्, ततश्च तेषामेव विकृतावतिदेश स्यान्नावघातादीनां सन्निपत्त्योपकारकाणामिति वाच्यम्। 'कथ भावयेत्' इत्युपकारजननप्रकारमात्र ह्यपेक्ष्यते, न तु साक्षादुपकार-जननप्रकार एव। ततश्च सत्यप्यवान्तरभेदे सर्वेषामेवाङ्गानामित्थम्भावाकाङ्क्षासङ्गृही-तत्वात्सर्वाङ्गोपसहृतयागत [1] परमापूर्वमिति युक्तम्॥

इति तृतीयमपूर्वाधिकरणम्॥ ३॥

४

धात्वर्थेभ्योऽपूर्वमिति भावार्थाधिकरणे स्थितम्। तदेतत्क्वचिदपवदितुमिद-मारभ्यते। "व्रीहीनवहन्ति" "तण्डुलान्पिनष्टि" "पिष्टानि संवपति" इत्यादिषु किमवघातादिभ्योऽपूर्वमस्ति न वेति सशय। तदर्थं चेत्थ चिन्त्यते किमवघातार्थो

1 उपकृतयागत क, ग, घ, मु पा.

व्रीहयः, उत व्रीह्यर्थोऽवघात इति। यद्यवघातार्था व्रीहयस्तर्हि तत्साधनकावघातस्य दृष्टप्रयोजनाभावादस्त्यपूर्वम्। यदि तु व्रीह्यर्थोऽवघातस्तर्हि दृष्टवैतुष्यद्वारैव व्रीह्यर्थत्वादवघातस्य नास्त्यपूर्वमिति फलति। तत्रावघातार्था व्रीहय इत्येव युक्तम्। न च अग्निमाधिकरणे द्वितीयाया. साध्यत्वार्थकतया तत्सहितविधिबलाद्द्वितीयान्तार्थस्य शेषित्वमिति वक्ष्यते, तन्न्यायेनेहापि द्वितीयाश्रुत्या व्रीह्यर्थत्वमेवावघातस्य युक्तमिति वाच्यम्। अवघातस्य हि दृष्टवैतुष्यार्थत्वे तस्य लोकत एव प्राप्तत्वेन तत्साफल्या-यावश्यं प्रकृतेऽपूर्वं कल्पनीयम्। तच्च यदि व्रीहिद्रव्यात्कल्प्येत तदावघातस्य व्रीह्यर्थत्वमदृष्टद्वारैव वाच्यम्। द्रव्यादपूर्वमिति वदता अवघातविशिष्टद्रव्यस्य विधेयत्वेन[1] वाच्यतया दृष्टद्वारा अवघातस्य द्रव्यार्थत्वे द्रव्यविशेषणतया अवघातविधिवैयर्थ्यापत्तेः। एवञ्च व्रीह्यर्थत्वे अवघातस्य द्रव्यादेकमदृष्टमवघातादेक-मित्यदृष्टद्वयकल्पनाप्रसङ्गात् द्वितीयाश्रुत्यवगतमपि व्रीह्यर्थत्व परित्यज्य "सक्तूञ्जुहोति" इत्यत्रेव द्वितीयायास्तृतीयार्थलक्षकत्वाश्रयणेन अवघातार्था व्रीहय इति युक्तमाश्रयितुम्। एवं पेषणादिवाक्येष्वप्यूह्यम्। इति प्राप्ते, सिद्धान्तयति—

## तानि द्वैधं गुणप्रधानभूतानि ॥ ४ ॥

'येषा तूत्पत्तावर्थे' इति पूर्वसूत्रोपात्तान्याख्यातानि तच्छब्दः परामृशति। तान्याख्यातानि गुणप्रधानभूतानि गुण प्रधान च कर्म प्रकृत्यशाभिधेयत्वेन प्राप्तानि द्वैधं—द्वेधा। भवते प्राप्त्यर्थाच्चौरादिकात् 'गत्यर्थाकर्मक' इत्यादिना क्तप्रत्यये 'आ धृषाद्वा' इति णिजभावे रूपम्। 'द्वित्र्योश्च धमुञ्' इति विधार्थे द्वैधमिति रूपम्। अल्पाच्तरत्वाद्गुणशब्दस्य पूर्वनिपातः॥

प्रधानभूतानि तावद्दर्शयति—

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ५ ॥

"प्रयाजान्यजति" इत्यादिषु यै यदभिधेयैः प्रयाजादिभि. तदीयमाज्यादिद्रव्यं दृष्टधर्मवत्तया न चिकीर्ष्यते नोत्पादयितुमिष्यते तानि-आख्यातानि प्रधानभूतानि

---

1. विधेयताया. क, घ, ग, ङ, अ, मु पा

द्रव्यापेक्षया तत्साध्यत्वेन प्रधानभूतकर्मप्रतिपादकानि।[1] कुत एतत्? द्रव्यस्य गुणभूतत्वात् आज्यादिद्रव्यस्य प्रयाजादिदृष्टकार्यनिर्वर्तकतया तद्गुणभाव प्राप्तत्वात्; द्रव्यार्थत्वे प्रयाजादीनां तददृष्टस्य द्रव्यादृष्टस्य च कल्पनापत्तेः॥

गुणभूतानि दर्शयति—

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र ीयेत**

**तस्य द्रव्यप्रधानत्वात्॥ ६॥**

तुशब्दः पूर्ववैषम्ये। "व्रीहीनवहन्ति" इत्यादिषु यैः—यदभिधेयैरवघातादिभिः व्रीह्यादिद्रव्य वैतुष्यादिदृष्टधर्मवत्तया चिकीर्ष्यते—उत्पादयितुमिष्यते, तत्र—तेष्ववहन्त्यादिषु गुण—जातावेकवचनम्, अवघातादि द्रव्यं प्रति गुणः तत्साधनतया प्रतीयेत। कुतः? तस्य अवघातादेः द्रव्यप्रधानत्वात्—दृष्टवैतुष्यद्वारा व्रीह्यादिद्रव्यार्थत्वात्। न चावघातादेर्दृष्टवैतुष्यार्थत्वे द्रव्यादवघातादितश्चापूर्वकल्पनागौरवमिति वाच्यम्। तदा ह्यदृष्टद्वयकल्पना यदि व्रीह्यादिद्रव्यमवघातादिविशिष्टमिह विधीयत इत्युच्यते। नैवमस्ति, क्रत्वर्थतया प्राप्तमेव व्रीह्यादिद्रव्यमुद्दिश्यावघातादिमात्रं विधीयते। अतो न द्रव्यादृष्टकल्पनाप्रसक्तिः। नाप्यवघातादेर्व्रीह्यादिद्रव्यार्थतानिर्वाहायापूर्वकल्पना, दृष्टवैतुष्यद्वारैव तत्सम्भवात्। एवञ्च सति नैकस्याप्यपूर्वस्य कल्पनाप्रसक्तिः। न चैवं सत्यवघातादेर्वैतुष्यादिदृष्टार्थत्वस्य लोकत एव सिद्धत्वाद्विधिवैयर्थ्यमिति वाच्यम्, नखविदलनव्यावृत्त्यादिफलकनियमविधानार्थत्वात्। न चैवमपि नियमादृष्टस्य कल्पनीयत्वात्को विशेष इति वाच्यम्, व्रीह्यादिसाधनकावघातादिविधावपि सर्वे द्रव्यविधयो नियमविधय इति चातुर्थिकन्यायेन (ठा) विशेषणभूतव्रीह्यादिद्रव्यविधेर्नियमार्थतया नियमादृष्टस्यावर्जनीयत्वात्। एव च व्रीह्यादिसाधनकावघातादेर्दृष्टप्रयोजनाभावादपूर्वार्थतायामवघातादितो[2] व्रीह्यादिद्रव्याच्चापूर्वद्वयकल्पना स्यात्। व्रीह्याद्यर्थावघातादिविधौ तु नियमादृष्टमात्रकल्पनेति लाघवम्। न चैव नियमादृष्टरूपापूर्वसद्भावन्नास्त्यपूर्वमिति कथमुच्यत इति वाच्यम्, नियमादृष्टस्य क्रियाफलानुनिष्पाद्यत्वेन तस्य फलत्वव्यवहारायोग्यत्वात्। अवघातादितोऽपूर्वं नास्तीत्यनेन फलत्वेनापूर्वाभावस्य विवक्षितत्वादिति दिक्॥

इति चतुर्थं तानिद्वैधाधिकरणम्॥४॥

---

1. कुत ग.　2 अपूर्वार्थतयावघातादितो क, घ, ग, मु. पा.

व्रीहयः, उत व्रीह्यर्थोऽवघात इति। यद्यवघातार्था व्रीहयस्तर्हि तत्साधनकावघातस्य दृष्टप्रयोजनाभावादस्त्यपूर्वम्। यदि तु व्रीह्यर्थोऽवघातस्तर्हि दृष्टवैतुष्यद्वारैव व्रीह्यर्थत्वादवघातस्य नास्त्यपूर्वमिति फलति। तत्रावघातार्था व्रीहय इत्येव युक्तम्। न च अग्रिमाधिकरणे द्वितीयायाः साध्यत्वार्थकतया तत्सहितविधिबलाद्द्वितीयान्तार्थस्य शेषित्वमिति वक्ष्यते, तन्न्यायेनेहापि द्वितीयाश्रुत्या व्रीह्यर्थत्वमेवावघातस्य युक्तमिति वाच्यम्। अवघातस्य हि दृष्टवैतुष्यार्थत्वे तस्य लोकत एव प्राप्तत्वेन तत्साफल्यायावश्यं प्रकृतेऽपूर्वं कल्पनीयम्। तच्च यदि व्रीहिद्रव्यात्कल्प्येत तदावघातस्य व्रीह्यर्थत्वमदृष्टद्वारैव वाच्यम्। द्रव्यादपूर्वमिति वदता अवघातविशिष्टद्रव्यस्य विधेयत्वेन[1] वाच्यतया दृष्टद्वारा अवघातस्य द्रव्यार्थत्वे द्रव्यविशेषणतया अवघातविधिवैयर्थ्यापत्तेः। एवञ्च व्रीह्यर्थत्वे अवघातस्य द्रव्यादेकमदृष्टमवघातादेकमित्यदृष्टद्वयकल्पनाप्रसङ्गात् द्वितीयाश्रुत्यवगतमपि व्रीह्यर्थत्वं परित्यज्य "सक्तूञ्जुहोति" इत्यत्रेव द्वितीयायास्तृतीयार्थलक्षकत्वाश्रयणेन अवघातार्था व्रीहय इति युक्तमाश्रयितुम्। एवं पेषणादिवाक्येष्वप्यूह्यम्। इति प्राप्ते, सिद्धान्तयति—

## तानि द्वैधं गुणप्रधानभूतानि ॥ ४ ॥

'येषा तूत्पत्तावर्थे' इति पूर्वसूत्रोपात्तान्याख्यातानि तच्छब्दः परामृशति। तान्याख्यातानि गुणप्रधानभूतानि गुणं प्रधानं च कर्म प्रकृत्यंशाभिधेयत्वेन प्राप्तानि द्वैधं—द्वेधा। भवते· प्राप्त्यर्थाच्चौरादिकात् 'गत्यर्थाकर्मक' इत्यादिना क्तप्रत्यये 'आ धृषाद्वा' इति णिजभावे रूपम्। 'द्वित्र्योश्च धमुञ्' इति विधार्थे द्वैधमिति रूपम्। अल्पाच्तरत्वाद्गुणशब्दस्य पूर्वनिपातः॥

प्रधानभूतानि तावद्दर्शयति—

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ५ ॥

"प्रयाजान्यजति" इत्यादिषु यैः यदभिधेयैः प्रयाजादिभिः तदीयमाज्यादिद्रव्यं दृष्टधर्मवत्तया न चिकीर्ष्यते नोत्पादयितुमिष्यते तानि-आख्यातानि प्रधानभूतानि

1. विधेयतया . क, ख, ग, ङ, अ, मु. पा.

द्रव्यापेक्षया तत्साध्यत्वेन प्रधानभूतकर्मप्रतिपादकानि।[1] कुत एतत्? द्रव्यस्य गुणभूतत्वात् आज्यादिद्रव्यस्य प्रयाजादिदृष्टकार्यनिर्वर्तकतया तद्गुणभावं प्राप्तत्वात्, द्रव्यार्थत्वे प्रयाजादीनां तददृष्टस्य द्रव्यादृष्टस्य च कल्पनापत्तेः॥

गुणभूतानि दर्शयति—

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्॥ ६॥**

तुशब्दः पूर्ववैषम्ये। "व्रीहीनवहन्ति" इत्यादिषु यैः—यदभिधेयैरवघातादिभिः व्रीह्यादिद्रव्यं वैतुष्यादिदृष्टधर्मवत्तया चिकीर्ष्यते—उत्पादयितुमिष्यते, तत्र—तेष्ववहन्त्यादिषु गुणः—जातावेकवचनम्, अवघातादि द्रव्यं प्रति गुणः तत्साधनतया प्रतीयेत। कुतः? तस्य अवघातादेः द्रव्यप्रधानत्वात्—दृष्टवैतुष्यद्वारा व्रीह्यादिद्रव्यार्थत्वात्। न चावघातादेर्दृष्टवैतुष्यार्थत्वे द्रव्यादवघातादितश्चापूर्वकल्पनागौरवमिति वाच्यम्। तदा ह्यदृष्टद्वयकल्पना यदि व्रीह्यादिद्रव्यमवघातादिविशिष्टमिह विधीयत इत्युच्यते। नैवमस्ति, क्रत्वर्थतया प्राप्तमेव व्रीह्यादिद्रव्यमुद्दिश्यावघातादिमात्रं विधीयते। अतो न द्रव्यादृष्टकल्पनाप्रसक्तिः। नाप्यवघातादेर्व्रीह्यादिद्रव्यार्थतानिर्वाहायापूर्वकल्पना, दृष्टवैतुष्यद्वारैव तत्सम्भवात्। एवञ्च सति नैकस्याप्यपूर्वस्य कल्पनाप्रसक्तिः। न चैवं सत्यवघातादेर्वैतुष्यादिदृष्टार्थत्वस्य लोकत एव सिद्धत्वाद्विधिवैयर्थ्यमिति वाच्यम्, नखविदलनव्यावृत्त्यादिफलकनियमविधानार्थत्वात्। न चैवमपि नियमादृष्टस्य कल्पनीयत्वात्को विशेष इति वाच्यम्, व्रीह्यादिसाधनकावघातादिविधावपि सर्वे द्रव्यविधयो नियमविधय इति चातुर्थिकन्यायेन (ठा) विशेषणभूतव्रीह्यादिद्रव्यविधेर्नियमार्थतया नियमादृष्टस्यावर्जनीयत्वात्। एव च व्रीह्यादिसाधनकावघातादेर्दृष्टप्रयोजनाभावादपूर्वार्थतायामवघातादितो[2] व्रीह्यादिद्रव्याच्चापूर्वद्वयकल्पना स्यात्। व्रीह्याद्यर्थावघातादिविधौ तु नियमादृष्टमात्रकल्पनेति लाघवम्। न चैवं नियमादृष्टरूपापूर्वसद्भावन्नास्त्यपूर्वमिति कथमुच्यत इति वाच्यम्, नियमादृष्टस्य क्रियाफलानुनिष्पाद्यत्वेन तस्य फलत्वव्यवहारायोग्यत्वात्। अवघातादितोऽपूर्वं नास्तीत्यनेन फलत्वेनापूर्वाभावस्य विवक्षितत्वादिति दिक्॥

इति चतुर्थं तानिद्वैधाधिकरणम्॥४॥

---

1. कुत ग.  2 अपूर्वार्थतयावघातादितो क, घ, ग, मु. पा.

५

दर्शपूर्णमासयो' श्रूयते–"स्रुच. संमार्ष्टि" इति। किमयं स्रुचां संमार्गः प्रयाजादिवत्प्रधानकर्म ? उत गुणकर्म ? इति संशयः। पर्वस्मिन्नधिकरणे दृष्टोपकारकं गुणकर्म, अदृष्टोपकारक प्रधानकर्मेत्युक्तम्। प्रक्षाल्य दर्भैष्वासादिताना स्रुचां वेदाख्यदर्भमुष्टिविशेषाग्रैः समार्गतो न कश्चिद्दृष्टोपकारं पश्याम.। अतः प्रधानकर्मत्वमेव संमार्गस्य प्राप्तम्। यदि च गुणकर्म स्यात्तर्हि दृष्टोपकारकत्वस्य गुणकर्मलक्षणस्य तत्राव्याप्ति' स्यात्, दृष्टोपकराभावात्। अदृष्टोपकारकत्वस्य प्रधानकर्मलक्षणस्यातिव्याप्तिश्च, अदृष्टोपकारकत्वात्। न च 'कर्तुरीप्सिततमं कर्म' 'कर्मणि द्वितीया' इति व्याकरणस्मृत्या साध्यत्वे विहितया द्वितीयया स्रुचामेव प्राधान्यावगते कथ समार्गस्य प्रधानकर्मतेति वाच्यम्। न हि साध्यत्वं द्वितीयार्थ इति व्याकरणतो गम्यते, ईप्सिततमत्वस्यैव ततोऽवगतेः। व्यभिचाराच्च न साध्यत्वं द्वितीयार्थः। लोके हि तावत् 'बल्वजाञ्छिखण्डकान् कुरु' इत्यस्ति प्रयोगः। बल्वजैस्तृणविशेषैः शिखण्डकान् कुर्विति गम्यते। तत्र बल्वजाना सिद्धतया साध्यत्वाभावेऽपि द्वितीया दृश्यते। अतो व्यभिचारान्न साध्यत्वं द्वितीयार्थः। प्रत्युत साधनत्वमेवाव्यभिचाराद्द्वितीयार्थः, बल्वजाना शिखण्डकसाधनत्वात् "सक्तूञ्जुहोति" इत्यत्र सक्तूना च होमसाधनत्वात्। न च 'कट करोति' 'घट करोति' इत्यादौ कटादेरसिद्धस्य साधनत्वासम्भवाद्व्यभिचारात्साधनत्वमपि न द्वितीयार्थ इति वाच्यम्। 'एवमाकारः कटादिः कर्तव्य' इति बुद्धावुल्लेखानन्तरमेव तत्र कृतेरुत्पत्त्या बुद्धिस्थत्वेन तस्यापि साधनत्वसम्भवात्। ततश्च स्रुगादिसाधनसंमार्गविधानादृष्टोपकाराभावाच्च प्रधानकर्मत्वमेव समार्गस्येति पूर्वपक्षयति—

**धर्ममात्रे तु स्यादनिर्वृत्तेः प्रयाजवत् ॥७॥**

तुशब्दोऽवधारणे। तथा मात्रशब्दोऽपि। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। धर्म.—अदृष्टार्थं कर्म। धर्म एव धर्ममात्रम्। मयूरव्यसकादित्वात्समासः। अथवा 'संशयमात्रमेतत्' इत्यत्र महाभाष्ये मात्रशब्दः अतात्त्विकत्वे दृष्टः। अतात्त्विकत्वमप्रामाणिकत्वम्। [1]इह तु प्रत्यक्षप्रमाणागोचरत्वरूपमदृष्टत्व विवक्षितम्। अदृष्टो धर्मो धर्ममात्रम्। पूर्ववत्समास। दृष्टोपकाररहितमदृष्टार्थं कर्म धर्ममात्रं केवलादृष्टार्थं कर्म, न तु स्विष्टकृद्वदुभयरूपमित्युक्तं भवति। तथाविधसमार्गविधायकवाक्ये समार्गः प्रयाजवत्प्रधानकर्म स्यात्, न तु गुणकर्म। कुत. ? अनिर्वृत्तेः—दृष्टस्योपकारस्य समार्गाद्-

1 अत्र तु. ग

तुत्पत्तेः। एवम् "व्रीहीन्प्रोक्षति" "आज्यमुत्पुनाति" "हविरभिमृशति" "गार्हपत्यमुपतिष्ठते" इत्यादिष्वप्यूह्यम् ॥

सिद्धान्तयति—

## तुल्यश्रुतित्वाद्वेतरैः सधर्म स्यात् ॥८॥

वाशब्द एवार्थे। संमार्गादितरैः अवघातादिभिः सधर्मं स्यात्। समानः साधारणो धर्मः यस्य तत् सधर्मं, 'धर्मादनिच्केवलात्' इत्यनिच् समासान्त। गुणकर्मेत्युक्तं भवति। कुतः? तुल्यश्रुतित्वात्—तुल्या द्वितीया श्रुतिर्यस्य तत्तुल्यश्रुति, तस्य भावस्तत्त्वम्, तस्मात्तुल्यश्रुतित्वात्। अयमाशयः—'कर्तुरीप्सिततमं कर्म' इति सूत्रतो यद्यपि न साध्यत्वं द्वितीयार्थं इति लभ्यते, तथापि 'तथा युक्त चानीप्सितम्' इति सूत्रात्तल्लाभः। यथा ईप्सिततमं साध्यरूपापन्नं सत् क्रियया युज्यते, तथा अनीप्सितमपि साध्यरूपेण क्रियायुक्तं कर्मसंज्ञं स्यात्। ईप्सितानीप्सितसाधारणं साध्यत्वमेव कर्मत्वम्, तत्र द्वितीयेत्युक्तं भवति। न चैव सति साध्यं कर्मेत्येतावतैव सिद्धावीप्सितानीप्सितयोः पृथगुपादानमनर्थकमिति वाच्यम्। एवं सति 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्य कर्मसंज्ञापवादेन 'वारणार्थानामीप्सितः' इत्यपादानत्वापत्तौ, 'पुष्पाणि स्पृहयति' इत्यत्र च पुष्पाणाम् 'स्पृहेरीप्सितः' इति सम्प्रदानत्वापत्तौ, तन्निवृत्तये प्रकृष्टेप्सितस्य कर्मसंज्ञाविधानाय 'कर्तुरीप्सिततमं कर्म' इत्यस्यावश्यकत्वे सति 'विषं भुङ्क्ते' 'ग्रामं गच्छंस्तृणं स्पृशति' इत्यादौ द्वेष्योपेक्ष्ययोरपि सङ्ग्रहार्थम् 'तथायुक्त चानीप्सितम्' इत्यस्यापि आवश्यकत्वात्। न च साध्यं कर्मेति पक्षेऽपि 'अक्षान्दीव्यति' इत्यत्र द्वितीयायाः साधनत्वे 'अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः' इत्यत्र चाधिकरणत्वे लक्षणाया आवश्यकत्वादनीप्सितेऽपि लक्षणा किं न स्यादिति वाच्यम्। तत्साधारणप्रवृत्तिनिमित्तस्य केनापि वक्तुमशक्यत्वेन तत्रागत्या लक्षणास्वीकारेऽपि सम्भवन्मात्रविषयानुगमस्य त्यक्तुमनुचितत्वात्। दृष्टश्च लोके साध्यत्वे द्वितीयायाः प्रयोगः 'कटं करोति' इत्यादौ। न ह्यत्र साधनत्वं द्वितीयार्थ इति शक्यते वक्तुम्, असिद्धत्वात्। न च बुद्धिस्थत्वेन साधनत्वसम्भवः। बुद्धिस्थत्वं हि बुद्धौ विषयत्वमात्रम्, न तु वस्तुसद्भावः। अतः कथ तन्मात्रेण सिद्धत्वनियतं साधनत्व सम्भवति। तथा वेदेऽपि "व्रीहीनवहन्ति" इत्यादौ वैतुष्यादिवि-

शिष्टत्वेन साध्ये व्रीह्यादौ द्वितीया प्रयुज्यते। ततश्च प्रयोगानुगृहीतव्याकरणानुसारेण साध्यत्वमेव द्वितीयार्थ इत्यध्यवस्यामः। यदि च द्वितीयायाः साधनत्वमर्थः स्यात्तर्हि 'परशुना च्छिनत्ति' इत्यत्र परशुशब्दाद्द्वितीया स्यात्, करणत्वे तृतीयाविधानं चानर्थकं स्यात्। न च साध्यत्वोपलक्षितसाधनत्वं द्वितीयार्थ इति नोक्तदोषः, परशो-स्तत्र सिद्धरूपत्वादिति वाच्यम्। लाघवेन साध्यत्वस्यैव द्वितीयावाच्यत्वोपपत्तेः।

ननु द्वितीयायाः साध्यत्वार्थकत्वेऽपि स्रुगादीनां शेषित्वप्रत्यायकाभावात्कथं संमार्गादीनां गुणकर्मत्वम्, गुणकर्मत्वस्य पारार्थ्यलक्षणशेषत्वनियतत्वात्। पारार्थ्यं परोद्देशप्रवृत्तकृतिव्याप्यत्वम्। तच्च समीहितपुरुषव्यापारगोचरीभूतेन येन समीहितं साध्यते तत्त्वम्। समीहितपुरुषव्यापारोद्देश्यसमीहितत्वं च शेषित्वम्। न चैतत्साध्य-त्वाभिधायिन्या द्वितीययोच्यत इति वक्तुं शक्यते। सत्यं न शेषित्वं द्वितीयायाः साक्षात्प्रतिपाद्यम्, किन्तु विधित एव तद्गम्यम्। तत्र द्वितीयायाः साहाय्यकमात्रम्। तच्च साध्यत्वाभिधायित्वेऽपि सम्भवति। प्रवर्तनात्मिका शब्दभावना हि विधिः। प्रवृत्ति-हेतुर्व्यापारः प्रवर्तना। तथा च न समीहितसाधनादन्यत्र चेतनः प्रवर्तयितुं शक्यत इति विधिः स्वस्य प्रवर्तनात्वसिद्ध्यर्थं स्वभाव्याया अर्थभावनायाः कर्तृव्यापारात्मि-कायाः समीहितभाव्यकत्वं गमयन्भावनाकरणत्वस्य समीहितोद्देशप्रवृत्तकर्तृव्यापार-गोचरत्वं गमयति। तत्र भाव्यं सामान्यात्मना भावनयावगतं तद्विशेषरूपेण तु स्रुगा-दिपदैरवगम्यत इति न तद्वैयर्थ्यम्। ततश्च समीहितत्वं साध्यत्वं चेति द्वयं शेषित्वबो-धेऽपेक्षितम्। तत्र द्वितीयया साध्यत्वं विधिबलाच्च समीहितत्वं गम्यत इति द्वितीया-सध्रीचीनविधितः शेषित्वबोधः सम्भवति।

ननु विधिना समीहितं बोध्यत इत्युक्तम्, स्रुगादीनां क्रतुसाधनत्वेन समीहि-तत्वस्य सिद्धत्वात्, स्वतश्च तेषामसमीहितत्वात्, स्रुगादिसमीहितमित्येवरूपेण बोधने कर्मपदरहितसमार्गविधेरसामर्थ्याच्चेति चेत्—नैष दोषः, यद्धि वस्तुतः समीहितं स्रुगादि तस्य समार्जनादिक्रियोद्देश्यत्वमेव विधिना बोध्यते। एवञ्च क्रतुसाधनत्वे-नेच्छाविषयस्यापि स्रुगादेरुद्देश्यत्वं विना परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणपारार्थ्यं संमार्गादेर्न सम्भवतीति तत्सिद्ध्यर्थं विधिगम्यं समीहितत्वमुद्देश्यत्वपर्यन्तमाद्रियते, न त्विच्छाविषयत्वमात्रमिति न दोषः। यत्र तु साध्यत्ववाचिद्वितीया नास्ति "यजेत स्वर्गकामः" इत्यादौ तत्र साध्यत्वमुद्देश्यत्वं च द्वयमपि विधित एवावगम्यत इति

ध्येयम्। 'बल्बजाञ्छिखण्डकान् कुरु' इत्यादौ च बल्बजादीनां शिखण्डकाद्याकारेण साध्यत्वान्न व्यभिचारः।

कथं तर्हि 'सक्तूञ्जुहोति' इत्यत्र द्वितीयानिर्वाह इत्याशङ्क्य निराकरोति—

**द्रव्योपदेश इति चेन्न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ ९ ॥**

सक्तुद्रव्यस्य होमं प्रति साधनत्वेन गुणभूतस्य द्वितीयया उपदेश कथमिति चेत्—तन्न; कुतः? तदर्थत्वात्। सक्तुद्रव्यस्य होमार्थत्वात् होम प्रति साधनत्वेन शेषतया भाव्यत्वाभावेन तस्य द्रव्यस्य तच्छेषित्वासम्भवात्। यद्धि विधिव्यापारं विनैव पुरुषस्य समीहित, तस्य विधीयमानसाधन प्रत्युद्देश्यत्वमात्रं विधिगम्यम्। न च सक्तुद्रव्यं प्रमाणान्तरेणाभिलषित येन विधित उद्देश्यत्वसिद्धिमाश्रित्य भाव्यतयान्वीयेत। नैतदस्ति, सक्तुद्रव्यस्य भूतोपयोगित्वेन प्रतिपाद्यतया वा भाव्युपयोगित्वेन क्रतुसाधनतया वा अभिलषितत्वाभावात्। अतो भाव्यत्वेनान्वयासम्भवेन साधनत्वेनैव सक्तुद्रव्यस्यान्वयो वाच्य। द्वितीया च लक्षणया तत्र निर्वाह्या, आरोपितसाध्यत्वविवक्षया वा। अत एव 'विवक्षात' कारकाणि भवन्ति' इत्याश्रित्य 'स्थाली पचति' 'परशुश्छिनत्ति' इत्यादि साधितं महाभाष्यादौ। स्रुगादेस्तु क्रतुसाधनरूपेणाभिलषितस्य विधीयमानसमार्ग प्रत्युद्देश्यत्वं विधिगम्यमवलम्ब्य संमार्गभावनायां समीहितभाव्याकाङ्क्षिण्यां भाव्यत्वेनान्वय उचितः। ननु स्रुगादेः साध्यत्वं न स्वरूपेण सम्भवति नाप्युपकारकत्वेन, अवहननादिजन्यवैतुष्यरूपोपकारवदिहोपकारानुपलब्धे' इत्यत आह—तस्य चेति। तस्य च-स्रुगादेः शेषभूतत्वात्-अदृष्टोपकारद्वारा साधकं समार्गं प्राप्तत्वात्। अदृष्टोपकारविशिष्टत्वेन स्रुचां संमार्गसाध्यत्वादिति यावत्। अदृष्टोपकारास्तित्वे दृष्टान्तयति—लोकवदिति। यथा लोके नागरिकाणां राजतदमात्यादीनां ग्राममभ्यागताना नीराजनरूपपर्यग्निकरणेनादृष्टोपकारः क्रियते तद्वत्। न च समार्गस्य गुणकर्मत्वे प्रधानगुणकर्मलक्षणस्य तत्राव्याप्त्यतिव्याप्ती स्यातामिति वाच्यम्। न हि 'यैर्द्रव्य न चिकीर्ष्यते' इत्यादिना सूत्रभागेन प्रधानगुणकर्मणोर्लक्षणे उच्येते अनपेक्षितार्थत्वप्रसङ्गात्। अपूर्वसद्भावासद्भावविषयविवेचनमेव हि तत्र क्रियते, दृष्टोपकारिष्वपूर्वं नास्ति तदन्यत्र त्वस्तीति तावन्मात्रस्यैव भावार्थाधिकरणापवादत्वेन प्रतिपिपादयिषितत्वात्। तथा च दृष्टोपकारि गुणकर्मापूर्वाना-

शिष्टत्वेन साध्ये व्रीह्यादौ द्वितीया प्रयुज्यते । ततश्च प्रयोगानुगृहीतव्याकरणानुसारेण साध्यत्वमेव द्वितीयार्थ इत्यध्यवस्यामः । यदि च द्वितीयायाः साधनत्वमर्थः स्यात्तर्हि 'परशुना छिनत्ति' इत्यत्र परशुशब्दाद्द्वितीया स्यात्; करणत्वे तृतीयाविधान चानर्थकं स्यात् । न च साध्यत्वोपलक्षितसाधनत्वं द्वितीयार्थ इति नोक्तदोष, परशोस्तत्र सिद्धरूपत्वादिति वाच्यम् । लाघवेन साध्यत्वस्यैव द्वितीयावाच्यत्वोपपत्तेः ।

ननु द्वितीयायाः साध्यत्वार्थकत्वेऽपि स्रुगादीनां शेषित्वप्रत्यायकाभावात्कथं संमार्गादीनां गुणकर्मत्वम्, गुणकर्मत्वस्य पारार्थ्यलक्षणशेषत्वनियतत्वात् । पारार्थ्यं परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । तच्च समीहितपुरुषव्यापारगोचरीभूतेन येन समीहितं साध्यते तत्त्वम् । समीहितपुरुषव्यापारोद्देश्यसमीहितत्वं च शेषित्वम् । न चैतत्साध्यत्वाभिधायिन्या द्वितीययोच्यत इति वक्तुं शक्यते । सत्यं न शेषित्व द्वितीयायाः साक्षात्प्रतिपाद्यम्, किन्तु विधित एव तद्गम्यम् । तत्र द्वितीयायाः साहायकमात्रम् । तच्च साध्यत्वाभिधायित्वेऽपि सम्भवति । प्रवर्तनात्मिका शब्दभावना हि विधि । प्रवृत्तिहेतुर्व्यापारः प्रवर्तना । तथा च न समीहितसाधनादन्यत्र चेतनः प्रवर्तयितुं शक्यत इति विधिः स्वस्य प्रवर्तनात्वसिद्ध्यर्थं स्वभाव्याया अर्थभावनायाः कर्तृव्यापारात्मिकायाः समीहितभाव्यकत्वं गमयन्भावनाकरणत्वस्य समीहितोद्देशप्रवृत्तकर्तृव्यापारगोचरत्वं गमयति । तत्र भाव्यं सामान्यात्मना भावनयावगतं तद्विशेषरूपेण तु स्रुगादिपदैरवगम्यत इति न तद्वैयर्थ्यम् । ततश्च समीहितत्वं साध्यत्व चेति द्वयं शेषित्वबोधेऽपेक्षितम् । तत्र द्वितीयया साध्यत्वं विधिबलाच्च समीहितत्वं गम्यत इति द्वितीयासध्रीचीनविधितः शेषित्वबोधः सम्भवति ।

ननु विधिना समीहित बोध्यत इत्युक्तम्, स्रुगादीना क्रतुसाधनत्वेन समीहितत्वस्य सिद्धत्वात्, स्वतश्च तेषामसमीहितत्वात्, स्रुगादिसमीहितमित्येवरूपेण बोधने कर्मपदरहितसमार्गविधेरसामर्थ्याच्चेति चेत्—नैष दोष, यद्धि वस्तुतः समीहितं स्रुगादि तस्य समार्जनादिक्रियोद्देश्यत्वमेव विधिना बोध्यते । एवञ्च क्रतुसाधनत्वेनेच्छाविषयस्यापि स्रुगादेरुद्देश्यत्व विना परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणपारार्थ्यं समार्गादेर्न सम्भवतीति तत्सिद्ध्यर्थं विधिगम्यं समीहितत्वमुद्देश्यत्वपर्यन्तमाद्रियते, न त्विच्छाविषयत्वमात्रमिति न दोष । यत्र तु साध्यत्ववाचिद्वितीया नास्ति "यजेत स्वर्गकाम" इत्यादौ तत्र साध्यत्वमुद्देश्यत्वं च द्वयमपि विधित एवावगम्यत इति

तन्मुखेन गुणिप्रकाशन एव तात्पर्यं दृष्टार्थत्वायाभ्युपेयम्। गुणसम्बन्धकीर्तनमात्रेण स्तुतित्वं चोपपद्यते। तुशब्दोऽनन्तरोक्तसम्मार्गादिवैषम्ये। सम्मार्गादि तावत्स्रुगादावपूर्वाधायकम्, स्तुतशस्त्रे तु देवतासु प्रकाशनरूपदृष्टसंस्काराधायके। तस्माद्गुणकर्मणी स्तोत्रशस्त्रे इति। अथवा स्तुतशस्त्रयोरिति विषयनिर्देशः। स्तुतं गुणगुणिसम्बन्धाभिधायकप्रगीतशब्दोच्चारणम्। अप्रगीततथाविधशब्दोच्चारण म्। स्तुतत्वेन शस्त्रत्वेन चानुगमाद्द्विवचनम्। "बहिष्पवमानेन स्तुवते" इत्यादिवाक्ये "आज्यं शसति" इत्यादिवाक्ये चेति यावत्। संस्कारो [1]दृष्टः प्रकाशनरूपः इन्द्रादिषु गम्यत इति व्याख्येयम्। देवताभिधानत्वादिति तु पूर्ववद्व्याख्येयम्।

युक्तं चैतत्—स्तौतिशंसत्योः शाब्दबोधप्रधानत्वे हि तत्र उत्पद्यमानस्य दृष्टसंस्कारस्येन्द्रादिदेवतास्वदर्शनेन पूर्वपक्षानुत्मेषः स्पष्ट एव। न च प्रकाशनमेव तत्र दृष्टसस्कार इति वाच्यम्। तस्य शाब्दबोधादनन्यत्वेन तत्र उत्पत्त्यनुपपत्ते। शाब्दबोधात्प्राकट्यापरनामधेयज्ञाततारूयदृष्टसंस्कारो देवतासु स्यादिति व्याख्यानन्तु क्लिष्टमेव, ज्ञानविषयतातिरिक्तज्ञाततायाः सर्वासमतत्वात्। किञ्च स्तौतिशंसत्योः प्रगीताप्रगीतमन्त्रसाध्यबोधपरत्व वदन्प्रष्टव्यः—शाब्दबोधः किं श्रोतृगतो विवक्षितः? प्रयोक्तृगतो वा? इति। नाद्य', 'जानाति' 'बुध्यते' इत्याद्याख्यातस्य धात्वर्थज्ञानाश्रय इव गुणवत्त्वबोधाश्रये श्रोतर्यपि 'स्तौति' 'शंसति' इति प्रयोगापत्तेः। न चेष्टापत्तिः, 'अयं राजान स्तौति, 'राजा च तत्स्तुत्या हृष्यति' इति स्तोतृहृष्यद्व्यक्तिभेदानुभवविरोधात्। न द्वितीयः, श्रोतृगतगुणविषयज्ञानस्य प्रयोक्तरि सत्त्वेऽपि श्रोतरि तदभावेन तस्य तत्कृतहर्षासिद्धेः, "अभि त्वा शूर नोनुमः" इत्यादिमन्त्राणां सम्बोधनविभक्त्या इन्द्रादिदेवतां प्रति गुणवत्त्वज्ञापनपराणा शाब्दमर्यादया प्रयोक्तरि शाब्दबोधजननाक्षमतया मन्त्राधिकरणे निरूपितत्वाच्च। 'वन्दिनो राजानं गद्यपद्यैः शुकवत्स्तुवन्ति' इति शाब्दबोधशून्यानामपि प्रयोक्तृणां स्तोतृत्वप्रसिद्धेश्च।

'स्वस्त्यस्तु सखि ते जिह्वे विद्यादातुरुमापतेः।
स्तवमुच्चतर ब्रूहि जयतामिव दुन्दुभि.'॥
'जिह्वा काकविचीररुद्रनृपते. स्तोत्राय सनह्यति'

इत्यादीना स्तुतेरुच्चारणप्रधानत्व एव सामञ्जस्याच्च। अत एवैतदधिकरणारम्भे 'गुणवचन स्तवन शसनं च' इति भाष्यम्, 'गुणगुणिसम्बन्धकीर्तनञ्च स्तुति.' इति

1. दृष्टप्रयोजनरूप. ख, ग, मु. पा.

धायकम्, अदृष्टोपकारि तु प्रधानकर्मापूर्वाधायकमिति तदर्थः पर्यवस्यतीति न दोषः। फलभावनाकरणयागादिसाधनद्रव्यगतदृष्टादृष्टान्यतरसंस्कारजनकं कर्म गुणकर्म, यथा अवघातादि समार्गादि च। फलभावनाकरणयागादौ द्रव्यनैरपेक्ष्येण साक्षाद्‌पूर्वाधायकं कर्म प्रधानकर्मेति तु तल्लक्षणे बोध्ये। तस्मात्संमार्गादि गुणकर्मेति सिद्धम्। प्रयोजनं पूर्वपक्षे स्रुग्भिः साधनैर्यस्य कस्यचित्समार्गः, 'वेदाग्रेण स्रुचः समार्ष्टि' इति तु संमार्गान्तरम्, सिद्धान्ते त्वेकमित्याद्यूह्यम्॥

इति पञ्चमं समार्गाधिकरणम्॥ ५॥

६

सन्ति ज्योतिष्टोमे स्तोत्राणि "बहिष्पवमानेन स्तुवते" "आज्यैः स्तुवते" "माध्यन्दिनेन पवमानेन स्तुवते" "पृष्ठैः स्तुवते" "आर्भवपवमानेन स्तुवते" "यज्ञायज्ञीयेन स्तुवते" इति। सन्ति च शस्त्राणि "आज्यं शंसति" "प्रउगं शसति" "मरुत्वतीय शसति" "निष्केवल्यं शसति" "वैश्वदेवं शंसति" "आग्निमारुतं शसति" इति होतुः पट् [illegible]णि। तथा मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानामेकैकस्य द्वे द्वे इति षट् शस्त्राणि। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्। अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्। अभिधानं शाब्दबोधः। वस्तुतस्तु गुणिनि गुणसम्बन्धाभिधायकप्रगीतमन्त्रोच्चारण स्तोत्रम्, अप्रगीततथाविधशब्दोच्चारणं [illegible]म्। तदेतानि स्तोत्रशस्त्राणि च किं स्तुत्यदेवताप्रकाशनरूपसंस्कारार्थानि गुणकर्माणि? उत अदृष्टार्थत्वात्प्रधानकर्माणि? इति संशय[1]। तत्र पूर्वपक्षयति—

**स्तुतश[illegible]योस्तु संस्कारो याज्यावद्देवताभिधानत्वात्॥१०॥**

स्तुतेति भावे क्तः। कर्तरि षष्ठी। स्तोत्रत्वेन शस्त्रत्वेन चानुगमाद्द्विवचनम्। शाब्दबोधविशेषात्मकस्तोत्रशस्त्रकर्तृकः प्राकट्यापरनामधेयज्ञाततात्मक प्रकाशनरूप. संस्कारः कर्मसमवेते इन्द्रादौ स्यात्। कुत? देवताभिधानत्वात्—"अभि त्वा शूर नोनुम" इत्यादिमन्त्राणामिन्द्रादिदेवतागुणवर्णनपराणामपि मुख्यतात्पर्यविषयतया तद्देवताभिधायित्वात्[2]। गुणप्रकाशकानामप्येषां गुणिप्रकाशन एव तात्पर्यादिति यावत्। तथा "अग्निर्मूर्धा दिव" इत्यादियाज्यासु मूर्धत्वादिगुणप्रकाशने सत्यपि न तत्र तात्पर्यम्, किन्तु गुणिप्रकाशन एव तात्पर्यम्, तद्वदिहापि गुणप्रकाशनमतन्त्रीकृत्य

1. सशये पूर्वपक्षयति ग, घ. 2. अभिधायकत्वात्. क, घ, मु. प.

तन्मुखेन गुणिप्रकाशन एव तात्पर्यं दृष्टार्थत्वायाभ्युपेयम्। गुणसम्बन्धकीर्तनमात्रेण स्तुतित्वं चोपपद्यते। तुशब्दोऽनन्तरोक्तसम्मार्गादिवैषम्ये। सम्मार्गादि तावत्स्त्रुगादावपूर्वाधायकम्, स्तुतशस्त्रे तु देवतासु प्रकाशनरूपदृष्टसंस्काराधायके। तस्माद्गुणकर्मणी स्तोत्रशस्त्रे इति। अथवा स्तुतशस्त्रयोरिति विषयनिर्देशः। स्तुतं गुणगुणिसम्बन्धाभिधायकप्रगीतशब्दोच्चारणम्। अप्रगीततथाविधशब्दोच्चारणम्। स्तुतत्वेन शस्त्रत्वेन चानुगमाद्द्विवचनम्। "बहिष्पवमानेन स्तुवते" इत्यादिवाक्ये "आज्यं शंसति" इत्यादिवाक्ये चेति यावत्। संस्कारो [1]दृष्ट. प्रकाशनरूपः इन्द्रादिषु गम्यत इति व्याख्येयम्। देवताभिधानत्वादिति तु पूर्ववद्व्याख्येयम्।

युक्तं चैतत्—स्तौतिशंसत्यो. शाब्दबोधप्रधानत्वे हि तत उत्पद्यमानस्य दृष्टसंस्कारस्येन्द्रादिदेवतास्वदर्शनेन पूर्वपक्षानुन्मेषः स्पष्ट एव। न च प्रकाशनमेव तत्र दृष्टसंस्कार इति वाच्यम्। तस्य शाब्दबोधादनन्यत्वेन तत उत्पत्त्यनुपपत्ते.। शाब्दबोधात्प्राकट्यापरनामधेयज्ञातताख्यदृष्टसंस्कारो देवतासु स्यादिति व्याख्यानन्तु क्लिष्टमेव, ज्ञानविषयतातिरिक्तज्ञाततायाः सर्वासमतत्वात्। किञ्च स्तौतिशंसत्योः प्रगीताप्रगीतमन्त्रसाध्यबोधपरत्व वदन्प्रष्टव्यः—शाब्दबोधः किं श्रोतृगतो विवक्षित. ? प्रयोक्तृगतो वा ? इति। नाद्यः, 'जानाति' 'बुध्यते' इत्याद्याख्यातस्य धात्वर्थज्ञानाश्रय इव गुणवत्त्वबोधाश्रये श्रोतर्यपि 'स्तौति' 'शंसति' इति प्रयोगापत्ते.। न चेष्टापत्ति', 'अयं राजानं स्तौति, 'राजा च तत्स्तुत्या हृष्यति' इति स्तोतृहृष्यद्व्यक्तिभेदानुभवविरोधात्। न द्वितीयः, श्रोतृगतगुणविषयज्ञानस्य प्रयोक्तरि सत्त्वेऽपि श्रोतरि तदभावेन तस्य तत्कृतहर्षासिद्धे', "अभि त्वा शूर नोनुम." इत्यादिमन्त्राणा सम्बोधनविभक्त्या इन्द्रादिदेवता प्रति गुणवत्त्वज्ञापनपराणा शाब्दमर्यादया प्रयोक्तरि शाब्दबोधजननाक्षमताया मन्त्राधिकरणे निरूपितत्वाच्च। 'वन्दिनो राजानं गद्यपद्यैः शुकवत्स्तुवन्ति' इति शाब्दबोधशून्यानामपि प्रयोक्तॄणां स्तोतृत्वप्रसिद्धेश्च।

'स्वस्त्यस्तु सखि ते जिह्वे विद्यादातुरुमापतेः।
स्तवमुच्चतर ब्रूहि जयतामिव दुन्दुभि.'॥
'जिह्वा काकतिवीररुद्रनृपतेः स्तोत्राय सनह्यति'

इत्यादीना स्तुतेरुच्चारणप्रधानत्व एव सामञ्जस्याच्च। अत एवैतदधिकरणारम्भे 'गुणवचनं स्तवन शंसनं च' इति भाष्यम्, 'गुणगुणिसम्बन्धकीर्तनञ्च स्तुतिः' इति

1. दृष्टप्रयोजनरूप . ख, ग, मु. पा.

वार्तिकम्, 'शब्दोच्चारणमात्रस्य स्तुतित्वान्यपदेशात्' इति तदनन्तरवार्तिकम्, 'अभिधानरहितशब्दोच्चारणायां स्तुतित्वं हीयते इत्यर्थ' इति न्यायसुधा च सङ्गच्छते[1]। अभिधानरहितशब्दोच्चारणस्य स्तुतित्वाभावोक्त्या अभिधानघटितशब्दोच्चारण स्तुतिरिति लभ्यते। न चैवमुच्चारणस्य स्तुतित्वेऽपि "कवतीषु स्तुवते" इति कथं कवतीनामृचां स्तुत्याधारता, उच्चारणस्य पुरुषनिष्ठत्वेनाक्षरनिष्ठत्वाभावादिति वाच्यम्। न हि केवल शब्दोच्चारणमेव स्तुतिः। किन्तु गुणगुणिसम्बन्धाभिधायकशब्दोच्चारणमेव सा। तत्र विशेषणीभूतगुणगुणिसम्बन्धाभिधानञ्च तत्प्रतीत्यनुकूलशब्दनिष्ठव्यापाररूपम्, 'शब्दोऽर्थमभिधत्ते' इति व्यवहारदर्शनात्। एवञ्च कवतीनामुच्चारणात्मकपुरुषव्यापाररूपविशेष्यांशाधारत्वाभावेऽपि विशेषणीभूतगुणगुणिसम्बन्धाभिधानरूपशब्दनिष्ठव्यापाराधारत्वमादाय सप्तमी युज्यते प्रयोक्तुम्। उक्तञ्च वार्तिके—'गुणगुणिसम्बन्धाभिधानक्रियाया अक्षरारूढत्वात्कवतीष्विति सप्तमी युज्यते' इति। विवृतञ्चेद न्यायसुधायाम्—'गुणवत्त्वज्ञापनं स्तुतिः। ज्ञापनञ्च ज्ञानहेतुर्व्यापार'। स चाक्षराणामभिधानाख्य., पुरुषस्याप्यभिधायकाक्षरोच्चारणाख्यः। तत्र पुव्यापारेऽक्षराणामकर्तृत्वेनाधारत्वायोगेऽप्यभिधानाख्यव्यापारे विशेषणेऽक्षराणा कर्तृत्वेनाधारत्वात्तन्मुखेन पुंव्यापारोच्चारणाधारत्व युक्तम्' इति। तस्माद्गुणगुणिसम्बन्धबोधफलकप्रगीतशब्दोच्चारणं स्तुति'। अप्रगीततदुच्चारणं शसनम्। शाब्दबोधश्च श्रोतृनिष्ठ एव। इन्द्रादयश्चात्र श्रोतार। तेषाञ्च विग्रहादिपञ्चकं जैमिन्यभिमतमेवेति षष्ठे वक्ष्यते। एवञ्च शस्त्रीयाणामृचामाद्यन्तवर्णसन्धानं सङ्गच्छते। शंसते· प्रयोक्तृगतशाब्दबोधप्रधानत्वे हि पूर्वपूर्वस्या ऋचोऽर्थावबोधे व्यापृतचित्तस्य प्रयोक्तुरुत्तरोत्तरस्या ऋचः सान्तत्यानुपपत्तिरित्यादि मन्त्राधिकरणेऽवोचाम। तदेवमेतादृशे स्तुतशस्त्रे देवताप्रकाशनरूपदृष्टार्थे गुणकर्मणी।

इति प्राप्ते, सिद्धान्तयति—

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ ११ ॥

देवतानाम–इन्द्रादिपदम् तद्घटितमन्त्रकस्तुतशस्त्रयोर्विधान देवतानामचोदना। सा अर्थेन इन्द्रादिप्रकाशनरूपप्रयोजनवशेन अपकृष्येत-महेन्द्रग्रहयज्यादिसन्निधौ स्थिता

1. सङ्गच्छन्ते. ग.

स्वस्थानाच्च्यावयित्वा यत्रेन्द्रस्तत्रोत्कृष्येत पूषानुमन्त्रणवत्। कुतः? अर्थस्य गुणभूतत्वात्-निरूप्यनिरूपकभावे षष्ठी। इन्द्रादिदेवतारूपमर्थं प्रति तत्प्रकाशकमन्त्रस्तुतशस्त्रयोः शेषभूतत्वात् गुणानाञ्च प्रधानानुसारित्वात्। प्रधानकर्मत्वे तु तयोः प्रयाजादिवददृष्टद्वारा क्रत्वर्थतया यागीयदेवतार्थत्वाभावान्नोत्कर्षः। अतो गुणकर्मत्वपक्षोऽनुपपन्न इति भावः॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## वशावद्वा गुणार्थं स्यात्॥ १२॥

वाशब्द उत्कर्षं निराचष्टे। न स्यादुत्कर्षः। कुतः? यतः "माहेन्द्रं ग्रहं गृह्णाति" इत्यादिष्विन्द्रादय एव ग्रहयजिदेवताः। तत्र महत्त्वादिगुणकीर्तनार्थमेव महदादिपदम्, यथा 'राजा' 'महाराजः' इति। न हि राज्ञो महाराजोऽतिरिच्यते[1]। अतोऽत्रैकदेशप्रकाशकः "अभि त्वा शूर नोनुमः" इत्यादिमन्त्रो नासमवेतार्थकः वशावत्। "सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत" इत्यजावशाशब्दचोदिते कर्मणि "छागाया वपाया मेदसोऽनुब्रूहि" इत्यादिनिगममन्त्रः समवेतो भवति, गुणस्याभेदकत्वात्, तद्वदिहापि। तथा चेन्द्रमहेन्द्रयोरभेदादिन्द्रप्रकाशनेऽपि महेन्द्रसंस्कारसम्भवान्नोत्कर्ष इति भावः॥

सिद्धान्ती परिहरति—

## न श्रुतिसमवायित्वात्[2]॥ १३॥

इन्द्रमहेन्द्रयोरभेदादनुत्कर्ष इति न, किन्तु स्यादेवोत्कर्षः। कुतः? श्रुतिसमवायित्वात्। श्रुत्या विधिगतदेवतापदेनैव देवताया निगमानुवृत्त्या कर्मान्वयित्वात्। देवता हि न यत्किञ्चिच्छब्देन निगमेषु निर्देश्या, किन्तु विधिवाक्यश्रुतशब्देनैवेति 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना' इत्यत्र दशमे वक्ष्यते। तन्न्यायेन (वा) वस्तुत इन्द्रो महेन्द्रादभिन्नश्चेदपि महेन्द्रो निगमेषु महेन्द्रशब्देनैव निर्देश्य इतीन्द्रस्तुत्या महेन्द्रसंस्कारासम्भवादुत्कर्षो भवेदित्यर्थः॥

विधिगतशब्देनैव निगमेषु देवतोपलक्षणीयेत्यत्र युक्त्यन्तरमाह—

---

1. अतिरिक्तः ग. 2. समवायत्वात्.

## व्यपदेशभेदाच्च ॥ १४ ॥

"बहु दुग्धीन्द्राय देवेभ्यो हवि" इति "बहु दुग्धि महेन्द्राय देवेभ्यो हविः" इति इन्द्रमहेन्द्रयोर्निर्देशभेदोऽस्ति। तत्र द्वेधा मन्त्रस्य तैत्तिरीयके पाठः। "इन्द्राय देवेभ्यो हव्यम्" इत्यच्छिद्रमन्त्रसमाम्नाये। "हविरिति वाच विसृजते" इति ब्राह्मणे। विधिगतशब्देनैव निगमेषु देवतोपलक्षणमिति नियमाभावे ऐन्द्रयागे माहेन्द्रयागे चोभयोर्मन्त्रयोर्विकल्प स्यात्। स चाष्टदोषदुष्टो नाश्रयितुमुचित[1]। उक्तनियमाश्रयणे तु मन्त्रयोस्तयोरैन्द्रमाहेन्द्रयागभेदेन व्यवस्थितत्वान्नायं दोषः। तस्मादिह स्यादुत्कर्षः॥

उक्तनियमानाश्रयणे बाधकान्तरमाह—

## गुणश्चानर्थकः स्यात् ॥ १५ ॥

विधिगतशब्दाच्छब्दान्तरेणापि निगमेषु देवतोपलक्षणे सति विधिवाक्ये गृह्यमाणो गुणः अनर्थक एव स्यात्, उक्तेऽनुक्ते च गुणे इन्द्रादेः कर्मसमवायसिद्धेः। उक्तनियमाश्रयणे तु विधिवाक्ये गुणग्रहणमर्थवत्॥

उक्तनियमानाश्रयणे बाधकान्तरमाह—

## तथा याज्यापुरोरुचोः ॥ १६ ॥

याज्यायाः पुरस्ताद्रोचते प्रकाशत इति पुरोरुक्पुरोनुवाक्या। पुरोरुक्च याज्या च याज्यापुरोरुचौ। अल्पाच्तरत्वाद्याज्याशब्दस्य पूर्वनिपातः। दर्शपूर्णमासयोः "एन्द्रसानसिं रयिम्" "प्रससाहिषे पुरुहूतशत्रून्" इत्यैन्द्रयाज्यानुवाक्ययोः "महाँ इन्द्रो य ओजसा" "भुवस्त्वमिन्द्र ब्रह्मणा महान्" इति माहेन्द्रयाज्यानुवाक्ययोश्च भेदेनाम्नानादपि तथा–विधिगतशब्देनैव निगमेषु देवतोपलक्षणम्। अन्यथा द्वयोरपि युगलयोरुभयत्र विकल्पः स्यात्। तस्माद्विधिगतशब्देनैव देवतोपलक्षणमिति नियम आस्थेय.।

अथ यदुक्तम् 'वशावद्वा गुणार्थं स्यात्' इति तत्राह—

---

1. युक्त:. ग, घ.

## वशायामर्थ　　याात् ॥ १७ ॥

वशायाम्—अजावशाशब्दचोदिते कर्मणि विधिगतवशाशब्दं परित्यज्य च्छागाशब्देन तदुपलक्षणं युक्तम् । कुतः ? अर्थसमवायात्—वशाशब्दार्थे विशेपरूपे च्छागाशब्दस्य चोदकप्राप्तस्य सामान्यरूपेण समवायात् सम्भवात् । वशाशब्देन निगमेषु हविरुपलक्षणे चोदकबाधप्रसङ्गात् । इह तु माहेन्द्रविधिगतमहत्त्वगुण-परित्यागे बाधक न किञ्चित्पश्यामः । तस्मान्माहेन्द्रमिन्द्रशब्दघटितमन्त्रकं स्तोत्रं शस्त्रञ्च प्रकाशयितुं न शक्नोतीत्युत्कर्षः स्यादेव । अतो न गुणकर्मत्वं स्तुतशस्त्रयोः, किन्तु प्रधानकर्मतैव ॥

स्यादेतत्; गुणकर्मतैव स्तुतशस्त्रयोरस्तु । न चैवं सति माहेन्द्रग्रहयजिसन्नि-धावाम्नातैन्द्रमन्त्रकस्तोत्रशस्त्रयोरुत्कर्ष. स्यादिति वाच्यम्, इष्टापत्तेः । न च क्रम-सन्निध्योर्बाध' शक्यः, ऐन्द्रमन्त्रस्य महेन्द्रप्रतिपादनासमर्थत्वेन यत्रेन्द्रस्तत्रोत्कर्षस्य सामर्थ्यरूपलिङ्गवशेन क्रमसन्निधी बाधित्वा आश्रयितु युक्तत्वात् । लिङ्गस्य क्रमस-न्निध्यपेक्षया बलवत्तायास्तृतीये श्रुतिलिङ्गादिसूत्रे निरूपयिष्यमाणत्वादिति पूर्वपक्षी प्रत्यवतिष्ठते—

## [1]यत्रेति वार्थवत्त्वात्स्यात् ॥ १८ ॥

वाशब्द. प्रत्यवस्थितौ । यत्रशब्देन तदादिवाक्य लक्ष्यते । यत्रेन्द्रस्तत्रैन्द्रमन्त्र-कस्तुतशस्त्रयोरुत्कर्षोऽस्त्विति ब्रूम । कुतः ? अर्थवत्त्वात्—ऐन्द्रमन्त्रकस्तुतशस्त्रयोर्मा-हेन्द्रग्रहयजेरन्यत्रैव यागीयदेवताप्रकाशनसमर्थत्वेन प्रयोजनवत्त्वात् । अत' स्तुतश-स्त्रयोर्गुणकर्मत्वमेव स्यात् ॥

नन्वैन्द्रादिमन्त्राणां येषामन्यत्र प्रयोजन सम्भाव्यते तेषामुत्कर्षः सम्भाव्य-ताम् । येषान्तु मन्त्राणा न प्रकृतकर्मसमवेतदेवताप्रकाशनमन्यत्र च नास्ति प्रयोजन तेषा कथमुत्कर्षसम्भव. ? अतस्तेषामदृष्टार्थत्वमेवानिच्छताप्यभ्युपेयम् । यथा आग्निमारुतशस्त्रे 'याम्या. शसति" "पित्र्याः शंसति" इत्यादिविहिता. "कुसुम्भक-सूक्त शसति" "अक्षसूक्त शसति" "मूषकसूक्त शसति" इत्यादिविहिताश्च,

---

1. यत्त्वेति.

तेषामदृष्टार्थत्वे च तन्न्यायेन इतरेषामपि सर्वेषां स्तुतशस्त्राणामदृष्टार्थत्वेन प्रधानकर्मतैवोचितेति सिद्धान्ती शङ्कते—

न त्व तेषु ॥ १९ ॥

तुशब्दोऽवधारणे । आग्निमारुतादावाम्नातेषु केषुचिद्याम्यादिमन्त्रेषु[2] प्रकृतकर्मणोऽन्यत्र नैवार्थवत्त्वमस्ति । अतः प्रकृतकर्मण्येवादृष्टार्थत्व वक्तव्यम् । तन्न्यायेन सर्वेषामपीत्यर्थः ॥

पूर्वपक्षी परिहरति—

[3]दृश्यते॥ २० ॥

याम्यादीनामुत्कृष्टानामन्यत्रार्थवत्त्वं दृश्यत इत्यर्थः । याम्यपित्र्यादिमन्त्राणां यमयज्ञमहापितृयज्ञादौ सम्भवत्यर्थवत्त्वम् । मण्डूकसूक्तस्य महाग्निचयनेऽर्थवत्त्वम्, तत्र "मण्डूकेन विकर्षति" इति विधानात् । अक्षसूक्तस्य राजसूयेऽर्थवत्त्वम्, तत्र "अक्षैर्दीव्यति" इति विधानात् । मूषकसूक्तस्य यूपैकादशिन्यामर्थवत्त्वम्, तत्र "आखुस्ते पशुरिति ब्रूयात्" इति विधानात् । कुसुम्भकसूक्तादीना तु वाच स्तोमे आश्विनशस्त्रे चार्थवत्त्वम्, "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचःस्तोमे पारिप्लव शसति" इति विधानात् । परिप्लव यथेष्टम् । "यस्याश्विने शस्यमाने सूर्यो नाविर्भवति, सर्वा अपि दाशतयीरनुब्रूयात्" इति विधानाच्च । ऋग्वेदशाकलसंहिता बाष्कलसंहिता च दशतयमित्युच्यते दशमण्डलात्मकत्वात् । तत्रत्या ऋचो दाशतय्य' । न चाश्विनशस्त्रे वाच'स्तोमे चोत्कृष्टानामप्यदृष्टार्थत्वमेव स्यादिति वाच्यम् । क्वचिददृष्टार्थत्वे सत्यपि सत्यां गतौ तथाश्रयितुमनुचितत्वात् । तस्मादैन्द्रादिमन्त्राणां प्रकृतमहेन्द्रादिमहद्देवताप्रकाशनेऽसामर्थ्येऽप्यन्यत्रोत्कर्षेणार्थप्रकाशनार्थत्वसम्भवाद्गुणकर्मणी स्तुतशस्त्रे इति प्राप्ते, सिद्धान्ती गुणकर्मत्वे मुख्यदोषं ब्रुवन् प्रधानकर्मत्व समर्थयते—

---

1. नेद दृश्यते क्वचिदन्यत्र 2. याम्यादिषु मन्त्रेषु ग, घ.

3. नेद दृश्यते क्वचिदन्यत्र.

## अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २१ ॥

अपि वेति पक्षव्यावृत्तौ। न गुणकर्मणी स्तुतशस्त्रे। कुतः? श्रुतिसयोगात्, न हि स्तौतिशंसती गुणाभिधानमात्रे वर्तेते, किन्तु प्राधान्येन गुणाभिधाने। अत एव 'देवदत्तो वक्रकेशान्तः' इति वक्तार स्तोतार व्यवहरन्ति लोके, न तु 'वक्रकेशान्त देवदत्तमानय' इति वक्तारमपि। अतो गुणिप्रकाशनार्थत्वे 'स्तौति' 'शंसति' इति श्रुतिबाधप्रसङ्गादिह दृष्टप्रयोजनमपि गुणिदेवताप्रकाशनं परित्यज्यादृष्टार्थत्वमेवाश्रयितु युक्तम्। एव च सति प्रकरणे-प्रकृत एव कर्मणि। कर्मणि ल्युट्। स्तौतिशंसती स्तुतिशसने क्रियोत्पत्ति-स्वकार्यमदृष्टोपत्ति विदध्याता-साधयेताम्, बाधकाभावात्। गुणिदेवताप्रकाशनार्थत्वे तु स्तौतिशसती यत्र गुणिनी देवता तत्रैव स्वकार्यमर्थप्रकाशनं साधयेताम्। ततश्च लिङ्गमनुगृह्येत। श्रुतिस्तु बाध्येत। क्रमसन्निधी च बाध्येयाताम्। अदृष्टार्थत्वे तु माहेन्द्रग्रहयजावपि ऐन्द्रमन्त्रकस्तुतशस्त्रयोः समावेशसम्भवान्न लिङ्गक्रमसन्निधीनामपि बाध। नापि श्रुते.। तस्मात्प्रधानकर्मणी एव स्तुतशस्त्रे ॥

तत्र युक्त्यन्तरमाह—

## शब्दपृथक्त्व ॥ २२ ॥

"द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः" इति सङ्ख्याशब्देन स्तोत्रशस्त्रकर्मणा पार्थक्यमवगम्यते। तच्चैतत्तददृष्टार्थत्वे घटेत। प्रकाशनार्थत्वे च प्रकाशनस्यैकत्वान्न सङ्ख्योपपद्येत[1]। विशेषाश्रयणे च[2] प्रत्यृच प्रतिपदमिति प्रसज्येत। अदृष्टार्थत्वे त्वपूर्वभेदमादाय सङ्ख्योपपत्तिः। अथवा अर्थप्रकाशनार्थत्वे उत्कर्षापत्त्या द्वादशशब्देनावगम्य पृथक्त्व भेदो नोपपद्येत इति व्याख्येयम् ॥

इतोऽपि स्तुतशस्त्रे प्रधानकर्मणी इत्याह—

## अनर्थकश्च तद्वचनम् ॥ २३ ॥

गुणकर्मत्वे अग्निष्टुति "आग्नेया ग्रहा भवन्ति" इति ग्रहचोदनयैवाग्नेयीनामृचा प्रकाशनार्थत्वस्य सिद्धतया "आग्नेयीषु स्तुवते" इति पुनर्वचनम् अनर्थक स्यात्। अदृष्टार्थत्वे त्वनाग्नेयीनामपि प्रकृतित प्राप्तौ तन्निवृत्त्यर्थं तदावश्यकम् ॥

1 उपपन्ना ग. 2. तु. ग.

इतोऽपि ते प्रधानकर्मणी इत्याह—

अन्यश्चार्थः प्रतीयते ॥ २४ ॥

"स्तुतमनुशंसति" इति "सम्बद्धे वै स्तोत्रशस्त्रे" इति च स्तुतशस्त्रयोः पौर्वापर्यसम्बन्धवचनादपि दृष्टादन्योऽर्थः प्रतीयते। प्रकाशनरूपदृष्टार्थत्वे तस्यैकत्वेनैकार्थत्वाद्विकल्पापत्तौ पौर्वापर्यसम्बन्धानुपपत्तेः ॥

इतोऽपि ते प्रधानकर्मणी इत्याह—

अभिधानश्च कर्मवत् ॥ २५ ॥

"अग्निहोत्रं जुहोति" "समिधो यजति" "तनूनपातं यजति" इत्यादिप्रधानकर्मणीव द्वितीयया ईप्सिततमत्वाभिधानं दृश्यते "पृष्ठान्युपयन्ति" "प्रउगं शंसति" "निष्केवल्यं शंसति" इत्यादि। तदेतददृष्टार्थत्व एवोपपद्यते। अदृष्टार्थत्वे हि सति क्रतुफलं प्रत्यदृष्टमात्रद्वारा[1] प्रत्यासन्नसाधनत्वादीप्सिततमत्वम्। दृष्टार्थत्वे तु द्रव्यदेवतादिप्रणाडिकया कर्मफलं प्रति व्यवहितसाधनत्वान्नेप्सिततमत्वम्। अतोऽपि प्रधानकर्मैव ॥

इतोऽपि स्तुतशस्त्रे प्रधानकर्मणी इत्याह—

फलनिर्वृत्तिश्च[2] ॥२६॥

"स्तुतस्य स्तुतमसि" "शस्त्रस्य शस्त्रमसि" इति मन्त्रयोः "इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम्, सा मे सत्याशीर्देवेषु भूयाद्ब्रह्मवर्चसं मा गम्यात्" इति स्तुतशस्त्रे प्रति फलनिष्पत्तिः प्रार्थ्यते। तदिदं स्तुतशस्त्रयोः प्रधानकर्मत्वे घटते। देवताप्रकाशनार्थत्वे तु देवतां प्रत्येव फलं प्रार्थ्येत, 'न स्वामिनि स्थिते कश्चिद्दासान्प्रार्थयते फलम्' इति न्यायात्। तस्मात्प्रधानकर्मणी स्तुतशस्त्रेऽदृष्टार्थे। प्रयोजनं पूर्वपक्षे उत्कर्षः, सिद्धान्ते त्वनुत्कर्ष इति स्पष्टमेव। प्रयोजनान्तरमपि दशमस्य चतुर्थे 'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्' इत्यत्र वक्ष्यते ॥

इति षष्ठं स्तुतशस्त्राधिकरणम् ॥ ६ ॥

---

1. अदृष्टमात्रेण ग   2. निर्वृत्तेश्च.

७

'तानि द्वैध गुणप्रधानभूतानि' इत्याख्यातानां द्वैविध्यमुक्तम्। तत्प्रसङ्गात्तृतीयमपि प्रकारान्तरमनुवादकत्वरूप केषाञ्चिदाख्यातानां निरूपयितुमिदमारभ्यते[1]। सन्ति कानिचिदाख्यातानि मन्त्रब्राह्मणगतानि यच्छब्दमध्यमोत्तमपुरुषयदिशब्दादियुक्तानि। "देवांश्च याभिर्यजते ददाति च, ज्योगित्ताभिः सचते गोपति सह" इति काम्यपशुयाज्याकाण्डे गोदेवत्यपश्वर्थतया पठितो मन्त्रः। याभिर्गोभिर्देवान्यजति याश्च ददाति ताभिर्गोभि' गोपति यजमान ज्योक् चिर सचत इत् समवैत्येव इत्यर्थः। "अग्नीदग्नीन्विहर" इति मन्त्रो ज्योतिष्टोमे प्रैषात्मक। "बर्हिर्देवसदनं दामि" इति दर्शपूर्णमासयोर्बर्हिर्लवनमन्त्र.। तत्रैव "अग्नये जुष्टं निर्वपामि" इति निर्वापमन्त्र। सन्ति च "यस्योभय हविरार्तिमार्च्छेति ऐन्द्रं पञ्चशरावमोदन निर्वपेत्" "यद्याग्रयणेनानिष्ट्वा नवान्न प्राश्नीयाद्वैश्वानरं द्वादशकपाल निर्वपेत्" इत्यादिवाक्यगतानि। आख्यातान्तरैकवाक्यतामुपगतानि सर्वाणीमानि विधायकान्यनुवादकानि वेति संशये[2], पूर्वपक्षयति—

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्[3] ॥ २७ ॥**

मन्त्रग्रहणमुपलक्षणम्। "यजेत स्वर्गकाम'" इत्यादिविधौ "देवांश्च याभिः" इत्यादिमन्त्रे "यस्योभयम्" इत्यादिब्राह्मणवाक्ये च श्रुतानामाख्यातानाम् ऐकार्थ्यं विधानार्थत्वमेव, न तु केषाञ्चिद्विधायकत्वं केषाञ्चिदनुवादकत्वमिति। कुतः? ऐकशब्द्यात् "सोमेन यजेत" इत्यादौ "देवांश्च याभि." इत्यादौ च एक एवाख्यातशब्दः प्रत्यभिज्ञायते। तत्र क्वचिद्विधायक' क्वचिदनुवादक इति वैरूप्याश्रयणे प्रमाणं न किञ्चित्पश्याम। न च प्रकृतयागाभेदप्रत्यभिज्ञानात्कथं यागान्तरविधिरिति वाच्यम्। सत्यपि प्रकृतकर्मणि शब्दान्तराभ्यासादिभि' कर्मान्तरत्वावगमसम्भवात्। तस्माद्विधायकान्येवञ्जातीयकान्याख्यातानि॥

अथ सिद्धान्तयति—

**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ २८ ॥**

अपि वेति पूर्वपक्षव्यावृत्तौ। मन्त्र –मन्त्रादिगतः आख्यातशब्दः न विधायकः, किन्त्वभिधानवाची कर्मणि ल्युट्। विधायकाख्यातशब्दाभिहितस्य वाचकः अनुवा-

1. अयमारम्भ ग. 2. संशय, तत्र, ग 3 एकशब्दात्.

दकः स्यात्। कुतः ? प्रयोगसामर्थ्यात्—प्रयोगमध्ये प्रयोक्तृपुरुषस्यान्यस्य वा अनुष्ठेयार्थे बोधनीये 'देवाश्च याभि" इत्यादिमन्त्राणाम् "यस्योभयम्" इत्यादिब्राह्मणवाक्यानाञ्च सामर्थ्यात् विधौ चासामर्थ्यात्। तथाहि—"देवाश्च याभिर्यजते" इति मन्त्रे तावद्यच्छब्देन गोयागस्य गोदानस्य च सिद्धत्वावगमेन विधेयत्वानुपपत्त्या विधिशक्तिप्रतिबन्ध स्पष्ट एव। एवम् "यस्योभयम्" इत्यादिब्राह्मणवाक्येष्वपि। अपर्यवसन्नत्वाच्च तत्र विधिशक्तिः प्रतिबध्यते। न हि "देवाश्च याभिर्यजते" इति पर्यवसन्न वाक्यम्, "ज्योगित्ताभि सचते" इत्यनेन साकाङ्क्षत्वात्। अत एवञ्जातीयका मन्त्राः प्रयोगमध्य एव प्रयोक्तृपुरुषस्यानुष्ठेयार्थस्मरणाय[1] प्रभवेयु, न तु विधानाय। "अग्नीदग्नीन्विहर" "बर्हिस्तृणाहि" इत्यादिमन्त्रास्तु प्रयोगमध्ये प्रयोक्तृपुरुषेण पुरुषान्तरे स्मारयितव्ये समर्था न तु विधाने, आमन्त्रणविभक्तेरभिमुखार्थप्रत्यायकत्वेन सर्वपुरुषसाधारणविधिप्रत्ययविरोधित्वात्। अनेनैव न्यायेन उत्तमपुरुषस्थलेऽपि विधिशक्तिप्रतिबन्धो द्रष्टव्य, आत्मनि प्रेरणासम्भवाच्च। "यदि नवाज्ञ प्राश्नीयात्" इत्यादिब्राह्मणवाक्यानामपि यदिशब्देन विधिशक्तिप्रतिबन्धाद्वैश्वानरेष्ट्यादिप्रयोगे निमित्तोपदर्शने सामर्थ्यम्, न तु विधाने। यत्र च विधिशक्तिप्रतिबन्धक यच्छब्दादिक नास्ति, तत्रैवाख्यातस्य शब्दान्तराभ्यासादिभिर्भेदकता। यच्छब्दादीना विधिशक्तिप्रतिबन्धत्वञ्च मानान्तरप्राप्तार्थत्व एव। आप्राप्तार्थत्वे तु न तेषां विधिशक्तिप्रतिबन्धकता। अन्यथा यदाग्नेयादिवाक्येषु का गति। उक्तञ्च न्यायसुधायाम्—

सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासम्भवाद्विधौ ।
आत्मनि प्रेरणाभावान्निमित्तत्वाभिधानत ॥
विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम् ।
प्राप्त्ययोगे तु तद्बाधात्क्वचित्स्यादविहन्तृता ॥ इति ।

तद्बाधात्—तस्य यच्छब्दादिचतुष्टयस्य स्वार्थत्यागादित्यर्थ । इत्यास्ता तावत् ॥

इति सप्तम विधिमन्त्राधिकरणम् ॥

---

1 स्मरणार्थं. ग.

८

'विधिमन्त्रयोः' इति पूर्वाधिकरणे उपलक्षणतया गृहीतमन्त्रप्रसङ्गात्तल्लक्षणमभिधत्ते—

**तच्चोदकेषु मन्त्राख्या ॥ २९ ॥**

'अभिधानवाची स्यात्' इति पूर्वसूत्रोपात्तमभिधानं तच्छब्दः परामृशति। तस्य अभिधानस्य अनुष्ठेयार्थप्रकाशनस्य चोदकेषु प्रयोजकेषु वाक्येषु मन्त्रशब्दो वर्तते। तथा चानुष्ठेयार्थस्मारकवाक्यत्वं मन्त्रलक्षणमिति पर्यवस्यति। इदञ्च लक्षणमदृष्टार्थजपादिमन्त्रेष्वव्याप्तम्। "वसन्ताय कपिञ्जलानालभते" इत्यादीनामप्राप्तार्थकतया विधायकत्वेनानुष्ठेयार्थस्मारकत्वाभावात्तेषु चाव्याप्तम्। अत प्रायिकमिदं लक्षणमिति प्राञ्च।

वस्तुतस्तु विधिमन्त्रयोरित्यत्रोपात्तं विधिं तच्छब्द परामृशति। सः "यजेत स्वर्गकाम" इत्यादिप्रधानविधिः चोदक प्रयोगविधि.[1] येषां तानि तच्चोदकानि वाक्यानि प्रयोगविधिगृहीतानि, तेषु मन्त्रशब्दो वर्तत इति व्याख्येयम्। प्रधानविधिरेव ह्यङ्गप्रयोगस्य विधायक इत्येकादशस्य द्वितीये 'अङ्गानि तु प्रधानत्वात्प्रधानेनोपदिश्येरन्' इत्यत्र वक्ष्यते। तथा च कर्माङ्गवाक्यत्व मन्त्रलक्षणमिति पर्यवस्यति। न च कृत्स्नस्य वेदस्याध्ययनरूपकर्मार्थत्वान्मन्त्रत्वापत्तिरिति वाच्यम्। अध्ययनविधिर्हि द्वेधा-अनारभ्यविधिर्ब्रह्मयज्ञविधिश्चेति। तत्राद्ये स्वाध्यायस्य प्राप्तत्वेन तदङ्गत्वाभावान्नातिव्याप्ति। द्वितीये तु ब्रह्मयज्ञाध्ययनविधौ स्वाध्यायविधिसिद्धाध्ययनतो गृहीतस्य स्वाध्यायस्य पठनेनार्थवादिक पय कुल्यादिकं फल भावयेदित्यर्थ.। तत्र स्वाध्यायस्य [2]पय कुल्यादिफलार्थतया विधावपि न तदादाय कृत्स्नस्य वेदस्य मन्त्रत्वापत्ति., प्रयोगकालीनोच्चारणद्वारा कर्माङ्गत्वस्य विवक्षितत्वात्। न चैवमपि "ईशा वास्यमिदं सर्वम्" इत्याद्यौपनिषदमन्त्राणां कर्माङ्गत्वाभावादव्याप्तिरिति वाच्यम्। एवञ्जातीयकानामदृष्टविनियोगानामपि वाच स्तोमादौ विनियोगसत्त्वेन कर्माङ्गत्वस्य सत्त्वात्। वाचःस्तोमाङ्गशब्दत्वं वा मन्त्रत्वम्, तत्र "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाच'स्तोमे पारिप्लव शंसति" इत्यादिविधानात्। एतेन

1. प्रयोगविधायकः क, घ, ङ, मु पा　　2 अक्षरग्रहणरूपाध्ययनकर्मार्थत्वेऽपि क, ग, मु पा.

कर्माङ्गशब्दत्वस्य मन्त्रलक्षणत्वे "उशन्ह वै वाजश्रवश सर्ववेदसं ददौ" इति नाचिकेतादिब्राह्मणस्यापि मन्त्रत्वापत्तिः, 'नाचिकेतमुपाख्यानम्' इत्युपक्रम्य 'प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते' इति श्राद्धे तदभिश्रावणादिविधानादिति निरस्तम्। तस्य वाचःस्तोमकर्माङ्गत्वाभावात्, ऋग्यजुःसाम्नामेव सर्वेषां तत्र विनियुक्तत्वात्। न चैवमपि दर्शपूर्णमासादिप्रयोगदशायां वाचःस्तोमाङ्गत्वाभावान्मन्त्रत्वं न स्यादिति वाच्यम्। वाचःस्तोमाङ्गशब्दत्वावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात्। तदवच्छेदकधर्मश्च ऋक्त्व यजुष्ट्वं सामत्वञ्च, ऋगादीनां वाचःस्तोमे ऋक्त्वादिधर्मपुरस्कारेणैव विधानात्। तेषां च वाचःस्तोमाङ्गतयानुगमः। एतेन ऋग्यजुःसामान्यतमत्वं मन्त्रत्वमिति निरस्तम्, अन्यतमत्वस्यान्यान्यत्वरूपत्वेन गुरुत्वात्॥

परमार्थतस्तु—ऋग्यजुःसामान्यतमत्वमेव मन्त्रत्वम्। 'तच्चोदकेषु' इति सूत्रन्तु वाचःस्तोमकर्माङ्गत्वरूपानुगमकधर्मप्रतिपादनमुखेन तत्परम्। ऋग्यजुःसामान्यतमत्वस्यैव मन्त्रलक्षणतया वेदतोऽवगमात्। अस्ति ह्यृगेषा "अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रैविदा विदुः, ऋचः सामानि यजूंषि, सा हि श्रीरमृता सताम्" इति। एषा ऋगाधाने आवसथ्याग्नेरुपस्थाने विनियुक्ता। 'अहे-अहिंसक, बुध्निय—बुध्नं हृदयम् तत्र भव, सतां हृद्गत आवसथ्याग्ने, मे-मम, मन्त्रं गोपाय—रक्ष, य-मन्त्रम्, ऋषयः—मन्त्रदृशः, त्रैविदाः—त्रीन्वेदान्विदन्तीति त्रिविदः, त एव त्रैविदाः, स्वार्थेऽण्, ऋक्सामयजुरात्मतया विदुः—ज्ञातवन्तः, तं गोपायेत्यन्वयः। सा हि—त्रयी, सताम् अमृता—फलतः अनश्वरा, श्रीः श्रयणीया' इति वेदभाष्यम्। तथा च ऋक्सामयजुरन्यतमत्वं मन्त्रत्वमिति स्थितम्। मन्त्रलक्षणप्रयोजनम् 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादौ लघूपायेन लक्ष्यावगम एव॥

इत्यष्टमं मन्त्रलक्षणाधिकरणम्॥ ८॥

९

मन्त्रब्राह्मणात्मकवेदे मन्त्रभागस्य लक्षणमुक्त्वा तत्प्रसङ्गाद् ब्राह्मणभागस्य लक्षणमाह—

**शेषे ब्राह्मणशब्दः॥ ३०॥**

मन्त्रभागावशिष्टवेदभागे ब्राह्मणशब्दो वाचकतया वर्तत इत्यर्थः। विधिपरो वेदभागो ब्राह्मणम्। अर्थवादानामपि विध्येकवाक्यत्वेन तत्रैवान्तर्भावः। 'ब्राह्मणा-

वशिष्टवेदभागो मन्त्रः' इति याज्ञिकाः यदाहुरापस्तम्बाचार्याः—'मन्त्रब्राह्मणयोर्वेद-नामधेयम्' 'कर्मचोदना ब्राह्मणानि' 'ब्राह्मणशेषोऽर्थवादः' 'निन्दा प्रशंसा परकृतिः पुराकल्पश्च' 'अतोऽन्ये मन्त्राः' इति। लक्षणप्रयोजनन्तु "एतद्‌ब्राह्मणान्येव पञ्च हवींषि" "एतदेव सावित्रे ब्राह्मणम्, अथो नाचिकेते" इत्यादौ लघूपायेन लक्ष्यावगम ॥

इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥ ९ ॥

१०

कर्माङ्गशब्दत्वेनानुगतीकृतमृग्यजुःसामान्यतमत्वं मन्त्रलक्षणमुक्तम्। तत्राक्षिप्य समाधातुमिदमारभ्यते। अस्ति दर्शपूर्णमासयोर्होतुर्निगदः। "अग्ने महाँ असि ब्राह्मण भारत, असावसौ" इति। तत्र 'असावसौ' इति स्थाने 'भार्गवच्यावनाप्रवानौर्वजामदग्न्य' इत्यादि प्रक्षिप्यते। सोऽयं प्रवर [1]इत्युच्यते। अनेन हि यजमानगोत्रजत्वेन अग्नि देवतावाहने प्रक्रियते। तथा तत्रैव "अग्नये जुष्टं निर्वपामि" इति मन्त्रे 'अग्नये' इत्यंतत्सौर्येष्टौ 'सूर्याय' इत्यूह्यते। तथा तत्रैव "असौ मानुषः" इति होतृवरणमन्त्रे 'असौ' इति स्थाने होतुर्नाम प्रक्षिप्यते। तदेतेषां प्रवरोहनामधेयानां वेदे प्रत्यक्षमनाम्नातानामपि मन्त्रमध्यपतितत्वेन मन्त्रेण सहैकार्थप्रतिपादकतया मन्त्रकार्यापूर्वीयदेवताप्रकाशकारितया च मन्त्रत्वमवश्यमास्थेयमित्याशङ्क्य निराकरोति—

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्[2] ॥ ३१ ॥**

वेदे प्रत्यक्षमनाम्नातेषु प्रवरादिष्वमन्त्रत्व स्यात्। कुत. ? हि यस्मात्कारणाद्वेदे प्रत्यक्षमाम्नातेष्वेव वाक्येषु मन्त्रब्राह्मणविभाग क्रियते। प्रवरादयस्तु 'असौ' इति परोक्षेण निर्दिष्टा, न तु प्रत्यक्षेणेति न मन्त्रत्व तेषाम्। मन्त्रैकवाक्यत्वन्तु न मन्त्रत्वप्रयोजकम्, "इषे त्वा" इत्यादावध्याह्रियमाणे 'छिनद्मि' इत्यादौ व्यभिचारात्। नापि मन्त्रकार्यकरत्व तत्प्रयोजकम्, पृष्ठ्यषडहे रथघोषादौ व्यभिचारात्, "असर्ज्यसर्जि" इत्यादिमन्त्रकार्ये स्तोत्रोपाकरणे रथघोषादेस्तत्र विधानात्। यत्तु 'असौ मानुष' 'आशास्तेऽयं यजमानोऽसौ' इत्यादावद शब्दस्य तत्तन्नामाम्नानपर्यव-

1. इत्युच्यत इति नास्ति ग.    2. स्यादिति क्वचिन्नास्ति.

कर्माङ्गशब्दत्वस्य मन्त्रलक्षणत्वे "उशन्ह वै वाजश्रवश सर्ववेदसं ददौ" इति नाचिकेतादिब्राह्मणस्यापि मन्त्रत्वापत्तिः, 'नाचिकेतमुपाख्यानम्' इत्युपक्रम्य 'प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते' इति श्राद्धे तदभिश्रावणादिविधानादिति निरस्तम्। तस्य वाचःस्तोमकर्माङ्गत्वाभावात्, ऋग्यजु साम्नामेव सर्वेषां तत्र विनियुक्तत्वात्। न चैवमपि दर्शपूर्णमासादिप्रयोगदशायां वाचःस्तोमाङ्गत्वाभावान्मन्त्रत्वं न स्यादिति वाच्यम्। वाच स्तोमाङ्गशब्दत्वावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात्। तदवच्छेदकधर्मश्च ऋक्त्व यजुष्ट्वं सामत्वञ्च, ऋगादीनां वाच.स्तोमे ऋक्त्वादिधर्मपुरस्कारेणैव विधानात्। तेषां च वाचःस्तोमाङ्गतयानुगमः। एतेन ऋग्यजुःसामान्यतमत्वं मन्त्रत्वमिति निरस्तम्, अन्यतमत्वस्यान्यान्यत्वरूपत्वेन गुरुत्वात्॥

परमार्थतस्तु–ऋग्यजुःसामान्यतमत्वमेव मन्त्रत्वम्। 'तच्चोदकेषु' इति सूत्रन्तु वाचःस्तोमकर्माङ्गत्वरूपानुगमकधर्मप्रतिपादनमुखेन तत्परम्। ऋग्यजु'सामान्यतमत्वस्यैव मन्त्रलक्षणतया वेदतोऽवगमात्। अस्ति ह्यृगेषा "अहे बुध्निय मन्त्र मे गोपाय, यमृषयस्त्रैविदा विदु, ऋचः सामानि यजूषि, सा हि श्रीरमृता सताम्" इति। एषा ऋगाधाने आवसथ्याग्नेरुपस्थाने विनियुक्ता। 'अहे-अहिंसक, बुध्निय— बुध्नं हृदयम् तत्र भव, सतां हृद्गत आवसथ्याग्ने, मे-मम, मन्त्र गोपाय-रक्ष, य–मन्त्रम्, ऋषयः–मन्त्रदृश', त्रैविदा –त्रीन्वेदान्विदन्तीति त्रिविदः, त एव त्रैविदा, स्वार्थेऽण्, ऋक्सामयजुरात्मतया विदु –ज्ञातवन्तः, तं गोपायेत्यन्वयः। सा हि–त्रयी, सताम् अमृता—फलत अनश्वरा, श्री. श्रयणीया' इति वेदभाष्यम्। तथा च ऋक्सामयजुरन्यतमत्वं मन्त्रत्वमिति स्थितम्। मन्त्रलक्षणप्रयोजनम् 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादौ लघूपायेन लक्ष्यावगम एव॥

इत्यष्टम मन्त्रलक्षणाधिकरणम्॥ ८॥

९

मन्त्रब्राह्मणात्मकवेदे मन्त्रभागस्य लक्षणमुक्त्वा तत्प्रसङ्गाद् ब्राह्मणभागस्य लक्षणमाह—

**शेषे ब्राह्मणशब्दः॥ ३०॥**

मन्त्रभागावशिष्टवेदभागे ब्राह्मणशब्दो वाचकतया वर्तत इत्यर्थ.। विधिपरो वेदभागो ब्राह्मणम्। अर्थवादानामपि विध्येकवाक्यत्वेन तत्रैवान्तर्भाव। 'ब्राह्मणा-

वशिष्टवेदभागो मन्त्रः' इति याज्ञिकाः यदाहुरापस्तम्बाचार्याः—'मन्त्रब्राह्मणयोर्वेद-नामधेयम्' 'कर्मचोदना ब्राह्मणानि' 'ब्राह्मणशेषोऽर्थवादः' 'निन्दा प्रशंसा परकृतिः पुराकल्पश्च' 'अतोऽन्ये मन्त्राः' इति। लक्षणप्रयोजनन्तु "एतद्ब्राह्मणान्येव पञ्च हवींषि" "एतदेव साचित्रे ब्राह्मणम्, अथो नाचिकेते" इत्यादौ लघूपायेन लक्ष्यावगम ॥

इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥ ९ ॥

१०

कर्माङ्गशब्दत्वेनानुगतीकृतमृग्यजुःसामान्यतमत्वं मन्त्रलक्षणमुक्तम्। तत्राक्षिप्य समाधातुमिदमारभ्यते। अस्ति दर्शपूर्णमासयोर्होतुर्निगदः। "अग्ने महाँ असि ब्राह्मण भारत, असावसौ" इति। तत्र 'असावसौ' इति स्थाने 'भार्गवच्यावनाप्रवानौर्वजामदग्न्य' इत्यादि प्रक्षिप्यते। सोऽयं प्रवर [1] इत्युच्यते। अनेन हि यजमानगोत्रजत्वेन अग्नि देवतावाहने प्रक्रियते। तथा तत्रैव "अग्नये जुष्टं निर्वपामि" इति मन्त्रे 'अग्नये' इत्यंतत्सौर्येष्टौ 'सूर्याय' इत्यूह्यते। तथा तत्रैव "असौ मानुषः" इति होतृवरणमन्त्रे 'असौ' इति स्थाने होतुर्नाम प्रक्षिप्यते। तदेतेषां प्रवरोहनामधेयानां वेदे प्रत्यक्षमनाम्नातानामपि मन्त्रमध्यपतितत्वेन मन्त्रेण सहैकार्थप्रतिपादकतया मन्त्रकार्यापूर्वीयदेवताप्रकाशकारितया च मन्त्रत्वमवश्यमास्थेयमित्याशङ्क्य निराकरोति—

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्[2] ॥ ३१ ॥**

वेदे प्रत्यक्षमनाम्नातेषु प्रवरादिष्वमन्त्रत्व स्यात्। कुतः ? हि यस्मात्कारणाद्वेदे प्रत्यक्षमाम्नातेष्वेव वाक्येषु मन्त्रब्राह्मणविभाग क्रियते। प्रवरादयस्तु 'असौ' इति परोक्षेण निर्दिष्टा, न तु प्रत्यक्षेणेति न मन्त्रत्वं तेषाम्। मन्त्रैकवाक्यत्वन्तु न मन्त्रत्वप्रयोजकम्, "इषे त्वा" इत्यादावध्याह्रियमाणे 'छिनद्मि' इत्यादौ व्यभिचारात्। नापि मन्त्रकार्यकरत्वं तत्प्रयोजकम्, पृष्ठ्यषडहे रथघोषादौ व्यभिचारात्, "असर्ज्यसर्जि" इत्यादिमन्त्रकार्ये स्तोत्रोपाकरणे रथघोषादेस्तत्र विधानात्। यत्तु 'असौ मानुष' 'आशास्तेऽयं यजमानोऽसौ' इत्यादावद शब्दस्य तत्तन्नामाम्नानपर्यव-

1. इत्युच्यत इति नास्ति ग  2. स्यादिति क्वचिन्नास्ति.

सिततया मन्त्रत्वमेवञ्जातीयकानामिति कृत्वा सुब्रह्मण्यानिगदादावदःशब्दरहिते "यजमानस्य तत्पूर्वेषामपरेषाञ्च नाम गृह्णाति" इति विध्यन्तरबलान्निक्षिप्यमाणं नामधेयमेवोदाहरणमिति प्राञ्च । तदयुक्तम्, प्रत्यक्षाम्नानस्यैव मन्त्रत्वप्रयोजकत्वेन 'असौ' इति परोक्षनिर्दिष्टानां नाम्नामपि मन्त्रत्वाभावस्यैव युक्तत्वात्, अन्यथा प्रवरस्य 'अमुवत्' इति अदःशब्दनिर्दिष्टत्वेन मन्त्रत्वापत्तेः 'यजमानस्य तत्पूर्वेषामपरेषां च नाम गृह्णाति' इतिविधौ नामपदेन यजमानादिनाम्नामपि निर्दिष्टतया मन्त्रत्वापत्तेश्चेति दिक्। प्रयोजनं प्रवरोहनामधेयेषु 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति मन्त्रेषु विहितमैकश्रुत्यं मन्त्रभ्रेषप्रायश्चित्तञ्च न भवति ॥

इति दशमं प्रवराद्यमन्त्रताधिकरणम् ॥ १० ॥

११

'ऋचो यजूंषि सामानि मन्त्राः' इत्युक्तम्। तत्र ऋग्लक्षणमाह—

**[1]तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३२ ॥**

तेषा—मन्त्राणा मध्ये यत्र—यस्मिन् "अग्निमीळे पुरोहितम्" इत्यादिमन्त्रे पादव्यवस्था—अक्षरेयत्ताविशेषः पादः 'अष्टाक्षरा गायत्री' 'दशाक्षरा विराट्' 'एकादशाक्षरा त्रिष्टुप्' 'द्वादशाक्षरा जगती' इत्यादिप्रमाणगम्यः। तत्प्रयुक्ता 'त्रिपदा गायत्री' 'चतुष्पदा त्रिष्टुप्' इत्यादिच्छन्दोव्यवस्था तन्नियमनम् सा ऋक्प्रत्येतव्या। ननु "अग्निमीळे पुरोहित यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम्" "अग्नि-पूर्वेभिर्ऋषिभिः" इत्यष्टाक्षरचतुष्पादत्वादनुष्टुप्छन्दस्का ऋक् कुतो न स्यादित्याशङ्क्याह—अर्थवशेनेति। अर्थैकत्वप्रयुक्ता पादव्यवस्था विवक्षिता। तथा च विशिष्टै-कार्थप्रतिपादकत्वे सति पादबद्धमन्त्रत्वमृचो लक्षणमिति स्थितम् ॥

इत्येकादशमृग्लक्षणाधिकरणम् ॥ ११ ॥

१२

सामानि लक्षयति—

**गीतिषु सामाख्या[2] ॥ ३३ ॥**

रथन्तरबृहद्वैरूपादिसञ्ज्ञकगीतिषु सामशब्दो वाचकतया वर्तते। यद्यपि

1. तेषामिति क्वचिन्नास्ति. 2. गीतिषु सामेति क्वचित्पाठ.

सामशब्दस्य गीतिवाचकत्वं सप्तमे सूत्रकारः प्रपञ्चयिष्यति,तथापि ऋगादिभेदकथन-प्रसङ्गादिहाप्युक्तम् ॥

इति द्वादशं सामलक्षणाधिकरणम् ॥ १२ ॥

१३

यजूंषि लक्षयति—

**शेषे यजुःशब्दः ॥३४॥**

ऋक्सामावशिष्टमन्त्रभागे वाचकतया यजुःशब्दो वर्तते। न चैवं सति "युञ्जते मन उत युञ्जते धियः" "इमामगृभ्णन्" इत्यादावृचि "यजुरेव वदेत्" "यजुष्कृत्यै यज्ञस्य समृद्ध्यै" इत्यादिब्राह्मणेषु कथं यजुःशब्दव्यवहार इति वाच्यम्। यजुर्वेदपठितत्वेन लक्षणया तदुपपत्तेः। ऋगादिलक्षणप्रयोजनन्तु "यत्स्वाध्यायमधीयीतैकामप्यृच यजु. साम वा तद्ब्रह्मयज्ञः सन्तिष्ठते" इत्यादौ लघूपायेन लक्ष्यावगमः।

इति त्रयोदशं यजुर्लक्षणाधिकरणम ॥१३॥

१४

अथ 'शेषे यजु'शब्द. इत्यत्राक्षिप्य समाधातुमिदमारभ्यते। सन्ति निगदा नाम परसम्बोधनार्था मन्त्रा "अग्नीदग्नीन्विहर, बर्हिस्तृणाहि" "प्रोक्षणीरासादय" इत्यादयः। ते किं यजुर्भ्यो भिद्यन्ते ? उत यजूंष्येव ? इति संशये पूर्वपक्षयति—

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥३५॥**

वाशब्दो नञर्थे। निगदो न यजु। कुतः ? धर्मविशेषात् "उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन" इति निगदस्य यजुर्विलक्षणोच्चैस्त्वधर्मविशेषश्रवणात्, निगदस्य यजुष्ट्वे उपांशुत्वस्यैवौचित्यात्। ऋक्सामयोः कार्त्स्न्येन उच्चैस्त्वमिव यजुषोऽपि हि कार्त्स्न्येन उपांशुत्वमवगतम्। तस्मान्निगदाख्यमन्त्रजातं चतुर्थं स्यात् ॥

इतोऽपि निगदो न यजुरित्याह—

**व्यपदेशाच्च ॥३६॥**

इमानि यजूंषि, एते निगदा इति सञ्ज्ञाभेदादपि निगदो न यजुरित्यर्थः ॥

सिद्धान्तयति—

सिततया मन्त्रत्वमेवञ्जातीयकानामिति कृत्वा सुब्रह्मण्यानिगदादावद.शब्दरहिते "यजमानस्य तत्पूर्वेषामपरेषाञ्च नाम गृह्णाति" इति विध्यन्तरबलान्निक्षिप्यमाणं नामधेयमेवोदाहरणमिति प्राञ्च । तदयुक्तम्, प्रत्यक्षाम्नानस्यैव मन्त्रत्वप्रयोजकत्वेन 'असौ' इति परोक्षनिर्दिष्टानां नाम्नामपि मन्त्रत्वाभावस्यैव युक्तत्वात्, अन्यथा प्रवरस्य 'अमुवत्' इति अद.शब्दनिर्दिष्टत्वेन मन्त्रत्वापत्ते. 'यजमानस्य तत्पूर्वेषामपरेषां च नाम गृह्णाति' इतिविधौ नामपदेन यजमानादिनाम्नामपि निर्दिष्टतया मन्त्रत्वापत्तेश्चेति दिक् । प्रयोजनं प्रवरोहनामधेयेषु 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति मन्त्रेषु विहितमैकश्रुत्यं मन्त्रभ्रेषप्रायश्चित्तञ्च न भवति ॥

इति दशमं प्रवराद्यमन्त्रताधिकरणम् ॥ १० ॥

११

'ऋचो यजूंषि सामानि मन्त्रा' इत्युक्तम् । तत्र ऋग्लक्षणमाह—

**[1]तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३२ ॥**

तेषां—मन्त्राणा मध्ये यत्र—यस्मिन् "अग्निमीळे पुरोहितम्" इत्यादिमन्त्रे पादव्यवस्था—अक्षरेयत्ताविशेषः पादः 'अष्टाक्षरा गायत्री' 'दशाक्षरा विराट्' 'एकादशाक्षरा त्रिष्टुप्' 'द्वादशाक्षरा जगती' इत्यादिप्रमाणगम्यः । तत्प्रयुक्ता 'त्रिपदा गायत्री' 'चतुष्पदा त्रिष्टुप्' इत्यादिच्छन्दोव्यवस्था तन्नियमनम् सा ऋक्प्रत्येतव्या । ननु "अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम्" "अग्नि॰ पूर्वेभिर्ऋषिभि." इत्यष्टाक्षरचतुष्पादत्वादनुष्टुप्छन्दस्का ऋक् कुतो न स्यादित्याशङ्क्याह—अर्थवशेनेति । अर्थैकत्वप्रयुक्ता पादव्यवस्था विवक्षिता । तथा च विशिष्टैकार्थप्रतिपादकत्वे सति पादबद्धमन्त्रत्वमृचो लक्षणमिति स्थितम् ॥

इत्येकादशमृग्लक्षणाधिकरणम् ॥ ११ ॥

१२

सामानि लक्षयति—

**गीतिषु सामाख्या[2] ॥ ३३ ॥**

रथन्तरबृहद्वैरूपादिसञ्ज्ञकगीतिषु सामशब्दो वाचकतया वर्तते । यद्यपि

1. तेषामिति क्वचिन्नास्ति 2. गीतिषु सामेति क्वचित्पाठ.

सामशब्दस्य गीतिवाचकत्वं सप्तमे सूत्रकारः प्रपञ्चयिष्यति, तथापि ऋगादिभेदकथन-प्रसङ्गादिहाप्युक्तम् ॥

इति द्वादश सामलक्षणाधिकरणम् ॥ १२ ॥

१३

यजूंषि लक्षयति—

**शेषे यजुःशब्दः ॥३४॥**

ऋक्सामावशिष्टमन्त्रभागे वाचकतया यजुःशब्दो वर्तते। न चैवं सति "युञ्जते मन उत युञ्जते धियः" "इमामगृभ्णन्" इत्यादावृचि "यजुरेव वदेत्" "यजुष्कृत्यै यज्ञस्य समृद्ध्यै" इत्यादिब्राह्मणेषु कथं यजुःशब्दव्यवहार इति वाच्यम्। यजुर्वेदपठितत्वेन लक्षणया तदुपपत्तेः। ऋगादिलक्षणप्रयोजनन्तु "यत्स्वाध्यायमधीयीतैकामप्यृच यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठते" इत्यादौ लघूपायेन लक्ष्यावगमः।

इति त्रयोदशं यजुर्लक्षणाधिकरणम ॥१३॥

१४

अथ 'शेषे यजुःशब्द' इत्यत्राक्षिप्य समाधातुमिदमारभ्यते। सन्ति निगदा नाम परसम्बोधनार्था मन्त्राः "अग्नीदग्नीन्विहर, बर्हिस्तृणाहि" "प्रोक्षणीरासादय" इत्यादयः। ते किं यजुर्भ्यो भिद्यन्ते ? उत यजूंष्येव ? इति संशये पूर्वपक्षयति—

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥३५॥**

वाशब्दो नञर्थे। निगदो न यजु। कुतः ? धर्मविशेषात् "उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन" इति निगदस्य यजुर्विलक्षणोच्चैस्त्वधर्मविशेषश्रवणात्, निगदस्य यजुष्ट्वे उपांशुत्वस्यैवौचित्यात्। ऋक्सामयोः कार्त्स्न्येन उच्चैस्त्वमिव यजुषोऽपि हि कार्त्स्न्येन उपांशुत्वमवगतम्। तस्मान्निगदाख्यमन्त्रजातं चतुर्थं स्यात् ॥

इतोऽपि निगदो न यजुरित्याह—

**व्यपदेशाच्च ॥३६॥**

इमानि यजूंषि, एते निगदा इति संज्ञाभेदादपि निगदो न यजुरित्यर्थः ॥

सिद्धान्तयति—

## यजूंषि वा तद्रूपत्वात् ॥३७॥

वाशब्द एवार्थे । यजूंष्येव निगदाः । कुतः ? तद्रूपत्वात्-ऋक्सामभिन्नत्वरूपयजुर्लक्षणवत्त्वात् ॥

यदुक्तं निगदाना यजुष्ट्वे उपांशुत्वमेवोचितं न तूच्चैस्त्वमिति तत्राह—

## वचनाद्धर्मविशेषः ॥३८॥

उच्यते अनेनेति वचनं सामर्थ्यम् । निगदाना सम्बोधनविभक्तिघटिताना परसम्बोधनपराणां परप्रत्यायनरूपकार्यवशादुच्चैस्त्वरूपधर्मविशेष एव वक्तुमुचितः, न तूपांशुत्वम् ॥

ननु यत्र सम्बोधनविभक्तिर्नास्ति "प्रोक्षणीरासादय" इत्यादौ तत्र कथं परसम्बोधनार्थता । न च मध्यमपुरुषलोड्वशात्सम्भव इति वाच्यम् । प्राप्तकालतायामपि लोटो विधानात्तदर्थकलोडादेशमध्यमपुरुषस्याविवक्षितार्थतायास्तृतीये 'प्रैषेषु च पराधिकारात्' इत्यत्र वक्ष्यमाणत्वाच्च । तत्राह—

## अर्थाच्च ॥३९॥

आग्नीध्रादेः परस्य प्रोक्षण्यासादनादिस्मरणमपेक्षितमिति प्रैषार्थत्वे अपेक्षितदृष्टार्थत्व लभ्यते । प्राप्तकालार्थत्वे त्वनपेक्षितमदृष्टार्थत्व मध्यमपुरुषस्याविवक्षितार्थत्वञ्च स्यात् । एवञ्च दृष्टप्रयोजनवशात्सम्भवद्विवक्षितलोडर्थवशाच्च लोटो न प्राप्तकालार्थत्वम्, किन्तु प्रैषार्थत्वमेवात्र वक्तव्यमिति सर्वेषा निगदानां परसम्बोधनार्थत्वं सिद्धम् । चकारस्त्वनुक्तसमुच्चयार्थः । तथाहि—ननु "उपांशु यजुषा" इति वाचनिकमुपांशुत्वं सम्बोधनविभक्तिसामर्थ्यरूपलिङ्गलब्धेन परसम्बोधनरूपकार्येण कथ बाध्यताम्, लिङ्गेन प्रत्यक्षवचनस्य बाधायोगादित्यत आह—चेति । मन्त्रस्य ह्युपांशुत्वमङ्गम्, अर्थप्रत्यायनं कार्यन्तु प्रधानम् । तस्य लिङ्गरूपदुर्बलप्रमाणगम्यत्वेऽपि स्वरूपतो बलवत्त्वेन बलवत्प्रमाणकस्यापि स्वरूपतो दुर्बलस्य उपांशुत्वस्य तेन बाधो युक्तः, प्रमाणबलात्प्रमेयबलस्यायस्त्वस्य स्मृतिपादे निरूपितत्वात् । किञ्च लिङ्गगम्यं परसम्बोधनकार्यं निगदमात्रविषयम् । उपांशुत्ववचनन्तु यजुरन्तरे सावकाशम् । ततश्च 'आनर्थक्यप्रतिहतानाम्' इति न्यायेन लिङ्गस्यैव प्रबलतया तेनोपांशुत्वाबाधो युज्यते । वस्तुतस्तु नोपांशुत्वस्य बाधः, उपांशुत्वस्य निगदेष्वप्राप्ते । "उपांशु यजुषा"

इति हि नापूर्वविधिः, मन्त्रविधिबलेनैव तस्य कदाचित्प्राप्तत्वात्। ततश्च यत्रानियमेनोपांशुत्व प्राप्यते तत्र नियममात्रम् "उपांशु यजुषा" इत्यनेन क्रियते। निगदेषु च परसम्बोधनार्थेषु न कदाचिदुपांशुत्वसम्भव इति न तत्रोपांशुविधेर्व्यापारः। अतो न तद्बाधप्रसक्तिः। एवञ्च सामर्थ्यान्निगदानामुच्चैस्त्वमेव वक्तुमुचितम्। न चैवं सति "उच्चैर्निगदेन" इति वचनानर्थक्यम्, कचित्कार्यार्थमुच्चैस्त्वेऽपि यजुरन्तरे उपांशुत्वमेव युक्तमित्यौचित्येन "उपांशु यजुषा" इति विहितस्तुत्यर्थं तदनुवादात्॥

अथ यदुक्तम् 'व्यपदेशाच्च' इति तत्राह—

## गुणार्थो व्यपदेशः ॥ ४० ॥

ब्राह्मणपरिव्राजकन्यायेन नितरां गद्यन्ते उच्चैरुच्चार्यन्त इति व्युत्पत्तिसिद्धगुणविशेषनिबन्धन एव यजुषामेव केषाञ्चिन्निगदव्यपदेश इत्यर्थः॥

अत्राशङ्क्य निराकरोति—

## सर्वेषामिति चेन्नर्ग्व्यपदेशात् ॥ ४१ ॥

यदि निगदानामुच्चैस्त्वनिबन्धन निगदत्वं तर्हि ऋक्सामानामपि सर्वेषां तत्स्यादिति चेत्—न, कुत ? ऋग्व्यपदेशात् "अयाज्या वै निगदाः" इति निगदान्निन्दित्वा "ऋचो याज्या भवन्ति" इति पृथङ्निर्देशात्। न हि तदेव निन्द्यते विधीयते चेति युक्तम्। तस्माद्यजूंष्येव निगदाः। प्रयोजन पूर्वपक्षे वाचःस्तोमे "सर्वा ऋच सर्वाणि यजूंषि सर्वाणि सामानि" इति पारिप्लवशंसने निगदानामप्राप्तिः, सिद्धान्ते तु तत्प्राप्तिरिति। केचित्तु यजुर्भ्रेषप्रायश्चित्त वर्णयन्ति। तदयुक्तम्, "यद्यृक्तो यज्ञ आर्तिर्भवति भूरिति चतुर्गृहीतमाज्य गृहीत्वा गार्हपत्ये जुहुयादथ[1] यजुष्टो भुव इति दक्षिणाग्नावाग्नीध्रे सोमे" इति हि यजुर्भ्रेषप्रायश्चित्तम्। तदिद निगदाना यजुष्ट्वाभावेऽपि [2]यजुर्वेदविहितकर्माङ्गत्वमात्रेण तद्भ्रेषे सम्भवति, तत्र ऋगादिपदाना वेदपरत्वात्। 'त्रयो वेदा अजायन्त, भूरित्यृग्वेदात् भुव इति यजुर्वेदात् स्वरिति सामवेदात्" इत्युपक्रमे "ऋग्वेदेन ऋग्वेद भिषज्यति यजुर्वेदेन यजुर्वेद सामवेदेन सामवेदम्" इत्युपसंहारे च वाजसनेयके, तथा ऐतरेय-

1 जुहुयाथ क, ख, ग, घ, ङ, मु पा. 2 याजुर्वेदिक. ग, घ

कताण्डकतलवकारीयब्राह्मणेषूपक्रमे वेदानामेव श्रवणात्। तस्मादस्मदुक्तमेव प्रयोजन साधु ॥

इति चतुर्दश निगदाधिकरणम् ॥ १४ ॥

१५

ऋक्सामयजुरात्मकमन्त्रस्वरूपे निरूपिते प्रसङ्गात्तदवान्तरभेदे कथनीये ऋचा साम्ना चाध्येतृपरम्परासिद्धाद्विच्छिद्य पाठादेव तत्सिद्धे प्रश्लिष्टपठितेषु यजुःषु कियदेक यजुरिति जिज्ञासितं, तद्भेदं प्रस्तौति—

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४२ ॥**

अर्थस्य—क्रतूपकारलक्षणप्रयोजनस्य एकत्वाद्धेतो· एक वाक्यं प्रत्येतव्यम्। वाक्यशब्देन प्रयोगे उच्चारणीय यजुर्लक्ष्यते। न हि यजुर्भेदविचारे लौकिक-वाक्यसाधारणमेकवाक्यलक्षणं सङ्गत भवति। ततश्च यावान्पदसमूह· प्रयुक्तो यागसाधनतामश्नुते तावदेकं यजुरित्युक्तं भवति। इज्यते अनेनेति यजुरिति व्युत्पत्तेरिति भावः। नैतावदेव यजुरेकत्वप्रयोजकम्। तथा सति "भगो वां विभजतु" "अर्यमा वा विभजतु" "पूषा वा विभजतु" इति भिन्नेषु वाक्येषु पुरोडाशीयपिष्ट-विभागरूपैकार्थतया एकयजुष्ट्वापत्ते·। किन्तु तथाविधं पदजातं यद्येकस्यापि पदस्य ततो विभागे सति साकाङ्क्षं स्यात् तदेव भवेदेकं यजुः। एवञ्च यावत्पदजातं यजुर्लक्षणलक्षितं यागसाधनमथ च विभागे साकाङ्क्षं तावदेकं यजुरित्युक्त भवति। न चैतावता प्रस्तुतयजुर्भेदे किमायातमिति वाच्यम्। यजुरेकत्वे कथिते ततोऽन्यद्य-जुरन्तरमित्युक्तप्रायत्वात्। सूत्रे अर्थशब्दो नाभिधेयवाची, तथा सति विभागे साकाङ्क्षमित्यस्य वैयर्थ्यात्, "भगो वा विभजतु" इत्यादीना विशिष्टैकार्थप्रतिपाद-कत्वाभावेनातिव्याप्तिनिरासादिति वार्तिके प्रपञ्चितम्। विभागे साकाङ्क्षमेकं यजुरित्युक्ते "ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्र पातु ता इद ब्रह्म क्षत्र पान्तु तस्मै स्वाहा ताभ्य स्वाहा" इत्यादिराष्ट्रभृद्धोममन्त्रेषु द्विस्वाहाकारमेकैक यजु स्यात्, विभागे साकाङ्क्षत्वात्। न चेष्टापत्ति, वाजसनेयके "राष्ट्रभृतो जुहोति" इति प्रस्तुत्य "मिथुनानि जुहोति पुसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यो द्वादशैवाहुतयो भवन्ति" इति षड्भिर्मन्त्रयुगलैर्द्वादशाहुत्यवगमात्। अत एव

सङ्कर्षकाण्डे द्वितीयस्य चतुर्थे 'ऋताषाडृतधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात्' इत्यधिकरणे "ऋताषाडृतधामाग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्र पान्तु ताभ्य. स्वाहा" इत्येवं पुंवाचकाः स्त्रीवाचकाश्च शब्दाः प्रतिहोमं विनिष्कृष्य प्रयोक्तव्याः, उत यथापाठमिति विचारः सङ्गच्छते। न च एकयजुष्ट्वाभावे "षड्भिर्जुहोति" इति विरोध शङ्क्य, तस्य पर्यायाभिप्रायत्वात्। 'तस्मै स्वाहा, ताभ्य स्वाहा' इत्यत. प्राक्पठिताः "ऋताषाडृतधामा" "स ँ हितो विश्वसामा" "सुषुम्नः सूर्यरश्मि." इत्यादयः पर्यायाः। ते च "भुवनस्य पते" इत्यत प्राक्षडेव भवन्ति। तदेतत्तत्रैवाग्निमाधिकरणे 'षड्भिर्जुहोतीति पर्यायवादो यथा सावित्राणि जुहोति' इत्यत्र प्रपञ्चयिष्यते। एतेन 'षड्भिर्जुहोति" इति तैत्तिरीयकमपि व्याख्यातम्। एवञ्च राष्ट्रभृन्मन्त्रेषु प्रतिस्वाहाकार यजुर्भेदात्तत्र विभागे [1]साकाङ्क्षतायामप्येकयजुष्ट्वं मा भूदित्यर्थैकत्वादित्युक्तम्। [2]शस्त्रीयाणामृचामेकादृष्टार्थत्वाद्विभागे साकाङ्क्षत्वात्तत्रातिव्याप्तिवारणाय यजुर्लक्षण-लक्षितमिति। उदाहरणन्तु "देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इत्यादियजुः। न च 'देवस्य' इत्यस्य विभागेऽपि 'त्वा सवितु.' इत्यादेर्निराकाङ्क्षतया कथ तेन सहैकयजुष्ट्वमिति वाच्यम्। न ह्यत्र विभज्यमानस्य विभागावधिभूतस्येत्युभयाकाङ्क्षैव विवक्षिता, अन्यतराकाङ्क्षाया विवक्षितत्वात्। ततश्च 'देवस्य' इत्यस्य 'त्वा सवितुः' इत्यादिसाकाङ्क्षत्वान्न दोषः। क्वचित् "अग्ने हव्य रक्षस्व" इत्यादावुभयाकाङ्क्षासत्त्वेऽप्यन्यतराकाङ्क्षाया अनपायात् 'देवस्य' इत्यस्य विभागे साकाङ्क्षतया आनर्थक्यात् 'त्वा सवितु' इत्यादेरपि तेनाकाङ्क्षोत्थापनादुभयाकाङ्क्षैव वा सर्वत्र निर्वाह। न चैवमपि "ऋताषाडृतधामा-ग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इद ब्रह्म क्षत्र पातु तस्मै स्वाहा" इति प्रथमहोममन्त्रे "तस्यौषधयोऽप्सरस ऊर्जो नाम ता इद ब्रह्म क्षत्र पान्तु" इत्यशस्य स्त्रीपरस्य तदितराशस्य पुरुषपरस्य चान्यतराकाङ्क्षाया अप्यभावात्कथमेकयजुष्ट्वमिति वाच्यम्, इष्टापत्ते.। स्त्रीपरस्याशस्य 'ताभ्य स्वाहा' इत्युत्तरमन्त्रैकवाक्यतया तेनैवै-कयजुष्ट्वम्। परन्तु यथाम्नानमेवानन्वितोऽपि स्त्रीपरोऽशः पूर्वमन्त्रे प्रयुज्यते अविरो-

---

1. साकाङ्क्षतया. क, घ, मु. पा. 2 'याज्यया यजति' इत्येकादृष्ट. ख, ग, मु पा.

कताण्डकतलवकारीयब्राह्मणेषूपक्रमे वेदानामेव श्रवणात्। तस्मादस्मदुक्तमेव प्रयोजनं साधु ॥

इति चतुर्दश निगदाधिकरणम् ॥ १४ ॥

१५

ऋक्सामयजुरात्मकमन्त्रस्वरूपे निरूपिते प्रसङ्गात्तदवान्तरभेदे कथनीये ऋचां साम्ना चाध्येतृपरम्परासिद्धाद्विच्छिद्य पाठादेव तत्सिद्धे प्रश्लिष्टपठितेषु यजुःषु कियदेकं यजुरिति जिज्ञासितं, तद्धेदं प्रस्तौति—

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४२ ॥**

अर्थस्य—क्रतूपकारलक्षणप्रयोजनस्य एकत्वाद्धेतोः एकं वाक्यं प्रत्येतव्यम्। वाक्यशब्देन प्रयोगे उच्चारणीयं यजुर्लक्ष्यते। न हि यजुर्भेदविचारे लौकिकवाक्यसाधारणमेकवाक्यलक्षणं सङ्गतं भवति। ततश्च यावान्पदसमूहः प्रयुक्तो यागसाधनतामश्नुते तावदेकं यजुरित्युक्तं भवति। इज्यते अनेनेति यजुरिति व्युत्पत्तेरिति भावः। नैतावदेव यजुरेकत्वप्रयोजकम्। तथा सति "भगो वां विभजतु" "अर्यमा वा विभजतु" "पूषा वा विभजतु" इति भिन्नेषु वाक्येषु पुरोडाशीयपिष्टविभागरूपैकार्थतया एकयजुष्ट्वापत्तेः। किन्तु तथाविधं पदजातं यद्येकस्यापि पदस्य ततो विभागे सति साकाङ्क्षं स्यात् तदेव भवेदेकं यजुः। एवञ्च यावत्पदजातं यजुर्लक्षणलक्षितं यागसाधनमथ च विभागे साकाङ्क्षं तावदेकं यजुरित्युक्तं भवति। न चैतावता प्रस्तुतयजुर्भेदे किमायातमिति वाच्यम्। यजुरेकत्वे कथिते ततोऽन्यद्यजुरन्तरमित्युक्तप्रायत्वात्। सूत्रे अर्थशब्दो नाभिधेयवाची, तथा सति विभागे साकाङ्क्षमित्यस्य वैयर्थ्यात्, "भगो वा विभजतु इत्यादीनां विशिष्टैकार्थप्रतिपादकत्वाभावेनातिव्याप्तिनिरासादिति वार्तिके प्रपञ्चितम्। विभागे साकाङ्क्षमेकं यजुरित्युक्ते "ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा इत्यादिराष्ट्रभृद्धोममन्त्रेषु द्विस्वाहाकारेणैकं यजुः स्यात्, विभागे साकाङ्क्षत्वात्। न चेष्टापत्तिः; वाजसनेयके "राष्ट्रभृतो जुहोति" इति प्रस्तुत्य मिथुनानि जुहोति एते पूर्वस्मै जुहोत्यथ स्त्रीभ्यो द्वादशैवाहुतयो भवन्ति इति षड्भिर्मन्त्रयुगलैर्द्वादशाहुत्यवगमात्; अत एव

निश्चितमिति पदचतुष्टयमेवादिप्रतीकग्रहणेन पूर्ववाक्यतः छेदने विधीयते, उत्तरवाक्येऽप्यन्तप्रतीकग्रहणेनानुमार्जने, तदेवं पदचतुष्टयं विधीयते । "आनः प्राण एतु परावत आन्तरिक्षद्दिवस्परि, आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा" इति मन्त्रस्य "अमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनिति" इत्यन्तप्रतीकग्रहणेनापि विनियोगदर्शनात् । आवृत्त्या चोयमत्र पदचतुष्टयस्य प्रयोग' । एव च पदचतुष्टयस्यैव च्छेदने विनियुक्तत्वादेकादृष्टार्थत्वम् । अतः पूर्वोक्तलक्षणलक्षितत्वात्पदचतुष्टयमेकं यजु । इति प्राप्ते, सिद्धान्तयति—

## समेषु वाक्यभेदः स्यात् ॥ ४३ ॥

"इषे त्वोर्जे त्वा" इत्येवञ्जातीयकेषु परस्परनिराकाङ्क्षत्वेन तुल्येषु वाक्यभेदः यजुर्भेदः स्यात् । तथाहि—एकादृष्टार्थत्व पदचतुष्टयस्यासिद्धम्, विनियोज्यस्वरूपाज्ञाने विनियोगस्यैवासम्भवेन प्रथम विनियोज्यस्वरूपे पर्यालोच्यमाने त्वाशब्दद्वयबलेन परस्परनिरपेक्षतया भेदेनैव प्रतीयमानत्वेन विनियोगस्यापि भेदेनैव वाच्यतया तदनुसारेण परस्परनिरपेक्षतयैवादृष्टस्य कल्प्यमानस्य भेदेनैव कल्पयितुमुचितत्वात् । किञ्च "आ नः प्राण एतु परावतः" इत्यस्य मन्त्रैक्यं लिङ्गवशेनावगतमिति मन्त्रान्तप्रतीकग्रहणेन विनियोग' कथञ्चिदुच्यते । नेह मन्त्रैक्यसाधकं लिङ्गमस्ति, किमुत तद्भेदसाधकं त्वाशब्दद्वयमस्ति । तस्मादनेकादृष्टार्थमेव पदचतुष्टयम् । वस्तुतस्तु नैवञ्जातीयकानामदृष्टार्थता, अर्थप्रकाशनरूपदृष्टार्थत्वात् । "इति शाखामाच्छिनत्ति" इति इतिकरणादिना मन्त्राणां छेदनक्रियाकरणत्वावगते । न हि च्छेदनादिक्रियाकरणत्वं मन्त्राणां तत्प्रकाशनमन्तरेण सम्भवति । तथा च च्छेदनादिप्रकाशनचोदनान्यथानुपपत्त्या 'छिनद्मि' इत्यादि यथोचितमध्याहार्यम् । न चैवमपि च्छेदनं पदचतुष्टयेन प्रकाश्यताम्, एवमनुमार्जनमपीति दृष्टार्थत्वेऽपि न मन्त्रभेदः स्यादिति वाच्यम् । प्रथमावधृतनैरपेक्ष्यानुसारेण पृथगेव च्छेदनादिप्रकाशकत्वकल्पनस्य पूर्वमेवोपपादितत्वात् । एवम् "आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्" इत्यादीनि दश वाक्यानि दश यजूंपि भवन्ति । "क्लृप्तीर्यजमान वाचयति" इत्यत्र हि क्लृप्तिशब्दो न मन्त्रपर. किन्त्वर्थपर । ततश्च बहुधा क्लृप्तिं वदन्त यजमान प्रेरयतीत्यध्वर्योर्व्यापारो विहितोऽर्थाद्यजमानकर्तृकबहुत्वविशिष्टक्लृप्तिवचनविधिं कल्पयति । कल्पिततादृग्विधिनिर्वाहाय च "आयुर्यज्ञेन कल्पताम्" इत्यादेरायुरादिविशिष्टक्लृप्तिप्रकाशन-

धात्। पूर्वमन्त्रे प्रयुज्यमान एव प्रयुक्तस्य स्त्रीपरस्याशस्योत्तरयजुष्याकाङ्क्षावशेनान्वयसम्भवात्। लोके काव्येषु—

'कान्तं पृच्छामहे तन्वि पुलकोत्कम्पकारिणम्।
द्रुतमाधत्स्व नेत्रान्त गतस्त्वेति प्रियस्तव'॥

इत्यादौ पुलिङ्गपदानां स्त्रीलिङ्गपदव्यवहितानामप्यन्वयदर्शनात् इति सङ्कर्षकाण्डे देवस्वामिभाष्ये स्पष्टम्। अत्र भाष्ये वार्तिके च "स्योनं ते सदन करोमि, घृतस्य धारया सुशेव कल्पयामि, तस्मिन्त्सीदामृते प्रतितिष्ठ, व्रीहीणा मेध सुमनस्यमान" इति कृत्स्नस्यैकयजुष्ट्व स्यात्, यजुर्भेदो न स्यात्, तन्निवृत्त्यर्थमर्थैकत्वादित्युपात्तम्। पूर्वभागस्य सदनकरणप्रकाशनमुत्तरभागस्य पुरोडाशप्रतिष्ठितत्वप्रकाशनमिति प्रयोजनभेदान्नातिप्रसङ्ग इत्युक्तम्। पार्थसारथिप्रभृतिभिश्च तदेवानुमोदितम्। तत्सर्वमापातत —"स्योन ते सदन करोमीति हि ऋगेषा त्रिष्टुप्। पूर्वार्धर्चेन सदनकरणमुत्तरार्धर्चेन प्रतिष्ठापनम्" इत्येव वेदभाष्ये भट्टभास्करमिश्रा.। यजुरेकत्वकथनप्रयोजनन्तु "यत्स्वाध्यायमधीयीतैकामप्यृच यजु साम वा तद्ब्रह्मयज्ञ. सन्तिष्ठते" इत्यादौ यावदेक यजुस्तावत्प्रयोक्तव्यम्, न तु तदेकदेश इति। तदेतत्सूत्रे यजुरित्येव वक्तव्ये वाक्यशब्दप्रयोगेण सूचितम्। वाक्यमित्यस्य हि प्रयोगसमये वचनार्हमित्यर्थ.॥

इति पञ्चदशमर्थैकत्वाधिकरणम्॥ १५॥

१६

"इषे त्वोर्जे त्वा" इति किमेकं यजु? उत "इषे त्वा" इत्येकं यजु "ऊर्जे त्वा" इति यजुरन्तरम् इति संशय। पूर्वं तावदेकप्रयोजनसमर्थं विभज्यमाने साकाङ्क्षपदजातमेक यजुरित्युक्तम्। भवति चेद तथाविधं पदचतुष्टयम्। न ह्यत्र निर्वापप्रोक्षणादिमन्त्रवन्निर्वापादिक्रियासमवेतप्रकाशनरूपदृष्टप्रयोजनभेदोऽस्ति, येन यजुर्भेद स्यात्। न ह्यत्र क्रियापदमस्ति। तस्माददृष्टमेवात्र प्रयोजनम्। तच्च कल्प्यमान लाघवादेकमेव कल्प्यत इति भवति पदचतुष्टयमेकार्थम्। तच्चादृष्टं चतुर्भि पदै. समुदितैरेव कल्प्यते विनिगमनाविरहात्। अत सहत्यकारित्वाद्विभज्यमाने साकाङ्क्षं च भवति। न च "इषे त्वेति शाखामाच्छिनत्ति" "ऊर्जे त्वेत्यनुमार्ष्टि" इति विनियोगबलाद्भिन्नमेवादृष्टं कल्प्यत इति वाच्यम्। तदा हि विनियोगभेदाददृष्ट भिद्यते, यदि विनियोज्यमन्त्रभेद सिद्ध स्यात्। इह तु विनियोज्यस्यैकमन्त्रत्वमेवादृष्टद्वयकल्पनाभीत्या

निश्चितमिति पदचतुष्टयमेवादिप्रतीकग्रहणेन पूर्ववाक्यतः छेदने विधीयते, उत्तरवाक्येऽप्यन्तप्रतीकग्रहणेनानुमार्जने, तदेवं पदचतुष्टय विधीयते । "आनः प्राण एतु परावत आन्तरिक्षद्दिवस्परि, आयु. पृथिव्या अध्यमृतमसि प्राणाय त्वा" इति मन्त्रस्य "अमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनिति" इत्यन्तप्रतीकग्रहणेनापि विनियोगदर्शनात् । आवृत्त्या चोयमत्र पदचतुष्टयस्य प्रयोगः । एवं च पदचतुष्टयस्यैव च्छेदने विनियुक्तत्वादेकादृष्टार्थत्वम् । अतः पूर्वोक्तलक्षणलक्षितत्वात्पदचतुष्टयमेकं यजु । इति प्राप्ते, सिद्धान्तयति—

## समेषु वाक्यभेदः स्यात् ॥ ४३ ॥

"इषे त्वोर्जे त्वा" इत्येवञ्जातीयकेषु परस्परनिराकाङ्क्षत्वेन तुल्येषु वाक्यभेदः यजुर्भेदः स्यात् । तथाहि—एकादृष्टार्थत्वं पदचतुष्टयस्यासिद्धम्, विनियोज्यस्वरूपाज्ञाने विनियोगस्यैवासम्भवेन प्रथमं विनियोज्यस्वरूपे पर्यालोच्यमाने त्वाशब्दद्वयबलेन परस्परनिरपेक्षतया भेदेनैव प्रतीयमानत्वेन विनियोगस्यापि भेदेनैव वाच्यतया तदनुसारेण परस्परनिरपेक्षतयैवादृष्टस्य कल्प्यमानस्य भेदेनैव कल्पयितुमुचितत्वात् । किञ्च "आ नः प्राण एतु परावत" इत्यस्य मन्त्रैक्य लिङ्गवशेनावगतमिति मन्त्रान्तप्रतीकग्रहणेन विनियोग' कथञ्चिद्युज्यते । नेह मन्त्रैक्यसाधकं लिङ्गमस्ति, किमुत तद्भेदसाधक त्वाशब्दद्वयमस्ति । तस्मादनेकादृष्टार्थमेव पदचतुष्टयम् । वस्तुतस्तु नैवञ्जातीयकानामदृष्टर्थता, अर्थप्रकाशनरूपदृष्टार्थत्वात् । "इति शाखामाच्छिनत्ति" इति इतिकरणादिना मन्त्राणां छेदनक्रियाकरणत्वावगतेः। न हि च्छेदनादिक्रियाकरणत्वं मन्त्राणा तत्प्रकाशनमन्तरेण सम्भवति । तथा च च्छेदनादिप्रकाशनचोदनान्यथानुपपत्त्या 'छिनद्मि' इत्यादि यथोचितमध्याहार्यम् । न चैवमपि च्छेदन पदचतुष्टयेन प्रकाश्यताम्, एवमनुमार्जनमपीति दृष्टार्थत्वेऽपि न मन्त्रभेदः स्यादिति वाच्यम् । प्रथमावधृतनैरपेक्ष्यानुसारेण पृथगेव च्छेदनादिप्रकाशकत्वकल्पनस्य पूर्वमेवोपपादितत्वात् । एवम् "आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्" इत्यादीनि दश वाक्यानि दश यजूंपि भवन्ति । "क्लृप्तीर्यजमान वाचयति" इत्यत्र हि क्लृप्तिशब्दो न मन्त्रपर किन्त्वर्थपर । ततश्च बहुधा क्लृप्तिं वदन्त यजमान प्रेरयतीत्यध्वर्योर्व्यापारो विहितोऽर्थाद्यजमानकर्तृकबहुत्वविशिष्टक्लृप्तिवचनविधिं कल्पयति । कल्पितताद्दग्विधिनिर्वाहाय च "आयुर्यज्ञेन कल्पताम्" इत्यादेरायुरादिविशिष्टक्लृप्तिप्रकाशन-

परत्वमेव वक्तव्यम् । ततश्च प्रकाश्यमानायुरादिविशिष्टक्लृप्तिविशेषरूपार्थभेदाद्यजुर्भेद । प्रयोजनं पूर्वपक्षे "इषे त्वोर्ज्जे त्वा" इति च्छेदने पदचतुष्टयं प्रयुज्यते, एवमनुमार्जनेऽपि । सिद्धान्ते तु "इषे त्वा" इति च्छेदने "ऊर्जे त्वा" इत्यनुमार्जने । क्लृप्तिवाक्येषु एकस्य भ्रेषे कृत्स्नस्यावृत्तिः पूर्वपक्षे । सिद्धान्ते तु यस्य भ्रेषस्तस्यैवेति । अत्र "ईषे त्वा" इत्यादिसाकाङ्क्षमन्त्रेषु योग्यपदाध्याहारेण "इषे त्वा च्छिनद्मि" "ऊर्जे त्वा अनुमार्ज्मि" इत्यादि प्रयोक्तव्यमिति केचित् । तदयुक्तम्; अध्याहृतस्य लौकिकशब्दस्य वैदिकमन्त्रानवयवत्वेन मन्त्रान्तकर्मादिसन्निपातविरोधात् । ऊहप्रवरनामधेयानान्तु "असौ मानुष इति होतुर्नाम गृह्णाति" "आर्षेय वृणीते" "त्रीन्वृणीते" "तस्मादूर्चं नोहेत्" इत्यादिवेदानुमतत्वाल्लौकिकानामपि प्रयोग उचित । नात्र तथा प्रमाणमस्ति । तस्मादाकाङ्क्षितशब्दानां मनसैव स्मरणम्, न तु प्रयोग. । अर्थाध्याहारपक्षे तु शब्दस्यापि न स्मरणम् । अर्थमात्रमेव स्मर्तव्यमिति प्राचीनमतानुसारी पन्था । चेतनप्रतिपादकेषु मन्त्रेषु तत्स्तुत्याना देवतानाम् अचेतनप्रतिपादकेषु तदभिमानिदेवतानां शाब्दबोधः, न तु प्रयोक्तुरिति मन्त्राधिकरणेऽवोचाम । ततश्च तत्तन्मन्त्रस्तुत्यदेवता एव शब्दाध्याहारेणार्थाध्याहारेण वा वाक्यार्थमधिगच्छन्तीति याज्ञिकानुसारी युक्त पन्थाः ॥

इति पञ्चदश यजुर्भेदनिरूपणम् ॥ १५ ॥

## १६

ज्योतिष्टोमे उपसद्धोममन्त्रा आम्नाताः- "या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपापधीं स्वाहा, या ते अग्ने रजाशया, हरा शया" इति । तत्र द्वितीयतृतीयमन्त्रयोः साकाङ्क्षयोराकाङ्क्षापूरणसमर्थो लौकिक [1]शेषोऽध्याहर्तव्यः—'या ते[2] रजाशया प्रजा सास्मान् पातु' इत्येवम्प्रकारेण ? उत पूर्वमन्त्रावयवस्य तनूर्वर्षिष्ठेत्यादेरनुषङ्गेण शेषः पूरणीय ? इति सशय । यदि प्रकारान्तरेणाकाङ्क्षापूरणं न स्यात्तदा गत्यभावादेकत्र निबद्धस्यापि वैदिकस्य वाक्यशेषस्यानुषङ्ग आश्रीयेत । सम्भवति च लौकिकेनापि तत्पूरणम् । अत पूर्वमन्त्रे निबद्धस्य तनूर्वर्षि-

1. किं शेष: ग,घ 2. ते अग्ने क,घ,ङ,मु पा.

छेत्यादेरन्यत्रनयनरूपानुषङ्गो न युक्त । अन्यत्रनयने च समाम्नायबहिर्भावाल्लौकिक एव स्यात् । तस्माल्लौकिक एव शेषोऽध्याहर्तव्य ।

इति प्राप्ते, सिद्धान्तयति—

## अनुषङ्गो वाक्यसमाप्तिः[1] सर्वेषु तुल्ययोगित्वात् ॥ ४४ ॥

अनुषज्यत इत्यनुषङ्ग "तनूर्वर्षिष्ठा" इत्यादिवाक्यशेष उत्तरयोरपि वाक्ययोस्समार्पकः। समाप्तिरिति बाहुलक करणे क्तिन्। कुतोऽनुषङ्ग ? सर्वेषु तुल्ययोगित्वात्-प्रथमद्वितीयतृतीयमन्त्रेषु शेषस्य "तनूर्वर्षिष्ठा" इत्यादे- सन्निधानरूपसम्बन्धस्य तुल्यत्वादित्यर्थं । यदि हि प्रथमस्यैवायं शेषः स्यात्तदान्यत्रनयनादवैदिकत्वं स्यात्। नैतदस्ति; त्रयाणामपि सन्निधावाम्नातत्वात्। एतावदेव हि शब्दानामन्वये कारणम् आकाङ्क्षा सन्निधिर्योग्यत्वञ्च । सन्निधिश्च बुद्धिविपरिवृत्तिमात्रम्। नोपरिष्टादनन्तरञ्च समाम्नाय साधक । नापि पुरस्ताद्व्यवहितञ्च समाम्नायो बाधकः । किन्तु अनन्वितपदान्तरव्यवधानं बाधकम्। तदभावः साधक । अत्र च "तनूर्वर्षिष्ठा" इत्यादिशेषस्य प्रथमद्वितीयाभ्या न कथञ्चिदपि व्यवधानम् । तृतीयस्यापि वाक्यशेषेण सम्बन्धे द्वितीयं न व्यवधायकम्, द्वितीयास्यनुषज्यमानशेषसाकाङ्क्षतया अन्वितत्वेनानन्वितपदत्वाभावात्। अनन्वितपदान्तरमेव हि बुद्धिविपरिवृत्तेर्बाधकम्, न त्वाकाङ्क्षितान्वितपदमपि । प्रथमेन सम्बद्धो द्वितीयस्याकाङ्क्षावेलाया बुद्धौ विपरिवर्तमानस्तेनापि सम्बध्यते । तत्सम्बन्धाच्च विपरिवृत्त्यभङ्गात्तृतीयेनापि सम्बद्धुं शक्नोति। तथा च बुद्धिविपरिवृत्तिरूपसन्निधान त्रयाणामविशिष्टमिति सकृदाम्नातस्यापि शेषस्य सर्वार्थत्वाद्वैदिकेनैव शेषेण पूरणसम्भवे लौकिकशेषाध्याहारो न युक्त ।

ननु यत्र सकाङ्क्षाणा सन्निधौ शेष पठ्यते तत्रोक्तरीत्या भवत्वनुषङ्ग । यत्र तु "चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु" इति परिपूर्णानां सन्निधौ शेष पठ्यते "अच्छिद्रेण वसो सूर्यस्य रश्मिभि" इति तत्र कथमनुषङ्ग. स्यात्, आकाङ्क्षाविरहात्। न च "अच्छिद्रेण पवित्रेण" इति शेषस्याकाङ्क्षावशात्पुनात्वित्यन्ताना त्रयाणामप्याकाङ्क्षोत्तिष्ठतीति वाच्यम्। सन्निहितेन "देवस्त्वा सविता पुनातु" इत्यन्तिमेनैवान्वयमासाद्य शान्ताकाङ्क्षस्य शेषस्य पूर्वयोरप्यकाङ्क्षोत्थापनाशक्तेरिति चेत्—सत्य पुनात्वन्ता शेपिणो निराकाङ्क्षा, तथापि "अच्छिद्रेण" इति शेष-

1. वाक्यपरिसमाप्ति.

परत्वमेव वक्तव्यम् । ततश्च प्रकाश्यमानायुरादिविशिष्टक्लृप्तिविशेषरूपार्थभेदाद्यजुर्भेद । प्रयोजनं पूर्वपक्षे "इषे त्वोर्ज्जे त्वा" इति च्छेदने पदचतुष्टयं प्रयुज्यते, एवमनुमार्जनेऽपि । सिद्धान्ते तु "इषे त्वा" इति च्छेदने "ऊर्जे त्वा" इत्यनुमार्जने । क्लृप्तिवाक्येषु एकस्य भ्रेषे कृत्स्नस्यावृत्तिः पूर्वपक्षे । सिद्धान्ते तु यस्य भ्रेषस्तस्यैवेति । अत्र "इषे त्वा" इत्यादिसाकाङ्क्षमन्त्रेषु योग्यपदाध्याहारेण "इषे त्वा च्छिनद्मि" "ऊर्जे त्वा अनुमार्ज्मि" इत्यादि प्रयोक्तव्यमिति केचित् । तदयुक्तम्, अध्याहृतस्य लौकिकशब्दस्य वैदिकमन्त्रानवयवत्वेन मन्त्रान्तकर्मादिसन्निपातविरोधात् । ऊहप्रवरनामधेयानान्तु "असौ मानुष इति होतुर्नाम गृह्णाति" "आर्षेयं वृणीते" "त्रीन्वृणीते" "तस्मादृचं नोहेत्" इत्यादिवेदानुमतत्वाल्लौकिकानामपि प्रयोग उचितः । नात्र तथा प्रमाणमस्ति । तस्मादाकाङ्क्षितशब्दानां मनसैव स्मरणम्, न तु प्रयोग. । अर्थाध्याहारपक्षे तु शब्दस्यापि न स्मरणम् । अर्थमात्रमेव स्मर्तव्यमिति प्राचीनमतानुसारी पन्था । चेतनप्रतिपादकेषु मन्त्रेषु तत्स्तुत्यानां देवतानाम् अचेतनप्रतिपादकेषु तदभिमानिदेवतानां शाब्दबोधः, न तु प्रयोक्तुरिति मन्त्राधिकरणेऽवोचाम । ततश्च तत्तन्मन्त्रस्तुत्यदेवता एव शब्दाध्याहारेणार्थाध्याहारेण वा वाक्यार्थमधिगच्छन्तीति याज्ञिकानुसारी युक्त पन्थाः ॥

इति पञ्चदश यजुर्भेदनिरूपणम् ॥ १५ ॥

१६

ज्योतिष्टोमे उपसद्धोममन्त्रा आम्नाताः- "या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपापधीं स्वाहा, या ते अग्ने रजाशया, हराशया" इति । तत्र द्वितीयतृतीयमन्त्रयोः साकाङ्क्षयोराकाङ्क्षापूरणसमर्थो लौकिक [1]शेषोऽध्याहर्तव्यः—'या ते[2] रजाशया प्रजा सास्मान् पातु' इत्येवम्प्रकारेण ? उत पूर्वमन्त्रावयवस्य तनूर्वर्षिष्ठेत्यादेरनुषङ्गेण शेषः पूरणीय ? इति संशय । यदि प्रकारान्तरेणाकाङ्क्षापूरणं न स्यात्तदा गत्यभावादेकत्र निबद्धस्यापि वैदिकस्य वाक्यशेषस्यानुषङ्ग आश्रीयेत । सम्भवति च लौकिकेनापि तत्पूरणम् । अत पूर्वमन्त्रे निबद्धस्य तनूर्वर्षि-

1, किं शेषः ग,घ. 2. ते अग्ने क,घ,ङ,मु पा.

ष्ठेत्यादेरन्यत्रनयनरूपानुषङ्गो न युक्त । अन्यत्रनयने च समाम्नायबहिर्भावाल्लौकिक एव स्यात् । तस्माल्लौकिक एव शेषोऽध्याहर्तव्य ।

इति प्राप्ते, सिद्धान्तयति—

## अनुषङ्गो वाक्यसमाप्तिः[1] सर्वेषु तुल्ययोगित्वात् ॥ ४४ ॥

अनुषज्यत इत्यनुषङ्ग "तनूर्वर्षिष्ठा" इत्यादिवाक्यशेष उत्तरयोरपि वाक्ययोस्समापकः । समाप्तिरिति बाहुलक करणे क्तिन् । कुतोऽनुषङ्ग ? सर्वेषु तुल्ययोगित्वात्-प्रथमद्वितीयतृतीयमन्त्रेषु शेषस्य "तनूर्वर्षिष्ठा" इत्यादे· सन्निधानरूपसम्बन्धस्य तुल्यत्वादित्यर्थं । यदि हि प्रथमस्यैवायं शेषः स्यात्तदान्यत्रनयनादवैदिकत्वं स्यात् । नैतदस्ति; त्रयाणामपि सन्निधावाम्नातत्वात् । एतावदेव हि शब्दानामन्वये कारणम् आकाङ्क्षा सन्निधिर्योग्यत्वञ्च । सन्निधिश्च बुद्धिविपरिवृत्तिमात्रम् । नोपरिष्टादनन्तरञ्च समाम्नाय साधक । नापि पुरस्ताद्व्यवहितञ्च समाम्नायो बाधकः । किन्तु अनन्वितपदान्तरव्यवधानं बाधकम् । तदभावः साधक । अत्र च "तनूर्वर्षिष्ठा" इत्यादिशेषस्य प्रथमद्वितीयाभ्यां न कथञ्चिदपि व्यवधानम् । तृतीयस्यापि वाक्यशेषेण सम्बन्धे द्वितीयं न व्यवधायकम् , द्वितीयास्यनुषज्यमानशेषसाकाङ्क्षतया अन्वितत्वेनानन्वितपदत्वाभावात् । अनन्वितपदान्तरमेव हि बुद्धिविपरिवृत्तेर्बाधकम् , न त्वाकाङ्क्षितान्वितपदमपि । प्रथमेन सम्बद्धो द्वितीयस्याकाङ्क्षावेलाया बुद्धौ विपरिवर्तमानस्तेनापि सम्बध्यते । तत्सम्बन्धाच्च विपरिवृत्त्यभङ्गात्तृतीयेनापि सम्बद्धुं शक्नोति । तथा च बुद्धिविपरिवृत्तिरूपसन्निधानं त्रयाणामविशिष्टमिति सकृदाम्नातस्यापि शेषस्य सर्वार्थत्वाद्वैदिकेनैव शेषेण पूरणसम्भवे लौकिकशेषाध्याहारो न युक्त ।

ननु यत्र सकाङ्क्षाणा सन्निधौ शेष पठ्यते तत्रोक्तरीत्या भवत्वनुषङ्ग । यत्र तु "चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु" इति परिपूर्णानां सन्निधौ शेष पठ्यते "अच्छिद्रेण वसो सूर्यस्य रश्मिभि" इति तत्र कथमनुषङ्गः स्यात् , आकाङ्क्षाविरहात् । न च "अच्छिद्रेण पवित्रेण" इति शेषस्याकाङ्क्षावशात्पुनात्वित्यन्तानां त्रयाणामप्याकाङ्क्षोत्तिष्ठतीति वाच्यम् । सन्निहितेन "देवस्त्वा सविता पुनातु" इत्यन्तिमेनैवान्वयमासाद्य शान्ताकाङ्क्षस्य शेषस्य पूर्वयोरप्याकाङ्क्षोत्थापनाशक्तेरिति चेत्—सत्य पुनात्वन्ता शेषिणो निराकाङ्क्षा , तथापि "अच्छिद्रेण" इति शेष-

1. वाक्यपरिसमाप्ति .

स्य तृतीयाश्रुतिभिर्युक्तस्य करणप्रकाशकस्य तत्करणकानुष्ठेयपवनक्रियाप्रकाशनद्वारा प्रकरणे निवेशो वक्तव्य । सा च पवनक्रिया त्रिष्वपि मन्त्रेषु प्रकाश्यत इति प्रति- प्रधानं गुणावृत्तेर्न्याय्यत्वादनुषङ्ग पूर्वयोरपि सिद्ध ॥

इति षोडशमनुषङ्गाधिकरणम् ॥ १६ ॥

१७

अग्नीषोमीयपशो समञ्जनमन्त्राः—"सं ते [1]वायुर्वातेन गच्छताम् , सयजत्रै- रङ्गानि, सयज्ञपतिराशिषा" इति। हे पशो, ते तव वायु प्राण. वायुना सङ्गच्छतामिति प्रथमस्य मन्त्रस्य योजना। 'सयजत्रैरङ्गानि' इति द्वितीयो मन्त्र । अङ्गानि हृदयादीनि यजत्रै यागै. सम् , 'सृज्यन्ताम्' गच्छन्ताम्' 'पद्यन्ताम्' इत्यादिलौकिक पदमध्या- हर्तव्यम्। न त्वत्र 'गच्छताम्' इत्यनुषङ्गः सम्भवति, 'गच्छताम्' इत्येकवचनस्य 'अङ्गानि' इति बहुवचनान्तेन सम्बन्धायोग्यत्वात्। न च एकवचनस्यानुषङ्गायोग्य- त्वेऽपि धातुमात्रस्यानुषङ्गोऽस्त्विति वाच्यम्। प्रकृतिप्रत्यययोरेकस्यासम्बन्धे सत्यपर- स्याप्यसम्बन्धनियमेन धातुमात्रस्यानुषङ्गायोगात्। अतो द्वितीयमन्त्रे 'गच्छताम्' इत्यस्यानुषङ्गो न युज्यते। तृतीयमन्त्रे 'स यज्ञपतिराशिषा' इत्यत्र तु 'गच्छताम्' इत्यनुषज्यते न वेति संशय । साकाङ्क्षत्वाद्योग्यत्वाच्चानुषज्यत इति प्राप्ते सिद्धान्तयति—

**व्यवायान्नानुषज्यते ॥ ४९ ॥**

बुद्धिपरिवृत्तिरूपसन्निधान ह्यनुषङ्गे बीजमुक्तम्। अत्र तु 'अङ्गानि' इत्यनेन 'गच्छताम्' इत्यन्वयायोग्येन व्यवधानाद्बुद्धिपरिवृत्तिभङ्गादसन्निधानात् 'स यज्ञपति- राशिषा" इत्यत्रापि नानुषज्यते। न च 'गच्छताम्' इत्येकवचनान्तं बहुवचनान्ततया विपरिणतम् 'अङ्गानि' इत्यनेनाप्यन्वीयतामिति वाच्यम्। प्रकृतावूहाभावस्य नवमस्य तृतीये 'अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत' इत्यधिकरणे व्यवस्थापयिष्यमाणत्वात्। तस्मात्तृतीयमन्त्रेऽपि नानुषङ्ग ।

इति सप्तदश व्यवायाधिकरणम् ॥ १७ ॥

इति द्वितीयाध्याये प्रथम पादः ॥

---

1. प्राणो वायुना. ग ड. मु. पा

# द्वितीयः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

वृत्तमुपोद्धातप्रसक्तानुप्रसक्तम् । इदानीमध्यायार्थो भावनाभेदः प्रस्तूयते ।

१

सन्ति "सोमेन यजेत" "दाक्षिणानि जुहोति" "हिरण्यमात्रेयाय ददाति" "प्रउगं शंसति" "आज्यैः स्तुवते" इत्यादावाख्यातानि । तत्र किमेकैव भावना नानाधात्वर्थानुरक्ता विधीयते ? उत तत्तद्धात्वर्थानुरक्ता भिन्नैव ? इति संशयः । एकैवेति ब्रूमः । यदि हि प्रतिधात्वर्थं भावनाभेदः स्यात्तर्हि भावनाभेदादपूर्वमपि भेदेन कल्प्यं स्यात् । न हि भाव्यापूर्वभेदमन्तरेण भावना भिद्यते, क्रियाणां फलापवर्गत्वेन फलभेदमन्तरेण क्रियाभेदस्यासम्भवात् । न च शब्दान्तरत्वेन भावनाभेदसिद्धावनेकापूर्वकल्पनागौरवमपि प्रामाणिकत्वान्न रिष्यतीति[1] वाच्यम् । न हि धातुभेदो भावनां भेत्तुमीष्टे, भावनाया धातुवाच्यत्वाभावात् । प्रत्ययेन हि भावनाभिधीयते । स च सर्वत्रैक एव । अतस्तदर्थस्य भावनाया न भेदः । किञ्च प्रत्ययार्थत्वाद्भावना प्रधानम् । धात्वर्थास्तु तत्र गुणभूता । न च गुणभेदेन प्रधानभेदो युज्यते । न च भावनाया अपूर्वं प्रति गुणत्वेऽपि तद्भेदाद्यथा अपूर्वभेदः, एवं गुणभूतधात्वर्थभेदादपि भावनाभेद किं न स्यादिति वाच्यम्, वैषम्यात् । आख्यातेन हि भावनाया क्रियात्वेन प्रतिपादनात्तत्र कारकत्वमेव धात्वर्थस्य न त्वपूर्ववत्फलत्वम् । ततश्च फलापवर्गत्वात्क्रियाणा तद्भेदे फलभेद आवश्यक न तु कारकभेदे क्रियाभेदः, (जा) अरुणिमादिकारकभेदेऽपि क्रयभावनाया एकत्वात् । तस्मान्न [2]धात्वर्थभेदो भावनाभेदप्रयोजकः । न चोत्पत्तिशिष्टैकधात्वर्थावरुद्धाया भावनाया धात्वन्तरान्वयासम्भवान्नैक्यमिति

1. दुष्यति. क, घ, ङ, मु पा. 2. धात्वर्थभेदेन भावनाभेद, ग.

कोत्पन्नकर्मानुवादेन विधीयमाना हि दध्यादय उत्पन्नशिष्टाः सन्तो न कर्म भिन्दन्ति। न च "तनूनपादग्न आज्यस्य वेतु" इत्यादिमन्त्रवर्णादेव तनूनपादादि-प्राप्तेस्तद्विधिरनर्थक इति वाच्यम्। एकस्यैव यागस्य मान्त्रवर्णिकदेवतावलम्बनेन तनूनपादाद्यनेकदेवताकत्वेन प्रशस्तो याग इत्येवं स्तुत्यर्थत्वेन सार्थक्यात्। यद्यपि स्तुत्यर्थं वाक्यमनर्थप्रायम्, तथापि दृढतराभेदप्रत्यभिज्ञाबलेन कर्मैकत्वस्य न्याय्यत्वेन तन्न दोषावहम्। न हि प्रमाणस्वरसात्प्रतीयमान प्रयोजनानुसारेण परित्यक्तुमुचितम्। न च समिद्वाक्यमेव विधिरितरे स्तुत्यर्था इत्यत्र विनिगमनाविरह इति वाच्यम्। प्रथमश्रुतत्वेन समिद्वाक्यस्यैव विधायकतया चरमश्रुतत्वेनेतरेषां स्तुत्यर्थताया उचितत्वात्। तस्मादेको यागः। तदेकत्वाद्भावनैक्यम्।

इति प्राप्ते, सिद्धान्तयति—

## एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्॥ २॥

"समिधो यजति" इत्यादौ एकस्य यजतेः पुनःश्रुतिरपि एवं–शब्दान्तरवच्छेदिका। हि–यस्मात्कारणात् भेदाभावे विधेः पुनःश्रवणम् अनर्थकं स्यात्। न च स्तुत्यर्थत्वेन सार्थक्य शङ्क्यम्। अप्रवृत्तप्रवर्तन हि विधिश्रुतेः स्वभावसिद्धम्। "य एवं विद्वान्पौर्णमासीं यजते" इति विद्वद्वाक्यन्तु रूपालाभाद्बलवद्बाधकादनुवादकमिति वक्ष्यते। न चात्र किञ्चिद्बाधकमुपलभामहे। अतः सम्भवन्त्यामप्रवृत्तप्रवर्तनात्मतायामनर्थकप्राय स्तुत्यर्थत्व न युक्तमाश्रयितुम्। अतः कर्मभेद एव युक्तः। न चेहापि दृढतरप्रत्यभिज्ञैव बाधिकेति वाच्यम्। प्रत्यभिज्ञा हि 'स एवायं यजतिः' इत्याकारा। तत्र 'यजति' इत्यंश एव यजतिश्रुत्या गम्यते, न 'सोऽयम्' इति तत्तांशः, 'सोऽयम्' इत्यभेदबुद्धे पदान्तरसन्निधिकृतत्वात्। न हि सन्निधिकृतप्रत्यभिज्ञया विधिश्रुतिकृतकर्मभेदस्य बाध सम्भवति। तस्माद्विधिश्रुत्या कर्मभेद। एतेन सन्निधिकृतप्रत्यभिज्ञाया अबाधाय पुन.श्रवण गुणविधानार्थमिति निरस्तम्। यागकरणिका हि भावना [1]प्रत्ययश्रुत्या विधीयत इति कर्मविधौ श्रुत्यनुग्रहः सन्निधिकृताभेदप्रत्यभिज्ञाबाधात्सन्निधिबाधश्च, गुणविधौ तु तनूनपादादिगुणस्योपपदार्थस्य वाक्येन विधानं सन्निधिकृताभेदप्रत्यभिज्ञाया अबाधश्चेति सन्निधिवाक्यप्रमाणयोरनुग्रह. श्रुति-

1. प्रत्ययेन ख, ग.

२

समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति पञ्चकृत्वो यजतिपदं श्रुतम्। तत्किमेकां भावनां प्रतिपादयति? उत प्रतिपदं भेदेन? इति संशयः। एकामिति ब्रूमः। प्रत्ययांशैक्येऽपि प्रकृतिभूतधात्वर्थानुरञ्जकभेदात्प्रत्ययार्थोऽपि भावना भिद्यत इत्युक्तम्। इह तु प्रकृत्यर्थस्यापि यागस्यैकत्वात्कथं भावनाभेदः। न हि पुनःश्रवणमात्रेण शब्दस्यार्थो भिद्यते। तदेव हि पदं [1]पुनः श्रूयते, अभेदेन प्रत्यभिज्ञानात्। न च शब्दस्य भेदं विना तदर्थभेदः प्रामाणिकः। तस्मान्नात्र भावनाभेदः। ननु मास्त्वभ्यासात्कर्मभेदलाभः। समिदादिसञ्ज्ञाभेदात्तु कर्मभेदः स्यात्। "अथैष ज्योतिरथैष विश्वज्योतिः" इत्यादौ संज्ञाभेदात्कर्मभेदस्य 'संज्ञा चोत्पत्तिसंयोगात्' इत्यत्रानुपदमेव वक्ष्यमाणत्वादिति चेत्, नैष दोषः, समित्तनूनपादादिशब्दानां हि संज्ञात्वं वदन् प्रष्टव्यः सञ्ज्ञात्वावगमात्पूर्वं कर्मभेदोऽवगतो न वेति। न द्वितीयः, तर्हि यागैकत्वे सति प्राथमिकसञ्ज्ञावरुद्धे तस्मिन् यागे तनूनपादादिसञ्ज्ञान्तरनिवेशायोगेन तनूनपादादिशब्दानां संज्ञात्वस्यैवासिद्धेः। नाद्यः, संज्ञात्वावगमात्पूर्वं कर्मभेदग्राहकप्रमाणाभावात्पुनःश्रवणस्य च दृढतराभेदप्रत्यभिज्ञासिद्धयजिधात्वर्थैकत्व[2]विरुद्धतद्भेदप्रयोजकत्वाभावात्। एवञ्च तनूनपादादिशब्दानां संज्ञात्वावगमे कर्मभेदः, कर्मभेदावगमे च सति तेषां संज्ञात्वमित्यन्योन्याश्रयः। "अथैष ज्योतिरथैष विश्वज्योतिः" इत्यत्र तु यागशब्दाभावात्तत्र यागभेदावगमं विना सञ्ज्ञात्वावगमः स्पष्ट इति वक्ष्यते। "उद्भिदा यजेत" इत्यादौ तु धातुपारार्थ्यविप्रकृष्टविधानादिदोषप्रसङ्गेन गुणविध्यसम्भवादेव संज्ञात्वनिश्चय इति प्रागेव निरूपितम्। अतस्तत्रापि यागभेदावगमं विनैव संज्ञात्वावगम इति वैषम्यम्। न चैवमपि यजतिपदस्य पुनःश्रवणानर्थक्यं शङ्क्यम्, समिद्यागे तनूनपादादिदेवताविधानार्थत्वात्। न चैवमपि गुणाद्भेदः स्यात्, 'गुणश्चापूर्वसंयोगे' इत्यधिकरणे गुणस्यापि कर्मभेदकताया अनुपदमेव वक्ष्यमाणत्वादिति वाच्यम्, वैषम्यात्। गुणाधिकरणे ह्युत्पन्नशिष्टो गुणः उत्पत्तिशिष्टगुणावरुद्धे कर्मणि निवेशमलभमानः कर्म भिनत्तीति वक्ष्यते। प्रकृते च समित्सञ्ज्ञके कर्मणि तनूनपादादिगुणा उत्पन्नशिष्टाः सम्भवन्निवेशाः कथं कर्म भिन्द्युर्दध्यादिवत्। "अग्निहोत्रं जुहोति" इति द्रव्यासंयु-

---

1. पुनः पुनः ग, घ 2. धात्वेकत्वलब्धयागैकत्वविरुद्ध क, घ.

"अथ तनूनपातं यजति" 'अथेडः" इति प्रतिपदमथशब्दाश्चासमञ्जसाः स्युः। तथा सिद्धान्ते समिदादिशब्दानां नामधेयत्वकथनमप्ययुक्तम्, आनर्थक्यात्। नाम्नां हि चत्वारि प्रयोजनानि भाष्यादौ दर्शितानि। तत्र सङ्कल्पर्त्विग्वरणादौ 'अनेनाहं यक्ष्ये' इति लघूपायेनाख्यानमेकम्। न च समिदादियागानामङ्गभूताना सङ्कल्पो वा ऋत्विग्वरण वास्ति। "दर्शपूर्णमासावारप्स्यमाणोऽन्वारम्भणीयामिष्टिं निर्वपति" इति क्वचिद्गुणोपबन्धः फलम्। न चात्र समिदादिशब्दोपबन्धेन किञ्चिद्विधीयमानमस्ति। न च "समिध पुरस्ताद्यजति" "तनूनपातं दक्षिणतः" इत्यादिगुणोपबन्धः फलमिति वाच्यम्। 'सम्प्रदानस्य च कर्मसञ्ज्ञा वक्तव्या' इति व्याकरणबलेन 'अग्निं यजति' इत्यादिवद्द्वितीयायाः सम्प्रदानत्वार्थकतया समिदादिदेवतायै आहुतिमाहवनीयस्य पुरस्ताद्भागे जुहुयादित्येवमर्थपर्यवसानेनादोषात्। "दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इति फलोपबन्धः। न चाङ्गभूतानामेतेषां फलोपबन्धसम्भवः। "अथैष ज्योति" इत्यादौ कर्मभेदः फलम्। सङ्ख्यया चात्र कर्मभेदः सिद्धः। तथा च नामधेयत्वे प्रयोजनाभावाद्देवतालक्षणगुणविधानार्थत्वमेव। समिदादिशब्दानाञ्च देवतानामत्व सङ्कर्षकाण्डादवगतम्। तत्र हि द्वितीयाध्यायस्य द्वितीयपादे 'तत्र देवतानामादेशो न विद्यतेऽनाम्नानात्' इति पूर्वपक्षसूत्रे 'यज' इति याज्याप्रैषे देवतानामधेयं नादेष्टव्यमिति पूर्वपक्षयित्वा, 'विद्यते वान्यार्थदर्शनेभ्यः' इति सूत्रेण 'यत्तनूनपात यजेडो यजेति ब्रूयाज्जामि स्यात्" इति प्रयाजेषु देवतादेशस्य निन्दया तदितरत्र देवतादेशविधिरनुमीयत इति सिद्धान्तयित्वा, 'आम्नातः प्रयाजेषु देवतादेशस्तस्य प्रतिषेधो वचनमितरेषु' इति गुणसूत्रेण शाखान्तरे "तनूनपातं यज" इत्यादिप्रत्यक्षविहितस्य देवतादेशस्य 'यत्तनूनपातं यजेडो यजेति ब्रूयात्" इति निन्दा, अत प्रयाजेभ्योऽन्यत्र न देवतादेश. "आश्राव्य ब्रूयादिन्द्र यजेति" "आश्राव्य ब्रूयान्मरुतो यजेति" इत्यादिवचनाभावे सति इत्याक्षिप्य, 'आम्नातो वैकेषां तद्दर्शयत्यमुष्मा अनुब्रूह्यमुं यजेति' इति सूत्रेण सर्वत्र याज्याप्रैषादौ देवतादेश' कर्तव्य इति शाखान्तरे प्रत्यक्षविहितम्, क्वचित् 'इन्द्र यज' इत्यादिवचनन्त्वनुवाद इति समाहितम्। न च "समिधो अग्न आज्यस्य वियन्तु" इत्यादिमन्त्रवर्णत एव तत्प्राप्तेरानर्थक्यमिति वाच्यम्। हे अग्ने, समिध. आज्य प्राप्नुवन्तु इत्येवमग्ने. शाब्दप्राधान्यान्मन्त्रस्तुत्यत्वलक्षणदेवतात्वम्, समिदादीना तु हविर्भागित्वलक्षण देवतात्वमित्युभयेषामपि देवतात्वेन "यस्यै देवतायै हविर्गृहीत स्यात्तां ध्यायेद्वषट्करिष्यन्" इति सङ्कर्ष-

बाधश्च । न चैतद्युज्यते, दुर्बलाभ्या सन्निधिवाक्याभ्यां श्रुतिबाधस्यायुक्तत्वात् । ननु "दध्ना जुहोति" इत्यादौ सन्निहितप्रत्यभिज्ञाबलादेव धात्वर्थभावनयोर्विधिबोधितत्वात्पदान्तरार्थस्य दध्यादेर्विधानमङ्गीकृतम् । तद्वदिहापि किं न स्यादित्यत आह— अविशेषादिति । दध्यादिवद्विधेयविशेषस्याभावादित्यर्थ । दध्यादेरविधाने दध्यादिपदानर्थक्यापत्त्या तद्विधानावश्यकत्वेऽनेकार्थविधानाशक्त्या कर्मानुवादाकाङ्क्षाया सन्निधिकृताभेदज्ञानं दध्यादिरनुमन्यते । नैव "तनूनपातम्" इत्यादिपद तद्विध्यभावेऽनर्थकम्, मन्त्रवर्णप्राप्तदेवतोपजीविनो[1] नामधेयतयार्थवत्त्वसम्भवात् । एवञ्च श्रुत्यवगतं कर्मविधानं न बाधितव्य भवति । अतो यागभेदाद्भावनाभेदस्तद्भेदाच्चापूर्वभेद इति सिद्धम् ।

अत्र ब्रूमः "समिधो यजति" इत्येव विधिः "तननूपात यजति" इत्यादयोऽर्थवादा इति पूर्वपक्षस्य कथमुन्मेष., 'पृथक्त्वनिवेशित्वात्सख्यया कर्मभेद. स्यात्' इति वक्ष्यमाणन्यायेन(ह्वा) सङ्ख्यया कर्मभेदस्य निश्चितत्वात् । वाजसनेयके हि "देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त" इत्युपक्रम्य "ते देवा अर्चन्तःश्राम्यन्त एतान् प्रयाजान्ददृशुः । तैरयजन्त तैर्ऋतून्प्राजनयन्नृतुभ्य सवत्सरं सवत्सरात्सपत्नानन्तरायन् । तस्मात्प्रयाजा नाम । प्रजया ह वै नामैतद्यत्प्रयाजा इत्याहुस्तस्मात्प्रयाजैर्यजते" "ऋतवो वै प्रयाजास्तस्मात्पञ्च भवन्ति" इत्युपक्रम्य "त आज्यहविषो भवन्ति यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्तत एव नापक्रमेत् आश्राव्याह समिधो यजेति यज यजेत्येवोत्तरानाह, समिधो यजति, अथ तनूनपातं यजति, अथेडो यजति, अथ बर्हिर्यजति, अथ स्वाहेति यजति, वेतु व्यन्त्विति यजति उत्तमे प्रयाजे यावन्ति हवींषि भवन्ति स्वाहा स्वाहेत्येव तानि यजति, उत्तमं प्रयाजमिष्ट्वा हवींष्यभिघारयति, प्रथमे प्रयाज इष्टे ब्रूयादेको ममैका तस्येति, द्वितीये द्वौ मम द्वे तस्येति, तृतीये त्रयो मम तिस्रस्तस्येति, चतुर्थे चत्वारो मम चतस्रस्तस्येति, पञ्चमे पञ्च मम न तस्य किञ्चनेति", "उत्तमान्प्रयाजानावाहयन्ति प्रथमान्यजन्ति" इत्यादि श्रूयते । तत्रोत्पत्तौ 'प्रयाजै' इति बहुवचनेन सङ्ख्यया कर्मभेदस्यैवावगतत्वात्कर्मैक्यपक्षस्यानुन्मेष एव । कर्मैक्ये च "यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्तत एव नापक्रमेत्" "यज यजेत्युत्तरान्" "प्रथमे प्रयाज इष्टे उत्तमं प्रयाजमिष्ट्वा" इत्याद्यनुपपन्न स्यात्,

1. उपजीवनेन. क, ग, घ, ङ, मु. पा.

लक्ष्यते। तं करोतीति स्वाहाकारः हैमन्तिकोऽग्निः। तदा खलु हिमाग्निना भावा दग्धा अवसन्ना भवन्तीति। यद्वा समिदादिशब्दा उक्तव्युत्पत्त्या वसन्तादिपरा, "वसन्तो वै समित्" "ग्रीष्मो वै तनूनपात्" इत्यादिवाक्यशेषात्। तथा च हे अग्ने समिदादिशब्दवाच्यो वसन्तादिः आज्यं प्राप्नोतु स वसन्तादिस्तुभ्यमपि दास्यतीत्यर्थं, अन्यथा 'अग्ने' इति सम्बोधनस्य वैयर्थ्यात्। अत एव वाजसनेयके "ऋतवो ह वै यज्ञे देवेषु भागमीपिरे" इत्युपक्रम्य श्रूयते "तान्हाग्निरुपामन्त्रयाञ्चक्रे। ते होचुः। क भागमभ्ययामेति। स होवाच। प्रथमानेव वो यज्ञेन यजामहा इति। तथेति होचुः। वयं त्वान्वाभजामेति। यो नो अग्ने देवेषु भागमविद इति। स एषोऽग्निर्ऋतुष्वन्वाभक्तः समिधो अग्ने तनूनपादग्ने इडो अग्ने इति। तदग्निमन्त सर्वे प्रयाजा। अन्वाभक्तो ह वै तस्या साधुकृत्यायाम्' इत्यादि। अतोऽग्निदेवत्यत्वप्रतिपादनपरकौषीतकिब्राह्मणस्यापि न विरोधः। तस्मात्समिदादिवाक्यानि याज्याविधिपराण्येव। अत एव "देवा ह वै यज्ञ तन्वानाः" इत्युपक्रम्य "तमेतस्मिन्नेवोत्तमे प्रयाजे स्वाहाकारेण सर्वं यज्ञं समस्थापयन्। स्वाहाग्निमिति तदाग्नेयमाज्यभागम्। स्वाहा सोममिति तत्सौम्यमाज्यभागम्। स्वाहाग्निमिति तदाग्नेयमष्टाकपालं पुरोडाशं योऽयमुभयत्राच्युतो भवति। अथ यथादेवत स्वाहा देवा आज्यपा इति। तत्प्रयाजानूयाजानाह। जुषाणा अग्न आज्यस्य वियन्त्विति तत्स्विष्टकृतम्। तस्मादुत्तमे प्रयाजे यावन्ति हवींषि स्वाहा स्वाहेत्येव तानि यजन्ति" इति याज्याव्याख्यानपुरःसरमुत्तमप्रयाजमनूद्य इतिशब्देन तद्विधि सङ्गच्छते। कर्मविधिपरत्वे तु तदसङ्गतिः स्पष्टैव।

तैत्तिरीयकेऽपि "सत्यं प्रपद्ये" इति मन्त्रसमाम्नायस्य कृत्स्नप्रश्नस्य विनियोजक ब्राह्मणम् "देवा वै नर्चि" "अयज्ञो वा एष." "अग्ने महाँ असीत्याह" "त्रींस्तृचाननुब्रूयात्" "निवीत मनुष्याणाम्" "समिधो यजति" "चक्षुषी वा एते यज्ञस्य" "मनु. पृथिव्या यज्ञियम्" "पशवो वा इडा स्वयम्" "अग्नीध आदधाति" "देवा वै यज्ञस्य" इत्याम्नातम्। तत्रादितः पञ्चभिरनुवाकैः "अग्निर्होता वेत्वग्नि" इति स्रुगादापननिगदान्ते मन्त्रसमाम्नाये विनियुक्ते तदनन्तरपठिता. "समिधो अग्न आज्यस्य वियन्तु" इत्यादिमन्त्रा. "समिधो यजति" इत्यनुवाके विनियोज्यन्त[1] इत्युचितम्। "चक्षुषी वा एते यज्ञस्य' इत्यनुवाके तदनन्तरमन्त्राणाम् "अग्निर्वृत्राणि"

1. विनियुज्यन्ते. ग.

काण्डे वक्ष्यमाणदेवताशब्दध्यानादिकार्यमग्निशब्दस्य निवर्तयितुं समिदादिदेवता-विधानस्यावश्यकत्वात्। न चैत्र सति कौषीतकिब्राह्मणे "देवासुरा एषु लोकेषु सयत्ता [1]आसस्तेभ्योऽग्निरपाक्रामत्" इति प्रस्तुत्य 'स एतं वरं वव्रे प्रयाजान्मेऽनूयाजांश्च केवलानूर्जस्वन्त हविषो दत्तभागं घृतं चापां पुरुष चौषधीनामिति तस्मादाहुराग्नेयाः प्रयाजानूयाजा." इत्यग्निदेवत्यत्वश्रवणविरोध इति वाच्यम्। अत एव विकल्पो-पपत्ते.। वस्तुतस्तु "समिधो यजति" इत्यादयो होतुर्याज्याविधय एवेत्युचितम्, "आश्राव्याह समिधो यजेति यज यजेत्युत्तरान्" इत्यनन्तरम् "समिधो यजति" इत्याम्नानात्। 'समिधो यज' इत्याध्वर्यवसम्प्रैषानन्तर होतुर्याज्यानुक्रमणस्यैव प्राप्ता-वसरत्वात्। 'समिधो यज' इति सम्प्रेषस्य हि 'होतः समिधो याज्यया प्रकाशय' इत्यर्थः, देवतोद्देश्यकद्रव्यत्यागे होतुर्नियोजनासम्भवात्। "समिधो यजति" इत्यादे-रप्ययमेवार्थ.। "समिध समिधो अग्न आज्यस्य वियन्तु" इत्यादियाज्या वदतीति पर्यवस्यति। न च "आग्नेयाः प्रयाजाः" इति कौषीतकिब्राह्मणरीत्याग्निदेवत्यत्वे 'समिधो यज' इति सम्प्रैषानुपपत्तिरिति वाच्यम्। तत्राग्निशब्दस्य समिदादिनामका-ग्निविशेषपरत्वेनाविरोधात्, सङ्कर्षकाण्डे द्वितीयस्य द्वितीयपादाद्याधिकरणे "स यत्रैत-दध्वर्युराह समिधो यजेत्याग्नयमेतद्रूप [2]परोक्षमग्निं यजेत्येव तदाह" इत्यादिभाष्यो-दाहृतश्रुतेश्च। 'समिदादयोऽग्निविशेषा प्रयाजदेवता' इत्युपक्रम्य भट्टभास्करीयवेद-भाष्ये समिदादिशब्दाना तथैव व्याख्यातत्वाच्च।

तद्यथा 'समिध्यन्ते येन भावा.। समिद्वासन्तिकोऽग्निः। तदा हि भावाः समुज्ज्वला भवन्ति। बहुत्वमविवक्षितम्। "समिधो बह्वीरिव यजति" इति बहुत्व-स्येवशब्देनापारमार्थिकत्वद्योतनात्। हे अग्ने आहवनीय समिन्नामा वासन्तिकोऽग्नि. आज्यं प्राप्नोत्वित्यर्थ । [3]तनू न पातयिता संशोषयिता ग्रैष्मोऽग्निः। तदा हि भावानां शोषो भवति। इषमन्न करोति इट् वार्षिकोऽग्निः। 'तत्करोति' इति णिचि क्विपि रूपम्। तदा हि सस्यान्युद्भवन्ति। बहुत्वमविवक्षितम्। "इडो बह्वीरिव यजति" इति ब्राह्मणम्। बृंहणाद्बर्हिः शारदोऽग्नि'। तदा हि भावा बृहन्ति। स्वाहाशब्देन दाहो

1. आसु क, ख, ग, घ, मु पा 2. आग्नेयमेव तद्रूप. क, घ, ग, ङ, मु पा.

3. तनूना न पातयिता सकोचयिता. क, ग, घ, ङ, मु पा

लक्ष्यते । तं करोतीति स्वाहाकार. हैमन्तिकोऽग्नि. । तदा खलु हिमाग्निना भावा दग्धा अवसन्ना भवन्तीति । यद्वा समिदादिशब्दा उक्तव्युत्पत्त्या वसन्तादिपरा., "वसन्तो वै समित्" "ग्रीष्मो वै तनूनपात्" इत्यादिवाक्यशेषात् । तथा च हे अग्ने समिदादिशब्दवाच्यो वसन्तादिः आज्यं प्राप्नोतु स वसन्तादिस्तुभ्यमपि दास्यतीत्यर्थ, अन्यथा 'अग्ने' इति सम्बोधनस्य वैयर्थ्यात् । अत एव वाजसनेयके "ऋतवो ह वे यज्ञे देवेषु भागमीषिरे" इत्युपक्रम्य श्रूयते "तान्हाग्निरुपामन्त्रयाञ्चक्रे । ते होचु । क भागमभ्ययामेति । स होवाच । प्रथमानेव वो यज्ञेन यजामहा इति । तथेति होचु । वयं त्वान्वाभजामेति । यो नो अग्ने देवेपु भागमविद इति । स एपोऽग्निर्ऋतुष्वन्वाभक्त. समिधो अग्ने तनूनपादग्ने इडो अग्ने इति । तदग्निमन्त सर्वे प्रयाजा. । अन्वाभक्तो ह वै तस्या साधुकृत्यायाम्' इत्यादि । अतोऽग्निदेवत्यत्वप्रतिपादनपरकौपीतकिब्राह्मणस्यापि न विरोध. । तस्मात्समिदादिवाक्यानि याज्याविधिपराण्येव । अत एव "देवा ह वै यज्ञं तन्वानाः" इत्युपक्रम्य "तमेतस्मिन्नेवोत्तमे प्रयाजे स्वाहाकारेण सर्वं यज्ञ समस्थापयन् । स्वाहाग्निमिति तदाग्नेयमाज्यभागम् । स्वाहा सोममिति तत्सौम्यमाज्यभागम् । स्वाहाग्निमिति तदाग्नेयमष्टाकपालं पुरोडाशं योऽयमुभयत्राच्युतो भवति । अथ यथादेवत स्वाहा देवा आज्यपा इति । तत्प्रयाजानूयाजानाह । जुषाणा अग्न आज्यस्य वियन्त्विति तत्स्विष्टकृतम् । तस्मादुत्तमे प्रयाजे यावन्ति हवींषि स्वाहा स्वाहेत्येव तानि यजन्ति" इति याज्याव्याख्यानपुरःसरमुत्तमप्रयाजमनूद्य इतिशब्देन तद्विधिः सङ्गच्छते । कर्मविधिपरत्वे तु तदसङ्गतिः स्पष्टैव ।

तैत्तिरीयकेऽपि "सत्य प्रपद्ये" इति मन्त्रसमाम्नायस्य कृत्स्नप्रश्नस्य विनियोजक ब्राह्मणम् "देवा वै नर्चि" "अयज्ञो वा एष:" "अग्ने महाँ असीत्याह" "त्रींस्तृचाननुब्रूयात्" "निवीत मनुष्याणाम्" "समिधो यजति" "चक्षुषी वा एते यज्ञस्य" "मनुः पृथिव्या यज्ञियम्" "पशवो वा इडा स्वयम्" "अग्नीध आदधाति" "देवा वै यज्ञस्य" इत्याम्नातम् । तत्रादितः पञ्चभिरनुवाकै "अग्निर्होता वेत्वग्नि" इति स्रुगादापननिगदान्ते मन्त्रसमाम्नाये विनियुक्ते तदनन्तरपठिता' "समिधो अग्न आज्यस्य वियन्तु" इत्यादिमन्त्राः "समिधो यजति" इत्यनुवाके विनियोज्यन्त[1] इत्युचितम् । "चक्षुषी वा एते यज्ञस्य" इत्यनुवाके तदनन्तरमन्त्राणाम् "अग्निर्वृत्राणि"

1. विनियुज्यन्ते. ग.

काण्डे वक्ष्यमाणदेवताशब्दध्यानादिकार्यमग्निशब्दस्य निवर्तयितुं समिदादिदेवताविधानस्यावश्यकत्वात्। न चैव सति कौषीतकिब्राह्मणे "देवासुरा एषु लोकेषु सयत्ता [1]आसस्तेभ्योऽग्निरपाक्रामत्' इति प्रस्तुत्य 'स एतं वरं वव्रे प्रयाजान्मेऽनूयाजाश्च केवलानूर्जस्वन्त हविषो दत्तभागं घृतं चापा पुरुषं चौषधीनामिति तस्मादाहुराग्नेयाः प्रयाजानूयाजा." इत्यग्निदेवत्यत्वश्रवणविरोध इति वाच्यम्। अत एव विकल्पोपपत्ते.। वस्तुतस्तु "समिधो यजति" इत्यादयो होतुर्याज्याविधय एवेत्युचितम्, "आश्राव्याह समिधो यजेति यज यजेत्युत्तरान्" इत्यनन्तरम् "समिधो यजति" इत्याम्नानात्। 'समिधो यज' इत्याध्वर्यवसम्प्रैषानन्तर होतुर्याज्यानुक्रमणस्यैव प्राप्तावसरत्वात्। 'समिधो यज' इति सम्प्रैषस्य हि 'होत' समिधो याज्यया प्रकाशय' इत्यर्थ., देवतोद्देश्यकद्रव्यत्यागे होतुर्नियोजनासम्भवात्। "समिधो यजति" इत्यादेरप्ययमेवार्थ.। "समिध समिधो अग्न आज्यस्य वियन्तु" इत्यादियाज्या वदतीति पर्यवस्यति। न च 'आग्नेयाः प्रयाजाः" इति कौषीतकिब्राह्मणरीत्याग्निदेवत्यत्वे 'समिधो यज' इति सम्प्रैषानुपपत्तिरिति वाच्यम्। तत्राग्निशब्दस्य समिदादिनामकाग्निविशेषपरत्वेनाविरोधात्, सङ्कर्षकाण्डे द्वितीयस्य द्वितीयपादाद्याधिकरणे "स यत्रैतदृध्वर्युराह समिधो यजेत्याग्नयमेतद्रूप [2]परोक्षमग्निं यजेत्येव तदाह" इत्यादिभाष्योदाहृतश्रुतेश्च। 'समिदादयोऽग्निविशेषा प्रयाजदेवता' इत्युपक्रम्य भट्टभास्करीयवेदभाष्ये समिदादिशब्दाना तथैव व्याख्यातत्वाच्च।

तद्यथा 'समिध्यन्ते येन भावा'। समिद्वासन्तिकोऽग्नि'। तदा हि भावा' समुज्ज्वला भवन्ति। बहुत्वमविवक्षितम्। "समिधो बह्वीरिव यजति" इति बहुत्वस्येवशब्देनापारमार्थिकत्वद्योतनात्। हे अग्ने आहवनीय समिन्नामा वासन्तिकोऽग्नि आज्यं प्राप्नोत्वित्यर्थ । [3]तनूं न पातयिता संशोषयिता ग्रैष्मोऽग्नि'। तदा हि भावाना शोषो भवति। इषमन्नं करोति इट् वार्षिकोऽग्निः। 'तत्करोति' इति णिचि क्विपि रूपम्। तदा हि सस्यान्युद्भवन्ति। बहुत्वमविवक्षितम्। "इडो बह्वीरिव यजति" इति ब्राह्मणम्। बृंहणाद्बर्हि' शारदोऽग्नि'। तदा हि भावा बृंहन्ति। स्वाहाशब्देन दाहो

1. आसु क, ख, ग, घ, मु पा 2. आग्नेयमेव तद्रप. क, घ, ग, ङ, मु पा.
3. तनूना न पातयिता सकोचयिता. क, ग, घ, ङ, मु. पा

"वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधवन्ती अमावास्यायाम्" इति वाक्यविनियुक्तमन्त्रवर्णतो देवतालाभाच्च। "अग्निर्वृत्राणि" "त्वं सोमासि" इत्यृचौ वृत्रहननप्रकाशिके वार्त्रघ्न्यौ। "अग्नि प्रत्नेन मन्मना" "सोम गीर्भिष्ट्वा वयम्" इत्यृचौ वृद्धिप्रकाशकत्वाद्वृधन्वत्यौ। छान्दस रूपम्। अनूच्यते पुरोनुवाक्ये क्रियेते। न च "सर्वस्मै वा एतद्यज्ञाय गृह्यते" इति वाक्यस्य वैशब्दोपबन्धेन विधायकत्वासम्भवात्, "वार्त्रघ्नी पूर्णमासे" इति वाक्ययोश्च मन्त्रसमाम्नाये अविशेषपठितस्य पुरोनुवाक्यायुगलद्वयस्याज्यभागयो. कालद्वयगतयोरव्यवस्थया प्राप्तौ, तयोर्व्यवस्थार्थत्वस्य तृतीयाद्ये 'मिथश्चानर्थ' इत्यत्र वक्ष्यमाणत्वाच्च न ततो द्रव्यदेवतालाभ इति वाच्यम्। 'सर्वस्मै' इति स्पष्टतादर्थ्य-चतुर्थीबलेन विधायकत्वे सिद्धे वैशब्दस्य यदाग्नेयादिवाक्ये यच्छब्दस्येव विधिशक्ति-प्रतिबन्धकत्वाभावात् 'मिथश्चानर्थ' इत्यधिकरणसिद्धान्तस्यैतदधिकरणपूर्वपक्षावसरे-ऽनुन्मेषाच्च। तत्र हि वार्त्रघ्नीवृधन्वतीवाक्ययोराग्नेयादिषु मन्त्रविधायकत्व न भवति, तेषाम् "अग्निर्मूर्धा" इत्यादिपुरोनुवाक्यावरुद्धत्वात् केवलस्य सोमस्य देवतात्वाभावेन सोमदेवत्ययाज्यानुवाक्यायुगलस्य तेषु विध्यसम्भवाच्च, नाप्याज्य-भागयोर्मन्त्रविधायकत्वम्, तयोः क्रमादेव तत्प्राप्तेः, अत आज्यभागयो' पुरोनुवा-क्याव्यवस्थापकत्वं तद्वाक्ययोरिति सिद्धान्तो भविष्यति। विद्वद्वाक्ययोर्विधायकत्वे च तद्विहितकर्मणोरेव मन्त्रविधानमिमे वाक्ये कर्तुं शक्नुत, मन्त्रान्तरावरोधरूप-बाधकाभावात्। न च सन्निधानादाज्यभागयोरेव मन्त्रप्राप्तिरस्त्विति वाच्यम्। वाक्यतो विद्वद्वाक्यविहितकर्मणोर्मन्त्रविधिसम्भवे दुर्बलसन्निधिवशेनाज्यभागार्थताया असम्भवात्। एवञ्चेदानीमाज्यभागयोः पुरोनुवाक्यायुगलद्वयस्य प्राप्तेरेवाभावेन तद्व्यवस्थार्थत्वसिद्धान्तस्य कथमुन्मेष.। न च विद्वद्वाक्यविहिते एकैकस्मिन्कर्मणि पुरोनुवाक्यायुगलस्य कथं सन्निवेश इति वाच्यम्। एकस्या ऋचः पुरोनुवाक्यात्वेन अन्यस्या याज्यात्वेन च समावेशोपपत्तेः। न च "अनूच्येते" इति विरोधः शङ्क्य', याज्याया अपि प्रैषानन्तरमुच्चारणीयत्वेन तदविरोधात्। न चैव सति कथमाज्यभाग-योर्मन्त्रदेवताप्राप्तिरिति वाच्यम्। "जुषाणो अग्निराज्यस्य वेतु" "जुषाण' सोम आज्यस्य हविषो वेतु" इत्यनयोराज्यभागाभ्यामन्यत्र विधानाभावेन तयोः सन्निधि-प्राप्ताज्यभागाङ्गत्वानपायात् तत एवाज्यदेवतयोर्लाभात्। [1]अनुवाक्याद्वयञ्च तयो-

1. अनुवाक्याद्वय च तयोरग्नीषोमदेवताकम् 'अग्नीषोमाविमं सुमे अग्नीषोला हविष. प्रस्थितस्य' इत्यादिकमागमयितव्यम्. क, मु. पा.

इत्यादीनाम् "ऋचमनूच्याज्यभागस्य जुषाणेन यजति" "मूर्धन्वती पुरोनुवाक्या भवति" "नियुत्वत्या यजति" "पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति उपरिष्टाल्लक्ष्मा याज्या" इति विनियोगवचनाच्च । मध्ये "आघारमाघारयति" "अभिक्राम जुहोति" इत्याद्याध्वर्यवाम्नानं तु प्रासङ्गिकम् । तथा बाह्वृच्ये कौषीतकब्राह्मणे हौत्रैकविधिपरे "अथ पुरस्तात्सामिधेनीना जपति" इति प्रस्तुत्य सामिधेन्यनुवाचनादिस्रुगादापनान्तमनुक्रम्य "प्रयाजान्यजति । ते वै पञ्च भवन्ति । समिधो यजति, तनूनपात यजति, इडो यजति, बर्हिर्यजति, स्वाहाकृतिमन्ततो यजति, उत्तमे प्रयाजे देवता. समावपति, पौर्णमास्या वार्त्रघ्नावाज्यभागौ भवतोऽमावास्याया वृधन्वन्तौ, अग्निं प्रथमं देवताना यजति, अथ पौर्णमास्यामग्नीषोमौ यजति" इत्यादि । तस्मात्समिदादिवाक्यानि याज्याविधिपराण्येवेति वेदार्थज्ञानकुशला मीमांसकशिरोमणयो विदाङ्कुर्वन्तु । अधिकरणस्योदाहरण तु "वाजप्रसवीय जुहोति" "राष्ट्रभृतो जुहोति" "वातनामानि जुहोति" इत्याद्युदाहार्यम् ॥

इति द्वितीयमभ्यासाधिकरणम् ॥ २ ॥

३

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्या चाच्युतो भवति" "ताभ्यामेतमग्नीषोमीयमेकादशकपाल पूर्णमासे प्रायच्छत्" "उपांशुयाजमन्तरा यजति" तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्या यजन्" "ऐन्द्रं दध्यमावास्यायाम्" 'ऐन्द्रं पयोऽमावास्यायाम्" इति कालसंयुक्तानि वाक्यानि श्रूयन्ते । तथा "प्रयाजान्यजति" "आज्यभागौ यजति" "स्विष्टकृतं यजति" इत्यादीन्यकालसंयुक्तानि । तत्सन्निधाविदमाम्नायते—"य एवं विद्वान्पौर्णमासीं यजते" "य एवं विद्वानमावास्या यजते" इति । तत्र सशय.–किमत्र यजती अपूर्वयो. कर्मणोः पौर्णमास्यमावस्यासज्ञकयोर्विधातारौ ? उताग्नेयादियागाना [1]कालसंयुक्तत्तया श्रुताना तादृशकालरूपप्रवृत्तिनिमित्तकाभ्या पौर्णमास्यमावास्यापदाभ्या विशेष्यमाणावनुवदितारौ ? इति। विधिपुन.श्रुत्या विधायकाविति ब्रूम. । न च द्रव्यदेवतयोरलाभात्कथ यागान्तरतेति वाच्यम् । "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति द्रव्यलाभात्

1. कालसयुक्ताना. ग.

परत्वं यजेः शङ्क्यम्, कालसंयुक्तानां यागानां बहुत्वेन द्विवचनानुपपत्ते । न च समुदायद्वयाभिप्रायं द्विवचनमिति वाच्यम्। समुदायद्वयं[1] हि किं फलवाक्यादन्यत्र सिद्धम् ? उत फलवाक्य एव ? नाद्य ,एकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायापत्ति'। एकावगतिश्चैकाभिधानप्रयुक्ता । न चात्रैकाभिधानमस्ति, विद्वद्वाक्यव्यतिरिक्तस्य कस्यचिद्वाक्यस्य समुदायद्वयलम्भकस्यादर्शनात्। विद्वद्वाक्ययोश्चैकैककर्मविधायकत्वाङ्गीकारात्। न द्वितीय., फलवाक्यगतयजिना तन्त्राभिधानेन समुदायनिष्पत्त्यङ्गीकारे सर्वेषां समुदायस्यैकत्वेन द्विवचनानुपपत्तेः। न च दर्शपूर्णमासशब्दैनैकैकस्य त्रिकस्य तन्त्राभिधानात्समुदायद्वयसिद्धिरिति वाच्यम्। "दर्शपूर्णमासाभ्याम्" इति हि यजिविशेषणत्वात्तत्परतन्त्रम्। यजिश्च सकृच्छ्रुतत्वाद्युगपदेव सर्वान्यागान् परामृशति । न तु त्रीन्यागान् प्रथममभिधाय पश्चादन्यांस्त्रीन्यागानभिधातुमुत्सहते। न च युगपत्समुदायद्वयमेव तन्त्रेण कुतो नाभिधत्त इति वाच्यम्; समुदायद्वयस्य प्रागसिद्धे.। सिद्धावपि फलवाक्ये दर्शपूर्णमासपद तदभिप्राय न भवति, यजिसामानाधिकरण्यविरोधात्। न चैव सर्वेषां प्राधान्येऽपि तन्त्राभिधानशक्त्या एकसमुदायनिष्पत्तौ तदभिप्रायमेकवचनमेव स्याद्राजसूयवत्, ततश्च द्विवचनानुपपत्तिस्तुल्येति वाच्यम्। न [2]हि तद्द्विवच..न्तम्, द्विवचनविभक्तिप्रतिरूपकाव्युत्पन्नप्रातिपदिकरूपत्वात्। एवञ्च दर्शपूर्णमासशब्दयो. कालनिमित्तत्वाभावेन तदसयुक्तानामपि फलसम्बन्ध.। तस्माद्विद्वद्वाक्ये अपूर्वकर्मविधायके ॥

इति प्राप्ते, सिद्धान्तयति—

## प्रकरणन्तु पौर्ण यां रूपावचनात् ॥ ३ ॥

तुरवधारणे। पौर्णमासीग्रहणमुपलक्षणम्। पौर्णमासीशब्दघटिते अमावास्याशब्दघटिते च विद्वद्वाक्ये प्रकरणं-प्रकृतमेवाग्नेयादिकर्मजातमनूद्यते, न तु कर्मान्तरं विधीयते। कुत ? रूपावचनात्। द्रव्यदेवते यागस्य रूपम्, तस्य देवतोद्देश्यकद्रव्यत्यागात्मकत्वात्। तद्वचनस्य द्रव्यदेवताप्रापकस्याभावात्। तथाहि—"सर्वस्मै वा एतत्" इति वाक्य वैशब्दोपबन्धान्न ध्रौवाज्यस्य सर्वयज्ञार्थताप्रापकम्, "प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्, स आत्मन्नाज्यमधत्त, तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्य-

1. समुदायद्वयं हीद फल. ग, समुदायद्वय हि फल . क, घ, ङ, द् पा. मु. पा.
2 हीद द्विवचनान्तम् क, घ, ङ, मु पा.

रग्निर्देवत्यं सोमदेवत्यं चागमयितव्यम्। अतो द्रव्यदेवतालाभसम्भवाद्विद्वद्वाक्ये अपूर्वकर्मविधायके, अन्यथा तयोरानर्थक्याच्च। न च षण्णामपि यागानां समुदायद्वयसिद्ध्यर्थं, त्रिकभेदेन पौर्णमास्यमावास्यासञ्ज्ञाद्वयसिद्ध्यर्थं वानुवादः, ततश्च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्येन कालसंयुक्तसमुदायद्वयस्य फलसम्बन्धः सिध्यतीति वाच्यम्। पौर्णमास्यमावास्याशब्दयो सञ्ज्ञात्वेऽपि फलवाक्यगतदर्शपूर्णमासशब्दयोः सञ्ज्ञात्वासिद्ध्या कालसंयुक्तानामेव फलसम्बन्धस्यासिद्धेः। फलवाक्ये दर्शपूर्णमासशब्दयोर्न समुदायपरत्वम्, यजिसामानाधिकरण्यविरोधात्। न हि समुदायो यागात्मा भवति। किन्तु समुदायिपरत्वमिति समुदायद्वयसिद्ध्यापि कालसयुक्तानामेव फलसम्बन्धस्यासिद्धेश्च। विद्वद्वाक्ययोरविधायकत्वे "पौर्णमास्या पौर्णमास्या यजेतामावास्यायाममावास्यया" इत्यानर्थक्याच्च। न हीमे वाक्ये आग्नेयादीनां कालविधायके भवत, यदाग्नेयादिवाक्यैरेव तत्प्राप्तेः। न च यदाग्नेयादिवाक्यै. कालसयोगावगमेऽपि षण्णामेकैकस्मिन्वा पर्वणि प्रयोग' स्यात्तन्मा भूत्, किन्त्वेकस्य त्रिकस्य पौर्णमास्या सहप्रयोग' अन्यस्यामावास्यायामिति सहप्रयोगसिद्ध्यर्थे ते वाक्ये इति वाच्यम्। "य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्या वा यजेत" इति कालविधौ सत्यपि सर्वासामिष्टीना सर्वेषां पशुबन्धानां सोमानाञ्च यथा न सहप्रयोग', एवमिहापि सत्यपि कालविधौ सहप्रयोगासिद्धे.। विद्वद्वाक्ययो कर्मान्तरविधायकत्वे तु तयो' कर्मणोः कालविधानेन "पौर्णमास्या पौर्णमास्या" इत्यादिवाक्ये सार्थके भवत। न चैवं सति पौर्णमास्यमावास्याशब्दयोः सञ्ज्ञात्वे सति [1]ताभ्या विद्वद्वाक्यविहितकर्मानुवादेन कालविधि, कालविधौ च तयोस्तत्प्रख्यन्यायेन नामत्वमिति परस्पराश्रय इति वाच्यम्, प्रवृत्तिनिमित्तानिश्चयेऽपि सामानाधिकरण्यमात्रेण "अथैष ज्योति." इत्यादिवत्सञ्ज्ञात्वनिश्चयसम्भवेनान्योन्याश्रयानवकाशात्। अतो विद्वद्वाक्ये विधायके।

एवञ्चाग्नेयादियागाना षण्णा विद्वद्वाक्यविहितयागयो. प्रयाजादीनाञ्च सर्वेषा यागाना प्राधान्य[2] फलति, फलवाक्ये यजिना सर्वेषामपि विशेषेण परामर्शात्। न च तत्र "दर्शपूर्णमासाभ्याम्" इति विशेषणाद्दर्शपूर्णमासकालयुक्तश्रुतयागविशेष-

1. ताभ्या शब्दाभ्या. क, ग, घ, ङ, मु पा. 2. सिध्यति. ग,

परत्वं यजेः शङ्क्यम्, कालसंयुक्तानां यागानां बहुत्वेन द्विवचनानुपपत्ते । न च समुदायद्वयाभिप्रायं द्विवचनमिति वाच्यम् । समुदायद्वयं[1] हि किं फलवाक्यादन्यत्र सिद्धम् ? उत फलवाक्य एव ? नाद्य, एकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायापत्ति । एकावगतिश्चैकाभिधानप्रयुक्ता । न चात्रैकाभिधानमस्ति, विद्वद्वाक्यव्यतिरिक्तस्य कस्यचिद्वाक्यस्य समुदायद्वयलम्भकस्यादर्शनात् । विद्वद्वाक्ययोश्चैकैककर्मविधायकत्वाङ्गीकारात् । न द्वितीय, फलवाक्यगतयजिना तन्त्राभिधानेन समुदायनिष्पत्त्यङ्गीकारे सर्वेषां समुदायस्यैकत्वेन द्विवचनानुपपत्तेः । न च दर्शपूर्णमासशब्देनैकैकस्य त्रिकस्य तन्त्राभिधानात्समुदायद्वयसिद्धिरिति वाच्यम् । "दर्शपूर्णमासाभ्याम्" इति हि यजिविशेषणत्वात्तत्परतन्त्रम् । यजिश्च सकृच्छ्रुतत्वाद्युगपदेव सर्वान्यागान् परामृशति । न तु त्रीन्यागान् प्रथममभिधाय पश्चादन्यांस्त्रीन्यागानभिधातुमुत्सहते । न च युगपत्समुदायद्वयमेव तन्त्रेण कुतो नाभिधत्त इति वाच्यम्, समुदायद्वयस्य प्रागसिद्धेः । सिद्धावपि फलवाक्ये दर्शपूर्णमासपद तदभिप्रायं न भवति, यजिसामानाधिकरण्यविरोधात् । न चैव सर्वेषां प्राधान्येऽपि तन्त्राभिधानशक्त्या एकसमुदायनिष्पत्तौ तदभिप्रायमेकवचनमेव स्याद्राजसूयवत्, ततश्च द्विवचनानुपपत्तिस्तुल्येति वाच्यम् । न [2]हि तद्द्विवच..न्तम्, द्विवचनविभक्तिप्रतिरूपकाव्युत्पन्नप्रातिपदिकरूपत्वात् । एवञ्च दर्शपूर्णमासशब्दयो. कालनिमित्तत्वाभावेन तदसयुक्तानामपि फलसम्बन्ध. । तस्माद्विद्वद्वाक्ये अपूर्वकर्मविधायके ॥

इति प्राप्ते, सिद्धान्तयति—

## प्रकरणन्तु पौर्ण यां रूपावचनात् ॥ ३ ॥

तुरवधारणे । पौर्णमासीग्रहणमुपलक्षणम् । पौर्णमासीशब्दघटिते अमावास्याशब्दघटिते च विद्वद्वाक्ये प्रकरण-प्रकृतमेवाग्नेयादिकर्मजातमनूद्यते, न तु कर्मान्तरं विधीयते । कुत ? रूपावचनात् । द्रव्यदेवते यागस्य रूपम्, तस्य देवतोद्देश्यकद्रव्यत्यागात्मकत्वात् । तद्वचनस्य द्रव्यदेवताप्रापकस्याभावात् । तथाहि—"सर्वस्मै वा एतत्" इति वाक्यं वैशब्दोपबन्धान्न ध्रौवाज्यस्य सर्वयज्ञार्थताप्रापकम्, "प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्, स आत्मन्नाज्यमधत्त, त देवा अब्रुवन्नेष वाव यज्ञो यदाज्य-

1. समुदायद्वय हीद फल. ग, समुदायद्वय हि फल . क, घ, ङ, न् पा. मु पा.
2 हीद द्विवचनान्तम् क, घ, ङ, मु. पा.

रग्निर्देवत्यं सोमदेवत्यं चागमयितव्यम् । अतो द्रव्यदेवतालाभसम्भवाद्विद्वद्वाक्ये अपूर्वकर्मविधायके, अन्यथा तयोरानर्थक्याच्च । न च षण्णामपि यागानां समुदायद्वयसिद्ध्यर्थं, त्रिकभेदेन पौर्णमास्यमावास्यासंज्ञाद्वयसिद्ध्यर्थं वानुवादः, ततश्च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्येन कालसंयुक्तसमुदायद्वयस्य फलसम्बन्धः सिध्यतीति वाच्यम् । पौर्णमास्यमावास्याशब्दयो संज्ञात्वेऽपि फलवाक्यगतदर्शपूर्णमासशब्दयोः संज्ञात्वासिद्ध्या कालसंयुक्तानामेव फलसम्बन्धस्यासिद्धेः । फलवाक्ये दर्शपूर्णमासशब्दयोर्न समुदायपरत्वम्, यजिसामानाधिकरण्यविरोधात् । न हि समुदायो यागात्मा भवति । किन्तु समुदायिपरत्वमिति समुदायद्वयसिद्ध्यापि कालसंयुक्तानामेव फलसम्बन्धस्यासिद्धेश्च । विद्वद्वाक्ययोरविधायकत्वे "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया" इत्यानर्थक्याच्च । न हीमे वाक्ये आग्नेयादीनां कालविधायके भवत, यदाग्नेयादिवाक्यैरेव तत्प्राप्तेः । न च यदाग्नेयादिवाक्यै. कालसंयोगावगमेऽपि षण्णामेकैकस्मिन्वा पर्वणि प्रयोगः स्यात्तन्मा भूत्, किन्त्वेकस्य त्रिकस्य पौर्णमास्यां सहप्रयोग' अन्यस्यामावास्यायामिति सहप्रयोगसिद्ध्यर्थे ते वाक्ये इति वाच्यम् । "य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत" इति कालविधौ सत्यपि सर्वासामिष्टीना सर्वेषा पशुबन्धानां सोमानाञ्च यथा न सहप्रयोगः, एवमिहापि सत्यपि कालविधौ सहप्रयोगासिद्धेः । विद्वद्वाक्ययो कर्मान्तरविधायकत्वे तु तयो कर्मणोः कालविधानेन "पौर्णमास्यां पौर्णमास्या" इत्यादिवाक्ये सार्थके भवत । न चैव सति पौर्णमास्यमावास्याशब्दयो. सञ्ज्ञात्वे सति [1]ताभ्या विद्वद्वाक्यविहितकर्मानुवादेन कालविधि, कालविधौ च तयोस्तत्प्रख्यन्यायेन नामत्वमिति परस्पराश्रय इति वाच्यम्, प्रवृत्तिनिमित्तानिश्चयेऽपि सामानाधिकरण्यमात्रेण "अथैष ज्योति." इत्यादिवत्सञ्ज्ञात्वनिश्चयसम्भवेनान्योन्याश्रयानवकाशात् । अतो विद्वद्वाक्ये विधायके ।

एवञ्चाग्नेयादियागाना षण्णा विद्वद्वाक्यविहितयागयोः प्रयाजादीनाञ्च सर्वेषा यागाना प्राधान्यं[2] फलति, फलवाक्ये यजिना सर्वेषामपि विशेषेण परामर्शात् । न च तत्र "दर्शपूर्णमासाभ्याम्" इति विशेषणाद्दर्शपूर्णमासकालयुक्तश्रुतयागविशेष-

1. ताभ्या शब्दाभ्या. क, ग, घ, ङ, मु पा. 2. सिध्यति. ग,

इयमस्य देवतेति अनुष्ठानौपयिकदेवताविशेषानवगमात्। तथा च रूपालाभेन विधायकत्वासम्भवादगत्या विद्वद्वाक्ये आग्नेयादिप्रकृतयागानुवादके। तत्र पौर्णमासीकालसंयुक्तानां त्रयाणामनुवादः। अमावस्यावाक्येन च अमावस्याकालसंयुक्तानां त्रयाणामनुवादः। एकैकेन चानुवादेनैकावगत्यनुप्रवेशादेकैकसमुदायापत्तिः। तदेकत्वात्पौर्णमासीममावास्यामित्येकवचनम्। ततश्च कालद्वययुक्तसमुदायद्वयसिद्धिः। तेन प्रसिद्धार्थकं दर्शपूर्णमासपदं फलवाक्ये यजिं शक्नोति विशेष्टुम्।

ननु विद्वद्वाक्ययोर्यजिभ्यां त्रयाणां कालसंयुक्तानामनुवाद इत्यनुपपन्नमविशेषात्। न च पौर्णमासीममावास्यामित्युपपदवशात्तत्कालसंयुक्तमात्रपरत्वं यजत्योरिति वाच्यम्। एकवचनान्तपौर्णमास्यमावस्याशब्दयोरनेकयागपरयजिसामानाधिकरण्यासम्भवेन तद्वशेन व्यवस्थाया असम्भवात्। ततश्च विद्वद्वाक्यस्थनाम्नोरेव यजिपरतन्त्रत्वावश्यम्भावेन यजिद्वयस्य सन्निहितसर्वयागानुवादस्वरसतया तद्वशेन नाम्नोरपि सर्वप्रकृतयागनामत्वमेव स्यादिति चेन्न, "य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति" "य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति विद्वद्वाक्यगतपौर्णमास्यमावास्याशब्दितयोर्व्यवस्थितफलार्थवादः श्रूयते। स च पौर्णमास्यमावास्याशब्दद्वयस्य व्यवस्थितार्थत्व एव घटते नान्यथेति तदुपपत्त्यर्थं तयोर्न सर्वप्रकृतनामत्वम्, किन्तु कतिपयनामत्वमेव। तत्रापि तत्तत्कालयुक्तकर्मनामत्वमेव न्याय्यमिति तदनुसारेण तत्कालयोगिष्वेव विद्वद्वाक्यस्थयजिप्रवृत्तेरवश्यवाच्यत्वात्। एवञ्च समुदायद्वयसिद्धौ तत्रोपपदस्य प्रसिद्धत्वात्तदनुसारेण (न्या) कास्यभोजिन्यायेन कालसंयुक्तेष्वेव यजिप्रवृत्तेस्तेषामेव प्राधान्यम्। न च समुदायद्वयसिद्धावपि फलवाक्ये दर्शपूर्णमासपदं कथं तत्परम्, यजिसामानाधिकरण्यविरोधादिति वाच्यम्, समुदायस्य यागत्वाभावेऽपि समुदायद्वारा लक्षणया समुदायिषु वृत्तिसम्भवेन यजिसामानाधिकरण्योपपत्तेः। विद्वद्वाक्याभ्यां यजिकृततन्त्राभिधानलब्धसमुदायद्वयस्य पौर्णमास्यमावास्यापदाभ्यामनुवादबलात् पौर्णमास्यमावस्यारूपसञ्ज्ञाकरणबलात् कालसंयुक्तानामेव प्रत्यभिज्ञाबलेनापि तेषामेव फलसम्बन्धः। न च विद्वद्वाक्यतः पौर्णमास्यमावास्याशब्दयोः सञ्ज्ञात्वसिद्धावपि दर्शपूर्णमासशब्दयोस्तदसिद्ध्या कथं फलवाक्ये कालसंयुक्तानामेव परामर्श इति वाच्यम्, पौर्णमास्यमावास्याशब्दयोर्दर्शपूर्णमासशब्दयोश्च पर्यायत्वात्। यथा चैतत्तथा चतुर्थे (टा) वक्ष्यामः। न च विद्वद्वाक्ययोरपूर्वकर्मविधायकत्वाभावे पौर्णमास्या

मप्येव नोऽत्रास्त्विति, सोऽब्रवीद्यजान् व आज्यभागावुपस्तृणानभिघारयानिति, तस्माद्यजन्त्याज्यभागावुपस्तृणन्त्यभिघारयन्ति" इति प्राजापत्योपांशुयाजाज्यभागोपस्तरणाभिघारणार्थत्वावगमाच्च। कथञ्चित्तस्य सर्वयज्ञार्थतासम्भवेऽपि देवता न लभ्यते। न च वार्त्रघ्नीवृधन्वतीवाक्यविनियुक्तमन्त्रवर्णतो[1] देवतालाभ शङ्क्यः, तद्वाक्ययोर्लिङ्गक्रमाभ्यामाज्यभागयोरव्यवस्थाप्राप्तमन्त्राणां लिङ्गक्रमाबाधेन व्यवस्थामात्रविधायकत्वे लाघवेन सम्भवति, विद्वद्वाक्यविहितकर्मणोरप्राप्तमन्त्रविधायकत्वस्य गौरवपराहतस्य लिङ्गक्रमबाधस्य चायुक्तत्वात्। वार्त्रघ्न्योर्हि ऋचोः एका अग्निदेवत्या अन्या सोमदेवत्या। तयोश्च विद्वद्वाक्यविहिते एकस्मिन् कर्मणि पुरोनुवाक्यात्वेन याज्यात्वेन च विनियोगो नावकल्पते। तद्धि कर्म अग्निदेवत्यं सोमदेवत्यमुभयदेवत्यं वा स्यात्? तत्राग्निदेवत्यत्वे सोममन्त्रस्यानन्वय.। सोमदेवत्यत्वे अग्निमन्त्रस्यानन्वय। उभयदेवत्यत्वे चोभयमन्त्रानन्वय इति सर्वथा लिङ्गबाध. स्यात्। एवं वृधन्वत्योरपि। अतो न मन्त्रवर्णतो देवतालाभसम्भव.।

नन्वत्र किं पौर्णमास्याममावास्यायां काले यावाज्यभागौ तत्र वार्त्रघ्न्यौ वृधन्वत्यौ इति विवक्षितम्? उत पौर्णमास्याममावास्याया कर्मणि यावाज्यभागौ? इति। नाद्यः, आज्यभागयोराग्नेयादिवदुत्पत्तौ कालसंयोगाभावेन तयोस्तत्कालीनत्वेनानुवादासम्भवात्। न द्वितीय, समप्राधान्यमिति वदन्त पूर्वपक्षिणं प्रति पौर्णमासीकर्माङ्गाज्यभागानुवादेन मन्त्रव्यवस्थाया वक्तुमशक्यत्वादिति चेन्न, आज्यभागयोः प्राधान्येऽपि य इष्ट्यादिवाक्येन पौर्णमास्यमावास्याकालप्राप्तिसम्भवेन कालमुखेन व्यवस्थाया वक्तु शक्यत्वात्। न चैवं सति पौर्णमास्या दर्शविकारानुष्ठाने वार्त्रघ्न्यौ स्यातां वृधन्वत्यौ च न स्याताम्, एवममावास्याया पूर्णमासविकारानुष्ठाने वृधन्वत्यौ स्यातां वार्त्रघ्न्यौ च न स्यातामिति चेन्न, इष्टापत्ते। बोधायनादिसूत्रे कालमुखेनापि व्यवस्थाया दर्शितत्वात्। वस्तुतस्तु कर्ममुखेनैव व्यवस्था। परन्त्वाज्यभागयोरपि प्रधानत्वात्पौर्णमास्यङ्गभूतावाज्यभागौ प्रति वार्त्रघ्न्योर्व्यवस्थाविधिर्न सम्भवतीति वदन्त पूर्वपक्षिण प्रति कालमुखेन व्यवस्थाविधिसम्भवान्न त्वदभिमतसिद्धिरित्युच्यत इत्यदोप। न च यागस्य देवता विनानुपपत्तेर्देवता कल्प्यता विश्वजिति स्वर्ग इवेति वाच्यम्, यागानुपपत्त्या अस्ति काचिद्देवतेति सामान्यतोऽवगमेऽपि विधि विना

1. वर्णस्य ग, घ.

स्यात्। अतो रूपलाभाद्विद्वाक्ये विधायके स्याताम्। न च प्राप्तकर्मानुवादेनानेक-गुणविधाने विध्यावृत्त्या वाक्यभेदप्रसङ्गः, विद्वाक्यविहितयागानुवादेन गुणमात्रवि-धायकानामाग्नेयादिवाक्यानां विशिष्टविधित्वस्याप्यसम्भवादिति वाच्यम्। गुण-विधिस्थले हि गुणस्य सिद्धरूपतया स्वतो विधेयत्वाभावेन गुणविशिष्टभावनाया एव विधिसम्बन्ध., न केवल गुणस्य। ततश्च नात्र प्राप्तकर्मानुवादेन साक्षादनेकगुण-विधिः। किन्त्वनेकगुणविशिष्टभावनाविधि । एवञ्च विशिष्टकर्मविधाविव विधेः सकृदेव व्यापार इति न विध्यावृत्तिरिति भावः॥

सिद्धान्ती प्रत्याचष्टे—

## चोदना वा गुणानां युगपच्छ ाच्चोदिते[1] हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

वाशब्द एवार्थे। यदाग्नेयादिवाक्यानि गुणविशिष्टयागचोदना एव, न तु विद्वाक्यविहितयागानुवादेन गुणमात्रविधय.। कुत'? युगपच्छास्त्रात्—शास्त्र शासन विधानम्। युगपदनेकगुणानां विधानप्रसङ्गात्। तस्य च वाक्यभेदप्रसङ्गेना-युक्तत्वात्। ननु विशिष्टभावनाविधानान्न वाक्यभेद इत्यत आह—चोदिते हीति। चोदिते प्राप्ते कर्मणि प्रत्ययस्य तत्तद्गुणविधानार्थत्वात् तस्य गुणस्य विधानार्थः प्रत्ययः पुनःपुनरुच्चार्येत। अयमाशय'—प्रवर्तनारूपशब्दभावनात्मकविधे. प्रवृत्तिरूपार्थ-भावनागर्भतया तावद्गुणविशिष्टभावनागर्भतया प्रथमं प्रतीयमानोऽपि विधिर्भावनां-शस्य विद्वाक्यत एव प्राप्ततया तत्परत्वाभावेन विशेषणीभूतगुणपरः सन् गुणांशे पर्यवस्यति, यत्र विधे' पर्यवसान तस्यैव विधेयत्वात्। भावनांशस्य विध्यन्विततया प्रतीयमानत्वमात्रेण विधेयत्वे फलस्यापि विधेयत्वापातात्। ततश्चानेकगुणविधि-स्वीकारे सर्वत्र विधेस्तात्पर्यात्सर्वत्र पर्यवसानं वाच्यम्। न च सकृच्छ्रुतस्य विधेर-नेकत्र पर्यवसानं सम्भवतीति विध्यावृत्तिरवर्जनीया। न चैव सति "सोमेन यजेत" इति गुणविशिष्टविधिर्न स्यात्। तत्रापि विशेषणविधिपर्यवसानार्थमावृत्तिप्रसङ्गादिति वाच्यम्, वैषम्यात्। विशिष्टविधिस्थले विशेषणेन विना विशिष्टस्यासिद्ध्या अर्था-पत्त्यैव विशेषणविधिसिद्धौ न श्रुतस्य विधेर्विशेषणे पृथक् पर्यवसानमपेक्षितम्, किन्तु

1. शासनाच्चोदिते.

"पौर्णमास्या यजेत" इति व्यर्थं स्यादिति वाच्यम्। षण्णामपि यागानामेकैकस्मिन्नेकस्मिन्नेव वा पर्वणि प्रयोगप्राप्तावेकस्य त्रिकस्य पौर्णमास्या प्रयोगं अन्यस्यामावास्यायामिति सहप्रयोगार्थत्वात्। न चैव सति य इष्ट्यादिवाक्येन सर्वेषामिष्टिपशुसोमानां[1] सहप्रयोगं स्यादिति वाच्यम्, वैषम्यात्। फलवाक्ये फलं प्रति विवक्षितसाहित्यानामाग्नेयादीनां विनियोगात्फलार्थिना युगपत्कर्तव्यतावगमेनान्योन्यानपेक्षैरेव तैः कालः सम्बध्यते। यथा चैतत्तथा (ठा) एकादशस्य द्वितीयाद्याधिकरणे वक्ष्यामः॥

विद्वद्वाक्ययोरपूर्वकर्मविधायकत्वे बाधकान्तरमाह—

## विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात्॥ ४॥

चशब्द उक्तसमुच्चये। विद्वद्वाक्ये कर्मान्तरविधायके न भवतः। तथात्वे हि प्रयाजादीनामपि प्राधान्यं स्यात्। न चैतद्युज्यते। कुतः? हि यस्मात्कारणात् प्रधानतया समेषु-प्रयाजाग्नेयादिषु सत्सु पूर्वेषा-प्राकृताना प्रयाजादीना विकृतिषु प्रवृत्तिर्न स्यात्, अङ्गानामेवातिदेशस्य वक्ष्यमाणत्वात्। तच्चानिष्टम्। कुतः? विशेषदर्शनात् कच्चिद्विकृतौ प्रयाजाद्यनुवादेन विधेयविशेषस्य दर्शनात्। यथा "यो ब्रह्मवर्चसकाम स्यात्तस्मा एतं सौर्यं चरुं निर्वपेत्" "प्रयाजे प्रयाजे कृष्णलं जुहोति" इत्यादि। अतोऽपि विद्वद्वाक्ये न विधायके॥

ननु वात्रैन्द्याग्न्यादिवाक्यतो रूपलाभाभावेऽपि [2]यदाग्नेयादिवाक्यैस्तल्लाभाद्विद्वद्वाक्ययोर्विधायकत्वमस्त्विति पूर्वपक्षी प्रत्यवतिष्ठते—

## गुणस्तु श्रुतिसंयोगात्॥ ५॥

तुः प्रत्यवस्थाने। रूपालाभाद्विद्वद्वाक्ये न विधायके इति न युज्यते। यतः यदाग्नेयादिवाक्यैर्विद्वद्वाक्यविहितयागयोरग्न्यादिदेवतालक्षणः पुरोडाशादिद्रव्यलक्षणश्च गुणो विधीयते, न तु याग। कुतः? श्रुतिसयोगात्-विद्वद्वाक्यविहितौ हि यागौ प्रत्यक्षश्रुतिसयुक्तौ। अतस्तदनुवादेन गुणविधाने सति यदाग्नेयादिवाक्येषु न कश्चिदश्रुतार्थो कल्प्य। यागविधायकेषु तु तेषु द्रव्यदेवतासम्बन्धाद्यागोऽनुमातव्यः

1. पशुबन्धानाम्. क, ख, ग, घ, ङ, मु. पा.

2. यदाग्नेयादिवाक्यैस्तल्लाभसम्भवात्. क, घ, ङ, मु. पा.

भेदवत्साधयति । विद्वद्वाक्यविहितकर्मानुवादेन गुणविधित्वे तु पौर्णमासीयागे आग्नेयपुरोडाशाग्नीषोमीयोपांशुयाजाग्नीषोमीयपुरोडाशानां विकल्प' स्यात् । अमावास्यायागेऽपि आग्नेय पुरोडाश', सोमयाजिन ऐन्द्रं दधि, ऐन्द्रं पय', असोमयाजिन ऐन्द्राग्नः पुरोडाश इत्येषां विकल्पः स्यात् । तथा सत्युदाहृतपौर्वापर्यानुवादो नोपपद्येत ॥

पूर्वपक्षद्वयेऽपि बाधकं लिङ्गमाह—

## लिङ्गदर्शनाच्च ॥ ८ ॥

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्" इत्यस्ति वाक्यशेषः । पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाश्चेत्येकादशाहुतयः, आग्नेयोपांशुयाजाग्नीषोमीयाहुतयस्तिस्र इति चतुर्दश पौर्णमास्याम् । अमावास्यायान्तु ता एकादशाहुतयः, आग्नेयसान्नाय्याहुती द्वे दधिपयसोरेकदेवताकत्वेन तदाहुतेरेकत्वादिति त्रयोदशेति तदर्थः । तदेतल्लिङ्गदर्शनमाग्नेयादिभ्यो विद्वद्वाक्ययोः कर्मान्तरपरत्वेऽधिकसङ्ख्याकत्वापातात्तेषा गुणविधित्वे न्यूनसङ्ख्याकत्वापातादसमञ्जस स्यात् । तस्माद्विद्वद्वाक्ये प्रकृतयागसमुदायानुवादके ॥

इति तृतीय पौर्णमास्यधिकरणम् ॥३॥

४

दर्शपूर्णमासयोः श्रूयते— 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाँशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय" इति । अन्वञ्चौ अव्यवहितौ पुरोडाशसाध्यौ आग्नेयाग्नीषोमीययागौ यत्क्रियेते तदेतत् जामि आलस्यजनकम्, एकरूपत्वात् । अतस्तौ यागौ अन्तरा तदन्तरालकाले उपांशुयाज यजतीत्यर्थः । तत्र "उपांशुयाजमन्तरा यजति" इति विष्ण्वादिसंयुक्तानां यागानां समुदायानुवादः ? उतापूर्वकर्मणो विधि. ? इति संशय. । तत्र पूर्वपक्षयति—

## पौर्णमासीवदुपांशुयाज. स्यात् ॥ ९ ॥

पौर्णमासीशब्दयुक्तविद्वद्वाक्यवदुपांशुयाजशब्दयुक्तम् "उपांशुयाजमन्तरा यजति" इति वाक्यमपि प्रकृतयागानुवादकं स्यात् न त्वपूर्वकर्मविधायकम्, रूपा-

विशिष्ट एवेति न तत्रावृत्तिप्रसङ्गः। प्राप्तकर्मानुवादेन गुणविधिस्थले तु नैवमाक्षेपाद्विशेषणलाभः, भावनारूपस्य कर्मरूपस्य वा विशेष्यस्यान्यतः प्राप्ततया विधेर्विशिष्टपरत्वाभावात् केवलगुणपरत्वमेव वाच्यम्। तत्रैकस्येतरविशिष्टस्य विधिर्न सम्भवति, 'गुणानां च परार्थत्वात्' (ड) इति न्यायेन तेषां परस्परवैशिष्ट्याभावात्। ततश्चैकेन विहितेनेतरस्यानाक्षेपात्प्रतिगुणं पृथगेव विधेस्तात्पर्यतः पर्यवसानं वाच्यमिति तत्र विध्यावृत्तिरनिवार्या। न चैवं सति "पशुना यजेत" इत्यादावपि प्राप्तकर्मानुवादेन जातिलिङ्गसङ्ख्याकारकाणां विधानं न स्यादिति वाच्यम्, वैषम्यात्। 'पशुना' इत्यनेन हि क्रियान्वयात्प्रागेव प्रकृतिप्रत्ययाभ्यां जातिलिङ्गसङ्ख्याविशेषितं [1]कारकमुपस्थितम्। तदुपस्थितौ च न विधेर्व्यापारः। कारकप्राधान्यं हि(ढ)पश्वेकत्वाधिकरणे वक्ष्यते। एवमभ्युदितेष्टौ "ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इत्यादिभिन्नपदोपस्थानस्थले "विष्णवे शिपिविष्टाय" इति सामानाधिकरण्येन शिपिभि रश्मिभिः विष्ट इति योगानुगृहीतेन शिपिविष्टत्वविशिष्टो विष्णुः क्रियासम्बन्धात्प्रागेवोपस्थितः "प्र तत्ते अद्य शिपिविष्टनामार्यः शँसामि वयुनानि विद्वान्" इत्यादिमन्त्रत "य पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टः" "यज्ञो वै विष्णुः पशवः शिपि." इत्याद्यर्थवादतश्च प्रसिद्धमेव विष्णोः शिपिविष्टत्वम्। न तत्र विधेर्व्यापारः। अतस्तत्र तद्विशिष्टस्य विष्णोर्विधानं युज्यते। प्रकृते तु "आग्नेयोऽष्टाकपालः" इत्यादिसामानाधिकरण्यबलेन शब्दतो विशिष्टार्थप्रतिपादनसम्भवेऽपि विनैव विधिना वस्तुत प्रसिद्धसम्बन्धत्वाभावान्न विधिसम्भवः। न ह्याग्नेयत्वाष्टाकपालत्वादीनां वैशिष्ट्य प्रमाणान्तरेण सिद्धम्। अत्रैव तु विधाने भवेद्वाक्यभेदः। अत आग्नेयादिवाक्यानि न प्राप्तकर्मानुवादेन गुणविधय इत्यनेकगुणविशिष्टयागान्तरविधायकत्वमेवैषामभ्युपेयम्। ततश्च यदाग्नेयादिवाक्यतोऽपि [2]रूपालाभाद्विद्वाक्ये न विधायके॥

इतोऽप्याग्नेयादिवाक्यानां न गुणविधित्वमित्याह—

व्यपदेशाश्च तद्वत्॥ ७॥

"उभाणि ह वा एतानि हवींषि सम्भ्रियन्ते- आग्नेय. प्रथम, ऐन्द्राग्न उत्तर." इति पौर्वापर्यव्यपदेशोऽप्याग्नेयादिवाक्यानां विशिष्टयागविधायकत्व प्रागुक्तवाक्य-

1. कारकमेकम्. क, घ, ङ, मु पा. 2. रूपलाभाभावात् क, घ, ग, ड, मु. पा.

## संज्ञोपबन्धात् ॥ १४ ॥

'अपि न विशेषावगम.' इति शेषः। विशेषरूपेण ज्ञातस्यैव संज्ञोपबन्धात्कर्मविशेषापरिज्ञाने कस्येय संज्ञेत्यपरिज्ञानात्सञ्ज्ञयापि न विशेषावगमसम्भवः। उद्भिदादिस्थले तु चोदकतो रूपलाभात्सम्भवति विशेषावगमः॥

ननु दध्यादिवाक्ये गुणविधानाद्विशेषावगमः सम्भवतीत्यत आह—

## अप्रकृतत्वाच्च ॥ १५ ॥

प्रकृते हि कर्मणि दध्यादिगुणविधिरिति वक्तव्यम्। तच्च न सम्भवति, कस्यचित्कर्मणः अप्रकृतत्वात्। न चाग्निहोत्रवाक्यत. कर्म प्रकृतमिति शङ्क्यम्। तथा सति दध्यादिवाक्यैर्गुणविधौ सति ततो विशेषावगमादग्निहोत्रवाक्यस्य कर्मविधायकत्वम्, तस्मिंश्च सति दध्यादिवाक्यैर्गुणविधानमित्यन्योन्याश्रयात्[1]। चशब्दोऽनुक्तयुक्त्यन्तरसमुच्चयार्थः। तद्यथा—अग्निहोत्रवाक्यस्य विधायकत्वेऽपि तत्र दध्यादिवाक्यैर्गुणविधानं न सम्भवति, प्रवर्तनात्मकविधिना पुरुषव्यापारादन्यस्य विधातुमशक्यत्वात्। तथा च दध्यनुरक्तो व्यापारो विधेयः। स च होमात्मकोऽग्निहोत्रवाक्येनैव प्राप्त इति तस्य पुनर्विधानमनर्थकम्। न चोत्पन्नस्यापि कर्मणो यथा फलादौ पुनर्विधानं तद्वदिहाप्यग्निहोत्रवाक्योत्पन्नस्य कर्मणो गुणविशिष्टतया पुनर्विधिरस्त्विति वाच्यम्। विधिर्हि चतुर्धा—फलनिमित्तयो. कर्मविधिरधिकारविधि., देशकालयोः कर्मविधि' प्रयोगविधि', संस्कार्ये शेषतया कर्मविधिर्विनियोगविधि , एतत्त्रितयभिन्नो विधिरुत्पत्तिविधिरिति। तत्र दध्यादिवाक्येषु गुणविशिष्टतया विधिस्वीकारेऽधिकारादिविधिक्रियानन्तर्भावेण परिशेषादुत्पत्तिविधिरेव वाच्यः। उत्पत्तिविधिभेदे च कर्मभेद आवश्यकः। एवञ्चेहापि कर्मभेदावश्यम्भावान्नाग्निहोत्रवाक्यविहितकर्मणो गुणविशिष्टतया पुनर्विधिः सम्भवति। अतो दध्यादेरन्यतोऽप्राप्तत्वेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन तद्वाक्यमिव स्तावकत्वासम्भावेन दध्यादिवाक्यानां दध्यादिविशेषकर्मविधित्वे सति तद्विहितकर्मसमुदायानुवादकमग्निहोत्रवाक्यम्। तत्र यद्यपि दध्यादिवाक्येषु देवता न श्रूयते, "यदग्नये च" इत्यादिवाक्येषु द्रव्यम् न श्रूयते, मन्त्रविधिस्थले मान्त्रवर्णिकदेवतालाभसम्भवेऽपि द्रव्यं न लभ्यते, एतेषां च सर्वेषा वाक्या-

---

1. परस्पराश्रय . ग.

ननु–अन्तरावाक्यस्य विष्ण्वादियागसमुदायानुवादकत्वाभावे "तावन्नूताम्" इति कालपरे वाक्ये 'नौ' इत्यग्नीषोमप्रतिपादकोपपदमहिम्ना अग्नीषोमीयमात्रस्य ग्रहण स्यात् , न तु वैष्णवप्राजापत्ययो.। ततश्च फलवाक्ये तयोरश्रवणात्प्राधान्यं न स्यात् , इत्यत आह—

[1]प्राये वचनाच्च ॥ १२ ॥

प्रधानभूताग्नेयाग्नीषोमीययागीययाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानामाम्नानात्त्रिविधस्याप्युपांशुयाजस्य प्राधान्यमवगम्यते। तद्बलादेव "तावन्नूताम्" इति कालपरे वाक्ये 'नौ' इत्यस्योपलक्षणार्थत्वं सिद्धमिति भावः। प्रयोजनं पूर्वपक्षे वैष्णवादियागास्त्रयोऽपि समुच्चयेनानुष्ठेयाः, सिद्धान्ते त्वेक एव विकल्पितविष्ण्वादिदेवताको याग इति दिक् ॥

इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

५

"अग्निहोत्र जुहोति" "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोति" इत्यादि श्रुतम् , "आघारामाघारयति" "ऊर्ध्वमाघारयति" "ऋजुमाघारयति" "सन्ततमाघारयति" इत्यादि च। तत्र किम् "अग्निहोत्र जुहोति" इति दध्यादिवाक्यप्राप्तसमुदायानुवादः, 'आघारमाघारयति' इति च 'ऊर्ध्वमाघारयति' इत्यादिवाक्यप्राप्तानुवाद.? उत "अग्निहोत्र जुहोति" इत्यपूर्वकर्मविधि. दध्यादिवाक्यानि तत्र गुणविधय , "आघारमाघारयति" इति चाघारविधि ऊर्ध्वादिवाक्यानि तत्रैव गुणविधय.? इति सशये, पूर्वपक्षयति—

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

आघारवाक्यमग्निहोत्रवाक्यञ्च न विधायकम्। कुत.? अरूपत्वात्—विधेयरूपराहित्यात्। न ह्यत्र [2]सामान्यरूप विधेयम् , तस्यानुष्ठानायोग्यत्वात्। नापि विशेष , तस्य 'अयमसौ' इत्यनिश्चितत्वेन विधातुमशक्यत्वात् ॥

नन्वग्निहोत्रसञ्ज्ञकमिद कर्मेत्येव सञ्ज्ञयैव विशेषावगम सम्भवतीत्यत आह—

1. प्रयवचनाच्च. 2. धात्वर्थसामान्य. क, घ, ङ, मु.पा.

## संज्ञोपबन्धात् ॥ १४ ॥

'अपि न विशेषावगम.' इति शेषः। विशेषरूपेण ज्ञातस्यैव सञ्ज्ञोपबन्धात्कर्मविशेषापरिज्ञाने कस्येयं संज्ञेत्यपरिज्ञानात्संज्ञयापि न विशेषावगमसम्भवः। उद्भिदादिस्थले तु चोदकतो रूपलाभात्सम्भवति विशेषावगमः॥

ननु दध्यादिवाक्ये गुणविधानाद्विशेषावगमः सम्भवतीत्यत आह—

## अप्रकृतत्वाच्च ॥ १५ ॥

प्रकृते हि कर्मणि दध्यादिगुणविधिरिति वक्तव्यम्। तच्च न सम्भवति, कस्यचित्कर्मणः अप्रकृतत्वात्। न चाग्निहोत्रवाक्यतः कर्म प्रकृतमिति शङ्क्यम्। तथा सति दध्यादिवाक्यैर्गुणविधौ सति ततो विशेषावगमादग्निहोत्रवाक्यस्य कर्मविधायकत्वम्, तस्मिंश्च सति दध्यादिवाक्यैर्गुणविधानमित्यन्योन्याश्रयात्[1]। चशब्दोऽनुक्तयुक्त्यन्तरसमुच्चयार्थः। तद्यथा—अग्निहोत्रवाक्यस्य विधायकत्वेऽपि तत्र दध्यादिवाक्यैर्गुणविधानं न सम्भवति, प्रवर्तनात्मकविधिना पुरुषव्यापारादन्यस्य विधातुमशक्यत्वात्। तथा च दध्यनुरक्तो व्यापारो विधेय। स च होमात्मकोऽग्निहोत्रवाक्येनैव प्राप्त इति तस्य पुनर्विधानमनर्थकम्। न चोत्पन्नस्यापि कर्मणो यथा फलादौ पुनर्विधानं तद्वदिहाप्यग्निहोत्रवाक्योत्पन्नस्य कर्मणो गुणविशिष्टतया पुनर्विधिरस्त्विति वाच्यम्। विधिर्हि चतुर्धा—फलनिमित्तयो· कर्मविधिरधिकारविधि., देशकालयोः कर्मविधिः प्रयोगविधि, संस्कार्ये शेषतया कर्मविधिर्विनियोगविधि, एतत्त्रितयभिन्नो विधिरुत्पत्तिविधिरिति। तत्र दध्यादिवाक्येषु गुणविशिष्टतया विधिस्वीकारेऽधिकारादिविधित्रयानन्तर्भावेण परिशेषादुत्पत्तिविधिरेव वाच्यः। उत्पत्तिविधिभेदे च कर्मभेद आवश्यकः। एवञ्चेहापि कर्मभेदावश्यम्भावान्नाग्निहोत्रवाक्यविहितकर्मणो गुणविशिष्टतया पुनर्विधिः सम्भवति। अतो दध्यादेरन्यतोऽप्राप्तत्वेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन तद्वाक्यमिव स्तावकत्वासम्भावेन दध्यादिवाक्यानां दध्यादिविशेषकर्मविधित्वे सति तद्विहितकर्मसमुदायानुवादकमग्निहोत्रवाक्यम्। तत्र यद्यपि दध्यादिवाक्येषु देवता न श्रूयते, "यदग्नये च" इत्यादिवाक्येषु द्रव्यम् न श्रूयते, मन्त्रविधिस्थले मान्त्रवर्णिकदेवतालाभसम्भवेऽपि द्रव्य न लभ्यते, एतेषा च सर्वेषा वाक्या-

1. परस्पराश्रय . ग.

ननु—अन्तरावाक्यस्य विष्ण्वादियागसमुदायानुवादकत्वाभावे "तावब्रूताम्" इति कालपरे वाक्ये 'नौ' इत्यग्नीषोमप्रतिपादकोपपदमहिम्ना अग्नीषोमीयमात्रस्य ग्रहण स्यात्, न तु वैष्णवप्राजापत्ययोः। ततश्च फलवाक्ये तयोरश्रवणात्प्राधान्यं न स्यात्, इत्यत आह—

[1]प्राये वचनाच्च ॥ १२ ॥

प्रधानभूताग्नेयाग्नीषोमीययागीययाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानामाम्नानात्त्रिविधस्याप्युपांशुयाजस्य प्राधान्यमवगम्यते। तद्बलादेव "तावब्रूताम्" इति कालपरे वाक्ये 'नौ' इत्यस्योपलक्षणार्थत्वं सिद्धमिति भावः। प्रयोजनं पूर्वपक्षे वैष्णवादियागास्त्रयोऽपि समुच्चयेनानुष्ठेयाः, सिद्धान्ते त्वेक एव विकल्पितविष्ण्वादिदेवताको याग इति दिक्॥

इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

५

"अग्निहोत्रं जुहोति" "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोति" इत्यादि श्रुतम्, "आघारामाघारयति" "ऊर्ध्वमाघारयति" "ऋजुमाघारयति" "सन्ततमाघारयति" इत्यादि च। तत्र किम् "अग्निहोत्रं जुहोति" इति दध्यादिवाक्यप्राप्तसमुदायानुवाद, 'आघारमाघारयति' इति च 'ऊर्ध्वमाघारयति' इत्यादिवाक्यप्राप्तानुवादः? उत "अग्निहोत्रं जुहोति" इत्यपूर्वकर्मविधि. दध्यादिवाक्यानि तत्र गुणविधय, "आघारमाघारयति" इति चाघारविधि ऊर्ध्वादिवाक्यानि तत्रैव गुणविधय.? इति संशये, पूर्वपक्षयति—

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

आघारवाक्यमग्निहोत्रवाक्यञ्च न विधायकम्। कुतः? अरूपत्वात्—विधेयरूपराहित्यात्। न ह्यत्र [2]सामान्यरूप विधेयम्, तस्यानुष्ठानायोग्यत्वात्। नापि विशेष., तस्य 'अयमसौ' इत्यनिश्चितत्वेन विधातुमशक्यत्वात्॥

नन्वग्निहोत्रसंज्ञकमिदं कर्मेत्येवं संज्ञयैव विशेषावगम सम्भवतीत्यत आह—

---

1. प्रयवचनाच्च.　　2. धात्वर्थसामान्य. क, घ, ङ, मु.पा.

अय भाव.—"सोमेन यजेत" इत्यादिषु वाक्यान्तरेण कर्मणोऽप्राप्तेरगत्या गौरवमप्यङ्गीकृत्य विशिष्टविधानमभ्युपगम्यते। इह त्वाघाराग्निहोत्रवाक्यतः प्राप्तकर्मानुवादेन गुणमात्रविधाने सम्भवति न विशिष्टविधित्वमूर्ध्वादिवाक्याना न्याय्यमाश्रयितुम्। ततश्चाघाराग्निहोत्रवाक्ययोरप्राप्तार्थत्वाद्विधिपरत्वे निश्चिते तद्बलादेव सामान्यस्यायोग्यत्वात्तल्लक्षितो विशेष एव विधीयते। स च विशेष 'अयमसौ' इति विशिष्यानवगतोऽप्यन्यत्राविहितोऽय कश्चिद्धोमविशेष इत्येतावन्मात्रेणावगत इति कृत्वा विध्यर्ह। एवञ्च विशिष्य ज्ञानस्यानपेक्षितत्वान्न पूर्वपक्षोक्तान्योन्याश्रयावकाश [1]। तावन्मात्रावगमेनापि सञ्ज्ञोपबन्धोपपत्तेर्न सञ्ज्ञादुर्घटत्वञ्च। न च तस्यापि विशेषस्य रूपालाभादपर्यवसानमिति वाच्यम्, दध्यादिवाक्यतस्तल्लाभात्। न चाव्यापारत्वात्केवलस्य दध्यादिगुणस्य विधान न सम्भवतीति वाच्यम्, होमादिव्यापारविशिष्टस्य तस्य विधातुं शक्यत्वात्। न चैव सति गुणस्य साक्षाद्विधिविषयत्वाभावेन गुणविशिष्टकर्मविषयतया विधे प्रतीयमानतया कर्मोत्पत्तिपरत्वापत्तौ कर्मभेद स्यादिति वाच्यम्। कर्मण प्राप्तत्वेन तत्स्वरूपज्ञाने विधेरतात्पर्याद् अप्राप्तगुणाश एव विधेस्तात्पर्यात्। विधितात्पर्यविषय एव हि विधेयः, न तु विधिसम्बन्धितया प्रतीयमानमात्रम्। ततश्च दध्यादिवाक्यस्य कर्मोत्पत्तिविधित्वाभावेनाग्निहोत्रवाक्योत्पन्नकर्मणो दध्यादिवाक्ये दध्यादिगुणविशिष्टतया प्रतीयमानत्वेन न भेदप्रसक्ति। एवमाघारवाक्येऽपि। तथा चाघारवाक्यमग्निहोत्रवाक्यञ्च प्रकृतकर्मलाभाभावाद्रूपालाभसद्भावाच्च विधिरेव, न तु समुदायानुवाद.। प्रयोजन पूर्वपक्षे—दध्यादिवाक्यविधेयाना कर्मणा समुच्चयेनानुष्ठानम्, सिद्धान्ते त्वेकस्मिन्नेव कर्मणि दध्यादीना विकल्पितत्वान्न समुच्चय इत्यादि। आघारादिवाक्ये तूर्ध्वत्वादिगुणेषु यस्य भ्रशस्तद्गुणकस्य कर्मण पुनरनुष्ठान पूर्वपक्षे, सिद्धान्ते तु कर्मभेदाभावाद्गुणानुरोधेन प्रधानावृत्त्ययोगाद्गुणलोपप्रायश्चित्तमित्यादि ॥

इति पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥

६

"अग्नीषोमीय पशुमालभेत" इत्यत्रालभति. किम् "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस." इत्यादिविहिताना कर्मणा समुदायस्यानुवादः ? उतापूर्वकर्म-

1. परस्पराश्रय. ग.

ना तत्तद्गुणविशिष्टकर्मान्तरविधायकतया न क्वापि कर्मणि द्रव्यदेवतोभयलाभसम्भवः; तथापि दध्यादिवाक्यैर्देवतोद्देशरहितं त्यागप्रक्षेपमात्रं विधीयते, "यदग्नये च" इत्यादिवाक्येषु अग्न्यादेर्द्रव्यसम्बन्धेऽसति मुख्यदेवतात्वासम्भवादग्न्यादीनामुद्देशमात्रम्, चतुर्थ्यन्तशब्देन निर्देशलक्षणं विधीयते। मन्त्रविधिस्थलेऽपि मन्त्रस्योच्चारणमेव विधीयते। एतेषु च वाक्येषु जुहोतिस्तत्तद्विधेयत्यागप्रक्षेपादिषु लाक्षणिकः। तेषां च प्रक्षेपादीनां सर्वेषाम् "अग्निहोत्रं जुहोति" इत्ययमनुवादः। तत्प्रयोजनम् "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति फलवाक्ये सर्वेषां ग्रहणम्, 'अग्निहोत्रम्' इत्येकत्वनिर्देशस्य समुदायीकरणं विनानुपपत्तेः। किञ्च समुदायानुवादाभावे "यदग्नये च" इत्यादिवाक्यविहिताग्निसम्बन्धिकर्मण एवोपपदवशात्फलवाक्ये ग्रहणं स्यात्। सति तदनुवादे तत्सामर्थ्यात्प्रकृतानां सर्वेषामग्निहोत्रशब्दो नामधेयमित्यवगमात्सर्वेषां फलसम्बन्धसिद्धिः। एवमाघारवाक्येऽप्यूर्ध्वादिवाक्यविहितानामूर्ध्वत्वार्जवसान्तत्यतन्त्रविशिष्टकर्मणा[1] समुदायानुवादः। ततश्च "चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य" इति प्रयाजार्थाज्यरूपे संस्कार्ये आघारविनियोजकवाक्ये सर्वेषां ग्रहणं सिध्यति, 'आघारम्' इत्येकत्वनिर्देशस्य समुदायीकरणं विनानुपपत्तेः। तस्मादग्निहोत्रवाक्यमाघारवाक्यञ्च न विधायकमिति पूर्वः पक्षः। सिद्धान्तयति—

**चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥**

वाशब्द एवार्थे। अग्निहोत्रवाक्यमाघारवाक्यञ्च चोदना—अपूर्वकर्मविधायकमेव, न तु प्रकृतकर्मणामनुवादः। कुतः? आघारयतिशब्दार्थस्य जुहोतिशब्दार्थस्य च प्रयोगमनुष्ठानं प्राप्तत्वात्। आघारहोमयोरनन्यप्राप्तत्वेनावश्यविधेयत्वादित्यर्थः। नन्वूर्ध्वादिवाक्यैर्दध्यादिवाक्यैश्च विशिष्टकर्मविधायकैः प्राप्तत्वादनन्यप्राप्तत्वं तयोरसिद्धमित्यत आह—गुणार्थेन पुनः श्रुतिरिति। 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति तृतीया चतुर्थ्यर्थे। ऊर्ध्वत्वादिदध्यादिगुणविधानप्रयोजनाय 'आघारयति' 'जुहोति' इति पुनः श्रुतिः-अनुवाद इत्यर्थः। ननु सन्निहितं धात्वर्थं परित्यज्य प्रत्ययः कथं गुणं विदध्यादित्यत आह—तत्सन्निधेरिति। तस्य गुणस्य विशेष्यधात्वर्थानुप्रवेशेन प्रत्ययसन्निधानादित्यर्थः।

---

1. मन्त्र. क, ख, ग, घ, ङ, मु पा, मन्त्रादि च.

लताद्रव्यस्य हविष्ट्वप्रसङ्गात्। न चेष्टापत्तिः शङ्क्या, "अण्व्या धारया गृह्णाति" इति गुणवाक्यपर्यालोचनया धारासमर्थजलादिरूपद्रव्यविशेषस्य निश्चितत्वेन सोमलता-लक्षणद्रव्यविधेरसम्भवात्। न च सोमस्य रसीभावेनापि धारावाक्यस्योपपत्तेर्न स्वतःसिद्धजलादिद्रवद्रव्यस्य प्राप्तिरिति वाच्यम्। रसीभावे सत्युपत्तिशिष्टलतारूपस्य भङ्गापत्त्या तस्य हविष्ट्वालाभात्। अस्तु तर्हि रसभूतहविःप्रकृतित्वेन सोमद्रव्यस्य विधिः "व्रीहिभिर्यजेत" इति पुरोडाशप्रकृतिभूतव्रीहिद्रव्यवदिति द्वितीयः पक्ष.। न चेह विकृतिद्रव्यस्यानुपात्तत्वात्कथं प्रकृतिद्रव्यविधिरिति शङ्क्यम्। व्रीहिवाक्यवदेवो-पपत्ते'। न हि पुरोडाशानुवादेन व्रीहिविधि, 'व्रीहिभिः' इति कारकविभक्तेर्द्रव्य-सम्बन्धायोगात्पुरोडाशस्यानुपात्तत्वाच्च। किन्तु यागं प्रति करणत्वेन विहिता व्रीहयः पुरोडाशावरुद्धे यागे साक्षात्कारणत्वासम्भवात्प्रकृतित्वेन करणीभवन्तीति प्रकृतिविधिः सम्पद्यते। एवमत्रापि यागं प्रति करणत्वेन विहित. सोमो धारासमर्थद्रवद्रव्यावरुद्धे यागे तत्प्रकृतिर्भवतीत्यर्थात्प्रकृतिविधि सम्पद्यते। न च प्रकृतिनिरपेक्षजलसाधारण-त्वाद्धारासमर्थद्रव्यस्य पुरोडाशवैलक्षण्यादिह कथमर्थादपि प्रकृतिविधिसम्भव इति वाच्यम्। धारासमर्थद्रव्यं हि किञ्चिदपि यदि सर्वथा प्रकृतिसम्बन्धानर्हमेव स्यात्, तदा परं प्रकृतिविधिर्न सम्भवेत्। अर्हति च धारासमर्थद्रव्यं किञ्चिदिह प्रकृतिद्रव्येण सम्बन्द्धुम्। अत सोमशब्देन प्रकृतिद्रव्यविधिः सङ्गच्छत इति चेन्न, "सोममभिषु-णोति" "अभिषुतस्य सोमस्य धारां स्रावयति" इत्यादिवाक्यैरेव धारासमर्थद्रव्यस्य सोमलताप्रकृतिकतया निर्ज्ञातत्वेन प्रकृतिविधेरानर्थक्यात्। अतः सोमशब्दोऽपि "सोमं क्रीणाति" "सोममभिषुणोति" इत्यादिवाक्यप्राप्तार्थानुवादीभवन् तत्प्रख्यन्या-येन नामधेय भवति। न च ज्योतिष्टोमनाम्नः [1]सत्त्वान्नामान्तरानर्थक्यम्, न्यायप्रा-प्तत्वेन नामान्तरस्यापरिहार्यत्वात् 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशु सोम.' 'स्वर्गकामः सोमेन यक्ष्य इति सङ्कल्पयते' इत्यादिव्यव-हारस्य ज्योतिष्टोमनाम्नान्यथासिद्ध्यभावेनानर्थक्याभावाच्च। तथा च कृत्स्नं सोम-वाक्यमनुवाद.।

तत्र सोमशब्दस्य प्रयोजनमुक्तमेव। ऐन्द्रवायवादिवाक्यविहितानां यागानां समुदायानुवादकयजेस्तु प्रयोजनम् "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति फलवाक्ये

---

1. सद्भावात् क, ग, घ. सभवात् ङ, मु. पा.

विधायकः ? इति संशयः। तथा "सोमेन यजेत" इति यजतिः "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" इत्यादिविहितकर्मणां समुदायस्यानुवादः ? उतापूर्वकर्मविधायकः? इति संशयः। तत्र दध्यादिवाक्येषु कर्मविध्यभावेनाग्निहोत्राघारवाक्ययोरनुवादकत्वा-सम्भवेऽपि हृदयाद्यैन्द्रवायवादिवाक्येषु कर्मविध्यवश्यम्भावेन आलभतियजत्योस्तद-नुवादकत्वमेव युक्तम्। 'ऐन्द्रवायवम्' इति द्वितीयया गम्यमानं हि साध्यत्वमुत्पाद्य-तया वा ? संस्कार्यतया वा ? नाद्यः, देवतातद्धितान्तेन देवतासम्बन्धिद्रव्यवाचिना ऐन्द्रवायवादिशब्देन प्रतीयमानस्य द्रव्यदेवतासम्बन्धस्य यागैकघटनीयस्य ग्रहणेन घटयितुमशक्यतया 'ऐन्द्रवायवादिद्रव्यं ग्रहणेनोत्पादयेत्' इत्यर्थस्यायुक्तत्वात्। न द्वितीयः, अवहननादिसंस्कार्याणां व्रीह्यादीनाम् "व्रीहिभिर्यजेत" इत्यादिशास्त्रान्तरेण [1]सिद्धिवदैन्द्रवायवत्वादिविशिष्टद्रव्यस्यासिद्धत्वेन तदुद्दिश्य ग्रहणसंस्कारविधाना-योगात्, सोमवाक्यस्य यागविधायकत्वे उत्पत्तिशिष्टसोमरूपलताद्रव्यस्य ग्रहणेन संस्का-रानुपपत्तेश्च, धारादिवाक्यतो ग्रहणस्य रसविषयत्वावगमात्। एतेन 'ऐन्द्रवायवं ग्रहणेन भावयेत्' इत्यदृष्टार्थविधित्वमपि प्रत्युक्तम्, देवतासम्बन्धानुपपत्त्या आरादुपकार-कस्यापि ग्रहणस्य विध्यनुपपत्तेः। तस्मादैन्द्रवायवादिवाक्येषु द्रव्यदेवताभ्यां ग्रहणेन च विशिष्टयागा विधीयन्ते। न चैन्द्रवायवादिशब्दस्य 'तस्येदम्' इति सम्बन्धसामा-न्यविहिततद्धितान्तत्वमेवास्तु, तथा चेन्द्रवाय्वादिप्रकाशकमन्त्रेण क्रियमाणे ग्रहणे करणमन्त्रद्वारा इन्द्रवायुवैशिष्ट्यस्य ग्रहणद्वारा द्रव्ये च तद्वैशिष्ट्यस्योपपत्तेर्ग्रहणमात्र-विधिसम्भव इति वाच्यम्। सामान्यस्यानुष्ठानानौपयिकत्वेनानुष्ठानौपयिकसम्बन्ध-विशेषाभिधायिदेवतातद्धितान्तत्वे सम्भवति 'तस्येदम्' इति सम्बन्धसामान्याभिधा-यितद्धितान्तत्वाश्रयणस्यायुक्तत्वात्[2], 'सास्य देवता' इत्यधिकारे 'द्यावापृथिवीशुना-सीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' इति विशिष्यविहितदेवतातद्धितच्छ-प्रत्ययान्तेन 'मरुत्वतीयं गृह्णाति' इति वाक्यगतमरुत्वतीयशब्देन सहचरितानामैन्द्र-वायवादिशब्दानां तद्वैरूप्याय देवतातद्धितान्तत्वस्यैवाश्रयितुं युक्तत्वाच्च। एवञ्च प्रकृतानामैन्द्रवायवादियागानां सोमवाक्ये यजिः समुदायानुवादः, सोमशब्दोऽपि न विधिः। स हि गृह्णातिना अनियमेन प्राप्तस्य ग्राह्यद्रव्यस्य नियमविधिपरो वा ? प्रकृतिद्रव्यविधिपरो वा स्यात् ? नाद्यः, तर्ह्यैन्द्रवायवादिवाक्यविहितयागेषु सोम-

1. सिद्धवत् ग. 2 सामान्यतद्धितान्तत्वा. क, ग, मु. पा

भ्यस्तावन्त्यदृष्टानि अग्नीषोमीययागाच्चैकमदृष्टमिति गौरवापत्तेः । पशुवाक्यस्य हृदयादिवाक्यप्राप्तकर्मानुवादेन देवताविधौ तु न पशुवाक्याददृष्टकल्पनम्, किन्तु हृदयादिवाक्यत एवेति लाघवम् । तदेव हृदयादिसाधनकर्मसु पशुवाक्यतोऽग्नीषोम-देवताविधाने सति पश्चाद्देवतासम्बन्धाद्यागरूपाणि तानि कर्माणीति निर्धार्यत इति । अथवा हृदयादीनां पशुप्रभवत्वेन सान्नाय्यसाम्यात्तद्वदानं यागसाधनमिति निश्चये सति तत एव प्राप्तावदानसम्बन्ध आलभतिना आर्थिकस्पर्शनमुखेनानूद्यते, यथा [1]"तस्मै भक्षं प्रयच्छेत्" इति यागीयद्रव्यप्रतिपत्त्यर्थभक्षसंयोगेन फलचमसस्य याग-साधनत्वेऽवगते तत एव प्राप्तो भक्षोऽनूद्यते तद्वत् । एवञ्च प्रथममेव हृदयादिवाक्यै-र्यागा विधीयन्ते । तत्रैव च 'अग्नीषोमीयम्' इति देवताविधिः । आलभतिः पूर्ववदेव यागानुवादकः । पशुशब्दोऽपि पूर्ववदेव हृदयाद्युपलक्षक· । तदेवमुभयथापि पशु-वाक्येऽप्यालभतिरनुवादकः । अत एव "एकादश वै पशोरवदानानि" "हृदयस्या-ग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इत्यादिक्रमसमुच्चयावुपपद्येते । पशुवाक्यस्य यागविधायकत्वे यागस्यैकत्वाद्धृदयादीना विकल्पापत्त्या तदसङ्गति· स्पष्टैव । इति प्राप्ते, सिद्धान्तयति—

**द्रव्यासंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥**

पशुसोमयो —पशुसोमवाक्ययो· चोदना—पश्वग्नीषोमलक्षणद्रव्यदेवताविशि-ष्टस्य सोमविशिष्टस्य च यागस्य विधि । कुतः ? द्रव्यसयोगात्—एवं सत्येव पशुसो-मद्रव्यश्रवणस्य प्रयोजनेन सयोगात् । हि यस्मात्कारणात् प्रकरणे—प्रकृतहृदयाद्यैन्द्र-वायवादिवाक्यविहिते कर्मजाते सति पशुसोमद्रव्यसंयोगोऽनर्थकः स्यात् । विद्वद्वाक्य-योर्हि पौर्णमास्यमावास्याशब्दौ तादृशकालसंयुक्ताग्नेयादियागाना ताभ्या प्रत्यभिज्ञाना-दनुवादकौ । इह तु हृदयादिरूपरसरूपद्रव्यककर्मजातस्य पशुसोमशब्दाभ्यामाकृति-विशेषवाचकाभ्या संयुक्ते पशुसोमवाक्ये कथमनुवादकतया सार्थके स्याताम् ।

ननु पशुसोमशब्दयोर्गौण्या वृत्त्या तत्प्रकृतिकद्रव्यपरतया तदनुवादकत्व सम्भवतीत्युक्तमत आह—न हीति । गुण· उपचारः । अर्थः वृत्तिः । गुणादागतोऽर्थो गुणार्थ· गौणी वृत्ति· । तस्य हि पशुशब्दस्य सोमशब्दस्य च मुख्यार्थत्वे सम्भवति

1. तमस्मै. ग

सर्वेषां युगपद्ग्रहणात्समुच्चित्यानुष्ठानम् । सोमवाक्यस्य यागविधायकत्वे तु यागस्यैकत्वात्तदर्थानां देवताना खादिरपालाशादियूपवद्विकल्पापत्तिः । एवं ग्रहणानामपि । तथा सति "दशैतानध्वर्युः प्रातःसवने गृह्णाति" "आश्विनो दशमो गृह्यते" "तं तृतीयं जुहोति" इत्यादिवाक्ये दशशब्देन च प्रतीयमानः समुच्चयो मट्तृतीयप्रत्ययाभ्यां प्रतीयमान क्रमश्च विरुध्येयाताम् । उपांश्वन्तर्यामावैन्द्रवायवमैत्रावरुणाश्विनाः शुक्रामन्थिनावाग्रयण उक्थ्यो ध्रुवश्चेति दश ग्रहाः । अश्वदाभ्ययोरतिग्राह्याणां चानित्यत्वादिहाग्रहणम् । तेषां तैत्तिरीयशाखारीत्या ज्योतिष्टोमे समावेशेऽपि वाजसनेयिभिर्विकृतिसोमेष्वेवाम्नातत्वेन प्रकृतिसोमे तत्समावेशाभावात् । यद्यपि, उपांशुः प्रथमं हूयते ततोऽन्तर्याम ततो वायव्यो ग्रह ऐन्द्रवायवश्चैकेनैव पात्रेण क्रमेण हूयेते ततो मैत्रावरुणस्तत आश्विन इति क्रम , तत्रैन्द्रवायवमैत्रावरुणाश्विनेष्वध्वर्युणा हूयमानेषु प्रतिनिग्राह्यास्त्रयो ग्रहा हूयन्ते , तत्रोपांश्वन्तर्यामाववषट्कारहोमौ, इतरे सवषट्कारहोमा , एवं चाश्विनो नवमो हूयत इति कथं तृतीयत्वमिति , तथापि अध्वर्युकर्तृकसवषट्कारहोमाभिप्रायं पात्राभिप्रायं च तृतीयत्व बोध्यम् । तस्मादैन्द्रवायवादिवाक्यविहितानां यागानां समुदायानुवादकं सोमवाक्यमिति स्थितम् ।

एवमग्नीषोमीयवाक्यमपि न यागविधायकम् । हृदयादिक्ये हि तावद्यज्यश्रवणाद्देवताभावाच्च कर्ममात्राण्यवगतानि । तेषु च कर्मसु पशुवाक्येन पशुप्रकृतिकहृदयादिद्रव्यं लक्षणया पशुब्देनानूद्य 'अग्नीषोमीयम्' इति विधीयते । एवं च यथा आघारवाक्येन आघारसंज्ञककर्मण्यवगते चतुर्गृहीतवाक्यादाज्यद्रव्यलाभे "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारयति" इति मन्त्रविनियोगतो मान्त्रवर्णिकदेवतालाभे च सति तस्य यागरूपत्वाध्यवसानम् , तद्वद्धृदयादिवाक्यतो हृदयादिद्रव्यककर्ममात्रेष्ववगतेषु पशुवाक्येन देवतालाभात्तेषां यागरूपत्वमवधार्यते । अवद्यतिस्तु चोदकप्राप्तानुवादः । द्रव्यदेवतासम्बन्धाच्च गम्यमानो यागो द्रव्यभेदाद्भेदेनैव गम्यते, एकेन पशुशब्देनानुवादतो लब्धस्यापि साहित्यस्य हृदयाद्युद्देश्यगत्वेनाविवक्षितत्वात् । आलभतिस्तु स्पर्शनमुखेन तत्साध्यावदानसंस्कृतहृदयादियागोपलक्षकोऽनुवाद । यदि च पशुवाक्यं यागविधायक स्यात्तर्हि हृदयादिवाक्याना न संस्कारविधित्व शक्यते वक्तुम् , उत्पत्तिशिष्टपशुजातीयद्रव्यविरोधात् । न च दर्शपूर्णमासजाघनीवत्सूनास्थहृदयादिग्रहणे सति नोत्पत्तिशिष्टद्रव्यविरोध इति वाच्यम् । एव हि सति हृदयाद्यवदाने-

सस्येत्यश्रवणात्। न च तत्र सोमरसस्येत्यश्रवणेऽप्यभिषवादिवाक्यसन्निधानात्तस्य सोमरसविषयत्वमस्त्विति वाच्यम्। न हि तद्धितस्य सामान्यवाचिनो विशेषं विना पर्यवसानाभाववद्धाराशब्दस्यापर्यवसानमस्ति, श्रुतमात्रेण पर्यवसानोपपत्तेः। न च "व्रीहीन् प्रोक्षति" इत्यादिषु यथा प्रकृतग्रहणं तद्वद्धारावाक्येऽपि प्रकृतग्रहणं किं न स्यादिति वाच्यम्, वैषम्यात्। प्रोक्षणादिवाक्येषु लौकिकस्य संस्कारानुपपत्तेरपूर्वसाधनविशेषलक्षणया प्रकृतग्रहणं युक्तम्। धारावाक्ये तु ग्रहणोद्देशेन धारामात्रविधानं न प्रकृतापेक्षम्[1]। किञ्च सोमवाक्ये सोमद्रव्यस्याहत्यविधानानङ्गीकारे सोमस्याप्राप्तत्वेन क्रयाभिषवादिवाक्यानां तत्संस्कारविधायकत्वासम्भवेन 'सोमक्रयेण क्रतुमुपकुर्यात्' इत्याराद्उपकारकक्रयाभिषवादिविधायकत्वापत्त्या क्रयाभिषवादीनां लौकिकसोमविषयतयाप्युपपन्नतया एकसोमविषयत्वानापत्त्या धारावाक्यस्य कथं क्रयाभिषवादिवाक्यसन्निहितसोमरसविषयता। न हि 'सोमं क्रीणाति' 'तं क्रीतं सोममभिषुणोति' 'तस्याभिषुतस्य सोमस्य धारां करोति' इत्येवं वचनान्युपलभामहे। न च क्रयादिवाक्यानामेकयागप्रकरणे आम्नातत्वेन प्रकरणानुसारात्तद्वाक्येषु 'प्रकृतं सोमं क्रीणाति' 'प्रकृतं सोममभिषुणोति' इत्येवं प्रकरणविशेषितसोमस्य ग्रहणात्सर्वेषामेकविषयत्वमिति वाच्यम्। इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य विनियोगमात्रे व्याप्रियमाणस्य परविशेषत्वासम्भवात्। यथा चैतत्तथा सप्तमाद्ये स्पष्टं भविष्यति। न च प्रकरणस्याविशेषकत्वेऽपि "सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति" इत्यादौ सन्निहितैकहायनीसम्बन्धिपदादिवत्सन्निधिवशाद्विशेषोऽस्त्विति वाच्यम्। नवमाद्यपादे 'द्रव्यसंस्याहेतुसमुदाय[2] वा श्रुतियोगात्' इत्यधिकरणे 'तुल्येषु नाधिकारः स्यात्' इति गुणसूत्रे तुल्येष्वेकत्र सन्निधिरपरत्र विशेषको न स्याद्विनिगमनाविरहादिति वक्ष्यमाणत्वेन सन्निधेरप्यत्राविशेषकत्वात्। पदवाक्ये तु पदस्यावयवत्वेन नित्यमवयविसापेक्षत्वेन तत्र सन्निधेर्विशेषकत्वेऽपि धारादिवाक्येषु तथा नित्यापेक्षाभावेन वैषम्यम्। न चैन्द्रवायवादितद्धितस्य 'सास्य देवता' इति विहितस्य सर्वनामतुल्ययोगक्षेमतया "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्यत्र तच्छब्दवत्प्रकृतसोमपरामर्शकत्वं किं न स्यादिति वाच्यम्। 'सा वैश्वदेवी' इत्यत्र तच्छब्दस्य साकाङ्क्षस्य 'तप्ते पयसि' इति प्रकृतपरामर्शित्वसम्भवेऽप्यैन्द्रवायवादितद्धितस्य द्रव्यवाचकस्य प्रकृतिद्रव्यनिरपेक्ष-

1. विधानान्न प्रकृतापेक्षा क, घ, ङ. 2. समवाय, क, घ, ग.

गौण्या वृत्त्या तद्विकृतिद्रव्यपरत्वं न युक्तमाश्रयितुमित्यर्थः। न च पशुवाक्यस्य पशुविशिष्टयागविधिपरत्वे उत्पत्तिशिष्टपशुनैव यागस्य कर्तव्यत्वाद्धृदयादिवाक्यानामानर्थक्यं स्यात्, उत्पत्तिशिष्टद्रव्यभङ्गापत्त्या तेषां गुणविधित्वस्यासम्भवात्, अतः पशुवाक्ये पशुशब्दस्य लक्षणा दुर्वारेति वाच्यम्। यदि ह्युत्पत्तिशिष्ट पशोः करणत्वं हृदयादिवाक्यैर्गुणविधौ बाध्येत तदा परं हृदयादिवाक्यानामानर्थक्यं स्यात्। नैवमस्ति, हृदयादीनां यागसाधनत्वेऽपि पशुकरणत्वस्याबाधात्, हृदयादिप्रणाड्या पशोः करणत्वानपायात्, 'गोमयेन पचति' 'तुषपका भवन्ति' 'यागात्स्वर्गः' इत्यादौ लोकवेदयोर्व्यवधानेऽपि करणत्वदर्शनात्। तदेवं पशुवाक्य पशुद्रव्यदेवताविशिष्टयागविधि। हृदयादिवाक्यानि तु तत्रैव गुणविधयः। तत्रापि न प्राकृतावदानोद्देशेन हृदयादिविधय, किन्तु हृदयादिविशिष्टावदानान्तरविधय इति दशमे स्पष्टीभविष्यति। एवं च पशुद्रव्यस्यैकत्वात्तावदवदानसंस्कृतद्रव्यक एको याग इति लाघवम्। अन्यथा हृदयादिसाधनका बहवो यागा इति गौरवम्। एव सोमवाक्यं सोमलताविशिष्टयागविधिः। 'ऐन्द्रवायवम्' इत्यादयो गुणविधय। रसप्रणाड्या च सोमद्रव्यस्य यागसाधनत्वमभिषववाक्यादवधार्यते।

ननु ऐन्द्रवादिवाक्यविहितयागेष्वेव सोमस्य हविष्ट्वेन विधानं किं न स्यात्, न च धारावाक्यान्यथानुपपत्त्या न सोमस्य हविष्ट्वविधिसम्भव इति वाच्यम्, रसप्रणाड्या तदुपपत्तेरुक्तत्वादिति चेत्, न, 'ऐन्द्रवायवम्' इत्यादितद्धितस्य द्रव्यसामान्यवाचकस्य धारावाक्यासन्निहितधारासमर्थद्रवद्रव्यविशेषविषयतयैवोपपत्त्या ऐन्द्रवायवादिवाक्यत एव द्रव्यविशेषलाभे सति गृह्णातिना अनियमेन द्रव्याक्षेपासम्भवेन हविर्विधानासम्भवात्। एतेनैन्द्रवायवादियागीयधाराद्रव्यप्रकृतित्वेन सोमस्य विधिः किं न स्यादित्यपि निरस्तम्, ऐन्द्रवायवादितद्धितस्य धारावाक्यप्राप्तप्रकृतिद्रव्यनिरपेक्षजलादिद्रवद्रव्येणैव शान्ताकाङ्क्षतया अवश्यं प्रकृतिद्रव्यापेक्षाभावेन प्रकृतिविध्यसम्भवात्। एतेनैवाभिषवादिवाक्यत सोमप्राप्तिमुपजीव्य सोमवाक्ये सोमशब्दस्य तत्प्रख्यन्यायेनैन्द्रवायवादियागनामधेयत्वं निरस्तम्, "सोमन यजेत" इत्याहत्य सोमविधे प्राक्सोमस्याप्राप्तत्वात्। न च धारावाक्यस्य सोमरसविषयत्वेन तद्वाक्यविहितसोमरसविषयत्वमैन्द्रवायवादितद्धितस्य भविष्यतीति तत सोमद्रव्यस्य प्राप्तिरिति वाच्यम्। न हि धारावाक्यस्य सोमरसविषयत्वे किञ्चित्प्रमाणमस्ति, तद्वाक्ये सोमर-

**तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो [1]द्रव्यगुणभावात् ॥ १९ ॥**

ऐन्द्रवायवादिवाक्येषु 'इन्द्रवायुभ्यामिदं दातव्यम्' 'मित्रावरुणाभ्यामिदं दातव्यम्' इत्येव तत्तद्देवतोद्देशविशिष्टग्रहणानि श्रुतानि। तत्र प्रतिग्रहणं तत्तद्देवतोद्देशेनान्यदन्यददृष्टमुत्पद्यते। तथाविधग्रहणैश्च द्रव्यमुखेन प्रधानस्योपकार इति स्थिति। तत्र कर्मणो-ग्रहणस्य अभ्यास -पुन' पुनरनुष्ठानम्। ग्रहणानां समुच्चय. स्यादिति यावत्। कुतः? तद्भेदात्-देवतासयोगभेदात्। न हि तत्तद्देवतोद्देशजनितादृष्टसध्रीचीनग्रहणैर्जायमान उपकार एकदेवतासयोगसध्रीचीनेनैकेन ग्रहणेन सम्भवति। अतो ग्रहणाना समुच्चय। ननु तावद्देवतासयुक्तादेकस्मादेव ग्रहणात्तथाविधोपकार सम्भवतीत्यत आह—द्रव्यपृथक्त्वादिति। दशमुष्टिपरिमितसोमलतासम्भूतस्यैकघनवसतीवर्युदकै. प्रभूतमभिवर्धितस्य रसद्रव्यस्य प्रादेशमात्रेषूर्ध्वपात्रेष्वल्पगर्तेषु स्थालीचमसेषु तत्तद्देवतासंयुक्तग्रहणसंस्कारस्य पृथक्त्वावश्यम्भावात्। सकृद्ग्रहणे ह्यल्पस्यैव रसस्य किञ्चिद्देवतासयुक्तग्रहणसंस्कारापत्तौ देवतान्तरश्रवण परिशि रसद्रव्यमनर्थक स्यात्। ननु देवतासङ्कल्पस्य ग्रहण प्रति गुणभूतत्वात्तदनुसारेण ग्रहणानामपि भेदाश्रयणमयुक्तमित्यत आह—भेद इति। प्रतिदेवत ग्रहणभेद एव युक्तः। कुत.? द्रव्यगुणभावात्। देवतासङ्कल्पस्तावन्न केवल ग्रहणार्थो, किन्तु गृह्यमाणद्रव्यार्थः। ग्रहणमपि द्रव्यार्थमेव। एव चोभयोरपि द्रव्यानुसारेण निवेशो युक्तः। कृत्स्नेन दशमुष्टिना सोमेन हि यागः श्रुत', ऐन्द्रवायवादिग्रहणञ्च श्रुतम्। यदि कृत्स्नस्य ग्रहणं कथञ्चित्सकृदेव स्यात् तर्हि यदेवेन्द्रवायुभ्या सङ्कल्पित तदेव 'मित्रावरुणाभ्याम्' इति सङ्कल्प्येत। न चैतद्युज्यते, 'ऐन्द्रवायवम्' इत्यादिनिरपेक्षतद्धितविरोधात्। यदि चैकदेशस्य ग्रहणं सकृदेव स्यात्तर्हि दशमुष्टिपरिमाणकार्त्स्न्यविरोध। ग्रहणाभ्यासे तु द्रव्यस्य पृथक्कृतत्वात् 'ऐन्द्रवायवम्' इत्यादि युज्यते। परिमाणकार्त्स्न्यस्याप्यविरोध। ततश्च यावद्देवत ग्रहणाभ्यासः सिद्धः। तस्मिंश्चाभ्यस्यमाने देवतासम्बन्धानां याग विनानुपपत्तेर्यागस्याप्यभ्यासः सिद्धः। तथा च "आश्विनो दशमो गृह्यते तं तृतीय जुहोति" इति क्रमसमुच्चयदर्शनमुपपन्नं भवति। हृदयादिविषये समुच्चयदर्शनन्तु (णा) दशमे तत्समुच्चयस्य वक्ष्यमाणत्वात्तत एव व्यक्तमिति तदत्र सूत्रकृतोपेक्षितम्॥

1. द्रव्यगुणीभावात्

जलादिद्रव्यसमर्पकप्रकृतधारावाक्यत एव जलादिद्रव्यलाभेन शान्ताकाङ्क्षतया व्यवहिताभिषवादिवाक्योपस्थितसोमविषयत्वानुपपत्तेः, धारावाक्यस्य च सोमरस-विषयतायाः प्रागेव निरस्तत्वात्। अत. सोमवाक्ये सोमशब्दस्तत्प्रख्यन्यायेन नामधेयमित्ययुक्तमिति तत्र सोमद्रव्यविशिष्टयागविधिरेवास्थेय

इतोऽपि न समुदायानुवाद इत्याह—

**अचोद श्च संस्काराः ॥ १८ ॥**

चशब्दो युक्त्यन्तरसमुच्चये। हृदयाद्यैन्द्रवायवादिशब्दसन्दर्भाः अचोदकाः यागाना विधायका न भवन्ति, येन पशुसोमवाक्ये तदनुवादके स्याताम्। किन्तु सस्काराः अवदानग्रहणविधायिन एवैते। अविहितेषु च यागेषु केषा समुदायोऽनूद्येत, अवदानग्रहणमात्रविधानेनैवोभयेषा वाक्यानामुपपत्तेः। सम्भवति हि 'हृदयादीन्यव-दानेन यागयोग्यानि कुर्यात्' 'ऐन्द्रवायवादिग्रहणेन सोमरसं सस्कुर्यात्' इति। तत्र यागाव्यभिचरितावदानस्य देवताविशिष्टग्रहणस्य च यागमन्तरेणानुपपत्तेः यागापेक्षा-याम् "अग्नीषोमीयं पशुमालभेत" इति "सोमेन यजेत" इति च वाक्य सर्वत्र द्रव्य-देवतासम्बन्धानुपपादयद्यागान्तरकल्पन निरुणद्धि। न चैव यागावश्यम्भावेऽप्याग्ने-यादिवाक्ये श्रुतस्य द्रव्यदेवतासम्बन्धस्य निर्वाहकत्वेन तत्रैव यथा याग कल्प्यते एवं हृदयाद्यैन्द्रवायवादिवाक्येष्वेव यागकल्पनास्तु, पशुसोमवाक्ये तु तदनुवादके एव, अन्यथा विद्धद्वाक्यमप्यनुवादक न स्यात्, पशुसोमवाक्ययोर्हृदयाद्यैन्द्रवायवादि-वाक्यापेक्षितयागविधायकत्ववत्तस्याप्याग्नेयवाक्यापेक्षितयागविधायकत्वसम्भवादिति वाच्यम्। विशिष्टाभिधानेन पर्यवसितस्य हि वाक्यस्याकाङ्क्षाबलाद्वाक्यान्तरेण सम्बन्धः। आग्नेयादिवाक्ये च पुरुषव्यापाराश्रवणाद्विशिष्टभावनाभिधानमेव न पर्यवस्यति। अपर्यवसितस्य च न विद्धद्वाक्येनान्वय इति विशिष्टभावनाविधि-पर्यवसानाय पुरुषव्यापाररूपो यागस्तत्रैव कल्प्यते। अतो विद्धद्वाक्यमनुवाद इति युक्तम्। इह त्ववदानग्रहणरूपपुव्यापारश्रवणात्पर्यवसन्नमेवाभिधानम्। किन्त्वभि-धानानन्तरमवदानदेवतासम्बन्धनिर्वाहकापेक्षामात्रमिति पशुसोमवाक्ये अपेक्षित-विधानार्थे सम्पद्येते। एवञ्च श्रुतेनैव निर्वाहोपपत्तौ हृदयाद्यैन्द्रवायवादिवाक्येष्व-श्रुतयागकल्पनं न भवतीति लाघवम्। तस्मात्पशुसोमवाक्ये यागविधायके॥

यदुक्तं सोमवाक्यस्य यागविधायकत्वे देवताना ग्रहाणाञ्च विकल्पापत्तौ क्रमसमुच्चयदर्शनं नोपपद्यत इति, तत्राह—

इत्यादिवत्सामान्ये नपुंसकम्। द्वित्र्यादिसङ्ख्यायाः पृथक्त्वैकार्थसमवायादित्यर्थः। यत्र ह्युत्पत्तिवाक्ये कर्मैक्यविरोधि पदान्तरं नास्ति तत्रैवाख्यातसकृच्छ्रुते. कर्मैक्यप्रयोजकता; यथा "सोमेन यजेत" इत्याम्नातस्याख्यातस्य न कर्मैकत्वमर्थः, किन्तु भेदनियामकाभावे आख्यातस्य सकृच्छ्रुत्या अर्थात्तदैक्यसिद्धिः[1]। प्रकृते च 'तिस्र.' इति भेदनियामके सति सकृच्छ्रुतमेवाख्यातं भिन्नान्यपि कर्माणि युगपदेव विधत्त इति नाख्यातसकृच्छ्रवणादेकत्वसिद्धिः। न ह्याख्यातमात्रमेक वाक्यं येन तन्मात्रजन्यप्रमायां विरोधिसङ्ख्यान्तराभावादाख्यात कर्मैक्यमवगमयितुं प्रभवेत्। ततश्चाख्यातमात्रस्य प्रामाण्याभावान्न तत. कर्मैकत्वसिद्धिः। प्रयाजेषु तु प्रकृतौ प्रज्ञातपञ्चसङ्ख्याकेषु विकृतौ चोदकत. प्राप्तेषु तद्बाधायैकादशत्वसङ्ख्या तदभ्यासेनैव पूरयितुमुचिता। न चेह कर्मैकत्वं वाक्यान्तरावगतं, येन तदविरोधायाभ्यासेन त्रित्वसङ्ख्या पूर्येत। त्रित्वसङ्ख्याविशिष्टतयैव हि होमविधानमत्र क्रियते। तस्मादत्र कर्मभेद इति वैषम्यम्। "दर्भपुञ्जीलैः पावयति" इत्यादौ तु सङ्ख्यायाः कर्मसामानाधिकरण्याभावान्न भेदकत्वम्।

प्रयोजनं पूर्वपक्षे—अभ्यासे सत्यपि कर्मणो भेदाभावादेकमन्त्रत्वाच्च सकृदेव मन्त्र' प्रयोज्यः, सिद्धान्ते तु—कर्मभेदात्प्रतिकर्म मन्त्र आवर्तनीय इति प्राञ्च। तच्चिन्त्यम्, तैत्तिरीयके हि "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इति श्रुतम्। त्रयश्च मन्त्रा. पठिताः। न च तत्र द्वि स्वाहाकारपाठाद्द्वौ मन्त्राविति शङ्क्यम्, प्रथमस्वाहान्तभागे द्वयोः प्रश्लिष्टपाठात्। "आमनमस्यामनस्य देवा ये जाता समनस" इत्यादिः प्रथम'। 'आमनमस्यामनस्य देवा ये कुमारा. समनसः" इत्यादिर्द्वितीय.। तृतीयस्तु "आमनमस्यामनस्य देवा या स्त्रियः" इत्यादि पृथगेव पठित इति भट्टभास्करभाष्ये स्पष्टम्[2]। अतः कर्मैकत्वपक्षेऽपि प्रतिहोमप्रयोगमेकैकमन्त्रप्राप्तेर्मन्त्रस्यावृत्तेरप्रसक्तत्वात्पूर्वोत्तरपक्षयोर्न फलभेद इति। वस्तुतस्तु "भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति" इत्यत्र कर्मैकत्वे अभ्यासान्तरये[3] सति तत्सम्पत्त्यै न पुन प्रयोग। कर्मभेदे तु पञ्चाना मध्ये यस्यान्तरयस्तस्य प्रयोग इत्यादि बोध्यम्। 'भुवनस्य पत इत्यादि पञ्चकृत्वो यजुर्वेदेत्' इति बोधायनकात्यायनीयाः।

---

1. विधि क, घ, ग, ङ, मु पा.　　2. व्यक्तम् क, ग, घ, ङ, मु. पा
3. अभ्यासान्तराये ग, घ, मु पा.

यच्चोक्तं सोमवाक्यस्य यागविधायकत्वे खादिरादिवद्देवतानां विकल्पः स्यादिति, तत्राह—

**संस्कारस्तु न भिद्यते[1] परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २० ॥**

खादिरादियूपेषु संस्कारः-पशुनियोजनं प्रतियूपं न भिद्यते । नियोजने तेषां समुच्चयो न भवतीति यावत् । कुतः ? परार्थत्वात्-तेषां पशुनियोजनार्थत्वात् । पशुनियोजनस्य चैकेनैव निष्पन्नत्वेनेतरेषां तदनपेक्षितत्वात् । देवतासंयोगानान्तु भिन्नभिन्नादृष्टकार्यकत्वात्समुच्चय इति वैषम्यम् । प्रयोजनं पूर्वपक्षे-ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तेषां यागानां स्वार्थतया विनियुक्तदेवताकत्वाभावलक्षणाव्यक्तत्वाभावेन 'अव्यक्तासु तु सोमस्य' इति[2]न्यायाप्रवृत्तिः, सिद्धान्ते तु-तत्प्रवृत्तिः । पशूदाहरणे तु पूर्वपक्षे-यागभेदाद्विकृतिष्वेकस्यैव यागस्येतिकर्तव्यताप्राप्तेर्दृद्यादिष्वेकेन यागः, सिद्धान्ते-सर्वैरित्यादि ॥

इति षष्ठं पशुसोमाधिकरणम् ॥६॥

७

वृत्तोऽभ्यासप्रसङ्गः सापवादः । इदानीं सङ्ख्यया कर्मभेदः प्रस्तूयते । साङ्ग्रहण्यां श्रूयते "तिस्र आहुतीर्जुहोति" इति । तत्र किमेको होमो विधीयते ? उत बहवः ? इति संशयः । तत्राभ्यासस्थले आख्यातस्य पुनःश्रुत्या कर्मभेदे सत्यपि सङ्ख्यास्थले तदभावान्न कर्मभेदः, सकृच्छ्रुतस्याख्यातस्यानेकत्र व्यापारायोगात् । ततश्च यथा प्रयाजानां प्रकृतौ पञ्चसङ्ख्याकत्वेन प्रज्ञातत्वात् तदविरोधाय पशौ श्रुतं प्रयाजैकादशत्वमभ्यासेन सम्पाद्यम्, तथेहापि स्वपदगताख्यातत प्रथमावगतकर्मैक्याविरोधाय पदान्तरावगता त्रित्वसङ्ख्या अभ्यासेनैव सम्पाद्या । इति प्राप्ते, सिद्धान्तयति—

**[3]पृथक्त्वनिवेशित्वात्सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥**

"तिस्र आहुतीः" इति पदान्तरगतयाप्युत्पत्तिशिष्टया कर्मसमानाधिकरणया सङ्ख्यया कर्मभेदः स्यात् । कुतः ? पृथक्त्वनिवेशित्वात्-पृथक्त्वेन सहैव निवेष्टुं शीलमस्य पृथक्त्वनिवेशि तस्य भावः तस्मात् । 'शरदः कृतार्थता' 'पत्न्याः कर्तृत्वम्'

1. भिद्येत. 2. न्यायस्या. ग, घ 3. पृथक्त्वनिवेशात्

इत्यादिवत्सामान्ये नपुंसकम्। द्वित्र्यादिसङ्ख्यायाः पृथक्त्वैकार्थसमवायादित्यर्थः। यत्र ह्युत्पत्तिवाक्ये कर्मैक्यविरोधि पदान्तरं नास्ति तत्रैवाख्यातसकृच्छ्रुतेः कर्मैक्य-प्रयोजकता; यथा "सोमेन यजेत" इत्याम्नातस्याख्यातस्य न कर्मैकत्वमर्थः, किन्तु भेदनियामकाभावे आख्यातस्य सकृच्छ्रुत्या अर्थात्तदैक्यसिद्धिः[1]। प्रकृते च 'तिस्रः' इति भेदनियामके सति सकृच्छ्रुतमेवाख्यातं भिन्नान्यपि कर्माणि युगपदेव विधत्त इति नाख्यातसकृच्छ्रवणादेकत्वसिद्धिः। न ह्याख्यातमात्रमेक वाक्यं येन तन्मात्रजन्य-प्रमायां विरोधिसङ्ख्यान्तराभावादाख्यातं कर्मैक्यमवगमयितु प्रभवेत्। ततश्चाख्यात-मात्रस्य प्रामाण्याभावान्न तत कर्मैकत्वसिद्धिः। प्रयाजेषु तु प्रकृतौ प्रज्ञातपञ्चसङ्-ख्याकेषु विकृतौ चोदकतः प्राप्तेषु तदबाधायैकादशत्वसङ्ख्या तदभ्यासेनैव पूरयितु-मुचिता। न चेह कर्मैकत्व वाक्यान्तरावगतं, येन तदविरोधायाभ्यासेन त्रित्वसङ्ख्या पूर्येत। त्रित्वसङ्ख्याविशिष्टतयैव हि होमविधानमत्र क्रियते। तस्मादत्र कर्मभेद इति वैषम्यम्। "दर्भपुञ्जीलैः पावयति" इत्यादौ तु सङ्ख्याया. कर्मसामानाधिकरण्या-भावान्न भेदकत्वम्।

प्रयोजनं पूर्वपक्षे—अभ्यासे सत्यपि कर्मणो भेदाभावादेकमन्त्रत्वाच्च सकृदेव मन्त्र. प्रयोज्यः, सिद्धान्ते तु—कर्मभेदात्प्रतिकर्म मन्त्र आवर्तनीय इति प्राञ्च। तच्चि-न्त्यम्, तैत्तिरीयके हि "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इति श्रुतम्। त्रयश्च मन्त्राः पठिताः। न च तत्र द्वि स्वाहाकारपाठाद्द्वौ मन्त्राविति शङ्क्यम्, प्रथमस्वाहान्तभागे द्वयो' प्रश्लिष्टपाठात्। "आमनमस्यामनस्य देवा ये जाताः समनसः" इत्यादि प्रथम'। 'आमनमस्यामनस्य देवा ये कुमारा. समनसः" इत्यादिर्द्वितीय। तृतीयस्तु "आमनमस्यामनस्य देवा या स्त्रियः" इत्यादि' पृथगेव पठित इति भट्टभास्करभाष्ये स्पष्टम्[2]। अतः कर्मैकत्वपक्षेऽपि प्रतिहोमप्रयोगमेकैकमन्त्रप्राप्तेर्मन्त्रस्यावृत्तेरप्रसक्तत्वात्पूर्वोत्तरपक्षयोर्न फलभेद इति। वस्तुतस्तु "भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति" इत्यत्र कर्मैकत्वे अभ्यासा-न्तरये[3] सति तत्सम्पत्त्यै न पुन प्रयोग। कर्मभेदे तु पञ्चाना मध्ये यस्यान्तरयस्त-स्य प्रयोग इत्यादि बोध्यम्। 'भुवनस्य पत इत्यादि पञ्चकृत्वो यजुर्वेदेत' इति बोधायनकात्यायनीयाः।

1 विधि क, घ, ग, ङ, मु पा        2. व्यक्तम् क, ग, घ, ङ, मु. पा
3. अभ्यासान्तराये ग. घ स पा.

यच्चोक्तं सोमवाक्यस्य यागविधायकत्वे खादिरादिवद्देवतानां विकल्पः स्यादिति, तत्राह—

**संस्कारस्तु न भिद्यते[1] परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २० ॥**

खादिरादियूपेषु सस्कार.-पशुनियोजन प्रतियूपं न भिद्यते। नियोजने तेषा समुच्चयो न भवतीति यावत्। कुत. ? परार्थत्वात्–तेषा पशुनियोजनार्थत्वात्। पशुनियोजनस्य चैकेनैव निष्पन्नत्वेनेतरेषा तदनपेक्षितत्वात्। देवतासयोगानान्तु भिन्नभिन्नादृष्टकार्यकत्वात्समुच्चय इति वैषम्यम्। प्रयोजन पूर्वपक्षे–ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तेषा यागानां स्वार्थतया विनियुक्तदेवताकत्वाभावलक्षणाव्यक्तत्वाभावेन 'अव्यक्तासु तु सोमस्य' इति[2]न्यायाप्रवृत्ति , सिद्धान्ते तु–तत्प्रवृत्ति.। पशूदाहरणे तु पूर्वपक्षे–यागभेदाद्विकृतिष्वेकस्यैव यागस्येतिकर्तव्यताप्राप्तेर्हृदयादिष्वेकेन यागः, सिद्धान्ते–सर्वैरित्यादि ॥

इति षष्ठ पशुसोमाधिकरणम् ॥६॥

७

वृत्तोऽभ्यासप्रसङ्ग सापवादः। इदानीं सङ्ख्यया कर्मभेद प्रस्तूयते। साङ्ग्रहण्या श्रूयते "तिस्र आहुतीर्जुहोति" इति। तत्र किमेको होमो विधीयते ? उत बहव' ? इति सशय.। तत्राभ्यासस्थले आख्यातस्य पुन श्रुत्या कर्मभेदे सत्यपि सङ्ख्यास्थले तदभावान्न कर्मभेदः, सकृच्छ्रुतस्याख्यातस्यानेकत्र व्यापारायोगात्। ततश्च यथा प्रयाजाना प्रकृतौ पञ्चसङ्ख्याकत्वेन प्रज्ञातत्वात् तदविरोधाय पशौ श्रुत प्रयाजैकादशत्वमभ्यासेन सम्पाद्यम् , तथेहापि स्वपदगताख्यातत प्रथमावगतकर्मैक्याविरोधाय पदान्तरावगता त्रित्वसङ्ख्या अभ्यासेनैव सम्पाद्या। इति प्राप्ते, सिद्धान्तयति—

**[3]पृथक्त्वनिवेशित्वात्सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥**

"तिस्र आहुती." इति पदान्तरगतयाप्युत्पत्तिशिष्टया कर्मसमानाधिकरणया सङ्ख्यया कर्मभेद स्यात्। कुत ? पृथक्त्वनिवेशित्वात्–पृथक्त्वेन सहैव निवेष्टुं शीलमस्य पृथक्त्वनिवेशि तस्य भाव. तस्मात्। 'शरद. कृतार्थता' 'पत्न्या. कर्तृत्वम्'

1. भिद्येत. 2. न्यायस्या. ग, घ 3. पृथक्त्वनिवेशात्

दशैव स्युरिति भवति संशयः। तत्र कृतैकशेषस्य तद्धितस्यैव पूर्वं बहुत्वेनान्वय इति युक्तम्। अस्ति हि केवलतद्धितानामेकशेषः 'गर्गाः' इत्यादौ। गर्गशब्दादेकस्माद्बहूनां यञामुत्पत्तेस्तद्धितमात्रैकशेषस्य 'सरूपाणाम्' इति सूत्रे 'तद्राजस्य' इति सूत्रे च भाष्यकैयटयोर्दर्शनात्। न च तद्धितार्थस्य प्रथमं बहुत्वान्वयेऽपि तद्धितस्य देवताविशिष्टद्रव्यवाचित्वेन द्रव्यदेवतासम्बन्धभेदप्रसङ्गान्न यागैक्यसिद्धिरिति वाच्यम्। तद्धितेन[1] हि द्रव्यमात्रमभिधीयते। देवता तु तद्धितोपसन्दानात्प्रकृत्यैव प्रतीयते। तथा च तद्धितार्थद्रव्यस्यैव बहुत्वान्वयान्न यागभेद प्रसज्यते। न च तद्धितमात्रस्यैकशेषेऽपि तद्धितान्तादेव बहुवचनोत्पत्त्या तद्धितस्यैव प्रकृत्या प्रथगन्वयेन भाव्यमिति वाच्यम्। प्रथम तद्धितार्थस्य प्रजापतिना देवतया अन्वयेऽपि विशेष्यमात्रस्यैव बहुत्वान्वयितया विशिष्टस्य तदन्वयाभावेन यागभेदासिद्धेः। प्राजापत्यशब्देन हि देवतासम्बन्धोपसर्जनं द्रव्यमेव प्राधान्येनाभिधीयते। प्रधानत्वात्तस्यैव बहुत्वेनान्वयो युक्त, न तु देवतासम्बन्धस्योपसर्जनस्यापि। यदि च विशिष्टरूपस्य प्रतीतत्वमात्रेणोपसर्जनस्याप्यन्वयः स्यात्तर्हि 'द्वौ' 'त्रयः' इत्यत्रातिप्रसङ्गः। न हि तत्र द्वित्वविशिष्टस्य त्रित्वविशिष्टस्य च द्विवचनबहुवचनाभ्यामन्वयः, तथा सति 'द्वौ' इति चत्वारः प्रतीयेरन् 'त्रयः' इति नव। अतोऽत्र प्राजापत्यशब्दे विशेष्यभूतद्रव्यमात्रस्य प्रथमं बहुत्वेनान्वयो युज्यत इति न यागभेदः। न चात्र यागैक्ये एकस्यैव पशोर्यागसाधनत्वं स्यान्नेतरेषाम्, प्रकृतौ "अग्नीषोमीय पशुम्" इत्येकत्वस्योपादेयगतत्वेन विवक्षिततया एकपशुनिष्पन्नानां हृदयाद्यवयवाना यागसाधनत्वेन इहाप्येकपशुनिष्पन्नानामेव तेषामवयवानां चोदकतः प्राप्ते यागैक्ये चोदकस्यैकत्वेन पश्वन्तरेषु तत्प्राप्त्यभावादिति वाच्यम्, इह सप्तदशाना पशूनामुपदेशबलेन तदनुसारेण चोदकतः प्रतिपश्वेकादशावयवप्राप्तेर्वर्णनीयतया सर्वेषा यागसाधनत्वोपपत्तेः। न च सप्तदशपशूपदेशस्य कर्मभेदेऽप्युपपत्त्या न तद्बलेन चोदकस्यान्यथाभावो युक्त इति वाच्यम्, प्रकृतौ ह्येकादशावयवप्रकृतिभूतस्य पशोरेव यागसाधनतया एकादशावदानगणस्य पशुधर्मत्वेन साक्षाद्यागधर्मत्वाभावेनोपाकरणनियोजनादिपशुधर्मवदेकादशावदानगणस्य कर्मैक्येऽपि प्रतिपशुप्राप्तिसम्भवेन सर्वेषा पशूना यागसाधनत्वोपपत्तेः। किञ्च तद्धितान्तैकशेषेण कर्मभेदे सप्तदश कर्माणि तावन्ति चापूर्वाणि कल्प्यानि। तद्धितमात्रैकशेषे त्वेकमेव कर्म तदपूर्वं चेति लाघवम्।

1 तद्धितो हि द्रव्यमात्रमभिधत्ते क, घ, ग, ड, मु. पा.

अत्र "द्वादश द्वादशानि जुहोति" इत्यप्युदाहृतं वार्त्तिके। द्वादशसङ्ख्याकावयवकान् सङ्घातान्द्वादशसङ्ख्यायुक्ताञ्जुहोतीत्यर्थः। ततश्च चतुश्चत्वारिंशदधिकशतं होमाः सम्पन्नाः। तत्र "अग्नाविष्णू सजोषसा" इत्यारभ्य "अन्नं च मे" इत्यतः प्राक्पञ्चत्रिंशदधिकं शतं मन्त्राः सन्ति। तत्र सङ्ख्यासम्पत्तये "कूयवाश्च मे" इति मन्त्रस्य दशकृत्वोऽभ्यास इति तद्व्याख्यातारः। वस्तुतस्तु नेदमुदाहरणम्, उत्पत्तिवाक्यगता हि सङ्ख्या कर्मभेदिका। "वसोर्धारां जुहोति" इत्युत्पत्तिवाक्यम्। तदुत्पन्नकर्मानुवादेन "द्वादश द्वादशानि" इति श्रुता सङ्ख्या कथं कर्म भिन्द्यात्? अन्यथा प्रयाजैकादशत्वादीनामपि कर्मभेदकत्वापत्तेः। अतः "द्वादश द्वादशानि" इति सङ्ख्यासम्पत्तिरभ्यासादेव शक्यते साधयितुम्। किञ्च "द्वादश द्वादशानि जुहोति" "अर्धेन्द्राणि जुहोति" "यज्ञायुधानि जुहोति" इत्यादयः "वसोर्धारां जुहोति" इत्युत्पन्नहोममन्त्रावयवान् "द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमवरुन्द्धे" इत्याद्यर्थवादैः प्रशंसितुमनुवादा इति भवस्वामिभाष्ये भट्टभास्करभाष्ये च स्पष्टम्। अतः "द्वादश द्वादशानि" इति नोदाहरणमित्यास्तां तावत्।

क्वचिद्द्रव्यगतापि सङ्ख्या कर्मभेदिका। तथाहि—वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभते" इति। तत्र किं सप्तदशपशुद्रव्यक एको यागः? किं वा एकैकपशुद्रव्यकाः सप्तदश यागाः? इति संशयः। प्राजापत्यशब्दस्तावत् 'तद्धिताः' इत्यधिकारे 'सास्य देवता' इत्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति विहितवद्धितसञ्ज्ञकण्यप्रत्ययान्तः। तत्र यदि 'अस्य' 'अस्य' इति सप्तदशकृत्व उच्चार्य कृतैकशेषेण 'एषाम्' इति सर्वनाम्ना 'प्रजापतिर्देवतैषाम्' इति विगृह्य प्रजापतिशब्दात्सप्तदशसु तद्धितेषु कृतेषु तेषां केवलानामेकशेषे सति 'यः शिष्यते स लुप्तार्थाभिधायी' इति न्यायेन शिष्टस्यैकस्य तद्धितस्य सप्तदशसु वृत्त्या प्रथमं बहुत्वेनान्वितस्य पश्चात्प्रकृतिभूतप्रजापतिशब्देनान्वयः, तदा केवलद्रव्यभेदस्य हृदयादिद्रव्यभेदवद्यागभेदाप्रयोजकतया सप्तदशभिर्व्यासज्यैकेन प्रजापतिना सम्बद्धैर्द्रव्यैः कल्प्यमानो याग एक एव स्यात्। यदि तु 'प्रजापतिर्देवतास्य प्राजापत्यः', 'प्राजापत्यश्च प्राजापत्यश्च' इति सप्तदशकृत्व उच्चार्य तद्धितान्तानामेकशेषः क्रियते, तदा शिष्टस्य प्राजापत्यशब्दस्य सप्तदशसु प्रजापतिविशिष्टद्रव्येषु वृत्त्या प्रथमं प्रकृत्यन्वितवद्धितार्थेषु तेषु विशिष्टरूपेषु पश्चाद्बहुत्वान्वयः। ततश्च सप्तदशभिर्द्रव्यदेवतासम्बन्धैः कल्प्या यागाः सप्त-

समानार्थामन्यवहितां सक्तन्निगमेषु' इत्याश्वलायनः। प्रयोजनान्तरमपि वार्तिकादौ व्यक्तम् ॥

इति सप्तमं सङ्ख्याधिकरणम् ॥ ७ ॥

८

ज्योतिष्टोमं प्रकृत्य श्रूयते "अथैष ज्योति·" "अथैप विश्वज्योतिः" अथैष सर्वज्योति" "एतेन सहस्रदक्षिणेन यजेत" इति। तत्र किं प्रकृतमेव ज्योतिष्टोम ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? उत कर्मान्तराण्येव ज्योतिरादिनामकानि सहस्रदक्षिणाविशिष्टानि विधीयन्ते? इति सशय'। तत्र द्वित्र्यादिसङ्ख्याया आश्रयभेदनियमाद्युक्तं कर्मभेदकत्वम्, न तु नाम्नामपि। "दर्शपूर्णमासौ" "साकम्प्रस्थायीयः" "दाक्षायणयज्ञ." इत्यादिनामभेदे सत्यपि कर्मभेदाभावात्, 'सूर्यः' 'दिवाकरः' 'भास्करः' इत्येव सूर्यादेरेकस्याप्यनेकनामदर्शनात्, ज्योतिरादिशब्दानां प्रथमश्रुतैतच्छब्दानुसारित्वेन प्रकृते तेषामर्थान्तरप्रत्यायकत्वानुपपत्तेश्च। अतो ज्योतिरादिशब्दै. प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणागुणविधि। सम्भवति हि ज्योतिरादिशब्दैर्ज्योतिष्टोमस्यानुवाद., तेषा तन्नामत्वात्। न च यजिसामानाधिकरण्याभावात्कथ तेषा यागनामत्वमिति वाच्यम्, "अथैष ज्योति." इत्यत्र ज्योतिरादिशब्दनिर्दिष्टानाम् 'एतेन' इत्येतच्छब्देनापि ज्योतिरादिरूपेणैव प्रत्यायितत्वेन एतच्छब्दे यजिसामानाधिकरण्यस्य ज्योतिरादिशब्दानां यजिसामानाधिकरण्ये पर्यवसिततया तन्नामताया युक्तत्वात्। भवति हि "त्रिवृत्पञ्चदश. सप्तदश एकविंश. एता'न वा व तानि ज्योतींषि, य एतस्य स्तोमा" इति "त्रिवृदादिस्तोमपरत्वेनावगतो ज्योतिःशब्दस्तद्वतः क्रतोर्ज्योतिष्टोमस्य नाम। एव विश्वानि ज्योतींषि सर्वाणि ज्योतींषि त्रिवृदादीनि यस्येति विश्वज्योति· सर्वज्योति शब्दावपि। न चाथशब्दबलेन प्रकृतप्रत्यभिज्ञाविच्छेदात्तदनुवादत्वं युक्तमिति वाच्यम्। न ह्यत्राथशब्दोऽधिकारे वर्तते, येन प्रकृतबुद्धिविच्छेदः स्यात्। गुणविधे· प्रकृतकर्मापेक्षत्वपरोऽत्राथशब्द., द्वादशशतदक्षिणापेक्षया पक्षान्तरपरिग्रहार्थो वा। एवञ्च ज्योतिरादिशब्दाना न प्रकृतहानिरप्रकृतप्रक्रियाकल्पनापि। तस्मात्प्रकृतज्योतिष्टोमानुवादेन गुणो विधीयते। तदेव सम्भवति गुणविधिपरत्वे कर्मान्तराणि तदपूर्वाणि च न युज्यते कल्पयितुम्। इति प्राप्ते, सिद्धान्तयति—

**संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥**

इति प्राप्ते, सिद्धान्तयति—

**पृथक्त्वनिवेशित्वात्सङ्ख्यया कर्मभेदः स्यात् ।**

'प्राजापत्यान्' इति कृततद्धितान्तैकशेषशब्दनिर्दिष्टसङ्ख्यया प्रजापतिविशिष्टद्रव्यगतया यागभेद स्यात् । कुत. ? पृथक्त्वनिवेशित्वात्–तस्याः पृथक्त्वैकार्थसमवायात्, प्रकृतौ तावत् 'एकादशावदानप्रकृतिभूत' पशुर्यागसाधनम्' इति नार्थः, पशोर्हविष्ट्वाभावात्, हृदयादीनामेव हविष्ट्वात् 'हृदयादिभिः पशुप्रकृतिकैर्याग साधनीयः' इत्येवार्थः । तथा च हृदयदीनामुपाकरणादिवन्न पशुधर्मत्वम्, किन्तु यागधर्मत्वमेव । ततश्च चोदकतो विकृतियागोऽप्येकपशुप्रकृतिकहृदयादिभि साध्य इत्येतावन्मात्रमवगतमिति प्रकृते पशुभेदेऽपि कर्मैक्यादेक एव हृदयादिगणः प्राप्नोति । एवञ्चैकेन हृदयादिगणेन सर्वेषां पशूना कथं यागसाधनत्वं शक्येत[1] सम्पादयितुम् ? न च प्रकृतौ पशावेकत्वस्य श्रौतत्वेऽप्यवदानगणे एकपशुनिष्पन्नत्वस्यार्थिकतया तस्यात्रातिदेशाभावेन एकस्य पशोर्हृदयतोऽवदानमन्यस्य[2] जिह्वावदानमित्येवमवदानगणप्राप्त्या सर्वेषां यागसाधनत्वमुपपद्यत इति वाच्यम्, एवमप्येकादशाना पशूना यागसाधनत्वनिर्वाहसम्भवेऽपि तदितरेषां तन्निर्वाहासम्भवात् । अतः सर्वेषा पशूनां यागसाधनतया प्राजापत्यत्वनिर्वाहाय तद्धितान्तानामेकशेषेण विशिष्टरूपेषु बहुत्वाश्रयणमेव युक्तम् । 'द्वौ' 'त्रयः' इत्यादौ तु शब्दशक्तिस्वाभाव्यात्प्रत्यययो प्रकृत्यर्थानुवादकत्वम् । अत एव 'प्रातिपदिकार्थसूत्रे सङ्ख्यापर्यायवचनग्रहणमुक्तार्थत्वेऽपि 'द्वौ' 'त्रय.' इत्यादौ विभक्तिविधानार्थम्' इति वैयाकरणाः । अनेकादृष्टकल्पना तु प्रामाणिकत्वान्निर्दोषा ।

प्रयोजनम्—पूर्वपक्षे सर्वेषा पशूना यागसाधनत्वस्य व्यासक्ततया 'प्रजापतय एव ते पशवो न मम' इति त्यागानुष्ठानम्, सिद्धान्ते तु 'प्रजापतय इदम्' इति सप्तदशकृत्वः त्यागानुष्ठानमिति । याज्ञिकास्तु यागभेदेऽपि 'प्रजापतय इदम्' इति सकृदेव त्यजन्ति । सकृदुच्चारितस्यैव 'प्रजापतय इदम्' इत्यस्य तन्त्राभिधानशक्त्या युगपदेव प्रतिद्रव्यं देवतासम्बन्धकरणस्य सम्भवादिति तदाशयः । अत एव चरुपुरोडाशीयविभागमन्त्रे 'इदमिन्द्राग्न्योर्द्यावापृथिव्यो." इत्यादौ 'इदंशब्दस्तन्त्र स्यात्' इत्यापस्तम्बसत्याषाढभारद्वाजाः । सङ्कर्षकाण्डेऽप्येवम् । 'एकामिव सस्तुयात्समाना देवता

---

1. शक्य ग, घ. 2. अन्येषा जिह्वाद्यवदान. ग, घ.

समानार्थामव्यवहितां सकृन्निगमेषु' इत्याश्वलायनः। प्रयोजनान्तरमपि वार्तिकादौ व्यक्तम् ॥

इति सप्तमं सङ्ख्याधिकरणम् ॥ ७ ॥

८

ज्योतिष्टोमं प्रकृत्य श्रूयते "अथैष ज्योति" "अथैष विश्वज्योति." अथैष सर्वज्योति " "एतेन सहस्रदक्षिणेन यजेत" इति। तत्र किं प्रकृतमेव ज्योतिष्टोम ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? उत कर्मान्तराण्येव ज्योतिरादिनामकानि सहस्रदक्षिणाविशिष्टानि विधीयन्ते? इति संशय'। तत्र द्वित्र्यादिसङ्ख्याया आश्रयभेदनियमाद्युक्तं कर्मभेदकत्वम्, न तु नाम्नामपि। "दर्शपूर्णमासौ" "साकम्प्रस्थायीयः" "दाक्षायणयज्ञः" इत्यादिनामभेदे सत्यपि कर्मभेदाभावात्, 'सूर्यः' 'दिवाकरः' 'भास्करः' इत्येव सूर्यादेरेकस्याप्यनेकनामदर्शनात्, ज्योतिरादिशब्दानां प्रथमश्रुतैतच्छब्दानुसारित्वेन प्रकृते तेषामर्थान्तरप्रत्यायकत्वानुपपत्तेश्च। अतो ज्योतिरादिशब्दैः प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणागुणविधि। सम्भवति हि ज्योतिरादिशब्दैर्ज्योतिष्टोमस्यानुवादः, तेषा तन्नामत्वात्। न च यजिसामानाधिकरण्याभावात्कथं तेषा यागनामत्वमिति वाच्यम्, "अथैष ज्योति" इत्यत्र ज्योतिरादिशब्दनिर्दिष्टानाम् 'एतेन' इत्येतच्छब्देनापि ज्योतिरादिरूपेणैव प्रत्यायितत्वेन एतच्छब्दे यजिसामानाधिकरण्यस्य ज्योतिरादिशब्दानां यजिसामानाधिकरण्ये पर्यवसिततया तन्नामताया युक्तत्वात्। भवति हि "त्रिवृत्पञ्चदश सप्तदश एकविंशः एता।न वा व तानि ज्योतींषि, य एतस्य स्तोमा" इति "त्रिवृदादिस्तोमपरत्वेनावगतो ज्योतिःशब्दस्तद्वत. क्रतोर्ज्योतिष्टोमस्य नाम। एव विश्वानि ज्योतींषि सर्वाणि ज्योतींषि त्रिवृदादीनि यस्येति विश्वज्योति. सर्वज्योति.शब्दावपि। न चाथशब्दबलेन प्रकृतप्रत्यभिज्ञाविच्छेदात्तदनुवादत्वं युक्तमिति वाच्यम्। न ह्यत्राथशब्दोऽधिकारे वर्तते, येन प्रकृतबुद्धिविच्छेदः स्यात्। गुणविधे' प्रकृतकर्मापेक्षत्वपरोऽत्राथशब्द', द्वादशशतदक्षिणापेक्षया पक्षान्तरपरिग्रहार्थो वा। एवञ्च ज्योतिरादिशब्दानां न प्रकृतहानिरप्रकृतप्रक्रियाकल्पनापि। तस्मात्प्रकृतज्योतिष्टोमानुवादेन गुणो विधीयते। तदेव सम्भवति गुणविधिपरत्वे कर्मान्तराणि तदपूर्वाणि च न युज्यते कल्पयितुम्। इति प्राप्ते, सिद्धान्तयति—

**संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥**

इति प्राप्ते, सिद्धान्तयति—

पृथक्त्वनिवेशित्वात्सङ्ख्यया भेदः स्यात् ।

'प्राजापत्यान्' इति कृततद्धितान्तैकशेषशब्दनिर्दिष्टसङ्ख्यया प्रजापतिविशिष्टद्रव्यगतया यागभेदः स्यात् । कुतः ? पृथक्त्वनिवेशित्वात्—तस्याः पृथक्त्वैकार्थसमवायात्; प्रकृतौ तावत् 'एकादशावदानप्रकृतिभूतः पशुर्यागसाधनम्' इति नार्थः, पशोर्हविष्ट्वाभावात्, हृदयादीनामेव हविष्ट्वात् 'हृदयादिभिः पशुप्रकृतिकैर्यागः साधनीयः' इत्येवार्थः । तथा च हृदयादीनामुपाकरणादिवन्न पशुधर्मत्वम्, किन्तु यागधर्मत्वमेव । ततश्च चोदकतो विकृतियागोऽप्येकपशुप्रकृतिकहृदयादिभिः साध्य इत्येतावन्मात्रमवगतमिति प्रकृते पशुभेदेऽपि कर्मैक्यादेक एव हृदयादिगणः प्राप्नोति । एवञ्चैकेन हृदयादिगणेन सर्वेषां पशूनां कथं यागसाधनत्वं शक्येत[1] सम्पादयितुम् ? न च प्रकृतौ पशावेकत्वस्य श्रौतत्वेऽप्यवदानगणे एकपशुनिष्पन्नत्वस्यार्थिकतया तस्यात्रातिदेशाभावेन एकस्य पशोर्हृदयतोऽवदानमन्यस्य[2] जिह्वावदानमित्येवमवदानगणप्राप्त्या सर्वेषां यागसाधनत्वमुपपद्यत इति वाच्यम्, एवमप्येकादशानां पशूनां यागसाधनत्वनिर्वाहसम्भवेऽपि तदितरेषां तन्निर्वाहासम्भवात् । अतः सर्वेषां पशूनां यागसाधनतया प्राजापत्यत्वनिर्वाहाय तद्धितान्तानामेकशेषेण विशिष्टरूपेषु बहुत्वाश्रयणमेव युक्तम् । 'द्वौ' 'त्रयः' इत्यादौ तु शब्दशक्तिस्वाभाव्यात्प्रत्यययोः प्रकृत्यर्थानुवादकत्वम् । अत एव 'प्रातिपदिकार्थसूत्रे सङ्ख्यापर्यायवचनग्रहणमुक्तार्थत्वेऽपि 'द्वौ' 'त्रयः' इत्यादौ विभक्तिविधानार्थम्' इति वैयाकरणाः । अनेकादृष्टकल्पना तु प्रामाणिकत्वान्निर्दोषा ।

प्रयोजनम्—पूर्वपक्षे सर्वेषां पशूनां यागसाधनत्वस्य व्यासक्ततया 'प्रजापतय एव ते पशवो न मम' इति त्यागानुष्ठानम्, सिद्धान्ते तु 'प्रजापतय इदम्' इति सप्तदशकृत्वः त्यागानुष्ठानमिति । याज्ञिकास्तु यागभेदेऽपि 'प्रजापतय इदम्' इति सकृदेव त्यजन्ति । सकृदुच्चारितस्यैव 'प्रजापतय इदम्' इत्यस्य तन्त्राभिधानशक्त्या युगपदेव प्रतिद्रव्यं देवतासम्बन्धकरणस्य सम्भवादिति तदाशयः । अत एव चरुपुरोडाशीयविभागमन्त्रे 'इदमिन्द्राग्न्योर्द्यावापृथिव्योः' इत्यादौ 'इदंशब्दस्तन्त्रं स्यात्' इत्यापस्तम्बसत्याषाढभारद्वाजाः । सङ्कर्षकाण्डेऽप्येवम् । 'एकामिव सस्तुयात्समाना देवता

1. शक्य ग, घ. 2. अन्येषां जिह्वाद्यवदान. ग, घ.

दाक्षायणादिसंज्ञा तु उत्पन्नशिष्टगुणयोगनिबन्धनेत्यग्रिमपादे स्पष्टीभविष्यति। सूर्यादित्यभास्करादिबहुनामत्वं तु सूर्यादेरेकत्वेन प्रमाणान्तरसिद्धत्वान्न भेदकम्। तदेवं सज्ञावशादत्र कर्मभेद:। अपूर्वान्तरकल्पनापि प्रामाणिकत्वान्निर्दोषा। न च संज्ञायाः शब्दान्तरत्वाच्छब्दान्तराधिकरणेन गतार्थता शङ्क्या। धात्वन्तररूपमेव हि शब्दान्तर भावनानुरञ्जकव्यापाररूपेण स्वार्थमभिदधान स्वार्थानुरक्ताया भावनाया धात्वन्तरानुरक्तभावनातो भेद बोधयति। सज्ञा तु न भावनानुरञ्जकव्यापाररूपेण स्वार्थं वदति, तस्या सिद्धरूपाभिधानस्वभावत्वात्। अत सज्ञा धात्वर्थभेदमात्रे व्याप्रियते। तद्भेदाच्च भावनाभेद इति सज्ञाशब्दान्तरयोरस्ति भेद इत्यास्ता तावत्। प्रयोजनं तु पूर्वोत्तरपक्षयो. स्पष्टमेव ॥

इत्यष्टमं सज्ञाधिकरणम् ॥८॥

९

चातुर्मास्येषु वैश्वदेवपर्वणि "वैश्वदेव्यामिक्षा" इति [1]विश्वदेवदेवताकामिक्षाद्रव्यकयाग विधायाम्नायते "वाजिभ्यो वाजिनम्" इति। तत्र दध्यानयनेन घनीभूत तप्तं पयः 'आमिक्षा' इत्युच्यते। तदनुनिष्पन्न तक्रवद्द्रवीभूतं द्रव्यम् 'वाजिनम्' इत्युच्यते। तत्र "वाजिभ्यो वाजिनम्" इति किं पूर्वस्मिन्नेवामिक्षायागे 'वाजिनम्' इति वाजिनद्रव्यलक्षणगुणविधिः? उत वाजिदेवताकवाजिनद्रव्यकयागान्तरविधिः? इति संशय.। 'वाजिनम्' 'वाजिन.'[2] इति उभय द्रव्यदेवतं पूर्वकर्मणि विधीयत? इति कोटिस्तु पौर्णमास्यधिकरणे (ता)'गुणस्तु श्रुतिसयोगात्' 'चोदना वा गुणाना युगपच्छास्त्रात्' इति सूत्राभ्यां प्रमाणान्तरप्राप्तकर्मण्यनेकगुणविधानस्य प्रसङ्गान्निराकृतत्वान्नोन्मेषमर्हति। तत्र 'वाजमन्नमामिक्षारूपमेषाम्' इत्यामिक्षासम्बन्धिनो विश्वान्देवान् 'वाजिभ्य' इत्यनूद्य तत्र वाजिनलक्षणगुणविधि। इनिप्रत्ययस्य च मत्वर्थीयस्य सर्वनामार्थे विहितत्वात्सर्वनाम्नश्च सिद्धविषयकत्वाद् अनुवादस्य सति सम्भवे सन्निहितगामित्वाच्च 'वाजिभ्यः' इति सन्निहितविश्वदेवमात्रस्यानुवादः, न तु पुरोडाशाद्यन्नवतामग्न्यादीनामपीति नातिप्रसङ्गः। न च वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषा देवतात्व, किन्तु वाजित्वेन, ततश्च स्तुतशस्त्राधिकरणगतेन्द्रमहेन्द्र-

1. विश्वेदेव ग. 2. वाजिभ्य ख, ग, घ, ङ. मु.पा.

चशब्द उक्तसमुच्चये। सङ्ख्यावत्संज्ञापि स्वय भिन्ना सती पृथक्त्वैकार्थ-समवायात्कर्मभेदिका स्यात्। व्याकरणाधिकरणे हि 'अन्यायश्चानेकशब्दत्वम्' इति गुणसूत्रे एकस्यार्थस्यानेकशब्दत्वं निराकृतम्। ज्योतिष्टोमनामत परस्परतश्च भिन्नानि नामान्यत्र श्रूयन्त इत्यर्थभेदो वाच्य। न चैव सति विद्वद्वाक्येऽपि पौर्णमास्यादि-श्रवणात्कर्मान्तर स्यादिति वाच्यम्। रूपलाभाभावेन बाधकेन तदसम्भवात्। न चात्रार्थान्तरत्वे किञ्चिद्बाधकमुपलभामहे। ततश्च सञ्ज्ञाश्रुत्या अर्थान्तरावगमात्प्रकरण-विच्छेदे सत्यर्थान्तरकलुषायाञ्च बुद्धावुपनिपतत्[1] "सहस्रदक्षिणेन यजेत" इति वाक्य ज्योतिष्टोम न गन्तुमुत्सहते। तथा च प्रकृते कर्मणि गुणविध्यसम्भवान्न प्रकृतहान्यादिदोष। न च ज्योतिरादिशब्दाना ज्योतिष्टोमनामैकदेशप्रत्यभिज्ञाना-न्नामत्वम्, "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादौ केवलज्योति शब्दस्य ज्योतिष्टोमे प्रयोगदर्शनादिति वाच्यम्, न ह्यवयवसाम्यादेकार्थता युक्ता, अन्यथा 'शाला' 'माला' 'देवदत्त:' 'यज्ञदत्त.' इत्यादीनामप्येकार्थत्वापत्तेः। अतो ज्योतिरादिपदानि समुदायान्तराण्येव। "वसन्ते वसन्ते ज्योतिषा" इत्यत्र तु प्रकरणवशात् "वसन्ते ज्योतिष्टोमेन" इति शाखान्तराच्च ज्योतिःशब्दो गौण.। किञ्च त्रिवृदादिषु ज्योति-शब्दो वाक्यशेषादवगम्यमानो यस्य च वाक्यशेष, तत्रैव ज्योतिष्टोमवाक्ये ज्योति-शब्दस्योपचाराद्वृत्तिमवगमयति, नान्यत्र। अन्यथा 'सिंहो माणवक' इति क्वचित्सिंह-शब्द' प्रमाणवशादुपचारेण माणवके वर्तमान' 'सिंहमालभेत' इत्यादौ माणवकमपि प्रत्याययेत्। अतो ज्योतिरादिशब्दाना निर्वचनान्तरमवलम्ब्य नामान्तरत्वमेवाश्रयितुं युक्तम्। न च कर्मान्तरत्वे 'अथैष' इत्येतच्छब्दासामञ्जस्यम्, तस्य प्रकृतपरामर्शित्वा-दिति वाच्यम्, प्रागप्रस्तुतेऽपि 'एष देवदत्त' इत्यादावेतच्छब्दतच्छब्दप्रयोगदर्शना-त्तस्य[2] प्रस्तुतपरत्वनियमाभावात्। किञ्च ज्योतिष्टोमे सहस्रदक्षिणाविधानमप्यत्रानु-पपन्नम्, द्वादशशतदक्षिणावरुद्धत्वात्, विकल्पस्य चाष्टदोपदुष्टत्वात्। न च दधि-गोदोहनादिवन्नित्यगुणबाधेन फलाय गुणविधिरिति शङ्क्यम्, एवमपि 'अथैष ज्योति" इत्याद्यानर्थक्यात्। न चानुवादतया सार्थक्यम्, 'एतेन' इत्यनेन धातुना च तत्सिद्धे.। ननु सञ्ज्ञाया कर्मभेदकत्वे दाक्षायणादिसञ्ज्ञाया अपि तथात्व स्यादित्यत आह—उत्पत्तिसयोगादिति। उत्पत्तिशिष्टैव सञ्ज्ञा कर्मभेदिका।

---

1. उपनिपातात्. ग, घ. 2. दर्शनेन तस्य. क, घ, ग, ङ, मु पा.

सम्भवेऽप्यत्र कल्पितयजतिना पदान्तरेण गुणविनिष्कृष्टमेव पूर्वकर्मावगम्यत इत्यविरोधात्। ततश्चामिक्षासम्बन्धाद्विनिष्कृष्य यागस्वरूपानुवादेन वाजिनगुणविधानसम्भवान्नास्त्युत्पत्त्युत्पन्नशिष्टयोर्विशेषः। न चामिक्षादेवतासम्बन्धस्य तद्धितश्रुत्या गम्यमानस्य वाक्यगम्याद्वाजिनदेवतासम्बन्धाद्बलीयस्त्वमिति वाच्यम्, तद्धितेन सामान्यरूपेणैव द्रव्यमभिधीयते। आमिक्षात्वेन त्वभिधानं पदान्तरेणैवेत्यामिक्षासम्बन्धस्यापि वाक्यगम्यत्वात्। तथा चामिक्षावाजिनयोस्तुल्यबलत्वादेकस्मिन्नेव यागे विकल्पः। इति प्राप्ते, सिद्धान्तयति—

## गुणश्चापूर्वयोगे वाक्ययोः समत्वात् ॥ २३ ॥

चशब्द उक्तसमुच्चये। सद्भावत् गुणोऽप्यपूर्वसंयोगे पूर्वस्मिन् कर्मणि निवेशासम्भवे सति स्वनिवेशक्षमकर्मान्तरोत्पत्तिपरतामवगमयन् कर्मभेदको भवति। कथं पूर्वकर्मणि निवेशासम्भव ? वाक्ययोः समत्वात् मिथोऽनपेक्षत्वात्। अनुवादकतया एकस्य वाक्यस्य इतरापेक्षाया हि पूर्वकर्मणि निवेश स्यात्, न त्विह तथास्ति। पूर्वकर्मण प्रबलगुणावरुद्धत्वेन तस्य गुणान्तरविधाने अनुवादासम्भवात्, आमिक्षाया उत्पत्तिशिष्टत्वेन बलवत्त्वात्, वाजिनस्य चोत्पन्नशिष्टत्वेन दुर्बलत्वात्। न चामिक्षासम्बन्धाद्विनिष्कृष्य यागमात्रानुवादेन वाजिनविधिरविरुद्ध इति वाच्यम्। अनुवादस्य पुरोवादसापेक्षत्वेन पुरोवादपर्यालोचनस्यावश्यकतया तस्मिन् पर्यालोच्यमाने गुणयुक्तस्यैव कर्मणो बुद्धौ विपरिवृत्त्या तद्दशाया निष्कृष्याभिहितस्यापि कर्मणो गुणान्तराकाङ्क्षाविरहात्, एकगुणयुक्ततया बुद्धौ विपरिवृत्तेर्गुणान्तराकाङ्क्षाप्रतिबन्धात्। पुरोडाशकपाले त्वगत्या कथञ्चिन्निष्कृष्याभिधानेनाकाङ्क्षोत्थाप्यते। न त्विहागतिकत्वम्, विशिष्टकर्मान्तरविधिसम्भवात्। किञ्च तद्धितान्तैकपदश्रुत्या चोदितत्वादामिक्षा प्रबला। वाजिनन्तु पदान्तरगम्यत्वेन वाक्यप्रमाणगम्यत्वाद्दुर्बलम्। न चामिक्षात्वेन तदभिधान पदान्तरकृतमिति वाच्यम्, सर्वनामार्थे विहिततद्धितस्य देवतासम्बन्धोपसर्जनद्रव्यवाचिन पदान्तरसन्निधाने सति तदुपस्थाप्यविशेष एव पर्यवसानेन तद्धितेनैवामिक्षाद्रव्यस्योपस्थिततया श्रौतत्वानपायात्। तदुक्तं वार्तिके—

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धित ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्' ॥ इत्यादिना ।

मास्तु वा तद्धितस्य द्रव्यविशेषवाचित्वम्, तथापि चतुर्थ्यास्तद्धितो बलीयान्। तद्धितेन हि द्रव्यं प्रतीयते सामान्यरूपेण। अतो युज्यते द्रव्यस्य देवतायाः सम्बन्धस्य

न्यायेन(था) देवताभेदान्नास्ति पूर्वकर्मसमवाय इति वाच्यम् । विश्वेदेवा हि पूर्वकर्मणि देवतात्वावच्छिन्नविश्वदेवत्वरूपेणोपस्थिता 'वाजिभ्य इत्यनेनापि देवतात्वप्रयोजकविश्वदेवत्वरूपेणैव प्रत्यभिज्ञायन्त इति विश्वदेवत्वरूपेणैव वाजिनद्रव्यसम्बन्धो न वाजित्वेन । तेषाञ्च विश्वेषां देवाना वाजिनस्य च प्रतीयमानसम्बन्धस्य यागं विनानुपपत्त्या यागापेक्षाया प्रकृतयागीयद्रव्यरूपामिक्षापरवाजिशब्दमहिम्नोपस्थितप्रकृतामिक्षायाग एव तन्निर्वाहकतया कल्प्यते, वाजिभ्यो विश्वदेवेभ्यो यजेतेति यत्तत्र वाजिनं द्रव्यमिति । तदेवं वाजिशब्दोपस्थितविश्वदेवदेवतामुखेन [1]वाजिनद्रव्यं विहितं भवतीति नात्रेन्द्रमहेन्द्रन्यायावतार' । न चैवं सति वाजिशब्दस्य अश्वे रूढस्य विश्वदेवपरत्वे रूढिपरित्याग' स्यादिति वाच्यम् , प्रकृतकर्मणि गुणमात्रविधानलाघवलाभेन[2] प्रकृतहान्यप्रकृतप्रक्रियाकल्पनापूर्वान्तरकल्पनाविशिष्टविधिगौरवभयेन च रूढिपरित्यागस्य युक्तत्वात् । न चोत्पत्तावामिक्षायुक्ततयैव पूर्वकर्मणोऽवगतत्वेन तस्य द्रव्यान्तराकाङ्क्षाविरहान्न तत्र वाजिनद्रव्यस्य निवेशसम्भव इति वाच्यम् । न हि वाजिनवाक्येन पूर्वकर्मण आमिक्षायुक्तस्यानुवाद , येनोत्पत्तिशिष्टद्रव्यान्तरावरुद्धत्वाद्वाजिनगुणो न तत्र निवेश लभेत । किन्त्वामिक्षावाक्ये द्रव्यदेवतासम्बन्धबलात् 'आमिक्षया यजेत' इत्येव यजतिपदमेकं कल्पितम् । तेन च केवलयजतिपदेन कर्ममात्रमामिक्षारूपगुणसम्बन्धान्निष्कृष्यानूद्यत इति तत्र वाजिनगुणो निवेष्टुमर्हति । न च 'यजेत' इत्यनेन स्वरूपमात्रानुवादसम्भवेऽपि वस्तुतस्तस्य कर्मणो गुणान्तरावरुद्धत्वान्न वाजिनान्वयसम्भव इति वाच्यम् । आकाङ्क्षा हि न वस्तुकृता, किन्त्वभिधानकृता । अन्यथा पुरोडाशकपालादे पुरोडाशसम्बन्धान्निष्कृष्य स्वरूपमात्रेणाभिहितस्य तुषोपवापाद्यन्वयो न स्यात् । यागस्वरूपमात्र चात्र यजिनाभिधीयत इति भवति तस्य द्रव्यान्तरसम्बन्धाकाङ्क्षा । अतो यागस्वरूपमात्रे वाजिनद्रव्यस्यान्वयसम्भव । न चैवम् 'यजति' 'ददाति' इत्यत्र यागान्विताया अपि भावनाया निष्कृष्य स्वरूपेणाभिधाने सति तत्र दानान्वयसम्भवादेकधात्वर्थान्वितभावनाया न धात्वर्थान्तरान्वयसम्भव इति शब्दान्तराधिकरणोक्तविरोध. स्यादिति वाच्यम् , भावनाया' केवलेन प्रत्ययेनानुवादस्य कर्तुमशक्यतया प्रकृतियुक्तेनैव प्रत्ययेन तदनुवादस्य कर्तव्यत्वेन तत्र प्रकृत्यर्थानुरक्ताया एव भावनाया अनुवाद्यतया स्वरूपमात्रेण तदनुवादा-

---

1. वाजिन. ग. 2. बलेन. ग, घ.

सम्भवेऽप्यत्र कल्पितयजतिना पदान्तरेण गुणविनिष्कृष्टमेव पूर्वकर्मावगम्यत इत्यविरोधात्। ततश्चामिक्षासम्बन्धाद्विनिष्कृष्य यागस्वरूपानुवादेन वाजिनगुणविधानसम्भवान्नास्त्युत्पन्नोत्पन्नशिष्टयोर्विशेषः। न चामिक्षादेवतासम्बन्धस्य तद्धितश्रुत्या गम्यमानस्य वाक्यगम्याद्वाजिनदेवतासम्बन्धाद्बलीयस्त्वमिति वाच्यम्, तद्धितेन सामान्यरूपेणैव द्रव्यमभिधीयते। आमिक्षात्वेन त्वभिधानं पदान्तरेणैवेत्यामिक्षासम्बन्धस्यापि वाक्यगम्यत्वात्। तथा चामिक्षावाजिनयोस्तुल्यबलत्वादेकस्मिन्नेव यागे विकल्पः। इति प्राप्ते, सिद्धान्तयति—

## गुणश्चापूर्वयोगे वाक्ययो. समत्वात् ॥ २३ ॥

चशब्द उक्तसमुच्चये। सङ्ज्ञावत् गुणोऽप्यपूर्वसंयोगे पूर्वस्मिन् कर्मणि निवेशासम्भवे सति स्वनिवेशक्षमकर्मान्तरोत्पत्तिपरतामवगमयन् कर्मभेदको भवति। कथं पूर्वकर्मणि निवेशासम्भव ? वाक्ययो समत्वात् मिथोऽनपेक्षत्वात्। अनुवादकतया एकस्य वाक्यस्य इतरापेक्षाया हि पूर्वकर्मणि निवेश स्यात्, न त्विह तथास्ति। पूर्वकर्मण प्रबलगुणावरुद्धत्वेन तस्य गुणान्तरविधाने अनुवादासम्भवात्, आमिक्षाया उत्पत्तिशिष्टत्वेन बलवत्त्वात्, वाजिनस्य चोत्पन्नशिष्टत्वेन दुर्बलत्वात्। न चामिक्षासम्बन्धाद्विनिष्कृष्य यागमात्रानुवादेन वाजिनविधिरविरुद्ध इति वाच्यम्। अनुवादस्य पुरोवादसापेक्षत्वेन पुरोवादपर्यालोचनस्यावश्यकतया तस्मिन् पर्यालोच्यमाने गुणयुक्तस्यैव कर्मणो बुद्धौ विपरिवृत्त्या तद्दशाया निष्कृष्याभिहितस्यापि कर्मणो गुणान्तराकाङ्क्षाविरहात्, एकगुणयुक्ततया बुद्धौ विपरिवृत्तेर्गुणान्तराकाङ्क्षाप्रतिबन्धात्। पुरोडाशकपाले त्वगत्या कथञ्चिन्निष्कृष्याभिधानेनाकाङ्क्षोत्थाप्यते। न त्विहागतिकत्वम्, विशिष्टकर्मान्तरविधिसम्भवात्। किञ्च तद्धितान्तैकपदश्रुत्या चोदितत्वादामिक्षा प्रबला। वाजिनन्तु पदान्तरगम्यत्वेन वाक्यप्रमाणगम्यत्वाद्दुर्बलम्। न चामिक्षात्वेन तदभिधान पदान्तरकृतमिति वाच्यम्, सर्वनामार्थे विहिततद्धितस्य देवतासम्बन्धोपसर्जनद्रव्यवाचिन पदान्तरसन्निधाने सति तदुपस्थाप्यविशेष एव पर्यवसानेन तद्धितेनैवामिक्षाद्रव्यस्योपस्थिततया श्रौतत्वानपायात्। तदुक्त वार्तिके—

'आमिक्षां देवतायुक्ता वदत्येवैष तद्धित ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्' ॥ इत्यादिना ।

मास्तु वा तद्धितस्य द्रव्यविशेषवाचित्वम्, तथापि चतुर्थ्यास्तद्धितो बलीयान्। तद्धितेन हि द्रव्य प्रतीयते सामान्यरूपेण। अतो युज्यते द्रव्यस्य देवताया. सम्बन्धस्य

न्यायेन(था) देवताभेदान्नास्ति पूर्वकर्मसमवाय इति वाच्यम । विश्वेदेवा हि पर्वकर्मणि देवतात्वावच्छिन्नविश्वदेवत्वरूपेणोपस्थिता 'वाजिभ्य इत्यनेनापि देवतात्वप्रयोजकविश्वदेवत्वरूपेणैव प्रत्यभिज्ञायन्त इति विश्वदेवत्वरूपेणैव वाजिनद्रव्यसम्बन्धो न वाजित्वेन । तेपाञ्च विश्वेपा देवाना वाजिनस्य च प्रतीयमानसम्बन्धस्य यागं विनानुपपत्त्या यागापेक्षाया प्रकृतयागीयद्रव्यरूपामिक्षापरवाजिशब्दमहिम्नोपस्थितप्रकृतामिक्षायाग एव तन्निर्वाहकतया कल्प्यते, वाजिभ्यो विश्वदेवेभ्यो यजेतेति यत्तत्र वाजिनं द्रव्यमिति । तदेव वाजिशब्दोपस्थितविश्वदेवदेवतामुखेन [1]वाजिनद्रव्यं विहित भवतीति नात्रेन्द्रमहेन्द्रन्यायावतार' । न चैव सति वाजिशब्दस्य अश्वे रूढस्य विश्वदेवपरत्वे रूढिपरित्याग' स्यादिति वाच्यम् , प्रकृतकर्मणि गुणमात्रविधानलाघवलाभेन[2] प्रकृतहान्यप्रकृतप्रक्रियाकल्पनापूर्वान्तरकल्पनाविशिष्टविधिगौरवभयेन च रूढिपरित्यागस्य युक्तत्वात् । न चोत्पत्तावामिक्षायुक्ततयैव पूर्वकर्मणोऽवगतत्वेन तस्य द्रव्यान्तराकाङ्क्षाविरहान्न तत्र वाजिनद्रव्यस्य निवेशसम्भव इति वाच्यम् । न हि वाजिनवाक्येन पूर्वकर्मण आमिक्षायुक्तस्यानुवाद , येनोत्पत्तिशिष्टद्रव्यान्तरावरुद्धत्वाद्वाजिनगुणो न तत्र निवेशं लभेत । किन्त्वामिक्षावाक्ये द्रव्यदेवतासम्बन्धबलात् 'आमिक्षया यजेत' इत्येवं यजतिपदमेक कल्पितम् । तेन च केवलयजतिपदेन कर्ममात्रमामिक्षारूपगुणसम्बन्धान्निष्कृष्यानूद्यत इति तत्र वाजिनगुणो निवेष्टुमर्हति । न च 'यजेत' इत्यनेन स्वरूपमात्रानुवादसम्भवेऽपि वस्तुतस्तस्य कर्मणो गुणान्तरावरुद्धत्वान्न वाजिनान्वयसम्भव इति वाच्यम् । आकाङ्क्षा हि न वस्तुकृता, किन्त्वभिधानकृता । अन्यथा पुरोडाशकपालादे पुरोडाशसम्बन्धान्निष्कृष्य स्वरूपमात्रेणाभिहितस्य तुपोपवापाद्यन्वयो न स्यात् । यागस्वरूपमात्र चात्र यजिनाभिधीयत इति भवति तस्य द्रव्यान्तरसम्बन्धाकाङ्क्षा । अतो यागस्वरूपमात्रे वाजिनद्रव्यस्यान्वयसम्भवः । न चैवम् 'यजति' 'ददाति' इत्यत्र यागान्विताया अपि भावनाया निष्कृष्य स्वरूपेणाभिधाने सति तत्र दानान्वयसम्भवादेकधात्वर्थान्वितभावनायां न धात्वर्थान्तरान्वयसम्भव इति शब्दान्तराधिकरणोक्तविरोधः स्यादिति वाच्यम् , भावनायाः केवलेन प्रत्ययेनानुवादस्य कर्तुमशक्यतया प्रकृतियुक्तेनैव प्रत्ययेन तदनुवादस्य कर्तव्यत्वेन तत्र प्रकृत्यर्थानुरक्ताया एव भावनाया अनुवाद्यतया स्वरूपमात्रेण तदनुवादा-

1. वाजिन. ग.  2. बलेन. ग, घ.

सिद्धः, सर्वेषां युगपदुपस्थितत्वेन युगपदेवान्वयात् । प्रयोजनं पूर्वपक्षे—एकैकदध्यादिविशिष्टाग्निहोत्रकर्मणामनुष्ठानम् , सिद्धान्ते तु-एकस्यैव विकल्पितदध्यादिद्रव्यकस्येति । वस्तुतस्तु—आघाराग्निहोत्राधिकरणे 'चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुति.' इति सूत्रादेवागुणकर्मसन्निधौ गुणश्रतिर्गुणविधानार्थेत्यवगमादिदमधिकरणमनर्थकम् । एवञ्च गुणरहिते कर्मण्युत्पन्ने दध्यादिगुणविधिः सम्भवति, न त्वामिक्षागुणविशिष्टयागविधौ सति तत्र वाजिनगुणविधिरिति प्रत्युदाहरणपरमेवेद सूत्रमिति केचित् ॥

इति दशम गुणापवादाधिकरणम् ॥१०॥

११

"अग्निहोत्र जुहोति" इति प्रकृत्य आमनन्ति—"दध्नेन्द्रियकामस्य जुहुयात्" इति । किमिह दधिसाधनकमिन्द्रियफलकं कर्मान्तरं विधीयते ? उताग्निहोत्रमाश्रित्य दधिगुणमात्र फलाय विधीयते ? इति सशयः । तत्र पूर्वपक्षयति—

**फलश्रुतेस्तु स्यात्फलस्य योगित्वात् ॥ २५ ॥**

तुशदः पूर्वाधिकरणवैषम्ये । अग्निहोत्रादन्यदेव दधिविशिष्टमिन्द्रियफलकं होमकर्म स्यात् । कुत ? फलश्रुतेः—इन्द्रियस्य फलस्य श्रवणात् । नन्वत्र दधिगुण एव फलाय विधीयताम् , तत्राह—फलस्य कर्मयोगित्वादिति । फलस्य धात्वर्थभाव्यत्वादित्यर्थः । फलभावनायां धात्वर्थस्यैव हि समानपदोपात्तस्य करणत्वम् , न तूपपदार्थस्येति प्रपञ्चितं भावार्थाधिकरणे । अतो नात्र दधिगुणः फलाय विधीयत इति शक्यते वक्तुम् । न च 'अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत' इति पूर्वसूत्रे निर्गुणकर्मसन्निधौ सगुणश्रुतेर्गुणविधानार्थत्वोक्तेर्नेह कर्मान्तरविधिरिति वाच्यम् । फलाय गुणविधिरिति हि वदन् प्रष्टव्यः—किं दधिगुणः फल एव विधीयते ? उत होमेऽपि ? नान्त्य , 'दध्ना फलं भावयेत्' 'दध्ना होम भावयेत्' इति वाक्यभेदापत्तेः । नाद्य , जुहोतेरानर्थक्यात् । न च "दध्ना जुहोति" इति वाक्यप्राप्तदधिसम्बन्धानुवादेन प्रकृतहोमस्यैव फलविधिरस्त्विति वाच्यम् । कर्मानुवादो ह्युत्पत्तिवाक्यमात्रमपेक्षते, न तु गुणवाक्यमपि । ततश्च दधिप्राप्त्यनन्तर फलविधिरित्यत्र प्रमाणाभावेन कथं दधिवाक्यप्राप्तदधिसम्बन्धानुवादेन होमस्य फले विधि. । अनेनैव वाक्येन दध्न' फले होमे च विधौ वाक्यभेद । फलायैव तद्विधौ जुहोतेरानर्थक्यम् । न च होममाश्रित्य

च तद्धितान्तपदात्प्रतीतिः । चतुर्थ्यां तु न सामान्यरूपेणापि द्रव्यं प्रतीयते । अतस्तत्र दूरेतरा द्रव्यदेवतासम्बन्धप्रतीतिः । सा तु पदान्तरादेवेति चतुर्थ्यास्तद्धितो बलीयान् । तदुक्तं वार्तिके—

'यथेहान्यपदार्थोऽपि तद्धितेऽन्तर्गतः स्मृतः ।
न सम्प्रदानमस्येति चतुर्थ्येवं प्रतीयते' ॥ इत्यादिना ।

तथा चामिक्षावाजिनयोरतुल्यबलत्वेन एकस्मिन्नेव यागे विकल्पेनापि समावेशासम्भवाद्वाजिनगुणः कर्मभेदकः । प्रयोजनम् पूर्वपक्षे—वाजिनामिक्षयोरेकस्मिन्विश्वदेवदेवताके यागे विकल्पे[1] वाजिदेवताक वाजिनद्रव्यक यागान्तरं नास्ति, सिद्धान्ते तु-विश्वदेवदेवताकामिक्षाद्रव्यकात्पूर्वयागाद्वाजिदेवताकवाजिनद्रव्यक यागान्तरमिति स्पष्टमेव । वस्तुतस्तु "अग्निर्वायुः सूर्यः, ते वै वाजिनः" इत्यादिवाक्यशेषतो वाजिशब्दस्य त्रिवृद्बर्हिरश्ववालादिशब्दवत्पदार्थान्तरपरतया निश्चितत्वेन तस्य विश्वदेवपरत्वमुखेन तद्यागानुवादकतामवलम्ब्य कथं पूर्वपक्षप्रवृत्तिः । अत उदाहरणान्तरमन्वेषणीयम् ॥

इति नवमं गुणाधिकरणम् ॥ ९ ॥

१०

"अग्निहोत्रं जुहोति" इत्येतत्सन्निधौ "दध्ना जुहोति" "पयसा जुहोति" इत्यादि श्रुतम् । तत्र दध्यादिवाक्यानि किं कर्मान्तरपराणि ? उत गुणविधयः ? इति संशयः । तत्र एकैकस्माद्वाक्यादेकैकस्य गुणस्योपस्थित्या सर्वेषां युगपदन्वयासम्भवाद्यस्य प्रथममन्वयस्तदवरुद्धे पूर्वाधिकरणन्यायेनान्वयासम्भवाद्दध्यादिगुणकानि कर्मान्तराणि । इति प्राप्ते, सिद्धान्तयति—

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥**

अगुणे गुणशब्दरहिते कर्मशब्दे अग्निहोत्रवाक्ये सति तत्र तदुत्पन्ने कर्मणि दध्यादिवाक्यैः गुणः प्रतीयेत विधीयेत । तुशब्दः पूर्वस्माद्वैषम्यद्योतनार्थः । अग्निहोत्रवाक्योत्पन्ननिर्गुणकर्मानुवादेन युगपद्दध्यादिगुणविधाने सति एकगुणविशिष्टतया कर्मणो बुद्धावपरिवृत्तेर्न पूर्वाधिकरणप्रवृत्तिः । एकान्वयानन्तरमपरान्वयनियमोऽप्य-

1. विकल्पो क, ग, घ, ङ, मु. पा.

तत्र च कारकस्य क्रियापेक्षत्वादपेक्षितक्रियासमर्पणार्थं केवलस्य प्रत्ययस्य प्रयोगानर्हत्वात्तत्प्रयोगार्थं च यस्मिन् कस्मिंश्चित् धातौ प्रयोक्तव्ये जुहोति प्रयुज्यते, तदर्थस्य सन्निहितत्वेनानुवादसम्भवात्। न तु धात्वन्तरार्थस्य, तस्याप्राप्तत्वात्, तस्यापि विधाने वाक्यभेदापत्तेः। एवं च 'दध्ना' इति तृतीयया प्रतीयमान कारकत्व क्रियानिरूपितमिति क्रियाविशेषापेक्षायां सन्निधानाद्धोमक्रियानिरूपितमित्यवगमात्क्रियाकारकभावेन दध्यन्वितो होमो जुहोतिनानूद्यते न तु विधीयत इति वाक्यभेद विनैव सम्भवति जुहोत्यन्वय.। एकत्वादिविशिष्टपशोरिव दधिविशिष्टकारकविधानाच्च न वाक्यभेदः।-यथा चैतत्तथा ग्रहैकत्वाधिकरणे (द्रा) स्फुटीभविष्यति। न च धात्वर्थस्य क्रियात्मकत्वाभावान्न जुहोतेः कारकान्वय, एवञ्च 'दध्ना' इति तृतीयावगतं कारकत्व न होमापेक्ष किन्तु फलभावनापेक्षमेव, तथा च केवलदध्न एव फले विधान न तु करणभूतस्येति नोक्तप्रकारेण जुहोत्यन्वय इति वाच्यम्। करणत्वस्य फलभावनापेक्षत्वेऽपि दध्न सिद्धस्वभावस्य कर्तृव्यापारविषयत्वाभावेन फलभावनाकरणत्वस्य धात्वर्थमुखेनैव वक्तव्यताया आवश्यकत्वात्तदपेक्षस्यैव करणत्वस्य विभक्त्यभिधेयत्वात्। यद्यपि धात्वर्थो न कारकान्वययोग्य, तथापि तत्कर्मकभावना योग्या। सा च प्रकरणादुपस्थिता। तन्निरूपितं करणत्व विभक्त्यभिधेय भावनामुखेन धात्वर्थं प्रति करणत्वे विश्राम्यति। न च तृतीयावगतकरणत्वस्य होमापेक्षत्वे फलभावनाकरणत्व गुणस्य न स्यात्, तत्प्रत्यायकाभावादिति वाच्यम्, यागादिवद्गुणस्यापि समभिव्याहारत एव फलभावनाकरणत्वलाभसम्भवात्। एवञ्च विधिव्यापार विनैव सन्निधिलक्षणप्रकरणेन तृतीयान्तपदश्रुत्या च 'होमे कारकभूतं दधि' इत्येतावतोऽर्थस्य सिद्धौ 'तदिन्द्रियकामस्य' इत्येतावन्मात्र एव विधेर्व्यापार इति न वाक्यभेद। तस्मात्प्रकृतहोममाश्रित्य फलाय गुणविधिरिति स्थितम्।

केचित्तु 'दधिहोमयो. क्रियाकारकभावेन सम्बन्धो लोकसिद्धः, ततश्च दधिहोमसम्बन्धे विधिव्यापाराभावाद्धोमाश्रितदधिविधौ न वाक्यभेद" इत्याहु.। तदयुक्तम्, लोकतो हि दधिहोमयोः क्रियाकारकभावस्तावत्स्वरूपेणैव सिद्ध", न तु कर्तव्यतयापि। तथा च सति फलार्थिनो नियमेन दधिहोमसम्बन्धोपादान न स्यात्। ततश्च तस्य कर्तव्यता फलसम्बन्धश्च विधीयत इति वाक्यभेद। न च होमाश्रितस्य दध्न फले विधाने सति होमसम्बन्धाभावे होमसम्बन्धावस्थापन्नहोमाश्रितत्वासम्पत्तेरर्थादेव तत्कर्तव्यतासिद्धौ तद्विधानाभावान्न वाक्यभेद इति वाच्यम्। एवं सति

फलाय दधिविधानाय प्रकरणप्राप्तहोमानुवादकत्वान्न जुहोतेर्वैयर्थ्यं नापि वाक्यभेद इति वाच्यम् । प्रकणेन हि होम एव प्राप्तो न तु होमसाधनत्वरूपतदाश्रितत्वमपि, "दध्ना जुहोति" इति वाक्यप्रवृत्त्यनन्तरमेव इन्द्रियकामवाक्यप्रवृत्तौ प्रमाणाभावात् । ततश्च दधिहोमयो. प्रतीयमानक्रियाकारकसम्बन्धस्यात्रानुवादासम्भवात्तस्य सर्वथा परित्याग एव कृतः स्यात् । तथा च फलार्थतया होमसाधनत्वरूपहोमाश्रिततया च दधि विधेयमिति वाक्यभेदो दुर्वार. । अत प्रकृतकर्मणि दधिगुणविधानासम्भवात्ततोऽन्यो दधिविशिष्टो होमः फलाय विधीयते । इति प्राप्ते, सिद्धान्तयति—

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

तुशब्द· पूर्वपक्षव्यावृत्तौ । न कर्मान्तरमिन्द्रियकामवाक्ये विधीयते, किन्तु तस्य वाक्यस्य गुणविधौ सामर्थ्यं प्रतीयेत । कुत ? वाक्ययोः अतुल्यत्वात् "अग्निहोत्र जुहुयात्स्वर्गकाम" इति वाक्यस्य फले धात्वर्थविधायकतया इन्द्रियकामवाक्यस्य च फले गुणविधायकतया वैलक्षण्यस्यावश्यकत्वात् । सर्वत्र हि भावनैव विधेया । तस्या च फलवत्या[1] धात्वर्थ· करणीभवति, यत्रासौ न प्राप्तो विधेयान्तर च नास्ति, यथा स्वर्गकामवाक्ये ।' इन्द्रियकामवाक्ये तु धात्वर्थस्य प्राप्तत्वाद्विधेयान्तरस्य दधिगुणस्य सद्भावाच्च धात्वर्थादुत्तारिता विधिशक्तिरुपपदार्थेऽपि गुणे विश्राम्यति । न चैकपदोपात्तत्वरूपश्रुतेर्बलीयस्त्वात्कर्मान्तरविधिरेव युक्त इति वाच्यम् । प्रकृतहानाप्रकृतकल्पनविशिष्टविधिगौरवमत्वर्थलक्षणादिबहुदोषप्रसङ्गेन श्रुतिमप्युल्लङ्घ्य उपपदार्थगुणविधानस्यैवाश्रयितुं युक्तत्वात् । न च "दध्ना जुहोति" इति दध्नः प्राप्तत्वात्तद्विधानमनर्थकमिति वाच्यम् । क्रत्वर्थतया हि तेन वाक्येन दधिविधानम् । इन्द्रियकामवाक्येन तु फलार्थतया तद्विधानम् । तथा च वक्ष्यति चतुर्थस्य तृतीये 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति । सन्निधिरूपप्रकरणप्राप्तहोमानुवादेन होमाश्रितस्य दध्नो विधानाज्जुहोतेराश्रयतयान्वयः सम्भवति । न च होमाश्रितत्व होमसाधनत्वमेव, दध्नो होमस्य च न साध्यसाधनभाव प्रकरणादवगत· येनाश्रयतया होमोऽनूद्येत, होमसाधनत्वरूपहोमाश्रितत्वस्याप्यनेनैव विधाने वाक्यभेद इति वाच्यम् । 'दध्ना' इति तृतीयाश्रुत्या हि कारकभूत दधि फलोद्देशेन जुहोतिपरप्रत्ययेन विधीयते ।

---

1 फलवाक्यात् क. ग, मु पा.

यत्रानेकार्थविधिव्यापारं विना विशेषणवैशिष्ट्यस्यासिद्धिस्तत्र विशेषणविशेष्यसम्बन्धसिद्ध्यर्थं विशिष्टविधानार्थञ्च विधायकप्रत्ययस्य व्यापारभेदाद्द्विव्यावृत्त्या वाक्यभेद, यथा पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मण्याग्नेयादिवाक्यैर्गुणविधिपक्षे। प्रकृते तु विधिव्यापारं विना कृत्वाशब्देनैव वारवन्तीयस्य रेवतीसम्बन्धसिद्ध्या तत्र विधिव्यापाराभावेन कृत्वाशब्दान्तरपदसन्दर्भेणोपस्थितस्य रेवत्याधारवारवन्तीयस्य फलसम्बन्धमात्र एव विधेर्व्याप्रियमाणतया विध्यावृत्त्यभावान्न वाक्यभेदः। अन्यथा "त्रिवृदग्निष्टुत्" इत्यादिवाक्येऽपि वायव्यास्वेकविंशमिति गुणद्वयसम्बन्ध तद्विशिष्टस्य च क्रतो' फले विधानमिति वाक्यभेदः स्यात्, तत्र क्रत्वान्तसन्दर्भेणोपस्थितस्य तावद्गुणविशिष्टस्य यागस्य फले विधानात्। वाक्यभेदपरिहारस्तु प्रकृतेऽपि तुल्यः। न च 'रेवत्याधारवारवन्तीय पशुसाधनम्' इत्यस्य 'एतस्य यागस्य वारवन्तीयम्' इति [1]षष्ठ्यर्थस्यापि विधेयत्वाद्वाक्यभेदः शङ्क्य., षष्ठ्यन्तैतच्छब्दस्य फलवता गुणेन यागस्य सन्निधिलब्धाश्रयाश्रयिभावसम्बन्धानुवादकत्वात्। तृतीयान्तैतच्छब्दस्तु विधेयगुणप्रतिपादकतया विधिशेषत्वान्नानुवादकः। न च विधेयगुणस्य वारवन्तीयशब्देनैव लाभात्तद्वैयर्थ्यमिति वाच्यम्। 'वारवन्तीयम्' इति द्वितीयान्तेन प्रधानतयोपस्थितस्य वारवन्तीयस्य फलभावनाकरणत्वान्वयायोग्यत्वेन तद्योग्यतासिद्ध्यर्थं तस्य तृतीयान्तैतच्छब्देन करणतया निर्देशावश्यम्भावात्। अग्निष्टोमसामशब्दोऽप्यानर्थक्यन्यायप्राप्तस्तोत्रसम्बन्धानुवादः। अतोऽग्निष्टोमाख्यस्तोत्रसाधनत्वविधानतोऽपि न वाक्यभेदप्रसक्ति। न चाग्निष्टुति क्रतौ स्तोत्रान्तराणामपि सद्भावात्तेषामपि चोदकाद्विपरिवृत्त्यविशेषाद्विशिष्याग्निष्टोमस्तोत्रसम्बन्धानुवादायोगात्स्तोत्रान्तरपरिसङ्ख्यानाय सोऽवश्य विधेय'। तथा च 'वारवन्तीयेन पशून् कुर्यादग्निष्टोमस्तोत्रसम्बन्धिना' इति वाक्यभेद इति वाच्यम्। चोदकत' स्तोत्रान्तरोपस्थिते' प्रागेव [2]'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति क्रत्वर्थपूर्ववाक्ये शब्देनोपस्थितस्याग्निष्टोमस्तोत्रस्यैव बुद्धौ विपरिवृत्त्या तस्यैवानुवादौचित्यात्। तस्मादग्निष्टोमस्तोत्रद्वारा प्रकृतयागमाश्रित्य रेवत्याधारवारवन्तीयगुण पशुफलाय विधीयते। इति प्राप्ते, सिद्धान्तयति—

1. विशिष्टस्यापि. ग, घ.　　2. 'वायव्यास्वग्निष्टोमसाम कार्यं वारवन्तीयं. ख, ग.

"सोमेन यजेत" इत्यादावपि सोमयागयोः क्रियाकारकभावसम्बन्धमादाय केवलयागविधेर्वक्तुं शक्यनया विशिष्टविधिमात्रोच्छेदापत्तेरित्यास्ता तावत्। प्रयोजन पूर्वपक्षे—नैयमिकाग्निहोत्रव्यतिरिक्तमनियतकाल दधिसाधनकं होमान्तर सकृदेव दर्वीहोमत्वादपूर्वं क्रियते, सिद्धान्ते तु-सायम्प्रातरग्निहोत्रहोमे दधिप्रयोग इति दिक्॥

इत्येकादशमिन्द्रियकामाधिकरणम्॥ ११ ॥

१२

"त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इत्यग्निष्टुत प्रकृत्य "वारवन्तीयमग्निष्टोमसाम कार्यम्" इति च गुण विधायेदमाम्नायते "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति। त्रिवृत् स्तोत्रीयानवकस्तोमक' अग्निष्टोमाख्यस्तोत्रेण सस्थाप्य' अग्निष्टुन्नामक. कश्चित्क्रतु.। तस्य क्रतोरग्निष्टोमसाम प्रकृतिवदेव "यज्ञायज्ञा वो अग्नये" इत्याग्नेयीष्वृक्षु प्राप्तम् [1] 'वायव्यासु" इत्यनेनापोद्यते। प्रकृतितो यद्यप्येकविंशस्तोमकमेव तत्प्राप्त तथापि ' त्रिवृदग्निष्टोमः" इत्यनेन तदपोदितमिति 'एकविंशम्' इत्यनेन प्रतिप्रसूयते। प्रकृतितो यज्ञायज्ञीयाख्यमग्निष्टोमसाम प्राप्तम् 'वारवन्तीयम्' इत्यनेनापोद्यते। वारवन्तीय सामविशेषः। रेवतीषु रेशब्दघटितासु "रेवतीर्न" इत्यादिषु ऋक्षु। अनेन वायव्या अपोद्यन्ते। तत्र 'एतस्यैव रेवतीपु' इति वाक्ये पूर्वस्मिन्नेवाग्निष्टुत्क्रतौ रेवत्याधारवारवन्तीयगुण पशुफलाय विधीयते? उत गुणविशिष्ट कर्मान्तरम्? इति सशय। तत्र धात्वर्थस्य यागस्य "ब्रह्मवर्चसकामो यजेत" इति पूर्ववाक्यगतयजिनैव प्राप्तत्वात्प्रकृतहानाप्रकृतकल्पनविशिष्टविधिगौरवदोषापाताच्च पूर्वाधिकरणन्यायेन पूर्वकर्मणि गुणविधानमेव युक्तमाश्रयितुम्। न च गुणसाध्यस्यैवाश्रयत्वात् यागस्य च द्रव्यदेवतासाधनकस्य सामसाध्यत्वाभावान्नाश्रयत्वसम्भव इति वाच्यम्। तृतीयाद्यपादे 'आनर्थक्यात्तदङ्गेषु' इत्यधिकरणे "सप्तदशारत्निर्वाजपेयस्य यूप" इति सप्तदशारत्नित्वस्य वाजपेये साक्षादन्वयासम्भावाद्वाजपेयाङ्गभूतपशुयागाङ्गयूपद्वारा अन्वय इति वक्ष्यमाणन्यायेन क्रत्वङ्गस्तोत्रनिष्पादनद्वारा यागसाधनत्वोपपत्ते.। न च रेवतीवारवन्तीयसम्बन्ध तस्य च फलसम्बन्ध इत्यनेकगुणविधाने वाक्यभेद इति वाच्यम्। न ह्यनेकार्थविधानमात्रेण वाक्यभेद., तर्हि विशिष्टविधिमात्रोच्छेदापत्तेः। किन्तु

1. आग्नेयीष्वृक्ष्वो वायव्यासु. ख, ग, मु. पा

संस्थावृत्त्यादिरूपगुणस्य प्रकृतयागे कारकत्वाभावेऽपि तत्सम्बन्धिप्रयोगपरिच्छेद-कत्वमात्रेण तदाश्रितत्वदर्शनात्; साम्नश्च गीतिक्रियात्मकस्य कर्तृव्यापारविषयत्वार्थं दध्यादिवत्क्रियापेक्षाविरहेऽपि 'कृत्वा' इति क्त्वाप्रत्ययगम्यक्रियान्तरसमानकर्तृकत्व-निर्वाहाय क्रियान्तरापेक्षाया सन्निधानलब्धयागो यजतिनानूद्यमानो विधीयमान-वारवन्तीयसामगुणे आश्रयतयान्वेतुमर्हतीति चेत् सत्यम, यागस्याश्रयत्वसम्भवे-ऽप्यग्निष्टोमपदवैयर्थ्यान्न गुणविधि सम्भवति। अग्निष्टोमसामपदं हि नानुवाद। आज्यपृष्ठादिबहुस्तोत्रेषु चोदकप्राप्तेषु सत्सु विशिष्याग्निष्टोमस्तोत्रसम्बन्धानुवादे कारणाभावात्। न च क्रत्वर्थवारवन्तीयवाक्यत: शब्देनोपस्थितत्वादग्निष्टोमस्तोत्र-स्यैवानुवाद उचित इति वाच्यम्। क्रत्वर्थवाक्येऽग्निष्टोमोपस्थितेर्गुणविधानार्थतया स्वस्य प्राधान्याभावेन तदुपस्थितेरनुवादत्वप्रयोजकत्वाभावात्। किञ्च रेवतीषु 'वारवन्तीय कृत्वा पशून्भावयेत्' इति पशुभावनापेक्षयैव समानकर्तृकत्वसम्भवान्न क्रियान्तरमपेक्ष्यत इति कथ यागस्य तत्राश्रयतयान्वय.। तस्माद्गुणविधौ यजत्यग्नि-ष्टोमसामशब्दयोरनुवादत्वासम्भवाद्विधानार्थत्वमेव वक्तव्यम्। तथा च 'वारवन्तीयेन पशून् कुर्यादग्निष्टोमसम्बन्धिना' इति 'वारवन्तायेन पशून् कुर्याद्यागसम्बन्धिना' इति च वाक्यभेद. स्यादिति तयोरानर्थक्यं स्यात्। न च 'धातुसम्बन्धे प्रत्यया:' इत्यधिकृत्य 'समानकर्तृकयो' पूर्वकाले' इति विहितक्त्वाप्रत्ययस्य धात्वन्तरसमान-कर्तृकत्वमेवार्थं इति प्रत्ययवाच्यपशुभावनाया क्त्वा प्रत्ययापेक्षितत्वाभावेन प्रकृतिभूतयर्थ्यर्थस्यैव तदपेक्षिततया आश्रयत्वेनान्वयसम्भव इति वाच्यम्। 'धातु-सम्बन्धे' इत्यस्य 'क्रियासमभिहारे लोट्' इत्यादिसमनन्तरसूत्रेष्वनुवर्तमानत्वेन क्त्वाविधावनुवृत्तेस्तद्भाष्यवार्तिकादावदृष्टत्वेन चाप्रामाणिकतया क्त्वागम्यसमानकर्तृ-कत्वस्य प्रत्ययवाच्यभावनापेक्षिताया वक्तु शक्यत्वात्। अत एवातीतकर्तृकप्राचीन-ग्रन्थविवरणपरग्रन्थे 'इति मनसि निधायाह' 'इत्यभिप्रेत्याह' 'इत्याकृत्याह' इत्यादौ क्त्वाप्रत्ययोपपत्ति.। तत्र हि 'आह' इत्यव्ययम् 'उवाच' इत्यर्थे विभक्तिप्रतिरूपक-मिति वैयाकरणसमय। तस्मात्कृत्वाशब्दोक्तभावनानिर्वाहितरेवतीवारवन्तीयनिरू-पितक्रियाकारकभावसम्बन्धविशेषितोऽपूर्वयाग' पशुफलाय विधीयते। 'एतस्य' इति षष्ठ्यन्तस्य च प्रस्तूयमानकर्मानुवादपरत्वे आनर्थक्यात् 'एतद्धर्मकस्य' इत्येव प्रकृताग्निष्टुद्धर्मातिदेशकतया, प्रकृतिभूताग्निष्टुति च वारवन्तीयसाम्नोऽग्निष्टोमस्तोत्र-साधनतया प्रकृतिवदिहापि तत्स्थानप्राप्तेरग्निष्टोमसामशब्दोऽनुवाद इति न तस्य

## समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

गीत्यादिक्रियात्मकेष्वाश्रयानपेक्षतया यागादिधात्वर्थतुल्येषु वारवन्तीयादिगुणेषु श्रुतेषु कर्मयुक्त-जन्यतया धात्वर्थयुक्तमेव फल स्यात्, न तु गुणयुक्तम्। "एतस्यैव रेवतीषु वारवन्तीयम्" इत्येवञ्जातीयकेषु वाक्येषु कर्मान्तरविधिरेव, न गुणविधिरिति यावत्। गीतिविशेषो हि वारवन्तीयसाम। उच्चारणक्रियाविशेष एव च गीतिर्नाम। एवंविधस्य च साम्नो यागादिवदाश्रयापेक्षाविरहात्कथ यागमाश्रित्य तद्विधानम्। समेष्वित्यस्य याग प्रति कारकभावात्मकगुणभावमनापन्नेष्वित्यप्यर्थः। यत्र हि प्रकृते कर्मणि फलार्थस्य गुणस्य कारकभाव. सम्भवति तत्रैव गुणस्य फलाय विधिः, यथा "दध्नेन्द्रियकामस्य" इति। इह तु वारवन्तीयसाम्नो गीतिविशेषात्मकस्य द्रव्यदेवतासाधनकयाग प्रति साधनत्वस्यासम्भवात्कथ यागमाश्रित्य विधि स्यात्। न चानर्थक्यतदङ्गन्यायेन क्रत्वङ्गभूतस्तोत्रनिर्वृत्तिद्वारा यागाश्रयत्वसम्भव इति वाच्यम्, वैषम्यात्। सप्तदशारत्नित्व हि वाजपेये साक्षादसम्भवात्तदङ्गभूतयूपद्वारा वाजपेयाङ्गतामश्नुते। 'वाजपेयस्य' इति षष्ठ्या अङ्गद्वाराप्युपकारकत्वेऽपि सम्भवात्। वारवन्तीय साम त्वङ्गभूतस्तोत्रद्वारा कथ यागकारकतामश्नुवीत, क्रियाकारकभावस्य साक्षात्सम्बन्धरूपत्वात्। न च पशुसोमाधिकरणे पशुसोमयो प्राणाज्या यागकरणत्वं कथमुक्तमिति वाच्यम्। तत्र प्रकृतिविकृत्योरत्यन्तानतिरिक्ततया हृदयादिगणसोमरसात्मना साक्षादेव पशुसोमयोर्यागकारकत्वसम्भवेऽप्यारादुपकारकस्य स्तोत्रस्य यागे कारकत्वासम्भवात्। किञ्च वाजपेयाङ्गत्वेन चोदित सप्तदशारत्नित्व वाजपेयेऽसम्भवात्तदङ्गयूपमुपसर्पतीति युक्तम्। वारवन्तीय तु फले विधीयते, न तु यागाङ्गतयेति कथमङ्गानि स्तोत्राण्युपसर्पेत्। नापि वारवन्तीयगुणस्य यागे आनर्थक्यम्, कर्मान्तरविधानेनार्थवत्त्वात्। उक्त च वार्तिके—

'तन्नामाङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम्।
प्राधान्यावस्थित यत्तु तदङ्ग नोपसर्पति' ॥ इत्यादिना।

ननु कारकतया वारवन्तीयगुणस्य यागाश्रितत्वासम्भवेऽपि सम्बन्धान्तरेण तदस्तु, "पशुकाम उक्थ्य गृह्णीयात्" "दाक्षायणयज्ञेन [1]सुवर्गकामो यजेत्" इत्यादौ

---

1. स्वर्गकाम . ग, घ

फलान्युद्दिश्य निधनविधि., न तु वृष्ट्यादिफलके सौभरे साम्नि ह्रीषादिव्यवस्था-विधि । कुत ? पुरुषश्रुते.—वृष्टिकामादिशब्दैर्वृष्ट्याद्यभिलषितृपुरुषवाचिभिश्चतुर्थ्यन्तै-र्वृष्ट्याद्यभिलषितृपुरुषशेषत्व निधनानामवगम्यते । तच्छेषत्वञ्च तदभिलषितफल-साधनत्वमेव । अत फलान्तरार्थतयैव निधनविधि । व्यवस्थाविधौ तु वृष्टिकामाय यत्सौभर तत्र ह्रीषिति निधनं कुर्यात्, न निधनान्तरमित्येव वृष्टिकामादिशब्दाना वृष्ट्यादिसाधनसौभरे लक्षणा स्यात् । एवञ्च ज्यायानपि नियमविधिर्लक्षणाप्रसङ्गान्न युज्यते । तस्मात्फलान्तरार्थतया निधनविधि ॥

सिद्धान्तयति—

## सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥ २९ ॥

वाशब्द पक्षव्यावृत्तौ । चतुर्थ्यन्तवृष्टिकामादिपदेषु वृष्ट्यादिशब्दो न फला-न्तरपर, किन्तु सर्वस्य-समस्तावयवकस्य सौभरस्य "यो वृष्टिकाम" इत्यादिवाक्यान्त-रैरुक्तकामत्वात् उक्तवृष्ट्यादिफलकतया तस्मिन् सौभरफल एव वृष्ट्यादिलक्षणे काम-श्रुति —चतुर्थ्यन्तवृष्टिकामादिपदगतवृष्ट्यादिफलशब्द: प्रत्यभिज्ञापक स्यात् । ततश्च वृष्ट्यादीना सौभररूपसाधने निराकाङ्क्षतया न ह्रीषादिनिधनान्वयसम्भव । न च प्रकृतफलानां साधनान्तरावरुद्धत्वात्प्रत्यभिज्ञाबाधेन फलान्तरपरत्वमेवास्त्विति वाच्यम् । ह्रीषादिशब्दा हि किञ्चिदाश्रित्य फलेषु विधेयाः । न तावत्सौभरसाश्रयः, बह्वयवस्यास्यान्तिमावयवह्रीषादिना निर्वर्तयितुमशक्यत्वात् । नापि निधनमेवा-श्रयो भवितुमर्हति, तन्मात्रस्याप्रकृतत्वात् भक्त्यन्तराणामपि सत्त्वात्तत्परिसङ्ख्यानाय निधनविधौ 'ह्रीषा वृष्टि कुर्यान्निधनभूतेन' इति वाक्यभेदापत्ते. । ननु 'वृष्टिकामाय' इत्यादीना सौभरफलपरत्वे वैयर्थ्यमत आह—निधनार्था पुन. श्रुतिरिति । पुन-र्वृष्ट्यादिशब्दश्रवण 'वृष्टिकामाय यत्सौभरम्' इत्येव वृष्ट्यादिसाधनसौभरानुवादेन निधनव्यवस्थाविधानार्थमित्यर्थ । अतो वृष्टिकादिशब्दलक्षिते सौभरे ह्रीषादि-निधननियम इत्येव युक्तम् । वाक्यभेदापेक्षया ज्यायस्त्वाल्लक्षणा न दुष्यति । न च वृष्टिसाधनसौभरार्थतया 'ह्रीष्' इति शब्दस्य नियमो निधनत्वेन विधेय इति वाक्य-भेदस्तुल्य इति वाच्यम् । शाखाभेदेन ह्रीषादिनिधनयुक्ततया पठिते सौभरे तन्निय-ममात्रस्यैव विधेयत्वेन वाक्यभेदानवकाशात् । न च वृष्ट्यादिसाधनसौभरस्यो-

विधेयकर्मविशेषकत्वम् । न चाग्निष्टुति वायव्याधारस्यैव वारवन्तीयस्याग्निष्टोमस्थानकत्वादिह कथं रेवत्याधारस्य तत्स्थानप्राप्तिरिति वाच्यम् । वारवन्तीयस्य ह्यग्निष्टोमे प्राप्तौ तदाधारभूतानामप्यग्निष्टोमस्तोत्रसम्बन्धप्राप्त्या रेवत्याधारस्यापि वारवन्तीयस्याग्निष्टोमस्थानमुपपद्यते । एवञ्च वायव्यानां रेवतीभिः प्रत्याम्नानाद्बाधमात्रं, न तु तावता वारवन्तीयस्याग्निष्टोमस्तोत्रस्थानत्वस्याप्यभावः स्यात् । तृतीयान्तैतच्छब्दोऽपि प्रस्तूयमानपूर्वयागवचनः । एवं च 'रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेत' इत्येतावन्मात्रं विधेयमिति लाघवमेकवाक्यत्वं च लभ्यते । गुणविधौ तु यज्यादानर्थक्यं वाक्यभेदश्च । तस्माद्रेवतीवाक्येऽपूर्वकर्मविधिरित्यास्तां तावत् । प्रयोजनं पूर्वपक्षे—रेवत्याधारवारवन्तीयवति कर्मणि क्रतुफलं ब्रह्मवर्चसं गुणफलं पशुश्च लभ्यते, सिद्धान्ते तु—पशुफलमेवेति स्पष्टमेव ॥

इति द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

१३

अथ कर्मापूर्वभेदप्रसङ्गात्फलापूर्वभेदविचारः प्रस्तूयते । अस्ति ज्योतिष्टोमे ब्रह्मसामाख्यः स्तोत्रविशेषः । तमाश्रित्य सौभरं नाम साम फलार्थतया विहितम् "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत" इति । तदेतत्फलत्रयसाधनतया विहितं सौभरं प्रकृत्याम्नायते "हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय" इति । निधनमिति साम्नश्चरमभाग उच्यते । तत्र किं हीषादयो निधनविशेषाः सौभरफलतः फलान्तरार्थतया विधीयन्ते एवञ्च यदा वृष्टिकामेन सौभरं प्रक्रान्तं तदेतरयोरपि निधनयोस्तत्फलकामनया प्रयोगः फलान्तरभूतवृष्टिकामनाविरहात्प्रथमनिधननिवृत्तिश्च 'वृष्टिकामः सौभरसाम्ना स्तोष्ये' 'वृष्टिकामो हीषिति निधनं सौभरसाम्नि करिष्ये' इति च पृथक्फलकामनम् ? उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनं नियम्यते, एवञ्च वृष्टिफलके सौभरे हीषित्येव प्रयोक्तव्यम् एकैव वृष्टिः प्रार्थयितव्या ? एवमन्नाद्यकामस्वर्गकामयोरपि द्रष्टव्यम् इति संशये, पूर्वपक्षयति—

## सौभरे पु श्रुतेर्निधने कामसंयोगः ॥ २८ ॥

वृष्ट्यादिफलार्थतया श्रुते सौभरे साम्नि हीषादिनिधने अन्यः कामसंयोगः । काम्यन्त इति कामाः फलानि । सौभरसामफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादि-

# तृतीयः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः । अस्मिन् पादे तदपवादः प्रतिपाद्यते ।

ज्योतिष्टोमे श्रूयते "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयात्"[1] "यदि बृहत्सामा शुक्राग्रान्" इति । तत्र किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामेति बृहत्सामेति विधीयते ? उत प्रकृत एव ज्योतिष्टोमे नैमित्तिक ऐन्द्रवायवाग्रतादि-गुणविधिः ? इति संशये पूर्वपक्षयति—

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्सं-योगस्याशेषभूतत्वात् ॥ १ ॥**

तु. प्रत्यवस्थाने । रथन्तरसामादिगुणः कर्मान्तरमाक्षिपेत् । ? कुतः[2] क्रतु-संयोगात्-रथन्तरसामादिगुणस्य ज्योतिष्टोमात्क्रत्वन्तरेणैव संयोगात् प्रकृतकर्मणा च संयोगासम्भवात् । कुत ? संयोगस्याशेषभूतत्वात्-रथन्तरादिसंयोगस्य क्रतुविशेषण-त्वाभावात्[3] । 'रथन्तरसामा' इति हि बहुव्रीहिसमासः 'समर्थः पदविधिः' इति सामर्थ्यापेक्षः । सामर्थ्यञ्च यदि कृत्स्ने क्रतौ रथन्तरमेकमेव स्यात्तदा भवति । प्रकृते च ज्योतिष्टोमे रथन्तरं साम न केवलमस्ति, किन्तु गायत्रवामदेव्यादिसामान्तर-सहितमेवेति सामान्तरसापेक्षत्वेनासामर्थ्यात्समासानुपपत्तेस्तद्गुणस्य विशेषणत्वं रथन्तरस्यानुपपन्नम् । न च पृष्ठस्तोत्रे सामान्तरानपेक्षत्वात्सामर्थ्यस्यानपाय इति वाच्यम्, तस्यात्रान्यपदार्थतयानुपात्तत्वात् । एवम् 'बृहत्सामा' इत्यत्रापि । तथा च प्रकृते कर्मण्यनुवाद्यतया निवेशमलभमानोऽयं गुणनिवेशयोग्यं कर्मान्तरपरत्वमस्य

---

1 ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयात् ख, ग, मु. पा.  2. नास्ति ख, ग.
3. संयोगस्य अशेष कृत्स्न क्रतु प्राप्तत्वाभावात् ख, ग, मु. पा.

देश्यत्वे विशिष्टोद्देशदोषप्रसङ्ग' शङ्क्य. । वृष्ट्यादिसाधनमेव ह्यत्रोद्देश्यम् । सन्निधानाच्च तत्सौभरमिति लभ्यते । वस्तुतस्तु 'वृष्टिकामाय यत्सौभरं तत्र निधनम् 'हीष्' इति कुर्यात्' इत्येव नार्थ , येन वृष्टिकामादिशब्दा. सौभरे लाक्षणिका स्यु । किन्तु 'यो वृष्टिकाम' सौभरेण स्तुवीत' इत्येव वृष्टिकामाय यन्निधन विहित तत्र 'हीष्' इत्यादि कुर्यादित्यर्थ'। न च 'यो वृष्टिकाम ' इत्येव सौभरस्यैव वृष्टिकामादिपुरुषशेषत्वरूपवृष्ट्यादिसाधनतावगमेन निधनस्य तदवयवस्य 'वृष्टिकामाय' इत्यादौ वृष्ट्यादिशब्दैरनुवादासम्भव इति सौभरलक्षणा दुर्वारेति वाच्यम् । समस्तावयवकस्य सौभरस्य फलसाधनत्वेऽवगते सति तदवयवस्य निधनस्यापि वृष्ट्यादिसाधनतावगमेन लक्षणा विनैव [1]तदनुवादसम्भवात् । तदेतत्सूत्रे 'सर्वस्य' इत्यनेन ध्वनितम् । तस्य हि समस्तावयवकस्य सौभरस्येत्यर्थ. ।

इति त्रयोदशं सौभराधिकरणम् ।।१३।।

इति द्वितीयाध्याये द्वितीय. पाद. ।।



1. तथानुवाद क, ग, घ, ङ, मु. पा.

सापेक्षत्वेनासामर्थ्यात्समासानुपपत्तेरिति वाच्यम् , अन्ययोगव्यावृत्त्यसम्भवेऽप्ययोगव्यावृत्त्या विशेषणत्वोपपत्तौ सामर्थ्यसम्भवेन समासोपपत्ते' । बृहद्रथन्तरे हि सामनी ज्योतिष्टोमे वैकल्पिके । अतः पक्षे अयोगः प्राप्त' । तद्व्यावृत्त्या यदि रथन्तरसामैव सोम', नाविद्यमानरथन्तर इति भवत्ययोगव्यवच्छेदः । स च सामान्तरसत्त्वेऽप्यविरुद्ध इति सामान्तरसापेक्षत्वाभावान्नासामर्थ्यम् । अस्तु वा सामान्तरमेव व्यवच्छेद्यम् , तथापि विरोधिनोर्बृहद्रथन्तरयो' परस्परव्यवच्छेदेनैव विशेषणत्वम , न तु सामान्तरव्यवच्छेदेनापि, विरोधनिबन्धनत्वाद्व्यवच्छेदस्य सामान्तरसत्त्वेऽपि तदपेक्षाविरहादस्ति सामर्थ्यम् । किञ्च 'उक्थ्यो वैराजसामा" इत्यादिवद्(धा)दाशमिकन्यायेन 'रथन्तरसामा' इति निर्देशस्य पृष्ठस्तोत्रमात्रपरता अवसीयते । तत्र च पृष्ठस्तोत्रे सामान्तराभावेन तदपेक्षाविरहात्सामर्थ्यमविरुद्धम् । न च बहुव्रीहिणा अन्यपदार्थप्रधानेन सोमस्यैव प्राधान्येनावगमात्कथ रथन्तरस्य निमित्तत्वमिति वाच्यम् । बहुव्रीहिणा पदार्थप्रतीतिवेलाया विशेष्यतयावगतस्यापि क्रतोर्नित्यतया निमित्तत्वानर्हत्वात्तत्परित्यागेन विशेषणस्यैव निमित्तत्वपर्यवसानाद् वाक्यस्य निमित्ततात्पर्यकत्वेन तदनुसारेणायोग्यविशेष्यपरित्यागेन योग्यविशेषण एव तत्कल्पनस्य न्याय्यत्वात् । अत एव "दध्ना जुहोति" इत्यत्र विशेष्यस्य होमस्य [1]प्राप्तत्वात्तत्परित्यागेन योग्यस्य दध्नो विशेषणतयापि प्रतीतस्य विधानमुपपन्न भवति । न चैव सति कर्मबहिरध्ययनादावपि रथन्तरस्य सद्भावादतिप्रसङ्ग , प्रकृतक्रतुविशिष्टस्य तस्य निमित्तत्वे तु विशिष्टोद्देशदोष इति वाच्यम् । न ह्यत्र शब्देन प्रकृतक्रतुविशिष्टस्य रथन्तरस्य निमित्तत्व बोध्यते, येन विशिष्टोद्देशदोषः स्यात् । सन्निधानादेव हि क्रतुविशिष्टत्वेन रथन्तरस्य बोध , अनुवादस्य सति सम्भवे सन्निहितगामित्वात् । तस्मात्प्रकृतज्योतिष्टोमे रथन्तरादिनिमित्ते मह्यग्रताविशेषगुणविधि. ॥

इति प्रथमं रथन्तरसामाधिकरणम् ॥१॥

२

अस्ति राजसूय "स्वाराज्यकामो राजा राजसूयेन यजेत" इति । तत्र सन्ति दिशामवेष्टयो नाम यागा'—"दिशामवेष्टयो भवन्ति" इति प्रकृत्य विहिताः "आग्नेयमष्टाकपालं निर्वपति हिरण्य दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेव

1. प्राप्तत्वाद्वाक्यतात्पर्यविषयदध्यन्यथायोग्यतया तत्परित्यागेन क, घ, ग, ङ, मु. पा.

वाक्यस्य कल्पयतीत्यर्थः। न च कर्मान्तरपरत्वे तस्य सम्प्रति विधीयमानतया सिद्धधर्मनिमित्तत्वप्रतिपादकयदिशब्दानुपपत्तिरिति वाच्यम्, 'अथवैतर्ह्यल्पा पृथिव्यासीत्' इत्यादिवद्यदिशब्दस्यापि निपातत्वेनानर्थकत्वात्। यद्वा 'रोचते' इत्यध्याहारेण 'यदि रोचते तदा रथन्तरसामान क्रतुं कुर्यात्' इति योज्यम्। अथवा 'गृह्णीयात्' इति लिङ् कामप्रवेदनार्थतया 'यद्यैन्द्रवायवाग्रान्ग्रहीतुमिच्छेत्तदा रथन्तरसामानं क्रतुं कुर्यात्' इति व्याख्येयम्। अथवा 'स्यात्' इति हेतौ लिङ्। 'रथन्तरसाम्ना क्रतुना हेतुना ऐन्द्रवायवाग्रान्गृह्णीयात्' इत्यर्थः। अपि वा 'गृह्णीयात्' इति लिङो हेतुमदर्थकत्वेन 'यदि ग्रहाग्रता हेतुमत्त्वेन विवक्षिता तदा तद्धेतू रथन्तरसामा सोमः कार्यः' इति व्याख्येयम्। एवं बृहत्सामवाक्येऽपि योज्यम्। [1]तस्माद्रथन्तरबृहदन्यतरस्तोत्रकमैन्द्रवायवाग्रतादियुक्तं कर्मान्तरं विधेयम् [2]इति पूर्वः पक्षः।

सिद्धान्तयति—

**एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ। नात्र कर्मान्तरविधिः, किन्तु एकस्यैव ज्योतिष्टोमस्य प्रकृतस्य लिङ्गभेदाद् रथन्तरादिनिमित्तभेदेन प्रयोजनार्थं ग्रहाग्रताविशेषविधानप्रयोजनार्थतया यदि रथन्तरेत्यादिवाक्यम् उच्येत—प्रतीयेत। ननूक्तरीत्या कर्मान्तरत्वादेकत्वमेवासिद्धमित्यत आह—एकत्वमिति। यदिशब्दस्वारस्येन [3]ग्रहाग्रताविशेषणविधिपरत्वस्य वक्तव्यतया कर्मान्तरबुद्धौ निवृत्तायां तदेकत्वं विज्ञायत इत्यर्थः। यदिशब्दस्य हि प्रथमपक्षे आनर्थक्यमेव दोषः, द्वितीये अध्याहारः, तृतीये 'यदि गृह्णीयात्' इति व्यवहितान्वयः, चतुर्थे [4]पञ्चमे चासिद्धस्य हेतुत्वकल्पनाक्लेश इति पञ्चानां[5] पक्षाणां दुष्टत्वात्स्वरसतः प्रकृतकर्मणो निमित्तत्वप्रतिपादकयदिशब्दबलात्प्रकरणाच्च प्रकृतस्यैव कर्मणः सोमशब्दः प्रतिपादको न तु कर्मान्तरस्य। न च सामान्तराणामपि सत्त्वात् 'रथन्तरसामा' इति कथं ज्योतिष्टोमस्यानुवादसम्भवः,

1 तस्मात्केवलरथन्तर. ख, घ, ग, ङ, मु पा 2 इति प्राप्ते. ग
3 विशेषगुणविधि. क, घ, ग, मु. पा. 4 पञ्चमे च नास्ति क, घ, ग.
5. चतुर्णां क, घ, ग, मु. पा.

शब्देऽपि साधुत्वान्वाख्यानपरं व्याख्येयम्। यदिशब्दबलादपि राजशब्दो राज्ययोगनिमित्त इति अध्यवस्यामः। यदिशब्दौ हि ब्राह्मणवैश्यौ कर्तृत्वेन सिद्धावनुवदत। न चैतद्राजशब्दस्य क्षत्रियजातिपरत्वे घटते, प्राप्त्यभावात्। तस्माद्ब्राह्मणादिनिमित्ते राजसूयान्तर्गतावेष्टियागेषु प्रकृतेषु मध्यनिधानादि-गुणविधिः॥

इति प्राप्ते सिद्धान्तयति—

**अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥**

शाखान्तरे अवेष्टिशब्द एकवचनान्तोऽपि श्रुतः। तदभिप्रायमेकवचनम्। अवेष्टिविषयम् "यदि ब्राह्मणः" इत्यादिवाक्यं क्रतुप्रधान–ब्राह्मणादिविशिष्टप्रयोगान्तर-परतया प्रतीयेत। कुतः? यज्ञसयोगात्–क्षत्रियस्यैव राजसूयेन सयोगात्। 'राजान-मभिषेचयेत्' इति राज्ञः सतो जनपदपरिपालनरूपराज्ययोगफलकाभिषेचनविधाना-त्क्षत्रियमात्रपरत्व राजशब्दस्य वेदादवसीयते। यदिशब्दस्तु निपातत्वात्पूर्वाधि-करणपूर्वपक्षोक्तप्रकारेण कथञ्चिन्नेयः। ब्राह्मणादिष्वप्यार्याणा राजशब्दप्रयोगस्तु प्रयोगरूपाचारत्वाद्राजशब्दात्कर्मणि यग्विधायकव्याकरणस्मरणेनाभिषेकविध्यनु-गृहीतप्रामाण्यकेन क्षत्रियस्य प्रजापरिपालनमित्यादिधर्मशास्त्रेण च बाधाद्राजकर्म-परिपालनकारित्वनिबन्धनो गौण.। न च "सोमोऽस्माकं ब्राह्मणाना राजा" "इन्द्रो राजा जगतश्चर्षणीनाम्" इत्यादिवैदिकनिर्देश. पालनेऽपि दृश्यते। तथा 'क्षत्रिय-समानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्ययो भवति, पञ्चालानां राजा पाञ्चाल.' इत्यादिव्याकरणवार्तिकमहाभाष्ययोरपि पालने राजशब्दप्रयोगो दृष्ट इति कथं जात्य-र्थकत्वमिति वाच्यम्। श्रुतिव्याकरणयोरुभयत्र समानत्वेऽप्यनेकार्थत्वस्यान्याय्यत्वेन क्षत्रियत्वजातौ मुख्यत्वेन पालके गौणतया च तत्र राजशब्दस्य नेयत्वात्। न च विनिगमनाविरहः, सप्रतियोगिकपाल्यापेक्षया निष्प्रतियोगिकक्षत्रियत्वजातेर्लघुत्व-स्यैव विनिगमकत्वात्। किञ्च जनपदपालनमात्रं राजपदप्रवृत्तिनिमित्तम्? स्वतन्त्रजन-पदपालन वा? नाद्य, राज्ञा नियुक्ते जनपदाद्यधिकारिणि राजपदप्रयोगापत्ते'। न द्वितीयः, सार्वभौमेण [1]साम्राजा देशविशेषस्य राजभावेन नियुक्ते तदभावप्रसङ्गात्। तस्मात्क्षत्रियजातिरेव राजशब्दार्थः। ब्राह्मणादिषु तु 'पक्षिराज.' 'वृक्षराज.' इत्या-दिवद्गौण.। तस्माद्ब्राह्मणादिविशिष्टप्रयोगान्तरविधि.। न च राजसूयान्तर्गतावेष्टि-

1 सम्राजाखण्डदेशविशेषस्य., ग, घ, ङ, मु. पा.

चरु पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्य चरु शितिपृष्ठो दक्षिणा" इति। तत्रेदमाम्नायते—"यदि ब्राह्मणो यजेत बार्हस्पत्य मध्ये निधायाहुतिमाहुति हुत्वाभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम्" इति। आग्नेयादीनि चत्वारि हवींषि प्रतिदिशमासाद्य तेषां मध्ये बार्हस्पत्याद्यन्यतममासाद्य आग्नेयाद्येकैक हविर्हुत्वा तस्य तस्य सन्नावेण मध्ये निहित हविरभिघारयेदित्यर्थः। तत्र संशय—किं प्रकृतराजसूयिकावेष्टियागेषु[1] ब्राह्मणादिवर्णविशेष निमित्तीकृत्य 'मध्ये निधाय' इत्यादिगुणविधि ? उत ब्राह्मणादिविशिष्टप्रयोगान्तरविधि ? इति। तत्र पूर्वाधिकरणन्यायेन "यदि रथन्तरसामा" इत्यादिवद्गुणविधिरिति ब्रूमः। न च [2]राजशब्दवाच्यक्षत्रियजात्यधिकृतराजसूयान्तर्गतावेष्टियागेषु कथ ब्राह्मणादिवर्णनिमित्ते गुणविधिसम्भव इति वाच्यम्। राजशब्दो हि जनपदपरिपालनरूपराज्ययोगनिमित्तको ब्राह्मणादिष्वपि वर्तितुमर्हति, राजशब्दस्य ब्राह्मणादिष्वपि राज्ययोगनिमित्तमात्रेणार्यम्लेच्छसाधारणसर्वलोकप्रसिद्धेः, न तु क्षत्रियत्वजातिनिमित्तो राजशब्दः, तत्प्रसिद्धेरनार्यमात्रेषु सत्त्वाद् द्रविडदेशमात्रगतत्वात्, आर्याणा क्षत्रियजातिमात्रे प्रयोगाभावेन विप्रतिपन्नत्वाच्च। न च (ना) बर्हिराज्याधिकरणन्यायेनानार्यव्यवहारादपि क्षत्रियजातिपरत्वं स्यादिति वाच्यम्, वैषम्यात्। बर्हिराज्यस्थले ह्यनार्यव्यवहारादपि जात्यर्थत्वम्, आर्यव्यवहारस्य जात्यव्यभिचारित्वात्। इह तु ब्राह्मणादिष्वपि राजशब्दस्यार्यप्रयोगात्क्षत्रियत्वजातिव्यभिचारान्न क्षत्रियजातिपरत्वम्। यद्यपि धर्मशास्त्रवशात्क्षत्रियस्यैव राज्ययोगो न तु ब्राह्मणादीनामपि, तथापि '[3]प्रवृत्तिनिमित्ततायां शास्त्रमूलत्वस्यातन्त्रतया शास्त्रोल्लङ्घनेनापि यथाकथञ्चिद्राज्ययोगसद्भावमात्रेण ब्राह्मणादीनामपि राजशब्दवाच्यत्वमविरुद्धम्। न चैवमपि राज्ययोगाद्राजा राजयोगाद्राज्यमिति परस्पराश्रय इति वाच्यम्, राज्यशब्दस्य जनपदपरिपालनकर्मणि रूढत्वेन राजयोगानपेक्षत्वेनादोषात्। न च 'पत्यन्तपुरोहितादिभ्यो यक्' इति सूत्रेण राज्ञः कर्मेत्यर्थे यक्प्रत्यये राज्यशब्दव्युत्पत्तेर्व्याकरणस्मृतिसिद्धत्वात्प्रयोगरूपाचारात्स्मृतेर्बलीयस्त्वाच्च रूढ्याश्रयणं युक्तमिति वाच्यम्, मन्वादिस्मृतेराचाराद्बलवत्त्वेऽपि प्रयोगमूलत्वाद्व्याकरणस्य तदपेक्षया प्रयोगरूपाचारस्य बलवत्त्वात्। ततश्च (पा) नकुलनखनक्षत्रादिशब्देष्विव व्याकरण राज्य-

1 राजसूयिकावेष्टिकयागेषु क, ग, मु. पा., राजसूयिकाग्नेयादियागेषु ङ,

2. राजन् शब्दवाच्य, ङ, मु. पा.

3. प्रवृत्तिनिमित्ततायाः शास्त्रमूलकत्वस्य. क, ग, घ, ङ, च, मु. पा.

भावेन तस्य क्रतुविध्यपेक्षिताहवनीयादिसाधकत्वे प्रमाणाभावादिति चेन्न, "नक्त गार्हपत्यमादधाति" "अर्धोदिते सूर्य आहवनीयमादधाति" इत्यादिवाक्येष्वाधानस्याहवनीयादेश्च साध्यसाधनभावावगमात्। यद्यपि तानि वाक्यानि गुणविधायकान्येव न त्वाधानविधायकानि, तथापि 'गार्हपत्यम्' इत्यादिद्वितीयया साध्यत्वानुवादिन्या आधानस्य तत्साधनत्वावगमसम्भवः। यद्वा "य एवं विद्वानग्निमाधत्ते" इति सामान्यत' सर्ववर्णानामाधानविधायकमिति प्राप्ताधाने ब्राह्मणादिनिमित्तो वसन्तादिविधि:। इति प्राप्ते, सिद्धान्तयति—

## आधानेऽसर्वशेषत्वात् ॥ ४ ॥

आधाने विषये वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकम्, न तु प्राप्ताधाने निमित्तसयोगेन कालविशेषबोधकम्। कुत.? असर्वशेषत्वात्—आधानस्य सर्वक्रत्वर्थतया विधेरश्रवणात्। आधानविधिसद्भावे हि 'आदधीत' इत्यात्मनेपदबलादाधानसाध्याग्नीना कर्तृगामित्वप्रतीत्या स्वीयाधानसाध्यत्व लभ्यते। आक्षेपपक्षे तु "कृत्तिकास्वग्निमादधीत" "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिगुणवाक्येष्वात्मनेपदस्यानुवादत्वेनाविवक्षिततया क्रतुविधिभिराधानमात्राक्षेपेऽपि तस्य स्वकर्तव्यत्वे प्रमाणाभावात्परानुष्ठिताधाननिष्पन्नाग्नीना क्रयादिना सम्पादनं स्यादिति कथ नियमेन क्रतुविधिभिराधानस्य प्राप्ति.। एवञ्चाधानस्य तदुद्देशेन नैमित्तिकगुणस्य च विधौ वाक्यभेदप्रसङ्गाद्ब्राह्मणादिवसन्तादिविशिष्टाधानविधि.। तथा च वसन्तादियुक्तप्रत्यक्षविधौ जाग्रति "य एव विद्वानग्निमाधत्ते" इत्यस्य वर्तमानापदेशस्य विधित्वकल्पनक्लेशोऽपि[1] नानुभवितव्यो भवति। न चैवमपि वसन्तादिवाक्येष्वाहवनीयादिशब्दाभावादाधानोत्पन्नाग्नीना कथ क्रत्वर्थता स्यादिति वाच्यम्। वसन्तादिवाक्येष्वाहवनीयादिग्रहणाभावेऽपि 'नक्त गार्हपत्यम्' इत्यादिगुणवाक्येषु गार्हपत्यादीना द्वितीयया आधानसाध्यत्वानुवादबलेन वसन्तादिवाक्येऽग्निशब्दस्य गार्हपत्यादिपरत्वे पर्यवसानस्योक्तत्वादित्यन्यत्र विस्तर.।

प्रयोजन पूर्वपक्षे—ब्राह्मणादिश्रवणस्य निमित्तार्थत्वाच्छूद्रस्याप्याधानम्, सिद्धान्ते तु ब्राह्मणादिवाक्यानामेव विधायकत्वाच्छूद्रस्य पृथगाधानविध्यभावान्नाधानमिति। न च ब्राह्मणादिश्रवणस्य निमित्तार्थत्वेऽपि शूद्रस्योपनयनाभावेन विद्या-

1. कल्पनाक्लेशोऽपि ग, घ.

प्रयोगे ब्राह्मणाद्यप्राप्तावपि "एतयान्नाद्यकामं याजयेत्" इति वाक्यान्तरविहितावेष्टिप्रयोगान्तरेऽन्नाद्यकामतया प्राप्तब्राह्मणादिनिमित्ते मन्थनिधानादिगुणविधिरेव किं न स्यादिति वाच्यम्। 'एतयान्नाद्यकामम्' इत्यत्र हि ब्राह्मणादीनां कर्तृत्वं न श्रुतम्; किन्त्वन्नाद्यकामस्य फलित्वेन श्रवणादाक्षेप्यम्। तदाक्षेपात्प्रागेव च स्वाराज्यकामवाक्ये अवेष्टिकर्तृत्वेनावगतक्षत्रियेणैव निराकाङ्क्षत्वान्न कर्तृतां प्रयोजयितुमन्नाद्यवाक्यं प्रभवति। यथा लब्धाग्निविद्यत्रैवर्णिकलाभेन निराकाङ्क्षाः कर्मविधयो न शूद्रस्याग्निविद्ये प्रयोजयितुमीशते तद्वत्। ततश्च प्रकृतावेष्टेरेव प्रत्यभिज्ञाताया 'यदि ब्राह्मण.' इत्यादिना ब्राह्मणादिविशिष्टप्रयोगान्तरविधिः। तस्यैव प्रयोगस्य फलापेक्षायामन्नाद्यकामवाक्येन फलसम्बन्धः। भाष्यन्तु [1]कर्मान्तरपरतया प्रतीयमानमपि प्रयोगान्तरपरतया नेयम्। न ह्यत्र 'यदि ब्राह्मण' इत्यादिवाक्ये कर्मान्तरविधिः सम्भवति, प्रकृतावेष्टिप्रत्यभिज्ञाविरोधात्। एवञ्च यथा दर्शपूर्णमासयोरेको यावज्जीविकप्रयोगोऽन्यश्च काम्यप्रयोग., एवमवेष्टेरेकस्या एव क्रत्वर्थ एक प्रयोगोऽन्यश्चान्नाद्यकामप्रयोग। तत्रान्नाद्यकामप्रयोगे ब्राह्मणादिश्रवणस्य निमित्तार्थकत्वे प्रापकत्वे च नास्ति फलभेदः। राजसूयिकावेष्टिप्रयोगे तु स्वाराज्यवाक्ये राजशब्दस्य ब्राह्मणादिसाधारणत्वात्त्रयाणामपि वर्णानां कर्तृत्वं पूर्वपक्षे, सिद्धान्ते तु क्षत्रियस्यैवेति फलभेदः। यद्यपि स्वाराज्यवाक्य एव राजशब्दार्थनिरूपणं कर्तुं शक्यम्, तथाप्यध्यायसङ्गतये प्रयोगभेदव्युत्पादनायावेष्टिवाक्योदाहरणमिति दिक् ॥

इति द्वितीयमवेष्ट्यधिकरणम् ॥ २ ॥

३

"वसन्ते ब्राह्मणोऽग्निमादधीत" "ग्रीष्मे राजन्य" "शरदि वैश्य" "वर्षासु रथकार" इत्यत्र किमाधाने कर्मणि ब्राह्मणादिनिमित्ते वसन्तादिविधि ? उत ब्राह्मणादिवसन्तादिविशिष्टमाधानं विधीयते ? इति संशय। तत्र "यदि ब्राह्मणो यजेत" इत्यादौ ब्राह्मणादीनामप्राप्ततया राजसूयिकावेष्टिप्रयोगे गुणविधौ निमित्तत्वासम्भवेन तद्विशिष्टप्रयोगान्तरविधिसम्भवेऽपि प्रकृते आहवनीयादिसापेक्षक्रतुविध्याक्षेपलभ्याधाने ब्राह्मणादीनां प्राप्तानां निमित्तत्वसम्भवेनाधाने ब्राह्मणादिनिमित्ते वसन्तादिविधिर्युज्यते। नन्वाधानस्यान्यतोऽप्राप्तत्वात्कथं तस्मिन् ब्राह्मणादिश्रवणस्य निमित्तार्थत्वम् ? न च क्रतुविधितस्तदाक्षेप सम्भवति, आधानविधावाहवनीयादिशब्दश्रवणा-

1. कर्मान्तरतया .क, ख, ग, घ, ङ, मु. पा.

भावेन तस्य क्रतुविध्यपेक्षिताहवनीयादिसाधकत्वे प्रमाणाभावादिति चेन्न, "नक्त गार्हपत्यमादधाति" "अर्धोदिते सूर्ये आहवनीयमादधाति" इत्यादिवाक्येष्वाधानस्याहवनीयादेश्च साध्यसाधनभावावगमात्। यद्यपि तानि वाक्यानि गुणविधायकान्येव न त्वाधानविधायकानि, तथापि 'गार्हपत्यम्' इत्यादिद्वितीयया साध्यत्वानुवादिन्या आधानस्य तत्साधनत्वावगमसम्भवः। यद्वा "य एवं विद्वानग्निमाधत्ते" इति सामान्यस सर्ववर्णानामाधानविधायकमिति प्राप्ताधाने ब्राह्मणादिनिमित्तो वसन्तादिविधि'। इति प्राप्ते, सिद्धान्तयति—

## आधानेऽसर्वशेषत्वात् ॥ ४ ॥

आधाने विषये वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकम्, न तु प्राप्ताधाने निमित्तसयोगेन कालविशेषबोधकम्। कुतः? असर्वशेषत्वात्—आधानस्य सर्वक्रत्वर्थतया विधेरश्रवणात्। आधानविधिसद्भावे हि 'आदधीत' इत्यात्मनेपदबलादाधानसाध्याग्नीनां कर्तृगामित्वप्रतीत्या स्वीयाधानसाध्यत्व लभ्यते। आक्षेपपक्षे तु "कृत्तिकास्वग्निमादधीत" "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिगुणवाक्येष्वात्मनेपदस्यानुवादत्वेनाविवक्षिततया क्रतुविधिभिराधानमात्राक्षेपेऽपि तस्य स्वकर्तव्यत्वे प्रमाणाभावात्परानुष्ठिताधाननिष्पन्नाग्नीना क्रयादिना सम्पादन स्यादिति कथ नियमेन क्रतुविधिभिराधानस्य प्राप्ति.। एवञ्चाधानस्य तदुद्देशेन नैमित्तिकगुणस्य च विधौ वाक्यभेदप्रसङ्गाद्ब्राह्मणादिवसन्तादिविशिष्टाधानविधि.। तथा च वसन्तादियुक्तप्रत्यक्षविधौ जाग्रति "य एव विद्वानग्निमाधत्ते" इत्यस्य वर्तमानापदेशस्य विधित्वकल्पनक्लेशोऽपि[1] नानुभवितव्यो भवति। न चैवमपि वसन्तादिवाक्येष्वाहवनीयादिशब्दाभावादाधानोत्पन्नाग्नीना कथ क्रत्वर्थता स्यादिति वाच्यम्। वसन्तादिवाक्येष्वाहवनीयादिग्रहणाभावेऽपि 'नक्त गार्हपत्यम्' इत्यादिगुणवाक्येषु गार्हपत्यादीनां द्वितीयया आधानसाध्यत्वानुवादबलेन वसन्तादिवाक्येऽग्निशब्दस्य गार्हपत्यादिपरत्वे पर्यवसानस्योक्तत्वादित्यन्यत्र विस्तर.।

प्रयोजन पूर्वपक्षे—ब्राह्मणादिश्रवणस्य निमित्तार्थत्वाच्छूद्रस्याप्याधानम्, सिद्धान्ते तु ब्राह्मणादिवाक्यानामेव विधायकत्वाच्छूद्रस्य पृथगाधानविध्यभावान्नाधानमिति। न च ब्राह्मणादिश्रवणस्य निमित्तार्थत्वेऽपि शूद्रस्योपनयनाभावेन विद्या-

1. कल्पनाक्लेशोऽपि ग, घ.

प्रयोगे ब्राह्मणाद्यप्राप्तावपि "एतयान्नाद्यकामं याजयेत्" इति वाक्यान्तरविहितावेष्टिप्रयोगान्तरेऽन्नाद्यकामतया प्राप्तब्राह्मणादिनिमित्ते मध्यनिधानादिगुणविधिरेव किं न स्यादिति वाच्यम्। 'एतयान्नाद्यकामम्' इत्यत्र हि ब्राह्मणादीनां कर्तृत्वं न श्रुतम्; किन्त्वन्नाद्यकामस्य फलित्वेन श्रवणादाक्षेप्यम्। तदाक्षेपात्प्रागेव च स्वाराज्यकामवाक्ये अवेष्टिकर्तृत्वेनावगतक्षत्रियेणैव निराकाङ्क्षत्वान्न कर्तृतां प्रयोजयितुमन्नाद्यवाक्यं प्रभवति। यथा लब्धाग्निविद्यत्रैवर्णिकलाभेन निराकाङ्क्षा कर्मविधयो न शूद्रस्याग्निविद्ये प्रयोजयितुमीशते तद्वत्। ततश्च प्रकृतावेष्टेरेव प्रत्यभिज्ञाताया 'यदि ब्राह्मण.' इत्यादिना ब्राह्मणादिविशिष्टप्रयोगान्तरविधि। तस्यैव प्रयोगस्य फलापेक्षायामन्नाद्यकामवाक्येन फलसम्बन्ध। भाष्यन्तु [1]कर्मान्तरपरतया प्रतीयमानमपि प्रयोगान्तरपरतया नेयम्। न ह्यत्र 'यदि ब्राह्मण' इत्यादिवाक्ये कर्मान्तरविधिः सम्भवति, प्रकृतावेष्टिप्रत्यभिज्ञाविरोधात्। एवञ्च यथा दर्शपूर्णमासयोरेको यावज्जीविकप्रयोगोऽन्यश्च काम्यप्रयोग., एवमवेष्टेरेकस्या एव क्रत्वर्थ एक. प्रयोगोऽन्यश्चान्नाद्यकामप्रयोग। तत्रान्नाद्यकामप्रयोगे ब्राह्मणादिश्रवणस्य निमित्तार्थकत्वे प्रापकत्वे च नास्ति फलभेद.। राजसूयिकावेष्टिप्रयोगे तु स्वाराज्यवाक्ये राजशब्दस्य ब्राह्मणादिसाधारणत्वात्त्रयाणामपि वर्णानां कर्तृत्वं पूर्वपक्षे, सिद्धान्ते तु क्षत्रियस्यैवेति फलभेद। यद्यपि स्वाराज्यवाक्य एव राजशब्दार्थनिरूपणं कर्तुं शक्यम्, तथाप्यध्यायसङ्गतये प्रयोगभेदव्युत्पादनायावेष्टिवाक्योदाहरणमिति दिक्॥

इति द्वितीयमवेष्ट्यधिकरणम्॥ २॥

३

"वसन्ते ब्राह्मणोऽग्निमादधीत" "ग्रीष्मे राजन्य" "शरदि वैश्य" "वर्षासु रथकार" इत्यत्र किमाधाने कर्मणि ब्राह्मणादिनिमित्ते वसन्तादिविधि? उत ब्राह्मणादिवसन्तादिविशिष्टमाधानं विधीयते? इति संशय। तत्र "यदि ब्राह्मणो यजेत' इत्यादौ ब्राह्मणादीनामप्राप्ततया राजसूयिकावेष्टिप्रयोगे गुणविधौ निमित्तत्वासम्भवेन तद्विशिष्टप्रयोगान्तरविधिसम्भवेऽपि प्रकृते आहवनीयादिसापेक्षक्रतुविध्याक्षेपलभ्याधाने ब्राह्मणादीनां प्राप्तानां निमित्तत्वसम्भवेनाधाने ब्राह्मणादिनिमित्ते वसन्तादिविधिर्युज्यते। नन्वाधानस्यान्यतोऽप्राप्तत्वात्कथं तस्मिन् ब्राह्मणादिश्रवणस्य निमित्तार्थत्वम्? न च क्रतुविधितस्तदाक्षेप सम्भवति, आधानविधावाहवनीयादिशब्दश्रवणा-

1. कर्मान्तरतया .क, ख, ग, घ, ङ, मु पा.

शङ्क्यम्, "अध्वराणां जनयथः पुरोगाम्" "दर्शमहं पूर्णमास यज्ञ यथा यजै" इत्यादिमन्त्रवर्णेन आधानस्य यज्ञार्थत्वावगमात्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति तस्य यज्ञनिषेधात्, शूद्रस्याध्ययनविध्यभावात्, 'न स्त्रीशूद्रौ वेदमधीयाताम्' इति तस्य विद्याप्रतिषेधाच्चेति षष्ठेऽपशूद्राधिकरणे स्पष्ट भविष्यतीत्यास्ता तावत ।

इति तृतीयमाधानाधिकरणम् ॥ ३ ॥

४

दर्शपूर्णमासौ प्रकृत्यामनन्ति "दाक्षायणयज्ञेन सुवर्णकामो यजेत" "साकम्प्रस्थायीयेन यजेत पशुकाम." "सङ्क्रमयज्ञेन प्रजाकाम " इति । तत्र कर्मान्तरविधिर्गुणविधिर्वा ? इति सशये पूर्वपक्षयति—

**अयनेषु चोदनान्तर संज्ञोपबन्धात् ॥ ५ ॥**

अयनेष्विति दाक्षायणेशब्दैकदेशग्रहणम् । छत्रिन्यायेन साकम्प्रस्थायीयाद्युपलक्षणमिति बहुवचनोपपत्ति. । दाक्षायणयज्ञादिवाक्येषु चोदनान्तरम्—चोद्यते विधीयत इति कर्मणि ल्युट् । वसन्तादिवाक्येष्वाधानमिवात्र कर्मान्तर विधेयमिति यावत् । कुतः ? सज्ञोपबन्धात्—सज्ञान्तरोपबन्धबलात् । एकस्य चानेकसंज्ञानर्थक्येन प्रकृतकर्मणि सज्ञान्तरसमावेशासम्भवात् "अथैष ज्योति." इत्यादाविव कर्मान्तरविधानमेव युक्तम् ॥

अभ्यासादपि कर्मभेद इत्याह—

**अगुणा च कर्मचोदना ॥ ६ ॥**

"दाक्षायणयज्ञेन यजेत" इत्यादिचोदना अगुणा—गुणोपबन्धरहिता, दाक्षायणादिशब्दस्य कस्मिंश्चिद्गुणेऽप्रसिद्धत्वात् । अत "दध्नेन्द्रियकामस्य" इत्यत्रेव फलाय गुणविधानासम्भवात्कर्मचोदनैषा पुनर्विधानम् । ततश्चाभ्यासात्कर्मभेद इत्युक्तं भवति ॥

ननु प्रकृतकर्मणि फलविधानमेवास्त्वित्यत आह—

**समाप्तञ्च फले वाक्यम् ॥ ७ ॥**

दाक्षायणादिवाक्य स्वर्गादिफले समाप्तम् । न हि कर्मोद्देशेन व्रीह्यादिवत्फलस्य विधान सम्भवति । तस्मिन्नुत्पादनीये उपायोपदेश एव पर्यवसन्नं भवति,

भावादेव नाधानमिति वाच्यम्। समानजातीयत्वेन "वसन्ते ब्राह्मणमुपनयीत" इत्यादिवाक्यानामपि पूर्वपक्षे निमित्तार्थत्वेन शूद्रस्याप्युपनयनसत्त्वेन विद्यासत्त्वादिति दिक्। याज्ञिकास्तु ब्राह्मणादिश्रवण निमित्तार्थमेवेति मन्यन्ते। युक्त चैतत्, तथाहि—तैत्तिरीयके "अग्नय आधातव्या" इत्यस्त्याधानविधि.। तथा वाजसनेयकेऽपि सम्भरणकाण्डे द्वितीयाध्याये "घ्नन्ति ह वा एतद्यज्ञम्" इति द्वितीयब्राह्मणे "ते ह देवा अग्न्याधेयं ददृशु" इत्युपक्रम्य "अग्नीनादधीत" इत्याधानविधि श्रूयते। षष्ठस्य तृतीये 'पुनराधेयमोदनवत्' 'द्रव्योत्पत्तेर्वोभयो. स्यात्' इत्यत्र भाष्यवार्तिकतन्त्ररत्नेषु च वक्ष्यते। ततश्चाधानस्य प्राप्तत्वान्न वसन्तादिवाक्येषु तस्य विधान सम्भवति। अतो ब्राह्मणादिश्रवणमन्यतः प्राप्ते आधाने निमित्तसयोगार्थमित्येव युक्तम्। किञ्च क्रतुविधीना क्रयसम्पादितान्यदीयाहवनीयादिभिरपि शान्ताकाङ्क्षत्वात्तैराधानस्य नाक्षेपसम्भव इत्यप्ययुक्तम्, "यदि वान्यस्याग्निषु यजेत यदि वान्योऽस्याग्निषु यजेत अग्नये पथिकृते पुरोडाशमष्टाकपाल निर्वपेत्" इति प्रायश्चित्तविधानादेवान्यदीयाग्नीनामप्राप्तेः अग्नित्यागे प्रायश्चित्तविधानाच्च। "अह त्वदस्मि मदसि त्वमेतत्, ममासि योनिस्तव योनिरस्मि, ममैव सन्वह हव्यान्यग्ने" इत्याधानोत्पन्नाग्न्युपस्थानमन्त्रवर्णेन "अन्तर्वत्नीजन्य जातवेदसम्, अध्वराणा जनयथ. पुरोगाम्, आरोहत दशत शक्वरीर्मम, ऋतेनाग्न आयुषा वर्चसा सह, ज्योग्जीवन्त उत्तरामुत्तरा समाम्, दर्शमहं पूर्णमास यज्ञ यथा यजै" इत्यरण्यादानमन्त्रवर्णेन चात्मीयाग्नीनामेव क्रत्वर्थतावगमाच्च। किञ्च यद्यस्मिन्नेवाधिकरणेऽन्यदीयाग्नीना क्रतुषु व्युदास क्रियेत, तर्हि षष्ठस्य षष्ठे 'विहारस्य प्रभुत्वादनग्नीनामपि स्यात्' इत्यधिकरणस्यानुन्मेष स्यात्। तत्र हि सत्रेष्वनाहिताग्नीनामप्यन्यदीयाग्निभिरधिकार पूर्वपक्षयित्वा स्वीयाधाननिष्पन्नाग्निसाध्यत्वात्कर्मणामन्यदीयाग्निभिस्तस्य नाधिकार इति सिद्धान्तयिष्यते। [1]अस्मिन्नधिकरणेऽन्यदीयाग्नीना क्रतुषु व्युदासे निश्चिते सति तादृशपूर्वपक्षो न कथञ्चिदुन्मेषमर्हति। तस्मादत्र ब्राह्मणादिग्रहण निमित्तार्थमित्येव युक्तम्। पूर्वपक्षसिद्धान्तावपि विपर्ययेण प्रवर्तनीयौ। प्राप्त आधाने वसन्तादिवाक्यानि गुणविधायकान्येव, अग्नीनादधीत" इत्यविशेषेण विहितस्य तस्य सर्ववर्णसाधारणत्वादिति सूत्रयोजनापि सूपपादा। न चैव शूद्रस्याप्याधान

1. तस्मिन्नधिकरणे, ख, ग, घ, मु पा

गुणात्संज्ञोपबन्धः ॥ १० ॥

दर्शपूर्णमासयोरुत्पन्नयोराघ्रत्यादिगुणनिबन्धना सञ्ज्ञेयम्। उत्पत्तिशिष्टैव च सञ्ज्ञा कर्मभेदिका, प्रकृतकर्मण्यसम्भवन्ती च। न चेयमुत्पत्तिशिष्टा नापि प्रकृतकर्मण्यसम्भवन्ती, "अथैष ज्योति" इत्यादिवत्प्रकरणविच्छेदेन प्रक्रमस्याभावात् स्वाश्रितगुणवाचित्वेन प्रकृतकर्मणि सम्भवाच्च।

यदुक्त फलाय कर्मविधान एव फलविधे पर्यवसानात्तत्र[1] कर्मण एव भावार्थाधिकरणन्यायेन फलाय विध्यवश्यम्भावाद्गुणस्याविधेयत्वात्कर्मभेद इति, तत्राह—

समाप्तिरविशिष्टा ॥ ११ ॥

यथा कर्मण फलमिति भावार्थाधिकरणे साधित, तथैव 'फलश्रुतेरत् कर्म स्यात्फलस्य कर्मयोगित्वात्' 'अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत' इतीन्द्रियकर्माधिकरणे गुणादपि फलस्य साधितत्वेन फलाय गुणविधानेऽपि फलविधे पर्यवसानस्याविशिष्टत्वान्न कर्मण पुनर्विधानमत्रेति भाव.। अतो गुणविधि.। अत्र 'अयनेषु' इति बहुवचनोपपत्तये सङ्क्रमवाक्यमप्युदाहृत भाष्ये। तद्यत्रक्वचिच्छाखायामन्वेषणीयम्। तत्रैव च सङ्क्रमशब्दस्य गुणविशेषपरत्वे वाक्यशेषश्चान्वेषणीय । प्रयोजनं पूर्वपक्षे—दाक्षायणयज्ञ कुर्वाणेन दर्शपूर्णमासावपि कर्तव्यौ, सिद्धान्ते तु – न कर्तव्याविति। तदेतदपरे न क्षमन्ते। न हि दर्शपूर्णमासयोः सन्निधौ दाक्षायणयज्ञादिविधिः, येन तत्र गुणविधान स्यात्। कौषीतकब्राह्मणे हि तृतीयेऽध्याये दर्शपूर्णमासावनुक्रम्य चतुर्थेऽध्याये "अनुनिर्वाप्यया वै देवा" इत्यादिना पूर्णमासे दर्शे च संस्थिते वैमृधमादित्यं च याग विधाय "अथातोऽभ्युदिताया" इत्यादिनाभ्युदितेष्टिं विधाय "अथातोऽभ्युद्दृष्टाया" इत्यादिनाभ्युद्दृष्टेष्टिं च विधाय "अथातो दाक्षायणयज्ञस्य दाक्षायणयज्ञेनैष्यत्फाल्गुन्या पौर्णमास्या प्रयुङ्क्ते" इत्यादिना दाक्षायणयज्ञमनुक्रम्य "अथात साकम्प्रस्थायीयस्य" "अथातो मन्थधनस्य" "अथातस्तुरायणस्य" "अथात आग्रयणस्य" "अथातश्चातुर्मास्यानाम्" इत्यादिना बहूनि कर्माण्यनुक्रान्तानि। तत्राथशब्देन प्रकरणविच्छेदात् "अथैष ज्योति" इत्यादिवदुत्पत्तिशिष्टसञ्ज्ञान्तरकत्वात्प्रकृतकर्मणि संज्ञान्तरस्य समावेशासम्भवाच्च कर्मान्तरत्वमेव

1 पर्यवसानादत्र क, ग, घ, ङ, मु. पा.

तस्यानुपादेयत्वात् । ततश्च भावार्थाधिकरणे धात्वर्थस्यैव फलकरणताया निश्चितत्वाद्गुणस्य तत्र विधातुमशक्यत्वात्परिशेषादवश्य कर्म विधातव्यमिति सिद्धः कर्मभेदः ॥

इति प्राप्ते, सिद्धान्तयति—

## विकारो वा प्रकरणात् ॥ ८ ॥

वाशब्द एवार्थे । दर्शपूर्णमासकर्मणि विकारः—अवस्थाविशेष अत्र फलाय विधीयते, न तु कर्मान्तरम् । दर्शपूर्णमासयोरवस्थारूपाद्विकारात्फल न कर्मान्तरादित्युक्तं भवति । कुत ? प्रकरणात्—कर्मान्तरत्वे प्रकरणविच्छेदप्रसङ्गात् । अयमाशयः—लोकतः प्रसिद्धभावेऽपि "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत" इति वाक्यात् "सह कुम्भीभिरभिक्राम जुहोति" इति वाक्याच्च पौर्णमास्यमावास्यावृत्तिलक्षणः कुम्भीभि सहप्रस्थानलक्षणश्च गुणः प्रसिद्धः । ततश्च दक्षस्योत्साहिनो यजमानस्येमे दाक्षा ये ऋत्विजः तेषामयनमावृत्तिः, तत्कर्तृकद्विःप्रयोग इति यावत् । अभेदविवक्षया च यज्ञसामानाधिकरण्यम् । साकम्प्रस्थायः सहप्रस्थानम्, तत्सम्बन्धी साकम्प्रस्थायीय इति चावयवव्युत्पत्त्या वाक्यान्तरप्रसिद्धावृत्तिसहप्रस्थानलक्षणगुणविशिष्टवचनदाक्षायणयज्ञादिशब्देन "लोहितोष्णीषा ऋत्विजः" इत्यत्रेवोपसर्जनगुणस्य विधान नानुपपन्नम् । एवञ्च "दध्नेन्द्रियकामस्य" इत्यत्रेवात्र फलाय गुणविधिरेव, न तूद्भिदादिवत्कर्मान्तरम् ॥

दाक्षायणयज्ञविषये इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ९ ॥

"त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत यदि दाक्षायणयज्ञी स्यात् पञ्चदश वा वर्षाणि यजेत तत्रैवं सम्पद्यते" इति त्रिंशत वर्षाणि दर्शपूर्णमासयाजिनो यावती दर्शपूर्णमासप्रयोगसङ्ख्या तावत्सङ्ख्याकदर्शपूर्णमासप्रयोगसम्पत्तिं पञ्चदशवार्षिकदाक्षायणयज्ञिनो दर्शयति । तदेतत्कर्मान्तरत्वे विरुध्यते । न हि दाक्षायणयज्ञस्य कर्मान्तरत्वे तदीयपञ्चदशवर्षसम्पन्नसङ्ख्यया त्रिंशद्वर्षलब्धसङ्ख्याकदर्शपूर्णमासप्रयोगसम्पत्तिवर्णनमुपपद्यते । अतोऽपि न कर्मान्तरम् ॥

यदुक्त सञ्ज्ञाभेदात्कर्मभेद इति तत्राह—

चिदपि प्रकरणमनारभ्य श्रुते वायव्यादिवाक्ये प्रकरणादाश्रयालाभे सति फलाय गुणविध्यसम्भवादौपासस्कार आलम्भो ब्रीहियवसंस्कारो निर्वापश्च श्वेतत्वचरुलक्षण-गुणविधानायानूद्येते, न तु गुणफलविशिष्टमपूर्वमालम्भन निर्वपण च विधीयते। कुत ? अकर्मशब्दत्वात्-वायव्यादिवाक्ये आलभतिनिर्वपत्योरपूर्वालम्भनिर्वाप-कर्मशब्दत्वाभावात्। विशिष्टविधानापेक्षया गुणविधानायानुवादत्वस्यैव युक्तत्वा-दिति भावः। अकर्मशब्दत्वादित्यस्य वायव्यादिवाक्ये आलभतिनिर्वपत्योर्याग-वाचकत्वादित्यप्यर्थः। ततश्च यागविधिरत्यन्ताप्रसक्त इति भाव । न च प्राप्तालम्भ-निर्वापानुवादेन वायुसूर्यदेवतयो श्वेतत्वचरुगुणयोश्च विधाने वाक्यभेद इति वाच्यम्। न हि 'वायव्यम्' 'सौर्यम्' इति च देवताविधि ; किन्तु "सर्वे ओषधि-वनस्पतयोऽन्नं प्राणभृतोऽन्नादा" इति श्रुतौ प्राणभृता वनस्पतिभोक्तृत्वावगमात्तेन सम्बन्धेन वनस्पतिसम्बन्धिनि प्राणे वायौ देवतात्वोपचारेण ईषायामेव वाय-व्यशब्दोऽनुवादः। 'सौर्यम्' इति च आग्नेयपुरोडाशीयब्रीहियवद्रव्यस्य तेजोदेवत्य-त्वसामान्यादनुवाद इति न वाक्यभेद । अतो दार्शपूर्णमासिकालम्भनिर्वापावनूद्य गुणविधि न च दर्शपूर्णमासकर्मण पुरोडाशाज्यदधिपयोद्रव्यावरुद्धत्वात्तत्र चरुविधानमनुपपन्नमिति वाच्यम्। अत एवानुपपत्त्या चरुशब्दो लक्षणया [1]स्थाली-वचनम्, सप्तम्यर्थे च द्वितीया। स्थाल्या निर्वपेदित्यर्थ । न च 'शूर्पे निर्वपति' इति विरोध., शूर्पे स्थाल्यामित्यविरोधात्। न च केवलगुणविधौ फलपदानन्वय, गुणसम्बन्धस्य फलसम्बन्धस्य च विधौ वाक्यभेदाद् अनारभ्याम्नातत्वेन प्रकरणादा-श्रयलाभाभावेन फलाय गुणविध्यनुपपत्तेश्चेति वाच्यम्। भूतिब्रह्मवर्चसपदयोः "सर्वेभ्य कामेभ्यो दर्शपूर्णमासौ" इति सर्वकामार्थदर्शपूर्णमासफलैकदेशानुवा-दत्वात्। तस्माद्दार्शपूर्णमासिकालम्भनिर्वापानुवादेन श्वेतत्वचरुगुणविधि ॥

तमिम पूर्वपक्ष निराकुर्वन् पूर्वपक्षान्तरमुद्भावयति—

**यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥**

वाशब्द पूर्वपक्षव्यावृत्तौ। दार्शपूर्णमासिकालम्भनिर्वापानुवादेन केवलगुण-विधिरित्ययुक्तम्। किन्त्वालम्भान्तर निर्वपणान्तरञ्च गुणफलविशिष्ट विधीयते। फल-

1. स्थालीनवचन ग.

युक्तम्। नापि दाक्षायणशब्दो दर्शपूर्णमासयोरावृत्तिगुणयोगाद्वर्तितुमर्हति। न हि दक्षस्येमे दाक्षा ऋत्विज, तत्कर्तृकमयनमावृत्तिरित्यवयवव्युत्पादनमुचितं, येन वाक्यान्तरप्रसिद्धगुणपरत्व स्यात्। "दक्षो ह वै पार्वतिरेतेन यज्ञेनेष्ट्वा सर्वान् कामानवाप" "स वै दक्षो नाम तद्यदनेन सोऽयजत तस्माद्दाक्षायणयज्ञ इत्याख्या" इति कौषीतकवाजसनेयकयोरन्यथैव निर्वचनावगते.। किञ्च दाक्षायणशब्दस्यावृत्तिगुणपरत्वे तन्मात्रस्य फलाय विधानापत्तौ 'पौर्णमास्यामैन्द्र सानाय्यम्' 'मैत्रावरुण्यामिक्षयामावास्याया यजेत' इत्यादिगुणाना फलार्थत्वानुपपत्ति। अतो दाक्षायणशब्दस्य गुणविधिपरत्वासम्भवात्कर्मान्तरत्वमेव युक्तम्। एव शतपथब्राह्मणेऽपि हव्यवाहकाण्डे दर्शपूर्णमासावनुक्रम्य सम्भरणकाण्डे आधान पुनराधानमग्निहोत्रं चानुक्रम्य दाक्षायणयज्ञोऽनुक्रान्त.। तथा च प्रकरणविच्छेदात्कर्मान्तरत्वमेव युक्तम्। यद्यपि तैत्तिरीयादिशाखाया दर्शपूणमासप्रकरणे दाक्षायणादिवाक्य श्रुतम्, तथापि दाक्षायणादिशब्दस्य गुणपरत्वमुक्तरीत्यानुपपन्नमिति कर्मान्तरत्वमेव युक्तम्। अधिकरणन्तु गवामयनप्रकरणस्थोत्सर्गिणामयनादिविषय योज्यमित्यास्ता तावत्॥

इति चतुर्थं दाक्षायणयज्ञाधिकरणम्॥ ४॥

५

दर्शपूर्णमासयो. श्रूयते—"ईषामालभते" "चतुरो मुष्टीन्निर्वपति" इति। ईषा शकटावयवदारुविशेष। आलम्भन स्पर्शनम्। निर्वपण पृथक्करणम्। मुष्टीन् मुष्टिपरिमितान्व्रीहीन्। तथा कस्यचिदपि प्रकरणमनारभ्य श्रूयते "वायव्यं श्वेतमालभेत भूतिकाम" "सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकाम" इति। किमत्र वायव्यवाक्ये सौर्यवाक्ये च दार्शपूर्णमासिकालम्भनिर्वापानुवादेन श्वेतत्व चरुश्च गुणो विधीयते? उत कर्मान्तरभूतौ भूतिब्रह्मवर्चसफलौ वायुसूर्यदेवत्यश्वेतत्वचरुगुणकावालम्भनिर्वापौ यावदुक्तौ विधीयेते? किं वा उक्तगुणफलविशिष्टौ यागौ विधीयेते? इति संशये पूर्वपक्षयति—

**संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्॥ १२॥**

चशब्दो वैषम्ये। दर्शपूर्णमासप्रकरणपठितेषु दाक्षायणादिवाक्येषु कर्मण सन्निहितत्वात्तदाश्रित्य फलाय गुणविधिरिति युक्तम्। इह त अप्रकरणे—कस्य-

प्रतीतः। त्यज्यमानहविरुद्देश्यत्वञ्च देवतात्वम्। तच्च सूर्याद्युद्देशेन द्रव्यत्यागादेव भवति, नान्यथा। एवञ्च वायव्यादिवाक्येषु श्रुतप्राय एव याग इति भवति तद्विधिः। तत्र द्रव्यदेवतासंयोग एव यागस्याक्षेपकः। फलसंयोगो भोक्तृसंयोगश्च फलस्य तत्कामनायाश्चाभावे स्वकीयद्रव्यं यजमानः किमिति त्यजेदिति यागस्य निर्वाहकतयोपात्त इति न तत्राभिनिवेष्टव्यम्। अत्र 'आलभेत' 'निर्वपेत्' इति धात्वर्थो न विवक्षितः। 'श्वेतद्रव्यकवायुदेवताकयागेन भूतिं कुर्यात्' 'चरुद्रव्यकसूर्यदेवताकयागेन ब्रह्मवर्चसं कुर्यात्' इत्यर्थः। धातुभ्यां तु चोदकादर्थाद्वा प्राप्तं स्पर्शनं पृथक्करणं चानूद्यते। न चास्मिन् पक्षे आलभतेर्निर्वपतेश्चानर्थक्यम्, पूर्वपक्षे तु देवतापदस्येति को विशेष इति वाच्यम्, विधिप्रत्ययोगार्थं धातूपादानस्यावश्यम्भावेन सार्थक्यात्॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥१७॥

"सोमारौद्रं चरुं निर्वपेत्" इति प्रकृत्य "परिश्रिते याजयेत्" इति परिश्रयणविधिपरे वाक्ये यागानुवाददर्शनादपि लिङ्गाद्द्रव्यदेवतासम्बन्धस्य यागाक्षेपकत्वमनुमिमीमहे इति॥

इति पञ्चममीषालम्भाधिकरणम्॥५॥

६

"पयसाग्निहोत्रं जुहोति" इति विहितस्य पयसो दोहनविषये "वत्समालभेत" "वत्समुपसृजति" "प्राचीमावृत्य गां दोग्धि" "दुह्यमानां गामनुमन्त्रयते" इत्यादि श्रुतम्। उपसृजति मातृसमीपं प्रापयति। तत्र "वत्समालभेत" इति किं यागविधिः? उत संस्पर्शनमात्रविधिः? इति संशयः। तत्र "वायव्यं श्वेतमालभेत" इत्यत्रेव यागविधिरिति ब्रूमः। न च देवतासंयोगाभावात्कथमिह यागविधिरिति वाच्यम्। वत्सालम्भोऽयं यजिमत्कर्म भवितुमर्हति, प्राणिद्रव्यकालम्भत्वात्, वायव्यवाक्यावगतालम्भवदित्यनुमानेन यागविधित्वाध्यवसाये सति प्राणिद्रव्यकत्वसामान्येनाग्नीषोमीयविध्यन्तप्राप्त्या देवतालाभस्योपपादयितुं शक्यत्वादिति प्राप्ते, सिद्धान्तयति—

पदयोर्नित्यवच्छ्रुतयोर्देवतापदयोश्च सम्भवत्प्रयोजनकयो पाक्षिकानर्थकानुवादत्वस्यान्याय्यत्वात्। किञ्च लोकेऽप्यालम्भनिर्वापयो सत्त्वाद्दार्शपूर्णमासिकयोरेव तयो. कथ प्रतीतिः। न चानारभ्याधीतत्वेन प्रकृतिगामित्वात्प्रतीतिरिति वाच्यम्, अव्यभिचरितक्रतुसम्बन्धिष्वेवानारभ्याधीताना प्रकृतिगामित्वाभ्युपगमात्, अन्यथा "तस्मात्सुवर्णं हिरण्य भार्यम्" इत्यादिविधेरपि प्रकृतिगामित्वापातात्। एतेन वैदिककर्मत्वसामान्याद्वैदिककर्मसम्बन्ध्यालम्भाद्यनुवादेन गुणविधिरित्यपि निरस्तम्, हिरण्यभरणादिष्वतिप्रसङ्गात्। ननु गुणफलविशिष्टालम्भन निर्वपणञ्च कर्मान्तरं चेत्किंप्रकृतिकं तदित्यत आह—यावदुक्तमिति। दर्विहोमादिवदपूर्वमिदम्। ततश्च यत्किञ्चिच्छ्वेतद्रव्य वायवे सङ्कल्प्य भूतिकामेन स्प्रष्टव्यम्, चरुश्च सूर्याय सङ्कल्प्य ब्रह्मवर्चसकामेन निर्वप्तव्य इति लभ्यते। ननु द्रव्यदेवतासम्बन्धाद्यागः कुतोऽत्र न कल्प्यत इत्यत आह—कर्मण' श्रुतिमूलत्वादिति। कर्मणो यागस्य शब्दैकगम्यत्वाद्द्रव्यदेवतासम्बन्धमात्रेण कल्पयितुमशक्यत्वादित्यर्थ । न चैवम् "आग्नेयोऽष्टाकपालो भवति" इत्यत्र कथ यागकल्पनमिति वाच्यम्, वैषम्यात्। आग्नेयादिवाक्ये हि पुरुषव्यापार विना विध्यनुपपत्ते पुरुषव्यापारापेक्षाया पदान्तरार्थद्रव्यदेवतासम्बन्धोपस्थितयागरूप एव कल्पयितु' न्याय्य इत्यश्रुतस्यापि यागस्य विधिर्युज्यते। इह त्वालम्भनिर्वापयो पुरुषव्यापारयो श्रुतत्वात्तत एव विध्युपपत्तेरश्रुतयागविधिर्नाभ्युपेय । तस्माद्यावदुक्तावालम्भनिर्वापौ गुणफलविशिष्टौ वायव्यसौर्यवाक्ययोर्विधीयेते इति पूर्व पक्ष ॥

सिद्धान्तयति—

**यजिस्तु[1] द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥१४॥**

तुशब्दोऽवधारणे। द्रव्यग्रहण देवताया अप्युपलक्षणम्। वायव्यादिवाक्ये यजिरेव विधीयते, नालम्भनादि। कुत ? द्रव्यफलभोक्तृसयोगात्—'वायव्यम्' इत्यादितद्धितान्तशब्देन द्रव्यदेवतासम्बन्धस्य 'भूतिकाम' इत्यादिपदेन फलसम्बन्धस्य तत्कामभोक्तृसम्बन्धस्य चावगमादित्यर्थ । ननु द्रव्यदेवतादिसम्बन्धाना कथ यागकल्पकत्वमित्यत आह—एतेषामिति । द्रव्यदेवताफलभोक्तृणा कर्मणा यागेन अविनाभावात्। 'वायव्यम्' इति देवतातद्धितेन हि देवतात्वेन वायुसम्बन्धो द्रव्यस्य

---

1. यजतिस्तु

न श्रुत, तथापि "बृहस्पतेरन्नम्" इति सम्बन्धश्रवणाद्देवतात्व कल्प्यते। यदि हि नैवारचरौ बृहस्पतिर्देवता न भवेत्तदा कथ बृहस्पतेर्नीवारा अन्नं भवेयु । तैत्तिरीयके "बार्हस्पत्यो भवति" इति तद्धितेनापि स्पष्टमेव चरोर्देवतासम्बन्ध श्रुत । किञ्च उपधानमात्रविधौ चरोरुपधानसस्कृतस्य भूतभाव्युपयोगाभावेन सस्कार्यत्वरूपकर्मत्वासम्भवाद्द्वितीयाश्रुतिरनुपपन्ना स्यात्। यागविधिपक्षे तु तस्य यागस्यैकदेवताकत्वौषधद्रव्यकत्वादिसामान्येनाग्नेयविध्यन्तप्राप्तौ चोदकप्राप्तस्विष्टकृदादिप्रतिपत्तिबाधेनोपधान चरो प्रतिपत्तित्वेन विधीयत इति न द्वितीयानुपपत्ति । तस्मादुपधानप्रतिपत्तिकर्मयुक्तो बृहस्पतिदेवत्यचरुद्रव्यकयागो विधीयत इति प्राप्ते, सिद्धान्तयति—

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

अर्थं कार्यमुपधानम्। तद्वाचकशब्देन उपदधातिना चरु. [1]सयुक्त । अत. सः तदर्थं–उपधानरूपकार्यार्थं एव भवति। उपधानसस्कार्यस्यापि चरोरुपधानार्थत्वमार्थिकसाधनत्वाभिप्रायम्[2], चरोरुपधानमात्रस्यैव श्रवणात्। तन्मात्र यावदुक्तं विधीयते, न तु याग इत्युक्तं भवति। ननु वाक्यशेषतो देवतावगमे सति याग कुतो न कल्प्यत इत्यत आह—श्रुतिसयोगादिति। वाक्यशेषे तावन्नीवारेष्वेव बृहस्पति. श्रुत', न चरौ। स च स्वरूपेणैव, न तु देवतात्वेन। तत्र यदि विध्युद्देशस्य देवताकाङ्क्षा स्यात्तदा तद्बलान्नीवारशब्दस्य तद्विकारलक्षणामाश्रित्याश्रुतश्चरुसम्बन्धो देवतात्वञ्च बृहस्पते कल्प्यते। इह च विध्युद्देशस्योपधानमात्रविधायकत्वेनोपपन्नतया न देवतापेक्षास्ति, चरोरुपधानस्य च देवताविरहात्। अत. कथ वाक्यशेषाच्चरोर्देवतासम्बन्धलाभ.। चरूपधानन्तु प्रकरणादग्न्यङ्गम्। तदङ्गत्व चाहवनीयाधारस्थण्डिलनिष्पत्त्यर्थतया वाच्यम्। उपधानस्य स्थण्डिलनिष्पत्त्यर्थत्वमुपधेयचरुद्वारैव, न साक्षात्। ततश्चोपधानलक्षणसस्कारविधिबलादेवोपधेयस्य चरोरप्युपधानसाध्यस्थण्डिलनिष्पत्तौ विनियोगकल्पनादुपधानविधेरयमर्थः सम्पद्यते—'उपधानसस्कृतेन चरुणा स्थण्डिल निष्पादयेत्' इति। एवञ्चानेनैव वचनेन चरोरपि विनियोगात्संस्कार्यत्व सम्भवतीति द्वितीयाप्युपपद्यते। "बार्हस्पत्यो भवति" इति वाक्यमपि प्राग्दीव्यतीयेष्वर्थेष्वपत्यादिषु विहितण्यप्रत्ययान्तत्वेन विशिष्य देवतार्थत्वे विध्युद्देशा-

1. सयुक्त तदर्थं अत. क, ग, मु, मा. 2. अभिप्रायगर्भम्. ख, ग.

## विशये प्रायदर्शनात् ॥१६॥

यागविधिर्वा स्पर्शनमात्रविधिर्वेति [1]संशये स्पर्शनमात्रविधिरित्येव युक्तम्। कुतः? प्रायदर्शनात्—प्रायेषु बहुषु उपसर्जनावर्तनानुमन्त्रणादियावदुक्तकर्मस्वालम्भनस्य पाठात्, सामान्यतो दृष्टानुमानस्य च वैदिकार्थागोचरत्वात्, 'अध्वर्युमालभेत' इत्यादौ प्राणिद्रव्यकर्मत्वेऽपि स्पर्शनमात्राभिधानेन व्यभिचाराच्चात्रालभते स्पर्शनमात्रार्थकत्वम्। न चैवं सति "वत्समुपसृजति" इत्युपसर्जनविधानादेवार्थसिद्धत्वादालम्भनविधिर्व्यर्थ इति वाच्यम्। न ह्यत्र स्पर्शनमात्रं विधीयते येन तद्वैयर्थ्यं स्यात्, किन्तु चाटूकरणात्मकस्पर्शनविशेषलक्षणसंस्कारः। स च नावश्यं प्राप्तः। गोप्रस्नवनातिशये चोपयुज्यत इति न वैयर्थ्यम्॥

इतोऽप्येवमित्याह—

## अर्थवादोपपत्तेश्च ॥१७॥

"वत्सनिकान्ता हि पशवः" इति धेनुप्रस्नवनार्थवत्सोपचारात्मकालम्भविधेरर्थवादः। वत्सा नितरां कान्ताः प्रिया येषामिति विग्रहः। स चायमर्थवादो वत्सस्पर्शनमात्रविधावेवोपपद्यते न तु यागविधौ, यागे सति तस्य संज्ञपनप्रसङ्गात्। तथा च यस्मादसौ मातुः प्रियो वत्सस्तस्मात्संज्ञपनार्थमालभ्य इत्यसङ्गतं स्यात्, मारणे अप्रीतिप्रसङ्गात्। चाटूकरणात्मकस्पर्शनविधौ तु वत्सप्रिया माता चाटूकृतेन वत्सेन संयुज्यमाना स्नेहात्प्रस्नविष्यतीत्युपपद्यते। तस्मादत्र स्पर्शनमात्रविधिः, न यागविधिः। प्रयोजनं पूर्वपक्षे—अग्निहोत्राङ्गतयाग्नीषोमदेवताकवत्सद्रव्यकयागोऽनुष्ठेयः, सिद्धान्ते तु—वत्सचाटूकरणमात्रमिति॥

इति षष्ठं विशयाधिकरणम् ॥६॥

७

अग्नौ श्रूयते "चरुमुपदधाति" "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इति। तत्र किं चरोरुपधानमात्रं यावदुक्तं विधीयते? उतोपधानयुक्तो यागो विधीयते? इति संशयः। तत्र "वत्समालभेत" इत्यत्र देवतासंयोगाभावेन यागविध्यसम्भवेऽपि प्रकृते वाक्यशेषतो देवतालाभाद्यागविधिरस्तु। यद्यपि वाक्यशेषे देवतात्वेन बृहस्पतेश्चरुसम्बन्धो

1. विशये. न, घ.

## पात्नीवते तु [1]पूर्ववत्त्वादपच्छेदः ॥ १९ ॥

तुशब्दः पूर्वपक्षव्यावृत्तौ । पात्नीवते "पर्यग्निकृतं पात्नीवतम्" इति वाक्ये कर्मान्तरविधिर्न भवति, किन्तु पूर्ववत्त्वात्—प्रत्यभिज्ञायमानपूर्वकर्मवत्त्वात् । पूर्वकर्मण्येव पर्यग्निकरणान्ताङ्गकलापविधानेनोत्तराङ्गानामपच्छेदः—निवृत्तिर्भवति । अयमाशयः—त्वाष्ट्रवाक्ये तावत् 'त्वाष्ट्रम्' 'पात्नीवतम्' इति च तद्धितान्तपदं प्रत्येकमेव देवतात्वं गमयति, न त्वत्राग्नीषोमीयादिवत्समासोत्पन्नेनैकेन तद्धितेन त्वष्टुः पत्नीवतश्च देवतात्वावगमः, येन व्यासक्तं देवतात्वं स्यात् । न च प्रत्येकं देवतात्वे विकल्पः स्यादिति वाच्यम्, एकेनैव वाक्येन युगपदुभयोर्विहितत्वेन एकक्रियावशीकृततया अन्योन्यनियमलाभात् । न हि व्रीहियवादिविधाविवात्र वाक्यभेदोऽस्ति । ततश्च यथा देवदत्तयज्ञदत्तयोर्माता देवदत्तमातेति यज्ञदत्तमातेति च पृथग्व्यपदिश्यते, एवं त्वष्टृपत्नीवतोर्यागः 'पात्नीवतः' इत्यपि पृथग्व्यपदेशमर्हतीति पर्यग्निकृतवाक्ये पात्नीवतशब्देन त्वाष्ट्रवाक्यविहितयागप्रत्यभिज्ञानसम्भवान्न कर्मान्तरविधानं युक्तमाश्रयितुम् । ततश्च 'पात्नीवतम्' इत्यस्यानुवादत्वात् 'उत्सृजति' इति विधिप्रत्ययस्य 'पर्यग्निकृतम्' इत्यत्रैवान्वयः । तथा च 'पात्नीवतम्' इत्यनेन [2]उत्सृजिना च प्रकृत्यंशेन पात्नीवतयागमनूद्य प्रत्ययांशेन पर्यग्निकरणान्ताङ्गकलापश्चोदकप्राप्तोऽप्युत्तराङ्गपरिसङ्ख्यानाय विधीयते । अप्राप्तपरिसङ्ख्यात्वाच्च न त्रैदोष्यम् । चोदकप्रवृत्तेः प्रागेव हि पर्यग्निकरणान्ताङ्गकलापविधिः प्रवर्तते । ततश्च तेनैव पर्यग्निकरणान्ताङ्गकलापेन शान्ताकाङ्क्षत्वात्पात्नीवतयागोऽयं नातिदेशमपेक्षते । यथा गृहमेधीययागः "आज्यभागौ यजति" इति चोदकात्प्रागेव प्रवृत्तविधिना क्लृप्ताज्यभागाभ्यां निराकाङ्क्षो नातिदेशमपेक्षते तद्वत् । एवञ्चोत्तराङ्गकलापस्यार्थादेवाप्राप्तेस्तन्निवृत्तौ विधेर्व्यापाराभावान्न त्रैदोष्यम् । न चैवमपि पर्यग्निकरणमात्रविधिरेव स्यात्, न तु तदन्ताङ्गकलापविधिः "शंय्वन्ता प्रायणीया सन्तिष्ठते" इत्यादिवदन्तशब्दाभावादिति वाच्यम् । अन्तशब्दाभावेऽपि पर्यग्निकृतशब्दबलादेव तदन्ताङ्गानां प्रतीतेः । पर्यग्निकृतशब्दो हि भूतकालार्थकक्तप्रत्ययान्तः कर्मसाधनः प्राकृतपर्यग्निकरणावस्थापन्नतावचनः । न हि पूर्वाङ्गेष्वकृतेष्वियमवस्था सम्पद्यत इति तदन्ततालाभः । न च पात्नीवतविशिष्टोत्सर्गानुवादेन

---

1. पूर्वत्वादवच्छेद. 2 उत्सृजतिना. ग.

काङ्क्षालक्षणप्रमाणाभावाद्यथाकथञ्चिन्नीयमानमपि न दुष्यति। तस्मादुपधानमात्रविधिरिति॥

इति सप्तमं चरूपधानाधिकरणम्॥ ७॥

८

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्याम्नातं "पर्यग्निकृतं पात्नीवतमुत्सृजति" इति। तत्र संशयः—किमिह यागान्तरविधिः? उत त्वाष्ट्रवाक्यविहिते कर्मणि पर्यग्निकरणान्ताङ्गकलापविधिः? इति। तत्र "चरुमुपदधाति" इत्यत्र "बृहस्पतेर्वा एतदन्नम्" इति वाक्यशेषस्य देवतासमर्पकत्वाभावेन यागान्तरविध्यसम्भवेऽपि प्रकृते विधावेव 'पात्नीवतम्' इति तद्धितान्तेन देवतासम्बन्धावगमाद्यागान्तरविधिः सम्भवति। 'उत्सृजति' इति प्रत्ययप्रतिपाद्यविधेर्हि 'पात्नीवतम्' इत्यत्रैव सन्निधानादन्वयः, न तु 'पर्यग्निकृतम्' इत्यत्र। ततश्च वायव्यवाक्यवद्द्रव्यदेवतासम्बन्धाक्षिप्तयागविधिः। प्रकृत्यंश उत्पूर्वकसृजिधातुर्यागविधिबलादुत्सर्गस्य प्राप्ते प्रत्ययानुग्रहमात्रार्थः। पर्यग्निकृतशब्दश्च चोदकप्राप्तपर्यग्निकरणानुवादः। एवञ्च 'पात्नीवतयागेन कुर्यात्' इत्येव वाक्यार्थ इति न वाक्यभेदः। न च त्वाष्ट्रवाक्ये पात्नीवतशब्दादुपस्थितस्यैव यागस्य पर्यग्निकृतवाक्ये पात्नीवतशब्देन प्रत्यभिज्ञानात्कथं यागान्तरविधिरिति वाच्यम्, त्वाष्ट्रवाक्ये हि पत्नीवांस्त्वष्टा देवतात्वेन निर्दिश्यते, अन्यथा त्वष्टृपदवैयर्थ्यात्। पर्यग्निकृतवाक्ये तु पत्नीवानेव निर्दिश्यत इति कथं तेन त्वाष्ट्रवाक्यविहितयागप्रत्यभिज्ञासम्भवः। किञ्च त्वाष्ट्रवाक्यविहिते कर्मणि पर्यग्निकृतवाक्येन किं विधीयते? किं पर्यग्निकरणम्? उतोत्सर्गः? अथवा पर्यग्निकृत्वोत्सृजतीति क्रमः? किं वा पर्यग्निकरणान्ताङ्गकलापः? नाद्यः, चोदकत एव पर्यग्निकरणस्य प्राप्तत्वात्। न द्वितीयः, देवतोद्देश्यकद्रव्यत्यागात्मकयागविधायकत्वाष्ट्रवाक्यादेव यागरूपस्योत्सर्गस्य सिद्धत्वात्पर्यग्निकृतशब्दवैयर्थ्याच्च पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ च विशिष्टस्यैवोद्देश्यत्वापत्त्या वाक्यभेदात्। न तृतीयः, पर्यग्निकृत्वोत्सृजतीति क्रमस्यापि चोदकत एव प्राप्तेः। न चतुर्थः, पर्यग्निकरणान्ताङ्गकलापस्यापि चोदकत एव प्राप्तेः। उत्तराङ्गपरिसङ्ख्याने च त्रैदोष्यापत्तेः। एवञ्च पूर्वकर्मणि विधेयालाभादपि 'गुणश्चापूर्वसंयोगे' इति गुणाधिकरणन्यायेन (फा) यागान्तरविधिपरमेव पर्यग्निकृतवाक्यमिति प्राप्ते, सिद्धान्तयति—

कैवल्यम्[1] ? अद्रव्यत्वात्—द्रव्यदेवताराहित्यात्। अयमाशय —संस्कारकर्मणो नामानर्हत्वे ह्युभयत्रापि यागविधिर्भवेत्। न तु तदस्ति, सामानाधिकरण्यत प्रतीयमानस्य ग्रहणसंस्कारनामधेयत्वस्य दृष्टप्रयोजनाभावमात्रेण परित्यक्तुमनुचितत्वात् तन्नामकतया ज्ञानमभ्युदयकारीति कल्पयितुं शक्यत्वाद् अंशुवाक्ये यजेरश्रुतत्वेन अदाभ्यवाक्ये यजेर्व्यवहितत्वेन तन्नामधेयत्वासम्भवाच्च। तस्मादंश्वदाभ्यनामकग्रहणसंस्कारावेवात्र विधीयेते, न तु यागान्तरे। एवञ्चांशुवाक्ये प्रथम तत्सञ्ज्ञककर्ममात्रविधौ तस्य च ज्योतिष्टोमविकृतित्वकल्पनया ततो रूपलाभे सति पश्चाद्यागत्वाध्यवसाय, अदाभ्यवाक्येऽपि प्रथमं सामान्येन देवतात्वावगमे पश्चात्तद्विशेषाध्यवसाय इति क्लेशोऽपि नानुभवितव्यो भवति। आघारवाक्ये तु मन्त्रवर्णाद्वाक्यशेषाच्च द्रव्यदेवतालाभाद्युक्त यागरूपत्वम्। न च ग्राह्यविशेषापरिज्ञानात्प्रयोजनाभावाच्च ग्रहणविधिरप्यनुपपन्न इति वाच्यम्, ज्योतिष्टोमाव्यभिचरितगृह्णातिशब्दोपस्थितज्योतिष्टोमाङ्गत्वे सति तत्रापि सन्निपातित्वे सत्यारादुपकारकत्वस्यान्याय्यतया सन्निपातित्वस्य च सोमसंस्कारद्वारैव वक्तव्यत्वेन संस्कार्यसोमाख्यग्राह्यद्रव्यलाभात्क्रतूपकारलक्षणप्रयोजनलाभाच्च। ननु "आज्य गृह्णाति" "चतुर्जुह्वां गृह्णाति" इति दर्शपूर्णमासयोरपि गृह्णातेर्दर्शनान्न ततो ज्योतिष्टोमाङ्गतालाभ इति वाच्यम्। तैत्तिरीयके षष्ठकाण्डे षष्ठप्रपाठके "देवा वै यद्यज्ञेऽकुर्वत" "देवा वै प्रबाहुग्ग्रहानगृह्णत" इत्यनुवाकयोः ज्योतिष्टोमप्रकरणगतयो पुनराम्नातत्वेन ज्योतिष्टोमाङ्गतासम्भवाद्दाभ्यवाक्ये 'यजते' इति यजि प्रकरणप्राप्तज्योतिष्टोमस्यानुवाद। एवञ्च यजिना प्रकृतयागमनूद्य तदुत्तरप्रत्ययेन रेवतीवारवन्तीयपूर्वपक्षन्यायेन (वा) गृहीत्वाशब्दार्थसंक्रान्तविधिशक्तिना ग्रहणसंस्कारविधिरिति स्थितम्।

अत्रेद वक्तव्यम्—तैत्तिरीयक अदाभ्यमधिकृत्य "उपनद्धस्य गृह्णाति" "अनभिषुतस्य गृह्णाति" इति द्रव्यं श्रुतम्। "योऽदाभ्यं गृहीत्वा सोमाय यजते" इत्यत्र सोमस्य देवतात्व चतुर्थ्यावगतमिति द्रव्यदेवतासम्बन्धाक्षिप्तयागविधि. सम्भवति। तथांशुविधिमधिकृत्य तैत्तिरीयके "सकृदभिषुतस्य गृह्णाति" इति द्रव्य श्रुतम्। तथा वामदेव्यमिति साम। "तद्वा अस्यायतन मनसा गायमानो गृह्णाति" इति विहितवामदेव्यसमाधारभूतया "कया नश्चित्र." इत्यृचा प्राजापत्यया

---

१. नास्ति ग.

तदन्ताङ्गकलापविधौ विशिष्टोद्देशाद्वाक्यभेदः, उत्सर्गमात्रानुवादेन तद्विधावतिप्रसङ्ग इति वाच्यम्। उत्सृजतिमात्रस्यैवोद्देश्यसमर्पकत्वे विशिष्टोद्देशदोपानवकाशात्, सन्निधानाच्च प्रकृतस्यैवोद्देश इति नातिप्रसङ्गः। यद्यपि नवमोपान्त्याधिकरणे "पर्यग्निकृतानारण्यानुत्सृजति" इत्यत्र प्रज्ञाते[1] प्रकृतकर्मणि पर्यग्निकरणान्ताङ्गकलापविधिः सिद्धान्तयिष्यते, तथापि प्रत्यभिज्ञास्ति नास्तीत्यधिकविचारार्थमिदमधिकरणमित्यपौनरुक्त्यमिति ॥

इत्यष्टम पात्नीवताधिकरणम् ॥८॥

९

"योऽदाभ्यं गृहीत्वा सोमाय यजते" इति "योऽशुं गृह्णाति" इति चानारभ्य श्रुतम्। तत्र संशयः—किं ज्योतिष्टोमे ग्रहणविधिः ? यागान्तरविधिर्वा ? इति। तत्र "पर्यग्निकृतं पात्नीवतम्" इति वाक्ये पात्नीवतशब्देन पूर्वकर्मणः प्रत्यभिज्ञानात्तत्र गुणविधावप्यनारभ्याधीतत्वेनात्र प्रत्यभिज्ञाविरहाद्यागान्तरविधिरेव स्यात्। किञ्च सङ्कल्पाद्युपयोगाभावेनांश्वदाभ्यशब्दयोर्ग्रहणसंस्कारनामधेयत्वानर्हतया ग्रहणव्यतिरिक्तमेवंसंज्ञकं यागान्तरमेव वाक्यद्वयेऽपि विधेयम्। यद्यप्यदाभ्यवाक्ये 'यजते' इत्येव श्रुतं, न तु रूपम्, अंशुवाक्ये तु 'गृह्णाति' इत्येव श्रुतं, न तु यजिरपि, तथापि ज्योतिष्टोमे "ऐन्द्रवायवं गृह्णाति" इत्यादाविव गृह्णातिशब्ददर्शनादंशुवाक्येऽपि विधेयं कर्म ज्योतिष्टोमप्रकृतिकमिति निश्चिते सति तदीयद्रव्यदेवतालाभाद्यागत्वाध्यवसायः। यथा अघारवाक्ये आघारसंज्ञककर्ममात्रे विहिते "इत इन्द्र ऊर्ध्वो अध्वरः" इति मन्त्रवर्णात् "चतुर्गृहीतं वा एतत्" इति वाक्यशेपाच्च द्रव्यदेवतालाभाद्यागत्वाध्यवसायः, तद्वदेव अदाभ्यवाक्येऽपि 'यजते' इति सामान्यरूपेण देवतावगमेऽपि इन्द्रवायुत्वादिविशेषाध्यवसायः। गृह्णातिस्तु चोदकप्राप्तानुवादः। तस्मादंश्वदाभ्यसंज्ञकयागान्तरयोर्विधिरिति प्राप्ते, सिद्धान्तयति —

**अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥२०॥**

द्रव्यशब्देन द्रव्यदेवतासम्बन्धो लक्ष्यते। केवले—अरूपे गृह्णातौ श्रूयमाणे कर्मणि—ज्योतिष्टोमस्य अङ्गभूतं ग्रहणं विधेयं स्यात्। अदाभ्यनामकोऽंशुनामकश्च ग्रहणसंस्कार एवात्र विधीयते, न तु यागान्तरविधानमित्युक्तं भवति। कुतः

---

1. प्रतिज्ञाते. ग.

कत्वात्। यथा चैतत्तथा आघाराग्निहोत्राधिकरणे निरूपितमस्माभि । तस्मात् "यत्पृश्नयो गृह्यन्ते" इति वाक्यमिहोदाहरणम्। "सन्तृप्त राजानम्" इत्यव्यभिचरित[1]ज्यौतिष्टौमिकाङ्गसंवलनाज्ज्योतिष्टोमाङ्गता पृश्निग्रहाणाम्। एवम् "प्राणग्रहान् गृह्णाति" इत्यप्युदाहरणम्। तत्र हि 'सन्तृप्तस्य राज्ञो नवनवाग्रूतयंपुरोभुव इति प्राणभृन्मन्त्रै प्रतिदिश व्यूह्य प्राचीदिशामित्यपानभृन्मन्त्रै प्रत्यूहति' इति प्रयोग.। तत्र "प्रायणीये चोदनीये च गृह्यन्ते" "दशमेऽहन्गृह्यन्ते" इति च वचनात्प्राणग्रहाणां द्वादशाहिकप्रायणीयादिसुत्याविशेषार्थता। "ज्योतिष्टोमे वा गृह्णीयाद्गदो हैव भवति" इति शाखान्तरम्। बोधायनादिसूत्रेऽप्येवमित्यास्ता तावत्॥

इति नवममश्वदाभ्याधिकरणम्॥ ९॥

१०

"य एव विद्वानग्निं चिनुते" इत्यत्र किं यावदुक्तमग्निसंस्कारात्मकं चयनं विधीयते? उताग्निसञ्ज्ञकयागान्तरं विधीयते? कि वा ज्योतिष्टोमादौ गुणविधिः? इति संशये, पूर्वपक्षयति—

## अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत॥ २१॥

तु शब्द' अंश्वदाभ्ययोर्वैषम्य द्योतयन् प्रथमतृतीयौ पक्षौ निराचष्टे।अंश्वदाभ्ययोरनारभ्यपठितयोरपि प्रकरणे पुनः पाठाज्ज्योतिष्टोमाङ्गता। न चेदं वाक्यं ज्योतिष्टोमप्रकरणे पठ्यते। अतो न तत्र गुणविधि.। वैयर्थ्याच्च न स्वतन्त्रसंस्कारविधिः। न च "ऋध्नोत्येव" इत्यार्थवादिकफलश्रवणात्स्वातन्त्र्यं शङ्क्यम्, फलवत्त्वे संस्कारकर्मत्वस्यैवानुपपत्ते। तदेव तुशब्देन प्रथमतृतीयपक्षौ निराकृत्य द्वितीयपक्षमवलम्बते—अग्नि क्रतुशब्द इति। अग्नि—अग्निशब्द क्रतुशब्द—यागवाचक. प्रतीयेत, "अग्निं चिनुते" इत्यस्य हि अग्निसञ्ज्ञकयागं कुर्यादित्यर्थं। एवञ्च "अग्नि चिनुते" इत्यस्य चयनविधायकत्वाभावात् "इष्टकाभिरग्निं चिनोति" इति वाक्यमिष्टकाविशिष्टचयनविधायक सम्पद्यते। तच्च प्रकरणात् "अग्निं चिनुते" इति वाक्यविहितयागाङ्गमिति तद्वाक्यप्राप्तचयनस्य चिञ्धातुरनुवाद.। ननु यजिरत्र न श्रूयते। तथा च यजिसामानाधिकरण्याभावादग्निशब्दस्य कथ यागनामत्वमित्यत आह—लिङ्ग-

1. ज्योतिष्टोम. क, ग, ङ, मु पा.

"उपयाम गृहीतोऽसि प्रजापतये त्वेति गृह्णाति" "प्रजापतये त्वा स्वाहेति जुहोति" इत्यादिबोधायनादिपठितमन्त्रवर्णेन च देवता लभ्यत इति तत्रापि यागविधिरेव युक्त•। तथा च प्रस्तरप्रहरणवत्स्विष्टकृदाघारवद्वाश्वदाभ्ययोरपि ग्रहणसंस्काररूपत्वं यागरूपत्व च युक्तम्। अधिकरणस्य तु "यत्पृभयो गृह्णन्ते" इत्यनारभ्य श्रुत तैत्तिरीयवाक्य विषय•। तत्रापि "प्रात सवनिकाभिपवाय होतृचमसीयाभिरद्भि' उपसिक्त सन्तृप्तं राजानं दशया व्यूह्याभिमृशति वायुरसि प्राणो नामेति दशभिः" इति द्रव्यदेवतासम्बन्धलाभो न शङ्क्य•। न ह्यत्र देवता चोद्यते, तद्धितचतुर्थ्योर-भावात्। मन्त्रवर्णस्तु न स्वतो देवतां विधातुं क्षमः, किन्तु यत्र यजतिजुहोत्यादि-शब्दतो देवतोद्देश्यकद्रव्यत्यागात्मकयागावगमस्तत्रैव देवताविशेषकल्पनाय प्रभवति। तत्र हि सामान्यरूपेणावगताया अपि देवताया विशिष्यावगम आकाङ्क्ष्यते। तत्र तद्धितचतुर्थ्योः सत्त्वे तत एवावगम•। तदुभयाभावे तु मन्त्रवर्णात्तदवगमः। न ह्यत्र यजति• श्रूयते, जुहोतिर्वा अन्यो वा यागवचनः कश्चिच्छब्द•। तस्मान्नात्र मन्त्रवर्णतो देवतालाभ। तदेतत् "पुरोडाशकपालेन तुषानपास्यति" इति (भा) कात्यायनसूत्रव्याख्यावसरे कर्कभाष्ये व्यक्तमुपपादितम्। आघारशब्दस्तु क्षारण-शिरस्कयागात्मकहोमे वर्तत इति तत्प्रख्याधिकरणेऽवोचाम। अतस्तत्र मान्त्रवर्णिक-देवतालाभ इति युक्तम्। अत एव शतपथब्राह्मणे "त वा एतमग्निमैन्धिषत, तस्मिन्नेते प्रथमे आहुती जुहोति" इत्युपक्रम्य "स्रुवेण तमाघारयति" "स्रुचा तमाघारयति" इत्यादि श्रुतम्। अत एव च पूर्वाघारे स्वाहाकारनिषेधोऽपि तत्र श्रूयमाणोऽर्थ-वान् भवति, क्षारणमात्रविधौ देवतोद्देश्यकद्रव्यत्यागात्मकयागाभावेन स्वाहाकारस्या-प्राप्त्या तत्प्रतिषेधानर्थक्यात् 'स्वाहा देवहविर्दाने' इति कोशाद्यनुसारेण स्वाहाशब्दस्य यागविषयकत्वावगमात्। आघारं प्रकृत्य "इत इन्द्र इति जुहोति" इत्येव कात्या-यन। न चैव सत्याघारशब्देन प्रथमाघारसञ्ज्ञककर्ममात्रेऽवगते वाक्यशेषमन्त्रव-र्णाभ्यां देवतावगतौ सत्या पश्चात्तस्य यागत्वाध्यवसाय इति कथं वार्तिकोद्घोष, होमत्वेनैव तस्य प्रथममवगमादिति वाच्यम्। आघारपदेन कश्चिद्धोमविशेष इत्येता-वन्मात्रावगमे सति [1]तस्य विशेषस्य चतुर्गृहीताज्यैकदेशत्वेनेन्द्रत्वेन च द्रव्यदेवता-ज्ञानाभावे पर्यवसानाभावाद्वाक्यशेषमन्त्रवर्णाभ्या तथा पर्यवसानमित्यभिप्राय-

1 तस्य चतुर्गृहीत. क, ख, ग

शब्दश्रवणात्कथ तत. सस्कारस्य क्रतुसम्बन्धविधिरिति वाच्यम् । एषु हि वाक्येष्व-ग्निशब्दः प्रकरणाच्चयनसंस्कृते ज्वलने वर्तते । 'अनुर्लक्षणे' इत्यनो. कर्मप्रवचनीय-त्वाद्द्वितीया । लक्षणत्व च तत्र हेतुत्वम् । 'परापि हेतौ तृतीया बाध्यते' इति वैया-करणा. । तथा च 'स्थण्डिलनिष्पत्तिप्रणाडिकया[1] चयनसंस्कृतेनाग्निनाग्निष्टोमादीन् कुर्यात्' इति फलितमिति चयनसस्कारस्य क्रतुसम्बन्धलाभ । एव चाग्निष्टोमादि-वाक्येष्वग्निशब्दस्य यजिसामानाधिकरण्यमप्युक्त निरस्तम्, अग्निशब्दस्य वैयधिकर-ण्येनैवान्वयस्योपपादितत्वात् । तस्माज्ज्योतिष्टोमादिषु गुणविधि ॥

लिङ्गदर्शनं विघटयति—

## [2]तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥

"अग्ने' स्तोत्रम्" इत्यादिवाक्येषु क्रतु'—याग , तदाख्यः—अग्निशब्दप्रतिपाद्य. स्यात् । कुत' ? तत्सयोगात्—तेन मुख्यविधया अग्निशब्दार्थेन ज्वलनेन चयनसंस्कृतेन सयोगात् । प्रणाडिकया तत्राग्निशब्दः क्रतुलक्षक इति यावत् । तेन कारणेन तस्य अग्निसयुक्तक्रतोरेव तानि वाक्यानि षडुपसत्कत्वादिधर्मविधायकानि सम्पद्यन्ते, तत्रागत्या अग्निशब्द क्रतुलक्षक । इह तूक्तरीत्या सत्या गतौ ज्वलनवचनत्वमेव युक्तम् । "अग्निं प्रोक्षति" "अग्निमधिरोहति" इत्यादौ त्वग्निशब्दो ज्वलनाधारे लाक्षणिक । "ब्रह्मवादिनो वदन्ति, यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति, यच्छन्दोभिश्चिनोति, अग्नयो वै छन्दांसि, तस्मादग्निरुच्यते" इत्यादिवाक्य-शेषास्तु तत्र तात्पर्यग्राहका इत्यन्यदेतत् इति ॥

इति दशम चयनाधिकरणम् ॥ १० ॥

११

वृत्तो गुणविचार. । इदानीं प्रकरणान्तरं प्रस्तूयते । कुण्डपायिनामयनं प्रकृत्य ताण्डकब्राह्मणे श्रुयते—"ते मासं दीक्षिता भवन्ति, ते मासि सोम क्रीणन्ति, तेषा द्वादशोपसद , उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुह्वति, मासं दर्शपूर्णमासाभ्या यजन्ते, मासं वैश्वदेवेन, मासं वरुणप्रघासै., मासं साकमेधै., मासं शुनासीरीयेण" इत्यादि । तत्र "मासमग्निहोत्र जुह्वति" इत्यादिषु वाक्येषु सशय:— किं नित्याग्निहोत्रादिषु मासगुणविधि. ? उत कर्मान्तरविधि' ? इति । तत्राग्निहोत्रा-

1. प्रणाड्या ग. 2. क्रतुसयोगात्

दर्शनादिति । "अग्ने. स्तोत्रम् अग्ने. शस्त्रं, षडुपसदोऽग्ने" इति ज्योतिष्टोमयागाङ्ग-स्तोत्रशस्त्रादिदर्शनादग्नेर्यागात्मकत्वमध्यवसीयते । किञ्च "अथातोऽग्निमग्निष्टोमे-नानुयजन्ति तमुक्थ्येन तं षोडशिना तमतिरात्रेण तं द्विरात्रेण" इत्यादीनि "तमेका-दशरात्रेण" इत्यन्तानि चतुर्दश वाक्यानि श्रुतानि । 'तमुक्थ्येन' इत्यादिषु 'अनुय-जन्ति' इत्यनुषज्यते । तत्राद्यानि चत्वारि वाक्यान्यग्निनामकस्य यागस्य संस्थाविधि-पराणि । 'अग्निं यजन्तीति यत्तदग्निष्टोमसंस्थेन' इत्यादिवचनव्यक्ति. । 'तं द्विरात्रेण' इत्यादीनि तु तस्यैव यागस्य कालविधिपराणि । 'अग्निं यजन्तीति यत्तद् द्विरात्रेण द्वाभ्यां रात्रिभ्याम्' इत्यादिवचनव्यक्ति । एतेषु सर्वेषु वाक्येषु 'अग्निं यजन्ति' इत्यनुवादेऽग्निशब्दस्य सामानाधिकरण्यादुत्पत्तावग्निशब्दस्य यागनामत्वाध्यवसाय. । 'अग्निम्' इति द्वितीया तु 'अग्निहोत्रम्' इत्यादिवदुपपाद्या । आहवनीयाद्यग्निसाध्य-त्वादग्निशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वम् । अनुशब्दश्च "एष वा व प्रथमो यज्ञो यज्ञाना य एतेनानिष्ट्वाथान्येन यजेत" इत्यादिवाक्यावगताग्निष्टोमानन्तर्यस्यानु-वादक । तस्मादग्न्याख्ययागविधि. ॥

इति प्राप्ते, सिद्धान्तयति—

## द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥

वाशब्द एवार्थे । "अग्निं चिनुते" इत्यत्र अग्निशब्दस्य द्रव्यं ज्वलनात्मक-मेवाभिधेयं स्यान्न तु याग, अग्निशब्दस्य ज्वलनेऽत्यन्तरूढस्य यागवचनताया अयुक्तत्वात् । अत उद्भिदादिवद्यौगिकत्वाभावाच्चित्राग्निहोत्रश्येनादिवद्वाक्यभेदतत्प्र-ख्यतद्व्यपदेशत्वाभावाच्च न यागनामधेयत्वमग्निशब्दस्य युक्तमाश्रयितुम् । नन्वा-हवनीयादिप्राप्त्या तत्प्रख्यन्यायेनाग्निशब्दस्य यागनामत्वमुक्तमिति तत्राह—चोदना-यास्तदर्थत्वादिति । "अग्निं चिनुते" इत्यादिवाक्यस्य ज्वलनरूपद्रव्यार्थत्वात् । न हि "अग्निं चिनुते" इति वाक्ये अग्निविधिरिष्यते, येनाहवनीयादिप्रापकशास्त्रादेव विधित्सितगुणप्राप्त्या नामत्व स्यात् । किन्तु प्रसिद्धाग्निशब्दवाच्यज्वलनानुवादेन तस्य चयनसंस्कारो विधीयते—'चयनेन स्थण्डिल निष्पाद्य तत्राग्निस्थापनमुखेन क्रतुमुपकुर्यात्' इति । अतो नात्र तत्प्रख्यन्यायावतार । तथा च यागविधेरभावात् "अग्निष्टोमेनानुयजन्ति" इत्यादिवाक्यानि न संस्थादिविधिपराणि, किन्तु तस्यैव चयनसंस्कारस्य तथाविधक्रतुसम्बन्धविधिपराणि । न च तेषु वाक्येषु केवलाग्नि-

त्वनाकाङ्क्षितमपि। एकप्रयोगवचनपरिगृहीताङ्गानामेव हि क्रमाकाङ्क्षा भवति, तेषामित्थम्भावाकाङ्क्षया युगपदुपनिपातात्। न च प्रसिद्धाग्निहोत्रादिकर्मण कुण्डपायिनामयनस्य चाङ्गाङ्गिभावोऽस्ति, येन तेषाम् "कुण्डपायिनामयनमुपयन्ति" इत्येकप्रयोगवचनपरिगृहीतत्वात्क्रम आकाङ्क्ष्येत। "दीक्षितो न ददाति न जुहोति न पचति" इति सोमक्रतुमध्ये पुरुषार्थहोमप्रतिषेधेन प्रसिद्धाग्निहोत्रादिकर्मणस्तत्रैवोप निपाताभावाच्च। एवञ्च काम्येष्टीनामेवात्र पाठस्य क्रमप्रापकत्वासम्भवेन "उपसद्भि-श्चरित्वा" इत्यस्य पाठप्राप्तक्रमानुवादकत्वानुपपत्त्योपसदस्तदानन्तर्यं मासश्चेति त्रय-मपि विधेयमिति स्वीकार्यमिति भवेदेव वाक्यभेद.। एतेन "दीक्षितो न जुहोति" इति प्रतिषिद्धस्य प्रसिद्धाग्निहोत्रादिकर्मण प्रतिप्रसवरूपेण वा सत्रैकदेशत्वेन वा विधिरिति प्रत्युक्तम्, उक्तरीत्या प्राप्तकर्मण्यनेकगुणविधानासम्भवेन प्रतिप्रसवायोगात् सत्रसम्बन्धस्योपसदादीनाञ्च प्रसिद्धकर्मणि विधौ वाक्यभेदापत्त्या सत्रैकदेशत्वेन विध्यनुपपत्तेश्च। तस्मादत्र कर्मान्तरविधानमिति भाष्यानुसारी पन्था।

तमिमं प्रकारं भङ्क्त्वा प्रकारान्तरमुत्प्रेक्षितं वार्तिके। तद्यथा—अप्रकृताभि-धानात्मक प्रकरणान्तर न पृथक्छब्दान्तरादिवत्कर्मभेदकोपाधिः, प्रसिद्धाग्निहोत्रादि-कर्मण्यसम्भवत उपसदादिगुणादेव कर्मभेदसिद्धे। ननु, अत्राप्रकृताभिधानापरपर्याया-त्प्रकरणान्तरादेव कर्मभेदो न तु गुणात्, अप्रकृताभिधान हि प्रागनवगताग्निहोत्रादि-कर्माभिधानम्, तच्च प्रसिद्धाग्निहोत्रादिकर्मण्यसम्भवत उपसदादिगुणादध्यवसीयते, तथा च कर्मभेदावगमकप्रकरणान्तरस्यात्मलाभे उपक्षीणत्वाद्गुणस्य नात्र कर्मभेदक-त्वम् इति चेन्न, एव सति "वाजिभ्यो वाजिनम्" इत्यत्राप्यप्रकृताभिधानादेव कर्म-भेदापत्तौ गुणस्य कर्मभेदकत्वानुपपत्तिप्रसङ्गात्, पूर्वकर्मासंयोगिनो वाजिनगुणस्या-प्रकृताभिधानस्वरूपलाभ एवोपक्षीणत्वात्[1] किं बहुना, शब्दान्तराभ्याससंज्ञानामपि विधेरप्रकृतविषयत्वबोधन एवोपयोग.। अप्रकृताभिधानाच्च कर्मभेद इति वक्तुं शक्यतया सर्वत्र प्रकरणान्तरमेव भेदकं स्यात्। शब्दान्तरादीना शेषाणा प्रकरणान्तरेण शेषिणा अविनाभावात्। न हि शब्दान्तरादीना परस्परपरिहारेणेव प्रकरणान्तरपरि-हारेण क्वचिद्वर्तन सम्भवति। तथा च तैः सह प्रकरणान्तरस्य कथं पृथक्परिगणनं स्यात्। न हि प्रधानस्योपसर्जनभूतैः सह परिगणनमुचितम्। किञ्च "उपसद्भिश्चरित्वा" इत्यस्य सन्निहिताग्निहोत्रवाक्यान्वयेन शान्ताकाङ्क्षत्वात् निराकाङ्क्षत्वाच्च दर्शपूर्णमा-

1. एव क्षीणत्वात्. ग.

दिकर्मणः "अग्निहोत्रं जुहोति" इत्यादिवाक्यप्राप्तत्वेनाविधेयत्वात्तदनुवादेन मासविधि'। न च नैयमिकाग्निहोत्रादिकर्मणोऽसन्निहितत्वेनानुपस्थितत्वात्कथं तत्र मासगुणविधिरिति वाच्यम्, असन्निहितस्यापि नाम्नोपस्थितिसम्भवात्। न च मासस्य पुरुषकृत्या सम्पादयितुमशक्यत्वेनानुपादेयस्य कथं विधिरिति वाच्यम्। न ह्यत्र कर्मोद्देशेन मासो विधीयते, किन्तु 'यो मासस्तत्राग्निहोत्रादि कुर्यात्' इत्येव मासोद्देशेन कर्मविधिः। तस्य च विधेरप्राप्तपक्षपातितया कर्मोद्देशेन मासविधौ पर्यवसानम्। एवञ्च मासस्यैव विधेयत्वात्कर्मणो विधानाभावान्न कर्मभेदः। विहितस्य विधानमेव हि कर्मभेदप्रयोजकमित्युक्तं शब्दान्तराधिकरणे, न तु यथाकथञ्चित्पुनरुपादानमात्रम्। तस्मान्नित्याग्निहोत्राद्यनुवादेन मासगुणविधिरिति प्राप्ते, सिद्धान्तयति—

## प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

नित्यस्याग्निहोत्रादिकर्मण प्रकरणादन्यत्कुण्डपायिनामयनस्य प्रकरण प्रकरणान्तरम्। तत्र पठ्यमाने मासाग्निहोत्रादिवाक्ये प्रयोजनान्यत्वम्—प्रयुज्यते अनुष्ठीयत इति प्रयोजन कर्म। तस्य अन्यत्वम्, अप्रकृताभिधानात्कर्मान्तरमित्यर्थः। असन्निहितत्वादग्निहोत्रादिशब्दैर्नैयमिकाग्निहोत्रादिकर्मण उपस्थित्यभावेन तदनुवादेन मासगुणविध्यसम्भवात् मासविशिष्टमग्निहोत्रादिसञ्ज्ञक कर्मान्तरमेव मासाग्निहोत्रादिवाक्येषु विधेयमित्युक्त भवति। न चासन्निहितस्याप्यग्निहोत्रादिकर्मणो नाम्नोपस्थितिसम्भवात्तदनुवादेन [1]मासगुणविधिसम्भव इति वाच्यम्। एव सति प्राप्तकर्मण्यनेकगुणविधौ वाक्यभेदप्रसङ्गात्। यदि हि केवलो मासगुण श्रूयेत तदा भवेत्तस्य विधि'। "उपसद्भिश्चरित्वा मासमग्निहोत्र जुह्वति" इत्यादि श्रूयते। न चाग्निहोत्रादिकर्मण्युपसदः सम्भवन्ति। अत उपसदस्तदानन्तर्यं मासश्चेति त्रयं विधेयमिति भवेद्वाक्यभेदः। तथा च नाम्नोपस्थितमपि नित्याग्निहोत्रादिकर्म परित्यज्य कर्मान्तरमेवैषु वाक्येषु विधेयम्। न च "उपसद्भिश्चरित्वा" इत्यस्य [2]"तेषा द्वादशोपसद सोममुपनह्य मासमग्निहोत्र जुह्वति" इति पाठप्राप्तोपसदानन्तर्यानुवादकतयोपपत्तेर्वाक्यभेदाप्रसङ्गादस्तु प्रसिद्धाग्निहोत्रकर्मणि गुणविधिरिति वाच्यम्। पाठो ह्याकाङ्क्षितमेव क्रम प्रापयितुमीष्टे न

1. मासगुणविधिरिति. ग, घ.
2 तेषा द्वादशोपसद समुपनह्य सोम मासमग्निहोत्रं जुह्वति. क, ख, ग, घ, ङ मु. पा.

शब्दस्य धात्वर्थमात्रनामधेयतया तेन भावनाया उपस्थित्यभावेन तद्भेदस्यापरिहार्यत्वात्। किञ्च "मास जुह्वति" इत्याख्यातवर्तिना धातुना स्वरसतो लिङ्गसङ्ख्यान्वयानर्हसाध्यत्वरूपेण कर्मान्तरमभिधीयत इत्यग्निहोत्रादिनाम्नापि साध्यरूपेणैव तदभिधेयम्, नाम्न आख्यातपरतन्त्रत्वात्। अत कथ मासाग्निहोत्रादिवाक्ये अग्निहोत्रादिनाम्ना प्रसिद्धस्य कर्मण उपस्थितिः। अस्तु वात्र नाम्ना सिद्धरूपेणोपस्थितिः; तथाप्याख्यातेन साध्यत्वेन प्रतीतस्य प्रसिद्धहोमस्य कथं तेनोपस्थिति। न च नाम्ना तद्रूपोपस्थित्यभावेऽपि नैयमिकाग्निहोत्रादिशब्दो यद्रूपवाचकस्तद्रूपविपरिवृत्तिरस्त्विति वाच्यम्। विध्यर्थं हि प्रसिद्धाग्निहोत्रादिकर्मणो विपरिवृत्तिरिहोच्यते। विधिश्च सिद्धरूपस्य नाम्नोपस्थाप्यस्य न सम्भवति, भावार्थाधिकरणे धात्वर्थविधिविषयाकारसमर्पण धातुनैव न तु नाम्नेति प्रतिपादनात्। ततश्च सिद्धरूपस्य नाम्ना विपरिवृत्तिरिहानुपयुक्तैवेति न प्रसिद्धाग्निहोत्रादिकर्मण कुण्डपायिनामयनैकदेशत्वेन विधिसम्भव। एवञ्च विध्यनर्हानुपादेयगुणश्रवणेन कर्मणो विधेयतया सिद्धवन्निर्देशाभावेन तद्विपरिवृत्त्यभावात्मके पूर्वकर्मासन्निधानापरपर्याये प्रकरणान्तरे सति मासाग्निहोत्रादिविधेरप्रकृतविषयतया प्रयोजनान्यत्व कर्मभेद सिध्यतीति सूत्रयोजना। न चैवमप्यनुपादेयगुणनिबन्धनत्वात्कर्मभेदस्य गुणात्कर्मभेद एव पर्यवस्यतीति वाच्यम्। विधीयमानो हि गुण. पूर्वकर्मण्यसम्भवन् कर्म भिनत्ति। न चात्र मासगुणो विधानमर्हति, अनुपादेयत्वात्। एवम् "सरस्वत्या दक्षिणे तीरे आग्नेयोऽष्टाकपालः पुरोडाश." इत्यादिदेशसयुक्ते "सत्रायागूर्य विश्वजिता यजेत" इत्यादिनिमित्तसयुक्ते च वाक्ये द्रष्टव्यम्। प्रयोजन पूर्वपक्षे—प्रसिद्धाग्निहोत्रादिषु यावज्जीवादिकालैर्मासस्य विकल्प., कुण्डपायिनामयनेऽग्निहोत्राद्यननुष्ठानञ्च, सिद्धान्ते तु—तदुभयाभाव इत्याद्यूह्यम्। विस्तरस्तूच्चावचो वार्तिकादावनुसन्धेय इति ॥

इत्येकादश प्रकरणान्तराधिकरणम् ॥ ११ ॥

१२

तदेवं देशकालनिमित्तफलसंस्कार्येष्वनुपादेयेषु देशकालनिमित्तानां कर्मभेदकत्व प्रतिपादितम्। इदानीं फलसंस्कार्ययो कर्मभेदकत्व प्रतिपादयितुमिदमारभ्यते। अनारभ्य किञ्चिच्छ्रूयते "आग्नेयमष्टाकपाल निर्वपेद्रुक्काम" "अग्निषोमीयमेकादशकपाल निर्वपेद्ब्रह्मवर्चसकाम" "ऐन्द्राग्नमेकादशकपाल निर्वपेत्प्रजाकाम" इति। रुक् तेज, तत्कामो रुक्काम। तथा अश्वमेधे श्रूयते—"त्रैधातवीया दीक्षणीया" इति।

सादिवाक्यानां न तेषु तस्यान्वय । एवञ्च दर्शपूर्णमासादिवाक्येषूपसदां तदानन्तर्यस्य चाविधानान्मासमात्रस्यैव गुणस्य विधानाद्वाक्यभेदाभावेन नाम्नोपस्थितस्य प्रसिद्ध-दर्शपूर्णमासादिकर्मण परित्यागाभिधानं प्रकरणान्तरं तत्र नास्तीति कर्मभेदो न स्यात्। तस्मादत्र वाक्यभेदप्रयुक्तमप्रकृताभिधान न कर्मभेदप्रयोजकम्। किन्तु शब्दान्तरादिवदप्रकृताभिधानापादकं किञ्चिन्निरूपणीयम्। तत्तु प्रकरणविच्छेदापर-पर्याय पूर्वकर्मासन्निधानमेव। तथाहि-विच्छिन्नप्रकरण कर्म द्वेधा उपादेययुक्तमनु-पादेययुक्तञ्च। तत्र "यदाहवनीये जुह्वति" इत्यादावुपादेयस्थले आहवनीयादिगुणस्य होमे प्रसक्ते सम्पादयितुं शक्यत्वेनोपादेयतया होमोद्देशेन विधानसम्भवेन विशिष्टवि-धिगौरवभीत्या कर्मण उद्देश्यत्वावश्यम्भावे दूरस्थस्यापि होमस्य सिद्धवन्निर्देशबले-नाभिध्यानादिना कथञ्चिद्बुद्धौ विपरिवृत्ति सम्पाद्य 'यो होम स आहवनीये' इत्येव गुणविधिसम्भव । अनुपादेयगुणस्तु पञ्चधा ।

'देशं कालो निमित्त च फल सस्कार्यमेव च ।
इति मीमांसका प्राहुरनुपादेयपञ्चकम्' ॥ इति ।

तदिह मासस्याग्निहोत्रादिकर्मणि प्रसक्ते सम्पादयितुमशक्यतया दध्यादिवदा-नयनादिक्रियाविशिष्टत्वेनाननुष्ठेयतया चानुपादेयस्याग्निहोत्रादिकर्मोद्देशेन पर्यवसान-गत्यापि विधानासम्भवेन 'यो मासस्तत्राग्निहोत्रादि कुर्यात्' इत्येवं मासानुवादेनाग्नि-होत्रादिकर्मण एव भावार्थाधिकरणन्यायेन विधेयतया विहितस्य विधानान्यथानुपपत्ते॰ प्राप्तवन्निर्देशाभावेन परप्रकरणपाठेन च पूर्वकर्मप्रत्यभिज्ञाविरहाच्च सिध्यति कर्म-भेद । "पौर्णमास्या यजेत" "साय जुहोति" "प्रातर्जुहोति" इत्यादौ कालोद्देशेन कर्मविधावपि न कर्मान्तरत्वमिति 'सन्निधौ त्वविभागात्' इत्याधिकरणेऽनुपदमेव वक्ष्याम॰ । तत्र मासस्यानुपादेयत्वेऽपि [1]कर्मणोऽनुष्ठेयतामात्रेण कथञ्चिद्विधिसंस्पर्शात् परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणपारार्थ्यात्मकशेषत्वरूपमङ्गत्वमुपपाद्यम्। ननु मासा-ग्निहोत्रादिवाक्येषु प्रसिद्धाग्निहोत्रादिकर्मणः सन्निधिकृतप्रत्याभिज्ञाविरहेऽपि नामधेय-कृता तत्प्रत्यभिज्ञास्ति, न च नाम्ना तद्विपरिवृत्तावपि तत्रानुपादे॰स्य सिद्ध्यसम्भवाद्वि-परिवृत्तिरप्रयोजिकेति वाच्यम्, प्रसिद्धाग्निहोत्रादिकर्मणि मासविध्यसम्भवेऽपि तस्यैव कर्मणो नाम्ना विपरिवर्तमानस्य कुण्डपायिनामयनैकदेशत्वेन विधिसम्भवादिति चेन्न, प्रसिद्धाग्निहोत्रादिकर्मण कुण्डपायिनामयनैकदेशत्वेन विधानेऽप्यग्निहोत्रादि-

1. तत्र कर्मण मु पा.

१३

अथ देशकालनिमित्तफलसंस्कार्याणां सन्निधौ प्रत्युदाहरणानि प्रदर्शयितुमारभ्यते। दर्शपूर्णमासयोर्देशकालनिमित्तफलपराणि श्रूयन्ते—"समे दर्शपूर्णमासाभ्यां यजेत" "पौर्णमास्यां पौर्णमास्या यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति, तथा "स्विष्टकृतं यजति" इति विहितस्विष्टकृद्यागस्य संस्कार्यपरम् "शेषात्स्विष्टकृते समवद्यति" इति। तत्र संशय—किं देशाद्यनुपादेयसम्बन्धात्कर्मभेद ? उत प्रकृतमेव कर्म देशादिषु विधीयते ? इति। अनुपादेयसम्बन्धवशात्पूर्ववत्कर्मान्तरत्वं देशादेरुद्देश्यत्वेन कर्मणो विधेयत्वावश्यम्भावात्। न हि कर्मणो देशादेश्चेत्युभयोरप्युद्देश्यत्वसम्भव। अत कर्मणोऽवश्यं विधेयत्वाद्विहितस्य च विधानायोगाद्भवति कर्मभेद.। एवञ्च कर्मभेदेऽनुपादेयसम्बन्ध एव प्रयोजको न त्वसन्निधानमपीति प्राप्ते सिद्धान्तयति—

**सन्निधौ त्वविभागात्फलार्थे न पुनःश्रुतिः ॥ २६ ॥**

तुशब्द पूर्वपक्षव्यावृत्तौ। सन्निधौ—दर्शपूर्णमासादिकर्मसन्निधौ पठ्यमानेषु समादिवाक्येषु न कर्मान्यत्वम्। कुत ? अविभागात्—प्रकृतकर्मात्मकतया प्रत्यभिज्ञानात्। कर्मसन्निधौ सति तस्मिन्नेव कर्मणि बुद्धौ विपरिवर्तमाने धातोरसन्निधिस्थल इव स्वरसत कर्मान्तरप्रतिपादकत्वाभावे सति, प्रकृतकर्मात्मकतयैव प्रत्यभिज्ञाबलान्न कर्मभेद इत्युक्त भवति। न चानुपादेयस्य देशकालादेर्विध्यनर्हत्वे कर्मण एव विधानावश्यम्भावेन विहितस्य विधानानुपपत्त्या विधिसमभिव्याहारेण धातो कर्मान्तरपरत्वमेव स्वरसतो वाच्यमिति कथं प्रकृतकर्मण प्रत्यभिज्ञानमिति वाच्यम्। समादिवाक्येषु हि देशादेरनुपादेयस्य विध्यनर्हतयोद्देश्यत्वात्कर्मण उपादेयत्वमेव लभ्यते, एकस्योद्देश्यत्वेऽन्यस्योपादेयत्वनियमात्, न तु विधेयत्वमपि। न चोपादेयस्य विधेयत्वनियमोऽस्ति। प्राधान्येन निर्देश्यत्व ह्युद्देश्यत्वम्, पारतन्त्र्येण निर्देश्यत्वं चोपादेयत्वम्। अप्राप्तबोधन विधि., प्राप्तबोधनमनुवाद। एव चोपादेयमपि देशादौ कर्म प्राप्तमेव सन्निधिवशात्ताद्रूप्येण प्रत्यभिज्ञायत इत्यनुवाद्यम्। अत कर्मणः पुनर्विधानाभावान्न कर्मभेद.। न च कर्मणोऽनुवाद्यत्वाद्देशादीना चोद्देश्यत्वात्कस्यापि विधियोग्यस्याभावात्समादिवाक्यमनर्थकमेव स्यादिति वाच्यम्। देशादे कर्मसम्बन्धविधानार्थत्वात्। देशादेर्हि न फलवत्स्वारसिकप्रवृत्तिविषयत्वलक्षणप्रयोजनत्वलक्षणप्रयोजनत्वरूपेण प्राधान्येनोद्देश्यत्वम्, किन्तु निर्देशगतस्वातन्त्र्य-

दीक्षणीयाकार्ययजमानसंस्कारकारिणीत्यर्थः । तत्र संशयः--किं प्रकृतेष्वाग्नेयादिषु रुगादिफलं कामयितव्यमिति विधीयते ? काम्यत्रैधातवीयया संस्कार्योऽश्वमेधयजमान इति च ? उत फले संस्कार्ये च कर्मान्तरविधिः ? इति । तत्र कालदेशनिमित्तानां सिद्धानामेव ग्रहणादनुपादेयत्वं युक्तम्, फलसंस्कार्ययोस्तु पुरुषप्रयत्नसम्पाद्यतयोपादेयत्वमेव, कामनामुखेन फलस्यापि पुरुषप्रवृत्तिविषयत्वसम्भवात् । शक्यते च दर्शपूर्णमासस्थेनापि रुगादिफलं कामयितुम्, काम्यत्रैधातवीयाप्रयोगेणाप्यश्वमेधयजमानः संस्कर्तुम् । अतः फलसंस्कार्ययोरुपादेयत्वादिह न कर्मान्तरत्वमिति प्राप्ते, सिद्धान्तयति---

**फलं [1]चाकर्मसन्निधौ ॥ २९ ॥**

चशब्दः संस्कार्यं समुच्चिनोति । प्रकृताग्नेयादिकर्मणः काम्यत्रैधातवीयाकर्मणश्च प्रकरणादन्यत्र श्रूयमाणं फलं संस्कार्यं चानुपादेयत्वात्कर्मभेदकमेव । अयमाशयः--कामनामुखेन फलस्य प्रवृत्तिविषयत्वस्वीकारे विधिबलात्कामना सम्पाद्या स्यात् । न च विधितः कामना सम्पाद्यते, किन्तु [2]स्वरससिद्धैव सा । ततश्च स्वारसिककामनामुखेन फलस्य विध्यधीनप्रवृत्तिविषयत्वासम्भवेनोपादेयत्वासम्भवादुद्देश्यत्वमेवेति तदुद्देशेन कर्मैव विधेयम् । न चोद्देश्यत्वेऽपि फलस्य कालदेशयोरिवाग्निमाधिकरणे वक्ष्यमाणरीत्या विधेयत्वं किं न स्यादिति वाच्यम्, देशकालयोः सिद्धवत्काररूपोद्देश्यत्ववतोः कर्मणोऽनुष्ठेयतया तयोरपि तद्विशिष्टवेषेण विध्यधीनप्रवृत्तिविषयतया विधेयत्वोपपत्तावपि फलस्य स्वारसिकप्रवृत्तिविषयत्वलक्षणप्रयोजनत्वरूपेणोद्देश्यस्य विधेयत्वे विधीयमानप्रवृत्तिविषयत्वापत्त्या स्वारसिकप्रवृत्तिविषयत्वरूपप्रयोजनत्वव्याघातात् । एवं संस्कार्यस्यापि विध्यन्तरसिद्धस्य फलवदुद्देश्यतया तद्वदेव प्रधानत्वात्तद्व्याघातप्रसङ्गान्न विधेयत्वम् । एतेन निमित्तस्यापि विधेयत्वं व्याख्यातम्, तस्य विधेयत्वेऽङ्गत्वापत्त्या निमित्तत्वव्याघातात् । यत्त्वयमनङ्गभूतमेव कर्म प्रवृत्तिं लक्षयति तदेव हि कर्मणो निमित्तमित्युच्यते । तस्मादत्रापि कर्मभेद इत्यास्तां तावत् । प्रयोजनं पूर्वपक्षे---रुगादिफलार्थं न पृथक्प्रयोगः, किन्तु गुणफलवद्दर्शपूर्णमासप्रयोगेणैव तत्सिद्धिः, सिद्धान्ते तु--कर्मान्तरत्वात्पृथक्प्रयोग इति ॥

इति द्वादशं फलसंस्कार्याधिकरणम् ॥ १२ ॥

1. च कर्मसन्निधौ. 2. स्वतः सिद्धैव सा. क, स्वरसतः सिद्धैव सा. ड.

यागविधावपि व्याप्रियन्ते तद्वत्। प्रयोजन पूर्वपक्षे—समादिवाक्येषु कर्मान्तरविधो प्रतिवाक्यमेक कर्म, सिद्धान्ते तु—सर्वत्रैकमेवेति स्पष्टमेवेति ॥

इति त्रयोदश प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥ १३ ॥

१४

तैत्तिरीयके द्वितीयकाण्डे दर्शपूर्णमासब्राह्मणे पष्ठप्रपाठके "प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्" इत्यनुवाके "अङ्गिरसो वा इत उत्तमा सुवर्गं लोकमायन्" इत्युपक्रम्य "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्या चाच्युतो भवति" इति कालद्वयसयुक्तमेकं वाक्य श्रुतम्। साम्नाय्यं पौर्णमास्या नास्ति। अग्निषोमीयपुरोडाशोऽमावास्यायां नास्ति। आग्नेयः पुरोडाश उभयस्मादपि कालान्न च्यवत इत्यच्युत। तथा तत्रैव ब्राह्मणे पञ्चमप्रपाठके "इन्द्र वृत्र जघ्निवासम्" इत्यनुवाके "यदाग्नेयोऽष्टाकपालोऽमावास्याया भवति" इत्येककालसंयुक्त वाक्यान्तर श्रुतम्। तत्र सशय—किं कालद्वययुक्तविहिताग्नेययागाद्यागान्तर विधीयते? उत स एव यागोऽनूद्यते? इति। तत्र पूर्वपक्षयति—

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते ॥ २७ ॥**

तुशब्द' पूर्वाधिकरणसिद्धान्तोपमर्दन प्रवृत्तिं सूचयति। अनन्यार्था पुन श्रुति· कर्मभेदिका, निमित्तादिवाक्येषु च पुनःश्रुतिर्निमित्तसयोगादिप्रापणार्थेति न कर्मभेदिकेति युक्तम्। इह तु पुन श्रुतिरनन्यार्था। ततश्च 'एकस्यैव पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' इत्यभ्यासाधिकरणन्यायेन कर्मभेद· सिध्यति। न चैककालयुक्तवाक्यमनुवाद', विनिगमनाविरहात्। ननु—कालद्वययुक्तवाक्यस्य नानुवादकत्वमवकल्पते, एककालसंयुक्तवाक्यविहिताग्नेययागानुवादकत्व हि तस्य वक्तव्यम्, तच्च न भवति, उत्पत्तिशिष्टामावास्यायुक्तकर्मण' कालद्वयसयुक्ततयानुवादानुपपत्तेः, न च तस्य पौर्णमासीकालविषये विधित्वमिति वक्तुं शक्यम्, उत्पत्तिशिष्टामावास्याविरोधात्, अत एककालयुक्तवाक्यमेवानुवाद·, कालद्वययुक्तवाक्यन्तु विधिरित्यस्ति विनिगमकमिति चेत्—कालद्वययुक्तवाक्ये हि नैक एवाग्नेययाग', येन एककालयुक्तवाक्योत्पन्नाग्नेययागस्य कालद्वययुक्तवाक्यमनुवादकं न भवेत्। यागद्वयं हि तत्र कालभेदात्प्रतीयते। तत्र चैककालवाक्योत्पन्नामावास्याकालयुक्त आग्नेययागोऽनूद्यते, पौर्णमासीकालयुक्ताग्नेययागान्तरं च विधीयत इति विशेषाभावेनान्यतरवाक्यस्यानुवादत्वनिर्धारणाभावादुभयोरपि विधायकत्वे पुनर्विधानात्कर्मभेदः। ततश्चाग्नेय-

मात्रेण। ततश्च दध्यादेरानयनादिक्रियाविशिष्टतया[1] यथानुष्ठेयत्वं तथा देशादेर्नोनुष्ठेयत्वमिति तावन्मात्रेण तस्य [2]स्वतन्त्रनिर्देशे सत्यपि फलवत्स्वारसिकप्रवृत्तिविषयत्वरूपप्रयोजनत्वात्मकोद्देश्यत्वस्य विधेयत्वविरोधिनोऽभावेन सम्बन्धमुखेन विधिसम्भवान्न समादिवाक्यवैयर्थ्यम्। नन्वेवमपि देशकालयोरेव विधेयत्वं लभ्यते, निमित्तफलसंस्कार्याणां तु निमित्तत्वादिव्याघातप्रसङ्गेन विधेयत्वाभावस्य पूर्वस्मिन्नधिकरणे प्रतिपादिततया निमित्तादिवाक्येषु कर्मण एव विधानस्य वाच्यतया कर्मभेदः स्यादित्यत आह—फलार्थे न पुनःश्रुतिरिति। फलग्रहणमुपलक्षणम्। फलनिमित्तसंस्कार्यवाक्येषु यदाग्नेयादिवाक्योत्पन्नानां कर्मणाम् "स्विष्टकृतं यजति" इत्युत्पन्नस्य च फलादिसम्बन्धप्रतिपादनार्थं पुनःश्रवणं तन्न कर्मभेदं प्रयोजयितुं क्षमते, उत्पत्तिविधिभेदस्यैव कर्मभेदप्रयोजकत्वात्। अप्रवृत्तकर्मस्वरूपप्रवर्तनं ह्युत्पत्तिः। न चैकस्य कर्मणोऽनेकवाक्यतोऽप्रवृत्तप्रवर्तनं सम्भवतीत्युत्पत्तिविधिभेदः शक्नोति कर्म भेत्तुम्। निमित्तादिवाक्यं तु उत्पत्तिवाक्यतः कर्तव्यत्वमात्रेणावगतानां कस्मिन्निमित्ते [3]कस्मिन् फले किं संस्कार्यमिति विधिविशेषापेक्षाणां कर्मणां निमित्तसंयोगादिप्रतिपादनाय पुनर्विधानपरत्वादुत्पन्नविधिरिति न कर्मभेदः। एतेन देशकालवाक्ययोः कर्मविधिस्वीकारेऽप्युत्पन्नकर्मणः प्रयोगविधानार्थत्वान्नात्रापि कर्मभेदप्रसक्तिरित्यप्युक्तं भवति। यथा चैतत्तथैकादशस्य (मा) द्वितीयाद्ये स्फुटीभविष्यति।

इयांस्तु विशेषः—निमित्तादिवाक्येषु कर्मणो विधेयत्वमेव, देशकालवाक्ययोस्तु कर्मस्वरूपोत्पत्तिविषयेऽनुवाद्यत्वम्, प्रयोगविषये विधेयत्वम्, विषयभेदाच्च न तयोर्विरोध इति। [4]न चैवं सति मासाग्निहोत्रादिवाक्यमपि प्रयोगविधिः, न तूत्पत्तिविधिरिति तत्रापि कर्मभेदो न स्यादिति वाच्यम्। तस्य प्रयोगविधित्वेऽप्युत्पत्तिविधित्वस्यापि सत्त्वात् प्रयोगस्योत्पत्त्यपेक्षत्वेन सन्निहितोत्पत्त्यभावे प्रयोगविधिरेव उत्पत्तावपि व्यापारात्, यथा आग्नेयादिवाक्यं द्रव्यदेवतासम्बन्धं तदपेक्षितं यागञ्च विधत्ते तद्वत्। समादिवाक्यं तु प्रयोगविधिसन्निहिताग्नेयादिवाक्यैरुत्पत्तेर्लाभान्न तत्र व्याप्रियते, यथा ऐन्द्रवायवादिवाक्यानि "सोमेन यजेत" इति सन्निहितयागलाभान्न

---

1 क्रियाविषयतया ख. 2 स्वातन्त्र्यनिर्देशे ख, ग. 3 कस्मै फलाय. क, ग
4 न चैवमपि. ख, ग.

# चतुर्थः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थाने ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

तदेव कर्मभेदे विचारिते तत्प्रसङ्गात्प्रयोगभेदोऽस्मिन् पादे प्राधान्येनाभिधीयते ।

१

"यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्यत्र किम् "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति विहितकाम्यप्रयोगस्यैकस्य यावज्जीवकालमभ्यासो विधीयते ? उत जीवने निमित्ते अग्निहोत्रस्य दर्शपूर्णमासयोश्च बहूनां प्रयोगाणां स्वर्गकामवाक्यविहितादन्येषां विधिः ? इति संशये, पूर्वपक्षयति—

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥१॥**

कर्मशब्दः प्रयोगवाची । स्वर्गकामवाक्यविहितोऽयं काम्यः प्रयोगः । तस्य धर्मः-शेषभूतः कालः, यावज्जीविकः—यावज्जीववाक्यगम्यो भवति । काम्यप्रयोगाङ्गतया यावज्जीवकालो विधीयते, न तु जीवने निमित्ते प्रयोगान्तरविधिरिति यावत् । कुतः ? प्रकरणात् । एवं हि प्रकरणमनुगृहीतं भवति । यद्यपि प्रकृतकर्मण एव जीवने निमित्ते विधानात्पक्षान्तरेऽपि न प्रकरणबाधः, तथापि प्रकरणमत्र नाधिकाररूपं विवक्षितम्, किन्त्वित्थम्भावाकाङ्क्षालक्षणं विवक्षितम् । तच्च कर्म धर्ममपेक्षमाणं जीवने निमित्ते पुरुषार्थतया प्रयोगान्तरविधौ बाधितं स्यात् । ननु काम्यप्रयोगस्यैकस्य यावज्जीवकाले कर्तुमशक्यत्वात्प्रयोगबहुत्वमापतितमित्यत आह—अभ्यास इति । याज्जीवकालविधौ हि तत्सामर्थ्यादेकस्यैव काम्यप्रयोगस्याभ्यासः पर्यवस्यति, यथा "सोमेन यजेत" इत्युत्पन्नस्यैव यागस्य ऐन्द्रवायवादिवाक्येषु ग्रहणसंस्कारविधिपरेषु द्रव्यदेवतासम्बन्धभेदादभ्यासस्तद्वत् । तस्माद्यावज्जीवकालकोऽभ्यस्तरूपः एक एव काम्यप्रयोग इति फलतीति पूर्वः पक्षः ॥

यागस्यामावास्यायाम् अभ्यास आवृत्ति प्रतीयेत। अमावास्यायां द्विराग्नेय. प्रयुज्यत इति यावत् ॥

तमिमं पूर्वपक्षं प्रौढिवादेन निराकरोति—

**अविभा त्तु [1] णो द्विरुक्तो न विधीयेत ॥ २८ ॥**

तुशब्द उक्तनिरासे। समिदादिवाक्येषु प्रत्यक्षयजिपुन'श्रवणाद् भेदकत्वम्। इह तु द्रव्यदेवतासम्बन्धाद्यागोऽनुमातव्य। प्रत्यक्षश्रुतञ्च द्रव्यदेवतं वाक्यद्वयेऽपि न भिद्यते। कुत'? अविभागात् एकत्वेन प्रत्यभिज्ञानात्। अतो द्वि पठितेन वाक्ये-नान्यतरेणाग्नेयो यागो विधीयेत। उभयोर्वाक्ययोरमावास्याकालयुक्तकर्मविधाय-कत्वे विकल्पः। एकं वाक्यमेकं पुरुषं प्रत्यमावास्यायुक्तकर्मणो विधायकम्, अन्यच्चान्यं प्रति तस्यैव विधायकमिति यावत्। अथवा विनिगमनाविरहा-द्वाक्यद्वयेनाप्येकमेव कर्म युगपद्विधीयत इति व्याख्येयम्। न चान्यतरवाक्यस्यानर्थ-क्यं शङ्क्यम्, कर्मभेदाश्रयणापेक्षया आनर्थक्याश्रयणस्याभ्यर्हितत्वात्। यद्यपि वेदे [2]मात्रामात्रस्यप्यानर्थक्याभ्युपगमो न युक्त, तथापि प्रौढिवादोऽयम् ॥

परमार्थतः सिद्धान्तमाह—

**अन्यार्था वा पुनः श्रुतिः ॥२९॥**

वाशब्दोऽर्धाङ्गीकारे। 'अविभागात्कर्मण' इति कर्मैकत्वमुक्तमङ्गीकुर्म., 'द्विरुक्तेन तु विधीयेत' इत्यानर्थक्यमुक्तं नाङ्गीकुर्म.। ननु पुन श्रवणस्य का गतिरित्यत आह—अन्यार्थेति। अमावास्याया केवलाग्निदेवत्योऽष्टाकपाल प्रशस्त किमुतेन्द्र-सहिताग्निदेवत्य एकादशकपाल इत्यैन्द्राग्नप्रशंसापरमेककालसंयुक्तवाक्ये आग्नेय-यागस्य पुन श्रवणम्, "स एतमैन्द्राग्नमेकादशकपालममावास्यायामपश्यत्" इत्युप-क्रमात्। एव चैन्द्राग्नविध्येकवाक्यतया तत्प्रशंसार्थं केवलामावास्यावाक्यमेवानुवाद इति विशेषग्रहणाद्विधिपुन श्रवणाभावाच्च नाभ्यासन्यायावतार। तस्मादमावा-स्यायामपि सकृदेवाग्नेययागस्य प्रयोग इति सिद्धम् ॥

इति चतुर्दशमाग्नेयद्विरुक्त्यधिकरणम् ॥ १४ ॥

इति द्वितीयाध्याये तृतीयः पादः ॥



1 कर्मणा द्विरुक्तेनं विधीयते 2. मात्राभ्यासस्यापि. ख, ग

मासौ प्रयोक्तव्यावित्यर्थ' सिद्ध । नैमित्तिकश्चायं प्रयोग' 'धर्मेण पापमपनुदति' इति श्रुतपापक्षयार्थ' ।

'अकुर्वन्विहित कर्म निन्दित च समाचरन् ।
प्रसजश्चेन्द्रियार्थेपु नर पतनमृच्छति' ॥
'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणा नर पतनमृच्छति' ॥

इति स्मृतिसिद्धस्याकरणप्रयुक्तप्रत्यवायस्य परिहारस्त्वानुपङ्गिक । नरकेपु पतत्यनेनेति पतन पापम् । ऋच्छति प्राप्नोति । अत्र विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालन नित्यकर्मणां फलमिति केचित् । तन्न, प्रत्यवायो हि न कर्ममात्रातिक्रमात्, किन्तु विहितकर्मातिक्रमात्, 'अकुर्वन्विहित कर्म' इति वचनात् । ततश्च सिद्धे विधौ विहितकर्मातिक्रमात्प्रत्यवायावगम., अवगतस्य प्रत्यवायस्य परिहाराय च विधिरित्यन्योन्याश्रय' । अत. पापक्षय एव फलम् । तच्च पापमिह जन्मनि जन्मान्तरे च सञ्चितम्, 'पूर्वां सन्ध्या जपस्तिष्ठेन्नैशमेनो व्यपोहति' 'कपाये कर्मभि पक्के' 'धर्मेण पापमपनुदति' इत्यादिश्रुतिस्मृतिभ्य । न च निमित्तोद्देशेन पापक्षयरूपफलोद्देशेन च कथ कर्मविधि, वाक्यभेदप्रसङ्गादिति वाच्यम् । न ह्येकमेव वाक्य निमित्ते फले च कर्म विधत्ते, किन्तु यावज्जीववाक्य निमित्ते कर्म विधत्ते, अन्यच्च श्रुतार्थापत्तिकल्पित वाक्यं फले विधत्त इत्यदोष' । न चैवमप्युद्देश्यद्वय एकस्य विधिर्विरुध्यत इति वाच्यम् । न हि द्वयोरेकरूपमुद्देश्यत्वमस्ति । निमित्तस्य हि [1]सिद्धवत्काररूपमुद्देश्यत्वम्, पापक्षयस्य तु स्वारसिकप्रवृत्तिविषयत्वात्मकप्रयोजनत्वरूपम । न ह्येव विधयोरुद्देश्ययो. फलनिमित्तयोरेकत्र विरोधोऽस्ति । यदि हि निमित्तमपि फलवत्कर्मजन्य स्यात् तदा द्वयोरप्येकप्रकारसम्बन्धाद्विरोध स्यात् । प्रत्युत निमित्ते कर्म क्रियमाण किं प्रयोजनमिति सुतरामपेक्षते, निमित्तेऽवश्यकर्तव्यताया नैष्फल्ये सत्यनुपपत्ते. । अतश्च निमित्तबलेनापेक्ष्यमाण फल कथ तेन विरुद्ध स्यात् । ननु—निमित्तत्वमुपलक्षणत्व ज्ञापकत्व व्याप्यत्वरूपम्, व्याप्तिश्च यदा यदा जीवन तदा तदा कर्मेत्येवरूपा, अन्यथा कर्मणि कदाचिज्जीवनसम्बन्धस्यावर्जनीयत्वेन तत्प्रतिपादनानर्थक्यात्, तथा च व्याप्त्या निमित्ते कर्मण आवश्यकत्वरूपनियमोऽर्थाद्गम्यते, अनावश्यकत्वे

1. सिद्धवत्कारनिर्देशरूपम् क, घ, ग, ङ, मु.पा.

सिद्धान्तयति—

## कर्तुर्वा श्रुतिसंयोगात् ॥२॥

वाशब्द एवार्थे। 'धर्म' इत्यनुवर्तते। एकस्यैव काम्यप्रयोगस्य यावज्जीवकालमभ्यासो नात्र विधीयते, किन्तु जीवने निमित्ते नियमेन भिन्न' प्रयोग पुरुषधर्मतया विधीयते। कुतः ? श्रुतिसयोगात्-एव सत्येव यावज्जीवपदस्य यजेश्च मुख्यवृत्तिकत्वसम्भवात्। कर्मधर्मत्वे हि 'यावति विन्दजीवो' इति सूत्रविहितणमुल्प्रत्ययान्तस्य 'अव्ययकृतो भावे भवन्ति' इति जीवनक्रियावाचिन' काले लक्षणा स्यात् · एकस्या यागक्रियाया यावज्जीवकालसम्बन्धानुपपत्त्या यजिनाप्यभ्यासो लक्षणीयः स्यात्। न च यथा "पौर्णमास्या पौर्णमास्या यजेत" इति विहितकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धि, तथा यावज्जीवकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिसम्भावान्नाभ्यासलक्षणेति वाच्यम्। अपौर्णमासीव्यावृत्त्यर्था चोदनेति युक्ता तत्र सकृदनुष्ठानेन शास्त्रार्थसिद्धि'। इह तु चोदना अजीवनकालव्यावृत्त्यर्था न भवति, तदा कर्मणोऽनुष्ठानस्याप्रसक्ते.। किन्तु समस्तजीवनकालग्रहणार्थैव चोदनेत्यभ्यासलक्षणा दुर्वारा। तत्र 'यावति विन्दजीवो.' इति णमुल्विधायकं सूत्रम्। तत्र 'समानकर्तृकयो. पूर्वकाले' इत्यनुवर्तते 'णमुल्' इति च। यावत्युपपदे समानकर्तृकयो क्रिययोर्मध्ये पूर्वकालिकक्रियावृत्तेर्विन्दतेर्जीवतेश्च णमुल्स्यादित्यर्थ । जीवतेश्च प्राणधारणमर्थ.। प्राण उच्छ्वास' नासाबहिर्निर्गतो वायुविशेष । तस्य धारण नासिकया अन्तराकर्षणम्। 'अव्ययकृतो भावे' इति वचनाण्णमुलन्तस्यापि जीवनक्रिया अर्थ । पौर्वापर्यं समानकर्तृकत्वञ्च द्योत्यम्। यावच्छब्दो जीवन सामस्त्येन विशिनष्टि। तच्च जीवनम् 'समानकर्तृकयो' इति क्रियान्तरसम्बन्धे विहितेन णमुल्प्रत्ययेन होमाद्यन्वयितया प्रतीयते। स च सम्बन्धो यदि जीवनस्य होमादिक्रियायाश्चाङ्गाङ्गिभावादि· स्यात्, तर्हि सर्वेष्वपि जीवनेष्ववश्यं होतव्यमित्यर्थस्यासिद्धेर्यावच्छब्दार्थस्य प्राप्त्यभावादनुवादो नावकल्पेत। नापि विधातु शक्यते, जीवनानामयुगपत्कालकत्वेन तत्सामस्त्यस्य कर्मणि विधानासम्भवात्। ततश्च यथा भावलक्षणे विहिता सप्तमी भाव प्रति लक्षणत्व निमित्तत्वे सति घटते नान्यथेत्यर्थान्निमित्तत्वेऽवतिष्ठते, तथा यावच्छब्दबलादेव सम्बन्धसामान्यवाची णमुल्प्रत्ययो निमित्तनैमित्तिकभावेऽवस्थित इति जीवनस्य तावन्निमित्तत्वम्। एवञ्च जीवने निमित्तेऽग्निहोत्र प्रयोक्तव्य दर्शपूर्ण-

मासौ प्रयोक्तव्यावित्यर्थः सिद्धः । नैमित्तिकश्चाय प्रयोग 'धर्मेण पापमपनुदति' इति श्रुतपापक्षयार्थः ।

'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसजश्चेन्द्रियार्थेषु नरः पतनमृच्छति' ॥
'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' ॥

इति स्मृतिसिद्धस्याकरणप्रयुक्तप्रत्यवायस्य परिहारस्त्वानुषङ्गिकः । नरकेषु पतत्यनेनेति पतनं पापम् । ऋच्छति प्राप्नोति । अत्र विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालनं नित्यकर्मणां फलमिति केचित् । तन्न, प्रत्यवायो हि न कर्ममात्रातिक्रमात्, किन्तु विहितकर्मातिक्रमात्, 'अकुर्वन्विहितं कर्म' इति वचनात् । ततश्च सिद्धे विधौ विहितकर्मातिक्रमात्प्रत्यवायावगमः, अवगतस्य प्रत्यवायस्य परिहाराय च विधिरित्यन्योन्याश्रयः । अतः पापक्षय एव फलम् । तच्च पापमिह जन्मनि जन्मान्तरे च सञ्चितम्, 'पूर्वां सन्ध्यां जपस्तिष्ठेन्नैशमेनो व्यपोहति' 'कषाये कर्मभिः पक्वे' 'धर्मेण पापमपनुदति' इत्यादिश्रुतिस्मृतिभ्यः । न च निमित्तोद्देशेन पापक्षयरूपफलोद्देशेन च कथं कर्मविधिः, वाक्यभेदप्रसङ्गादिति वाच्यम् । न ह्येकमेव वाक्यं निमित्ते फले च कर्म विधत्ते, किन्तु यावज्जीववाक्यं निमित्ते कर्म विधत्ते, अन्यच्च श्रुतार्थापत्तिकल्पितं वाक्यं फले विधत्त इत्यदोषः । न चैवमप्युद्देश्यद्वय एकस्य विधिर्विरुध्यत इति वाच्यम् । न हि द्वयोरेकरूपमुद्देश्यत्वमस्ति । निमित्तस्य हि [1]सिद्धवत्काररूपमुद्देश्यत्वम्, पापक्षयस्य तु स्वारसिकप्रवृत्तिविषयत्वात्मकप्रयोजनत्वरूपम् । न ह्येवं विधयोरुद्देश्ययोः फलनिमित्तयोरेकत्र विरोधोऽस्ति । यदि हि निमित्तमपि फलवत्कर्मजन्यं स्यात् तदा द्वयोरप्येकप्रकारसम्बन्धाद्विरोधः स्यात् । प्रत्युत निमित्ते कर्म क्रियमाणं किं प्रयोजनमिति सुतरामपेक्षते, निमित्तेऽवश्यकर्तव्यतायाः नैष्फल्ये सत्यनुपपत्तेः । अतश्च निमित्तबलेनापेक्ष्यमाणं फलं कथं तेन विरुद्धं स्यात् । ननु—निमित्तत्वमुपलक्षणत्वं ज्ञापकत्वं व्याप्यत्वरूपम्, व्याप्तिश्च यदा यदा जीवनं तदा तदा कर्मेत्येवरूपा, अन्यथा कर्मणि कदाचिज्जीवनसम्बन्धस्यावर्जनीयत्वेन तत्प्रतिपादनानर्थक्यात्, तथा च व्याप्त्या निमित्ते कर्मण आवश्यकत्वरूपनियमोऽर्थाद्गम्यते, अनावश्यकत्वे

1. सिद्धवत्कारनिर्देशरूपम् क, घ, ग, ङ, मु पा.

सिद्धान्तयति—

**कर्तुर्वा श्रुतिसंयोगात् ॥२॥**

वाशब्द एवार्थे। 'धर्म' इत्यनुवर्तते। एकस्यैव काम्यप्रयोगस्य यावज्जीवकालमभ्यासो नात्र विधीयते, किन्तु जीवने निमित्ते नियमेन भिन्नः प्रयोगः पुरुषधर्मतया विधीयते। कुतः ? श्रुतिसंयोगात्—एवं सत्येव यावज्जीवपदस्य यजेश्च मुख्यवृत्तिकत्वसम्भवात्। कर्मधर्मत्वे हि 'यावति विन्दजीवोः' इति सूत्रविहितणमुलन्त्ययान्तस्य 'अव्ययकृतो भावे भवन्ति' इति जीवनक्रियावाचिनः काले लक्षणा स्यात्, एकस्या यागक्रियाया यावज्जीवकालसम्बन्धानुपपत्त्या यजिनाप्यभ्यासो लक्षणीयः स्यात्। न च यथा "पौर्णमास्यां पौर्णमास्या यजेत" इति विहितकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिः, तथा यावज्जीवकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिसम्भवान्नाभ्यासलक्षणेति वाच्यम्। अपौर्णमासीव्यावृत्त्यर्था चोदनेति युक्ता तत्र सकृदनुष्ठानेन शास्त्रार्थसिद्धिः। इह तु चोदना अजीवनकालव्यावृत्त्यर्था न भवति, तदा कर्मणोऽनुष्ठानस्याप्रसक्तेः। किन्तु समस्तजीवनकालग्रहणार्थैव चोदनेत्यभ्यासलक्षणा दुर्वारा। तत्र 'यावति विन्दजीवोः' इति णमुल्विधायकं सूत्रम्। तत्र 'समानकर्तृकयोः पूर्वकाले' इत्यनुवर्तते 'णमुल्' इति च। यावत्युपपदे समानकर्तृकयोः क्रिययोर्मध्ये पूर्वकालिकक्रियावृत्तेर्विन्दतेर्जीवतेश्च णमुल्स्यादित्यर्थः। जीवतेश्च प्राणधारणमर्थः। प्राणः उच्छ्वासः नासाबहिर्निर्गतो वायुविशेषः। तस्य धारणं नासिकया अन्तराकर्षणम्। 'अव्ययकृतो भावे' इति वचनाण्णमुलन्तस्यापि जीवनक्रिया अर्थः। पौर्वापर्यं समानकर्तृकत्वञ्च द्योत्यम्। यावच्छब्दो जीवनं सामस्त्येन विशिनष्टि। तच्च जीवनम् 'समानकर्तृकयोः' इति क्रियान्तरसम्बन्धे विहितेन णमुल्प्रत्ययेन होमाद्यन्वयितया प्रतीयते। स च सम्बन्धो यदि जीवनस्य होमादिक्रियायाश्चाङ्गाङ्गिभावादिः स्यात्, तर्हि सर्वेष्वपि जीवनेष्ववश्यं होतव्यमित्यर्थस्यासिद्धेर्यावच्छब्दार्थस्य प्राप्त्यभावादनुवादो नावकल्पेत। नापि विधातुं शक्यते, जीवनानामयुगपत्कालकत्वेन तत्सामस्त्यस्य कर्मणि विधानासम्भवात्। ततश्च यथा भावलक्षणे विहिता सप्तमी भावं प्रति लक्षणत्वं निमित्तत्वे सति घटते नान्यथेत्यर्थान्निमित्तत्वेऽवतिष्ठते, तथा यावच्छब्दबलादेव सम्बन्धसामान्यवाची णमुल्प्रत्ययो निमित्तनैमित्तिकभावेऽवस्थित इति जीवनस्य तावन्निमित्तत्वम्। एवञ्च जीवने निमित्तेऽग्निहोत्रं प्रयोक्तव्यं दर्शपूर्ण-

**लिङ्गदर्शनाच्च कर्मधर्मे[1] हि प्रक्रमेण नियम्येत [2]तत्रानर्थकमन्यत्स्यात् ॥३॥**

"अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्" इति दर्शपूर्णमासयोः स्वकालातिक्रमे प्रायश्चित्तस्य पाथिकृतेष्टेर्विधानादपि लिङ्गान्न कर्मधर्मः। यः दर्शपूर्णमासयाजी, 'करणे यजः' इति भूते णिनि। ताभ्यामिष्टवान्सन्नमावास्यां पौर्णमासीं वा कर्म अतिपादयेत्—स्वकालात्प्रच्यावयेत् सः पाथिकृतीमिष्टिं कुर्यादिति तदर्थः। कथमिदं लिङ्गदर्शनमित्यत आह—कर्मधर्मे हीति। काम्यप्रयोगस्य शेषतया यावज्जीवनकाले विधीयमाने प्रक्रमेण—प्रक्रान्तेन यावज्जीवनकालेन काम्यप्रयोगो नियम्येत—'यम उपरमे' समाप्येत। एवञ्च कर्मधर्मपक्षे यावज्जीवमभ्यस्तरूपस्यैकस्य प्रयोगस्य फलार्थतया मध्ये समाप्त्यभावेन जीवनदशायां न कोऽपि दर्शपूर्णमासाभ्यामिष्टवान् भवतीति यावज्जीवनकालोत्तरमेव दर्शपूर्णमासयाजीति वक्तव्यम्। यथा ऐन्द्रवायवादियज्याभ्यासे कृत्स्ने निर्वृत्ते सति सोमयाजीति तद्वत्। तथाविधस्य च दर्शपूर्णमासयाजिनस्तत्र तस्मिञ्जीवने समाप्ते सति अन्यत्-स्वकालातिक्रमप्रायश्चित्ततया पाथिकृतेष्टिविधानम् अनर्थकम्-असङ्गतार्थकं स्यात्। यावज्जीवनकालेन समाप्तदर्शपूर्णमासकर्मणो दर्शपूर्णमासयाजिनो दर्शपूर्णमासातिपत्तिर्हि स्वकालातिक्रमात्मा न यावज्जीवनकालमध्ये वक्तुं शक्या, तदा दर्शपूर्णमासकर्मणः समाप्त्यभावात्, नापि जीवनोत्तरकाले, तस्य स्वकालत्वाभावात्, तदानीं कर्तुर्यजमानस्याभावेन प्रायश्चित्तविध्यसाङ्गत्याच्च। कर्तृधर्मत्वे च यावज्जीवनकालो न कर्माङ्गम्। पौर्णमास्यादिकालावच्छिन्नजीवनभेदाच्च नैमित्तिकः प्रयोगो भिद्यत इति प्रतिमासं दर्शपूर्णमासप्रयोगस्य समाप्तत्वाज्जीवद्दशायामेव[3] दर्शपूर्णमासयाजीति व्यपदेशः सम्भवतीति तं प्रति प्रयोगस्य पौर्णमास्यादिस्वकालातिपत्तावुत्तरकाले प्रायश्चित्तविधानं समञ्जसं भवति ॥

इतोऽप्येवमित्याह—

**[4]व्यपवर्गञ्च दर्शयति श्चेत्कर्मभेदः स्यात् ॥४॥**

"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति सोमात्प्राग्दर्शपूर्णमासयो.

1. धर्मे। हि 2. तत्रानुष्ठेयम्.
3. जीवद्दशायामेव क, ख, ग, घ, मु.पा. 4. अपवर्गम्

निमित्ते सत्यपि कदाचित्कर्मणोऽकरणे निमित्तत्वव्याघातात्। एवञ्च तस्य फलार्थत्वे फलेच्छायामसत्यामननुष्ठाने सति निमित्तत्व व्याहन्येत इति चेत्, न हि काम्यत्व-नैमित्तिकत्वयो स्वरूपेण विरोधोऽस्ति। फलेच्छाया कादाचित्कत्वमेव हि तद्विरोधे बीजम्। प्रकृते च न पापक्षयस्य [1]कदाचित्कस्यचिदप्यनिच्छास्ति, दु खाधायकपाप-निवृत्ते सर्वदाभिलषणीयत्वात्। न च येन पाप नैवाचर्यते तस्य न तदिच्छेति वक्तुं शक्यम्, इह जन्मन्यनाचरणेऽप्यनादिजन्मान्तरप्रवाहार्जितपापराशिक्षयेच्छाया अवर्जनीयत्वात्। न च ब्रह्मलोकान्तविरक्तस्य मुमुक्षोर्न तदिच्छेति वाच्यम्। मुमुक्षु-णापि पापक्षयस्यावश्यमभिलषणीयत्वात्। न ह्येतज्जन्मनि जन्मान्तरेषु चार्जितेषु नरकप्रापकेषु सत्सु मोक्ष [2]सम्भवतीति भवति पापक्षय [3]फलम्, [4]विरक्तस्य कर्मा-नधिकारात्, "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुते 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता' इत्यादिस्मृतेश्च। तत्र क्रिमिकीटभावाद्याधायक पापान्तरं प्रत्यवा-यरूप नित्यकर्माकरणादुत्पद्यत इति श्रुतिस्मृतिभ्यो गम्यते। तत्र ज्ञानकर्ममार्गपरिभ्र-ष्टानधिकृत्य "य एतौ पन्थानौ न विदुस्ते कीटपतङ्गा" इत्यादि श्रुति।

'एतद्यो न विजानाति मार्गद्वितयमात्मन।
दन्दशूक पतङ्गो वा कीटो वा जायते ध्रुवम्॥
अकुर्वन्विहितं कर्म' इत्यादिस्मृतिश्च।

तत्परिहारो नित्यकर्मणामानुषङ्गिकं फलमिति षष्ठस्य तृतीये सर्वशक्त्यधिकरणे टुप्टीकावार्तिकतन्त्ररत्नयो स्पष्टम्। एवञ्च जीवने निमित्ते कर्मण पापक्षयार्थतया विधौ नियमोऽप्यर्थसिद्ध। 'कर्तृधर्मो नियमश्चोद्यते' इति भाष्यादिग्रन्थस्याप्ययमेवा-शय। जीवनञ्च सायप्रात पौर्णमास्यादिकालावच्छिन्नं निमित्तमिति पष्ठस्य द्वितीये 'तेषामौत्पत्तिकत्वात्' इत्यधिकरणे स्पष्टीभविष्यतीत्यास्ता तावत्॥

इतोऽपि कर्तृधर्म इत्याह—

1 कादाचित्कस्य कचिदपि क, ख, ग, घ, मु पा

2. सम्भवतीति पापक्षय'. क, घ, ङ, ग, मु.पा

3. फलविरक्तस्य ख, ग, मु पा.

4 विरक्तस्येत्यादि स्मृतेश्चेत्यन्तो ग्रन्थ ङ पुस्तके नास्ति

तथा सति वैमृधं प्रकृत्य "यदि निर्वपेदन्वेव निर्वपेत्" इति वचनं व्यर्थं सद्विरुध्येत, "प्रजापतिः पुरुषमसृजत" इत्युपक्रम्य तैत्तिरीयकेऽग्निहोत्रदर्शपूर्णमासपशुबन्धादीनां केषाञ्चिदेव नित्यतया परिगणनञ्च विरुध्येत। तथा च विरोधोऽयमपि पूर्ववज्जरामरणनिर्मोकवत् कर्तृधर्मो यावज्जीविकं प्रयोगनियम इत्यवगमयति। तस्य च पुरुषार्थस्य नातिदेश इति वक्ष्यतेऽष्टमस्याद्ये 'कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्' इत्यत्र॥

नन्वेवमग्निहोत्रस्य दर्शपूर्णमासयोश्च नित्यत्वसिद्धावपि ज्योतिष्टोमादिषु का गतिः, तत्र यावज्जीववाक्याभावादित्यत आह—

**[1]कर्तुस्तु धर्मनियमात्कालशास्त्रं [2]निमित्तार्थं स्यात्॥७॥**

तुशब्दः शङ्कानिवृत्तौ। नेयं शङ्का। कुतः? कर्तुः धर्मनियमात्—"स्वर्गकामो ज्योतिष्टोमेन यजेत" इति विहितकाम्यप्रयोगादन्यस्य प्रयोगस्य ज्योतिष्टोमादौ पुरुषार्थतया नियमेन विधानात्। कुतः? यतः "वसन्ते वसन्ते ज्योतिषा यजेत" इति कालशास्त्रं वीप्सायुक्तं वसन्तस्य निमित्ततावोधनार्थं भवति। न चेदं वाक्यं काम्यप्रयोगविषयं भवितुमर्हति, 'वसन्ते ज्योतिषा यजेत' इत्येतावतैव तत्सिद्धौ वीप्सावैयर्थ्यात् यावत्कामं वसन्तस्याङ्गतायास्तावतैव सिद्धेः। अतो नैयमिकप्रयोगपरमेव वीप्सायुक्तं वसन्तवाक्यम्। तस्य हि प्रयोगस्य वीप्सावशाद्यावद्वसन्तं प्रयोगः सिद्धः। वीप्सा हि व्याप्तिः। सा च 'यदा वसन्तस्तदा ज्योतिष्टोमप्रयोगः' इत्येवरूपा वसन्तस्य निमित्तत्व एव सम्भवति नान्यथेति तस्य निमित्तत्वे वीप्सायुक्तवसन्तशास्त्रं पर्यवस्यति। एवञ्च सप्तमी निमित्तार्था "भिन्ने जुहोति" इत्यादिवत्, द्विर्वचनं तात्पर्यग्राहकमिति सिद्धो ज्योतिष्टोमस्य नैमित्तिकः प्रयोगः। एवमाग्रयणादिनित्यकर्मस्वप्यूह्यम्। प्रयोजनं पूर्वपक्षे—कामनावत एवाग्निहोत्रादिकर्मणः प्रयोगः, सोऽपि यावज्जीवमभ्यस्त एव कामायावकल्पते, सिद्धान्ते तु—कामनारहितस्यापि पापक्षयार्थः प्रयोगो नियतः, काम्यस्तु प्रयोगः सकृत्कृत एव फलाय कल्पत इति॥

इति प्रथमं यावज्जीवाधिकरणम्॥१॥

२

तदेवमुक्तेषु षट्सु भेदकारणेषु शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरेषु

---

1 कर्तुस्तु नियमात्. 2 निमित्तम्.

समाप्तिं दर्शयति । यदि हि यावज्जीवनकालः कर्मशेषः स्यात्तर्हि दर्शपूर्णमासप्रयोगमध्य एव सोमः कर्तव्य इति प्रक्रान्तस्य दर्शपूर्णमासकर्मणो भेदः नाशः स्यात्, "वि वा एतस्य [1]यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्यत्तन्त्रं प्रतायतेऽन्तरन्यामिष्टिं निर्वपन्ति" इत्यादिदर्शनात् । न हि दर्शपूर्णमासप्रयोगं समाप्य सोमोऽनुष्ठातुं शक्यते, यावज्जीवनकालेनैव तस्य समाप्यत्वात्तदुत्तरं च यजमानस्याभावात् । कर्तृधर्मत्वे तु प्रतिमासं दर्शपूर्णमासप्रयोगस्य समाप्तत्वान्नायं दोषो भवति ॥

इतोऽप्येवमित्याह—

## अनित्यत्वात्तु नैवं स्यात् ॥५॥

तुशब्दश्चार्थेऽन्वाचये । यदि च यावज्जीवनकालः कर्मधर्मः स्यात्तर्हि "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च जरया ह वा एष एताभ्यां निर्मुच्यते मृत्युना च" इत्येवमग्निहोत्रस्य दर्शपूर्णमासयोश्च जरामर्यत्ववचनं जरामरणमोचनार्थत्ववचनं च सङ्गतार्थकं न स्यात् । जरया वयोहान्या मर्यं समाप्यं न तु स्वेच्छयेति जरामर्यम् अवश्यानुष्ठेयम् । 'ह' 'वै' इति निपातावधारणे । एषः अग्निहोत्रस्य दर्शपूर्णमासयोश्च कर्ता जरया मृत्युना चावश्यं मुच्यत इति तदर्थं । कर्मधर्मे हि वचनमिदं विरुध्यते । कुतः ? अनित्यत्वात् । काम्यप्रयोगधर्मे हि यावज्जीवनकाले विधीयमाने नित्यप्रयोगस्यालाभात् काम्यप्रयोगस्य चानित्यत्वादवश्यानुष्ठेयत्वरूपजरामर्यत्ववचनविरोधः, काम्यप्रयोगस्यानित्यस्वर्गमात्रार्थत्वेन जरामरणनिवृत्तिफलकत्ववचनविरोधश्च । अनित्यत्वादित्यस्य नित्याभिलपणीयफलरहितत्वादित्यप्यर्थः । सिद्धान्ते तु नैमित्तिकप्रयोगस्य पापक्षयार्थत्वाच्छरीरारम्भकपापाभावाज्जरामरणनिवृत्त्यर्थत्वमुपपद्यते । न च "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यादिवाक्याज्जरामरणनिवृत्तिफलकत्वस्यापि सत्त्वेन तदनुवाद उपपद्यत इति वाच्यम् । एवं सति 'ह वै' इति निर्धारणानुपपत्तेः । 'जरामरणनिर्मोचनावधारणवचनं नियमपक्ष उपपद्यते' इति भाष्यस्याप्ययमेवाशयः ॥

इतोऽप्येवमित्याह—

## विरोधश्चापि पूर्ववत् ॥६॥

यावज्जीवनकालाभ्यासे कर्मधर्मतया विधीयमाने स विकृतिष्वप्यतिदिश्येत ।

1 यज्ञ ऋध्यते, ए, ग, मु पा

वा वादित्यमग्निरनुसमारोहति" इति पूर्वमुक्तम्। अतो यजमानस्य गृहे सूर्योऽग्निं प्रविष्टो रात्रौ वसति। उदयानन्तरमग्निं विहाय गच्छति। ततश्च यथा अतिथये प्रद्रुताय वैमुख्येन गृहात्प्रस्थिताय आहार्यम् उपहर्तव्यमन्नम्। 'शून्याय' 'आवसथाय' इति चतुर्थ्यौ सप्तम्यर्थे। अतिथिवर्जिते शून्ये गृहे हरन्ति, तादृगेव तद्भवति, यदुदिते हूयत इति। सेयमुदितानुदितहोमनिन्दा कर्मभेद एवोपपद्यते, न तु तदेकत्वे। तस्मात्कर्मभेदः।

तथा अनन्तासु शाखास्वनन्तानामङ्गानामुपदिष्टानामेकस्मिन् कर्मण्युपसंहारस्यानुष्ठानस्य चाशक्यत्वात् अशक्यार्थोपदेशकतया अप्रामाण्यापातादपि कर्मभेदः। तथा मैत्रायणीयशाखायामग्निचयनमन्त्रसमाम्नाये अन्वारोहा नाम स्थण्डिलारोहणमन्त्रविशेषा अन्ते पठ्यन्ते। कचिच्छाखाया न ते मन्त्रा सन्ति। तत्राध्येतारो याज्ञिकाश्चेत्थ व्यपदिशन्ति—अन्वारोहेषु मैत्रायणीयानामग्नि समाप्यते, इतरेषान्त्वन्यत्र समाप्यते नान्वारोहेष्विति। तदेतत्कर्मभेद एवोपपद्यते। न ह्येकस्यैवाग्निकर्मण उभयत्र समाप्तिवचनमुपपद्यते। तस्मादपि कर्मभेद। तथा "यस्याग्निहोत्रमहुतं सूर्योऽभ्युदियात्" इत्यादिनोदितहोमे प्रायश्चित्तं विहितम्, तथा अनुदितहोमेऽपि। तदिदं प्रायश्चित्तविधान कर्मैकत्वे सति नोपपद्यत इति कर्मभेद। एतेन पूर्वोदाहृतनिन्दावाक्ययोर्विकल्पपरत्वमपि प्रत्युक्त भवति। विकल्पे सति ह्युभयथाप्यवैगुण्यात्प्रायश्चित्तद्वयविधानमप्यनर्थकं स्यात्। दृश्यते चोभयथा प्रायश्चित्तविधानाद्वैगुण्यम्। न चैतत्कर्मैकत्व उपपद्यत इति कर्मभेद। एवञ्च निन्दयाप्यपौनरुक्त्य वेदितव्यम्, वैकल्पिकत्वशङ्कानिराकरणार्थत्वात्।

तथा अन्यार्थदर्शनादपि भवति कर्मभेद। अन्यद्विधातु प्रवृत्तेषु वाक्येषु अन्यस्मिन्नर्थे लिङ्गदर्शनमन्यार्थदर्शनम्। तच्चात्र पञ्चविध परिहारसूत्रवशादुदाह्रियते। कचिच्छाखाया द्वादशाहसत्रे श्रूयते "यदि पुरा दिदीक्षाणा एतमेव बृहत्सामानमुपेयुरुपेतं ह्येषा रथन्तरम् अथ यद्यदिदीक्षाणा रथन्तरसामानमुपेयुः" इति। यदि पुरा पूर्वं दिदीक्षाणा दीक्षितवन्त कृतप्रथमसोमा स्यु तदा एतमेवातिरात्र बृहत्सामानमुपेयु। हि यस्मात्कारणात् प्रथमसोमे रथन्तरमेभि प्रयुक्तम्। यदि तु अदिदीक्षाणा अकृतप्रथमसोमास्तदा रथन्तरसामानमुपेयु, न रथन्तरसामानमकृत्वा बृहत्सामानमाहरेत् इति नियमादित्यर्थ। तदिदमनिष्टप्रथमसोमानामपि द्वादशाहसत्रवचन प्रतिशाखं

कानिचिदधिकानि भेदकारणानि शाखान्तरविहितकर्मस्वाशङ्क्य निराकर्तुमिदमारभ्यते। सन्ति शाखाभेदा 'काठकम्' 'शाकलम्' 'पैप्पलादम्' 'तैत्तिरीयम्' 'काण्वम्' 'माध्यन्दिनम्' 'कालापम्' इत्यादय। तत्र किं प्रतिशाखं कर्म भिद्यते ? उत एकमेव ? इति संशये पूर्वपक्षयति—

**नाम-रूप-धर्मविशेष-पुनरुक्ति-निन्दा-शक्ति-समाप्तिवचन-प्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे[1] भेदः स्यात् ॥ ८ ॥**

विशेषशब्दो नामादिषु त्रिषु सम्बध्यते। शाखाविशेषेषु विहितस्य कर्मणो नामविशेषादिना भेद स्यात्। तथाहि—'काठकाग्निहोत्रम्' 'कालापाग्निहोत्रम्' इत्यादिसञ्ज्ञाभेदादग्निहोत्रादिकर्म भिद्यते। रूपशब्देन गुण उच्यते। "वपया प्रचर्याग्नीषोमीयमेकादशकपालम्" इत्येकस्या शाखायाम् 'द्वादशकपालम्' इत्यन्यस्यामिति गुणभेद। धर्मविशेष. अध्ययनधर्मभेद.। कारीरेष्टिमन्त्रब्राह्मणम् "मारुतमसि" इत्याद्यधीयानास्तैत्तिरीयास्तावद्बोधायनसूत्रानुसारिण. भूमौ भोजनम् इत्याद्याचरन्ति, बोधायनीयेभ्योऽन्ये तु स्वशाखागतमिदमेवाधीयाना न तदाचरन्ति। तमिम धर्मविशेषमेकैव कारीरेष्टि' केषाञ्चिदाकाङ्क्षति नेतरेषामिति न सम्भवति। अत' कर्मभेद। यद्यपि गुणपर्याय एवाय धर्मविशेष, तथापि हविर्धर्मोऽन्तरङ्गो गुण पूर्वमुपात्त। अयन्तु इतिकर्तव्यतास्थानीयो बहिरङ्ग इत्यपौनरुक्त्यम्। पुनरुक्तिरभ्यास। एकमेवाग्निहोत्रादिकर्म सर्वत्र शाखास्वाम्नायत इति पुनरुक्त्या कर्म भिद्यते। यदि हि सर्वशाखास्वेक कर्म तर्ह्येकस्या शाखाया विहितस्य शाखान्तरे पुनर्वचनमनर्थक स्यात्। अत कर्मभेद.। एवमुदितहोमप्रस्तावे कचिच्छाखायामनुदितहोमो निन्द्यते—"प्रातरनृत ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। दिवा कीर्त्यमदिवा कीर्तयन्त. सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इति। अनुदिते सूर्ये "सूर्यो ज्योतिर्ज्योति सूर्य स्वाहा" इत्यभिधानमनृत सम्पद्यत इत्यर्थ.। अन्यस्यान्तु शाखायामनुदितहोमप्रस्तावे उदितहोमो निन्द्यते—"यदुदिते सूर्ये प्रातर्जुहुयात्, यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति, तादृगेव तत्" इति। अस्यार्थ—"अग्निं वा वादित्य. साय प्रविशति" "उद्यन्त

---

1. शाखान्तरेषु

वाच्यम्। विरोधिनि रथाक्षान्तरालवचने प्रत्यक्षे जाग्रति तदनुमानानुन्मेषात्। सत्यपि तदुन्मेषे पक्षसम्मितानिन्दाया अनुपपत्ते । निन्दया हि न पक्षसम्मिताविधि प्रकल्पयितुं शक्यते नापि तन्निषेध., रथाक्षान्तरालवचने सति तत्र पक्षसम्मिताया अप्रसक्तेः। प्रतिशाख कर्मभेदे तु रथाक्षान्तरालवचनं तच्छाखास्थयूपैकादशिनीविषयत्वाच्छाखान्तरे स्तुत्या वेदिसम्मिताविधिकल्पनं न विरुणद्धि। नापि कदाचित्प्राप्तायाः पक्षसम्मिताया अप्रसक्तिमासञ्जयति, यतस्तन्निन्दा नोपपद्येत। तस्मादपि कर्मभेदः।

तथा क्वचिच्छाखायां ज्योतिष्टोमातिरात्रे श्रूयते—"द्वे संस्तुतानां[1] विराजोऽतिरिच्येते" इति, शाखान्तरे "तिस्र संस्तुतानां विराजोऽतिरिच्यन्ते" इति। सम्यक् स्तुत स्तुति यासु ता [2]सस्तुताः स्तोत्रीया ऋच । विराडिति एकमनेक वा दशकं दशविंशतित्रिंशदादिरूपमुच्यते "दशाक्षरा विराट्" इति दर्शनात्। तदिदं प्रतिशाखं कर्मभेद एवोपपद्यते। न ह्येकस्मिन् कर्मणि द्वयोस्तिसृणां चातिरेक सम्भवति। तस्मात्कर्मभेद ।

तथा सारस्वते सत्रे श्रूयते—"ये पुरोडाशिनस्त उपवसन्ति" "ये सान्नाय्यिनस्ते वत्सान्धारयन्ति" इति। ये यजमाना पुरोडाशिन' अनिष्टप्रथमसोमतया ऐन्द्राग्नपुरोडाशकदर्शेष्टिमन्त, "नासोमयाजी सन्नयेत्" "एन्द्राग्न एकादशकपालोऽमावास्यायामसन्नयत" इति तेषां तद्विधानात्, ते पुरोडाशिन उपवसन्ति। असन्नयत उपवसथदिने वत्सापाकरणादि यत्कर्तव्यम् "ग्राम्येभ्य उपवसति" इत्यन्त तन्न कुर्वन्ति। ये तु यजमाना इष्टप्रथमसोमा सान्नाय्यिन, "सोमयाजी सन्नयेत्" इति तेषा तद्विधानात्, ते वत्सान्धारयन्ति अपाकुर्वन्ति मातृसकाश न गमयन्ति दोहाय। तदेवमनिष्टप्रथमसोमानामपि सारस्वतसत्रदर्शन प्रतिशाख कर्मभेदमवगमयति। कर्मैकत्वे हि ताण्डके ज्योतिष्टोमप्राथम्यवचनेन इष्टप्रथमसोमानामेव सारस्वतसत्राधिकारे सति सर्वेषां सान्नाय्यित्वात् "ये पुरोडाशिन" इति नावकल्पेत। यद्यपि "ये पुरा दिदीक्षाणा" इत्यन्यार्थदर्शनेन गतर्थमिदम्, तथापि प्रकरणान्तरेण परिहारस्य वक्ष्यमाणत्वात्पृथगुपादानम्।

---

1. सस्कृताना क, ग.
2. सस्कृता . क, ग

कर्मभेदमवगमयति । न हि कर्मैकत्वे सत्येतदुपपद्यते । ताण्डकशाखायाम् "एष वाव प्रथमो यज्ञो यज्ञानाम्" इति ज्योतिष्टोमस्य सर्वयज्ञेभ्य प्राथम्यविधानात् कर्मैकत्वे सर्वशाखासु ज्योतिष्टोमप्राथम्यनियमात् । प्रतिशाखं कर्मभेदे तु ताण्डकवचनेन तच्छाखास्थज्योतिष्टोमस्य प्राथम्यनियमे सत्यपि एतच्छाखास्थज्योतिष्टोमस्य तदनियमान्न विरोध इति कर्मभेदः ।

तथा तैत्तिरीयके यूपैकादशिनीविषये श्रूयते "यत्पक्षसम्मितान्मिनुयात्कनीया॑ꣳस यज्ञक्रतुमुपेयात्पापीयस्यस्यात्मन' प्रजा स्यात्, वेदिसम्मितां मिनोति ज्याया॑ꣳसमेव यज्ञक्रतुमुपैति नास्यात्मन पापीयसी प्रजा भवति" इति । अस्यार्थ —प्रकृतिभूतोऽग्निस्तावत्पक्ष्याकृतिक, "वयसां वा एष प्रतिमया चीयते" "व्याममात्रौ पक्षौ च पुच्छं च भवति" "अरत्निना पक्षौ द्राघीया॑ꣳसौ भवत" इत्यादिश्रवणात् । व्याममात्रौ पुरुषमात्रौ, 'पञ्चारत्नि पुरुषो व्यामश्च' इति बोधायनादय । यदि पक्षसम्मिता पक्षायामप्रमाणा यूपैकादशिनीं मिनुयादवटेषु निखन्यात्, पक्षायामप्रमाणं समशो दशधा विभज्य मध्ये अग्निष्ठयूप पार्श्वयो' पञ्च पञ्चेत्येकादशयूपावलिं मिनुयादिति यावत्, यद्वा पक्षाभ्या यावन्त प्रदेशमग्निर्व्याप्नोति तावत्प्रमाणां मिनुयात् । अग्नेस्तिर्यक्प्रमाणं शतधा विभज्य मध्ये एक पार्श्वयो पञ्च पञ्चेत्येकादशयूपावलि मिनुयात्, तदा कनीयासं स्वल्पतर यज्ञक्रतु प्राप्नुयात् । किञ्च अस्य पक्षसम्मितां यूपैकादशिनीं कुर्वाणस्य यजमानस्य प्रजा पुत्रपौत्रादि॰ पापीयसी दरिद्रतमा स्यात् । अतो वेदिसम्मितां मिनोति । आग्निकवेदिपूर्वार्धेतिर्यक्प्रमाणं समशो दशधा विभज्य मध्ये एकं यूप पार्श्वयो पञ्च पञ्चेत्येकादशयूपावलिं निखनति । एव सति 'ज्यायासमेव' इत्यादि स्पष्टम् । तदिय पक्षसम्मिता यूपैकादशिनीं कदाचित्प्राप्ता निन्दित्वा वेदिसम्मिताया स्तुति' प्रतिशाख कर्मभेदमवगमयति । कर्मैकत्वे ह्येतदनुपपन्न स्यात् । शाखान्तरे हि यूपैकादशिनीमधिकृत्य श्रूयते "रथाक्षान्तराला यूपावटा भवन्ति" इति । "अक्षश्चतु शतम्" इति श्रुति । चतुरधिक शतमङ्गुल्य इत्यर्थ । पक्षसम्मिताया[1] वेदिसम्मितायाञ्च यूपावटान्तरालप्रमाणं स्वल्पतरम् । एवञ्च शाखान्तरे यूपैकादशिन्या रथाक्षान्तरालवचने जाग्रति वेदिसम्मिताया अप्राप्तत्वात्स्तुति' कथमुपपद्येत । न चौदुम्बराधिकरणन्यायेन (या) स्तुत्या तद्विधानमनुमीयत इति

1 पक्षसमिताया वेदिसमितयाश्च. घ ङ

पपत्ते'। किञ्च यजुर्वेदे समाम्नातद्रव्यदेवतारूपयुक्तज्योतिष्टोमादिकर्मण[1] ऋग्वेदे याज्यानुवाक्यादिगुणमात्रं सामवेदे च स्तोत्रादिगुणमात्र विधीयते। अत साकाङ्क्षत्वाद्वेदान्तराणामतुल्यकार्यत्वात्समुच्चयो युज्यते। शाखान्तरेषु तु नैवं सम्भवति। सर्वासु ह्यध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि द्रव्यदेवतारूपवन्ति तान्येवान्योन्यनिरपेक्षाणि विधीयन्त इति शाखान्तराणां तुल्यकार्यत्वाद्विकल्प । अतो नैकस्यानेकशाखाध्ययनसम्भव' । उक्तञ्च वार्तिके—

'स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते ।
एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति' ॥ इति ।

तदिदं सूत्रकार एवानुपद वक्ष्यति। तदेवं भेदकारणाभावादभेदप्रत्यभिज्ञानाच्च सर्वशाखास्वेकं कर्मेति सिद्धम् ॥

अथ पूर्वपक्षोक्तहेतून् प्रतिक्षिपन्नाम्ना कर्मभेद तावन्निराचष्टे—

## न स्यादचोदनाभिधानत्वात् ॥ १० ॥

न नाम्ना कर्मभेद. स्यात्। कुत' ? अचोदनाभिधानत्वात्, चोदना कर्मोत्पत्तिवाक्यम्, तद्गतमभिधानं नामधेयं चोदनाभिधानम्, अतद्रूपत्वात्काठकादिनाम्न इत्यर्थ.। 'सज्ञा चोत्पत्तिसंयोगात्' इत्यधिकरणे उत्पत्तिवाक्यगता सज्ञा कर्म भिनत्तीत्युक्तम्। काठकादिसज्ञाश्च नोत्पत्तिगता इति न तत कर्मभेद प्रसज्यते। यद्वा चोद्यत इति चोदना कर्म, तदभिधानत्वाभावात्काठकादिशब्दस्येत्यर्थः। ग्रन्थनाम्न एव सतोऽस्य लक्षणया कर्मणि प्रयोग.। न च वैपरीत्य शङ्क्यम्, काठकादिशब्दस्याग्निहोत्र इव दर्शपूर्णमासादिकर्मस्वपि प्रयोगदर्शनेनानेकार्थशक्त्यापाताद् अग्निहोत्रमात्रवाचकत्वे कर्मान्तरेषु लक्षितलक्षणापाताच्च ॥

इतोऽपि काठकादिसज्ञाया न कर्मभेदकत्वमित्याह—

## [1]षां चैककर्म्यं[2] स्यात् ॥ ११ ॥

चशब्दोऽन्वाचये। सर्वेषामप्यग्निहोत्रदर्शपूर्णमासादिकर्मणां काठकादिसंज्ञाया अविशिष्टत्वेन भेदहेतो संज्ञाभेदस्याभावेन भेदो न स्यात् ॥

इतोऽप्येवमित्याह—

1. ज्योतिष्टोमादिकर्मणि. क, ग, मु पा.    2 सर्वेषां चैककर्म्यात्.

तथा उपहव्ये "अग्निष्टोमो रथन्तरसामा, अश्वः श्यावो दक्षिणा" इत्येकस्यां शाखायाम्, "उपहव्य उक्थ्यो बृहत्सामा, अश्व श्वेतो दक्षिणा" इत्यन्यस्याम्। उपहव्यो नाम सोमयागविशेष। अत्र शाखाद्वयविहितस्योपहव्यस्यैकत्वे बृहद्रथन्तरपृष्ठयोर्विकल्प स्यात्। तस्य च प्रकृतित एव प्राप्तत्वात्पुनर्विधानमनर्थकम्। कर्मभेदे तु प्रकृतिप्राप्तविकल्पस्य तत्तच्छाखास्थोपहव्ये व्यवस्थासिद्ध्यर्थं पुनर्वचनमिति प्रतिशाखं कर्मभेद एव युक्त ॥

सिद्धान्तयति—

## एकं वा संयोगरूपचोदनाख्याविशेषात् ॥९॥

वाशब्द एवार्थे। सर्वास्वपि शाखास्वेकमेव कर्म प्रत्येतव्यम्, न तु कर्मभेद। कुत? संयोगरूपचोदनाख्याविशेषात्—"स्वर्गकामो ज्योतिष्टोमेन" इति फलसंयोगस्य सोमरसेन्द्रवाय्वादिद्रव्यदेवतास्वरूपस्य 'यजेत' इति धात्वर्थानुरक्तभावनात्मिकायाश्चोदनाया ज्योतिष्टोमादिसमाख्यायाश्च सर्वत्राविशेषात्। तदेभि कारणै प्रत्यभिज्ञानात्सर्वासु शाखास्वेकमेव कर्म, यथा ताण्डके पञ्चविंशब्राह्मणे षड्विंशब्राह्मणे च ज्योतिष्टोमद्वादशाहौ पुनराम्नातौ न भिद्येते, यथा वा तैत्तिरीयके प्रथमकाण्डेऽष्टमप्रश्ने प्रथमाष्टके च षष्ठसप्तमाष्टमप्रश्नेषु "अनुमत्यै पुरोडाशमष्टाकपाल निर्वपति" इत्यादिना आनुमतादिकर्माणि राजसूयिकान्यनुक्रान्तानि न भिद्यन्ते तद्वत्। न च प्रकरणान्तरवच्छाखान्तरेषु परस्परासन्निधान भेदहेतुरिति वाच्यम्। असन्निधान हि तदानीं बुद्धावपरिवर्तनम्। तच्च प्रतियोग्यनुयोगिनोर्ज्ञातयोरेव भेदबुद्धि जनयितुमीष्टे। येन हि प्रदेशान्तरे किञ्चित्कर्म गृहीत भवति स एव तत्सदृशमन्यत्रोपलभमानस्ततोऽन्यदिति शक्नोत्यध्यवसातुम्। शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधादपूर्ववदुच्यमानेषु न भेदबुद्धिर्जायते। न च योऽनेकशाखाध्यायी तस्य प्रतिशाख कर्मभेदबुद्धि स्यादिति वाच्यम्, एकस्यानेकशाखाध्ययनाभावात्। स्वाध्यायत्व हि प्रतिव्यक्ति गोत्वादिवत्प्रतिशाख समवैति। ततश्च 'अधीतेन स्वाध्यायेनेष्ट भावयेत्' इत्यर्थपर्यवसन्नस्वाध्यायविधौ स्वाध्यायस्योपादेयतया तद्गतैकत्वस्य पश्वेकत्ववत् पित्रादिपरम्परागतत्वरूपस्वत्वस्य समासान्तर्गतस्याश्वाभिधान्यामश्ववच्च विवक्षितत्वादेकशाखाध्यायिना शाखान्तराध्ययन नावश्यमनुसर्तव्यम्। न चैव वेदान्तरस्याप्यध्ययनं न प्रसज्यत इति वाच्यम्। 'वेदानधीत्य वेदौ वा' इत्यादिवचनान्तरेण तदु-

न स्वरूपसत्। शाखान्तरेषु च पुनर्वचनं नैव तथाविध भवितुमर्हति, एकस्य पुरुषस्यानेकाशाखाश्रवणाभावात्। ननु मेधाविनस्तत्सम्भव इत्यत आह—श्रुतिसंयोगाविशेषादिति । शाखान्तरश्रवणसंयोगस्यैकशाखाश्रवणसयोगाद्विशेषाभावादित्यर्थ । कठो हि काठकमग्निहोत्रं श्रुत्वा तैत्तिरीयकमग्निहोत्रं शृण्वन्नपि स्वशाखयैव प्रतिपन्नत्वात्तैत्तिरीयान् प्रत्येव बोधकमिदं तैत्तिरीयशाखागतमग्निहोत्रवाक्यमिति कल्पयन्न पुनःश्रुतिं मन्यते। एवं तैत्तिरीयादिरपि काठकादिवचन पुनःश्रुति मन्यत इति सर्वोऽपि जनः शाखान्तरं शृण्वन्नप्यश्रुतमेव मन्यते इत्यपौनरुक्त्यम्॥

नन्वेकस्यानेकशाखाश्रवणाभावः कुत इत्यत आह—

## वाक्यासमवायात् ॥ १७ ॥

स्वाध्यायविधेरुक्तरीत्या एकशाखाध्ययनविधिपरत्वादेकस्यानेकशाखाध्ययनाभावादेकस्मिन् पुरुषे शाखान्तरवाक्यस्यासमवायान्न तच्छ्रवणसम्भव इत्यपुनर्वचनमित्यर्थः। इदन्तु सूत्र भाष्ये परिभ्रष्टमिति वार्तिककृतः॥

नन्वेकस्या एव शाखाया अध्ययनविधौ शाखान्तरानर्थक्यमिति तदध्ययनमपि प्राप्तमिति पौनरुक्त्यं दुर्वारमित्यत आह—

## अर्थासन्निधेश्च ॥ १८ ॥

चशब्द उक्तसमुच्चये। एकमेव पुरुष प्रत्यनेकशाखागतस्यार्थस्यासन्निधे पुरुषविशेषान् प्रत्येव सन्निवेशे शाखान्तराणामानर्थक्यमित्यर्थ । यथा एकशाखागत कर्म पुरुषान्तरेषु पुन. श्रूयमाणमपि प्रतिपत्तृभेदान्न पुनरुक्तम्, एव शाखान्तरेष्वपीति भावः॥

इतोऽपि न पौनरुक्त्यमित्याह—

## न चैकं प्रति शिष्यते ॥ १९ ॥

चशब्द उक्तसमुच्चये। अग्निहोत्रादिकर्म प्रतिशाखं नैकमेव पुरुषं प्रति शिष्यते—'शासु अनुशिष्टौ' विधीयते, [1]किन्त्वर्थिमात्र प्रति सर्वशाखासु विधीयमानमेकमेक पुरुषमुपतिष्ठते। तत्रैकस्यानेकशाखाश्रणात्पुनर्वचनतः प्रतिशाखं कर्मभेदे एकार्थत्वात्समुच्चयानुपपत्तौ विकल्प आश्रयितव्य' स्यात्। तद्वरं प्रत्यभिज्ञानतः

1. किन्त्वर्थमात्र. क,ख,ग,घ,ङ, मु.पा.

## कृतकश्चाभिधानम् ॥ १२ ॥

चशब्द उक्तसमुच्चये। 'तेन प्रोक्तम्' इति तद्धितप्रत्ययान्तकाठकादिनामधेयं प्रवचननिमित्तत्वात् कृतकम्—इदानीन्तनम्। कर्माणि त्वनादिवेदसिद्धत्वादनादीनि। न हि तानीदानीन्तनसंज्ञावशाद्भेदमर्हन्ति। न हि प्रवचनात् प्राङ्न भेदः पश्चाद्भेद इति युज्यते। तस्मादपि न काठकादिनाम्ना कर्मभेदः॥

रूपभेदं प्रत्याह—

## एकत्वेऽपि परम् ॥ १३ ॥

परं—नामानन्तरोक्तं कपालसङ्ख्यात्मकरूपान्यत्वं कर्मण एकत्वेऽपि वचनाद्व्रीहियवादिवद्विकल्पेनोपपद्यते। न चोत्पत्तिशिष्टत्वात्कथं विकल्प इति वाच्यम्। उभयोरपि सङ्ख्ययोरुत्पत्तिशिष्टत्वाविशेषात्॥

धर्मविशेषं प्रत्याह—

## विद्यायां शास्त्रम् ॥ १४ ॥

भूमिभोजनादिव्रतादेशकं धर्मशास्त्रं विद्याया कारीरीष्टिमन्त्रब्राह्मणाध्ययनविषये प्रवृत्तम्। अतोऽध्ययनाङ्गमेव तत् न तु कर्मधर्मः, श्रुत्यादिपट्प्रमाणागोचरत्वात्। अतो न ततः कर्मभेदः॥

पुनरुक्तिं प्रत्याह—

## आग्नेयवत्पुनर्वचनम् ॥ १५ ॥

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति" [1]इति पुनर्वचनमैन्द्राग्नस्तुत्यर्थत्वेनानन्यगतिकत्वाभावान्न कर्मभेदकमित्युक्तं पूर्वपादान्ते। एवं शाखान्तरे विहितस्य सेतिकर्तव्यताकस्य ज्योतिष्टोमादिकर्मणः शाखान्तरे पुनर्वचनं न कर्म भिनत्तीत्यर्थः॥

नन्वत्र विधेयान्तराभावान्नार्थवादत्वमिति पुनर्वचनं कर्म भिन्द्यादित्यस्वरसादुक्तं परिहारमुपेक्ष्य पुनर्वचनमेवात्र नेत्याह—

## [2]अद्विर्वचनं वा [3]श्रुतिसंयोगाविशेषात् ॥ १६ ॥

वाशब्द एवार्थे। पुनर्वचनं तावत्पुनःश्रवणसंयुक्तमेव कर्मभेदमवगमयति,

---

1. इति पूर्ववचनम्. क,ख,ग,घ,ङ,च, मु पा 2 द्विर्वचन क,ख,ग,घ,ङ,च, मु पा.
3 अश्रुति

न्वारोहेषु समाप्तिवचनञ्च तच्छाखाविहिताङ्गकलापसमाप्त्यभिप्रायेणेति सूत्रकार एव स्पष्टमुपपादयिष्यति ॥

अथ यदुक्तमुदितहोमेऽनुदितहोमे च प्रायश्चित्तविधानमुभयथाप्यवैगुण्यादनर्थकमिति तत्परिहर्तुमनुभाषते[1]—

## प्रायश्चित्तं निमित्तेन ॥ २२ ॥

अनुदितकालमतिक्रम्योदितहोमे उदिकालमप्राप्यानुदितहोमे च प्रायश्चित्तविधान कर्मभेदमवगमयतीति यदुक्त तत्परिहर्तव्यमित्यर्थः ॥

परिहरति—

## प्रक्रमाद्वा नियोगेन ॥ २३ ॥

वाशब्द एवार्थे । नियोगेन वैकल्पिकानां पदार्थाना प्रयोगादावेकतरनिर्धारणेनैव प्रयोगस्य प्रक्रमादुदिते होष्यामीति निर्धार्य प्रक्रान्तेऽग्निहोत्रप्रयोगे उदयात्प्रागेवानुष्ठिते सति दोष । एवमनुदिते होष्यामीति प्रक्रम्योदितहोमप्रयोगेऽपि । अत उभयथापि प्रायश्चित्तविधान कर्मैकत्वेऽप्युपपद्यते । अत्रोदितानुदितकालयोरन्यतरकालं प्रति प्रयोगमादौ निर्धार्य प्रयोगप्रक्रम' न तु सर्वप्रयोगादावेव सकृत्तन्निर्धारणम् , "यदि वैमृधं निर्वपेदन्वेव निर्वपेत्" इतिवदत्र वचनाभावात् । प्रत्युत वाजसनेयके चातुर्मास्येषु साकमेधपर्वणि "आनीकवते क्रैडिने च साक सूर्येणोद्यता निर्वपति" इति सूर्योदयकालिके कर्मणि प्रातरग्निहोत्रपूर्वोत्तरकालिकत्वयोरैच्छिकविकल्पानुवादो दृश्यते "अथ प्रातरहुते हुते वाग्निहोत्रे इतरथा कामयेत' इति । कल्पकाराणप्ययमेवार्थोऽनुमत । आपस्तम्बसत्याषाढकात्यायनादौ हि दाक्षायणयज्ञस्य दर्शपूर्णमासाभ्यामादिविकल्प उक्तः 'सोऽथ दर्शपूर्णमासयो प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्या वा यजेत' इत्यादिना । तथा वैमृधविषयेऽपि 'तस्य यथाकामी प्रक्रमे प्रक्रमात्तु नियम्यते' इत्यादिना आदिविकल्प उक्त । धूर्तस्वामिभाष्ये च 'पुन पुन प्रक्रमनियमवचनाद्यत्र प्रक्रमनियमवचन तत्रैव प्रक्रमनियमो नान्यत्र, तेनाग्निहोत्रादौ द्रव्यकालादीनां न प्रक्रमनियम ' इत्युक्तम् 'होमकाल सङ्कल्पयितव्य. कर्मादौ' इति च । तस्मादुदितानुदितकालयोर्न प्रक्रमनियम. । यत्तु—

1. अनुवदति. ग.

कर्मैक्ये सति शाखानामेव पुरुषव्यवस्थया तदाश्रयणमित्येकस्यानेकशाखाध्ययनाभावादपुनरुक्तता ॥

इतोऽपि न पुरुक्तिरित्याह—

**समाप्तिवच्च सम्प्रेक्षा ॥ २० ॥**

चशब्द उक्तसमुच्चये। स्वार्थिको वतिः 'नित्यवदाम्नातम्' इत्यादिवत्। मैत्रायणीयास्तावदन्वारोहमन्त्रान्तेऽग्नेः समाप्तिं व्यपदिशन्ति 'अत्रास्माकमग्निः समाप्यते' इति। एकस्यानेकशाखाश्रवणतः प्रतिशाखं कर्मभेदे सति यावदेव येषां समाम्नातं तावदेव तेषां समाप्यत इत्यत्र 'अस्माकम्' इति न ब्रूयुः। तथा चैकस्यैवाग्नेरत्रास्माकं समाप्तिरन्येषामन्यत्रेत्युक्तिसामञ्जस्याद् एकस्यानेकशाखाश्रवणतः पुनरुक्तौ च तदनुपपत्तेः पुरुषव्यवस्थयैव तदाश्रयणं युक्तमिति न पुनरुक्तिः ॥

तदेव षड्भिः पुनरुक्तिं परिहृत्य निन्दादित्रयं प्रत्याह—

**एकत्वेऽपि पराणि[1] ॥ २१ ॥**

पुनरुक्त्यनन्तरमनुक्रान्तानि निन्दाशक्तिसमाप्तिवचनानि कर्मैकत्वेऽप्युपपद्यन्ते। तथाहि—"उदिते जुहोति" "अनुदिते जुहोति" इत्यग्निहोत्रकालौ विधीयेते। तत्रैकनिन्दा अन्यस्तोतुं प्रवृत्तेत्यविरोधः। न च विकल्पाश्रयणप्रसङ्गात्कर्मभेदाश्रयणमेव युक्तमिति वाच्यम्। प्रतिशाखं भिन्नयोरपि कर्मणोः फलं प्रति विकल्पाश्रयणस्याविशिष्टत्वात्। अशक्तिस्तु [2]एकशाखागतानेकब्राह्मणविहिताङ्गकलापोपसंहारेऽप्यविशिष्टा। यो ह्येकशाखागताङ्गकलापविधीनुपसंहर्तुं शक्नुयाच्छक्नोत्यसौ सर्वास्वपि शाखास्वङ्गविधीनुपसंहर्तुम्। न हि सर्वासु शाखासु सर्वेऽङ्गविधय उपसंहर्तव्या येनाशक्यता स्यात्, स्वाध्यायाध्ययनतः सर्वास्वपीतरशाखास्वधिकविधीनामेवोपसंहार्यत्वात्। अधिकविधयश्चैकशाखातोऽपि हीनपरिमाणा एव भवन्तीति नाशक्यता। सत्यामपि शक्तौ शाखान्तरगताधिकविधीनामुपसंहार ऐच्छिक एव न त्वावश्यकः, शाखान्तराध्ययनानित्यत्वस्य प्रतिपादितत्वात्, क्वचिच्छाखासु तेषामनाम्नानबलाच्च; अन्यथा अङ्गान्तरविधीनामिवाधिकविधीनामपि सर्वशाखास्वाम्नानापत्तेः। मैत्रायणीयानाम-

1. निन्दाशक्तिसमाप्तिवचनानि इत्यधिकमन्यत्र दृश्यते.
2. एकशाखागतानेकविधिविहित क,घ,ङ, मु.पा.

खास्थज्योतिष्टोमविषयत्वात्। हि यस्मात्कारणात् तत्र—ताण्डके ज्योतिष्टोमकर्मणः न चोदना—उत्पत्तिर्नास्ति, येन [1]तत्रत्यज्योतिष्टोममात्रविषयं प्राथम्यवचनं स्यात्। तस्मात् कर्मभेदपक्षेऽप्यनिष्टप्रथमसोमानां द्वादशाहे दर्शनस्य विरोधात् "यद्यदिदीक्षाणाः" इति वाक्ये अदिदीक्षाणशब्दे द्वादशाहस्य आहारव्यपदेशः—अनुष्ठानस्य व्यपदेशः स्यात्। 'द्वादशाहेनादिदीक्षाणा.' इति व्याख्येयमिति यावत्। तथा च नैतत्कर्मभेदे लिङ्गमिति भाव ॥

एवं प्रथममन्यार्थदर्शनं परिहृत्य द्वितीयं निराचष्टे—

**द्रव्ये [2]वा अचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २९ ॥**

वाशब्द' सम्भावनायाम्। कर्मैकत्वे सति द्रव्ये—अग्नौ वेदिसम्मिताया अचोदितत्वात्पक्षसम्मितावेदिसम्मितारथाक्षान्तरालविधीना क्रमेणार्थिकस्तुतिकल्प्यश्रौताना तत्तच्छाखिन प्रति अव्यवस्था—व्यवस्थाया अभाव स्यात्—सम्भाव्येत। ततश्च रथाक्षान्तरालवाक्येन [3]पक्षसम्मितावेदिसम्मितयोर्बाधे सति पक्षसम्मिता कथं निन्द्येत; कथं वा स्तुत्या वेदिसम्मिताविधिरुन्नीयेत। नैवमस्ति, वेदिसम्मिताया अग्नौ श्रुतत्वेन तस्या रथाक्षान्तरालवाक्येनानारभ्याधीतेन सामान्यविषयेण बाधायोगात्। ननु रथाक्षान्तरालवाक्यस्य क्वावकाश इत्यत आह—निर्देशादिति। अनग्निचित्ये सर्वस्तोमादिक्रतौ यूपैकादशिनीनिर्देशाद्रथाक्षान्तरालवाक्य तत्र व्यवतिष्ठेत। ततश्च साग्निचित्यानग्निचित्यक्रतुभेदेन यूपैकादशिन्यामेकस्यामेव वेदिसम्मितात्वस्य रथाक्षान्तरालत्वस्य चोपपत्तेर्न विरोध.। नन्वेवमपि पक्षसम्मितानिन्दाया. का गतिरित्यत आह—तस्मादिति। वेदिसम्मितारथाक्षान्तरालयोर्विहितत्वात्पक्षसम्मिताया नित्यानुवादः "नान्तरिक्षे न दिव्यग्निश्चेतव्य" इतिवत्। कात्यायनस्त्वाह 'यूपैकादशिनी चेद्रथाक्षान्तराला यूपावटा स्यु, वेदिपूर्वार्धं सम विभज्य पक्षसम्मिता वाग्नौ' इति। पक्षसम्मिताविधि. शाखान्तरे दृष्ट इति तदभिप्राय ॥

---

1. तत्र ज्योति क,ख,ग,घ,ङ च, मु.पा. 2. च.

3. पक्षसमितावेदिसमिता च बाधिता सती कथ निन्द्येत, ख,ग, पक्षसंमिता वेदिसमिता सती कथ निन्द्येत. क,घ,ङ,च

'यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदितेऽनुदिते चैव होमभेदो यथा भवेत् ॥
तस्मिन् कुलक्रमायतमाचार त्वाचरेद्बुध. ।
स गरीयान्महाबाहो सर्वशास्त्रोदितादपि' ॥

इति सुमन्तुवचनं दाक्षिणात्यस्मृतिनिबन्धन उदाहृतं तत्प्राचीननिबन्धनेषु क्वाप्यदर्शनादुपेक्ष्यम्, स्वकुलाचारप्राशस्त्यपरं वा, 'स गरीयान्' इति लिङ्गादित्यन्यदेतत् ॥

'एकत्वेऽपि पराणि' इति सूत्रे 'पराणि' इति बहुवचनेन सामान्यत परिहार्यत्वेनोपक्षिप्त, सिंहावलोकनन्यायेन तदुपपादयति—

**समाप्ति पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥२४॥**

मन्त्रायणीयानामन्वारोहेष्वग्निसमाप्तिवचन यथाज्ञाते यावत्पदार्थजातं तच्छाखायामाम्नातं तद्विषयतया प्रतीयेत। कुत ? पूर्ववत्त्वात्—शब्दप्रयोगस्य तात्पर्यपूर्वकत्वात्। तात्पर्यञ्चात्र समाप्तिवचनस्याग्नावसमाप्ते प्रयुज्यमानस्य तच्छाखाविहितपदार्थजातसमाप्तिपरत्वमिति[1] निश्चिनुम इति कर्मैकत्वेऽपि न विरोध, आध्वर्यवे प्रयोगे समाप्ते 'ज्योतिष्टोम. समाप्त.' इति यथा। 'समाप्तिवच्च सम्प्रेक्षा' इत्यत्र कर्मैकत्वे लिङ्गमुपपादितम्, इह तु कर्मैकत्वे विरोध. परिहृत इत्यपौनरुक्त्यम् ॥

यदुक्तम् "यद्यदिदीक्षाणा" इत्यनिष्टप्रथमसोमाना द्वादशाहे दर्शनं प्रतिशाखं ज्योतिष्टमभेदमवगमयति, कर्मैकत्वे ताण्डकावगतज्योतिष्टोमप्राथम्यविरोधात्, कर्मभेदे तु ताण्डकावगतज्योतिष्टमप्राथम्यवचनस्यैतच्छाखास्थज्योतिष्टोमविषयत्वाभावान्न विरोध इति तत्राह—

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २५ ॥**

यदेतत्कर्मभेदे लिङ्गत्वेनोपन्यस्त द्वादशाहेऽनिष्टप्रथमसोमदर्शन तत्कर्मैकत्वेऽप्यविशिष्टम्। कुत ? सर्वशेषत्वात् ताण्डकगतज्योतिष्टोमप्राथम्यवचनस्य सर्वशा-

1. परत्व क,ग,घ,ङ, मु. पा.

## प्रत्ययं चापि दर्शयति ॥ ३१ ॥

चापीति निपातसमुदाय उक्तसमुच्चये। सर्वास्वपि शाखास्वेकस्यैव प्रत्ययं-विधान दर्शयति वेदः। मैत्रायणीयशाखायां प्रयाजा नोत्पन्ना। तत्र शाखान्तरोत्पन्नान्-प्रयाजानधिकृत्य धर्मो विधीयते "ऋतवो वै प्रयाजा समानत्र तिष्ठता होतव्या" इति। समानत्र—एकत्र। तथा क्वचिच्छाखायाम् "कुटरुरसि" इत्यश्मादानमन्त्रो नाम्नात। तत्र "कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वा" इति मन्त्रोऽश्मा-दाने विनियुज्यते। तदेतत्सर्वशाखास्वेक कर्मेति दर्शयति। तस्मात्सर्वशाखाप्रत्यय-मेक कर्म ॥

अत्र शङ्कते—

## अपि वा श्रुतिसंयोगाद्विधिपृथक्त्वमेकैकस्यां[1] शाखायां व्यवतिष्ठेत ॥ ३२ ॥

अपि वेति निपातसमुदायो नेत्यर्थे। न कर्मैक्यम्। किं तर्हि? एकैकस्यां शाखाया प्रतिशाख विधीयमानानां कर्मणां पृथक्त्व—भिन्नत्व व्यवतिष्ठेत—निश्चितं भवेत्। कुत? श्रुतिसंयोगात्—क्रमकालपरिमाणानां प्रतिशाखं श्रुतिबोधितत्वात्। कर्मैक्ये च शाखान्तरविध्युपसहारे सति तेपां बाध स्यात्। 'क्रमसंयोगात्' इति पाठान्तरम्। तत्र क्रमग्रहणं कालपरिमाणयोरप्युपलक्षणम् ॥

परिहरति—

## [2]विरोधिना त्वसंयोगादैककर्म्ये तत्संयोगा-द्विधीनां सर्वप्रत्यय. ॥ ३३ ॥

तुर्नेत्यर्थे विधीनामित्यत्रान्वेति। सर्वशाखास्वैककर्म्ये सत्यप्येकशाखागतानां विधीना विधीयमानपदार्थानां क्रमकालपरिमाणं न शाखान्तरगतेन पदार्थजातेन बाध्यते। कुत? विरोधिना असयोगात्। न हि क्रमकालपरिमाण शाखान्तरीयपदा-र्थैर्विरुध्यते, क्रमकालपरिमाणस्य पदार्थान् प्रति गुणत्वात्। प्रत्युत तदेव तै प्राधान्या-द्बाध्येत। तथा च तत्संयोगात्—शाखान्तरीयपदार्थाना समावेशसम्भवात् सर्वप्रत्यय सर्वासु शाखासु कर्मैकत्वप्रत्यय. प्रामाणिक, न तु कर्मभेद। ननु शिष्टाकोपाधि-

---

1 एकस्या  2 विरोधिना तु सर्वकर्मप्रत्यय स्यात्.

तृतीयमन्यार्थदर्शनं प्रत्याह—

**विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २७ ॥**

"अतिरात्रे षोडशिनं गृह्णाति" इति विहितं षोडशिग्रहणम् "नातिरात्रे षोडशिनं गृह्णाति" इति प्रतिषिध्यते। तत्र ग्रहणपक्षे चत्वारि शतानि त्रिषष्टिश्च स्तोत्रीया इति तिसृणां दशकादतिरेकः, अग्रहणपक्षे चत्वारि शतानि द्विचत्वारिंशच्च स्तोत्रीया इति द्वयोरतिरेक इति न विरोधः ॥

चतुर्थं प्रत्याह—

**सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २८ ॥**

सारस्वतसत्रस्य ज्योतिष्टोमपूर्वकत्वात्कृतसोमस्य च दर्शे सान्नाय्यविधानात्तत्र "ये पुरोडाशिनः" इत्यैन्द्राग्नपुरोडाशकदर्शेष्टिमता दर्शनं विरुद्धमिति यच्छब्दो यदेति व्याख्येयं स्यात्। एवञ्च यदा पौर्णमास्यां पुरोडाशिनस्तदोपवसन्ति यदामावास्याया सान्नाय्यिनस्तदा वत्सानपाकुर्वन्तीत्यर्थलाभान्न कर्मैक्येऽपि विरोधः ॥

पञ्चमं निराकर्तुमनुवदति[1]—

**[2]हव्येऽप्रति . ॥ २९ ॥**

अनर्थकः प्रतिप्रसवः अप्रतिप्रसवः. हव्ये—उपहव्ये रथन्तरबृहत्साम्नो शाखाद्वयविहितयोः प्रकृतितः प्राप्तत्वात्पुनर्विधानमनर्थकम्। कर्मभेदे तु तत्तच्छाखास्थोपहव्ये व्यवस्थया तत्तत्सिद्ध्यर्थं पुनर्वचनमिति यदुक्तं तत्परिहर्तव्यमित्यर्थः ॥

परिहरति—

**गुणार्थो वा पुनः श्रुतिः ॥ ३० ॥**

वाशब्दः शङ्कानिवृत्तौ। नात्र शाखाद्वये रथन्तरबृहत्सामनी विधीयेते, येन कर्मैकत्वे पुनर्विधानमनर्थकं स्यात्। किन्तु प्रकृतितो विकल्पेन प्राप्तयोस्तयोः पुनः श्रुतिः गुणार्थो संस्थादक्षिणागुणविधानार्थो। यदि रथन्तरसामा तदा अग्निष्टोमसंस्थः, तत्राश्वः श्यावश्च दक्षिणा; यदि बृहत्सामा तदोक्थ्यसंस्थः, तत्राश्वः श्वेतश्च दक्षिणेति न विरोधः ॥

तदेवं कर्मभेदसाधकानि लिङ्गानि निरस्य कर्मैक्यसाधकं लिङ्गं दर्शयति—

---

1 अनुभाषते. ग. 2 उपहव्ये प्रतिप्रसव

॥ श्रीः ॥

# अध्वरमीमांसा

# कुतूहलवृत्तिः

---

## तृतीयोऽध्यायः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

हेतुहेतुमद्भावसङ्गतिं सूचयन्वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते—

**अथातः शेषलक्षणम् ॥ १ ॥**

अथ-कर्मभेदकथनानन्तरम् अत-कर्मभेदकथनस्य वर्तिष्यमाणशेषशेषिभावविचारहेतोर्वृत्तत्वात् शेषलक्षणं-शेषशेषिभावनिरूपणं क्रियते[1], असिद्धे कर्मभेदे शेषशेषिभावविचारस्याभित्तिचित्रायितत्वात् । सूत्रे शेषग्रहणं भावप्रधानं शेषित्वस्याप्युपलक्षणम्, तस्याप्यवश्यविज्ञेयतया शेषशेषिभावस्यैवाध्यायार्थत्वौचित्यात् । एकस्मिन् गृहीतेऽन्यदपि नान्तरीयकतया गृहीतप्रायमित्यन्यतरदेवोपात्तम् । तत्रापि 'शेषोऽस्यास्तीति शेषी' इति[2]मतुबर्थविज्ञानस्य शेषत्वज्ञानाधीनत्वाच्छेषत्वमेवोपात्तम् । आरम्भार्थो वाथशब्दः शेषलक्षणमधिकृतं वेदितव्यमिति । न च दर्शपूर्णमासयोः सोमयागस्य च सत्यपि भेदे शेषशेषित्वस्याभावाद्भेदस्य शेषशेषित्वहेतुत्वाभावात्कथं तन्निरूपणयोर्हेतुहेतुमद्भाव इति वाच्यम् । न हि कारणे सत्यवश्यं कार्यसत्त्वनियमः, वर्षादौ कारणे सति कदाचित्सस्यादिकार्यस्यादर्शनात्; असति कारणे कार्याभावस्तु

---

1, आरभ्यते क, घ, ग, मु. पा.     2 मतुबर्थं इज्ञानस्य ख, ग. मु. पा.

करणे आचमनादयः स्मार्तपदार्थाः श्रौतक्रमकालपरिमाणैर्न बाध्यन्त इति व्यवस्थापितम्, तत्र स्मार्ता अपि चेन्न बाधिताः किमिति श्रौतास्तैर्बाधिष्यन्त इति तेनैव गतार्थमिति चेत्सत्यम्, अत्रैव स विचारः सूत्रकृता कण्ठरवेण कृत इति शिष्टाकोपाधिकरणं विषयान्तर एव योजितं वार्तिके। तदेवं सर्वशाखासु तदेवेदमिति प्रत्यभिज्ञानाद्भेदशब्दान्तरादीनामन्यतमस्याभावात्सर्वशाखाप्रत्ययमेकं कर्म। तदुक्तम्—

'तस्मात्तदेवेति मतेर्न कर्म भिन्नं कथञ्चित्प्रतिशाखमिष्टम्।
न कारणं सप्तममस्ति चान्यदेव यथोक्तैव तु भेदसिद्धिः'॥ इति॥

## इति द्वितीयं शाखान्तराधिकरणम्॥ २॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमानमहाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजिशरभजितुक्कोजिभोसलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण तदध्वर्युणा बाल्य एव तद्दयानिर्वर्तितापरिमितमहाग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामादिवरिष्ठसोममखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपेययाजिसुतेन अन्नपूर्णागर्भजातेन अपारपदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायां जैमिनिसूत्रव्याख्यायाम् अध्वरमीमांसाकुतूहलवृत्तौ द्वितीयोऽध्यायः॥



नुत्पादकत्वेन तच्छेषत्वानापातात्; अतः परोपकारकत्वमेव पारार्थ्यं वाच्यमित्युक्तदोषतादवस्थ्यम्। एवञ्च शेषत्वं दुर्वचमित्यत आह—

**शेषः परार्थत्वात् ॥ २ ॥**

शेषशब्दो भावप्रधानः। शेषत्वं परार्थत्वादन्यदविनाभावादिकं न भवति, किन्तु परार्थत्वमेव शेषत्वमित्यर्थः। परोद्देशप्रवृत्तपुरुषव्यापारगोचरत्वं पारार्थ्यम्। ततश्च प्रधानस्याङ्गोद्देशप्रवृत्त्यगोचरत्वान्नातिव्याप्तिः, कर्तुर्यागाद्युद्देशप्रवृत्तसञ्जीभावादिव्यापारविषयत्वात्कालस्य च प्रतीक्षणव्यापारविषयत्वाद्देशस्य च प्राप्त्यनुकूलव्यापारविषयत्वाद्यागशेषत्वम्। फलस्य च पुरुषेण स्वोपभोग्यतयोत्पाद्यत्वात्पुरुषशेषत्वम्। न चैतादृशं पारार्थ्यं श्रुत्याद्यगम्यत्वात्कथं शेषलक्षणं भवेदिति वाच्यम्, केवलश्रुत्यादिभिः पारार्थ्यस्यानभिधानेऽपि विधिसहकृतैस्तस्य बोधितत्वात्। विधिर्हि शब्दभावना चेतनप्रवर्तनारूपा। सा च फलोद्देश्यकव्यापारे चेतनं प्रवर्तयितुं शक्नोति [1]नानुद्दिष्टफल इत्यर्थाद्विधिविषयस्य फलोद्देशव्यापारविषयत्वं गमयति। तत्र "सोमेन यजेत" इत्यादौ प्रवर्तनात्मको विधिः साक्षादर्थभावनात्मकपुरुषव्यापारं विषयीकरोति तद्विशेषणतया धात्वर्थं तद्विशेषणतया सोमादीनपि, विधेर्विशिष्टविषयत्वाद्धात्वर्थस्य पदश्रुत्या भावनाविशेषणत्वस्य सोमादीनाञ्च तृतीयाश्रुत्यादिना धात्वर्थविशेषणत्वस्यावगमात्। एवञ्च श्रुत्यादिना तत्तत्पदार्थविशेषणत्वमुखेन पारार्थ्यबोधकविधौ साहाय्याचरणाद्भवति श्रुत्यादिगम्यं पारार्थ्यं शेषलक्षणम्। परार्थत्वाच्छेष इत्युच्यत इत्यपि सूत्रं व्याख्येयम्। ततश्च शेषलक्षणं शेषपदप्रवृत्तिनिमित्तं चास्मिन्सूत्रे श्रुत्यैव निरूपितं भवति। केचित्तु श्रुत्या प्रवृत्तिनिमित्तं कथितम्, अर्थात्तु शेषत्वरूपमित्याहुः॥

इति द्वितीयं शेषलक्षणाधिकरणम्॥ २ ॥

३

उक्तं शेषत्वं क्वचिदेव नियतमित्याह—

**द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥**

व्रीह्यादीनि द्रव्याणि, आरुण्यादयो गुणाः, अवघातादिक्रियाः संस्काराः। एतेषु

1, नानिर्दिष्ट. क, घ, ङ. मु. पा.

नियत इति भेदासत्त्वे शेषशेषित्वस्याभावदर्शनाद्भवति भेदः शेषशेषिभावहेतुः। न चैवमपि "सोमेन यजेत" "व्रीहीनवहन्ति" इत्यादिषु द्रव्यकर्मणोः शेषशेषिभावस्य कर्मभेदं विनापि दर्शनात्कथं भेदशेषलक्षणयोर्हेतुहेतुमद्भाव इति वाच्यम्। न ह्यस्मिन्नध्याये द्रव्यकर्मणोरेव परस्परं शेषशेषित्वं निरूप्यम्[1], किन्तु प्रयाजाग्नेयादीनां कर्मणामपि। तेषाञ्च शेषशेषित्वस्य कर्मभेदाधीनतया भेदनिरूपणं विना कृत्स्नस्य शेषशेषित्वस्य निरूपयितुमशक्यत्वादस्ति हेतुहेतुमद्भावः। शेषलक्षणमित्यनेन शेषस्वरूपं, शेषशब्दप्रवृत्तिनिमित्तं, शेषस्य शेषिणा सहान्वयबोधस्य विनियोगापरनामधेयस्य प्रकारो, विनियोजकानि श्रुत्यादिप्रमाणानि, तेषाञ्च बलाबलं विरोधश्च कचित्, क्वचिच्च न विरोध इत्येतत्सर्वं श्रुत्यर्थाभ्यां प्रतिज्ञातमिति वेदितव्यम्। तेन श्रुत्यादिनिरूपणस्यासाङ्गत्यं निरस्तमित्यास्तां तावत्॥

इति प्रथमं शेषलक्षणप्रतिज्ञाधिकरणम्॥ १॥

२

ननु किमिदं शेषत्वम्? अविनाभावो वा? प्रयोज्यत्वं वा? अधिकविहितत्वं वा? विध्यन्तविहितत्वं वा? उपकारकत्वं वा? पारार्थ्यं वा? नाद्यः, बीजाद्यविनाभूतस्याङ्कुरादेर्बीजादिशेषत्वापत्तेः, 'येन विना यन्न भवति स तस्य शेषः' इति विवक्षायामपि सव्येतरविषाणयो रूपरसादीनामाग्नेयाग्नीषोमीयादियागानाञ्च परस्परं शेषत्वापत्तेः। नापि 'यो येन प्रयुज्यते स तस्य शेषः' इति द्वितीयः पक्षः, [2]तुषावापाद्यप्रयोज्येषु पुरोडाशकपालादिष्वव्याप्तेः, "पुरोडाशकपालेन तुषानुपवपति" "वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति" इत्यादिना तेषां तुषावापादिशेषत्वविज्ञानात्। नापि 'यद्यस्मादधिकं विधीयते स तस्य शेषः' इति तृतीयः पक्षः, प्रधानापेक्षया अङ्गानां प्रत्येकमाधिक्याभावेनासम्भवात्, अङ्गसमुदायस्य तत्सत्त्वेऽपि प्रत्येकमङ्गानां शेषत्वानुपपत्तेः, क्वचिदङ्गानामल्पीयस्त्वेन प्रधानानां भूयस्त्वेनाव्याप्त्यतिव्याप्त्यापत्तेश्च। नापि चतुर्थः, प्रधानविध्यपेक्षया पूर्वविहितानां शेषत्वानुपपत्तेः, पूर्वपूर्वविहिताङ्गं प्रत्युत्तरोत्तरविहिताङ्गस्य शेषत्वापत्तेश्च। नापि पञ्चमः, अङ्गानुष्ठानस्य प्रधानप्रयुक्तत्वेन प्रधानानामङ्गेष्वनुष्ठानलक्षणोपकारहेतुतया तेषामपि शेषत्वापत्तेः। नापि षष्ठः, पारार्थ्यं हि न परोत्पादकत्वम्, तथा सति प्रयाजादीनामाग्नेयादियागा-

1. निरूपणीय ग, घ. 2 तुषोपवापा. ग, घ.

न्भावात् शेष्यपेक्षया प्रधानस्य सुतरां तच्छेपापेक्षया प्रधानत्वात्। याग प्रति पुरुपस्य शेषत्वाद्यागसाध्यं फल प्रत्यपि शेषत्वम्। तथा च कर्मफलपुरुपेपु शेपत्व शेपित्वञ्च, द्रव्यगुणकसस्कारेषु तु शेपत्वमेवेति स्थितम्। तदुक्तं वार्तिके—

'द्रव्यादेर्यत्र शेपत्व तत्र नैवास्ति शेपिता।
फलयागनराणान्तु द्व्याकारत्व परस्परम्॥' इति।

तदेवं वृत्तिकारानुसारेण सूत्रचतुष्टयमिदं व्याख्यातम्। भाष्ये त्वन्यथा व्याख्यातम्। तद्यथा—

## द्रव्यगुणसंस्कारेषु बादरिः

व्रीह्यादिद्रव्यं तावत्पुरोडाशादिकार्यं निर्वर्तयति, गुणस्त्वरुणादि क्रयादि-क्रियासाधनं गवादिद्रव्य परिच्छिनत्ति। अवघातादिसंस्कारोऽपि यागसाधन-पुरोडाशादिनिर्वृत्तये चोदितस्य व्रीह्यादिद्रव्यस्य स्वरूपेणायोग्यतया वैतुष्यादिमुखेन तद्योग्यत्वमापादयति। यागस्तूत्पन्नविनष्टो न स्वर्गादिफल साधयितुमीष्टे। न च "यजेत स्वर्गकाम" इत्यादिवाक्यस्य का गतिरिति वाच्यम्। तत्र हि यागकर्तव्य-तामात्रमुच्यते। स्वर्गादिशब्दाश्च स्रक्चन्दनादिपरतया साधनानुवादतयाप्युपपन्नाः। न च भावार्थाधिकरणेधात्वर्थस्य करणत्वमुक्तमिति वाच्यम्। उक्तस्यापि तस्य षष्ठे स्वर्गकामाधिकरणे समानपदश्रुत्या धात्वर्थस्यैव फलत्वं न तु स्वर्गादेरित्याक्षिप्य साधयिष्यमाणत्वात्। ततश्च स्वर्गकामाधिकरणन्यायेन भाव्यत्वात्प्रच्युत्यनन्तरमेव भावार्थाधिकरणप्रवृत्तिरिति नेदानीं तद्विरोधशङ्कावकाशः। तस्मान्न यागस्य शेषत्वम्। फलन्तु यागं प्रति साध्यमानत्वात्प्रधानम्। फलभोक्तृत्वात्पुरुषोऽपि प्रधानम्। तस्माद्द्रव्यगुणसस्कारेष्वेव शेषत्व न तु कर्मफलपुरुषेष्विति बादरिर्मन्यते।

तदेतन्निराकरोति—

## कर्माण्यपि जैमिनिः फलार्थत्वात्

इति। कर्माण्यपि फलशेषतया जैमिनिर्मन्यते। कुतः? फलार्थत्वात्। स्वर्ग-कामाधिकरणसिद्धान्ते धात्वर्थस्य भाव्यताया निराकरिष्यमाणत्वेन भावार्थाधिकरण-न्यायेन करणत्वे सति फलार्थताया अक्षते। सिद्धे च तस्य फलकरणत्वेऽपूर्वं

पुरोडाशादिनिर्वृत्त्या यागं प्रति शेषत्वमेव विद्यते न तु फलपुरुषकर्मस्विव शेषत्वं शेषित्वं चेत्युभयरूपत्वमिति बादरिराचार्यो मन्यते; तदुक्तमित्यर्थः ।'

तदिदं बादरिमतं परिष्कुर्वन् कर्मणां तावदुभयरूपत्वमुपपादयति—

**ण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥**

पुरुषं फलञ्च प्रति कर्माणि आग्नेयादियागरूपाणि शेषतया शेषितयापि जैमिनिर्मन्यते । तत्र व्रीह्यादिवत्पुरुषस्य यागनिर्वर्तकत्वेन शेषत्वात्तं प्रति यागानां प्राधान्यं, यागाना [1]फलार्थतया यागशेषिभूतफलं प्रति पुरुषस्य प्रधानतया पुरुषं प्रति तेषा गुणत्वञ्च विद्यते । शेषिभूतं फल प्रत्येव यागानां शेषत्वे हि तच्छेषिणं पुरुषं प्रति तेषां सुतरां शेषत्वमिति पुरुषं प्रति सिद्ध यागानामुभयरूपत्वम् । तदेव यागाना फलशेषिण पुरुषं प्रति प्राधान्ये सति पुरुषशेषभूतं फलमपि प्रति प्राधान्यम्, स्वशेषिणं प्रत्येव प्रधानत्वे शेषभूत स्वं प्रति सुतरां प्राधान्यस्य वक्तव्यत्वात् । तदेवं फलं प्रत्यपि यागानामुभयरूपत्वम् ॥

अथ फलस्य यागान् प्रत्युभयरूपत्वमुपपादयति—

**फलञ्च पुरुषार्थत्वात् ॥ ५ ॥**

यागान् पुरुषञ्च प्रति फलमप्युभयरूपतया जैमिनिर्मन्यते । कुत ? पुरुषार्थत्वात् । फलस्य हि यागनिष्पाद्यतया प्राधान्याद्यागसाधनं पुरुषमपि प्रति प्राधान्यम्, शेषिणम् प्रति प्रधानत्वे तच्छेषमपि प्रति प्राधान्यावश्यम्भावात् । पुरुष प्रति फलस्योपभोग्यत्वेन गुणत्वं स्वशेषिपुरुषं प्रत्यनुष्ठेयत्वेन शेषिभूत याग प्रत्यपि गुणत्वम्, यागशेषपुरुषशेषस्य सुतरां यागशेषत्वात् पुरुषोपभोग्यत्वात्फलं तच्छेष, अनुष्ठेयतया पुरुषशेषियागं प्रति [2] शेषित्वात्पुरुषं प्रति प्रधानञ्च ॥

तदेवं फलस्य यागं पुरुषञ्च प्रत्युभयरूपत्वं निरूप्य पुरुषस्य तन्निरूपयति—

**[3]पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥**

पुरुषोऽपि यागं फलञ्च प्रत्युभयरूप इति जैमिनिर्मन्यते । कुत. ? कर्मार्थत्वात् । पुरुषस्य फल प्रति भोक्तृत्वेन प्राधान्यात्तत्साधन यागमपि प्रति प्राधान्यम्, यागशेषिभूतं फल प्रति प्रधानस्य पुरुषस्य तच्छेषभूतं याग प्रत्यपि प्राधान्यावश्य-

1 परार्थतया. ख, ग, मु पा 2 शेषत्वात् क, ख, ग, घ, ङ, मु पा.
3, अन्यत्र क्वचिदिव सूत्रमेव न दृश्यते.

"सायंदोहं दोहयति" "कुम्भ्यामासिञ्चति" इत्यादयः सांनाय्यसंयुक्ताः । ते किं सर्वे औषधादीनां सर्वेषामपि शेषभूताः ? उत यथासंयोगं व्यवस्थया शेषभूताः ? इति संशयः । तत्र सिद्धान्तेनोपक्रमते—

**तेषामर्थेन सम्बन्धः ॥७॥**

तेषाम्-अवघातादीनाम् अर्थेन-यागसाधनपुरोडाशादिविध्यपेक्षितवैतुष्यादि-प्रयोजनवशेन व्यवस्थया सम्बन्धः समावेशः इत्यर्थः ॥

तत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषा-त्प्रकरणाविशेषाच्च ॥ ८ ॥**

तुर्नार्थः । [1] अवघातादिधर्मस्तावन्न व्रीह्यादिषु स्वरूपोद्देशेन विधीयते, तस्य तत्रानर्थक्यात् । [2] किन्त्वपूर्वसाधनरूपोद्देशेनैवेति नवमाद्याधिकरणे वक्ष्यते । अपूर्वञ्च "यजेत स्वर्गकामः" इति श्रुतफलकरणत्वान्यथानुपपत्त्या [3]कल्प्यमानमाग्नेयादियागानां समुदितानामेकफलसाधनत्वादेकमेव कल्प्यते । तदपूर्वसाधनरूपोद्देशेन विहितोऽवघातादिः सर्वेषामेव तेषामव्यवस्थया धर्मः स्यात्, न तु श्रुतस्यैव । कुतः ? संयोगतः अविशेषात्–एकापूर्वसंयोगस्य सर्वत्राविशिष्टत्वात् । नन्वाग्नेयादियागानामुत्पन्नविनष्टानां क्रमिकाणां साहित्येन प्राच्योदीच्याङ्गोपकृतानां फलजनकत्वनिर्वाहायावान्तरापूर्वावश्यम्भावे सति अवघातादीनां तत्तदपूर्वसाधनेषु व्यवस्थयैव समावेशः सिध्यतीत्याशङ्कायामपि संयोगतोऽविशेषात् इत्येवोत्तरम् । संयोगतः– संयोगे धर्माणां सम्बन्धे अविशेषात्–अविशेषकत्वात् । अवान्तरापूर्वाणां सत्त्वेऽपि यागस्वरूपवदेव तेषां निष्फलत्वेन धर्मप्रयोजकशक्तिर्नास्तीति फलापूर्वमेव प्रधानत्वाच्च प्रयोजकमवधार्यते । अस्तु वावान्तरापूर्वाणां धर्मप्रयोजकत्वम्, तथापि न धर्मव्यवस्थासिद्धिः । कुतः ? प्रकरणाविशेषात्—प्रकरणगतापूर्वसाधनमात्रोद्देशेन धर्मा विधीयमानाः प्रकरणगतत्वाविशेषात्सकलावान्तरापूर्वसाधनोद्देशेन विज्ञायन्ते । ननु व्रीह्यादिपदमेव धर्मव्यवस्थापकम्, अन्यथा तद्वैयर्थ्यादित्यत आह—चेति ।

1 अवघातादि . ग, घ　　2. किं त्वपूर्वसाधनस्वरूपो क, मु. पु.
3. कल्प्यम्. ख, मु. पा.

तन्निर्वाहकमाश्रीयत इति नश्वरस्यापि [1]फलार्थत्वमुपपद्यते। अतः कर्मणामप्यस्ति फलं प्रति शेषता। स्वर्गकामाधिकरणस्य प्रपञ्चार्थश्चायमारम्भः।

फलस्यापि शेषत्वमस्तीत्याह—

## फलञ्च पुरुषार्थत्वात्

इति। फलञ्च पुरुषं प्रति शेषः। कुतः? पुरुषार्थत्वात्। फलस्य हि कामपदात्पुरुषार्थत्वं गम्यते। 'स्वर्गो मे स्यात्' इति हि कामयते न तु 'स्वर्ग आत्मानं लभताम्' इति। अतः फलं भोग्यं पुरुषो भोक्ता भवति। भोग्यञ्च भोक्तारं प्रति शेषभूतम्। तस्मात्फलस्यापि शेषत्वम्।

पुरुषस्य तदाह—

## पुरुषश्च कर्मार्थत्वात्

इति। पुरुषश्च शेषभूतः। कुतः? कर्मार्थत्वात्। कर्मनिर्वर्तकत्वात्। न च कर्तुः कर्मार्थत्वं न श्रुत्यादिगम्यमिति वाच्यम्। 'यजेत' इत्याख्यातेन क्रियावाचकेन तदाश्रयस्य कर्तुराक्षेपादेव गुणतया लाभात्, "यजमानेन सम्मितौदुम्बरी भवति" इत्यादौ तृतीयाश्रुत्यादिना [2]कर्तुर्विहितत्वाच्च। तस्मात्पुरुषोऽपि कर्मशेष इति। विस्तरस्त्वन्यत्र ज्ञेयः॥

इति तृतीयं बादर्यधिकरणम्॥३॥

४

तदेवं शेषस्वरूपेऽवगमिते प्राप्तावसरस्तावद्विनियोगविचारः प्रस्तूयते। आ बलाबलविचाराद्विनियोगविचारः। शेषस्य शेषिणा सहान्वयबोधनं विनियोग इत्युच्यते। तत्र विनियोजकेषु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यात्मकेषु षट्सु प्रमाणेषु श्रुतेः प्राबल्यादस्मिन् पादे श्रुतिविनियोगप्रकारः [3]प्राधान्येनाभिधीयते। श्रुतिर्नाम कर्मत्वकरणत्वादिकारकविभक्तिः प्रत्यक्षश्रवणं वाचकताशक्तिश्च। सन्ति तावत् 'व्रीहीनवहन्ति' "तण्डुलान्पिनष्टि" इत्यादयः औषधसंयोगेन श्रुता धर्माः, "आज्यमुत्पुनाति" "विलापयति" इत्यादयः आज्यसंयुक्ताः, "वत्सानपाकरोति"

---

1 यागस्य फलार्थत्वम् ग, मु पा. 2 विहितत्वात्. ख, ग, मु पा
3. प्राधान्यात् ख, ग, मु पा

त्वाभावात् शब्दार्थो—व्रीह्यादिशब्दस्य आज्यादिरप्यर्थं, स्यात्–सम्भाव्येत, परमापूर्वसाधनत्वाविशेषात्। नैवमस्ति, किन्तु चेष्टया अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु तण्डुलपिष्टादिप्रणाड्या तत्तद्यागजन्यमवान्तरापूर्वं नाम फलमस्ति। परमापूर्वसिद्ध्यौपयिकत्वादपि तस्य फलत्वव्यपदेश। तस्मिंश्चावान्तरापूर्वे याग. साक्षात्साधनम्, तद्द्वारा परमापूर्वं प्रति। ततश्च व्रीहिशब्दोऽय तण्डुलादिप्रणाड्या व्रीहिसाध्ययागद्वारेणापूर्वमुपस्थापयन् प्रथमातिक्रमे कारणाभावात्प्रधानभूतमपि परमापूर्वमुपेक्ष्य [1]प्रत्यासन्ने स्वीयावान्तरापूर्वं एव [2]निपातितो न परमापूर्वं कर्मान्तरापूर्वं वापेक्षते। ततश्च "व्रीहिनवहन्ति" इत्यत्र[3] तण्डुलसाध्ययागीयापूर्वसाधनमवहन्तीति गम्यते, व्रीहित्वस्यापि तत्र निवेशे यवेषु तत्प्रवृत्त्यनापत्ते। न चैवं सति स्रुवादीनामप्यवघातापत्तिरिति वाच्यम्। प्रदेयतया तादृशसाधनत्वस्य विवक्षितत्वात्। न च वाक्यभेद शङ्क्य:, एकेनैव व्रीहिपदंनाग्नेयाग्नीषोमीयैन्द्राग्नोत्पत्त्यपूर्वजनकयागनिष्ठकार्यतानिरूपितप्रदेयद्रव्यप्रकृतिभूततण्डुलरूपव्यापारकसाधनताश्रयत्वस्योद्देश्यतावच्छेदकत्वेन लक्षणया विवक्षितत्वात्। अन्यथा 'अश्वाभिधानीम्' इत्यादौ का गति। एतेनापूर्वत्रयस्यैकानुगमकाभावाद्वाक्यभेद इत्यपि प्रत्युक्तम्। व्रीहित्वपुरोडाशत्वाद्यनिवेशाच्च यवादिषु चर्वादिप्रकृतिद्रव्येष्वप्यवघात. प्रवर्तते। एवम् "तण्डुलान्पिनष्टि" इत्यत्र तण्डुलरूपव्यापारपदस्थाने पिष्टरूपव्यापारपद देयम्। एवमन्यत्राप्युद्देश्यतावच्छेदक यथायथमूह्यम्। तस्मादवघातादिधर्माणा दृष्टकार्यानुरोधेन व्यवस्थयैव प्रवृत्तिरित्यास्ता तावत्॥

इति चतुर्थं तेषामर्थाधिकरणम्॥ ४॥

५

दर्शपूर्णमासयोः श्रूयते "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति। यज्ञसाधनानीत्यर्थ.। इदञ्च श्रूयते– "स्फ्येन वेदिमुद्धन्ति" "कपालेषु श्रपयति" "अग्निहोत्रहवण्या निर्वपति" "शूर्पेण परापुनाति" "कृष्णाजिने उलूखलमवधाय मुसलेनावहन्ति" "शम्यायां दृषदमत्याधाय उपलया पिनष्टि" इति। तत्र किं

1 प्रत्यासक्ते स्वीयापूर्व. ङ, मु. पा 2 निपतित क, ग, घ, ङ, मु. पा.
3. इत्यनेन. क, ग, घ, ङ, मु पा.

व्रीहित्वादेर्लक्षणामात्रौपयिकत्वेनानियामकत्वादित्यर्थः । व्रीह्यादिपद हि स्वाभिधेयव्रीहित्वाद्येकार्थसमवेतमपूर्वसाधनत्वं गमयति, न तु तत् स्वार्थव्रीहित्वादिपरम्, येन तद्धर्मनियामक स्यात् । न च वैतुष्यादिप्रयोजनवशाद्व्यवस्था धर्माणामिति वाच्यम् । दृष्टप्रयोजनाभावेऽदृष्टप्रयोजनस्य कल्पयितुं शक्यत्वात् । तस्मादप्रकृतापूर्वसाधनं वर्जयित्वा सर्वत्र सर्वे धर्माः सम्बध्यन्त इति ॥

तदेव पूर्वपक्षिणोत्प्रेक्षित सिद्धान्ती निराचष्टे—

अर्थलो मे स्यात् ॥ ९ ॥

अवघातादीनामाज्यादौ अकर्म—अकरणं स्यात् । कुतः ? अर्थलोपात्—अर्थस्यावघातादिकार्यस्य वैतुष्यादिलक्षणस्य लोपात् असम्भवात् ॥

नन्ववघातादीनामाज्यादौ विधिवशाददृष्ट प्रयोजनं कल्प्यत इत्यत आह—

फलन्तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

तुशब्दो वैषम्ये । दृष्टस्य फलस्य विप्रयोगे—अनुपलब्धौ सत्या तस्याभावनिश्चयात् शब्दार्थः—[1]विधिबलकल्प्योऽर्थ अदृष्टोपकार. स्यात्, न त्विह तथा, किन्त्ववघातादीनां चेष्टया—अनुष्ठानेन सहित तदव्यवहितोत्तरकालक फल वैतुष्यादि दृष्टकार्यमुपलभ्यते । यद्वा चेष्टया—अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु वैतुष्यादि दृष्टकार्यमुपलभ्यते । अथवा 'सक्षीरा गौ.' इत्यादिवत्सहशब्दो विद्यमानतायाम् । चेष्टया—अवघातादिक्रियया उत्पाद्यं वैतुष्यादि दृष्टकार्यं विद्यते । दृष्टे सम्भवति च नादृष्टकल्पना युज्यते । न चावघातादीना व्रीह्यादिषु दृष्टकार्यसम्भवेन तत्रादृष्टकल्पनाभावेऽप्याज्यादौ तदभावाददृष्टोपकार एव कल्प्यत इति वाच्यम् । क्वचिदपि दृष्टसम्भवे तत एव विधिचारितार्थ्येनार्थापत्तेरनुन्मेषे सत्यन्यत्रादृष्टकल्पनानुदयात् । नाप्यत्र कृष्णलेष्विव पाकस्य आज्यादिष्वप्यवघातादीनामाहत्य विधानमस्ति, येन तत्सामर्थ्याददृष्टोपकार. कल्प्येत । यदुक्तमवान्तरापूर्वाणि निष्फलत्वान्न धर्मप्रयोजकानीति तन्न, परमापूर्वसिद्धयौपयिकत्वेन तेषामपि फलवत्त्वात् । नन्वेवमपि प्रकरणाविशेषात्सकलावान्तरापूर्वाणा धर्मप्रयोजकत्व स्यादित्याशङ्कायामप्येतदेव सूत्रमुत्तरम् । विप्रयोगे—अवान्तरापूर्वस्याभावे सति परमापूर्वस्य च धर्मस्य व्यवस्थापक-

1 विधिबलात्कल्प्य इ, मु पा.

मर्थेन सम्बन्ध' इत्यधिकरणे 'विहितस्तु सर्वधर्मं स्यात्सयोगतोऽविशेषात्प्रकरणाविशेषाच्च' इति पूर्वपक्षसूत्रोक्तन्यायेन प्रकृतापूर्वसाधनद्रव्यमात्रे निवेशो युज्यते। न च कारकाणा क्रियान्वयित्वनियमात्प्रकृतसोमादिद्रव्ये 'अरुणया' इति करणकारकस्य कथं निवेश, सोमादिद्रव्यवाचकशब्दस्येहानुपादानाच्च, न हि तदुपादानादृते सोमादिद्रव्यमनूद्यारुण्यस्य विधि' सम्भवति, प्रकरणस्य साक्षाद्विनियोजकत्वाभावादिति वाच्यम्। अरुणाशब्दो ह्यारुण्यगुणविशिष्टद्रव्ये वर्तते। स्त्रीलिङ्गनिर्देशात्, 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति गुणोपसर्जनद्रव्यवाचिनां विशेष्यलिङ्गत्वविधानात्, 'गुणवचनानाम्' इत्यस्य केवलगुणवाचिशब्दपरत्वे वचनग्रहणानर्थक्यात्, 'गुणानाम्' इत्येतावतैव 'स्वं रूप शब्दस्य' इति गुणवाचकशब्दलाभात्। न च 'स्वं रूप शब्दस्याशब्दसञ्ज्ञा' इति गुणशब्दस्यैव स्वरूपेण ग्रहणनिवृत्तये वचनग्रहणमिति वाच्यम्। 'गुणानाम्' इति बहुवचनेन तल्लाभात्, 'जले शुक्ल' इत्यादौ शुक्लादिशब्दाना केवलगुणवचनानामप्याश्रयलिङ्गत्वापत्तेश्च, 'गुणे शुक्लादय पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशे शुक्लादिशब्दाना केवलगुणपरत्वे पुलिङ्गतायास्तद्विशिष्टद्रव्यपरत्वे विशेष्यलिङ्गतायाश्चाभिधानाच्च। तस्मादारुण्यगुणविशिष्टपरोऽरुणाशब्द'। तृतीया करणत्वे वर्तते। तत्र विशेष्यं द्रव्यं करणभूतमनूद्य विशेषणभूत आरुण्यगुण' परिच्छेदकतया विधीयते, न तु करणतया, येन द्रव्यसम्बन्धो नोपपद्येत। प्रकृत्या च द्रव्यस्य विशेष्यतयोपादानान्न तदनुपादानम्। न च पदस्यैकप्रसरत्वात् एकदेशेन प्रत्ययेन करणतया प्रकृत्या च विशेष्यतया द्रव्यमनूद्य प्रकृत्यैव विशेषणभूतारुण्यस्य कथं विधिरिति वाच्यम्। 'आज्याच्च सर्वसयोगात्' इत्यग्रिमपञ्चमपादे 'वषट्काराच्च भक्षयेत्' इत्यधिकरणे हि 'वषट्कर्तु: प्रथमभक्ष.' इत्यत्र समासवशेन प्राथम्यभक्षयोरेकोपस्थितिविषयत्वात्प्रथमभक्षशब्दे एकदेशेन भक्षमनूद्यैकदेशेन प्राथम्य न विधातुं शक्यत इति वक्ष्यते। इह त्वरुणाशब्देऽजहत्स्वार्थलक्षणया प्रवृत्ते गुणगुणिनो शक्तिलक्षणाभ्या भिन्नोपस्थितिविषयत्वान्नैकप्रसरत्वकृतो दोष। न चारुणाशब्दस्यारुणगुणकद्रव्यपरत्वे तस्य द्रव्यस्य क्रय एव करणतया विधिसम्भवात्कथ वाक्यतो विभज्य 'अरुणया' इत्यस्य प्रकृतसोमादिद्रव्योद्देशेनारुण्यविधायकत्वसम्भव इति वाच्यम्। श्रौतैकहायन्यवरुद्धे क्रये लाक्षणिकद्रव्यान्तरविधानासम्भवात्। एकहायनीद्रव्यं हि श्रुत्या प्रतिपाद्यते, अरुण-

स्फ्यादिभिर्यत्कर्तुं शक्यते तत्र सर्वत्र तेषां शेषत्वम् ? उत श्रुतोद्धननादिकार्यवशेन व्यवस्था ? इति संशयः । तत्र शक्यसर्वकार्यार्थत्वेऽप्यवघातादीनामिव दृष्टार्थतालाभस्याविशेषात् 'यज्ञायुधानि' इति सामान्यश्रुतयागीयपरमापूर्वसाधनत्वस्योत्पत्तिशिष्टपुरोडाशाद्यवरुद्धयागं प्रति साक्षादसम्भवत आनर्थक्यतदङ्गन्यायेन (रा) तदङ्गभूतोद्धननादिमुखेनावतरतः सर्वकार्यमुखेन निवेशसम्भवाद्व्रीह्यादिवदवान्तरापूर्वाभावाच्च स्फ्यादीनां सर्वार्थत्वमेव युक्तम् । "स्फ्येन वेदिमुद्धन्ति" इत्यादिवाक्यजातन्तु 'यज्ञायुधानि' इति प्राप्तत्वाद् (ला) वैश्वानराधिकरणन्यायेनावयुत्यानुवाद इति प्राप्ते, सिद्धान्तयति—

## द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

चशब्द उक्तसमुच्चये । द्रव्यं—स्फ्यादिकमप्यवघातादिवद्यत्कार्यसंयोगेन श्रुतं तदर्थमेव चोद्येत–प्रतीयेत । कुतः ? उत्पत्तिसंयोगात्—"स्फ्येनोद्धन्ति" इत्यादिविधिवाक्येषु स्फ्यादीनामुद्धननादिकार्यविशेषसंयोगश्रवणात् । 'यज्ञायुधानि' इत्यस्य विधायकत्वे हि स्फ्यादिवाक्यानां बहूनामानर्थक्यं स्यात् । न चानुवादतया सार्थक्यम्, उद्धननादिकार्यस्यान्येनापि सम्भवेन ततः स्फ्यादेर्नित्यप्राप्त्यभावात् पाक्षिकानुवादत्वे च नित्यवच्छ्रवणविरोधात् । वरञ्च बह्वानर्थक्यादेकानर्थक्यम् । आख्याताभावाद्वैशब्दाच्च न विधायकं यज्ञायुधवाक्यम् । तस्मादुद्धननादिवाक्यान्येव विधायकानि । एवञ्च सति नातीवानर्थकं यज्ञायुधवाक्यमपि, "यज्ञायुधानि सम्भरति" इति विधेयपात्रासादनं स्तोतुमनुवादतया सार्थक्यात् । ततश्च स्फ्यादीनां श्रुतोद्धननादिकार्यवशेन व्यवस्थयैव शेषत्वमिति दिक् ॥

इति पञ्चमं स्फ्यकपालाधिकरणम् ॥ ५ ॥

६

ज्योतिष्टोमे श्रूयते "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति । तत्र किमरुणयेत्येतत्क्रीणातौ नान्वेति नाप्येकहायन्या किन्तु प्राकरणिके सर्वस्मिन्सोमादिद्रव्ये 'यत्सोमादिव्यक्त्या प्रकृतं कार्यं साधनीयं तदरुणया साधयेत्' इति ? किं वा क्रीणातिना सम्बध्य तत्साधनीभूतायामेकहायन्यां निविशते ? इति संशयः । तत्र श्रुत उद्धननादिकार्ये स्फ्यादीनामन्वययोग्यत्वेन तन्मात्रार्थत्वसम्भवेऽपि प्रकृत आरुण्यस्यामूर्तत्वेन क्रयं प्रति करणत्वासम्भवेन 'तेषा-

## अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

द्रव्यगुणयोः—एकहायनीद्रव्यस्य आरुण्यगुणस्य च नियम.—परस्परान्वयमुखेनैकस्यामेव क्रयभावनायामन्वय., न त्वेकहायन्या क्रयभावनायाम्, आरुण्यस्य तु द्रव्यान्तरेष्वन्वयमुखेन तत्तद्भावनासु । कुत ? ऐककर्म्यात् - एक कर्म क्रियापदं यस्मिन् पदजाते तदेककर्म, तस्य भाव ऐककर्म्यम्, तस्मात् । अरुणादिवाक्ये एकस्या एव क्रयभावनाया श्रवणादिति यावत् । नन्वारुण्यस्यामूर्तत्वात्कथ क्रये करणतयान्वय., कथं वैकहायन्याम्, कारकाणां मिथ सम्बन्धायोगात्; न चारुणस्य परिच्छेदकतया तत्रान्वयसम्भव', तृतीयाश्रुतिविरोधात्, न हि तृतीयाया परिच्छेदकतायां शक्तिरस्ति, विरुद्धत्रिकद्वयापाताच्च, तस्माद्वाक्यं भङ्क्त्वा आरुण्यस्य द्रव्यान्तरेष्वन्वयमुखेन तत्तद्भावनास्वेव निवेशो युक्त इत्यत आह—अर्थैकत्व इति । धात्वर्थस्यैकत्वे सत्येकवाक्यभङ्गाश्रयणस्यायुक्तत्वादित्यर्थः । तथाहि—'अरुणया' इत्यत्र स्त्रीप्रत्ययान्तया प्रकृत्या तावल्लक्षणया तद्गुणविशिष्टद्रव्य गम्यते । गत्र गम्यमानमपि द्रव्यांश[1] लाक्षणिकत्वादुपेक्ष्य तृतीया श्रौत गुणमेव क्रयं प्रति करणतयाभिधत्ते । वस्तुतस्तु अरुणशब्दो द्रव्यमलक्षयन् केवलगुणे वर्तते, मुख्ये सम्भवति लक्षणाश्रयणस्यासम्भवात् । न चैव सति 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति गुणोपसर्जनद्रव्यप्रतिपादकानामेव शुक्लादिशब्दानामाश्रयलिङ्गत्वाभिधानात् 'अरुणया' इति स्त्रीलिङ्गनिर्देशोऽनुपपन्न इति वाच्यम् । गुणोपसर्जनद्रव्यप्रतिपादनयोग्याना परिच्छेद्यमुखेन क्रियान्वयिना परिच्छेद्यद्रव्यलिङ्गसम्बन्ध इति हि तदर्थ । भवति च 'अरुणाक्ष' इत्यादावरुणशब्दोऽवश्य तद्गुणकद्रव्यवचन इति तस्येह केवलगुणवचनत्वेऽपि परिच्छेद्यैकहायनीद्वारा लिङ्गान्वय. । रूपादिशब्दानान्तु मतुबादि विना कदापि द्रव्ये प्रयोगाभावान्न परिच्छेद्यलिङ्गत्वमिति 'घटो रूप.' इत्यादिप्रयोगस्याप्रसक्ति । 'जले शुक्लोऽस्ति' इत्यत्र परिच्छेद्यमुखेन क्रियानन्वयिन शुक्लादिशब्दा न गुणिलिङ्गका', परिच्छेद्यमुखेन क्रियान्वयिनस्तु गुणिलिङ्गका, यथा 'शुक्ला गामानय' इत्यादावित्यर्थ । तत्सिद्धमरुणाशब्दस्य स्त्रीप्रत्ययान्तस्यापि केवलगुणवचनत्वम् । तृतीया च तदारुण्यं करणतयाभिधत्ते । सा चाभिदधाना आरुण्यगुणस्यामूर्तत्वात्साक्षात्क्रियासाधनताशक्तिमपश्यन्ती गुणस्य

1. द्रव्यायं. ख, ग, मु पा.

गुणकद्रव्यन्तु लक्षणया । ततश्च श्रौतस्य शीघ्रप्रवृत्तिकस्यैकहायनीद्रव्यस्य लाक्षणिकमन्दप्रवृत्तिकारुणद्रव्यान्वयात्प्रागेव क्रयेऽन्वये सति तदवरुद्धे क्रये पश्चादरुणद्रव्यस्यान्वयासम्भवः । यथा पदश्रुत्या प्रथमतो धात्वर्थस्य करणत्वेनान्वये तदवरुद्धाया भावनायामुपपदार्थस्य पश्चान्न करणत्वेनान्वयस्तद्वत् । न च द्रव्यान्तरविध्यसम्भवेऽपि यथा पिङ्गाक्षीशब्देनैकहायनीशब्देन चैकमेव द्रव्यं विधीयते तथारुणाशब्देनापि तदेव विधीयतामिति वाच्यम्, वैषम्यात् । पिङ्गाक्ष्येकहायनीशब्दयोर्हि श्रुतिवृत्तत्वाविशेषेण युगपत्प्रवृत्तेर्विनिगमनाविरहात्ताभ्यामेकद्रव्यविधानं सम्भवति । अरुणाशब्दस्तु न तद्विधातुमर्हति, श्रुतिवृत्ताभ्यां पिङ्गाक्ष्येकहायनीशब्दाभ्यां प्रथमतो विहितस्य पुनर्विधानासम्भवात् । तत्रापि पिङ्गाक्ष्येकहायनीशब्दयोर्द्रव्ये श्रुतिवृत्तत्वं बहुव्रीहिसमासवशादध्यवसीयते, बहुव्रीहेरन्यपदार्थशक्तेरग्रिमपादे इन्द्रपीताधिकरणे व्यवस्थापयिष्यमाणत्वात् । न चारुणाशब्दस्यापि गुणिनि शक्तिरेवास्तु, तथा च पिङ्गाक्ष्येकहायनीशब्दयोरिव तस्यापि क्रीणातावेव युगपदन्वयसम्भव इति वाच्यम् । अरुणाशब्दो हि गुणे सत्येव द्रव्ये प्रयुज्यते नासतीत्यन्वयव्यतिरेकाभ्याम् आकृत्यधिकरणव्युत्पादेन 'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते' इति न्यायेन च केवलगुणवाचको लक्षणया द्रव्येऽपि प्रयुज्यते । एवं नीलादिशब्दोऽपि । न च 'रूपो घटः' इत्यादिप्रयोगः स्यादिति वाच्यम् । रूपरसगन्धस्पर्शानां स्वाभाव्यादेव द्रव्ये लक्षणयापि प्रयोगाभावात् । उक्तञ्च वार्त्तिके—

'अन्वयव्यतिरेकाभ्यां ये कदाचिन्न मुञ्चति ।
स एव तस्य वाच्योऽर्थो गुणं चैष न मुञ्चति ॥' इति ।

'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥
तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति ।
प्रत्येतव्यस्तथार्थानां लक्ष्यार्थान्तरगोचरः ॥' इत्यादि ।

न च वाक्यभेदं विनैवारुणाशब्द एकहायन्यामेव गुणविधिरित्यभ्युपगम्यतामिति वाच्यम् । एकस्मिन्नेव वाक्ये क्रये पिङ्गाक्ष्येकहायन्या तस्या चारुण्यस्य विधौ वाजपेयाधिकरणोक्तरीत्या (वा) विरुद्धत्रिकद्वयापत्तौ विध्यावृत्तिलक्षणवाक्यभेदापत्तेः । एवञ्च प्रधानभूतस्य विधेरावृत्त्यपेक्षया वाक्यभङ्गाश्रयणम् । तस्मादारुण्यस्य प्रकृतसर्वद्रव्येषु समावेशः । ततश्च सर्वाणि करणान्यरुणीकर्तव्यानीति प्राप्ते सिद्धान्तयति—

"अनडुहा क्रीणाति" "मिथुनाभ्यां क्रीणाति" "वाससा क्रीणाति" इत्यजादीनामपि क्रयसाधनत्वेन तेष्वप्यारुण्यस्य निवेशसम्भवादिति वाच्यम्। आरुण्यस्य स्ववाक्योपात्तक्रयं प्रति साधनभूतायामेकहायन्यामेव निवेशसम्भवे सति क्रयान्तरसाधनेष्वजादिषु निवेशायोगात्। न चाजादिवाक्याना न क्रयान्तरविधायकत्वम्, किन्तु वाक्यान्तरविहितक्रयानुवादेनाजादिसाधनविधायकत्वमेवेति वाच्यम्। न हि क्रयविधायकं वाक्यान्तरमस्ति, येन तदनुवादेनाजादिसाधनं विधीयेत। न चारुणाजाहिरण्यादिवाक्येष्वेकमेव क्रयविधायकम्, अन्यानि तु वाक्यानि तत्र गुणविधय इति वाच्यम्। तथा सति क्रयस्योत्पत्तिशिष्टद्रव्यावरुद्धत्वेन तत्र वाक्यान्तरेण द्रव्यान्तरविधानायोगात्। तस्माद्विनिगमनाविरहेण प्रतिवाक्य तत्तद्द्रव्यविशिष्टक्रयविधय इति विहितस्य पुनर्विधानात्सिद्धः क्रयभेदः। ततश्चारुण्यस्य स्ववाक्योपात्तक्रयसाधनैकहायन्यामेव निवेश न तु क्रयान्तरसाधनाजादिद्रव्येष्विति भट्टमतानुयायी पन्थाः।

अत्रेदं वक्तव्यम्—वाजसनेयशाखायाम् "तस्मात्सोमं क्रीणाति" इति द्रव्यसयोगेन विना सोमक्रयस्योत्पत्तिवाक्य श्रुतम्। तदुत्पन्ने च क्रयेऽरुणादिवाक्यानि च गुणविधय एव सम्पद्यन्ते। ततश्च कुत प्रतिवाक्यं क्रयस्य विधि॰, कुतस्तरा तस्य पुनर्विधानम्; कुतस्तमां तस्य भेद। अशक्यत्वाच्च। न ह्येकस्यैव सोमद्रव्यस्यैकेनैव क्रयेण निवृत्तपरस्वत्वस्य प्राप्तात्मस्वत्वस्य पुन क्रय॰ सम्भवति; स्वद्रव्यस्य परस्वत्वापादनेन परद्रव्यस्यात्मस्वत्वापादने द्रव्यविनिमये क्रीणातेर्वृत्तेः, क्रयभेदाभ्युपगमे 'क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्' 'समुच्चयो वा प्रयोगे द्रव्यसमवायात्' इति द्वादशिकचतुर्थपादीयाधिकरणस्यानुत्थेषप्रसङ्गाच्च। तत्र हि क्रयसाधनेष्वजादिद्रव्येषु विकल्प॰ स्यात्, एकक्रयार्थत्वादिति पूर्वपक्षयित्वा, सोमक्रयस्य प्रयोगे-अनुष्ठाने द्रव्याणां समवायस्योपपत्तेः समुच्चय एव, विक्रेतुस्तुष्टिरत्र सम्पाद्या, सा च बहुभि॰ सूपपादा। अत कार्यप्रधानत्वात्पदार्थानां सौकर्यमालोच्य द्रव्यविधीना सापेक्षत्वकल्पनात्समुच्चय इति सिद्धान्तयिष्यते। क्रयाणामनेकत्वे तु अजादीनामेकार्थत्वाभावात्पूर्वपक्षस्यैवानुत्थेपात्तदसङ्गतिः स्पष्टैव। यत्तु तन्त्ररत्नादौ द्रव्यासयुक्तक्रयोत्पत्तिवाक्यानुपलम्भोपन्यासेन क्रयभेद प्रसाध्य क्रयाणामेव विकल्पसमुच्चयविचारपरतया तत्सूत्रद्वय व्याख्यातम्, तदप्युक्तयुक्त्यैव परास्तम्। द्रव्य-

स्वाभाविकीं द्रव्यपरिच्छेदकताशक्तिं पर्यालोच्य परिच्छेद्यमुखेनैव क्रियासाधनत्वे विश्राम्यति। शक्नोति चारुण्यगुण एकहायनीं परिच्छेत्तुम्। इतरव्यावृत्ततया द्रव्यस्य प्रतीतिविशेषो हि परिच्छेदः। तथा चारुणगुणपरिच्छिन्नपिङ्गाक्ष्येकहायनीद्रव्यकरणकक्रयभावना वाक्यार्थः। तदेवमेकवाक्यत्वे सति तृतीयया गम्यमानं करणत्वं श्रौतप्रकृत्यर्थारुण्यगतं विधेयतयाश्रितं भवति। वाक्यभङ्गे तु 'अरुणया' इति तृतीया लाक्षणिकप्रकृत्यर्थद्रव्यगतकरणत्वानुवादिनी स्यात्। वाक्यभङ्गश्च सम्भवत्येकवाक्यत्वे युज्यते नाश्रयितुम्। न चैकहायनीपरिच्छेदकतयैवारुण्यस्य कुतः क्रये निवेशः, यत्किञ्चिद्द्रव्यद्वारापि क्रयसाधनत्वोपपत्तेरिति वाच्यम्। परिच्छेदकापेक्षाया एकहायन्या एकवाक्यगतेन गुणेन, परिच्छेद्यापेक्षस्य च गुणस्य स्ववाक्यगतयैकहायन्याकाङ्क्षाशान्तिसम्भवे गुणान्तरेण द्रव्यान्तरेण च तच्छान्तिवर्णनस्यायुक्तत्वेनारुण्यैकहायन्योः परस्परान्वयनियमस्यावश्यकत्वात्। एतदभिप्रायेणैव सूत्रे नियमपदमुपात्तम्। अन्यथा 'ऐककर्म्यादन्वयः स्यात्' इत्येवावक्ष्यत्। न चैकार्थत्वाद्द्रव्यगुणयोर्व्रीहियववद्विकल्पः स्यादिति वाच्यम्। न ह्येकार्थत्वमात्रं विकल्पे बीजम्, द्वारैक्ये सत्येव तस्य तत्प्रयोजकत्वात्। अन्यथा पुरोडाशे कार्ये कपालशूर्पोलूखलमुसलादीनामपि विकल्पापत्तेः। अस्ति हि व्रीहीणां यवानां च यागे कार्ये द्वारमेकं पुरोडाशनिष्पादनरूपम्। प्रकृते च द्रव्यस्य विक्रेतुरानतिसम्पादनद्वारा गुणस्य च द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वादुभयोर्भिन्नद्वारत्वान्न विकल्पः। नन्वेवमपि 'अरुणया क्रीणाति' 'अरुणयैकहायन्या' इत्येवं न युगपदुभयत्रारुणापदस्यान्वयसम्भवः, सकृच्छ्रुतस्यैकस्य पदस्य युगपदुभयान्वयायोगात्, नापि पर्यायेणोभयत्रान्वयः, एकस्माद्वाक्यात्सकृच्छ्रुतात्क्रमिकार्थद्वयबोधासम्भवादिति चेन्नैष दोषः, न ह्यारुण्यस्यैकहायन्या निवेशः शाब्दः, किन्त्वार्थिकः। प्रथमं हि तावदारुण्यगुणैकहायनीद्रव्योभयकरणकायां[1] क्रयभावनायां [2]शब्दमर्यादयावगतायामारुण्यस्य साक्षात्क्रयसाधनत्वशक्त्यभावं पर्यालोच्यैकहायनीद्रव्यपरिच्छेदमुखेन क्रियासाधनत्वमर्थान्निवेशयति। तथा चारुण्यस्यैकहायन्या पार्ष्ठिकान्वयस्यार्थिकत्वान्न विरुद्धत्रिकद्वयदोषोऽपि। न चैवमप्यारुण्यस्य कथमेकहायन्यामेव निवेशः 'अजया क्रीणाति" "हिरण्येन क्रीणाति" "धेन्वा क्रीणाति" "ऋषभेण क्रीणाति"

1. करणिकायां. घ, ङ, मु. पा 2. शब्दमर्यादया. क, घ, ग, ङ, मु पा.

प्रतिपादकतया युगपदेव क्रीणातावन्वयान्न वाक्यभेदः। न चारुणापदे विशेष्यापेक्षया प्रथमोपस्थितत्वादारुण्यस्यैव करणतयोपस्थितिरिति वाच्यम्। क्रय प्रत्ययोग्यत्वेन तथोपस्थितेरसम्भवात्। न च साक्षात्करणत्वस्यायोग्यत्वेऽप्येकहायनीद्वारा तत्करणत्वसम्भव इति वाच्यम्, व्याघातात्। करणत्व हि साधकतमत्वम्। तच्च साक्षात्साधानत्वमेव। न ह्येतत्परम्परया साधकत्वे कथमपि घटते। नापि व्यापारवत्कारणत्वमपि करणत्वमारुण्यस्य सम्भवति। तज्जन्यस्तज्जन्यजनको हि व्यापार'। स चैकहायनी वा तत्परिच्छेदो वा। नाद्य, तस्या आरुण्यजन्यत्वाभावादेकहायनीकार्यक्रयजनकत्वाभावाच्च आरुण्यस्य क्रयजननायोग्यत्वात्। न द्वितीय., द्रव्यपरिच्छेदस्य क्रय प्रति जनकत्वस्य साक्षादसम्भवात्। न च द्रव्यद्वारा परिच्छेदस्य क्रयजनकत्वमिति वाच्यम्। द्रव्यस्य गुणकृतपरिच्छेदजन्यत्वाभावात्। अनरुणद्रव्याद्व्यावृत्ततया एकहायन्या. [1]प्रतीतिरेव ह्यारुण्यकृत परिच्छेद इत्युच्यते। न च गुणत. परिच्छेदाद्द्रव्ये सामर्थ्यविशेष उत्पद्यते, तद्द्वारा परिच्छेदस्य क्रयजनकत्वं तादृशपरिच्छेदद्वारा चारुण्यस्य क्रय प्रति साधनत्वात्करणत्वसम्भव इति वाच्यम्। आरुण्यगुणत परिच्छेदादेकहायन्या जायमान सामर्थ्यविशेषो हि न दृष्टरूप., अनरुणाया अप्येकहायन्या क्रयनिष्पत्तिक्षमत्वात्। यद्यदृष्टरूपस्तर्ह्यदृष्टद्वारारुण्यस्य क्रयसाधनत्वमायाति। तद्वरमरुणाशब्दस्य निरूढलक्षणयापि द्रव्यपरत्वमेव स्वीकृत्य गुणविशिष्टैकहायन्या एव क्रये करणतया विधानम्।

किञ्च परिच्छेदस्येहानुपादानात्कथं तद्द्वारारुण्यस्य क्रये करणतयान्वयः। अध्याहारे च गौरवम्। न चाक्षेपात्तल्लाभ। न ह्येकहायनी परिच्छेदमाक्षिपति, आरुण्यगुणेनापरिच्छिन्नाया अपि क्रयनिष्पत्तिक्षमत्वात्। नाप्यारुण्यात्तदाक्षेप.। आरुण्य हि द्रव्यपरिच्छेदं विनापि कचित्क्रियायामन्वेति, यथा 'घटेऽरुणोऽस्ति' इत्यादौ। अतो न तस्य स्वरूपेण क्रियान्वये द्रव्यपरिच्छेदापेक्षा, किन्तु साधनत्वरूपेण क्रियान्वय एव तदपेक्षा। ततश्च क्रयसाधनत्वे आरुण्यस्यावगते तदन्यथानुपपत्त्या परिच्छेदलाभ। लब्धे च परिच्छेदे क्रयसाधनत्वावगम इत्यन्योन्याश्रयः। किञ्च गुणस्य द्रव्यपरिच्छेदमुखेन साधनतया क्रियान्वये 'नीलमुत्पलमानय' इत्यत्र 'नीलेन' इति तृतीया स्यात्, नीलगुणस्योत्पलरूपकर्मकारकपरिच्छेदमुखेनानयन-

---

1. प्रतीतिरेवेहारुण्य, घ, ग, ङ, मु. पा.

स्वाभाविकीं द्रव्यपरिच्छेदकताशक्तिं पर्यालोच्य परिच्छेद्यमुखेनैव क्रियासाधनत्वे विश्राम्यति। शक्नोति चारुण्यगुण एकहायनीं परिच्छेत्तुम्। इतरव्यावृत्ततया द्रव्यस्य प्रतीतिविशेषो हि परिच्छेदः। तथा चारुणगुणपरिच्छिन्नपिङ्गाक्ष्येकहायनीद्रव्यकरणकक्रयभावना वाक्यार्थः। तदेवमेकवाक्यत्वे सति तृतीयया गम्यमानं करणत्वं श्रौतप्रकृत्यर्थारुण्यगतं विधेयतयाश्रितं भवति। वाक्यभङ्गे तु 'अरुणया' इति तृतीया लाक्षणिकप्रकृत्यर्थद्रव्यगतकरणत्वानुवादिनी स्यात्। वाक्यभङ्गश्च सम्भवत्येकवाक्यत्वे युज्यते नाश्रयितुम्। न चैकहायनीपरिच्छेदकतयैवारुण्यस्य कुतः क्रये निवेशः, यत्किञ्चिद्द्रव्यद्वारापि क्रयसाधनत्वोपपत्तेरिति वाच्यम्। परिच्छेदकापेक्षाया एकहायन्या एकवाक्यगतेन गुणेन, परिच्छेद्यापेक्षस्य च गुणस्य स्ववाक्यगतयैकहायन्याकाङ्क्षाशान्तिसम्भवे गुणान्तरेण द्रव्यान्तरेण च तच्छान्तिवर्णनस्यायुक्तत्वेनारुण्यैकहायन्यो परस्परान्वयनियमस्यावश्यकत्वात्। एतदभिप्रायेणैव सूत्रे नियमपदमुपात्तम्। अन्यथा 'ऐककर्म्यादन्वयः स्यात्' इत्येवावक्ष्यत्। न चैकार्थत्वाद्द्रव्यगुणयोर्व्रीहियववद्विकल्पः स्यादिति वाच्यम्। न ह्येकार्थत्वमात्रं विकल्पे बीजम्, द्वारैक्ये सत्येव तस्य तत्प्रयोजकत्वात्। अन्यथा पुरोडाशे कार्ये कपालशूर्पोलूखलमुसलादीनामपि विकल्पापत्तेः। अस्ति हि व्रीहीणां यवानां च यागे कार्ये द्वारमेकं पुरोडाशनिष्पादनरूपम्। प्रकृते च द्रव्यस्य विक्रेतुरानतिसम्पादनद्वारा गुणस्य च द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वादुभयोर्भिन्नद्वारत्वान्न विकल्पः। नन्वेवमपि 'अरुणया क्रीणाति' 'अरुणयैकहायन्या' इत्येव न युगपदुभयत्रारुणापदस्यान्वयसम्भवः, सकृच्छ्रुतस्यैकस्य पदस्य युगपदुभयान्वयायोगात्, नापि पर्यायेणोभयत्रान्वयः, एकस्माद्वाक्यात्सकृच्छ्रुतात्क्रमिकार्थद्वयबोधासम्भवादिति चेन्नैष दोषः, न ह्यारुण्यस्यैकहायन्यां निवेशः शाब्दः, किन्त्वार्थिकः। प्रथमं हि तावदारुण्यगुणैकहायनीद्रव्योभयकरणकायां[1] क्रयभावनायां [2]शब्दमर्यादयावगतायामारुण्यस्य साक्षात्क्रयसाधनत्वशक्त्यभावं पर्यालोच्यैकहायनीद्रव्यपरिच्छेदमुखेन क्रियासाधनत्वमर्थान्निवेशयति। तथा चारुण्यस्यैकहायन्या पाष्ठिकान्वयस्यार्थिकत्वान्न विरुद्धत्रिकद्वयदोषोऽपि। न चैवमप्यारुण्यस्य कथमेकहायन्यामेव निवेशः 'अजया क्रीणाति" " हिरण्येन क्रीणाति" "धेन्वा क्रीणाति" "ऋषभेण क्रीणाति"

---

1. करणिकाया. घ, ड, मु पा 2. शाब्दमर्यादया. क, घ, ग, ड, मु पा

प्रतिपादकतया युगपदेव क्रीणातावन्वयान्न वाक्यभेद । न चारुणापदे विशेष्यापेक्षया प्रथमोपस्थितत्वादारुण्यस्यैव करणतयोपस्थितिरिति वाच्यम् । क्रयं प्रत्ययोग्यत्वेन तथोपस्थितेरसम्भवात् । न च साक्षात्करणत्वस्यायोग्यत्वेऽप्येकहायनीद्वारा तत्करणत्वसम्भव इति वाच्यम्, व्याघातात् । करणत्वं हि साधकतमत्वम् । तच्च साक्षात्साधानत्वमेव । न ह्येतत्परम्परया साधकत्वे कथमपि घटते । नापि व्यापारवत्कारणत्वमपि करणत्वमारुण्यस्य सम्भवति । तज्जन्यस्तज्जन्यजनको हि व्यापार' । स चैकहायनी वा तत्परिच्छेदो वा । नाद्य, तस्या आरुण्यजन्यत्वाभावादेकहायनीकार्यक्रयजनकत्वाभावाच्च आरुण्यस्य क्रयजननायोग्यत्वात् । न द्वितीय'; द्रव्यपरिच्छेदस्य क्रय प्रति जनकत्वस्य साक्षादसम्भवात् । न च द्रव्यद्वारा परिच्छेदस्य क्रयजनकत्वमिति वाच्यम् । द्रव्यस्य गुणकृतपरिच्छेदजन्यत्वाभावात् । अनरुणद्रव्याद्व्यावृत्ततया एकहायन्या. [1]प्रतीतिरेव ह्यारुण्यकृत परिच्छेद इत्युच्यते । न च गुणत परिच्छेदाद्द्रव्ये सामर्थ्यविशेष उत्पद्यते, तद्द्वारा परिच्छेदस्य क्रयजनकत्वं तादृशपरिच्छेदद्वारा चारुण्यस्य क्रय प्रति साधनत्वात्करणत्वसम्भव इति वाच्यम् । आरुण्यगुणत परिच्छेदादेकहायन्या जायमान सामर्थ्यविशेषो हि न दृष्टरूप., अनरुणाया अप्येकहायन्या. क्रयनिष्पत्तिक्षमत्वात् । यद्यदृष्टरूपस्तर्ह्यदृष्टद्वारारुण्यस्य क्रयसाधनत्वमायाति । तद्वरमरुणाशब्दस्य निरूढलक्षणयापि द्रव्यपरत्वमेव स्वीकृत्य गुणविशिष्टैकहायन्या एव क्रये करणतया विधानम् ।

किञ्च परिच्छेदस्येहानुपादानात्कथं तद्द्वारारुण्यस्य क्रये करणतयान्वय: । अध्याहारे च गौरवम् । न चाक्षेपात्तल्लाभ । न ह्येकहायनी परिच्छेदमाक्षिपति, आरुण्यगुणेनापरिच्छिन्नाया अपि क्रयनिष्पत्तिक्षमत्वात् । नाप्यारुण्यात्तदाक्षेप· । आरुण्य हि द्रव्यपरिच्छेदं विनापि क्वचित्क्रियायामन्वेति, यथा 'घटेऽरुणोऽस्ति' इत्यादौ । अतो न तस्य स्वरूपेण क्रियान्वये द्रव्यपरिच्छेदापेक्षा, किन्तु साधनत्वरूपेण क्रियान्वय एव तदपेक्षा । ततश्च क्रयसाधनत्वे आरुण्यस्यावगते तदन्यथानुपपत्त्या परिच्छेदलाभ । लब्धे च परिच्छेदे क्रयसाधनत्वावगम इत्यन्योन्याश्रय: । किञ्च गुणस्य द्रव्यपरिच्छेदमुखेन साधनतया क्रियान्वये 'नीलमुत्पलमानय' इत्यत्र 'नीलेन' इति तृतीया स्यात्, नीलगुणस्योत्पलरूपकर्मकारकपरिच्छेदमुखेनानयन-

1. प्रतीतिरेवेहारुण्य घ, थ, ङ, मु. पा.

विकल्पसमुच्चयपरतयैव भाष्ये व्याख्यातत्वाच्च, प्राभाकरैरनुमोदितत्वाच्च। सूत्रे क्रयणेष्वित्यनेन द्रव्याणामेवोपादानाच्च क्रयणशब्दस्य करणल्युडन्तत्वात्, भावसाधनत्वे हि क्रयेष्वित्येवावक्ष्यत्। द्रव्यसमवायादित्यनेन मेव द्रव्यसमुच्चयवचनाच्च। 'क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चयः' इत्यापस्तम्बसत्याषाढभारद्वाजकात्यायनादय.।

किञ्च "गवा ते क्रीणानि" "अजया ते क्रीणानि" "हिरण्येन ते क्रीणानि" इत्येवमादिमन्त्रेणैकैकस्मिन्द्रव्ये सोमविक्रयिण प्रति प्रापिते अन्त्यवर्जं प्रतिद्रव्यं प्रतिवचनं सोमविक्रयिणो विहितम् 'भूयो वा अत. सोमो राजार्हतीति सर्वेषु पणनेषु सोमविक्रयी प्रत्याहासम्पदः' इति। आ सम्पद कृत्स्नमूल्यसम्पत्तिपर्यन्तम्। अन्तिमद्रव्यसम्पत्ते.[1] प्रागित्युक्तं भवति। एवञ्च एकैकेन द्रव्येणैकैक क्रय इत्यनुपपन्नमित्येकहायन्यजादिवाक्येषु वाक्यान्तरोत्पन्नैकक्रयानुवादेन गुणविधिरित्येव युक्तम्। न चैवं सत्यरुणावाक्ये प्राप्तक्रयानुवादेनानेकगुणविधाने वाक्यभेद इति वाच्यम्। अभ्युदयेष्ट्यधिकरणे हि "ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्" इत्यादिवाक्येषु प्रकृतद्रव्योद्देशेनाग्न्यादिदेवताना दातृत्वादिगुणानाञ्च विधौ वाक्यभेदमाशङ्क्याग्निदात्रादिशब्दानां विशिष्टैकार्थप्रतिपादकतया विशिष्टमेवैकैकमग्न्यादिदेवताकारक विधीयत इति न वाक्यभेद इति समाहितम्। तथात्राप्यारुण्यविशिष्टैकहायनीविधानान्न वाक्यभेदः। न च तत्र सामानाधिकरण्याद्विशिष्टार्थप्रतिपादकत्वं युक्तम्, इह त्वरुणैकहायनीपदयो' सामानाधिकरण्यबाधात्कथ विशिष्टैकार्थप्रतिपादकत्वमिति [2]पृथग्विध एव क्रियान्वय. स्यादिति वाक्यभेदो दुर्वार इति वाच्यम्। अत्रापि सामानाधिकरण्यस्य सत्त्वात्। तथाहि — 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति मतुपो लुग्विधानात् शुक्लादिशब्दाना द्रव्ये लाक्षणिकत्वे तद्वैयर्थ्यादुक्तन्यायेन च केवलगुणवाचकाना द्रव्ये शक्त्यनुपपत्तेर्निरूढलक्षणैव तेषामभ्युपगन्तव्या। उक्तञ्च वार्तिके 'मतुब्लोपश्चात्यन्तलक्षणावशादव्याख्यायते' इति 'इह केषुचिदर्थेष्वभिधानवदेव लक्षणाप्यनादिकालप्रवृत्तिकत्वेन निरूढा, यथा शुक्लादिषु' इति च। निरूढलक्षणा च निरूढशक्तितुल्ययोगक्षेमत्वान्न मुख्यार्थे तात्पर्यानुपपत्तिप्रतिसन्धानमपेक्षते। ततश्चारुणाशब्दस्य पिङ्गाक्ष्येकहायनीशब्दयोरिव द्रव्ये श्रुतिवृत्तत्वतुल्ययोगक्षेमतया सामानाधिकरण्यसत्त्वेन विशिष्टैकार्थ-

1 अभिमतद्रव्यसम्पत्ते इ 2 पृथगेव ड, घ, ग, मु पा

७

तदेवम् 'तेषामर्थेन सम्बन्ध.' इत्यादिभिस्त्रिभिरधिकरणै सरकार्यद्रव्यगुणाना श्रुतशेषिसंयोगेन व्यवस्थाभिहिता। इदानीं तावत्सयोग किं विवक्षितविशेषणकेन शेषिणा ? उत अविवक्षितविशेषणकेन ? इति विचार. प्रस्तूयते। ज्योतिष्टोमे श्रूयते-"दशापवित्रेण ग्रह सम्मार्ष्टि" इति। अनूतो वस्त्राग्रभागो दशा। तद्युक्तवस्त्रखण्डविशेषो दशापवित्रम्। सोमरसो गृह्यतेऽस्मिन्निति ग्रह. पात्रविशेष.। तत्र किमेकस्य ग्रहस्य सम्मार्ग. ? किं वा सर्वेषाम् ? इति सशये पूर्वपक्षयति—

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥१३॥

एकस्य ग्रहव्यक्तिविशेषस्य सम्मार्जनं भवति न द्वितीयादीनाम्। कुत ? श्रुति-सयोगात्-एकवचनश्रवणेन संयोगात्। ननु श्रुतमप्येकत्वमविवक्षितम्, अन्यथा ग्रह सम्मृज्यात्, त चैकम् इति वाक्यभेदापत्तेरित्यत आह—एकत्वयुक्तमिति। सम्मार्जन हि विवक्षितैकत्वसमभिव्याहृतम्, अविवक्षाया प्रमाणाभावात्। "पशुना यजेत" इत्यत्र यथा सङ्ख्याविशिष्टकारकं विधीयते तद्वत्रापि सङ्ख्याविशिष्टकारकस्योद्देश-सम्भवान्न वाक्यभेद इति भाव ॥

सिद्धान्तयति—

## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥१४॥

वाशब्द एवार्थे। सर्वेषामेव ग्रहाणा सम्मार्जनं न त्वेकस्यैव। कुत ? लक्षण-त्वात्-आकृत्यधिकरणन्यायेन ग्रहशब्दवाच्यतया निर्णीतस्य ग्रहत्वस्य कृत्स्नव्यक्त्युपस्था-पकत्वात्। कुत ? हि यस्मात्कारणात्सर्वासु व्यक्तिषु लक्षणम्—उपस्थापकं ग्रहत्वम-विशिष्टम्। न चैकत्वस्यापि विधिसस्पर्शाद्वाक्यभेद. शङ्क्य। ग्रहैकत्व हि विधेयं सद्विधिसस्पर्शि ? अविधेयमेव वा ? नाद्य, उक्तन्यायेन सर्वेषु ग्रहेषु सम्मार्गावगमे सत्येकस्य तद्विधे: परिसङ्ख्यानार्थत्वापत्तावेकत्र सम्मार्गविधानस्य स्वार्थस्य परित्याग:, सर्वत्र सम्मार्गनिवृत्ते. परार्थस्य स्वीकार, उक्तन्यायेन सर्वग्रहेषु प्राप्तस्य सम्मार्गस्य बाध इति त्रैदोष्यापत्ते'। 'ग्रह सम्मृज्यात्' 'एकमेव 'ग्रहं सम्मृज्यान्न ग्रहान्तरम्' इत्येवं सम्मार्गवचनव्यक्ते परिसङ्ख्यावचनव्यक्तेश्च भेदेन वाक्यभेदापत्तेश्च। द्वितीयेऽपि किमविधेयभूतमेकत्वमुद्देश्यतया विधिसस्पर्शि ? किं वा सम्मार्गानन्वित-ग्रहान्वयमुखेन ? उत सम्मार्गान्वितग्रहान्वयमुखेन ? अथवा उद्देश्यतावच्छेदकतया ? नाद्य., असम्भवादेकत्वस्य सम्मार्ष्टुमशक्यत्वात्। न द्वितीय., 'ग्रह एको भवेत्,

क्रियाया साधनत्वात्। किञ्च गुणगुणिनो परस्परानपेक्षमेव प्रथम क्रियान्वयितया परस्परान्वयसामर्थ्याभावात् 'नीलोत्पलमानय' 'नीलघटेन जलमाहर' इत्यत्र समासानुपपत्ति । न च पार्ष्ठिकपरस्परान्वयात्सामर्थ्यमुपपाद्यम् , तस्यैव दुर्वचत्वात्। न हि पार्ष्ठिक परस्परान्वयबोध शाब्द , सकृदुच्चारितस्य गुणशब्दस्य क्रियाया द्रव्ये च पर्यायेणान्वयासम्भवात् , शब्दबुद्धिकर्मणा विरम्यव्यापाराभावात् । न च प्रथम शब्दमर्यादया गुणगुणिनो॰ क्रियान्वयेऽवगते पश्चात्तयो॰ परिच्छेदकपरिच्छेद्याकाङ्क्षावशात्परस्परान्वयानुसन्धान मानसिक कल्प्यत इति वाच्यम्। गुणगुणिनो परस्परान्वयो हि समासप्रयोजक , तथाविधशब्दयोरेव समासविधानात्। तद्वाचकनीलघटशब्दयोस्तु श्रूयमाणयो क्रियान्वितत्वान्न परस्परमन्वय । अत कल्पितयोस्तयो॰ पार्ष्ठिकान्वयाच्छ्रूयमाणयोरपि सामर्थ्यं वक्तव्यम्। तत्र किं गुणगुणिवाचकयो शब्दयोर्विभक्त्यन्तयोरेव कल्पनम् ? उत विभक्तिरहितयो: ? किं वा समस्तयो ? नाद्य , विभक्त्यन्तयो कारकविशिष्टप्रतिपादकयोस्तयोर्मिथ॰ सम्बन्धायोगात्। न द्वितीय , विभक्तिरहितयो प्रयोगानर्हत्वात्समासानुपयुक्तत्वाच्च। 'सुप्सुपा' इत्यधिकृत्य विहितस्य कर्मधारयसमासस्य नीलघटशब्दयोरसुबन्तयोरनुपपत्ते॰। न तृतीय , समस्तपदानुसन्धानेन परस्परान्वयरूप सामर्थ्यं ज्ञेयम् , सामर्थ्यज्ञानाधीनश्च समास इत्यन्योन्याश्रयात्। अपि च सर्वत्र तादृशबोधद्वयकल्पने तदनुरोधेन कार्यकारणभावद्वयकल्पने पुन कल्पितशब्दान्तरानुसन्धानकल्पने च महद्गौरवमित्यरुणाशब्दस्यापि शक्तितुल्यनिरूढलक्षणया गुणविशिष्टपरत्व स्वीकृत्य क्रयानुवादेन विशिष्टकारकस्य विधानान्न कोऽपि दोष । न चारुणाशब्दस्य गुणविशिष्टपरत्वे कथमेतदधिकरणप्रवृत्तिरिति वाच्यम् । तत्प्रवृत्तेरपि सूपपादत्वात्। तथाहि—अरुणाशब्दस्य गुणविशिष्टे द्रव्ये लाक्षणिकत्वमात्रावलम्बेन पूर्वपक्षप्रवृत्ति पूर्ववदेवोपपाद्या। शक्तितुल्यलक्षणासाधनेन सिद्धान्तप्रवृत्ति । सूत्र त्वेव योज्यम्। ऐककर्म्यात् क्रियापदस्यैकत्वाद् अर्थैकत्वे एकवाक्यत्वे सति वाक्यभङ्गो न न्याय्य । अतो द्रव्यगुणयोर्द्रव्यप्रधानस्यैकहायनीशब्दस्य गुणोपसर्जनारुणाशब्दस्य च, नियम सामानाधिकरण्येन विशिष्टैकार्थप्रतिपादकयो क्रयेऽन्वय स्यादिति दिक्। सोऽय प्राभाकरवैयाकरणयाज्ञिकानुमत पन्था ॥

इति षष्ठमरुणाधिकरणम् ॥६॥

ननु ग्रहैकत्वोभयविशिष्टकारकस्य[1] सम्मार्गोद्देशान्न वाक्यभेद·, अन्यथा पश्वेकत्वे का गतिरित्याशङ्क्य पश्वेकत्वाद्वैषम्यं दर्शयति—

**चोदिते[2] परार्थत्वाद्यथाश्रुति प्रतीयेत ॥१५॥**

चोदिते—एकवचनसंयोगेन विहिते पशौ, यथाश्रुति एकवचनमनतिक्रम्य, एकत्व विवक्षितम् प्रतीयेत। कुत·? परार्थत्वात्—यागक्रियां प्रति पश्वेकत्वयोर्गुणभूतत्वादित्यर्थ। अयं भावः—'पशुना' इति तृतीयैकवचनेन करणकारकमेकत्वं चोच्यते, प्रातिपदिकेन पशु·। तत्र पशुरेकत्वञ्च क्रियान्वयात्प्रागेव कारके समानपदश्रुत्या प्रथममन्वयं [3]लभते। तत्र च यागक्रिया प्रधानम्, पश्वेकत्वे तु तत्र गुणभूते भवत·। ते च प्रधानक्रियावशीकृते प्रधानाविरोधेनान्वयमाकाङ्क्षत। ततश्च पश्वेकत्वाभ्यां युगपदन्वितस्यैव करणकारकस्यान्वयं यागक्रियानुमन्यते, ताभ्या पृथगन्वितस्य करणकारकस्य यागक्रियायामन्वये तस्या गुणानुरोधेनावृत्तिप्रसङ्गात्। तथा च पश्वेकत्वोभयविशिष्टकरणकारकयुक्ता यागक्रिया विधावन्वेतीति न वाक्यभेदप्रसक्ति·। सम्मार्गवाक्ये तु ग्रहैकत्वे प्रधानभूते। सम्मार्गक्रिया तु गुणभूता। तस्याश्च प्रधानानुरोधेनावृत्तिरुचिता। ततश्च ग्रहैकत्वे सम्मार्गक्रियावश्ये न भवत·। प्रत्युत सम्मार्गक्रियैव ग्रहैकत्ववशवर्तिनी। सा च गुणभूता प्रधानानुरोधेन स्वावृत्तिमुचितां पर्यालोच्य ग्रहैकत्वाभ्या प्रत्येकमेवान्वितस्य कर्मकारकस्यान्वयमनुमन्यते। तथा चैकत्वविशिष्टकर्मकारकयुक्ता ग्रहविशिष्टकर्मकारकयुक्ता च सम्मार्गक्रियाविधौ प्रत्येकमन्वेतीति विध्यावृत्तिलक्षणवाक्यभेदो दुर्वार·। तस्माद्ग्रहैकत्वमविवक्षितम्। यद्यपि चतुर्थाद्यपादे 'तत्रैकत्वमयज्ञाङ्गम्' इत्यधिकरणे पश्वेकत्वस्य विवक्षा व्यवस्थापयिष्यते तथापि तदधिकरणसिद्ध एवार्थ पश्वेकत्वाद्ग्रहैकत्वस्य वैषम्यप्रतिपादनाय प्राप्तावसरत्वादत्रापि [4]सङ्क्षेपेण गुणसूत्रेऽस्मिन् प्रदर्शित इति न पुनरुक्ति·॥

इति सप्तम ग्रहैकत्वाधिकरणम्॥ ७ ॥

८

"ग्रह सम्मार्ष्टि" इत्यत्र चमसा अपि सम्मार्ष्टव्या न वेति सशये पूर्वपक्षयति—

**संस्काराद्वा गुणानामव्यवस्था स्यात् ॥१६॥**

वाशब्द प्रत्यवस्थाने। एकत्वस्येव प्रातिपदिकार्थस्याप्यविवक्षितत्वात्सम्मार्गो-

1. समागस्योद्देश्यत्वान्न क, ग, घ, ङ, मु. पा. 2. चोदिते तु.
3. लभेते क, ग 4 सक्षेपेण इति नास्ति. क, घ, ङ,

ग्रहं सम्मृज्यात्' इति वाक्यभेदापत्ते, सम्मार्गानन्वयिनैकत्वेन[1] ग्रहान्तरेषु सम्मार्गस्य व्यावर्तयितुमशक्यत्वाच्च। न तृतीयः, एवं हि यं ग्रहं सम्मृज्यात्स एक इत्यर्थः पर्यवस्यति। तत्र सम्मार्गस्याप्राप्तत्वाद्ग्रहविशेषणत्व नोपपद्यते। इहैव हि सम्मार्गोऽपि विधातव्य'। ततश्च 'ग्रहं सम्मृज्यात्, य सम्मृज्यात्स एको भवेत्' इति वाक्यभेदः। अथैकत्वविशिष्ट ग्रह सम्मृज्यादित्युद्देश्यतावच्छेदकतया एकत्वस्य विधिसस्पर्श इति तुरीयः पक्षोऽस्तु, विशिष्टोद्देशाच्च न वाक्यभेद इति चेत्; एकत्व-विशिष्टग्रहस्य सम्मार्गविधाने हि ग्रहस्य प्रथमत एवैकत्वान्वयो वाच्य'। न चासौ सम्भवति। विभक्त्या हि युगपदेव सङ्ख्या कारक चोच्यते, न तु प्रथम प्रातिपदिकार्थस्य सङ्ख्यामभिधाय पश्चात्तद्विशिष्टं कारकमुच्यते, सकृच्छ्रुताया विभक्तेः पर्यायेण तद्बोधकत्वासम्भवात्। तस्मान्नैकत्वस्योद्देश्यतावच्छेदकतया विधिसस्पर्शसम्भव।

ननु ग्रहवदेकत्वमपि सम्मार्गक्रियायामेव साक्षादन्वेतु, न चायोग्यत्वादसम्भव', अरुणैकहायनीन्यायेन परिच्छेदकतया तदुपपत्तेरिति चेत्—किं सम्मार्गक्रियायां प्रधानतयैकत्वमन्वेति? उत गुणतया? नाद्य, वैषम्यात्। आरुण्यैकहायन्योर्हि प्रातिस्विकतृतीयाभ्या क्रयकरणत्वावगमे सति तन्निर्वाहाय पार्ष्ठिकान्वय' कल्प्यत इति युज्यते। इह तु 'ग्रहम्' इत्येकैव द्वितीया। सा च योग्यत्वाद्ग्रहगतमेव कर्मत्व बोधयन्ती कृतार्था शान्ताकाङ्क्षा सती अयोग्ये एकत्वे कर्मत्वं बोधयितु न शक्नोति, येन तदन्वयानुपपत्त्या पार्ष्ठिकान्वय कल्प्येत। यदि त्वावृत्त्यैकत्वेऽपि द्वितीया प्रातिस्विकमन्वियात्तदा ग्रहैकत्वयो पार्ष्ठिकान्वये सत्यपि, प्रथमत शब्दान्वये उभयोरपि ग्रहैकत्वगतयो कर्मत्वयो परस्परवार्तानभिज्ञयो सम्मार्गे प्रत्येकमन्वितत्वेन प्रत्येकमुद्देश्यत्वापत्तौ वाक्यभेदापत्ते। न द्वितीय, द्वितीयाश्रुतिविरोधात् तस्या. प्राधान्यवाचित्वात्। न च "सक्तूञ्जुहोति" इत्यत्रेव द्वितीयाया. साधनत्वे लक्षणेति वाच्यम्। तत्र सस्कारस्य भूतभाव्युपयोगाभावेनागत्या लक्षणास्वीकारेऽपि प्रकृते मुख्यवृत्तिसम्भवेन लक्षणाया अयुक्तत्वात्। अन्यथा ग्रहस्यापि गुणत्वापत्ते। न हि सकृदुपात्ता द्वितीयाविभक्तिर्ग्रहांशे प्राधान्यमेकत्वांशे गुणत्वमभिधातुमीष्टे। न च सर्वग्रहेषु सम्मार्गान्वये एकवचनस्यासाङ्गत्य शङ्क्यम्, जात्यभिप्रायेण तदुपपत्तेः। तथा चैकत्वस्य सर्वथापि विधिसंस्पर्शाभावादविवक्षितत्वम्॥

1. सम्मार्गानन्वितविधिनैकत्वेन. ख, ग., समार्गानन्वये विधिनैकत्वेन. क.

प्रयुक्तत्वेनापूर्वं लक्ष्यते, किन्त्वपूर्वत्वेनैव। तच्च प्रत्यासत्त्या ग्रहाभ्यासापूर्वं न त्वपूर्वमात्रमित्यदोष.। तदुक्त वार्तिके–'ग्रहशब्दोपस्थापितप्रत्यासन्नापूर्वातिक्रमकारणाभावाद्व्यवस्थासिद्धि' इति। तस्माद्ग्रहशब्दलक्षितापूर्वविशेषनिवन्धन' सम्मार्गो न चमसेषु। सूत्रे 'गुणानाम्' इति बहुवचनोपपत्तये "मैत्रावरुण पयसा श्रीणाति" "मन्थिनं सक्तुभि श्रीणाति" "घृतेन पात्नीवतं श्रीणाति" इत्याद्युदाहार्यम्। ग्रहचमसाभ्यासापूर्वभेदवन्मैत्रावरुणादिग्रहाणामपि प्रत्येकमभ्यासापूर्वभेदादिति ॥

इत्यष्टम चमसाधिकरणम् ॥ ८ ॥

९

तदेव संस्कारविनियोगविशेषे निरूपिते गणविनियोगविशेषो निरूप्यते। "सप्तदशारत्निर्वाजपेयस्य यूप" इत्यत्र किम् 'सप्तदशारत्निर्वाजपेयस्य' इति वचनव्यक्तिमाश्रित्य सप्तदशारत्नित्वं वाजपेयसाधनोर्ध्वपात्रद्वारा [1]वाजपेयाङ्गं विधीयते ? उत 'सप्तदशारत्निर्यूप' इति वचनव्यक्तिमाश्रित्य यूपद्वारा पश्वङ्गतया तद्विधीयते ? इति सशय। तत्राव्यवहितत्वात्प्रधानत्वात्प्रकरणानुग्रहाच्च 'सप्तदशारत्निर्वाजपेजस्य' इत्यन्वय न तु 'सप्तदशारत्निर्यूप.' इति, यूपस्य व्यवहितत्वाद्वाजपेयाङ्गत्वेनाप्रधानत्वाद्वाजपेयेत्थम्भावाकाङ्क्षालक्षणप्रकरणपरिग्रहाभावाच्च यूपधर्मस्य सप्तदशारत्नित्वस्य पश्वङ्गतया वाजपेयेत्थम्भावग्रहणायोग्यत्वात्। न च 'सप्तदशारत्नि' इत्यस्य बहुव्रीहितया विशेष्यसापेक्षस्य प्रथमान्तस्य 'वाजपेयस्य' इति षष्ठ्यन्तेन विशेष्यसमर्पणानुपपत्ते 'यूप' इत्यनेनैवान्वयो युक्त इति वाच्यम्। 'वाजपेयस्य' इति षष्ठ्या हि साधकतया वाजपेयसम्बन्धी पदार्थोऽभिधीयते 'वाजपेयसाधक' पदार्थं सप्तदशारत्नि' इति। षष्ठ्याश्च सम्बन्धिपर्यन्तवाचित्वान्न लक्षणा। सप्तदशारत्नित्वञ्च वाजपेयसाधनेषु पुरुषादिष्वसम्भवादूर्ध्वपात्राश्रयं सत्तद्द्वारा वाजपेयाङ्ग सम्पद्यते। यूपशब्दस्तूर्ध्वत्वसादृश्यादूर्ध्वपात्रे वर्तते। तत्रोर्ध्वत्वस्य प्राप्तत्वात्तद्विशेषसप्तदशारत्नित्वविधि। चमसेषु तूर्ध्वत्वस्यैवाप्राप्तत्वान्न तद्विशेषविधे' प्रवृत्ति'। किञ्च 'सप्तदशारत्निर्यूप' इत्यन्वये क्रत्वन्तरगतयूपस्याप्युद्देश्यत्वापत्तौ 'वाजपेयस्य' इत्युद्देश्यविशेषणत्व वाच्यम्, विशेषणत्वञ्च साक्षात्सम्बन्धेनैव न्याय्यम्। यूपश्च पशोरेव साक्षादङ्गम्। वाजपेयस्य तु पशुद्वारा। ततश्च वाजपेयशब्द स्वाङ्गभूतपशुयागो

1 वाजपेयाङ्गतया ग, ङ.

दिगुणानामव्यवस्था स्यात्। श्रुतेषु ग्रहेष्वेव समावेशो न स्यात्। अश्रुतेषु चमसेष्वपि स्यात्। ननु ग्रहशब्दे सति कथं चमसेष्वपि सम्मार्गं, न च ग्रहशब्दो व्रीह्यादिशब्दवदपूर्वसाधनमात्रोपलक्षणमिति वाच्यम्, श्रुतस्योपलक्षणार्थत्वे व्रीह्यादिघटितावघातादिविधेराज्यादावपि प्रवृत्तौ यथासयोग व्यवस्थायाः सर्वत्रोच्छेदप्रसङ्गात्, अत आह—संस्कारादिति। भावप्रधानो निर्देश। सोमग्रहणानन्तर सम्मार्गस्य विधिबलेन सोमावसेकनिर्हरणरूपसस्कारात्मकत्वमवगम्यते। तस्य च ग्रहेष्विव चमसेष्वपि प्रवृत्तिर्युक्ता। "सोमेन यजेत" इत्युत्पत्तिवाक्यस्यैकत्वेन तत. सोमयागे एकस्मिन्नवगते तदपूर्वस्यैकत्वेन तत्साधनेषु निविशमानस्य सम्मार्गस्य ग्रहेष्विव चमसेष्वपि प्रवृत्तः। सति हि कर्मभेदे अवघातादिवद्व्यवस्था स्यात्। एवञ्च सोमग्रहणानन्तरं 'सम्मार्ष्टि' इत्यतावत्युक्ते सोमावसेकनिर्हरणप्रयोजनतया सोमपात्राणामित्यवगमे सति कस्येत्याकाङ्क्षाभावादुपलक्षणमात्र ग्रहपद सम्पद्यते। तस्माच्चमसेष्वपि सम्मार्ग सम्भाव्यत इति प्राप्ते, सिद्धान्तयति—

## व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥१७॥

वाशब्द एवार्थे। सम्मार्गादिगुणाना ग्रहेष्वेव प्रवृत्तिः न च चमसेष्विति व्यवस्थैव स्यात्, न तु चमसेष्वपीत्यव्यवस्था। न ह्येकत्ववद्ग्रहशब्दार्थस्य विवक्षाया वाक्यभेदप्रसङ्गोऽस्ति, येन स न विवक्ष्येत। ननु वाक्यभेदाभावेऽप्याकाङ्क्षाविरहान्न विवक्षेत्युक्तमत आह—अर्थस्येति। ग्रहशब्दार्थस्य श्रुतत्वादित्यर्थः। शब्दोपात्तं ग्रहमुल्लङ्घ्य सामर्थ्यलभ्य सोमपात्र ग्रहीतु न युक्तम्। तथा सति ग्रहशब्दस्य प्रमत्तप्रलपितत्वापत्ते। ननु सम्मार्गस्यापूर्वनिबन्धनत्वात्सोमयागापूर्वस्य चैकत्वात्तत्साधनत्वाविशेषाच्चमसेष्वपि सम्मार्ग स्यात्, "व्रीहीनवहन्ति" इति व्रीहिशब्दस्येव ग्रहशब्दस्यापूर्वसाधनमात्रोपलक्षणत्वात्, न चैन्द्रवायवादियागाभ्यासानामपूर्वजनकताऽस्ति, यन ग्रहशब्दसयुक्तापूर्वविशेषनिबन्धनः सम्मार्गश्चमसेषु न स्यात्, अपूर्वस्य विहितैकसाध्यत्वादभ्यासानाञ्च प्रत्यक्षविधानाभावादित्यत आह—तस्य शब्दप्रमाणत्वादिति। तस्य—अभ्यासजातस्य प्रत्यक्षविध्यभावेऽपि देवतायुक्तग्रहभेदान्यथानुपपत्तिकल्पितविधिविहितत्वादपूर्वविशेषजनकत्वमुपपद्यते। न चैवमपि ग्रहयागाभ्यासप्रयुक्तापूर्वसाधनोद्देशेन सम्मार्गविधौ विशिष्टोद्देशदोषप्रसङ्गादपूर्वसाधनमात्रोद्देशेन विधानस्यावश्यकत्वाच्चमससाधारण्यमवर्जनीयमिति वाच्यम्। न हि ग्रहयागाभ्यास-

पशुयागाना तदविनाभूतेन यूपेनोपस्थिते । एवञ्च प्रकरणबाधेन वाक्यात्पश्वर्थत्वमेव यूपारोहणस्य न्याय्यमित्यास्तां तावत् ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

१०

दर्शपूर्णमासयो' प्रयाजसन्निधौ श्रूयते "अभिक्राम जुहोति" इति । तत्र किम् 'अभिक्रामम्' इत्येतद्भङ्क्त्वा प्राकरणिककर्मणा कर्तृषु निवेशयाम ? उत जुहोतिनान्वितं सत्प्रयाजहोमकर्तर्येव निवेशयाम. ? इति संशये, पूर्वपक्षयति—

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥**

अभिक्रमणे होमरूपकर्मसमवायानर्हत्वात्कर्तृगुणे सति वाक्यभेद स्यात् जुहोतिना विच्छेद स्यात् । न ह्यमूर्तमभिक्रमण होमकारक भवितुमर्हति । न चारुण्यवद्द्रव्यद्वारा तत्सम्भवति । तत्र ह्येकहायनीद्रव्यमुपात्तत्वाद्द्वारीभवितु युक्तम् । नात्र द्रव्यमुपात्तमुपलभामहे[1] । एवं वैषम्यद्योतनायैव तुशब्दः । न च 'जुहोति' इति होमकर्तोपात्त इति शङ्क्यम्, आख्यातस्य कर्तृवाचकत्वाभावात् । एतेनाभिक्रमणस्य साक्षाद्धोमार्थत्वासम्भवात्पूर्वाधिकरणन्यायेन प्रयाजहोमकर्तृरूपाङ्गावतारोऽपि प्रत्युक्त. । यूपस्य शब्दोपस्थितत्वेन तत्र सप्तदशारत्नित्वस्यावतारेऽपि प्रकृते कर्तु. शब्दत उपस्थित्यभावेन तत्राभिक्रमणस्यावतारासम्भवात् । एतद्वैषम्यद्योतनार्थोऽपि तुशब्द । तथा च जुहोतितो विच्छिन्नमभिक्रमण प्रकरणेन गृह्यते । जुहोतिस्त्ववयुत्यानुवादतया कथञ्चिन्नेय । न च प्रकरणेनापि क्रियासम्बन्धस्यैव बोधनीयत्वात्तत्राप्ययोग्यत्वं तुल्यमिति वाच्यम् । न हि प्रकरणेन क्रियाकारकभावो बोध्यते, किन्त्वङ्गाङ्गिभाव. । स च क्रिययो सम्भवत्येव । वाक्येन तु क्रियासम्बन्ध कारकभावेनैव बोध्यत इति वैषम्यम् । शक्यते हि च क्रियाया प्रकरणेन ग्रहण प्रयाजादिवत् । सम्भवति च कर्मण. कर्मोपकारकत्वम् । कारकत्वन्तु न सम्भवति । न च प्रकरणेन गृहीतमभिक्रमणं प्रयाजादिवदाराद्उपकारकमेव कि न स्यादिति वाच्यम् । आराद्उपकारकत्वे सकृदेवानुष्ठेयतया 'आभीक्ष्ण्ये णमुल्' इति विहितणमुलभिहितावृत्त्यानर्थक्यापत्ते, सम्भवति दृष्टेऽदृष्टार्थत्वाश्रयणस्यान्याय्यत्वाच्च । अत. कर्तुराहवनीयादिसमीपदेशप्राप्त्याधायकत्वसामर्थ्यात्कर्तृसंस्कारकमेवाभिक्रमणम् । न चैवमपि प्रधानकर्तर्येव निवेश स्यात्,

1 उपलभ्यते ग

लाक्षणिकः स्यात् । न च 'सप्तदशारत्निर्वाजपेयस्य' इत्यन्वयेऽपि सप्तदशारत्नित्वस्योर्ध्वपात्रमात्रविश्रान्तत्वाद्यूपशब्दस्य तल्लाक्षणिकत्वं तुल्यमिति वाच्यम् । प्रथमश्रुतवाजपेयशब्दे लक्षणाश्रयणापेक्षया पश्चाच्छ्रुतयूपशब्दे लक्षणाश्रयणस्य युक्तत्वात् । तस्मात्सप्तदशारत्नित्वस्योर्ध्वपात्रमात्रे निवेशो युक्त इति प्राप्ते, सिद्धान्तयति—

## आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

'सप्तदशारत्निर्यूपः' इत्येवान्वयः । 'वाजपेयस्य' इत्येतच्च 'यूपः' इत्यत्रान्वेति । तत्र सोमयागविशेषात्मकवाजपेयकर्मणि साक्षाद्यूपकार्याभावेन तदभावे सति वाजपेयिकयूपे सप्तदशारत्नित्ववचनस्य 'गगनारविन्दं सुरभि' इति वचनस्येवानर्थक्यात् वाजपेयाङ्गभूताग्नीषोमीयादिपशुयागेषु यो यूपस्तत्र सप्तदशारत्नित्वं निविशते । न चैवं सति वाजपेयशब्दे लक्षणा शङ्क्या । षष्ठी हि नाङ्गाङ्गित्वे, किन्तु [1]सम्बन्धमात्रवाचिनी । सा चोपकार्योपकारकभावमादायोपपन्ना, यूपस्य पशुद्वारा वाजपेयनिर्वर्तकत्वात् । न ह्यव्यवहितसम्बन्ध एव षष्ठ्यर्थः, 'देवदत्तस्य नप्ता' इत्यत्र देवदत्तस्य नप्त्रा साकं पुत्रद्वारकसम्बन्धेऽपि तद्दर्शनात् । एवञ्च प्रकृतिभूतवाजपेयशब्दः स्वार्थवृत्तः । षष्ठ्यपि पशुद्वारकवाजपेयसम्बन्धवाचिनी स्वार्थवृत्तैवेति न लक्षणा । यूपशब्दोऽपि स्वार्थवृत्तत्वान्न गौणः । ऊर्ध्वपात्रमात्रनिवेशे तु स गौणः स्यात् । अप्रधानेन व्यवहितेन च सम्बन्धः प्रकरणबाधश्च गौणत्वापेक्षया ज्यायान् । न च 'वाजपेयस्य' इत्यस्योद्देश्यविशेषणत्वात्साक्षात्सम्बन्ध एवाश्रयितुमुचित इति वाच्यम् । यूपमेव ह्युद्दिश्य सप्तदशत्वं विधीयते । तस्य च पश्वङ्गस्य वाजपेयेत्थम्भावाकाङ्क्षालक्षणप्रकरणपरिग्रहाभावेऽप्यधिकारलक्षणप्रकरणवशाद्वाजपेयिकयूपस्यैवोद्देश्यतापर्यवसानान्नातिप्रसङ्गः [2]। 'वाजपेयस्य' इति त्वनुवादमात्रम् । अतोऽपि परम्परासम्बन्धाश्रयणे[3] न दोषः । तस्मात् 'सप्तदशारत्निर्यूपः' इत्येवान्वय इति यूपस्यैव सप्तदशारत्निता नोर्ध्वपात्रस्य । ननु वाजपेयेत्थम्भावाकाङ्क्षालक्षणप्रकरणे "यूपमारोहति" इति यूपारोहणमाम्नायते । तथा चैतद्वाजपेयस्य यूपाभावात्तदङ्गभूतपशुयागीययूपे 'सप्तदशारत्निः' इत्यसङ्गतमिति चेत्सत्यम्, 'यूपम्' इति द्वितीयाश्रुत्या यूपार्थत्वमारोहणस्यावगतं, पश्वङ्गमित्येव युक्तम्,

---

1. सम्बन्धसामान्यवाचिनी क, ग 2. नातिप्रसङ्गावकाशः क, ग
3. ऽऽश्रयणात् क, घ, ङ, मु पा

पशुयागाना तदविनाभूतेन यूपेनोपस्थिते' । एवञ्च प्रकरणबाधेन वाक्यात्पश्वर्थत्वमेव यूपारोहणस्य न्याय्यमित्यास्तां तावत् ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

१०

दर्शपूर्णमासयो' प्रयाजसन्निधौ श्रूयते "अभिक्रामं जुहोति" इति । तत्र किम् 'अभिक्रामम्' इत्येतद्भङ्क्त्वा प्राकरणिककर्मणा कर्तृषु निवेशयाम ? उत जुहोतिनान्वित सप्रयाजहोमकर्तर्येव निवेशयाम. ? इति सशये, पूर्वपक्षयति—

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥**

अभिक्रमणे होमरूपकर्मसमवायानर्हत्वात्कर्तृगुणे सति वाक्यभेद स्यात् जुहोतिना विच्छेद स्यात् । न ह्यमूर्तमभिक्रमण होमकारक भवितुमर्हति । न चारुण्यवद्द्रव्यद्वारा तत्सम्भवति । तत्र ह्येकहायनीद्रव्यमुपात्तत्वाद्द्वारीभवितु युक्तम् । नात्र द्रव्यमुपात्तमुपलभामहे[1] । एव वैषम्यद्योतनायैव तुशब्दः । न च 'जुहोति' इति होमकर्तोपात्त इति शङ्क्यम्, आख्यातस्य कर्तृवाचकत्वाभावात् । एतेनाभिक्रमणस्य साक्षाद्धोमार्थत्वासम्भवात्पूर्वाधिकरणन्यायेन प्रयाजहोमकर्तृरूपाङ्गावतारोऽपि प्रत्युक्त. । यूपस्य शब्दोपस्थितत्वेन तत्र सप्तदशारत्नित्वस्यावतारेऽपि प्रकृते कर्तु. शब्दत उपस्थित्यभावेन तत्राभिक्रमणस्यावतारासम्भवात् । एतद्वैषम्यद्योतनार्थोऽपि तुशब्द । तथा च जुहोतितो विच्छिन्नमभिक्रमण प्रकरणेन गृह्यते । जुहोतिस्त्ववयुत्यानुवादतया कथञ्चिन्नेय. । न च प्रकरणेनापि क्रियासम्बन्धस्यैव बोधनीयत्वात्तत्राप्ययोग्यत्व तुल्यमिति वाच्यम् । न हि प्रकरणेन क्रियाकारकभावो बोध्यते, किन्त्वङ्गाङ्गिभावः । स च क्रिययो' सम्भवत्येव । वाक्येन तु क्रियासम्बन्ध कारकभावेनैव बोध्यत इति वैषम्यम् । शक्यते हि च क्रियाया' प्रकरणेन ग्रहणं प्रयाजादिवत् । सम्भवति च कर्मण. कर्मोपकारकत्वम् । कारकत्वन्तु न सम्भवति । न च प्रकरणेन गृहीतमभिक्रमण प्रयाजादिवदाराद‍ुपकारकमेव कि न स्यादिति वाच्यम् । आरादुपकारकत्वे सकृदेवानुष्ठेयतया 'आभीक्ष्ण्ये णमुल्' इति विहितणमुलभिहितावृत्त्यानर्थक्यापत्ते., सम्भवति दृष्टेऽदृष्टार्थत्वाश्रयणस्यान्याय्यत्वाच्च । अत कर्तुराहवनीयादिसमीपदेशप्राप्त्याधायकत्वसामर्थ्यात्कर्तृसंस्कारकमेवाभिक्रमणम् । न चैवमपि प्रधानकर्तर्येव निवेश स्यात्,

1 उपलभ्यते ग

लाक्षणिक. स्यात् । न च 'सप्तदशारत्निर्वाजपेयस्य' इत्यन्वयेऽपि सप्तदशारत्नित्वस्योर्ध्वपात्रमात्रविश्रान्तत्वाद्यूपशब्दस्य तल्लाक्षणिकत्व तुल्यमिति वाच्यम् । प्रथमश्रुतवाजपेयशब्दे लक्षणाश्रयणापेक्षया पश्चाच्छ्रुतयूपशब्दे लक्षणाश्रयणस्य युक्तत्वात् । तस्मात्सप्तदशारत्नित्वस्योर्ध्वपात्रमात्रे निवेशो युक्त इति प्राप्ते, सिद्धान्तयति—

## आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

'सप्तदशारत्निर्यूप ' इत्येवान्वय । 'वाजपेयस्य' इत्येतच्च 'यूपः' इत्यत्रान्वेति । तत्र सोमयागविशेषात्मकवाजपेयकर्मणि साक्षाद्यूपकार्याभावेन तदभावे सति वाजपेयिकयूपे सप्तदशारत्नित्ववचनस्य 'गगनारविन्द सुरभि' इति वचनस्येवानर्थक्यात् वाजपेयाङ्गभूताग्नीषोमीयादिपशुयागेषु यो यूपस्तत्र सप्तदशारत्नित्व निविशते । न चैवं सति वाजपेयशब्दे लक्षणा शङ्क्या । षष्ठी हि नाङ्गाङ्गित्वे, किन्तु [1]सम्बन्धमात्रवाचिनी । सा चोपकार्योपकारकभावमादायोपपन्ना, यूपस्य पशुद्वारा वाजपेयनिर्वर्तकत्वात् । न ह्यव्यवहितसम्बन्ध एव षष्ठ्यर्थ ,'देवदत्तस्य नप्ता' इत्यत्र देवदत्तस्य नप्त्रा साक पुत्रद्वारकसम्बन्धेऽपि तद्दर्शनात् । एवञ्च प्रकृतिभूतवाजपेयशब्द स्वार्थवृत्त । षष्ठ्यपि पशुद्वारकवाजपेयसम्बन्धवाचिनी स्वार्थवृत्तैवेति न लक्षणा । यूपशब्दोऽपि स्वार्थवृत्तत्वान्न गौण । ऊर्ध्वपात्रमात्रनिवेशे तु स गौण' स्यात् । अप्रधानेन व्यवहितेन च सम्बन्ध प्रकरणबाधश्च गौणत्वापेक्षया ज्यायान् । न च 'वाजपेयस्य' इत्यस्योद्देश्यविशेषणत्वात्साक्षात्सम्बन्ध एवाश्रयितुमुचित इति वाच्यम् । यूपमेव ह्युद्दिश्य सप्तदशत्व विधीयते । तस्य च पश्वङ्गस्य वाजपेयेत्थम्भावाकाङ्क्षालक्षणप्रकरणपरिग्रहाभावेऽप्यधिकारलक्षणप्रकरणवशाद्वाजपेयिकयूपस्यैवोद्देश्यतापर्यवसानान्नातिप्रसङ्ग [2]। 'वाजपेयस्य' इति त्वनुवादमात्रम् । अतोऽपि परम्परासम्बन्धाश्रयण[3]न दोष । तस्मात् 'सप्तदशारत्निर्यूप.' इत्येवान्वय इति यूपस्यैव सप्तदशारत्निता नोर्ध्वपात्रस्य । ननु वाजपेयेत्थम्भावाकाङ्क्षालक्षणप्रकरणे "यूपमारोहति" इति यूपारोहणमाम्नायते । था चव वाजपेयस्य यूपाभावात्तदङ्गभूतपशुयागीययूपे 'सप्तदशारत्नि ' इत्यसङ्गतमिति चेत्सत्यम् , 'यूपम्' इति द्वितीयाश्रुत्या यूपार्थत्वमारोहणस्यावगत, पश्वङ्गमित्येव युक्तम्,

1. सम्बन्धसामान्यवाचिनी क, ग   2 नातिप्रसङ्गावकाश . क, ग
3. आश्रयणात् क, ख, ङ, मु पा

मानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गम् ? उत प्रयाजहोममात्राङ्गम् ? इति सन्देहे, पूर्वपक्षयति—

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥

द्रव्यधर्मस्य सप्तदशारत्नित्वस्य यूपद्वारा वाजपेयाङ्गत्वसम्भवाद्वाजपेयस्य यूप सप्तदशारत्निरिति यूपशब्देन सप्तदशारत्निरित्यस्यैकवाक्यत्व युक्तम्। कर्तृगुणे त्वभिक्रमणेऽङ्गानामितिकर्तव्यताकाङ्क्षाविरहेणावान्तरप्रकरणपर्युपस्थापितकेवलप्रयाजहोमकर्मसम्बन्धाभावात्तत्प्रकरणैकवाक्यत्वाभावरूपो वाक्यभेद स्यात्। तथाहि— फलवाक्यप्रतिपादितभावनायास्तावत्प्रथम कथम्भावाकाङ्क्षोद्भवति। तदनन्तरञ्च प्रयाजादीनामङ्गाना विधीयमानानामित्थम्भावग्रहणव्यग्रप्रधानभावनाग्रस्तत्वेन परार्थतयोपक्षीणत्वान्न तान्यपि स्वय [1]प्रधानमन्यानि स्वार्थमित्थम्भावम् आकाङ्क्षितु प्रभवन्ति। अन्यथा प्रयाजाज्यभागादीना परस्परमङ्गत्वप्रसङ्ग इति नाङ्गानामवान्तरप्रकरण विद्यते। तदभावाच्चाभिक्रमण न केवलप्रयाजहोमाङ्गम्। किन्तु दर्शपूर्णमासप्रकरणपरिगृहीतसर्वहोमाङ्गमेव। न च सन्निधिवशाज्जुहोति. प्रयाजहोमविषय. स्यादिति वाच्यम्, तस्य प्रकरणापेक्षया दुर्बलताया. श्रुतिलिङ्गादिसूत्रे वक्ष्यमाणत्वात्। न चासत्यप्यवान्तरप्रकरणे वाक्यादेवाभिक्रमण प्रयाजाङ्ग स्यात् न तु दर्शपूर्णमासप्रकरणगतसर्वहोमाङ्गम्, जुहोते सन्निहितप्रयाजविषयत्वात् प्रकरणाच्च वाक्यस्य बलीयस्ताया श्रुतिलिङ्गादिसूत्रे वक्ष्यमाणत्वादिति वाच्यम्। साधारण्येन श्रुतस्य जुहोते सन्निधानात्सङ्कोचस्यायुक्तत्वात्। न च श्रुतिजनिताविशेषप्रत्ययस्य विशेषे व्यवस्थापन सङ्कोच, इह च न प्रथम सर्वविषयप्रत्ययो जायते, किन्तु श्रुत्या प्रथम जायमान एव प्रत्यय' सन्निहितमात्रगोचरो जायते, जुहोतेरनुवादत्वेन [2]सन्निहितगामित्वादिति वाच्यम्। बुद्धौ विपरिवृत्तिरेव ह्यनुवादस्यापेक्षिता, न तु पाठप्रत्यासत्तिरूपसन्निधि.। अन्यथात्यन्तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यात्। किञ्च "बर्हिर्लुनाति" "बर्हिषि हवींष्यासादयति" इत्यादिबर्हिर्धर्माणामपि यस्यैव हविष कियानपि पाठत सन्निधिविशेषोऽस्ति तन्मात्रविषयत्वापत्तौ, 'प्रकरणविशेषादसंयुक्त प्रधानस्य' इत्यग्रिमसप्तमपादाद्याधिकरणे(षा) प्रकरणवशेन तेषामङ्गप्रधानार्थत्व व्यवस्थापयिष्यमाण विरुध्येत। बुद्धिविपरिवृत्तिस्तु सर्वेषामेव होमाना प्रकरणाविशेषाद्-

1 प्रधानानि. ग, ङ, मु. पा. 2 सन्निहितमात्रगामित्वात्. क, ग.

न तु कृत्स्नप्राकरणिककर्तरीति वाच्यम्। सेतिकर्तव्यताकप्रयोगेऽवगते हि करिष्यामीति बुद्धौ सत्या किं ससहायोऽसहायो वेत्यस्यामवस्थायाम् 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्यधिकरणन्यायेन (वा) तत्प्रयोगे यजमानस्यैव कर्तृत्वे प्राप्तेऽध्वर्य्वादयोऽपि कर्तारो विधीयन्ते। समीहितप्राप्त्यर्थो य पुरुषव्यापारः स प्रयोग इत्युच्यते। स च फलसामग्रीविषय। समस्ताङ्गसहितानि च प्रधानानि फलसामग्री, न केवलं प्रधानानि। अत समस्तविषयव्यापारात्मकप्रयोग एव कर्तृसम्बन्ध इत्येकादशस्य द्वितीये 'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम्' इत्यधिकरणे (शा) व्यवस्थापयिष्यते। अत कर्तृसंस्कारमुखेन दर्शपूर्णमासप्रकरणपरिगृहीतसर्वप्रयोगाङ्गमभिक्रमणमिति प्राप्ते, सिद्धान्तयति—

## साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥

तुरवधारणे। 'अभिक्रामम्' इत्येतज्जुहोतिना एकवाक्यम्—एकार्थप्रतिपादकं स्यात्। जुहोतावेवान्वय स्यान्न तु प्राकरणिकसर्वक्रियासु। कुतः? हि यस्मात्कारणात्, पूर्वेण—'अभिक्रामम्' इत्येतावता पदेन जन्य पदार्थज्ञानम्, असमाप्तम्—अपर्यवसन्नं सत् जुहोतिना साकाङ्क्षं भवति; अतस्तदेकवाक्यत्वं युक्तमित्यर्थ। अय भाव— 'समानकर्तृकयो पूर्वकाले' इत्यधिकारविहितणमुल्प्रत्ययान्तं पूर्वकालक्रियावाचि 'अभिक्रामम्' इत्येतत्समानकर्तृकोत्तरकालक्रियासाकाङ्क्षं प्राकरणिकक्रियाभिर्यावत्सम्बध्नाति तत· प्रागेव प्रत्यक्षश्रुतजुहोतिना सम्बद्धं भवति। 'मातु स्मरति' 'सर्पिषो जानीते' 'एधोदकस्योपस्कुरुते' 'फलानां तृप्यति' इत्यादौ मात्रादे· शेषत्वेन विवक्षितस्याप्यन्वयदर्शनान्न कारकस्यैव क्रियान्वयनियम·। सम्भवति चाभिक्रमणस्य होमे कारकत्वं तत्कर्तृद्वारा, आरुण्यवत्। न च कर्तुः शब्दत उपादानं तत्र प्रयोजकम्, गम्यमानस्यापि तस्य द्वारत्वोपपत्तेः। अत एव "तिष्ठन्नन्वाह" इत्यादावनुपात्तस्याप्यनुवचनादिकर्तुं स्थानादिद्वारत्वमुपपन्नं भवति। जुहोतिना चात्र सन्निहिता प्रयाजहोमा एव विवक्षिता। ततश्च तत्कर्तर्येवाभिक्रमणं निविशत इति भाष्यानुसारी पन्था।

वार्तिककृतस्तु—'अभिक्रामम्' इत्यस्य णमुलन्तस्य समानकर्तृकत्वासम्बन्धेन जुहोत्यन्वयस्य स्पष्टत्वाज्जुहोते प्रयाजहोममात्रपरत्वे प्रमाणाभान्. गतप्रायत्वाच्च सूत्रद्वयमिदमन्यथा ` । तद्यथा

भानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गम्? उत प्रयाजहोममात्राङ्गम्? इति संशये, पूर्वपक्षयति—

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥

द्रव्यधर्मस्य सप्तदशारत्नित्वस्य यूपद्वारा वाजपेयाङ्गत्वसम्भवाद्वाजपेयस्य यूपः सप्तदशारत्निरिति यूपशब्देन सप्तदशारत्निरित्यस्यैकवाक्यत्वं युक्तम्। कर्तृगुणे त्वभिक्रमणेऽङ्गानामितिकर्तव्यताकाङ्क्षाविरहेणावान्तरप्रकरणपर्युपस्थापितकेवलप्रयाजहोमकर्मसम्बन्धाभावात्तत्प्रकरणैकवाक्यत्वाभावरूपो वाक्यभेदः स्यात्। तथाहि— फलवाक्यप्रतिपादितभावनायास्तावत्प्रथमं कथम्भावाकाङ्क्षोद्भवति। तदनन्तरञ्च प्रयाजादीनामङ्गानां विधीयमानानामित्थम्भावग्रहणव्यग्रप्रधानभावनाग्रस्तत्वेन परार्थतयोपक्षीणत्वान्न तान्यपि स्वयं [1]प्रधानमन्यानि स्वार्थमित्थम्भावम् आकाङ्क्षितुं प्रभवन्ति। अन्यथा प्रयाजाज्यभागादीनां परस्परमङ्गत्वप्रसङ्ग इति नाङ्गानामवान्तरप्रकरणं विद्यते। तदभावाच्चाभिक्रमणं न केवलप्रयाजहोमाङ्गम्। किन्तु दर्शपूर्णमासप्रकरणपरिगृहीतसर्वहोमाङ्गमेव। न च सन्निधिवशाज्जुहोतिः प्रयाजहोमविषयः स्यादिति वाच्यम्, तस्य प्रकरणापेक्षया दुर्बलताया श्रुतिलिङ्गादिसूत्रे वक्ष्यमाणत्वात्। न चासत्यप्यवान्तरप्रकरणे वाक्यादेवाभिक्रमणं प्रयाजाङ्गं स्यात् न तु दर्शपूर्णमासप्रकरणगतसर्वहोमाङ्गम्, जुहोतेः सन्निहितप्रयाजविषयत्वात् प्रकरणाच्च वाक्यस्य बलीयस्ताया श्रुतिलिङ्गादिसूत्रे वक्ष्यमाणत्वादिति वाच्यम्। साधारण्येन श्रुतस्य जुहोतेः सन्निधानात्सङ्कोचस्यायुक्तत्वात्। न च श्रुतिजनिताविशेषप्रत्ययस्य विशेषे व्यवस्थापनं सङ्कोचः, इह च न प्रथमं सर्वविषयप्रत्ययो जायते, किन्तु श्रुत्या प्रथमं जायमान एव प्रत्ययः सन्निहितमात्रगोचरो जायते, जुहोतेरनुवादत्वेन [2]सन्निहितगामित्वादिति वाच्यम्। बुद्धौ विपरिवृत्तिरेव ह्यनुवादस्यापेक्षिता, न तु पाठप्रत्यासत्तिरूपसन्निधिः। अन्यथात्यन्तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यात्। किञ्च "बर्हिर्लुनाति" "बर्हिषि हवींष्यासादयति" इत्यादिबर्हिर्धर्माणामपि यस्यैव हविषः कियानपि पाठतः सन्निधिविशेषोऽस्ति तन्मात्रविषयत्वापत्तौ, 'प्रकरणविशेषादसंयुक्तं प्रधानस्य' इत्यग्रिमसप्तमपादाद्याधिकरणे (षा) प्रकरणवशेन तेषामङ्गप्रधानार्थत्वं व्यवस्थापयिष्यमाणं विरुध्येत। बुद्धिविपरिवृत्तिस्तु सर्वेषामेव होमानां प्रकरणाविशेषाद्-

1 प्रधानानि घ, ङ, मु. पा    2 सन्निहितमात्रगामित्वात्. क, ग.

न तु कृत्स्नप्राकरणिककर्तरीति वाच्यम्। सेतिकर्तव्यताकप्रयोगेऽवगते हि करिष्यामीति बुद्धौ सत्यां किं ससहायोऽसहायो वेत्यस्यामवस्थायाम् 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्यधिकरणन्यायेन (वा) तत्प्रयोगे यजमानस्यैव कर्तृत्वे प्राप्तेऽध्वर्य्वादयोऽपि कर्तारो विधीयन्ते। समीहितप्राप्त्यर्थो य पुरुषव्यापारः स प्रयोग इत्युच्यते। स च फलसामग्रीविषय। समस्ताङ्गसहितानि च प्रधानानि फलसामग्री, न केवलं प्रधानानि। अत समस्तविषयव्यापारात्मकप्रयोग एव कर्तृसम्बन्ध इत्येकादशस्य द्वितीये 'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम्' इत्यधिकरणे (शा) व्यवस्थापयिष्यते। अत. कर्तृसंस्कारमुखेन दर्शपूर्णमासप्रकरणपरिगृहीतसर्वप्रयोगाङ्गमभिक्रमणमिति प्राप्ते, सिद्धान्तयति—

## साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥

तुरवधारणे। 'अभिक्रामम्' इत्येतज्जुहोतिना एकवाक्यम्—एकार्थप्रतिपादक स्यात्। जुहोतावेवान्वय स्यान्न तु प्राकरणिकसर्वक्रियासु। कुत.? हि यस्मात्कारणात्, पूर्वेण—'अभिक्रामम्' इत्येतावता पदेन जन्यं पदार्थज्ञानम्, असमाप्तम्—अपर्यवसन्न सत् जुहोतिना साकाङ्क्ष भवति, अतस्तदेकवाक्यत्व युक्तमित्यर्थ। अय भाव — 'समानकर्तृकयो पूर्वकाले' इत्यधिकारविहितणमुल्प्रत्ययान्त पूर्वकालक्रियावाचि 'अभिक्रामम्' इत्येतत्समानकर्तृकोत्तरकालक्रियासाकाङ्क्ष प्राकरणिकक्रियाभिर्योवत्सम्बध्नाति तत. प्रागेव प्रत्यक्षश्रुतजुहोतिना सम्बद्ध भवति। 'मातु स्मरति' 'सर्पिषो जानीते' 'एधोदकस्योपस्कुरुते' 'फलानां तृप्यति' इत्यादौ मात्रादे. शेषत्वेन विवक्षितस्याप्यन्वयदर्शनान्न कारकस्यैव क्रियान्वयनियम। सम्भवति चाभिक्रमणस्य होमे कारकत्व तत्कर्तृद्वारा, आरुण्यवत्। न च कर्तु. शब्दत उपादान तत्र प्रयोजकम्, गम्यमानस्यापि तस्य द्वारत्वोपपत्ते। अत एव "तिष्ठन्नन्वाह" इत्यादावनुपात्तस्याप्यनुवचनादिकर्तु स्थानादिद्वारत्वमुपपन्न भवति। जुहोतिना चात्र सन्निहिता प्रयाजहोमा एव विवक्षिता। ततश्च तत्कर्तर्येवाभिक्रमण निविशत इति भाष्यानुसारी पन्था।

वार्तिककृतस्तु—'अभिक्रामम्' इत्यस्य णमुलन्तस्य समानकर्तृकतासम्बन्धेन जुहोत्यन्वयस्य स्पष्टत्वाज्जुहोते प्रयाजहोममात्रपरत्वे प्रमाणाभावादरुणाधिकरणेन गतप्रायत्वाच्च सूत्रद्वयमिदमन्यथा योजयामासुः। तद्यथा—होमानुवादेन विधीय-

पत्त्या गौरवप्रसङ्गात्। ततश्चासंयुक्तमपि सयुक्तमध्यपतितमभिक्रमणमुद्भूताङ्गाकाङ्क्षा-नुवृत्तौ विधानात्प्रयाजानामेव होमेष्वङ्गम्, न तु सर्वहोमेषु। तदुक्त वार्तिके—

'येनाभिक्रमणादूर्ध्वं प्रयाजाना गुणोऽपरः।
विधास्यते प्रयाजानां तस्मात्प्रकरणास्तिता' इति॥

इति दशममभिक्रमणाधिकरणम्॥ १०॥

११

तैत्तिरीयके "सत्यं प्रपद्ये" इति प्रपाठके "प्र वो वाजा अभिद्यव" इत्याद्या. सामिधेन्यो नाम ऋच समाम्नाता.। तत. "अग्ने महा ॅ असि ब्राह्मणभारत, असावसौ" इति प्रवर.। तत "देवेद्धो मन्विद्ध" इत्यादयश्च निविदो नाम मन्त्रा समाम्नाता.। तत्र "विश्वरूपो वै त्वाष्ट्र." इति प्रपाठके "देवा वै नर्चि" "अयज्ञो वा एष" इति सप्तमाष्टमानुवाकयो' "पञ्चदश सामिधेनीरन्वाह" इति विहितसामिधेन्यनुवचने "त्रि' प्रथमामन्वाह त्रिरुत्तमाम्" "सन्ततमन्वाह" इत्यादिना गुणान्विधाय, "आर्षेय वृणीते" इति प्रवर विधाय' नवमानुवाके "अग्ने महा ॅ असि" इत्यादिना निविदो व्याख्याय, दशमानुवाके "त्रींस्तृचाननुब्रूयात्" इत्यादिना काम्यान्सामिधेनीकल्पान्विधाय, "निवीत मनुष्याणाम्" इत्येकादशानुवाके "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति यज्ञोपवीतं विधाय, "तिष्ठन्नन्वाह" "आसीनो यजति" इत्युक्त्वा, पुनरपि सामिधेनीनामेव वाचनिका गुणा. समाम्नाता:—"यत्क्रौञ्चमन्वाहासुर तद्यन्मन्द्रं मानुष तद्यदन्तरा तत्सदेवमन्तरानूच्यम्, अन्तर्वेद्यन्य पादो भवति बहिर्वेद्यन्योऽथान्वाह" इति। अन्तरा क्रौञ्चमन्द्रस्वरयोर्मध्यमस्वरेणेत्यर्थः। तत्र यद्यपि "प्र वो वाजा" इत्यृच "अग्न आयाहि" इति तृचस्य च विनियोगानन्तरम् 'पञ्चदश सामिधेनीरन्वाह" इति पठितम्, तथापि "त्रि प्रथमामन्वाह" इत्यनुवचनानुवादेन गुणविध्यनुसारात्तत. प्रागेव निवेशनीयम्, पाठक्रमादर्थक्रमस्य बलीयस्त्वात्। अन्यथा यदाग्नेयादिवाक्येषु का गति, तेषामपि "चतुरवत्त जुहोति" "उपरिष्टादभ्यज्याधस्तादुपानक्ति" इत्यादिगुणविधिमध्यपाठात्। एतेन 'सप्तमाष्टमानुवाकयो सामिधेन्य उक्ता' इत्यादितैत्तिरीयकोदाहरणप्रदर्शनपर भाष्यम्, 'सामिधेनीर्विधाय 'त्रि प्रथमाम्' इत्यादिवचनैर्गुणान्विधाय' इति शास्त्रदीपिका भाट्टदीपिका च व्याख्याता। यत्तु कश्चिदाह 'तैत्तिरीयके सामिधेन्यो न विहिता, किन्तु तद्गुणा एव विहिता.।

विशिष्टा । अतो बर्हिर्हविःशब्दस्येव जुहोतेरपि सन्निधिमात्रेण [1]सङ्कोचायोगादवान्तरप्रकरणस्य चाभावाद्दर्शपूर्णमासप्रकरणपरिगृहीतसर्वहोमाङ्गमभिक्रमणमिति प्राप्ते, सिद्धान्तयति—

## साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥

तुरवधारणे । प्रयाजभावनयाभिक्रमण साकाङ्क्षमेव इत्थम्भावाकाङ्क्षालक्षणप्रकरणयुक्तमेव । भावनास्वाभाव्येनाङ्गभावनास्वपि क्रतूपकारभाव्यकास्वितिकर्तव्यताकाङ्क्षोपपत्ते । न चेत्थम्भावग्रहणव्यग्रप्रधानभावनाग्रस्तानामङ्गानां नेतिकर्तव्यताकाङ्क्षासम्भव, अन्यथा प्रयाजाज्यभागादीनामपि परस्परमङ्गत्वापत्तेरिति वाच्यम् । न हि वय सर्वत्राङ्गविधावित्थम्भावाकाङ्क्षामभ्युपगच्छाम । किन्तु यत्राङ्गोद्देशेन किञ्चिद्विधीयते तत्र तत्सम्बन्धलाभायाङ्गस्य कथम्भावाकाङ्क्षोत्थाप्यते । अस्ति च प्रयाजोद्देशेन विधानम् "समानयत उपभृत." इति । 'उपभृति गृहीतस्याज्यस्यार्धं जुह्वा समानयते' इत्यर्थ. । यद्यप्यस्मिन्वाक्ये प्रयाजोद्देशेन विधान नास्ति प्रयाजशब्दाभावात्, तथापि "यदुपभृति प्रयाजानूयाजेभ्यस्तत्" इति प्रयाजानूयाजार्थत्वेनावगतस्यौपभृताज्यस्यार्धं प्रयाजार्थं जुह्वां समानयत इत्यर्थलाभात्समानयनस्य प्रयाजार्थत्वलाभ । प्रयाजाज्यभागादीनाञ्च परस्परोद्देशेन विधानाभावान्न परस्पराकाङ्क्षेति नाव्यवस्था । तथा च प्रयाजभावनाप्रसूतकथम्भावाकाङ्क्षालक्षणावान्तरप्रकरणपरिगृहीतमभिक्रमण तदेकवाक्य स्यात्, प्रयाजभावनायामेवान्वित स्यात् । ननु प्रयाजार्थत्वेनावगते समानयने प्रयाजभावनाया आकाङ्क्षासत्त्वेऽप्यभिक्रमणविधौ प्रयाजशब्दाभावेन तदुद्देशविधानाभावादभिक्रमणस्य न प्रयाजभावनाकाङ्क्षापरिग्रह इत्यत आह—असमाप्तमिति । "समानयत उपभृत" इति प्रयाजोद्देशेन पुरस्ताद्गुणविधिः "प्रयाजानिष्ट्वा हवींष्यभिघारयति" इति पश्चात्प्रयाजार्थगुणविधि । अभिघारण ह्येतत्प्रयाजद्रव्यप्रतिपत्तिरूपं प्रयाजार्थमिति चतुर्थस्याद्यपादे 'अभिघारणे विप्रकर्षादनूयाजवत्पात्रभेद स्यात्' इत्यधिकरणे (सा) व्यवस्थापयिष्यते । तयोश्च प्रयाजसयुक्तयोः समानयनाभिघारणयोर्मध्येऽभिक्रमणमङ्गमसयुक्त विहितम् । तत्र पूर्वपठितसमानयनविधिनोत्थापित प्रयाजभावनायां इत्थम्भावाकाङ्क्षालक्षण प्रकरणमसमाप्तम् । किन्तु पाश्चात्याङ्गभूतप्रयाजशेषाभिघारणविधिपर्यन्तमनुवर्तते, अन्यथा पाश्चात्याङ्गविधौ पुनराकाङ्क्षोत्थापना-

1. सङ्कोचाभावात् ख, मु पा

तदेतदाह—

**गुणानां च परार्थत्वादसम्बन्ध. समत्वात्स्यात् ॥ २२ ॥**

स्पष्टोऽर्थ । "त्रींस्तृचाननुब्रूयात्" इति पुरुषार्थगुणान्वयवधानादपि सामिधेनीना प्रकरणविच्छेद । न च तेषां सामिधेनीराश्रित्य विधानान्न तत्प्रकरणविच्छेदकत्वमिति वाच्यम् । इह हि "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य" इत्यादिना न नित्यसामिधेन्याश्रयणेन फलाय गुणविधि', निविद्धि सामिधेनीसन्निधेर्विच्छिन्नत्वात् । किन्त्वनुवचनान्तराणि सङ्ख्याविशिष्टानि फले विधीयन्ते । न च "एकविंशतिमनुब्रूयात्" इत्यादौ सङ्ख्येयालाभान्न सङ्ख्याविशिष्टानुवचनान्तरविधिसम्भव इति वाच्यम् । "यस्य लिङ्गमर्थसंयोगादभिधानवत्' इत्याष्टमिकाद्याधिकरणन्यायेन (पा) 'प्रकृतित इत्याश्मरथ्य.' इति सङ्कर्षचतुर्थद्वितीयपादाधिकरणन्यायेन[1] चानुवचनत्वसामान्यान्नित्यसामिधेन्यनुवचनप्रकृतित्वस्य काम्यानुवचनेषु सत्त्वेन चोदकत प्राप्तानामृचा प्राप्तेरित्यन्यदेतत् । न चैव सति काम्यानामनुवचनानामेवोपवीतमङ्ग स्यादिति वाच्यम् । विकृतिभूतानि ह्यनुवचनान्युपकारापेक्षाणि क्लृप्तोपकारत्वात्प्रथम प्राकृतैरेव धर्मै. सम्बध्यन्ते । न तु सन्निहितैर्वैकृतै प्रथम सम्बध्यन्ते, तेषामक्लृप्तोपकारत्वात् । तथा च काम्यानुवचनाना विकृतिभूतानां क्लृप्तोपकारप्राकृतधर्मपूरितानां कथम्भावाकाङ्क्षाविरहान्नास्ति तेषां प्रकरणमिति न तदङ्गमुपवीतम् । पाठत. सन्निधानमपि प्रकरणाद्दुर्बलमिति दर्शपूर्णमासाङ्गमेव । न च पाश्चात्याङ्गविधिमहिम्ना [2]पूषानुमन्त्रणमन्त्रवन्निविदा परप्रकरणपाठान्न व्यवधायकत्वमिति वाच्यम् । न हि निविदा पश्चात्सामिधेन्यङ्गविधिरस्ति, काम्यविधीनामनुवचनान्तरविषयत्वात् "अन्तरानूच्यम्" इत्यादिविधीनामनुवचनसामान्यविषयाणा सामिधेनीमात्रविषयत्वे प्रमाणाभावात् । यदप्यन्ते "देवा वै सामिधेनीरनूच्य" इत्यादिवचन तदप्याघारार्थवादत्वान्न सामिधेन्यनुवृत्तिमावहति । वाचनिकपाश्चात्याङ्गाभावादेव न निविदा सामिधेन्यङ्गत्वमपि । सन्निधिमात्रेण तदङ्गत्वशङ्का तु सर्वेषा परस्परमङ्गत्वापत्ते प्रकरणबाधाच्च निरस्ता । अतो महाप्रकरणाद्दर्शपूर्णमासाङ्गमुपवीत तत्कर्तृसंस्कारकं सर्वप्रयोगारम्भे तत्कर्तृभिः कार्यम् ॥

इत्येकादशमुपवीताधिकरणम् ॥११॥

---

1. पादीयाधिकरणन्यायेन क, घ, ङ. 2 पूषानुमन्त्रणवत्, क, ख, ग, मु पा.

शाखान्तर एव च सामिधेनीविधानमिति तैत्तिरीयके सामिधेनीना प्रकरणं न वक्तुमुचितम् । कर्मणश्च विधिर्यत्र तत्र प्रकरण भवेत् । न तु यत्र गुणार्थेन श्रवण तत्र विद्यते' इत्यादि तदत एवोपेक्ष्यम् । तत्र किमुपवीत सामिधेन्यङ्गम् ? उत दर्शपूर्णमासाङ्गम् ? इति संशय । [1]अङ्गभूतप्रयाजादिशब्दसंयुक्तमभ्यपतितं तदसंयुक्तमभिक्रमणादिकमप्युद्भूताङ्गाकाङ्क्षानुवृत्तौ विधानादवान्तरप्रकरणेन प्रयाजाद्यङ्गमिति पूर्वाधिकरणे स्थितम् । उपवीत च तादृशम्, "त्रि प्रथमामन्वाह" इत्यादिभिः "अन्तरानूच्यम्" इत्यादिभिश्च पुरस्तादुपरिष्टाच्चानुवचनानुवादेन गुणविधानात् । न च निविद्भिर्व्यवधानान्न प्रकरणानुवृत्तिरिति वाच्यम् । पूषानुमन्त्रणमन्त्रस्य विकृत्यर्थस्य दर्शपूर्णमासप्रकरणपठितस्यापि पाश्चात्यवाचनिकाङ्गविध्यनुसारेण यथा न प्रकरणविच्छेदकत्वम्, तथा "अन्तरानूच्यम्" इत्यादिपाश्चात्याङ्गविधिमहिम्ना निविदामपि परप्रकरणे पाठमात्रेण प्रकरणविच्छेदकत्वानुपपत्ते , अन्यथा पाश्चात्याङ्गविधिषु पुनराकाङ्क्षोत्थापनप्रसङ्गात् । किञ्चावान्तरप्रकरणादेव निविदामपि सामिधेन्यङ्गत्वान्न व्यवधायकत्वम्, 'न हि स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् । न चैवमपि "त्रींस्तृचाननुब्रूयात्" इत्यनुवाकगतगुणानां पुरुषार्थतया सामिधेन्यर्थत्वाभावात्तैर्विच्छिन्न सामिधेनीप्रकरणमिति वाच्यम् । न हि सामिधेनीराश्रित्य गुणविधानस्याश्रयप्रकरणविच्छेदकत्वम्, तथा सति गोदोहनादीनामपि प्रकरणविच्छेदकत्वापातात् । तस्मात्सामिधेन्यङ्गमुपवीतमिति प्राप्ते, सिद्धान्तयति—

[2]सन्दिग्धे तु व्यवायाद्वाक्यभेद. स्यात् ॥ २१ ॥

तुरवधारणे । सामिधेन्यङ्ग दर्शपूर्णमासाङ्ग वेति सन्दिग्धे "उपव्ययते" इति विहिते उपवीते "सामिधेनीरन्वाह" इति वाक्यतो भेद स्यात् सामिधेनीप्रकरणाद्विच्छिन्न स्यादिति यावत् । कुत ? व्यवायात्—निविदादिभिर्व्यवधानादित्यर्थ. । न च निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गाना न प्रकरणविच्छेदकत्वमिति वाच्यम् । निविदो हि "अग्ने महा ँ असि" इत्युपक्रम्य पठिता अग्निप्रकाशका प्रकरण बाधित्वा लिङ्गादग्न्यर्था भवन्ति । सामिधेन्योऽप्यग्निनिष्पत्तिफलकसमिदाधानार्थत्वादग्न्यर्था । तासा [3]च न परस्परसम्बन्धो भवति ॥

1. अङ्गत प्रयाजादि ख, प्रयाजादि ड 2. सन्दिग्धेषु.

3. चोभयेषा ख.

तदेतद्भाष्यकारोत्प्रेक्षितमधिकरणमापातरमणीयमेव । पवमानेष्टिप्रकरणस्थ-वाक्येन पवमानहविषामग्न्यर्थत्ववर्णनस्य व्यर्थत्वात् तेषामाधानाङ्गत्वेऽपि पात्राणा सर्वयज्ञार्थत्वोपपत्ते. । प्रबलेन वाक्येन यज्ञसंयुक्ततया श्रुतानां दुर्बलेन प्रकरणेनाधा-नाङ्गत्वस्याप्रसक्त्याधानाङ्गत्वेऽपि पवमानहविषाम्, तेषु पात्राणां समावेशस्यानव-गमात् । यत्तु दुर्बलेनापि वाक्येन श्रौताधानावरुद्धाग्न्यर्थत्वं पवमानहविषाम् अन्यथा वाक्यानर्थक्यापातादिति तन्न; पवमानहविर्वेलाया परमापूर्वोत्पत्त्यभावेनाहवनी-यस्यानिष्पन्नतया पवमानहवि'ष्वेवानारभ्यवाक्यतस्तदप्राप्तौ प्राकरणिकयदाहवनीय-वाक्यस्याधानजन्योत्पत्त्यपूर्वविशिष्टाग्न्यधिकरणत्वप्रापणार्थत्वात्[1], एवम् "यद्गार्हपत्य आज्यमधिश्रयन्ति" इत्यादिवाक्यैर्गार्हपत्यादिप्राप्ति । एवञ्च सप्तम्या न लक्षणापि । न च प्रबलव्रीहिश्रुत्यवष्टब्धानामवघातादीना यथा प्रकरणतो निवेशस्तद्वदाधाने निवेश. पात्राणा किं न स्यादिति वाच्यम् । यज्ञस्यापूर्वाव्यभिचारादेवापूर्वार्थत्वनि-र्वाहोपपत्तौ दुर्बलप्रकरणेन प्रकृताधानसम्बन्ध्यपूर्वलक्षणायाः स्वीकारायोगात् । सर्वत्र हि स्वोद्देश्यस्यापूर्वव्यभिचारे सत्यपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेश । यथा "व्रीहीनवहन्ति" इत्यादौ, तत्र च्वानर्थक्यतदङ्गन्यायः । इह तु यज्ञपदेनैवाव्यभि-चरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात्प्रधानाधानसम्बन्धस्यै-वाप्रसक्तौ कथमानर्थक्यतदङ्गन्याय । एवं सत्यपि यदि पवमानेष्टिसन्निधौ "वारणो यज्ञावचर" इत्याम्नातं स्यात्तदानुवादस्य सति सम्भवे सन्निहितगामित्वात्सप्तदशा-रत्निवाक्ये यूपशब्दस्य प्रकृतवाजपेयसम्बन्धियूपपरत्ववद्यज्ञशब्दोऽपि पवमानेष्टि-मात्रविषय. स्यात् । नैवमस्ति, पवमानेष्टीना प्रदेशान्तरस्थत्वात् । ततश्च प्रकरणा-त्पूषानुमन्त्रणवदुत्कृष्टानि वारणादिपात्राणि सर्वयज्ञार्थानि भवन्ति । एवञ्च पवमान-हविषामाधानाङ्गत्वे सत्यपि प्रकारान्तरेण वारणादिपात्राणा सर्वयज्ञार्थत्वसम्भवा-न्निष्प्रयोजन भाष्यकारीयमधिकरणमिति 'गुणानां च परार्थत्वात्' इति सूत्र पूर्वा-धिकरणशेषतयोक्तरीत्या व्याख्येयमिति वार्तिकादिग्रन्थेषु बहुधा प्रपञ्चितम् ॥

इति द्वादश वारणाधिकरणम् ॥ १२ ॥

१३

स्तो दर्शपूर्णमासयोराज्यभागावाग्नेयः सौम्यश्च । तयोः क्रमेणानुवाक्याश्चतस्र ऋच समाम्नाता. । "अग्निर्वृत्राणि जङ्घनत्" इत्याग्नेयी, "त्वं सोमासि सत्पतिस्त्वं

1 अग्न्यधिकरणकत्व ग, घ, ङ, मु. पा.

१२

तदेवम् 'गुणानाञ्च परार्थत्वात्' इति सूत्रमुपवीताधिकरणशेषत्वेन व्याख्यातं वार्तिके। भाष्ये त्वधिकरणान्तरपरतया तद्व्याख्यातम्। तद्यथा— अग्न्याधेये श्रूयते "वारणो यज्ञावचरः स्यान्न त्वेतेन जुहुयात्" "वैकङ्कतो यज्ञावचरः स्याज्जुहुयादेवैतेन" इति। यज्ञस्य अवचरः प्रचारसाधनं यज्ञपात्रम्। पवमानेष्टयोऽपि तत्रैव श्रुताः। तत्र पात्राणि किं पवमानेष्टिषु निविशन्ते ? उत सर्वयज्ञेषु ? इति संशयः। तत्र "अग्नीनादधीत" इत्यग्न्याधेयस्य द्वितीयाश्रुत्या अग्न्यर्थत्वावगमेन फलवत्त्वादफलानि पवमानहवींषि प्रकरणात्तदङ्गतां प्रतिपद्यन्ते। ततश्च यज्ञसाधनतया श्रुतानां पात्राणामयज्ञात्मके विधिवत्सम्भृतदेशविशेषे मथितस्याग्नेर्निधानेऽग्न्याधेये साक्षात्समावेशासम्भवादानर्थक्यतदङ्गन्यायेन पवमानहविःषु निवेश इति प्राप्ते, सिद्धान्तयति—

गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥२२॥

आधानस्य पवमानहविषां चाग्न्यर्थतया गुणभूतानां परार्थतया समत्वात् न परस्परं तादर्थ्यलक्षणः सम्बन्धः। ततश्च पवमानेष्टीनामाधानाङ्गत्वाभावान्न तासामानर्थक्यतदङ्गन्यायविषयत्वमित्यर्थः। तथाहि—"यदाहवनीये जुह्वति" इत्यनारभ्याधीतमेकं वाक्यम्। पवमानहविःप्रकरणे च तत्सरूपमेवान्यद्वाक्यम्। तत्रानारभ्याधीतस्य प्रकृत्यर्थत्वात्प्रकृतिगाम्याहवनीयश्चोदकतो विकृतिष्वपि भवतीति सर्वयज्ञार्थः सम्पद्यते। पवमानेष्टिप्रकरणपठितन्तु वाक्यं न तावदनारभ्याधीतवाक्यप्राप्तानुवादकम्, पवमानहविर्वेलायामाहवनीयस्यानिष्पन्नत्वात्। अत एव न पवमानहविःष्वधिकरणतयाहवनीयविधिपरम्, अनिष्पन्नस्याधिकरणतया विधातुमशक्यत्वात्, किन्त्वाहवनीये निष्पादयितव्ये पवमानहविषां साधनतया विधिपरम्। जुहोतिना हि होमसंयुक्तानि पवमानहवींषि लक्ष्यन्ते। न चैवं शेषत्वार्थकसप्तम्यनुपपत्तिरिति शङ्क्यम्, "तप्ते पयसि दध्यानयति" इत्यत्र नयतेर्द्विकर्मकत्वेनानीयमानदधिव्याप्यतया प्रधानकर्मत्वेन साध्यत्वेऽपि यथा 'पयसि' इति सप्तमी तद्वदुपपत्तेः। न चाग्नीनां श्रौताधानावरुद्धत्वात्तत्र वाक्येन पवमानहविषां साधनतया विधिरनुपपन्नः, लक्षणाया समभिव्याहारमूलकत्वेन तदग्न्यस्य वाक्यगम्यत्वादिति वाच्यम्। वाक्यानर्थक्यापत्त्या दुर्बलेनापि वाक्येन पवमानहविषामग्न्यर्थत्वलाभात्। एवञ्च पवमानहविषामाधानवदग्न्यर्थत्वेनाधानाङ्गत्वाभावादाधानेऽसम्भवतां पात्राणां पवमानेष्टिष्वानर्थक्यतदङ्गन्यायावतरणेन समावेशासम्भवात्सर्वयज्ञार्थत्वमिति ॥

भ्यत्वात् । न च वाक्यत्वेऽपि विधित्वात्प्राप्तार्थमन्त्रलिङ्गापेक्षया प्राबल्यमिति वाच्यम् । प्रबलमपि हि विधिवाक्य मन्त्रलिङ्गस्य तदैव बाधक, यदि मन्त्रलिङ्गमबाधित्वा स्वयमात्मान न लभेत । प्रकृते च वार्त्रघ्नीवाक्य वृधन्वतीवाक्यञ्च पौर्णमास्यमावास्यागतयोराज्यभागयोरव्यवस्थया पुरोनुवाक्यायुगलद्वयस्य लिङ्गत प्राप्तौ तदबाधेन पौर्णमासीकर्मगतयोराज्यभागयोर्वार्त्रघ्न्यावमावास्याकर्मगतयोर्वृधन्वत्यावित्यपेक्षितव्यवस्थामात्रविधानतो लब्धात्मनी भवत । प्रधानोद्देशेन मन्त्रविधौ तु प्रधानेषु मन्त्रान्तरसद्भावादनपेक्षितविधान प्राप्तव्यवस्थामात्रविधानोपपत्तावत्यन्ताप्राप्तप्रापणञ्च दोष, प्राप्तव्यवस्थाया लघुत्वात् । एवञ्च वार्त्रघ्न्यो पौर्णमासीकर्मगताज्यभागाङ्गत्वात्पौर्णमासीविकृतिभूतसौर्येष्ट्यादावमावास्याकालकत्वेऽपि प्रवृत्ति, वृधन्वत्योस्तु दर्शकर्माङ्गाज्यभागार्थत्वात्तद्विकृतिभूतप्रजाकामैन्द्राग्नेष्ट्यादौ पौर्णमासीकालकत्वेऽपि प्रवृत्ति । अस्तु वा कालद्वारा कर्मणि वृत्ते पौर्णमास्यमावास्याशब्दयोर्मुख्यवृत्त्या कालवचनता । तथापि पौर्णमास्या काले यावाज्यभागौ तयोर्वार्त्रघ्न्यावित्येवप्रकारेणाज्यभागोद्देशेनैव व्यवस्थानाञ्च प्रधानाङ्गता । न चैव सति विशिष्टोद्देशो लक्षणा च स्यादिति वाच्यम् । पौर्णमास्यां काले वार्त्रघ्न्यौ दर्शकाले वृधन्वत्यावित्येव व्यवस्थाविधि । अव्यवस्थायाञ्च प्राप्ताया व्यवस्था विधातव्या । सा चाज्यभागद्वारैव प्राप्तेति साक्षात्कालोद्देशेन व्यवस्थाविधानेऽपि तत्कालकर्तव्याज्यभागयोर्व्यवस्था पर्यवस्यति । एवञ्च न विशिष्टोद्देशदोषप्रसक्ति । पौर्णमास्यमावास्याशब्दयो. स्वार्थवृत्त्योरेवोद्देश्यसमर्पकत्वाञ्च लक्षणापि । तथा च पौर्णमासीविकृतिभूतसौर्यादावमावास्याकालकत्वे वृधन्वत्योरेव प्रवृत्ति, न तु वार्त्रघ्न्यो । दर्शविकृतिभूतैन्द्राग्नादौ पौर्णमासीकालकत्वे वार्त्रघ्न्योरेव प्रवृत्ति, न तु वृधन्वत्योरिति फलभेद । पक्षद्वयमपीद याज्ञिका अपि सम्मन्यन्ते । आह हि बोधायन —'वार्त्रघ्नावाज्यभागौ पूर्वपक्षे वृधन्वन्तावपरपक्ष इत्यौपमन्यव' इति । औपमन्यवग्रहणात्कर्ममुखेन व्यवस्था स्वय बोधायनो मन्यत इति गम्यते । वस्तुतस्तु कौषीतकब्राह्मणे "पौर्णमास्या वार्त्रघ्नावाज्यभागौ भवत, अमावास्याया वृधन्वन्तौ" इत्याज्यभागशब्दसयोगेन विधानात्प्रधानार्थत्वस्याप्राप्ते. पूर्वपक्षानुन्मेषादधिकरणप्रवृत्तिश्चिन्त्यप्रयोजनेत्यास्ता तावत् ॥

इति त्रयोदश वार्त्रघ्न्यधिकरणम् ॥ १३ ॥

राजोत वृत्रहा" इति सौमीति द्वे । ते च वृत्रहननप्रकाशिके वार्त्रघ्न्यौ । "अग्निः प्रत्नेन जन्मना" इत्याग्नेयी, "सोम गीर्भिष्ट्वा" इति सौमी इति च द्वे । ते च 'वावृधे' 'वर्धयाम' इति वृद्धिप्रकाशिके वृधन्वत्यौ । तदेतदनुवाक्याचतुष्टयमधिकृत्याम्नायते "वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्" इति । वार्त्रघ्नी वार्त्रघ्न्यौ, वृधन्वती वृधन्वत्यौ । विभक्तेरीकारश्छान्दसः । तत्र किमाज्यभागयोः क्रमप्राप्ता मन्त्रास्ताभ्यामाच्छिद्य दर्शपूर्णमासाङ्गतया विधीयन्ते ? उताज्यभागयोरेवाव्यवस्थया प्राप्तयोर्युगलयोर्व्यवस्थामात्रं विधीयते? इति संशयः । तत्र पौर्णमास्यमावास्याशब्दौ कर्मवचनौ, कालवचनत्वे मन्त्राणां कालप्रकाशकत्वाभावेनादृष्टद्वारैव कालार्थत्वापत्त्या 'काले याज्याज्यभागौ' इत्याज्यभागोपलक्षकताप्रभङ्गात् । यदि च कालस्य प्रकरणं स्यात्तदा कथञ्चिदप्यदृष्टकल्पनया कालार्थता मन्त्राणां स्यात् । नैवमस्ति, कालस्याफलत्वात् । तस्मात्क्रमं बाधित्वा वाक्येन प्रकृतदर्शपूर्णमासोद्देशेन मन्त्रा विधीयन्ते । सप्तमी तु "पूर्वेद्युरमावास्यायां वेदिं करोति" इतिवत्प्राधान्येऽप्यविरुद्धेति प्राप्ते, सिद्धान्तयति—

**मिथश्चानर्थसम्बन्धः**[1] ॥ २३ ॥

मिथः परस्परं मिलिताभ्यामनुवाक्याभ्यां वार्त्रघ्नीभ्यां पौर्णमासीकर्मणः तथा वृधन्वतीभ्याममावास्याकर्मणः अर्थेन प्रयोजनेन सम्बन्धो नास्ति । नैकैकस्य कर्मणो द्वाभ्यामनुवाक्याभ्यां कार्यमस्तीत्यर्थः । नाप्येकैकयेति चकारार्थः । न च पौर्णमास्यामाग्नेयस्य प्रथमा पुरोनुवाक्या अग्नीषोमीयस्य तु द्वितीया, दर्शेऽपि प्रथमस्य प्रथमा द्वितीयस्य द्वितीयेति न विरोध इति वाच्यम् । द्वितीया ह्यनुवाक्या सौमी । न च सोमदेवत्यं प्रधानं दर्शपूर्णमासयोरस्ति । अग्नीषोमीयेऽप्यग्निसहितस्य सोमस्य देवतात्वम्, न केवलस्येति स्थितिः । न चाग्नीषोमीये द्वयोरपि प्रयोग इति वाच्यम् । "पुरोनुवाक्यामन्वाह" इति सङ्ख्याया विवक्षितत्वात् । न च 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति न्यायेन (ह्य) वचनबलादग्नीषोमादिपरता नीयतामिति वाच्यम् । तत्र "ऐन्द्र्या गार्हपत्यम्" इति द्वितीयाश्रुत्या लिङ्गबाधेन मन्त्रस्य लक्षणाश्रयणेऽपि प्रकृते मन्त्रविनियोगस्य वाक्यगम्यतया वाक्यस्य च लिङ्गापेक्षया दुर्बलत्वेन तद्बलतो लिङ्गं बाधित्वा मन्त्रलक्षणाश्रयणस्यान्याय्यत्वात् । मन्त्रविनियोगो ह्यत्र वाक्यगम्यः, सप्तम्या लक्षणाश्रयणात् लक्षणायाश्च समभिव्याहारमूलकत्वेन तद्गम्यस्यार्थस्य वाक्यल-

1. सम्बन्धात्.

एकवाक्यत्वमप्यसिद्धमित्याह—

**वाक्यानाञ्च समाप्तत्वात् ॥ २५ ॥**

आख्यातानामेकवाक्यत्वप्रयोजकयच्छब्दाद्यभावेनावनेजनादिवाक्यानां स्वस्वार्थेष्वेव पर्यवसन्नत्वान्नैकवाक्यत्वम्। चकारोऽवान्तरप्रकरणनिरासार्थ। वाचनिकसन्दंशाभावेनावनेजनादावाकाङ्क्षानुत्थानात्। एतेन यच्छब्दाद्यभावेऽपि 'पश्य मृगो धावति' इत्यादिवदेकवाक्यत्वमिति निरस्तम्। तस्मात्सर्वार्थतेति ॥

इति चतुर्दश हस्तावनेजनाधिकरणम् ॥ १४ ॥

१५

सन्ति दर्शपूर्णमासयोराग्नेयाग्नीषोमीयैन्द्राग्नाः पुरोडाशाः। तत्र "आग्नेयं चतुर्धा करोति" इति चतुर्धाकरणविधौ आग्नेयशब्देनाग्नीषोमीय ऐन्द्राग्नश्च द्विदेवत्योऽपि गृह्यते ? उत केवलाग्निदेवत्य एव गृह्यते ? इति संशये, पूर्वपक्षयति—

**शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥२६॥**

तुरप्यर्थे। हस्तावनेजनादिकं करिष्यमाणसकलकर्मसाधारणमुक्तम्। एवं शेषप्रतिपत्तिरूपश्चतुर्धाकरणसंस्कारोऽपि द्विदेवत्यसाधारणः प्रतीयेत। कुतः ? यतो द्विदेवत्योऽपि गुणसंयुक्तः—अग्निसंयुक्तः, अग्नीषोमीयैन्द्राग्नयोरप्यग्निसम्बन्धस्य सत्त्वात्। नन्वाग्नेयशब्दस्य देवतातद्धितान्तस्य देवतात्वेनाग्निसम्बन्धिवाचकस्य कथमग्नीषोमीयैन्द्राग्नयोर्वृत्तिरित्यत आह–मिथस्तेषामसम्बन्धादिति। न तावदत्र यदाग्नेयादिवाक्य इवाग्नि कार्ययोगित्वेनाश्रीयते, येन देवतात्वेनैव तत्सम्बन्धो गृह्येत। किन्तु चतुर्धाकरणद्रव्योपलक्षणमात्रम्। उपलक्षणानाञ्च न कार्येण सम्बन्धोऽस्ति। न हि 'चित्रगुमानय' इत्युक्ते चित्रा गावोऽप्यानीयन्ते। न च 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादौ पुत्रादीनां वहनादिनान्वयोऽस्ति। अत एव च 'द्विपुरोडाशाया स्यादन्तरार्थत्वात्' इति दाशमिकान्त्याधिकरणे 'अनपायश्च कालस्य लक्षणं हि पुरोडाशौ' इति गुणसूत्रेण "उपांशुयाजमन्तरा यजति" इत्यन्तरालोपलक्षणपुरोडाशद्वयकार्यान्वयाभावात् 'नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते' इत्यसोमयाजिनो ब्राह्मणस्यैकपुरोडाशायामपि पौर्णमास्याम् 'उपांशुयाजोऽस्ति' इति व्यवस्थापयिष्यते। अत एव च 'त्वष्टारं तूपलक्षयेत्पानात्' इत्यग्निमपादीयाधिकरणे "सजूर्देवेन त्वष्ट्रा सोम पिब" इति त्वष्टुरुपलक्षणभूतत्वान्न पानान्वय इति व्यवस्था-

१४

दर्शपूर्णमासयो' श्रूयते "कर्मणे वां देवेभ्य· शकेयमिति हस्तावववनेनिक्ते" "गार्हपत्यात्प्रक्रम्य सन्ततामुलपराजिं स्तृणाति" इति । अवनेनिक्ते–प्रक्षालयति । उलपा·–उशीरतृणानि शुष्कतृणानि वा । तेषां राजि' पङ्क्तिः । तथा ज्योतिष्टोमे श्रूयते "मुष्टीकरोति, वाच यच्छति, अदीक्षिष्टाय ब्राह्मण इति दीक्षितमावेदयति" इति । दीक्षितत्वेन यजमान बोधयतीत्यर्थः । तत्रावनेजन तावत्कर्तृसंस्कारत्वात् "कर्मणे वाम्" इति मन्त्रलिङ्गाच्च करिष्यमाणकर्माङ्गम् । मुष्टीकरणं वाग्यमनञ्च कायिकवाचिकव्यापारान्तरविरमणमुखेन करिष्यमाणकर्मसु मन प्रणिधानार्थम् । तत्र किमवनेजनमुलपराजिस्तरणाङ्गं वाग्यमन मुष्टीकरण च दीक्षितावेदनाङ्गम् ? उतावनेजनमध्वर्युकर्तृकप्राकरणिकसर्वकर्माङ्गं तथा वाग्यमनं मुष्टीकरणञ्च तदुभयानुवृत्तिकालीनप्राकरणिकयाजमानसर्वकर्माङ्गम् ? इति संशय· । तत्रानन्तर्यादवान्तरप्रकरणादेकवाक्यत्वाच्चावनेजनमुलपराजिस्तरणाङ्गम् । अस्ति हि "हस्तावववनेनिक्ते" "उलपराजिं स्तृणाति" इत्यनयोरेकवाक्यत्वमाकाङ्क्षावशात् । अस्ति हि सर्वभावनासु 'किम्' इत्युपकार्याकाङ्क्षा । ततश्चावनेजनेन किं कर्तव्यमित्यपेक्षायाम् 'उलपराजि स्तृणाति' इत्युपतिष्ठते । न च तदतिक्रमे हेतुरस्ति । न च विनिगमनाविरहादवनेजनस्यैवोलपराजिस्तरणमङ्ग किं न स्यादिति वाच्यम् । प्रथमोच्चारितावनेजनवाक्योत्थकिमाकाङ्क्षाग्रस्तस्योलपराजिस्तरणस्य किमाकाङ्क्षाविरहेणावनेजनस्य तदर्थत्वानुपपत्तेः । एव मुष्टीकरणवाग्यमनयोरप्यावेदनार्थत्वं वेदितव्यम् । न चाध्वर्यवे दीक्षितावेदने याजमानमुष्टीकरणवाग्यमनाभ्यां कथमुपयोग तयोर्यजमानमन प्रणिधायकत्वेन याजमानकर्मण्येवोपयोगादिति वाच्यम् । आध्वर्यवेष्वपि पदार्थेषु यजमानस्य प्रयोजकत्वेन मनःप्रणिधानावश्यम्भावात् । अतोऽवनेजनमुलपराजिस्तरणाङ्ग मुष्टीकरणं वाग्यमनञ्च दीक्षितावेदनाङ्गमिति प्राप्ते, सिद्धान्तयति—

## आनन्तर्यमचोदना ॥ २४ ॥

सन्निधिरत्राप्रमाणमित्यर्थ । आनन्तर्यस्यावर्जनीयत्वेनाङ्गताग्राहकत्वानुपपत्ते' । ग्राहकत्वेऽपि तदपेक्षया प्रबलेन लिङ्गेन प्रकरणेन च बाधात्त्वोत्तराध्वर्यवसकलपदार्थाङ्गत्व हस्तावनेजनस्य । मुष्टीकरणवाग्यमनयोस्तु तदनुवृत्तिकालीनसर्वकर्मार्थत्वम् ॥

नन्वेवं सति "आग्नेयस्य मस्तकं विरुज्य प्राशित्रमवद्यति' इति प्राशित्राव-दानमप्यग्नीषोमीयैन्द्राग्नयोर्न स्यादित्यत्राह—लक्षणार्थो गुणश्रुतिरिति। नेदं वचन-माग्नेयोद्देन प्राशित्रावदानविधिपरम्, 'प्राशित्रमवद्यति' इति सामान्यवचनेन सिद्धत्वात्, किन्तु आग्नेयस्य मस्तकं भित्त्वा प्राशित्र ततोऽवदातव्यम्, अन्यस्य तु पुरोडाशस्य विरुज्याविरुज्य वा यस्मात्कस्माच्चित्प्रदेशात्— इत्येवमाग्नेयप्राशित्रानु-वादेन लक्षणार्थो 'मस्तक विरुज्य' इति गुणविधानार्थो, गुणश्रुतिराग्नेयत्वश्रवणमिति न दोष। न चाग्निदेवताकहविष्ट्वं नोद्देश्यतावच्छेदकं विशिष्टोद्देशे वाक्यभेदापत्ते., किन्तु तद्धितोपात्तहविष्ट्वमेव, तथा च द्विदेवत्ययोरपि चतुर्धाकरणं स्यात्; किं बहुना आज्यादिष्वपि तत्प्रसङ्ग इति वाच्यम्। यत्र हि परस्परान्वयो न व्युत्पन्नस्तत्रैव विशिष्टोद्देशनिबन्धनो वाक्यभेदो दोषाय। तथा च "यस्योभयं हविरार्तिमार्च्छेति" इत्यत्र नोभयत्वविशिष्टं हविरुद्देश्यम्। यत्र तु सामर्थ्यापेक्षसमासादौ परस्परान्वयो व्युत्पन्नो यथा 'अश्वाभिधानीम्' इत्यादौ, तत्र न भवत्येव विशिष्टोद्देशप्रयुक्तदोप। प्रकृते चाग्नेयशब्दे सामर्थ्यापेक्षतद्धितान्ते प्रकृतिप्रत्ययार्थयोरन्वयस्य व्युत्पन्नत्वान्न भवत्येव विशिष्टोद्देशो दोषाय। न चैवमपि "चतुर्धा कृत्वा पुरोडाशं बर्हिषद् करोति" इति वाजसनेयब्राह्मणे पुरोडाशमात्रस्य चतुर्धाकरणवचनादनाग्नेयस्यापि तत्प्रसङ्ग इति वाच्यम्। तस्य सामान्यवचनस्य "आग्नेयं चतुर्धा करोति" इति शाखान्तरी-यवचनेन विशेषे व्यवस्थापनात्। तदुक्तं वार्तिके—

'अवश्यमेव सामान्यं विशेष प्रति गच्छति।
गतमात्र च तत्तेन विशेषे स्थाप्यते ध्रुवम्' ॥ इति।

ननु यत्र सामान्यवचनस्यानुष्ठानाय विशेषापेक्षा तत्रैव विशेषोपसहार. यथा "अग्नीषोमीय पशुमालभेत" इति सामान्यवचनस्य "छागस्य वपाया मेदस:" इति मन्त्रवर्णोपरि विशेषे उपसंहारः। अन्यथा "न ब्राह्मणं हन्यात्" इति सामान्य-वचनस्य "नात्रेयीं हन्यात्" इति विशेषे उपसहारापत्ति, "न हिंस्यात्सर्वा भूतानि" इति सामान्यवचनस्य च 'न ब्राह्मण हन्यात्' इति विशेषे उपसंहारापत्ति.। उक्तञ्च—

'सामान्यविधिरस्पष्ट' संह्रियेत विशेषतः।
तु विधेनैवमुपसंहार इष्यते' ॥ इति।

पयिष्यते। एवं चतुर्धाकरणे उपलक्षणमात्रमग्निः। स च यावता विना न शक्नोति द्रव्यं लक्षयितुं तावन्मात्रमादर्तव्यम्। सम्बन्धमात्रेण चासौ शक्नोति लक्षयितुम्। सम्बन्धसामान्यं चाग्नेर्द्विदेवत्ययोरग्नीषोमीयैन्द्राग्नयोरपि विद्यत इत्याग्नेयशब्देन तावपि व्यपदेशमर्हत.। अस्तु वा देवतात्वेनैवोपलक्षणमग्नि । तथापि यथा डित्थडिवित्थयोर्माता डित्थमातेत्यपि व्यपदिश्यते तद्वदुभाभ्यां दीयमान पुरोडाश एकस्मा अपि दीयत इति त्यज्यमानहविरुद्देश्यत्वलक्षणदेवतात्वेनाग्निसम्बन्धस्य द्विदेवत्ययोरपि सत्त्वात्तावप्याग्नेयव्यपदेशमर्हत इति तयोरप्यस्ति चतुर्धाकरणमिति प्राप्ते, सिद्धान्तयति--

**व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुति ॥२७॥**

वाशब्दो नार्थे। आग्नेयशब्दो द्विदेवत्यसाधारणो न भवति। किन्तु केवलाग्निदेवत्ये पुरोडाशे तस्य व्यवस्था–असाधारण्यम्। कुत ? अर्थसयोगात्–अर्थेन देवतारूपेणाग्निना केवलाग्निदेवत्यपुरोडाशस्यैव सम्बन्धात्। यद्यप्यग्निरुपलक्षण तथापि श्रुतेन देवतात्वेनैव स उपलक्षणं भवितुमर्हति न त्वश्रुतेन सम्बन्धमात्रेण, तथा सति श्रुतबाधप्रसङ्गादश्रुतलक्षणाप्रसङ्गाच्च। न च 'सर्वत्राग्निकलिभ्या ढग्वक्तव्य' इति सम्बन्धमात्रेऽपि तद्धितस्य विधानान्नोक्तदोष इति वाच्यम्। प्रतिपदोक्तत्वेन देवतातद्धितस्यैवाश्रयणीयत्वात्, अग्नेर्लक्षणताया प्रसिद्धसम्बन्धेनैव वक्तव्यत्वाच्च। न ह्यप्रसिद्धसम्बन्धस्य लक्षणत्व सम्भवति। प्रसिद्धिश्चाग्नेर्द्रव्यसम्बन्धस्य विधिवाक्यादेव वाच्या। स च सम्बन्धो हविरुद्देश्यत्वलक्षणदेवताभावात्मैव विधिवाक्यादवगत इति देवतातद्धित एवाश्रयितु युक्त ।

ननूक्तरीत्याग्नीपोमीयैन्द्राग्नयोरग्नेरपि देवतात्वमस्तीत्यत आह—लिङ्गस्यार्थेन सम्बन्धादिति। लिङ्गस्य द्रव्योपलक्षणस्य अग्ने अर्थेन सोमादिना सम्बन्धात्सापेक्षत्वात्। तद्धितो हि 'समर्थाना प्रथमाद्वा' इति स्मरणात्सामर्थ्यमपेक्षते। अग्नीषोमीय ऐन्द्राग्न इति च द्वन्द्वसमासादुत्पन्नस्तद्धितश्च द्वयो परस्परसहितयोर्देवतात्वमाह। ततश्च 'सापेक्षमसमर्थम्' इति न्यायेन सोमादिसापेक्षस्याग्नेरसमर्थतया ततस्तद्धितोत्पत्त्यसम्भवेन तद्धितान्त आग्नेयशब्द केवलाग्निदेवत्य पुरोडाशमभिधत्ते, न त्वन्यसहिताग्निदेवताकमपि। डित्थमातेत्यत्र तु जनयितृत्वरूपमातृत्वस्य डिवित्थनिरपेक्षमेव डित्थनिरूपितत्वात्परस्परसाहित्यबोधकतद्धिताद्यभवाच्च तथा व्यपदेशो युज्यते।

गर्भेण हतेन ब्रह्महा भवतीति तदर्थं । अत एव षष्ठाद्यपादे 'लिङ्गविशेषनिर्देशात्पुयुक्तमैतिशायन.' इत्यधिकरणे 'तद्धन्तृत्वान्न दोषश्रुतिरविज्ञाते' 'चोदितत्वाद्यथाश्रुति' इति गुणसूत्रव्याख्यावसरे भाष्ये—'अविज्ञातेन गर्भेण इत्यनुवाद' प्रशसार्थं, आत्रेयी च न हन्तव्या' इति 'आत्रेयीमापन्नगर्भामाहु' इति च। अस्तु वा आत्रेयी अत्रिगोत्रा। तथापि 'ब्राह्मणमात्र च' 'गर्भं च तस्याविज्ञातम्' 'आत्रेयीं च स्त्रियम्' इति समुच्चयार्थेन चकारेण तद्व्यतिरिक्तब्रह्महत्यानिषेधस्याप्यापस्तम्बबोधायनमन्वादिस्मृत्यवगमाद्ब्राह्मणसामान्यनिषेधवचनस्य तदेकशाखास्थत्वमनुमिमीमहे। अतो न तस्य विशेषनिषेधोपसंहार । अत एव 'विहारो लौकिकानाम्' इति द्वादशद्वितीयाद्याधिकरणे 'मांसपाको विहितप्रतिषेधः स्यादाहुतिसयोगात्' इति गुणसूत्रे तद्भाष्यादौ च 'मांस न पचेयुस्तस्मिन्नग्नौ' इति सामान्यनिषेधस्य 'तस्मिन्नग्नौ मास न पचन्ति यस्मिन्नाहुतीर्जुह्वति' इति विशेषवचनानुसारेणाहवनीयविहितवपाश्रपणनिषेधपरत्वमभ्युपगतम्। एवञ्च 'वार्ताकं न भक्षयेत्' इत्यादिसामान्यनिषेधस्मृते. श्वेतवार्ताकादिनिषेधस्मृत्युपसंहारो माधवहेमाद्रिहरदत्तादिशिष्टानुक्रान्तोऽप्यविरुद्धो भवति। यत्तु कात्यायन आह 'उभौ वाविशेषात्' इति, 'आग्नेयानाग्नेयावपि चतुर्धा करोति पुरोडाशम्' इत्यविशेषेण श्रवणादित्यर्थ., तदेतत्सूत्र पूर्वपक्षपरम्, 'आग्नेयाद्भागाश्च' इति पूर्वसूत्रं सिद्धान्तपरमिति कर्कभाष्ये योजितम्। तदेतदापातत, 'आग्नेयाद्भागाश्च' इति पूर्वसूत्रस्येडावदानादिप्रयोगसूत्रैर्बहुभिर्व्यवहितत्वात्। वस्तुतस्तु 'आग्नेयाद्भागांश्च' इत्येक पक्ष, 'उभौ वाविशेषात्' इति पक्षान्तरमेव, शाखान्तरीयाधिकविध्युपसंहारानित्यत्वस्य प्राय. सर्वकल्पकारसम्मतत्वात्। [1]अत्र 'अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत एकादशसु राजन्यो द्वादशसु वैश्य.' इत्युक्त्वा 'चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते' इत्यापस्तम्बसत्याषाढभारद्वाजाः। "परिधौ पशु नियुञ्जन्ति" इति ब्राह्मणम्, 'नित्ययूपा एवास्माकं भवन्ति' इति बोधायनः। जैमिनेरप्याचार्यस्य मते अनित्य एव शाखान्तरीयाणामधिकविधीनामुपसहारः, युक्तञ्च, नित्यत्वे तदितराङ्गवत्प्रतिशाखमाम्नानप्रसङ्गात्। अत एव 'पशुचोदनायामनियमोऽविशेषात्' 'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणमर्थवत्, "अजोऽग्नीषोमीय" इति न्तरीयविशेषवचने जाग्रति तदनुन्मेषात्।

---

1. तत्र क, ग, घ, मु. पा.

अनुष्ठानाय विशेषापेक्षत्वमस्पष्टत्वम् । प्रकृते च चतुर्धाकरणस्य प्रतिपत्तिरूपतया सर्वापेक्षितत्वेन सामान्यवचनस्य पुरोडाशसामान्ये चतुर्धाकरणानुष्ठापकत्वोपपत्त्यानुष्ठानाय विशेषापेक्षाविरहान्न विशेषवचनस्योपसंहारकत्व सम्भवतीति चेत्सत्यम्; "पुरोडाश चतुर्धा कृत्वा बर्हिषद् करोति" इति सामान्यवचन तावत्सिद्धवन्निर्देशान्न चतुर्धाकरणविधायकम् । किन्तु वाक्यान्तरप्राप्तचतुर्धाकरणमनूद्य बर्हिषत्त्वकरणस्य तदानन्तर्यविधानार्थमेव । अनुवादश्च यथाप्राप्ति भवतीति प्रापकाग्नेयवचनानुसारेण विशेषविषयत्वं सामान्यवाक्यस्य पर्यवस्यति । यद्यपि तैत्तिरीयशाखायाम् "पुरोडाशस्यैव बर्हिषदो मीमांसा" इति प्रकृत्य "चतुर्धा करोति" इति सामान्येन चतुर्धाकरणविधानमस्ति, न ह्यत्र सिद्धवन्निर्देशोऽस्ति, किञ्च क्त्वाप्रत्यये सत्यपि "रेवतीषु वारवन्तीयं साम कृत्वा" इतिवत् 'चतुर्धा कृत्वा' इति वाजसनेयवचनमपि विधायकमेव । तथापि स्पष्टस्यापि सामान्यवचनस्य यत्र नानर्थक्यं तत्र विशेषोपसहाराभ्युपगमान्न दोष । प्रकृते च सामान्यवचनस्य शाखान्तरीयत्वान्नानर्थक्यम् । अन्यथा नानाशाखागताग्निहोत्रादिविधिवाक्येषु का गतिः । यथो चैतत्तथा शाखान्तराधिकरणे 'अद्विर्वचन वा श्रुति सयोगाविशेषात्' इत्यादिपञ्चसूत्रीव्याख्यावसरे भाष्यवार्तिकयो प्रपञ्चित स्पष्टीकृतं चास्माभि । एवञ्च 'न हिंस्यात्सर्वा भूतानि' इति सामान्यवचनस्यापि शाखान्तरीयत्वेनानर्थक्याभावात् 'न ब्राह्मण हन्यात्' इति विशेषे उपसंहार एवावकल्पते । न चैव सति ब्राह्मणव्यतिरिक्तजीवहिंसाया कथ प्रतिषेध इति वाच्यम् । 'अनस्थिमता[1]' च गोणीभार हत्वा' 'क्षत्रियं हत्वा गवा सहस्रम्' इत्यादिभि स्मृतिवचनै पिपीलिकादितत्तत्सर्वजन्तुवधेषु प्रायश्चित्तविधायकै कल्पितेषु वैशेषिकेष्वहिंसावचनेषु पर सहस्रेष्वपि सामान्याहिंसावचनस्योपसहारावश्यम्भावात् । 'न ब्राह्मण हन्यात्' इति सामान्यवचनस्य तु एकशाखागतत्वात 'नात्रेयीं हन्यात्' इत्यत्र नोपसहार ।

तैत्तिरीयशाखाया हि द्वितीयकाण्डे षष्ठप्रपाठके "देवा वै यज्ञस्य" इत्यनुवाके "तस्माद्ब्राह्मणाय नापगुरेत, न निहन्यात्, न लोहितं कुर्यात्" इत्यत्र 'न निहन्यात्' इति ब्राह्मणसामान्यहिंसानिषेध श्रुत । तत्रैव च शाखाया षष्ठकाण्डे पञ्चमप्रपाठके "गर्भेणाविज्ञातेन ब्रह्महा" इति श्रुतम् । पुमानय स्त्री वेत्यनिश्चितेन

1 अनड्वाह ख, अनस्म्ना ग, अनस्थामां घ, ङ, अमस्थीमा, क

गर्भेण हतेन ब्रह्महा भवतीति तदर्थ.। अत एव पष्ठाद्यपादे 'लिङ्गविशेषनिर्देशात्पुयुक्तमैतिशायन' इत्यधिकरणे 'तद्वन्तृत्वाच्च दोषश्रुतिरविज्ञाते' 'चोदितत्वाद्यथाश्रुति' इति गुणसूत्रव्याख्यावसरे भाष्ये—'अविज्ञातेन गर्भेण इत्यनुवाद प्रशसार्थ., आत्रेयी च न हन्तव्या' इति 'आत्रेयीमापन्नगर्भामाहु' इति च। अस्तु वा आत्रेयी अत्रिगोत्रा। तथापि 'ब्राह्मणमात्रं च' 'गर्भं च तस्याविज्ञातम्' 'आत्रेयीं च स्त्रियम्' इति समुच्चयार्थेन चकारेण तद्व्यतिरिक्तब्रह्महत्यानिषेधस्याप्यापस्तम्बबोधायनमन्वादिस्मृत्यवगमाद्ब्राह्मणसामान्यनिषेधवचनस्य तदेकशाखास्थत्वमनुमिमीमहे। अतो न तस्य विशेषनिषेधोपसहार'। अत एव 'विहारो लौकिकानाम्' इति द्वादशद्वितीयाद्याधिकरणे 'मांसपाको विहितप्रतिषेध स्यादाहुतिसंयोगात्' इति गुणसूत्रे तद्भाष्यादौ च 'मांस न पचेयुस्तस्मिन्नग्नौ' इति सामान्यनिषेधस्य 'तस्मिन्नग्नौ मास न पचन्ति यस्मिन्नाहुतीर्जुह्वति' इति विशेषवचनानुसारेणाहवनीयविहितवपाश्रपणनिषेधपरत्वमभ्युपगतम्। एवञ्च 'वार्ताकं न भक्षयेत्' इत्यादिसामान्यनिषेधस्मृते. श्वेतवार्ताकादिनिषेधस्मृत्युपसंहारो माधवहेमाद्रिहरदत्तादिशिष्टानुक्रान्तोऽप्यविरुद्धो भवति। यत्तु कात्यायन आह 'उभौ वाविशेषात्' इति, 'आग्नेयानाग्नेयावपि चतुर्धा करोति पुरोडाशम्' इत्यविशेषेण श्रवणादित्यर्थ, तदेतत्सूत्र पूर्वपक्षपरम्, 'आग्नेयाद्भागांश्च' इति पूर्वसूत्रं सिद्धान्तपरमिति कर्कभाष्ये योजितम्। तदेतदापातत; 'आग्नेयाद्भागांश्च' इति पूर्वसूत्रस्येडावदानादिप्रयोगसूत्रैर्बहुभिर्व्यवहितत्वात्। वस्तुतस्तु 'आग्नेयाद्भागांश्च' इत्येक पक्ष, 'उभौ वाविशेषात्' इति पक्षान्तरमेव, शाखान्तरीयाधिकविध्युपसहारानित्यत्वस्य प्राय सर्वकल्पकारसम्मतत्वात्। [1]अत्र 'अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत एकादशसु राजन्यो द्वादशसु वैश्यः' इत्युक्त्वा 'चतुर्विंशत्यासपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमादधेय इति सर्वेषामविशेषेण श्रूयते' इत्यापस्तम्बसत्याषाढभारद्वाजा। "परिधौ पशु नियुञ्जन्ति" इति ब्राह्मणम्; 'नित्ययूपा एवास्माकं भवन्ति' इति बोधायन। जैमिनेरप्याचार्यस्य मते अनित्य एव शाखान्तरीयाणामधिकविधीनामुपसहारः, युक्तञ्च, नित्यत्वे तदितराङ्गवत्प्रतिशाखमाम्नानप्रसङ्गात्। अत एव 'पशुचोदनायामनियमोऽविशेषात्' 'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणमर्थवत्, "अजोऽग्नीषोमीयः" इति शाखान्तरीयविशेषवचने जाग्रति तदनुन्मेषात्।

---

1. तत्र क, ग, घ, मु. पा.

अनुष्ठानाय विशेषापेक्षत्वमस्पष्टत्वम् । प्रकृते च चतुर्धाकरणस्य प्रतिपत्तिरूपतया सर्वापेक्षितत्वेन सामान्यवचनस्य पुरोडाशसामान्ये चतुर्धाकरणानुष्ठापकत्वोपपत्त्यानुष्ठानाय विशेषापेक्षाविरहान्न विशेषवचनस्योपसंहारकत्वं सम्भवतीति चेत्सत्यम्, "पुरोडाश चतुर्धा कृत्वा बर्हिषद करोति" इति सामान्यवचन तावत्सिद्धवन्निर्देशान्न चतुर्धाकरणविधायकम् । किन्तु वाक्यान्तरप्राप्तचतुर्धाकरणमनूद्य बर्हिषत्त्वकरणस्य तदानन्तर्यविधानार्थमेव । अनुवादश्च यथाप्राप्ति भवतीति प्रापकाग्नेयवचनानुसारेण विशेषविषयत्व सामान्यवाक्यस्य पर्यवस्यति । यद्यपि तैत्तिरीयशाखायाम् "पुरोडाशस्यैव बर्हिषदो मीमांसा" इति प्रकृत्य "चतुर्धा करोति" इति सामान्येन चतुर्धाकरणविधानमस्ति, न ह्यत्र सिद्धवन्निर्देशोऽस्ति, किञ्च क्त्वाप्रत्यये सत्यपि "रेवतीषु वारवन्तीयं साम कृत्वा" इतिवत् "चतुर्धा कृत्वा" इति वाजसनेयवचनमपि विधायकमेव । तथापि स्पष्टस्यापि सामान्यवचनस्य यत्र नानर्थक्य तत्र विशेषोपसहाराभ्युपगमान्न दोष. । प्रकृते च सामान्यवचनस्य शाखान्तरीयत्वान्नानर्थक्यम् । अन्यथा नानाशाखागताग्निहोत्रादिविधिवाक्येषु का गतिः । यथो चैतत्तथा शाखान्तराधिकरणे 'अद्विर्वचन वा श्रुति सयोगाविशेषात्' इत्यादिपञ्चसूत्रीव्याख्यावसरे भाष्यवार्तिकयो. प्रपञ्चित स्पष्टीकृतं चास्माभि । एवञ्च 'न हिंस्यात्सर्वा भूतानि' इति सामान्यवचनस्यापि शाखान्तरीयत्वेनानर्थक्याभावात् 'न ब्राह्मण हन्यात्' इति विशेषे उपसहार एवावकल्पते । न चैव सति ब्राह्मणव्यतिरिक्तजीवहिंसाया कथ प्रतिषेध इति वाच्यम् । 'अनस्थिमता[1]' च गोणीभार हत्वा' 'क्षत्रिय हत्वा गवा सहस्रम्' इत्यादिभि स्मृतिवचनै. पिपीलिकादितत्तत्सर्वजन्तुवधेषु प्रायश्चित्तविधायकै कल्पितेषु वैशेषिकेष्वहिंसावचनेषु पर'सहस्रेष्वपि सामान्याहिंसावचनस्योपसहारावश्यम्भावात् । 'न ब्राह्मण हन्यात्' इति सामान्यवचनस्य तु एकशाखागतत्वात् 'नात्रेयीं हन्यात्' इत्यत्र नोपसहार ।

तैत्तिरीयशाखाया हि द्वितीयकाण्डे षष्ठप्रपाठके "देवा वै यज्ञस्य" इत्यनुवाके "तस्माद्ब्राह्मणाय नापगुरेत, न निहन्यात्, न लोहित कुर्यात्" इत्यत्र 'न निहन्यात्' इति ब्राह्मणसामान्यहिंसानिषेध श्रुत । तत्रैव च शाखाया षष्ठकाण्डे पञ्चमप्रपाठके "गर्भेणाविज्ञातेन ब्रह्महा" इति श्रुतम् । पुमानय स्त्री वेत्यनिश्चितेन

---

1 अनड्वाह. ख, अनस्मा. ग, अनस्थाना घ, ङ, अनस्थीना, क

# द्वितीयः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

लिङ्गस्य श्रुतिकल्पनमुखेन विनियोजकतया लिङ्गविनियोगस्य श्रुतिविनियोगोपजीव्यकत्वाच्छ्रुतिविनियोगविचारानन्तरं लिङ्गविचारः प्रस्तूयते। लिङ्गं नाम सामर्थ्यं मन्त्रगतमर्थगतञ्च। तत्र मन्त्रगतमर्थप्रकाशनसामर्थ्यम्। मन्त्राणां ह्यनुष्ठेयार्थप्रकाशनसामर्थ्यं मन्त्राधिकरणे स्थितम्। अर्थगतन्तु द्रवद्रव्यावदानादिसामर्थ्यं स्रुवादिनिष्ठम् 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यधिकरणे निरूपितम्। तत्र "बर्हिर्देवसदनं दामि" इत्यादिमन्त्रसामर्थ्यरूपलिङ्गस्य किं मुख्यार्थे कुशादिरूप एव तद्विनियोजकत्वम्? उतोलपराजिरूपगौणार्थेऽपि? इति संशये, मुख्य इव जघन्येऽपि स्मारकाकाङ्क्षादिरूपसामग्र्या अविशेषात्साधारण्येनैव विनियोगः कल्प्यते यद्यत्प्राकरणिकं प्रकाशयितुं शक्यते तत्कुर्यादिति। एवञ्च गौणवृत्त्या पूषादिशब्दैः प्राकृताग्न्यभिधानात्पूषानुमन्त्रणादिमन्त्राणां नोत्कर्षोऽपीति प्राप्ते, सिद्धान्तयति—

[1]अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥

यत अर्थाभिधानलक्षणद्वारसंयोगान्मन्त्रेषु क्रतुशेषत्वं मन्त्राधिकरणे व्यवस्थापितम्, तस्माद्धेतो उत्पत्तिसम्बन्धः—औत्पत्तिकेन मुख्यार्थेन मन्त्राणां सम्बन्धः स्यात्। कुतः? अर्थेन मुख्यार्थेनैव नित्यसंयोगात्। असति हि मुख्यान्वयानर्हमाणवकादिपदसमभिव्याहारे 'अग्निः' इत्येतावता मुख्यमर्थं ज्वलनमेव प्रतिपद्यन्ते लौकिकाः, न तु माणवकं गौणमर्थम्। यदापि माणवकं गौणमर्थमभिधत्तेऽग्निशब्द-

1. अर्थाभिधानसम्बन्धात्; अर्थाभिधानसामर्थ्यात्.

यत्तु भाष्यकृदादिभि क्त्वाचिन्तया तदधिकरणप्रवृत्तिर्वर्णिता तदेतत्सर्वज्ञस्य सूत्रकारस्य मौढ्य वर्णयद्भिस्तदपेक्षया सार्वज्ञ्यमपि स्वेषु प्रकटयद्भि सूत्रकाराशयानभिज्ञत्वमेव तेषामाविष्कृतमिति तानेव वयमुपेक्षामहे। यदि हि सूत्रमनुल्लिखितवाक्यविशेष स्यात्तर्हि स्वबुद्ध्युत्प्रेक्षितविषयवाक्ये तदधिकरणस्यानुन्मेषे सति विषयान्तरस्य च परिस्फूर्त्यभावे सति क्त्वाचिन्तया तदधिकरणप्रवृत्तिः शक्यते वर्णयितुम्। प्रकृते च 'पशुचोदनायामनियमोऽविशेषात्' इति पशुवाक्यस्यैव सूत्रे कण्ठोक्त्योदाहृतत्वात्कथं क्त्वाचिन्तया प्रवृत्तिवर्णनमुपपद्येत। एतदपेक्षया शाखान्तरीयाधिकविध्युपसहारानित्यत्वमेव सूत्रकृदभिमतमित्येव कल्पयितुमुचितत्वात्। एवं तत्र तत्र वाक्यविशेषोल्लेखिसूत्रेषु परःशतेषु शाखान्तरीयाधिकविध्युपसंहारानित्यत्व तत्र तत्र वर्णयितव्यमिति सर्वमनवद्यम्॥

इति पञ्चदश चतुर्धाकरणाधिकरणम्॥१५॥

इति तृतीयाध्याये प्रथमः पादः॥



# द्वितीयः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

लिङ्गस्य श्रुतिकल्पनमुखेन विनियोजकतया लिङ्गविनियोगस्य श्रुतिविनियोगोपजीव्यकत्वाच्छ्रुतिविनियोगविचारानन्तरं लिङ्गविचार प्रस्तूयते। लिङ्ग नाम सामर्थ्यं मन्त्रगतमर्थगतञ्च। तत्र मन्त्रगतमर्थप्रकाशनसामर्थ्यम्। मन्त्राणां ह्यनुप्रेयार्थप्रकाशनसामर्थ्यं मन्त्राधिकरणे स्थितम्। अर्थगतन्तु द्रवद्रव्यावदानादिसामर्थ्यं स्रुवादिनिष्ठम् 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यधिकरणे निरूपितम्। तत्र 'बर्हिर्देवसदनं दामि" इत्यादिमन्त्रसामर्थ्यरूपलिङ्गस्य किं मुख्यार्थे कुशादिरूप एव तद्विनियोजकत्वम्? उतोलपराजिरूपगौणार्थेऽपि? इति ससये, मुख्य इव जघन्येऽपि स्मारकाकाङ्क्षादिरूपसामग्र्या अविशेषात्साधारण्येनैव विनियोग कल्प्यते यद्यत्प्राकरणिकं प्रकाशयितु शक्यते तत्कुर्यादिति। एवञ्च गौणवृत्त्या पूषादिशब्दैः प्राकृताग्न्यभिधानात्पूषानुमन्त्रणादिमन्त्राणां नोत्कर्षोऽपोति प्राप्ते, सिद्धान्तयति—

[1]अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥

यत अर्थाभिधानलक्षणद्वारसयोगान्मन्त्रेषु क्रतुशेषत्व मन्त्राधिकरणे व्यवस्थापितम्, तस्माद्धेतो उत्पत्तिसम्बन्ध—औत्पत्तिकेन मुख्यार्थेन मन्त्राणा सम्बन्धः स्यात्। कुतः? अर्थेन मुख्यार्थेनैव नित्यसंयोगात्। असति हि मुख्यान्वयानर्हमाणवकादिपदसमभिव्याहारे 'अग्निः' इत्येतावता मुख्यमर्थं ज्वलनमेव प्रतिपद्यन्ते लौकिकाः, न तु माणवकं गौणमर्थम्। यदापि माणवकं गौणमर्थमभिधत्तेऽग्निशब्द-

1. अर्थाभिधानसम्बन्धात्; अर्थाभिधानसामर्थ्यात्.

यत्तु भाष्यकृदादिभिः कृत्वाचिन्तया तदधिकरणप्रवृत्तिर्वर्णिता तदेतदस्य सूत्रकारस्य सौक्ष्म्यं वर्णयद्भिस्तदपेक्षया सर्वेष्वपि स्वेषु प्रकरणेषु सूत्रकाराभिप्रायाभिज्ञत्वेनैव तेषामधिकरणानि तानीव वयमुपेक्षामहे। यदि हि सूत्रमनुल्लिखितवाक्यविशेषं स्यात्तर्हि स्वबुद्ध्युत्प्रेक्षितविषयवाक्यं तदधिकरणस्यानुल्लेखे सति विषयान्तरस्य च परिकल्पनावे सति कृत्वाचिन्तया तदधिकरणप्रवृत्ति शक्यते वर्णयितुम्। प्रकृते च 'पशुचोदनायामनियमोऽविशेषात्' इति पशुवाक्यस्यैव सूत्रे कण्ठोक्त्योदाहृतत्वात्कथं कृत्वाचिन्तया प्रवृत्तिवर्णनमुपपद्येत। एतदपेक्षया शाखान्तरीयाधिकारिष्वुपसंहारानित्यत्वेनैव सूत्रकृदभिमतमित्येव कल्पयितुमुचितत्वात्। एवं तत्र तत्र वाक्यविशेषोल्लेखिसूत्रेषु परस्तेषु शाखान्तरीयाधिकारिष्वप्युपसंहारानित्यत्वं तत्र तत्र वर्णयितव्यमिति सर्वमनवद्यम्॥

इति पञ्चदशं पशुप्रकरणाधिकरणम्॥१५॥

इति तृतीयाध्याये प्रथमः पादः॥



मानः, सविता सूर्य इव, विश्वा रूपा सर्वाणि वस्तूनि, शचीभि स्वशक्तिभि , अभिचष्टे प्रकाशयति; किञ्च पथीनां कर्ममार्गाणाम् । 'ये चत्वारः पथयो देवयाना इति कर्मवाद ऐष्टिकपाशुकसौमिकदर्विहोमानाम्' इति बोधायन. । समरे सङ्गमने । ऋधातोः पचाद्यच् । न तस्थौ । ष्ठा गतिनिवृत्तौ । अव्यापृतो न भवति । नित्य व्यापृत इत्यर्थ. । किमत्रेन्द्रशब्दो मुख्यया वृत्त्या स्वार्थपर. गार्हपत्यशब्दस्तु विधिगतस्तदनुसारेण गौण. ? उत गार्हपत्यशब्दो मुख्यया वृत्त्या ज्वलनविशेषे वर्तते इन्द्रशब्दस्तु तत्र गौणः ? इति संशय. । तत्रेन्द्राभिधायकमन्त्रस्य गार्हपत्याग्निप्रकाशनशक्त्यभावात् अग्ने सेचन इव गार्हपत्याग्नौ तस्य विनियोगो नोपपद्यते । न च 'नशब्द उपरिष्टादुपचार उपमानार्थे' इति निरुक्तानुसारेण 'मृगो न भीम कुचर.' इत्यादिवन्नशब्दस्योपमानार्थतया सवितेवेन्द्र इव च पथीना कर्ममार्गाणां समरे सङ्गमने तस्थौ व्यापृतो भवति इत्येव मन्त्रस्य गार्हपत्याभिधायकत्वं सूपपादमिति वाच्यम् । एवमपि नञो निषेधे प्रसिद्धस्याप्रसिद्धे इवार्थे वृत्त्याश्रयणापत्त्या विनियोज्यमन्त्रशक्त्यनुसारेण विधिगतस्यापि गार्हपत्यशब्दस्यैव गौण्येन्द्रपरताश्रयणस्य युक्तत्वात् । इन्द्रो हि गार्हपत्यशब्देन यज्ञसाधनत्वसाधर्म्येणाभिधानमर्हति । न च विनियोजकवाक्यगतगार्हपत्यशब्दशक्त्यनुसारेण मन्त्रगतेन्द्रशब्द एव 'इदि परमैश्वर्ये' इति धातूत्पन्नो हवि श्रपणादीशितृत्वगुणयोगाद्गार्हपत्याग्निपर किं न स्यादिति वाच्यम् । 'ऐन्द्र्या' इत्युपक्रमगततद्धितश्रुत्या मन्त्रस्य मुख्याभिधानसामर्थ्येऽवधृते सति जघन्यगार्हपत्यशब्दस्यैव गौण्या वृत्त्येन्द्रपरताश्रयणस्य युक्तत्वात् । यद्वा 'तस्येदम्' इत्यर्थे पत्युत्तरपदण्यप्रत्ययान्तोऽयं गार्हपत्यशब्दो यष्टव्यदेवतात्वेन गृहपतिसम्बन्धिनमिन्द्रं मुख्ययैव वृत्त्याभिधातुमर्हति । अस्तु वा गार्हपत्यशब्दो रूढ्या ज्वलनविशेषवाचक । द्वितीया तु सप्तम्यर्थे सामीपिकाधारत्वे । गार्हपत्यसमीपे स्थित्वा इन्द्र प्रकाशयतीत्यर्थः। अथवा कर्मण्येव द्वितीया। ज्वलनपर एव गार्हपत्यशब्द' । उपतिष्ठतिरुपेत्य स्थाने । तस्य च मन्त्रकरणकत्वमात्मनेपदाद्गम्यते, 'उपान्मन्त्रकरणे' इति मन्त्रकरणके धात्वर्थे विद्यमानादुपपूर्वात्स्थाधातोरात्मनेपदविधानात् । उपस्थाने च मन्त्रस्य करणत्वं साक्षादसम्भवादभिधानद्वारैव वाच्यमित्यात्मनेपदावगतमन्त्रकरणत्वनिर्वाहायाभिधानमनुमीयते । तस्य चानुमानतो लाभान्न तत्र शक्तिकल्पनापि । तथा च उपेत्य स्थित्वाभिधानमुपतिष्ठतेरर्थ । ऐन्द्र्या ऋचा गार्हपत्यसमीप प्राप्यामिदधीतेत्यर्थः पर्यवस्यति । तत्र प्राप्त्यपेक्षया 'गार्हपत्यम्' इति द्वितीया । अभिधाने तु विनियोज्यमन्त्रशक्तिबलादिन्द्रस्यैव कर्मता । तस्मा-

स्तदापि मुख्यमर्थमभिदधदेव तमभिधत्ते—'अग्निसदृशम्' इति। ततश्च शक्यसम्बन्धापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वेन प्रथमप्रतीतमुख्यार्थविनियोगतश्चरितार्थतया शान्ताकाङ्क्षत्वान्न जघन्यार्थविनियोग कल्पयितुमुचित.। न च मुख्यार्थमादाय मन्त्रस्य निराकाङ्क्षत्वेऽपि गौणार्थस्य[1] स्मारकाकाङ्क्षया तत्र मन्त्रस्याकाङ्क्षोत्थापनाद्विनियोग कल्प्यतामिति वाच्यम्। तत्स्मारकाकाङ्क्षाया ध्यानाद्युपायेन शान्तिसम्भवात्॥

ननु मुख्यार्थमात्रविनियोगे पूषानुमन्त्रणादिमन्त्राणां प्रकरणादुत्कर्ष स्यात्तत्राह—

## संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥

"पूष्णोऽहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय" इति मन्त्रो हि पूष्णो देवताया प्रकाशनलक्षणसंस्कारजनकः। स च यत्र संस्कार्यस्तत्र गच्छति। दर्शपूर्णमासयोस्तु न पूषा देवतात्वेन चोदित । अचोदिते च पूषणि "पूष्णोऽहं देवयज्यया" इति मन्त्रो दर्शपूर्णमासयोर्न स्यात्। न च प्रकरणे मुख्यार्थस्याभावाद्गौणे विनियोगोऽस्त्विति वाच्यम्। विकृतिभूतपौष्णयागे उत्कर्षेण मुख्यार्थान्वयसम्भवेन लिङ्गस्य निर्बाधत्वे सति प्रकरणेन तद्बाधस्यायुक्तत्वात्। न च सामान्यत क्रतुसम्बन्धे मन्त्रस्य प्रमाणान्तरादवगते मन्त्रलिङ्ग तावत्सम्बन्धविशेषे व्यवस्थापयति, क्रतुसम्बन्धस्यापि बोधने तस्यासामर्थ्यात्, ततश्च पूषमन्त्रस्य प्रकरणादुत्कृष्टस्यालब्धयागसम्बन्धस्य कथ विशिष्य पौष्णयागे लिङ्गाद्विनियोगलाभ इति वाच्यम्। 'इष्टानुमन्त्रणानि' इति समाख्यया 'देवयज्यया' इति पदसामर्थ्येन च यागसम्बन्धस्य 'पूषा' इति पदसामर्थ्येन विशेषसम्बन्धस्य चोपपत्ते । अत पूषानुमन्त्रणमन्त्रस्य विकृतावुत्कर्षो युक्तः। तस्मात्सति सम्भवे मुख्यार्थ एव मन्त्रलिङ्ग विनियोजकमिति॥

इति प्रथम लिङ्गाधिकरणम् ॥ १ ॥

२

अग्नौ श्रूयते "निवेशन सङ्गमन इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति। "निवेशन सङ्गमनो वसूना विश्वा रूपाभिचष्टे शचीभि । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्" इत्यैन्द्री ऋक्। वसूना धनाना निवेशन आवास, सङ्गमन आश्रितेषु सङ्गमयिता, सत्यधर्मा अबाधितरक्षितृत्वादिगुणशाली इन्द्र., देव' द्योत-

1. गौणस्यार्थस्य. ग, घ,

मानः, सविता सूर्य इव, विश्वा रूपा सर्वाणि वस्तूनि, शचीभि. स्वशक्तिभि , अभिचष्टे प्रकाशयति; किञ्च पथीनां कर्ममार्गाणाम् । 'ये चत्वार. पथयो देवयाना इति कर्मवाद ऐष्टिकपाशुकसौमिकदर्विहोमानाम्' इति बोधायन' । समरे सङ्गमने । ऋधातोः पचाद्यच् । न तस्थौ । ष्ठा गतिनिवृत्तौ । अव्यापृतो न भवति । नित्य व्यापृत इत्यर्थ । किमत्रेन्द्रशब्दो मुख्यया वृत्त्या स्वार्थपर. गार्हपत्यशब्दस्तु विधिगतस्तदनुसारेण गौण. ? उत गार्हपत्यशब्दो मुख्यया वृत्त्या ज्वलनविशेषे वर्तते इन्द्रशब्दस्तु तत्र गौणः ? इति संशयः । तत्रेन्द्राभिधायकमन्त्रस्य गार्हपत्याग्निप्रकाशनशक्त्यभावात् अग्ने सेचन इव गार्हपत्याग्नौ तस्य विनियोगो नोपपद्यते । न च 'नशब्द उपरिष्टादुपचार उपमानार्थ' इति निरुक्तानुसारेण 'मृगो न भीम कुचर' इत्यादिवन्नशब्दस्योपमानार्थतया सवितेवेन्द्र इव च पथीना कर्ममार्गाणां समरे सङ्गमने तस्थौ व्यापृतो भवति इत्येव मन्त्रस्य गार्हपत्याभिधायकत्वं सूपपादमिति वाच्यम् । एवमपि नञो निषेधे प्रसिद्धस्याप्रसिद्धे इवार्थे वृत्त्याश्रयणापत्त्या विनियोज्यमन्त्रशक्त्यनुसारेण विधिगतस्यापि गार्हपत्यशब्दस्यैव गौण्येन्द्रपरताश्रयणस्य युक्तत्वात् । इन्द्रो हि गार्हपत्यशब्देन यज्ञसाधनत्वसाधर्म्येणाभिधानमर्हति । न च विनियोजकवाक्यगतगार्हपत्यशब्दशक्त्यनुसारेण मन्त्रगतेन्द्रशब्द एव 'इदि परमैश्वर्ये' इति धातूत्पन्नो हवि श्रपणादीशितृत्वगुणयोगाद्गार्हपत्याग्निपर किं न स्यादिति वाच्यम् । 'ऐन्द्र्या' इत्युपक्रमगततद्धितश्रुत्या मन्त्रस्य मुख्याभिधानसामर्थ्येऽवधृते सति जघन्यगार्हपत्यशब्दस्यैव गौण्या वृत्त्येन्द्रपरताश्रयणस्य युक्तत्वात् । यद्वा 'तस्येदम्' इत्यर्थे पत्युत्तरपदण्यप्रत्ययान्तोऽयं गार्हपत्यशब्दो यष्टव्यदेवतात्वेन गृहपतिसम्बन्धिनमिन्द्रं मुख्ययैव वृत्त्याभिधातुमर्हति । अस्तु वा गार्हपत्यशब्दो रूढ्या ज्वलनविशेषवाचक । द्वितीया तु सप्तम्यर्थे सामीपिकाधारत्वे । गार्हपत्यसमीपे स्थित्वा इन्द्र प्रकाशयतीत्यर्थः । अथवा कर्मण्येव द्वितीया । ज्वलनपर एष गार्हपत्यशब्द. । उपतिष्ठतिरुपेत्य स्थाने । तस्य च मन्त्रकरणकत्वमात्मनेपदाद्गम्यते, 'उपान्मन्त्रकरणे' इति मन्त्रकरणके धात्वर्थे विद्यमानादुपपूर्वात्स्थाधातोरात्मनेपदविधानात् । उपस्थाने च मन्त्रस्य करणत्वं साक्षादसम्भवादभिधानद्वारैव वाच्यमित्यात्मनेपदावगतमन्त्रकरणत्वनिर्वाहायाभिधानमनुमीयते । तस्य चानुमानतो लाभान्न तत्र शक्तिकल्पनापि । तथा च उपेत्य स्थित्वाभिधानमुपतिष्ठतेरर्थ । ऐन्द्र्या ऋचा गार्हपत्यसमीप प्राप्याभिदधीतेत्यर्थः पर्यवस्यति । तत्र प्राप्त्यपेक्षया 'गार्हपत्यम्' इति द्वितीया । अभिधाने तु विनियोज्यमन्त्रशक्तिबलादिन्द्रस्यैव कर्मता । तस्मा-

स्तदापि मुख्यमर्थमभिदधदेव तमभिधत्ते—'अग्निसदृशम्' इति। ततश्च शक्यसम्बन्धापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वेन प्रथमप्रतीतमुख्यार्थविनियोगतश्चरितार्थतया शान्ताकाङ्क्षत्वान्न जघन्यार्थविनियोगः कल्पयितुमुचित । न च मुख्यार्थमादाय मन्त्रस्य निराकाङ्क्षत्वेऽपि गौणार्थस्य[1] स्मारकाकाङ्क्षया तत्र मन्त्रस्याकाङ्क्षोत्थापनाद्विनियोग कल्प्यतामिति वाच्यम्। तत्स्मारकाकाङ्क्षाया ध्यानाद्युपायेन शान्तिसम्भवात्॥

ननु मुख्यार्थमात्रविनियोगे पूषानुमन्त्रणादिमन्त्राणां प्रकरणादुत्कर्ष. स्यात्तत्राह—

## संस्कारकत्वादचोदितेन स्यात्॥ २॥

"पूष्णोऽहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय" इति मन्त्रो हि पूष्णो देवताया प्रकाशनलक्षणसंस्कारजनकः। स च यत्र संस्कार्यस्तत्र गच्छति। दर्शपूर्णमासयोस्तु न पूषा देवतात्वेन चोदित ।अचोदिते च पूषणि "पूष्णोऽहं देवयज्यया" इति मन्त्रो दर्शपूर्णमासयोर्न स्यात्। न च प्रकरणे मुख्यार्थस्याभावाद्गौणे विनियोगोऽस्त्विति वाच्यम्। विकृतिभूतपौष्णयागे उत्कर्षेण मुख्यार्थान्वयसम्भवेन लिङ्गस्य निर्बाधत्वे सति प्रकरणेन तद्बाधस्यायुक्तत्वात्। न च सामान्यत क्रतुसम्बन्धे मन्त्रस्य प्रमाणान्तरादवगते मन्त्रलिङ्गं तावत्सम्बन्धविशेषे व्यवस्थापयति, क्रतुसम्बन्धस्यापि बोधने तस्यासामर्थ्यात्, ततश्च पूषमन्त्रस्य प्रकरणादुत्कृष्टस्यालब्धयागसम्बन्धस्य कथ विशिष्य पौष्णयागे लिङ्गाद्विनियोगलाभ इति वाच्यम्। 'इष्टानुमन्त्रणानि' इति समाख्यया 'देवयज्यया' इति पदसामर्थ्येन च यागसम्बन्धस्य 'पूषा' इति पदसामर्थ्येन विशेषसम्बन्धस्य चोपपत्ते । अत पूषानुमन्त्रणमन्त्रस्य विकृतावुत्कर्षो युक्तः। तस्मात्सति सम्भवे मुख्यार्थ एव मन्त्रलिङ्ग विनियोजकमिति॥

इति प्रथम लिङ्गाधिकरणम्॥ १॥

२

अग्नौ श्रूयते "निवेशन सङ्गमन इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति। "निवेशन सङ्गमनो वसूना विश्वा रूपाभिचष्टे शचीभि.। देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्" इत्यैन्द्री ऋक्। वसूनां धनाना निवेशन आवास , सङ्गमन आश्रितेषु सङ्गमयिता, सत्यधर्मा अबाधितरक्षितृत्वादिगुणशाली इन्द्र., देव द्योत-

1. गौणस्यार्थस्य. ग, घ,

पत्यस्य कर्मता अभिधानापेक्षया चेन्द्रस्येति, न चैतद्युक्तम्; आत्मनेपदगम्यस्याभिधानस्य प्रत्ययलभ्यत्वेन प्रधानतया तत्रैव 'गार्हपत्यम्' इति द्वितीयान्वयस्याभ्यर्हितत्वात्, समीपस्थितिमात्रवृत्तेरुपतिष्ठते. प्राप्तिपूर्वकत्वविशिष्टतदर्थे लक्षणाप्रसङ्गाच्च। वस्तुतस्तु 'उपान्मन्त्रकरणे' इति मन्त्रकरणके क्रियाविशेषे विद्यमानादुपपूर्वात्स्थाधातोरात्मनेपदं विहितम्। उपपूर्वकस्थाधातुश्च पदजन्यपदार्थोपस्थितिरित्यादौ बोधे दृष्टः। 'गोपी स्मरात्कृष्णाय तिष्ठते' इत्यादौ तु 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति लिङ्गात्स्थितिपूर्वकबोधने दृष्टः। यदा तु बोधे तदा समीपप्राप्तिस्तिष्ठत्त्वं च तदङ्गं शास्त्रान्तरगम्यम्। आश्वलायनसूत्रे 'प्रत्यगुदगवस्थाय' इत्युपक्रम्य 'एवम्भूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च' इति वचनात्। यदापि बोधने, तदोपसर्गवशात्समीप प्राप्य स्थित्वा बोधनमुपतिष्ठतेरर्थः। ऐन्द्र्या उपेत्य गार्हपत्यं स्थित्वा बोधयतीति। स्तौतीति यावत्। अतो द्वितीया न विरुध्यते। बोधायनस्तु तिष्ठत्त्वं व्यकल्पयत्—

'लाजहोमे च सीमन्ते देवतावाहने वरे।
अर्घ्ये तिष्ठत्युपस्थाने षडेते भृगुचोदिताः'॥ इति।

वैवाहिकलाजहोमे सीमन्तोन्नयने प्रतिमादौ देवतावाहने वराय कन्यादाने अर्घ्ये मधुपर्कदाने उपस्थाने च तिष्ठत्। षडेते पदार्थास्तिष्ठता कर्तव्यत्वेन भृगुणा परिगणिता इत्यर्थः। भृगुग्रहणाद्विकल्पो गम्यते। तदेवं वचनाद्गार्हपत्ये विनियुक्तः 'निवेशनः' इति मन्त्रस्तस्यैव शेषीभवन्निन्द्रशब्दविषये गौणीं वृत्तिमाश्रयति॥

इति द्वितीयमैन्द्र्यधिकरणम्॥ २॥

३

दर्शपूर्णमासयोः श्रूयते "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति" इति। तत्र कर्तरि क्विबन्तो हविष्कृच्छब्दस्तावदवघातेन हविष्कर्तरि मुख्यः अवघाते तु साधनत्वमात्रेण गौणः। तत्र किमयं मन्त्रोऽवघाते प्रयोक्तव्यः? उत हविष्कृदाह्वाने? इति संशयः। अवघात इति ब्रूमः। यदि ह्याह्वाने मन्त्रः सम्बध्येत, तर्हि 'अवघ्नन्' इत्येतत्काललक्षणार्थं भवेत्—'अवहननकालोपलक्षितोऽध्वर्युर्हविष्कृतमाह्वयति' इति। 'या यजमानस्य पत्नी साभिद्रुत्यावहन्ति' इति पत्न्या अवघातकर्तृत्वश्रवणात्। न चैतद्युज्यते, मन्त्रब्राह्मणयोर्विरोधेऽन्यतरस्य गौणपरत्वे आश्रयणीये सति 'न विधौ परः शब्दार्थः' इति पूर्वाधिकरणे व्यवस्थापितत्वेन 'अवघ्नन्' इति विधिगते लक्षणाश्रयणायोगात्।

न्मुख्यस्यैन्द्रस्यैवावाय मन्त्र. शेषः, न तु ज्वलनविशेषस्य गार्हपत्यस्येति प्राप्ते, सिद्धान्ति—

**नात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥**

तुरवधारणे भिन्नक्रमश्च । ऐन्द्री ऋगेव अयथार्थं स्यात् । क्रियाविशेषणमेतत् । अयथा असदृशः बाधितः अर्थो यस्य तद्यथा भवति तथा । मुख्यार्थवृत्तिर्न भवेत्; गौणी स्यादिति यावत् । कुत ? वचनात्—गार्हपत्ये विनियोगवचनात् । न च 'ऐन्द्र्या' इति तद्धितश्रुत्या उपक्रमगतया इन्द्र एव विनियोग उचित इति वाच्यम् । 'अस्यवामीयम्' 'कयाशुभीयम्' 'यज्ञायज्ञीयम्' इत्यादिवत्पदसयोगमात्रेण तद्धितश्रुत्युपपत्तेः ।

यदुक्तम् 'अग्निना सिञ्चति' इत्यादिवदशक्यार्थविधानमनुपपन्नमिति तत्राह—

**गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥**

वापीति समुदायः शङ्कानिवृत्तौ । नाशक्यार्थविधानम्, यत. गुणाद् अभिधानं स्यात् । हवि श्रपणादीशितृत्वगुणयोगादिन्द्रशब्देन गार्हपत्याभिधान सम्भवति । नन्वेव सति वचनविनियोज्यमन्त्रे इन्द्रशब्दस्य मुख्यार्थबाधनेन गौणार्थपरत्वकल्पने तदुपस्थानविनियोगे च वचनस्य व्यापाराद्वाक्यभेद स्यादत आह—सम्बन्धस्याशास्त्रहेतुत्वादिति । मन्त्रगतेन्द्रशब्दस्य गौण. सम्बन्धस्तावन्न शास्त्रहेतुक 'ऐन्द्र्या' इति वचनलभ्यो न भवति, येन वाक्यभेद स्यात् । किं तर्हि ? लोकत एव सिद्ध' । 'अग्निर्माणवक'' इत्यादौ मुख्यार्थानन्वयिपदसमभिव्याहारे गौण्या वृत्त्या क्लृप्तत्वात् । अस्ति चात्र तथाविधगार्हपत्यपदसमभिव्याहार । न हि मुख्यार्थेनेन्द्रपदेन गार्हपत्यपस्यान्वयो [1]घटते । न च विनिगमनाविरहाद्गार्हपत्यशब्दस्य गौण्येन्द्रपरत्व कि न स्यादिति वाच्यम् । विधेर्ह्यत्यन्ताप्राप्तार्थप्रापणे स्वतन्त्रप्रथमप्रवृत्तिकस्यानन्यप्रमाणकेऽर्थे गौणत्व न युक्तमाश्रयितुम् । मन्त्रस्य तु विधिविहितार्थप्रकाशकतया तत्परतन्त्रस्य तदुत्तरकालप्रवृत्तिकस्य विधिविरोधिन मुख्यार्थमतिक्रम्य गौणार्थत्व युक्तमाश्रयितुम् । तदुक्तम् 'न विधौ पर शब्दार्थ.' इति । एतेन 'गार्हपत्यम्' इति द्वितीयाया समीप्यलक्षणापि प्रत्युक्ता । नापि सम्बन्धसामान्यवाचिण्यप्रत्ययान्तगार्हपत्यशब्दस्य योगवृत्त्या इन्द्रपरत्व युक्तमाश्रयितुम्, रूढ्या योगस्यापहारात् । यदपि प्राप्त्यपेक्षया गार्ह-

1. अन्वय उपपद्यते. क, ख, ग, मु पा.

मप्याह्वानमनूद्य त्रिरभ्यासोऽवघातकालश्च विधातव्य इति वाक्यभेदो दुर्वार, 'अवघ्नन्' इत्यस्य काललक्षणादोषश्च, नत्राह—कालविधिरिति। 'न' इत्येतदत्रापि सम्बध्यते। आह्वानेऽवघातकालो न विधातव्यः, अवहननकाल एव सहायाह्वानस्यापेक्षितस्य प्राप्तत्वेनार्थसिद्धत्वात्। अत 'अवघ्नन्' इत्यनुवादमात्रम्। अनुवादत्वाच्च न लक्षणा दोष। नन्वेवं सति मुख्ये 'अवघ्नन्' इति पदे लक्षणा स्यात्, तद्वरं जघन्ये आह्वयतिपद इति शङ्कायामप्येतदेवोत्तरम्—कालविधिरिति। कालाभिधान न्याय्यमित्यर्थ। उक्तञ्च वार्तिके 'अभिधामात्रमेवात्र विधिरित्यभिधीयते' इति। 'लक्षणहेत्वो. क्रियायाः' इति क्रियान्तरलक्षकक्रियावृत्तेर्धातोः कर्तरि शतृप्रत्ययेनावघातस्याह्वानक्रियालक्षणार्थत्वावगमेनोपसर्जनतया स्वार्थसमर्पके 'अवघ्नन्' इति पद एव प्रथमश्रुतेऽपि लक्षणाया न्याय्यत्वादिति भाव। तत्रावघातकालोपलक्षित आह्वाता 'अवघ्नन्' इत्युच्यते। ततश्चावहननकालोपलक्षितोऽध्वर्युः 'हविष्कृदेहि' इति त्रिरुच्चारितेन मन्त्रेणाह्वयतीत्यर्थः। ननु प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेददोप। न[1], अनाहूताया अपि पत्न्या अवहन्तृत्वनिवृत्तये आह्वानस्याप्यवश्यविधेयस्य त्रिरभ्यासकमन्त्रकरणकावघातविशिष्टस्य[2] विधिसम्भवात्, 'एहि' इति मन्त्रवर्णादेवाह्वानस्य नित्यप्राप्ते' सम्भवाच्च। न चैव सत्याह्वानप्राप्तौ तत्र मन्त्रविनियोग. मन्त्रवर्णाच्चाह्वानप्राप्तिरित्यन्योन्याश्रय इति वाच्यम्। 'एहि' इति पदघटितस्यास्य मन्त्रस्य प्रकरणसिद्धक्रतूपकारकताकस्य मन्त्राधिकरणसिद्धदृष्टार्थताकस्य दृष्टद्वारैव क्रतौ विनियोक्तव्यत्वेनावगमबलादेव मन्त्रसामर्थ्यपर्यालोचनालभ्यद्वारस्य तत्र मन्त्रान्वयस्य च युगपदेव लाभेनान्योन्याश्रयानवकाशात्। तस्मान्मुख्याह्वानाङ्गमेव मन्त्र., न गौणावघाताङ्गम्। किञ्च 'ऐन्द्र्या' इति तृतीयानिर्देशादैन्द्र्याः श्रौतो विनियोगो गार्हपत्येऽस्ति। इतिकरणावमृष्टस्य मन्त्रस्यावघातस्य च सम्बन्धो गम्यमानो नाङ्गाङ्गिभावोऽवकल्पते, प्रागुक्तवाक्यभेदान्मन्त्रलिङ्गविरोधाच्च हविष्कृच्छब्दस्य कर्तृसाधनस्यावघातेऽसम्भवात्। अत समानकालत्वमेव सम्बन्ध. सिद्ध्यति ॥

अस्तु वा कथञ्चिदवघाते हविष्कृच्छब्दस्य मुख्यता। तथापि मन्त्रस्य न तत्र सामर्थ्यमित्याह—

---

1., 2. 'न' इत्येतत् मातृकासु क्वचिदपि न दृश्यते, सर्वास्वपि मातृकासु '.विशिष्टाह्वानस्य' इत्येव पाठ', अत्र दृश्यमानश्च पाठोऽस्माभि कल्पितः मु. पु.

तस्मादैन्द्रीवद्विनियोगवचनानुसारेण गौण्या वृत्त्यावघातशेष एवाय मन्त्रः । न चाचेतनस्यावघातस्य कथमाह्वानकर्मत्वमिति वाच्यम् । आह्वयतिर्हि परं सम्मुखीकृत्य सम्बोधनार्थे उच्चारणे दृष्टो लोके । इह तूच्चारणमात्रे गौणः । आह्वातारो ह्येहिशब्द-मुच्चारयन्ति । अयमप्यध्वर्युरवघाताय 'हविष्कृदेहि' इति मन्त्रं प्रयुञ्जान 'एहि' इति शब्दमुच्चारयति । तत्सामान्याद्भवति गौणोऽयमाह्वयतिशब्दः । स च केवलमनुवादः, अनुच्चारितस्य मन्त्रस्यावघातसम्बन्धानुपपत्त्योच्चारणस्यार्थप्राप्तत्वात् । न चैवमपि विधिवाक्ये लक्षणादोषस्तुल्य इति वाच्यम् । न हि विधिवाक्यावयवमात्रे लक्षणा दोषावहा, तथा सत्यर्थवादाना प्राशस्त्यलक्षकत्वानुपपत्तेस्तेषामपि विध्येकदेशत्वात् । किन्तु विधेयसमर्पकपद एव लक्षणा दोषावहा । आह्वयतेश्चार्थप्राप्तोच्चारणमात्रार्थ-कस्य विधेयसमर्पकत्वाभावान्न तत्र लक्षणा दोषावहा । मन्त्रस्याह्वानसम्बन्धे त्वव-घातकालस्यापि विधेयत्वाद्विधेयसमर्पके 'अवघ्नन्' इति पदे लक्षणा दोषावहैवेति वैषम्यम् । न चैवमपि प्राप्तावघातोद्देशेन मन्त्रस्य त्रिरभ्यासस्य च विधौ वाक्यभेद इति वाच्यम् । न ह्यत्र 'त्रिः' इत्यवघातेन साक्षादन्वेति, त्रिरवघाते तण्डुलनिष्पत्तेर-सम्भवात्, किन्तु मन्त्रद्वारा । मन्त्रश्चायं कचिच्छाखाया त्रिरभ्यस्त एव पठ्यते । ततश्च 'त्रि' इत्यनुवाद इति न वाक्यभेदः । तस्मादवघातशेषो मन्त्रः । यद्यपि मन्त्रोच्चारणानन्तरभाव्यवघात, तथापि 'अवघ्नन्' इति 'वर्तमानसामीप्ये वर्तमान-वद्वा' इति भविष्यति लट शत्रादेश अवघात निर्वर्तयिष्यन् 'हविष्कृदेहि' इति त्रिरु-च्चारयतीत्यर्थ । प्राप्ताप्राप्तविवेकेन 'हविष्कृदेहि' इत्यवहन्तीत्यर्थ. पर्यवस्यतीति पूर्वपक्षमुद्भाव्य सिद्धान्तयति—

## तथाह्वानमपीति चेन्न कालविधिश्चोदितत्वात् ॥५॥

यथा तावदैन्द्री गार्हपत्य प्रत्युपदिश्यमाना गौणीं वृत्तिमाश्रित्य गार्हपत्य प्रका-शयति तथाह्वानम्, एहिशब्दघटितमन्त्रोऽपि अवघात प्रत्युपदिश्यमान कर्तृसाधन-स्यापि हविष्कृच्छब्दस्य हवि साधनत्वमात्रेण गौण्या वृत्त्यावघात प्रकाशयतीति चेत्तन्न, चोदितत्वात्—त्रिरभ्यासस्यैवात्र वाक्ये विधानात् । न च शाखान्तरपठि-तत्रिरभ्यासस्यायमनुवाद इति शक्य वक्तुम्; कचिच्छाम्नाया सकृदपि मन्त्रस्य पठितत्वेन त्रिरभ्यासस्य नित्यप्राप्त्यभावेन पाक्षिकानुवादत्वापातात् । एवञ्च त्रिरभ्या-सेऽवश्य विधातव्ये सति मन्त्रस्यावघाते विधिर्न युज्यते, वाक्यभेदप्रसङ्गात । नन्वेव-

भक्षणस्यापि हिंसात्वमाश्रित्य 'व्रत पयोयवाग्वादिक भक्षयत' इत्येव विसर्जनकर्मभूतवागेव कर्तृत्वोपचारादभिधीयते । बहुत्वमविवक्षितम । आह्वानवाक्ये तावत्त्रिरभ्यासेऽवश्य विधातव्ये सति वाक्यभेदप्रसङ्गान्नावघाते मन्त्रविधि , अतो विनियोजकवचनाभावान्न गौणेऽर्थेऽवघाते मन्त्रस्य विनियोग इति स्थित पूर्वाधिकरणे । नेह तथा वाक्यभेदप्रसङ्गोऽस्ति, मन्त्रस्यैवात्र विधेयत्वात् । ततश्चोत्थाने वाग्विसर्गे च मन्त्रयोर्विनियोग इति प्राप्ते, सिद्धान्तयति—

## तथोत्थानविसर्जने ॥ ९ ॥

'हविष्कृदेहि' इति मन्त्रस्य मुख्येऽर्थ आह्वाने यथा विनियोग उक्तस्तथेहापि लिङ्गानुसारेण मुख्येऽर्थेऽग्निविहरणसम्प्रैषे व्रतकरणप्रैषणे च विनियोग । ऐन्द्रीवदिह गौणेऽर्थे मन्त्रविनियोजकश्रुत्यभावात्समभिव्याहारावगतसम्बन्धस्य च कालार्थसयोगत्वेनाप्युपपत्ते. । यदुक्त मन्त्रस्यैवात्रविधेयत्वान्न वाक्यभेदप्रसक्तिरिति, अस्त्वेवम् । तथापि समभिव्याहारमात्रेण लिङ्गबाधासम्भवेन गौणेऽर्थे कथ विनियोग' स्यात् । अतोऽत्र कालद्वारक एव संयोग । 'उत्थानकालोपलक्षितोऽध्वर्युरग्नीदग्नीन्विहरेत्याह' इति 'व्रतं कृणुतेति सम्प्रैषकाले वाचं विसृजति' इति । ननु 'अवघ्नन्' इत्यस्यानुवादत्वात्तत्र काललक्षणा युक्ता, आह्वाने अवहननकालस्यार्थसिद्धत्वात्, इह तु कालस्यापि विधेयतया तत्समर्पकशब्दे कथं लक्षणा, तथा सत्यैन्द्रीवाक्येऽपि विधेयसमर्पके लक्षणापातात् । सत्यम्; ऐन्द्रीवाक्ये तावद्गौणेऽर्थे मन्त्रविनियोगस्य श्रौतत्वेन प्रबलश्रुत्यनुरोधेन मन्त्रलिङ्गमुपेक्ष्य विधौ लक्षणानाश्रयणेऽपि प्रकृते [1]इतिकरणपरामृष्टमन्त्रविनियोगस्य वाक्यप्रमाणरूपसमभिव्याहारलभ्यस्य तदपेक्षया प्रबलमन्त्रलिङ्गविरोधे सति वाक्यप्रमाणमुपेक्ष्य प्रबलमन्त्रलिङ्गानुरोधेन विधावपि लक्षणाश्रयणस्य युक्तत्वात् । एवञ्च प्रबलप्रमाणविरोधे सति विधावपि लक्षणेति सिद्धम् ॥

इति चतुर्थमुत्थानविसर्जनाधिकरणम् ॥ ४ ॥

५

दर्शपूर्णमासयोः श्रूयते "सूक्तवाकेन प्रस्तर प्रहरति" इति । "इद द्यावापृथिवी भद्रमभूत्" इत्यारभ्य "नमो देवेभ्य." इत्यन्तोऽनुवाक सूक्तवाको नाम निगद. ।

1. सर्वास्वपि मातृकासु 'इतिकरणपरामृष्टमन्त्रविनियोगवाक्य' इत्येव पाठ , अत्र दृश्यमान पाठ अस्माभि कल्पित मु. पा.

## गुणाभावात् ॥ ६ ॥

'एहि' इति परप्रेषणरूपमध्यमपुरुषस्य 'हविष्कृत्' इति सम्बोधनस्य चाचेतनेऽवघातेऽसम्भवेन मन्त्रस्य तत्रासामर्थ्यादित्यर्थ. ॥

इतोऽपि नावघाते मन्त्र इत्याह—

## लिङ्गाच्च ॥ ७ ॥

"वाग्वै हविष्कृद्वाचमेवैतदाह्वयति" इति स्त्रीलिङ्गशब्दवाच्यत्वसाधर्म्येण वाग्रूपतया हविष्कृत्स्तूयते । तदिद मन्त्रस्य पत्न्याह्वानाङ्गत्वे घटते, न त्ववघातपरत्वे । अभ्युच्चयमात्रमेतत् ॥

इतोऽप्येवमित्याह—

## विधिकोपश्चोपदेशे स्यात् ॥८॥

इह "हविष्कृदेहि" इति मन्त्रस्यावघाताङ्गतयोपदेशे सति "अवरक्षो दिव. सपत्न वध्यासमित्यवहन्ति" इति मन्त्रविधिना कोप' विरोध स्यात् । तथा च नित्यवदाम्नानविरोध । विकल्पस्त्वष्टदोषदुष्ट' । आह्वानसम्बन्धे तु न दोष ॥

इति तृतीय हविष्कृदाह्वानाधिकरणम् ॥३॥

४

ज्योतिष्टोमे श्रूयते "उत्तिष्ठन्नाहाग्नीदग्नीन्विहर" इति "व्रतं कृणुतेति वाच विसृजति" इति च । किमनयोर्मन्त्रयोर्यथाक्रममुत्थाने वाग्विसर्गे च गौण्या वृत्त्या विनियोग ? उत मुख्यार्थेऽग्निविहरणे व्रतकर्तारं प्रति सम्प्रैषे च विनियोग ? इति सशय । तत्र मन्त्रयोरुत्थाने वाग्विसर्गे च गौणेऽर्थे ऐन्द्रीन्यायेन वचनाद्विनियोग. । अग्नीन्धनमग्निविहरण चोत्थान विना कर्तुमशक्यमिति तदुभयं गौण्या वृत्त्या अग्नीच्छब्देन 'अग्नीन्विहर' इत्यनेन चाभिधीयते । हे अग्नीत् अग्नीन्धनसाधनभूतोत्थान [1]आग्नीध्रीयाद्धिष्ण्यादग्निविहरणसाधनं भवेति मन्त्रार्थ. । 'अग्नीन्' इति द्वितीया षष्ठ्यर्थे । कर्तरि विहितलोट् च साधनत्वे । सम्बोधनमविवक्षितम् । 'उत्तिष्ठन्' इति वर्तमानसामीप्ये भविष्यति लट शत्रादेश । उत्थान निर्वर्तयिष्यन् 'अग्नीन्विहर' इत्याहेति वचनव्यक्ति । तथा 'कृवि हिंसायाम्' इति धातोः 'कृणुत' इतिशब्दं कथञ्चिन्निष्पाद्य

1. आग्नीद्ध्रीयाग्नि घ ङ

देवतासम्बन्धस्याभावात्। न च "अग्निरिदं हविरजुषत" इतीदंशब्दस्य सन्निहित-प्रस्तरपरतया सूक्तवाको द्रव्यदेवतासम्बन्धमभिदधातीति वाच्यम्। 'अजुषत' इति भूतप्रत्ययेन 'इद हविः' इत्याग्नेयादिद्रव्यपरत्वेन प्रस्तरपरत्वासम्भवात्। अत. कालार्थ एव संयोग' ॥

अथ सिद्धान्तयति—

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥११॥

वाशब्द एवार्थे। 'सूक्तवाकेन' इत्यङ्गतयैवोपदेशः, करणत्ववाचितृतीयाश्रुते.। न चेत्थम्भूतलक्षणे तृतीयास्त्विति वाच्यम्। 'उपपदविभक्ते कारकविभक्तिर्बलीयसी' इति कारकविभक्तेर्बलीयस्त्वात्। विपक्षे बाधकमाह— याज्येति। हि यत सूक्तवाकस्य प्रहरणाङ्गत्वे सति "सूक्तवाको[1] याज्या प्रस्तर आहुतिः" इति वाक्यशेषे स्तोतुमुपात्तो याज्याशब्दः, नाकस्मात् अनालम्बनो न भवति। इतरथा अनालम्बनः स्यात्। अतः करणतयैव सम्बन्ध उचित'। न हि प्रस्तरप्रहरणानङ्गभूते सूक्तवाकेऽङ्गत्वसाधर्म्येण प्रयुज्यमानो याज्याशब्द उपपद्यते ॥

अथेष्टदेवतासङ्कीर्तनेन कृतार्थतयापेक्षाविरहान्नाङ्गत्वेन सम्बन्ध इत्युक्तं निरस्यति—

## स देवतार्थस्तत्संयोगात् ॥ १२ ॥

सः सूक्तवाकः इष्टदेवतासङ्कीर्तनार्थ एव सन् प्रहरणाङ्गतामपि भजते। कुतः? तत्संयोगात् तस्याङ्गत्वस्यानपेक्षितस्यापि तृतीयाश्रुतिसयोगेनावगमात्। किं हि वचन न कुर्यात्, नास्ति वचनस्यातिभार'। ननु प्रहरणस्य तत्सम्बन्धिनो वा द्रव्यदेवतस्यानभिधानात्कथ सूक्तवाकस्य प्रहरणाङ्गता। "अग्निरिद हविः" इत्यादीनामाग्नेयादिद्रव्यदेवतापरत्वम्[2], 'आयुराशास्ते' इत्यादीना [3]तदसम्बन्धश्च इत्यत्राप्येतदेवोत्तरम्—स देवतार्थस्तत्संयोगात्। तृतीया हि कृत्स्नस्य सूक्तवाकनिगदस्य प्रहरणाङ्गता गमयति। प्रहरण तत्सम्बन्धिन वा प्रकाशयत एव तस्य प्रहरणाङ्गता वाच्या। 'यदनेन हविषाशास्ते' इत्याद्यशेषु आयुरादिफलकप्रस्तरपरेषु "अग्निरिद हविरजुषत" इत्याद्यशेषु चाग्न्यादिदेवतापरेषु प्रहरणाङ्गता तदैव स्यात्, यदा आयुरादिफलानि प्रस्तरद्रव्य-

---

1. सूक्तवाक एव' इति भाष्ये पाठ. 2 परत्वात्त क ख, ग, मु. पा.
3 तदसबन्धाच्च क, ख, ग, मु. पा.

तेन प्रस्तराख्यं [1]बर्हिर्मुष्टिविशेषं प्रहरति अग्नौ प्रक्षिपतीत्यर्थः। तत्र किं सूक्तवाकस्य प्रस्तरप्रहरणेऽङ्गतया संयोगः ? उत कालार्थः संयोग ? इति संशये पूर्वपक्षयति—

**सूक्तवाके च कालविधिः परार्थत्वात् ॥१०॥**

सूक्तवाकवाक्येऽपि पूर्ववत्कालार्थ एव संप्रयोग। कुत ? परार्थत्वात्। "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र दर्शपूर्णमासयो फलविशेषार्थतया कृतार्थयोर्यथा कालार्थः सयोगस्तद्वदिहापि सूक्तवाकस्य कृताकृतप्रत्यवेक्षणफलकेष्ट-देवतासङ्कीर्तनेन कृतार्थतया अङ्गतया सम्बन्धस्यानाकाङ्क्षितत्वादित्यर्थः। इष्टदेवता-सङ्कीर्तनार्थत्वं च सूक्तवाकस्य लिङ्गवाक्यशेषाभ्यामवगतम्। तत्र मन्त्रलिङ्ग तावत् "अग्निरिदं हविरजुषत" "सोम इदं हविरजुषत" इत्यादि। "अग्निरिदं हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वा वैतदाह" इति वाक्यशेषस्तैत्तिरीयके। या. अग्न्यादिदेवता. वयमयाक्ष्म इष्टवन्त. ता. अरीरधाम पुनः कीर्तनेन ससाधिता अकार्ष्मेत्येतदेव मन्त्र आहेत्यर्थ। वाजसनेयके चास्ति वाक्यशेष "यावत्यो देवताः सम्पश्यति, स यदेव सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति, यज्ञस्यैवास्मा एवत्समृद्धिमाशास्ते" इति। न च सूक्तवाकस्य कथ प्रस्तरप्रहरणकाललक्षकता, प्रस्त-रप्रहरणवत्सूक्तवाकस्याप्यनिर्ज्ञातकालत्वादिति वाच्यम्। मन्त्रसमाम्नाये ह्यनूयाजया-ज्यानन्तरपाठात्तदनन्तरकालता सूक्तवाकस्य निर्ज्ञाता। प्रहरणन्तु "उत्तरं बर्हिष प्रस्तर सादयति' इत्यनन्तरं विहितम्। तदानीञ्च स्रुग्धारणादिप्रस्तरकार्यानिष्पत्ते प्रहरणं न सम्भवतीत्यनिर्ज्ञातकालमेव तत्। न च तृतीययाङ्गत्वप्रतीते कथ कालार्थः संयोग इति वाच्यम्। 'इत्थंभूतलक्षणे' इति कञ्चित्प्रकार प्राप्तस्य लक्षणे तृतीयाविधानेन प्रह्रियमाणावस्था प्राप्तस्य ज्ञापक सूक्तवाक इत्येव तृतीयोपपत्ते.। प्रह्रियमाणावस्था-ज्ञापकत्वञ्च सूक्तवाकस्य तत्प्रयोगकाले प्रस्तरप्रहरणे सत्येव भवति नान्यथा[2]। अतः सूक्तवाककाले प्रस्तर प्रहरेदिति पर्यवस्यति। किञ्च सूक्तवाकनिगदे प्रहरणक्रियाभि-धायकपदाभावात्कथं प्रहरणे तस्य विनियोगः। न च 'अग्निरिद हवि.' इत्यादिना प्रहरणसम्बन्धिदेवताभिधानात्प्रहरणार्थत्वमिति वाच्यम्। प्रहरणे देवतासम्बन्धाभा-वात्। न च देवताभिधानबलादेव प्रहरतिर्यागपूर्वकप्रक्षेपरूपहोमपर, तत्सम्बन्धिदेव-ताभिधानाच्च तस्य प्रहरणार्थत्वमिति वाच्यम्। देवताभिधानेऽपि होमकल्पकद्रव्य-

1. दर्भ क, ग 2. नान्यथा. क, ग.

यागांशेऽदृष्टार्थं प्रक्षेपांशे प्रतिपत्त्यर्थमित्युभयात्मकं स्यात्। 'उभयात्मकत्वमुभयसंस्कारशब्देन विवक्षितम्' इति वार्तिके स्थितम्। यागांशेऽदृष्टार्थस्यापि सत प्रक्षेपांशे प्रतिपत्तित्वमविरुद्धमिति यावत्। स्विष्टकृद्वत्। यथा—स्विष्टकृद्धोमो यागांशेऽदृष्टार्थः सन् प्रक्षेपांशे प्रतिपत्तिकर्म तद्वत्। तत्सिद्धं सूक्तवाक प्रहरणाङ्गमिति। अत्र भाष्ये 'प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कार' स्यात्' इत्येकसूत्रतयैव पठितम्। युक्तं चैतत्; चेदन्तस्योत्तरभागस्य च विभागे साकाङ्क्षत्वेन सूत्रभेदानौचित्यात्। इतरत्र त्वेवञ्जातीयकेषु चेदन्तस्य विभाज्योपादानं भाष्ये व्याख्यासौकर्यायेति गम्यते। वार्तिककृतस्तु 'आचार्यशैल्या द्वे सूत्रे मन्यामहे' इत्याहुः।

अत्रेदं वक्तव्यम्—यजतिना जुहोतिना वा अन्येन वा शब्देन यागो यत्र चोद्यते देवतोद्देश्यकद्रव्यत्यागात्मकः, तत्र किं द्रव्यम्? का देवता? इति विशेषाकाङ्क्षायां मन्त्रवर्णस्तावद्द्रव्यविशेषं देवताविशेषञ्च समर्पयति, न त्वसत्यामपि यागचोदनायां कल्पयितु प्रभवतीति द्वितीयस्य तृतीये 'अद्रव्यत्वात् केवले कर्मशेष. स्यात्' इत्यधिकरणेऽवोचाम। ततश्च सूक्तवाकनिगदस्य कथं यागकल्पता। अत एव सङ्कर्षकाण्डे द्वितीयस्य चतुर्थे 'अदेवतासंयोगेन चोद्यमानेऽर्थगृहीता देवता यथा भोजनचोदनायां मनुष्ययोग' इत्यधिकरणे देवतासंयोगेन विना चोद्यमाने "उपांशुयाजमन्तरा यजति" इत्यादौ शब्दैकसमधिगम्याया देवताया अभावाद्विनैव देवतया द्रव्यमुत्स्रष्टव्यमिति पूर्वपक्षयित्वा, यजिना मन्त्रवर्णतश्च सामान्यविशेषरूपेण देवतावगमाद्देवतोद्देशेन द्रव्यत्याग सम्भवतीति सिद्धान्तयित्वा, तदुत्तराधिकरणे 'सूक्तवाको याज्या प्रस्तर आहुतिरिध्म प्रथम आहुतीना हूयते इत्येतेन व्याख्यातम्' इति सूत्रेण प्रस्तरप्रहरणमिध्माधानञ्च होमरूपम्, "सूक्तवाको याज्या प्रस्तर आहुति." इति "इध्मः प्रथम आहुतीना हूयते" इति च वाक्यशेषाद्धोमत्वावगमान्मन्त्रवर्णतो विशिष्य देवतालाभाच्चेति पूर्वपक्षयित्वा, 'प्रशंसा वा संस्कारः प्रस्तरस्य संनिधानात्समिन्धनार्थ इध्मः' इति सूत्रेण आहुतित्वेन प्रशंसैषा, यत प्रहरण प्रस्तरस्य प्रतिपत्ति., स्रग्धारणोपयुक्तस्य 'प्रस्तरम्' इति द्वितीयान्तेनोपस्थितत्वात्, इध्माधान चाग्निवृद्धयर्थत्वादृष्टार्थमिति सिद्धान्तितम्। 'उपदेशो वा याज्याशब्दो हि नाकस्मात् इति तु कृत्वाचिन्ता' इत्युक्त तद्भाष्ये देवस्वामिभिः। युक्तञ्चैतत्; "मरुता पृषतय. स्थेति प्रस्तरमाहवनीये प्रहरति" इति प्रहरणे मन्त्रविधानाद्विकल्पस्याष्टदोषदुष्टत्वादुभयोरपि

मग्न्यादिदेवताश्च तत्सम्बन्धीनि स्युः। न हि यागमन्तरेण केवलप्रक्षेपात्मनः प्रहरणस्य सम्कारकर्मण' फलसम्बन्धो युज्यते। नापि द्रव्योद्देशमन्तरेणाग्न्यादिदेवतान्वय· सम्भवति। अत· "यदनेन हविपाशास्ते" इति प्रस्तरवाचिहविःपदेनाग्न्यादिशब्दैरायुरादिशब्दैश्च प्रस्तरद्रव्यकोऽग्न्यादिदेवताक आयुरादिफलको यजिरनुमीयते। प्रहर्तिना च विधिगतेन प्रक्षेपस्तत्पूर्वक एव होमात्माभिधीयते। केवलप्रक्षेपे देवताभिधानस्यादृष्टार्थत्वापाताच्च। यद्यपि 'अग्निरिदं हविरजुषत" इत्यादौ भूतप्रत्ययवशादाग्नेयादिद्रव्यदेवतमेवाभिधीयते, तथापि तदंशस्यापि प्रहरणार्थत्वमविरुद्धमेव। तथाहि—अग्न्यादयस्तत्तद्द्रव्यमजुषन्त। अस्यामेवविधाया होत्राया-होमक्रियाया देवङ्गमाया देवगामिन्या प्रस्तरप्रहरणरूपायाम् ऋधक्-ऋद्धिं प्राप्नोतु असौ यजमानः एवमाशास्ते। "आयुराशास्ते" इत्यादि "विश्व प्रियमाशास्ते" इत्यन्तमृद्धेरेव प्रपञ्चनपरम्। इतोऽपि यत्—अन्यत्, अनेन–हविषा प्रस्तरेणाशास्ते तत् यजमानः अश्यात्–अश्नुताम्। तद् अस्मै-यजमानाय 'आज्यादिद्रव्य सेवितवन्तो देवा'—अग्न्यादयः राधन्ता-साधयन्तु। तत्फल दातुम् अग्निः देवेभ्यः अग्न्यादिभ्यः सकाशात् वनते भजते। वयञ्च मानुषा' अग्ने' सकाशाद्वनामहे-प्राप्नुमः। कि तत्फलम्। इष्टं च वीत[1] च, यागकृतं दानकृतं च। द्वि उभे द्यावापृथिवी अंहस' कर्मोपचारात् पावां रक्षताम्। इह प्रस्तरे वामस्य धनस्य गति' प्राप्ति· अस्तु। इदं च नमः-प्रस्तरलक्षणमन्न देवेभ्य तदन्येभ्यश्च अस्तु। "याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोति" इति ब्राह्मणम्। तथा च पूर्वकृतयागसम्बन्धित्वोपलक्षिताग्न्यादितदितरसकलदेवताकप्रस्तरद्रव्यकप्रहरणात्मकहोमाङ्गत्व कृत्स्नस्य सूक्तवाकनिगदस्य सिद्धम्॥

अत्राशङ्क्य परिहरति—

**प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात्॥ १३॥**

कृतप्रयोजनकद्रव्यस्य रिक्तीकरणदृष्टफल· संस्कारोऽन्यत्रापनयात्मक' प्रतिपत्तिरित्युच्यते। प्रहरणन्तु यदि यागपूर्वकहोमात्मक तदा प्रतिपत्तित्वं तस्य नोपपद्येत, यागांशे दृष्टप्रयोजनाभावात्। अत· केवलप्रक्षेप एव प्रहरणमिति वक्तव्यम्। तत्र चाग्न्यादिकीर्तनस्यायुरादिफलकीर्तनस्य च [2]सम्बन्धासम्भवात्कथं कृत्स्नस्य सूक्तवाकस्य प्रहरणाङ्गत्वमिति चेन्मन्यसे, नैतद्युक्तम्, यत' प्रहरणमुभयसंस्कार स्यात

1. वित्त. क 2. सम्बन्धाभावात्. ख, ग.

धर्मान्वय'। किन्त्वाकाङ्क्षाबलात्प्रत्येकमेव। यथा चैतत्तथा एकादशे (क्षा) व्यक्त भविष्यति। न चैवमेकस्मिन् पर्वणि[1] प्रतिप्रधान सूक्तवाकस्य भेदेन प्रयोग' स्यादिति वाच्यम्। एकस्मिन् पर्वणि प्रस्तरस्यैकत्वेन तत्प्रहरणस्यावृत्त्यभावेन तदङ्गसूक्तवकस्याप्यनावृत्ते.। यथा प्रयाजादीनामावृत्त्यभावात्तन्मन्त्राणां दृष्टार्थानामपि नावृत्तिस्तद्वत्। एतेन दृष्टार्थत्वात्सूक्तवाकस्य न तन्त्रानुष्ठानसम्भव इति निरस्तम्। पर्वान्तरे तु प्रस्तरान्यत्वेन प्रहरणस्यावृत्त्या तदङ्गसूक्तवाकस्य कृत्स्नस्यैवावृत्त्या भवितव्यम्। न च प्रहरणस्य स्वाङ्गमन्त्रद्वारा इष्टदेवतासंस्कारार्थत्वस्य पूर्वाधिकरणे उक्ततया अमावास्यादेवतापदानां पौर्णमास्या प्रयोजनाभावादप्रयोग:, एव पौर्णमासीदेवतापदानाममावास्यायामिति वाच्यम्। प्रयोजनस्य लैङ्गिकत्वेन वचनविरोधे लिङ्गस्यानादरणीयतया वचनबलादेव दृष्टप्रयोजनाभावेऽपि सूक्तवाकप्रकाश्यमानानां सर्वेषामपि प्रहरणे देवतात्वकल्पनानुसारेण प्रहरणनिष्पत्तिद्वारा प्रहरणसाध्यादृष्टाय प्रयोगसम्भवात्। तस्मादुभयत्रापि कृत्स्नस्य सूक्तवाकस्य प्रयोग ॥

अथ सिद्धान्तयति—

**यथार्थं वा शेषभूतसंस्कारत्वात्[2] ॥ १५ ॥**

वाशब्द एवार्थे। प्राजापत्यादय: अर्था. ताननतिक्रम्य यथार्थम्। इष्टदेवतानुरोधेन विभज्यैव प्रयोग इति यावत्। कुत.? शेषभूतसंस्कारत्वात्–दर्शपूर्णमासाङ्गभूतदेवतासंस्मरणरूपसंस्कारार्थत्वात्। दृष्टसम्भवेऽदृष्टाश्रयणस्यान्याय्यत्वात् ॥

यदुक्त वचनविरोधे लिङ्गं नावर्तव्यमिति तदनूद्य निराकरोति—

**वचनादिति चेत्प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १६ ॥**

लैङ्गिकदृष्टप्रयोजनमनादृत्य वचनबलाददृष्टार्थतया प्रयोगसम्भव इति चेन्नैवम्, प्रकरणाविभागात्। समाहारद्वन्द्व.। प्रकरणादविभागाच्च। प्रकरण प्रक्रिया अवयवव्युत्पादनम्। आज्यभागादिषु सूक्तं सुष्ठु निर्दिष्टमग्न्यादिकं वक्तीति व्युत्पत्त्या सूक्तवाकशब्द इष्टदेवताप्रकाशकमन्त्रवचन[3]। अत' पौर्णमासिकदार्शिके उभे प्रहरणे प्रति यथादेवत विभज्य प्रयुक्ते निगदे सूक्तवाकशब्द: कृत्स्न. अविकल: यत्र यावत्यो देवता इष्टास्तत्र तावद्देवतापदप्रयोगस्य सत्त्वात्, अनिष्टदेवतानामपि प्रयोगे सूक्तवाकत्व हित्वा अनुक्तवाकत्वापातात्। अवयवव्युत्पत्त्यैव सम्भवे रूढिर्न कल्प-

1. अपि पर्वणि. क ख, घ, मु. पा. 2 सस्कारात्. 3. मन्त्रवाची ग, घ.

नित्यवदाम्नानाच्च। दृष्टार्थत्वाच्च न समुच्चयः। 'अनूच्यमाने सूक्तवाके प्रस्तरं प्रहरति' 'आशास्तेऽयं यजमान इत्युच्यमाने प्रहृतं प्रस्तरमवसृजति' इति वचनाच्च। सूक्तवाकस्य प्रहरणं प्रति करणत्वे तदन्त एव तदापातात्। अतः 'सूक्तवाकेन' इति कालार्थ एव संयोगः। "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति सम्प्रेष्यति" इति सम्प्रैषविध्यनन्तरमनूच्यमाने सूक्तवाके प्रहरणस्य विधानात्सूक्तवाककालकत्वं प्रहरणस्य प्राप्तमनूद्यते "सूक्तवाकेन प्रस्तरं प्रहरति" इति। अनुवादत्वाच्चेत्थम्भूतलक्षणतृतीया न दुष्यति। प्रस्तरे प्रह्रियमाणे इष्टदेवतासम्बन्धकीर्तनं तु कृताकृतप्रत्यवेक्षणार्थमेव। यथा उत्तमप्रयाजे स्विष्टकृति च याज्यायामिष्टयक्ष्यमाणदेवतासङ्कीर्तनं तद्वत्॥

इति पञ्चमं सूक्तवाकाधिकरणम्॥ ५॥

६

प्रहरणाङ्गं सूक्तवाक इति स्थितम्। तत्र "इदं द्यावापृथिवी" इत्यारभ्य "अग्निरिदं हविरजुषत" "सोम इदं हविरजुषत" "अग्निरिदं हविरजुषत" इत्यन्तः पूर्वभागोऽमावास्यापौर्णमासीसाधारणः, एवम् "देवा आज्यपा" इत्यारभ्य "नमो देवेभ्य" इत्यन्त उत्तरभागोऽपि, "प्रजापतिरिदं हविरजुषत" "अग्नीषोमाविदं हविरजुषेताम्" "इन्द्र इदं हविरजुषत" "महेन्द्र इदं हविरजुषत" इति मध्यभागे तु दर्शपूर्णमासदेवताः सङ्कीर्णा अनुक्रान्ता इति स्थितिः। तत्र किं कृत्स्नः सूक्तवाकः पौर्णमास्याममावास्यायाञ्च प्रयोक्तव्यः? उत इष्टदेवतानुरोधेन विभज्य प्रयोक्तव्यः? इति संशये, पूर्वपक्षयति—

## कृत्स्नोपदेशादुभयत्र सर्ववचनम्॥ १४॥

उभयत्र पौर्णमास्याममावास्यायाञ्च सर्ववचनम्—कृत्स्नसूक्तवाकस्य प्रयोगो भवति। कुतः? कृत्स्नोपदेशात्—कृत्स्न एवानुवाके सूक्तवाकशब्दस्याध्येतृप्रसिद्धेः। विभज्य प्रयोगे सूक्तवाकशब्दस्य तदेकदेशे लक्षणा स्यात्। न च "ऐकादशिनान् प्रायणीयोदयनीययोरालभेरन्" इत्यत्रैकादशिनानां प्रायणीयोदयनीययोर्यथा विभज्य विनियोगस्तद्वदिहापि किं न स्यादिति वाच्यम्। वैषम्यात्। ऐकादशिनोद्देशेन हि विधीयमानयोः प्रायणीयोदयनीययोः साहित्यस्य विवक्षितत्वात्सहितयोरेव तयोरैकादशिनान्वयाद्युक्तो विभागः। इह त्वाग्नेयादियागानामङ्गोद्देशेन विधानाभावान्न सहितानां

त्वर्थत्वं मन्त्राणा सिध्यतीति वाच्यम्। वैपम्यात्; स्रुवादीनां क्रत्वव्यभिचारितया तद्गतखादिरत्वादीना क्रत्वर्थता युज्यते। प्रकृते तु नेन्द्राग्न्यादीना क्रत्वर्थस्याव्यभिचार:, मन्त्रार्थवादेतिहासपुराणादिपु स्वर्गाधीश्वरत्वलोकपालत्वासुरविजेतृत्वादिना प्रतिपादिताना तेपा कर्मणो बहिरपि सद्भावावगमात्। तथा च लिङ्गान्मन्त्रविनियोगे क्रतुसम्बन्धप्रमाणमन्यदपेक्षितव्यम्। न चास्य मन्त्रकाण्डस्य [1]क्रमसमाख्याभ्यामन्यत्कर्मसम्बन्धप्रमाणमस्ति। ततश्च क्रमसमाख्यानुगृहीतलिङ्गान्मन्त्रकाण्डाम्नानमिदं काम्येष्टिविषयमेव सम्पद्यते। क्रममात्रादरे [2]काम्येष्टिपु "अग्नय आयुष्मते पुरोडाशमष्टाकपाल निर्वपेद्य कामयेत सर्वमायुरियाम्" इति क्रमे आम्नातानाम् "आयुष्टे विश्वतो दधदयमग्नि" इत्यादिमन्त्राणा तदिष्टिष्वन्वयमात्रेण क्रमस्योपपत्त्या तत्र प्रथमातिक्रमणे कारणाभावात्सामिधेनीष्वेवान्वय. स्यात्। समाख्यामात्रादरे तु यत्रैकदेवताका नानेष्टय "ऐन्द्राग्नमेकादशकपाल निर्वपेत्प्रजाकाम" "ऐन्द्राग्नमेकादशकपाल निर्वपेत्स्पर्धमान." इत्यादय, मन्त्राश्च नाना "उभा वाम्" "अश्रव हि" "इन्द्राग्नी नवतिम्" "शुचि नु स्तोमम्" इत्यादय, तत्र व्युत्क्रमेणाप्यन्वयः स्यात्। तद्वारणाय क्रमसमाख्यानादित्युभयादर। तदुभयादरेणैन्द्राग्नेष्टिक्रमे आम्नातानामृचाम् "उभा वामिन्द्राग्नी" इत्यादीनां सामिधेनीषु समाख्याविरोधादप्रवृत्तावप्याज्यभागयोः प्रवृत्ति. स्यात्। प्रथमातिक्रमणे कारणाभावात्। अतो लिङ्गस्याप्यादर इति ॥

इति सप्तम लिङ्गक्रमसमाख्याधिकरणम् ॥ ७ ॥

८

तदेवं लिङ्गस्य सामान्यसम्बन्धापेक्षत्वे विचारिते प्रसङ्गाच्छ्रुतेरपि क्वचित्सति सम्भवे तद्विचार्यते। ज्योतिष्टोमे श्रूयते—"आग्नेय्याग्नीध्रमुपतिष्ठते" इति। तत्र किं प्रकृतया अप्रकृतया वा इदमुपस्थान कर्तव्यम्? उत प्रकृतयैव? इति सशये, पूर्वपक्षयति—

## अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ १८ ॥

चशब्दो वार्थो व्युत्क्रमः 'अतदाख्येषु' इत्यनन्तर द्रष्टव्य। अधिकारे-ज्योतिष्टोमप्रकरणे 'अग्नेय्या' इति यो मन्त्रविधि स' अतदाख्येषु वा-अप्रकरणाधीतेषु

1. क्रमसमाख्यानाभ्या. क, ग, घ, मु पा. 2 काम्येषु. क, ख, ग, मु. पा.

नीया। उभयदेवतापदसङ्कीर्णे कृत्स्ननिगदे सूक्तवाकशब्दस्याध्येतृप्रसिद्धेरध्ययनकाले विभागानाकलनेनान्यथासिद्धत्वाच्च। तस्मादुभयत्र यथादेवतं विभज्यैव सूक्तवाकप्रयोगः ॥

इति षष्ठं सूक्तवाकस्य विभज्य विनियोगाधिकरणम् ॥ ६ ॥

७

सन्ति काम्या इष्टयः "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम" इत्यादयः। अस्ति चैतेनैव क्रमेण समाम्नातम् "उभा वामिन्द्राग्नी" इत्यादिमन्त्रकाण्डं काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यम्। किमेते मन्त्राः क्रमसमाख्ये अनादृत्य यत्र यत्र सामर्थ्यमस्ति तत्र सर्वत्र प्रयोक्तव्याः ? उत क्रमसमाख्यानुसारिलिङ्गेन काम्येष्टिष्वेव ? इति संशयः। सर्वत्रेति ब्रूमः। सामर्थ्यं तावन्मन्त्रस्य विनियोजकम्, मन्त्रस्वरूपेऽवगते सति 'अस्यानुष्ठेयार्थस्य प्रकाशकोऽयं मन्त्रः, अतोऽत्र विनियोक्तव्यः' इति बुद्धेरुत्पत्तेः। तदेतत्काम्येष्टिष्विवान्यत्रापि तद्देवत्यकर्मस्वविशिष्टम्। तस्य च सामर्थ्यरूपलिङ्गस्य दुर्बलाभ्यां क्रमसमाख्याभ्यां सङ्कोचरूपबाधो न युज्यते। तस्मात्क्रमसमाख्ये उपेक्ष्य लिङ्गात्सर्वत्र मन्त्राणां विनियोग इति प्राप्ते, सिद्धान्तयति—

**लिङ्गक्रमसमाख्यानात्काम्ययुक्तं स नम् ॥ १७ ॥**

लिङ्गानुग्राहकात्क्रमात्समाख्यानाच्च काम्येष्टिष्वेवाङ्गतया संयुक्तम् "उभा वामिन्द्राग्नी" इत्यादिमन्त्रकाण्डसमाम्नानमित्यर्थः। लिङ्गं हि न साक्षाद्विनोजकम्, किन्तु श्रुतिकल्पनामुखेन। इन्द्राग्न्यादिस्वरूपमात्रप्रकाशनसामर्थ्यरूपलिङ्गकल्प्यमाना श्रुतिः 'अनेन मन्त्रेणेन्द्राग्न्यादिप्रकाशनं कुर्यात्' इत्येवंरूपैव कल्पयितुं शक्यते, न तु 'अनेन मन्त्रेण क्रत्वपूर्वसाधनेन्द्राग्न्यादिप्रकाशनं कुर्यात्' इति। अपूर्वांशस्याश्रुतत्वेन तत्र मन्त्रस्यासामर्थ्येन तत कल्प्यायाः श्रुतेरपूर्वसाधनताविषयत्वासम्भवात्। ततश्च मन्त्रस्येन्द्राग्न्यादिस्वरूपमात्रशेषत्वमेव लिङ्गात्सिध्यति, न त्वपूर्वसाधनतापन्नतच्छेषत्वम्। अतोऽस्ति लिङ्गस्य क्रतुसम्बन्धबोधकप्रमाणापेक्षा। सिद्धे च प्रमाणान्तरेण कर्मसम्बन्धे किंद्वारा स कर्मसम्बन्ध इत्यपेक्षितद्वारविशेषमात्रे लिङ्गस्य विनियोजकता। कर्मासम्बन्धिप्रकाशनस्य च मन्त्रे कर्मसम्बन्धनिर्वाहकत्वाभावेन द्वारत्वाभावे सति कर्मसम्बन्धिप्रकाशनस्यैव द्वारत्वात्तद्विषयैव श्रुतिर्लिङ्गात्कल्प्येति कर्मापूर्वसाधनेन्द्राग्न्यादिशेषत्वं मन्त्रस्य सिद्धं भवति। न चैवमपि "यस्य खादिरः स्रुवो भवति" इत्यनारभ्यश्रुतखादिरत्वादीनां स्रुवादिसम्बन्धात्क्रत्वर्थत्ववदिन्द्राग्न्यादिसम्बन्धात्क्र-

णात् उपपत्तेश्च । प्रकृता ह्याग्नेयी क्लृप्तक्रतुसम्बन्धा । तस्या ग्रहणे लाघवम् । अप्रकृता तु अक्लृप्तक्रतुसम्बन्धा । तस्या ग्रहणे गौरवम् । तथाहि—आग्नीध्रोपस्थानस्य द्वे रूपे आग्नीध्रोपस्थानता ज्योतिष्टोमव्यापाररूपता च । तदुभयमपि शास्त्रैकगम्यम् । न ह्यन्यतरेणान्यतरस्य सिद्धिरस्ति । सा हि व्याप्तिनिबन्धना । न चात्र व्याप्तिरस्ति, यो ज्योतिष्टोमव्यापारः स आग्नीध्रोपस्थानात्मक एवेति नियमाभावाद् दीक्षणीयाद्यात्मकत्वस्यापि सत्त्वात् । अथाग्नीध्रमण्डपस्य क्रत्वव्यभिचारितया तदुपस्थानं [1]ज्योतिष्टोमव्यापारात्मकमेवेति नियमः सम्भवतीति चेन्न; क्रत्वव्यभिचारिणोऽप्याग्नीध्रमण्डपस्य वीक्षणस्पर्शनादिव्यापारः क्रत्वनुपयुक्तोऽपि यथास्ति, एवमुपस्थानस्याप्यभिधानरूपस्य क्रत्वनुपयुक्तस्य सम्भवात् । एवञ्चैकेनेतरस्यासिद्धेर्द्वे अपि रूपे शास्त्रैकगम्ये । तत्र यदि प्रकृतमेव गृह्यते तस्य क्रतुव्यापारस्य प्रकरणतः कर्तव्यत्वेनावधारितस्याग्नीध्रोपस्थानात्मकविशेषरूपमेवात्र विधीयते 'योऽयमाग्नेय्या क्रतुव्यापारः स आग्नीध्रोपस्थानात्मकः' इति । यद्यप्यस्मिन्वाक्ये क्रतुव्यापारानुवादक न दृश्यते, तथाप्याग्नीध्रोपस्थानस्य क्रतुव्यापारत्वापेक्षणात्क्रतुव्यापारस्य सामान्यावगतस्य विशेषापेक्षणाच्च परस्परापेक्षतया क्रतुव्यापारानुवादेन विशेषरूपताविधौ पर्यवस्यतीत्यदोषः । तथा च प्रकरणत कल्पितं श्रुतश्चाग्नेय्याः क्रतुव्यापारमनूद्य विधीयते । न त्विह क्रतुव्यापारः कल्प्यते नापि विधीयत इति लाघवात्प्रकृताया एव ग्रहणं युक्तम् । यदि त्वप्रकृताग्नेयी उपस्थाने गृह्येत, तदा तस्य ज्योतिष्टोमव्यापारत्व न लभ्यते अश्रुतत्वात्, क्रतुव्यापारत्वस्यापि विधाने[2] वाक्यभेदात्, उक्तरीत्या श्रुतमात्रविधानेनैवोपपत्तावश्रुतस्य कल्पितस्य विधौ गौरवात् । इदमेव च सूत्र उपपत्तिशब्देनोच्यते ॥

ननु तर्हि श्रुतमात्र स्वीक्रियता न तु क्रतुव्यापारत्वमपीत्यत आह—

**अनर्थकश्चोपदेशः स्यादसम्बन्धात्फलवता[3] ॥ २० ॥**

आग्नीध्रोपस्थानरूपमात्रेऽप्रकृताया आग्नेय्या उपदेश अनर्थकः स्यात् । कुतः ? फलवता असम्बन्धात् । न हि क्रत्वसम्बन्धिनोपस्थानमात्रेण फलमस्ति । विश्वजिदादिवत्स्वतन्त्रफलकल्पनायां तु स एव दोषः । चशब्द शङ्कान्तरपरिहारे । तथाहि—ननु सन्निपातिनामपूर्वसाधनान्वयस्य नवमे वक्ष्यमाणतया उपस्थानस्य

1. ज्योतिष्टोमात्मकम् क, ख, ग, घ, मु पा. 2 विधौ घ 3 न ह्युपस्थान फलवत्

प्रकरणाधीतेषु वा मन्त्रेषु मध्ये यया कयाचिदाग्नेय्या ऋचा प्रत्येतव्य'। कुत ? शिष्टत्वात्–अविशेषेण विहितत्वादित्यर्थः। न च प्रकरणादप्रकृतमन्त्रनिवृत्तिरिति वाच्यम्। प्रकरणं हि इतिकर्तव्यताकाङ्क्षालक्षणं सन्निधिलक्षण वा ? नाद्य; इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य विनियोगमात्रे समर्थत्वेन 'ज्योतिष्टोमेतिकर्तव्यताकाङ्क्षालक्षणप्रकरणपरिगृहीतया आग्नेय्या' इत्येव विशेषकत्वाभावात्। न चैव सति "व्रीहीन् प्रोक्षति" इत्यत्रापि क्रतुसम्बन्धिनामेव व्रीहीणां ग्रहणं न स्यादिति वाच्यम्। न हि तत्र प्रकरणवशात्क्रतुसम्बन्धिना ग्रहण, किन्तु संस्कार्यत्ववशादेव, क्रत्वसम्बन्धिनः संस्कारवैयर्थ्यात्। यदि चेदमुपस्थानमाग्नेयीसस्कारार्थं स्याद्व्रीहिवत्क्रतुसम्बन्धिन्येव गृह्येत। आग्नेय्यास्तृतीयाश्रुत्या[1] विधेयत्वात्। ततश्च मन्त्रमात्रस्याङ्गत्वान्न प्रकृतनियम। अथ "सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति" इत्यत्र पदशब्दस्य सन्निहितसोमक्रयणीपदपरत्व यथा तद्वदिहापि सन्निहिताग्नेयीपरत्वमिति द्वितीयः पक्षोऽस्त्विति चेन्न, अत्र ह्युपस्थानविधौ न कस्याश्चिदाग्नेय्या· सन्निधिरस्ति, "अग्न आयाहि वीतये" इत्यादिमन्त्राणा स्तोत्रादौ विधीयमानानां प्रदेशान्तरवेदान्तरस्थत्वात्। अस्तु वा सन्निधानम्, अथापि न तद्विशेषक भवितुमर्हति, अपेक्षितसन्निधेरेव विशेषकत्वात् स्तोत्रादौ विनियुक्तानाञ्च निरपेक्षत्वात्[2]। न हि 'अश्वेन गच्छति श्वेतेन पटेन प्रावृत' इत्यत्र पटान्वितेन शान्ताकाङ्क्षेण सनिहितेनापि श्वेतगुणेनाश्वो विशेष्यते। नाप्यत्राग्नेयीशब्दस्य विशेषापेक्षास्ति, आग्नेयीमात्रस्याश्वमात्रवत्समन्वयोपपत्ते'। ततश्चोभयोरनाकाङ्क्षत्वात्सत्यपि सन्निधाने मिथः सम्बन्धो न घटते। एव सत्यपि यदि विशेष्येत तर्हि 'आग्नेय्या' इति तृतीयाश्रुतिजनिताग्नेयीसामान्यप्रत्ययबाधाच्छ्रुतिबाध· स्यात्। पदस्य तु ससम्बन्धिकत्वेन सम्बन्ध्यन्तरापेक्षत्वनियमाद्युक्त सन्निधिवशेन सोमक्रयणीविशेषकत्वम्। तस्मात्प्रकृतया अप्रकृतया वोपस्थानमिति ॥

अथ सिद्धान्तयति—

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ १९ ॥

वाशब्द एवार्थे। तस्मिन्नधिकारे प्रकरणे आख्यायते आम्नायत इति तदाख्य प्राकरणिक एव मन्त्र आग्नेयीशब्देन विवक्षित। कुत ? प्रकरणोपपत्तिभ्यां–प्रकर-

1. तृतीयया श्रुत्या. क ग. मु पा. 2 निराकाङ्क्षत्वात्. क, ग.

माद्विधिरेवायमनर्थक. स्यात्। अतो विनियुक्ताया अपि वचनाद्विनियोग इत्या-स्थेर्यमिति क्लृप्तक्रतुसम्बन्धाया प्रकृताया एव ग्रहणमिति स्थितम् ॥

इत्यष्टममाग्नेय्यधिकरणम् ॥ ८ ॥

( भक्षपेटिका )

९

अस्ति भक्षानुवाक'। तत्र "भक्षेहि माविश" इत्यादि' "सुप्रजास्त्वाय" इत्यन्तः "वसुमद्गणस्य" इत्यादिः "उपहूतो भक्षयामि" इत्यन्तश्च भक्षणप्रकाशकः। "एहि वसो" इत्यारभ्य "बाहुभ्यां सध्यासम्" इत्यन्तो ग्रहणप्रकाशक। सधिर्ग्रहणार्थक'। "अवख्येपम्" इति चक्षिङो दर्शनार्थस्य रूप छान्दसम्। चक्षिङ ख्यान्' इत्यत्र 'ख्येञुपख्यायते' इति तु वार्तिककृत। 'विश्वारूपाभिचष्टे' इत्यादौ चक्षिङोऽवेक्षणार्थत्व दृष्टम्। "हिन्व मे गात्रा" इत्यारभ्य "मा मेऽवाङ्नाभिमतिगा" इत्यन्तः सम्यग्जरणप्रकाशक'। साम्यग्जीर्णो हि सोमरसो गात्राणि प्रीणयितुं नाभेरधस्ताद-गन्तुमपि शक्नोति। तत्र किं सर्वोऽय भक्षानुवाकः भक्षणे विनियोक्तव्य ? उत यथालिङ्गं विभज्य विनियोक्तव्य. ? इति सशये, पूर्वपक्षयति—

[1]लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य ॥ २२ ॥

यद्यपि तैत्तिरीये 'भक्षेहि' इत्यनुवाके भक्षणानुपयुक्ता "यन्म आत्मनो मिन्दा" इत्यादिमन्त्रा अपि पठ्यन्ते, तथापि 'भक्षेहि' इत्यारभ्य 'नाभिमतिगाः' इत्यन्त शाखान्तरे भक्षानुवाक समाख्यात इह विवक्षितः। तस्य कृत्स्नस्य लिङ्गा-त्समाख्यानाच्च भक्षणार्थता। यद्यपि 'सध्यासम्' इत्यादेर्ग्रहणादौ मुख्यसामर्थ्यं क्लृप्तम् 'गृहीत्वावेक्ष्य सम्य—जरणाय भक्षयामि' इत्येव ग्रहणादिविशेषितभक्षणप्रति-पादने तु ग्रहणादिद्वार... क्षणप्रतिपादने सामर्थ्यं लक्षणया तदेकवाक्यताव-मर्शेन[2] कल्प्यम्, ... दिकमिहार्थप्राप्तं प्रकाश्यते न तु विहितम्। एवञ्च ग्रहणादिस्वरूप एव ... शेषत्व स्यात् न त्वपूर्वसाधनतापन्ने तस्मिन्, ग्रहणादेरविहितत्वेन ... पाभावात्। ततश्चापूर्वोपयोगाभावान्मन्त्राणा-र्थक्य स्यात्। तथा ... ा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या-... सवित्रादिशब्दघटितस्य विशिष्टनिर्वापप्रति-

—समाख्य ...

[1] वशेन. क, ग, घ, मु. पा.

प्रकरणाधीतेषु वा मन्त्रेषु मध्ये यया कयाचिदाग्नेय्या ऋचा प्रत्येतव्य'। कुत' ? शिष्टत्वात्-अविशेषेण विहितत्वादित्यर्थ.। न च प्रकरणादप्रकृतमन्त्रनिवृत्तिरिति वाच्यम्। प्रकरणं हि इतिकर्तव्यताकाङ्क्षालक्षणं सन्निधिलक्षण वा ? नाद्य', इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य विनियोगमात्रे समर्थत्वेन 'ज्योतिष्टोमेतिकर्तव्यताकाङ्क्षालक्षणप्रकरणपरिगृहीतया आग्नेय्या' इत्येव विशेषकत्वाभावात्। न चैव सति "व्रीहीन् प्रोक्षति" इत्यत्रापि क्रतुसम्बन्धिनामेव व्रीहीणां ग्रहणं न स्यादिति वाच्यम्। न हि तत्र प्रकरणवशात्क्रतुसम्बन्धिनां ग्रहण, किन्तु संस्कार्यत्ववशादेव, क्रत्वसम्बन्धिन. सस्कारवैयर्थ्यात्। यदि चेदमुपस्थानमाग्नेयीसस्कारार्थं स्याद्व्रीहिवत्क्रतुसम्बन्धिन्येव गृह्येत। आग्नेय्यास्तृतीयाश्रुत्या[1] विधेयत्वात्। ततश्च मन्त्रमात्रस्याङ्गत्वान्न प्रकृतनियम। अथ "सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति" इत्यत्र पदशब्दस्य सन्निहितसोमक्रयणीपदपरत्व यथा तद्वदिहापि सन्निहिताग्नेयीपरत्वमिति द्वितीय पक्षोऽस्त्विति चेन्न, अत्र ह्युपस्थानविधौ न कस्याश्चिदाग्नेय्याः सन्निधिरस्ति, "अग्न आयाहि वीतये" इत्यादिमन्त्राणां स्तोत्रादौ विधीयमानाना प्रदेशान्तरवेदान्तरस्थत्वात्। अस्तु वा सन्निधानम्, अथापि न तद्विशेषकं भवितुमर्हति, अपेक्षितसन्निधेरेव विशेषकत्वात् स्तोत्रादौ विनियुक्तानाञ्च निरपेक्षत्वात्[2]। न हि 'अश्वेन गच्छति श्वेतेन पटेन प्रावृत' इत्यत्र पटान्वितेन शान्ताकाङ्क्षेण सन्निहितेनापि श्वेतगुणेनाश्वो विशेष्यते। नाप्यत्राग्नेयीशब्दस्य विशेषापेक्षास्ति, आग्नेयीमात्रस्याश्वमात्रवत्समन्वयोपपत्ते'। ततश्चोभयोरनाकाङ्क्षत्वात्सत्यपि सन्निधाने मिथः सम्बन्धो न घटते। एवं सत्यपि यदि विशेष्येत तर्हि 'आग्नेय्या' इति तृतीयाश्रुतिजनिताग्नेयीसामान्यप्रत्ययबाधाच्छ्रुतिबाध स्यात्। पदस्य तु ससम्बन्धिकत्वेन सम्बन्ध्यन्तरापेक्षत्वनियमाद्युक्त सन्निधिवशेन सोमक्रयणीविशेषकत्वम्। तस्मात्प्रकृतया अप्रकृतया वोपस्थानमिति ॥

अथ सिद्धान्तयति—

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ १९ ॥

वाशब्द एवार्थे। तस्मिन्नधिकारे प्रकरणे आख्यायते आम्नायत इति तदाख्य प्राकरणिक एव मन्त्र आग्नेयीशब्देन विवक्षित। कुत ? प्रकरणोपपत्तिभ्या-प्रकर-

1. तृतीयया श्रुत्या. क ग. मु. पा 2. निराकाङ्क्षत्वात्. क, ग

भाद्विधिरेवायमनर्थकः स्यात्। अतो विनियुक्ताया अपि वचनाद्विनियोग इत्यास्थेयमिति क्लृप्तक्रतुसम्बन्धाया प्रकृताया एव ग्रहणमिति स्थितम् ॥

इत्यष्टममाग्नेय्यधिकरणम् ॥ ८ ॥

( भक्षपेटिका )

९

अस्ति भक्षानुवाक'। तत्र "भक्षेहि माविश" इत्यादि "सुप्रजास्त्वाय" इत्यन्तः "वसुमद्गणस्य" इत्यादि. "उपहूतो भक्षयामि" इत्यन्तश्च भक्षणप्रकाशकः। "एहि वसो" इत्यारभ्य "बाहुभ्यां सध्यासम्" इत्यन्तो ग्रहणप्रकाशक । सधिर्ग्रहणार्थकः। "अवख्येषम्" इति चक्षिङो दर्शनार्थस्य रूप छान्दसम्। चक्षिङ ख्याञ्' इत्यत्र 'ख्येञुपख्यायते' इति तु वार्तिककृत.। 'विश्वारूपाभिचष्टे' इत्यादौ चक्षिङोऽवेक्षणार्थत्वं दृष्टम्। "हिन्व मे गात्रा" इत्यारभ्य "मा मेऽवाङ्नाभिमतिगा" इत्यन्तः सम्यग्जरणप्रकाशक । साम्यग्जीर्णो हि सोमरसो गात्राणि प्रीणयितु नाभेरधस्ताद्गन्तुमपि शक्नोति। तत्र किं सर्वोऽय भक्षानुवाकः भक्षणे विनियोक्तव्य ? उत यथालिङ्ग विभज्य विनियोक्तव्य' ? इति सशये, पूर्वपक्षयति—

[1]लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य ॥ २२ ॥

यद्यपि तैत्तिरीये 'भक्षेहि' इत्यनुवाके भक्षणानुपयुक्ता "यन्म आत्मनो मिन्दा" इत्यादिमन्त्रा अपि पठ्यन्ते, तथापि 'भक्षेहि' इत्यारभ्य 'नाभिमतिगाः' इत्यन्त शाखान्तरे भक्षानुवाक. समाख्यात इह विवक्षित.। तस्य कृत्स्नस्य लिङ्गात्समाख्यानाच्च भक्षणार्थता । यद्यपि 'सध्यासम्' इत्यादेर्ग्रहणादौ मुख्यसामर्थ्यं क्लृप्तम् 'गृहीत्वावेक्ष्य सम्यग्जरणाय भक्षयामि' इत्येवं ग्रहणादिविशेषितभक्षणप्रतिपादने तु ग्रहणादिद्वारा विशिष्टभक्षणप्रतिपादने सामर्थ्यं लक्षणया तदेकवाक्यतावशेन[2] कल्प्यम्, तथापि ग्रहणादिकमिहार्थप्राप्तं प्रकाश्यते न तु विहितम्। एवञ्च ग्रहणादिस्वरूप एव तन्मन्त्राणां शेषत्व स्यात् न त्वपूर्वसाधनतापन्ने तस्मिन्, ग्रहणादेरविहितत्वेन विध्येकगम्यतद्रूपाभावात् । ततश्चापूर्वोपयोगाभावान्मन्त्राणामानर्थक्य स्यात्। तथा च 'देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्ट निर्वपामि" इति मन्त्रस्य सवित्रादिशब्दघटितस्य विशिष्टनिर्वापप्रति-

1. लिङ्गसमाख्यानाभ्या. 2. वशेन. क, ग, घ, मु. पा.

क्रत्वपूर्वसाधनार्थत्वेन क्रतुसम्बन्धसिद्धे. श्रुतोपस्थानमात्रविधानान्न गौरवमिति चेत्, स्वरसतो हि पदार्थस्वरूपान्वय एव प्रतीयते। अपूर्वसाधनान्वयस्तु लक्षणावाच्यः। लक्षणा च विधीयमानस्यापूर्वसाधनाकाङ्क्षायां वाच्या। सा च क्रत्वन्वयसिद्धौ तन्निर्वाहाय प्रभवति नान्यथेत्यपूर्वसाधनान्वयस्यापि क्रत्वन्वयपूर्वकत्वादवश्य क्रत्वन्वयस्यानेन विधिना विधेयत्वाद्गौरवमवर्जनीयम्। न च प्रकरणादेव क्रतुव्यापारस्य विधिसिद्धेर्न श्रुतविधेस्तत्र व्यापार इति वाच्यम्। श्रुतिर्यथा स्वविषयस्य धात्वर्थभावनादिभि. सम्बन्धमात्रे प्रमाण न तु विधानेऽपि, तद्वत्प्रकरणस्यापि स्वतोऽविधानत्वेन तत श्रुतिकल्पनामुखेन तद्विधिकल्पनस्यावश्यकत्वात्। "व्रीहीनवहन्ति" इत्यत्र तु श्रुतिसमर्पितव्रीह्यवघातक्रतुसम्बन्धमपि विधिरेव विधत्त इत्यगत्याभ्युपगम्यते। इह तु प्रकृतग्रहणेन गतौ सत्या न गौरवाश्रयण युक्तम्॥

ननु प्रकृतानां क्रतुव्यापारस्तावत्स्तोत्रादिविनियोजकवाक्याद्विशेषरूपेणैवावगतः न तु सामान्यरूपेण, ततश्चोपस्थानसम्बन्धनिर्वाहाय सामान्यरूपेण क्रतुसम्बन्धः प्रकृतानामपि कल्पनीय इति गौरव तुल्यमित्याशङ्क्य निराकरोति—

## ॅषां चोपदिष्टत्वात्॥ २१॥

चशब्द एवार्थे, भिन्नक्रमश्च। सर्वेषा प्रकृताग्नेयतन्त्राणा प्रकरणे उपदिष्टत्वादेव पाठादेव क्रतुव्यापाररूपमवगम्यते न तु स्तोत्रादिवाक्यात्। प्रकरणगम्यञ्च यद्रूप स्तोत्रादिवाक्यैरिवोपस्थानवाक्येनाप्युपजीव्यत इति न पुन. कल्पनाप्रसङ्ग। न चैव प्रकरणस्य स्वयमविधायकत्वात्तेन विधिरपि कल्पनीयः स्यात्, तद्वरं क्लृप्तस्तोत्रादिविधेरेव प्रकरणसाचिव्येन क्रतुव्यापाररूपे विधायकत्वस्वीकार इति प्रकृतग्रहणेऽपि गौरवमवर्जनीयमिति वाच्यम्। स्तोत्रादिविधीनां बहूना तत्तद्विशेषयुक्तक्रतुव्यापारविधिकल्पनापेक्षया स्तोत्रादिसर्वविध्युपयुक्ततया एकस्यैव सामान्यरूपविषयविधेः कल्पयितुमुचितत्वात्। ननु प्रकृताना स्तोत्रादिकार्ये विनियुक्ताना कथमुपस्थानेऽपि विनियोग इत्यत्राप्येतदेवोत्तर सर्वेषा चोपदिष्टत्वादिति। "यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सर्वा अपि दाशतयीरनुब्रूयात्" इत्याश्विनशस्त्रे श्रुतम्। ऋक्संहिता दशमण्डला, तत्र भवा ऋच दाशतय्य। तथा वाच स्तोमे श्रुतम् "सर्वा ऋच सर्वाणि यजूंषि सर्वाणि सामानि वाच स्तोमे प्रयुञ्जीत" इति। तथा ब्रह्मयज्ञादावपि कृत्स्नमन्त्राणामस्ति विनियोग। तथा चाविनियुक्ताया आग्नेय्या कस्याश्चिदप्यला-

भक्षणे 'एहि वसो' इत्यादि 'सध्यासम्' इत्यन्तो ग्रहणे इति वार्तिककृत. । आपस्तम्बादयो याज्ञिकास्तु 'भक्षेहीति भक्षमाह्रियमाण प्रतीक्ष्याश्विनोस्त्वा बाहुभ्यां सध्यासम इति प्रतिगृह्य' इत्याहुः ॥

इति नवम भक्षाधिकरणम् ॥ ९ ॥

१०

तस्मिन्नेव भक्षानुवाके 'मन्द्राभिभूति' इत्यादि 'सोमस्य तृप्यतु' इत्यन्तः किं तृप्तौ विनियोक्तव्य. ? उत 'भक्षयामि' इत्येकवाक्यतया भक्षणे ? इति सशये, लिङ्गात्तृप्तौ विभज्य विनियोक्तव्य इति प्राप्ते, सिद्धान्तयति—

**गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २४ ॥**

'मन्द्राभिभूति.' इत्यादि 'भक्षयामि' इत्यन्त एको भक्षणमन्त्र स्यात् । कुत. ? गुणाभिधानात् गुणस्य भक्षणानुनिष्पाद्यतृप्तेर्निरर्थकाभिधानप्रसङ्गात् । तृप्तिर्हि न भक्षणात्पृथक्प्रयत्नसाध्या, भक्षणे सति तस्मात्स्वयमेवोत्पत्ते. । अतस्तृप्तिप्रकाशनस्यानर्थक्यान्न तत्र मन्त्रविनियोगसम्भव । तत्प्रकाशनस्यादृष्टार्थत्वे तु स एव दोष. । न च केवलभक्षणस्य प्रकाशनतोऽप्यनुष्ठानसिद्धेस्तृप्तिविशिष्टतत्प्रकाशनेऽप्यदृष्टार्थत्व तुल्यमिति वाच्यम् । तस्योत्साहजननार्थतया दृष्टार्थत्वात् । ननु 'तृप्यतु' 'भक्षयामि' इत्याख्यातयोर्निराकाङ्क्षयो कथमेकवाक्यत्वमत आह—तयोरिति । लिङ्गविनियोगासम्भवात्सत्यप्याख्यातस्य निराकाङ्क्षत्वे इतिकरणाध्याहारेण 'वाक्तृप्यतु इत्येवमर्थम् भक्षयामि' इत्येवमेकवाक्यतां प्रकल्प्य तृप्तिविशिष्टभक्षणप्रतिपादकत्वोपपत्तेः । प्रयोजनं पूर्वपक्षे—तृप्तेर्भक्षणानन्तरभावित्वाद्भक्षणानन्तर मन्त्र प्रयोक्तव्य, सिद्धान्ते तु —भक्षणात्प्रागेवेति ॥

इति दशम गुणाभिधानाधिकरणम् ॥ १० ॥

११

सन्ति ज्योतिष्टोमे शुक्रग्रहमन्थिग्रहसवनमुखीयचमसादिप्रदानान्यैन्द्राणि, अनैन्द्राणि चैन्द्रावायवमैत्रावरुणाश्विनादिग्रहोक्थ्यचमसादिप्रदानानि । भक्षानुवाके च 'मन्द्राभिभूति' इत्यादिभक्षणमन्त्रे 'इन्द्रपीतस्य' इति पठितम् । तत्र किमैन्द्रेष्वेव प्रदानेष्वय मन्त्र' अनैन्द्रेष्वमन्त्रकं भक्षणम् ? उतानैन्द्रेष्वप्यूहेन मन्त्र, अथवा सर्वत्र यथाम्नानमेव मन्त्र ? इति सशये, पूर्वपक्षयति—

पादकत्ववद्ग्रहणादिशिष्टभक्षणप्रतिपादकता कृत्स्नानुवाकस्य लक्षणया तदेकवाक्यतावशाद्युक्ता। एवञ्च 'भक्षेहि' 'भक्षयामि' इत्युपक्रमोपसंहारावगतमेकवाक्यत्वमप्युपपन्नं भवति। भक्षानुवाकसमाख्यापि कृत्स्नानुवाकस्यानुगृहीता भवति। एवञ्चाग्नेयीवाक्ये सामान्यसम्बन्धबोधकप्रकरणेन[1] प्रकृताप्रकृतसाधारण्यप्रवृत्तश्रुतिस्वारस्यभङ्गवदिहापि कृत्स्नानुवाकस्य भक्षणार्थत्वबोधकसमाख्यावशाल्लिङ्गस्वारस्यभङ्ग आश्रयणीय ॥

अथ सिद्धान्तयति—

## तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥ २३ ॥

तस्य भक्षानुवाकस्य अपकर्षः ग्रहणादौ विभज्य विनियोगः। कुत ? रूपोपदेशाभ्याम्—रूपाद्ग्रहणादौ मुख्यसामर्थ्यादुपदेशाच्च। कथमुपदेश ? अर्थस्य चोदित्वात्, यावता विना विधेयोऽर्थो न सिध्यति तावतोऽर्थस्य चोदनपरिगृहीतत्वेन ग्रहणमवेक्षणञ्च विना अन्यूनानतिरेकेण भक्षयितृभि सहभक्षणस्यानुपपत्त्या ग्रहणादेरपि भक्षयतिचोदिततया अपूर्वसाधने तत्र विनियोगसम्भवेन वैयर्थ्याभावादित्यर्थ । न चैवं सति व्रीहिचोदनया कर्षणादेरपि परिग्रहणादङ्गत्वं स्यादिति वाच्यम्। प्रतिग्रहादिनापि कस्यचिल्लाभसम्भवेनैकान्ततस्तदपेक्षाभावात्। एवं प्रतिग्रहादेरपि। न च भक्षणोत्तरभावि जरणं न भक्षणाक्षेप्यमिति वाच्यम्। जरणपर्यन्त एव भक्षणे भक्षयतेर्लोकप्रसिद्धत्वेन सोमवमने प्रायश्चित्तविधानेन च जरणपर्यन्तभक्षणस्यैवात्र भक्षयतिना विहितत्वात्। न च भक्षणे कृते प्रयत्नं विना स्वयमेवानुनिष्पद्यमानजरणस्य पृथगनुष्ठेयत्वाभावान्न स्मारकमन्त्रापेक्षेति वाच्यम्। 'भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत्' इति जरणस्यापि सुखासनादिप्रयत्नसाध्यत्वात्। तदेवं मुख्यलिङ्गानुसारेण विभज्य विनियोगे सम्भवति वाक्यसमाख्याभ्यां दुर्बलाभ्यां भक्षार्थता कृत्स्नानुवाकस्येत्ययुक्तम्। भक्षस्यानुवाक इति समाख्यालब्धसम्बन्धस्य ग्रहणादिद्वारेणोपपत्ते समाख्यापि न विरुध्यते। यत्तु सवित्रादिपदघटितनिर्वापमन्त्रस्येव विशिष्टार्थप्रतिपादकत्वमिति तन्न, प्रकरणे सवित्रादिदेवताभावेनोत्कर्षापत्त्या च कथञ्चिद्विशिष्टपरत्वस्वीकारेण लिङ्गविनियोगबाधेऽपि प्रकृते तथाविधबाधकाभावेन लिङ्गादेव वाक्यबाधस्य युक्तत्वात्। तस्माद्विभज्य विनियोग । तत्र 'भक्षेहि' इत्यादि 'सुप्रजास्त्वाय' इत्यन्तो

1. प्रमाणेन ग

तथा च सवनमुखीयान्यप्रदानानां विकृतित्वादूहेन तत्र भक्षणमन्त्र प्रयोक्तव्य इति द्वितीयः पक्षः ॥

इत्येकादशमिन्द्रपीताधिकरणम् ॥ ११ ॥

*१२

इतः पर सिद्धान्ते वक्तव्ये एतद्द्वितीयपूर्वपक्षप्रयोजनतया विचारान्तर प्रसङ्गात्प्रस्तूयते । सन्ति ज्योतिष्टोमे दश चमसा' । तत्र मध्यत कारिसमाख्याकानां होतृब्रह्मोद्गातृयजमानानां चत्वारश्चमसा मैत्रावरुणब्राह्मणाच्छसिपोतृनेष्टृच्छावाकाग्नीध्राणां होत्रकाणा षट् । तत्र प्रात'सवने शुक्रामन्थिप्रचारेऽच्छावाकचमसवर्जं नव चमसा' सवनमुखीया प्रथममिन्द्राय हूयन्ते, इतरयोस्तु सवनयोर्दश दश । तत्र होत्रकाणा चमसेषु सकृत्सकृदिन्द्राय हुतेषु तच्छेषेषु सत्स्वेवाभक्षितेषु पुनरपि द्रोणकलशात्सोममुन्नीय मित्रावरुणादिदेवताभ्यो हुत्वा तेपु चमसेषु हुतशेप. सोमो भक्ष्यत इति स्थितिः । तत्र भक्षणमन्त्रे 'इन्द्रपीतस्य' इति पदे 'मित्रावरुणपीतस्य' इत्येवं मित्रावरुणादय एव केवला उपलक्षणीया' ? उत 'इन्द्रमित्रावरुणपीतस्य' इत्येव पूर्वहोमदेवतेन्द्रोऽप्युपलक्षणीय. ? इति सशये, सिद्धान्तेनोपक्रमते—

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥२७॥

उन्नीतेषु चमसेषु इन्द्राय हुतेषु मित्रावरुणादिप्रदानार्थं तच्छेषोपरि पुनरुन्नीताः सोमाः पुनरभ्युन्नीता , तेषु भक्ष्यमाणेषु इन्द्रस्य मित्रावरुणादीनाञ्च सर्वेषामुपलक्षण कीर्तनं भवति । कुत. ? द्विशेषत्वात् । भक्ष्यमाणस्य शेषस्य ऐन्द्रानैन्द्रोभयविधप्रदानशेषत्वात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

## अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ २८ ॥

वाशब्दः प्रत्यवस्थाने । ऐन्द्रहुतशेषस्य पुनरभ्युन्नीतमैत्रावरुणादिप्रदानशेषस्य च ससृष्टस्य भक्षणे पूर्वप्रदानदेवताविशेषस्य इन्द्रस्यानुपलक्षणम् । कुतः ? अपनीतत्वात् मैत्रावरुणाद्युत्तरप्रदानदेवताभूतमित्रावरुणादिसम्बन्धेन तस्य अपनीतत्वात् बाधितत्वात् । न च मित्रावरुणाद्यर्थतया य. पुनरुन्नीताऽश तस्यैव मित्रावरुणादि-

---

* इत अन्तरार्गभणीत्वेन पञ्चाधिकरणानि । तेष्विद द्वादशमधिकरण प्रथमम्.

**लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २५ ॥**

अनैन्द्राणां प्रदानानां शेषभक्षणस्यामन्त्रकत्वम् । कुतः ? लिङ्गविशेषनिर्देशात् इन्द्रपीतत्वेन विशेषेण सोमस्य निर्देशात् । 'इन्द्रपीतस्य' इति हि तृतीयासमासः । न चेन्द्रेण पीतो यस्मिन्सवने तत्सम्बन्धिसोमस्य भक्षयामीति बहुव्रीह्याश्रयणादनैन्द्रविषयत्वमपि मन्त्रस्य न विरुद्धमिति वाच्यम् । बहुव्रीहेरन्यपदार्थपरत्वेन गौरवात् तृतीयासमासस्य स्वार्थवृत्तित्वेन लाघवात् । न च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्याश्रयणमिति वाच्यम् । तृतीयासमासेऽपि 'तृतिया कर्मणि' इति पूर्वपदप्रकृतिस्वरोपपत्तेः । नन्वनैन्द्रप्रदानेषु 'मित्रावरुणपीतस्य' इत्याद्यूह्यतां मन्त्रे, इत्यत आह—समानविधानेष्विति । समानं विधानं धर्माम्नानं येषामैन्द्रानैन्द्रप्रदानानां तेषां मध्येऽनैन्द्रप्रदानेषु भक्षणमन्त्रऊहो न सम्भवति, प्रत्यक्षोपदिष्टधर्मकतया प्रकृतित्वात् । ऊहस्य विकृतिमात्रविषयताया दशमे वक्ष्यमाणत्वात् । ऐन्द्रानैन्द्रप्रदानानामुभयेषामपि समानविधानतया प्रकृतिविकारभावाभावात् । तस्मादनैन्द्रेष्वमन्त्रकं भक्षणमिति ॥

तमिमं पूर्वपक्षं निराकुर्वन् पूर्वपक्षान्तरमुत्थापयति—

**यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २६ ॥**

वाशब्दः पक्षान्तरसम्भावनायाम् । अनैन्द्रप्रदानेषु नामन्त्रकं भक्षणम्, किन्तु 'मित्रावरुणपीतस्य' इत्येवं यथादेवतमूहेन समन्त्रकं भवति । हि यतः तत्प्रकृतित्वं प्रथममैन्द्रप्रदानप्रकृतिकत्वमन्यप्रदानानां दर्शयति । "अनुष्टुप्छन्दस इति भक्षमन्त्रं नमति" इत्यूहविधिरिति शेषः । षोडशिभक्षमन्त्रे 'गायत्रच्छन्दसः' इति स्थाने 'अनुष्टुप्छन्दस' इत्यूहेदित्यर्थः । षोडशिप्रदानस्य विकृतित्वं सिद्धवत्कृत्य तत्रोहविशेषविधानं सवनमुखीयान्यप्रदानानां विकृतित्वं गमयति । यद्यपि सोमयाग एकं कर्म तथापि तदीयप्रदानानां नानात्वात्प्रकृतिविकृतिभाव उपपद्यते । "इन्द्राय त्वा वसुमते सोम गृह्णामि" "इन्द्राय त्वा वृत्रघ्ने" "इन्द्रायैकधनविदे" इत्यादिग्रहणमानाप्यायनादिमन्त्रवशेन सोमस्यैन्द्रप्रदानविषयत्वावगतस्याभिषवादिसकलधर्माम्नानेन प्रथमस्यैन्द्रप्रदानस्य सवनमुखीयस्य प्रत्यक्षोपदिष्टधर्मकत्वात्प्रकृतित्वं नेतरेषामिति न तुल्यविधानत्वम् । न च मन्त्ररूपाङ्गानुसारेण प्रधानभूतसोमस्य कथं सङ्कोच इति वाच्यम् । अङ्गभूतेनाप्याहवनीयादिनाग्निहोत्रादीनामाहिताग्निमात्रविषयत्ववदुपपत्तेः ।

मैत्रावरुणादिप्रदानशेषस्य च ससृष्टस्य भक्षणमेकमेवेति न तस्यैन्द्रप्रदानभक्षणविकृतित्वम्, एकस्यैव प्रकृतिविकृतिभावाभावात्। ततश्च 'इन्द्रपीतस्य' इत्येव मन्त्र इति युक्तम्। ससृष्टमैत्रावरुणाद्यशे तु तूष्णीं भक्षण पर्यवस्यति, प्रकृतावूहविरोधात्। अस्तु वा एतस्यापि भक्षणस्य पूर्वशेषांशे प्रकृतित्वम् अभ्युन्नीतांशे विकृतित्वम्। तथापि विचारोऽयमभित्तिचित्रायित। सोमभक्षणे हि वषट्कार' समाख्या होमाभिपवौ च समुदितौ निमित्तमित्यग्रिमपञ्चमपादे वक्ष्यते। अध्वर्युर्न वषट्कर्ता। नापि कस्यचिच्चमसस्य 'अध्वर्युचमस.' इति समाख्यास्ति। नाप्यैन्द्रप्रदानात्मके शुक्रामन्थिप्रचारेऽध्वर्युणा मैत्रावरुणादिहोत्रकचमसा हुता। चमसाध्वर्युभिरेव हि ते हुता। ब्रह्मयजमानसदस्याना यद्यपि समाख्याभक्षणमस्ति, तथापि न तदीयचमसानामभ्युन्नयनमस्ति, नापि मित्रावरुणाद्यर्थतया ते हुताः। होत्रकाणां चमसास्तु पुनरभ्युन्नीताः प्रस्थितयाज्यासु मित्रावरुणाद्यर्थतया हुताः। तत्र पूर्वशेषस्याध्वर्युहुतत्वाभावादध्वर्योर्भक्षणमप्रसक्तमिति 'मित्रावरुणपीतस्य' इत्येव मित्रावरुणादीनामेवोपलक्षणम्। 'इन्द्रपीतस्य' इत्याम्नानन्तु ऐन्द्रप्रदाने ब्रह्मादिषु सावकाशम्। तत्र भक्ष्यमाणेऽभ्युन्नीतसोमे पूर्वशेषोऽप्यवर्जनीयत्वादध्वर्युणा भक्ष्यते। तत्तु क्रतोरकिञ्चित्करमिति न तत्र भक्षणमन्त्रस्य प्रसक्ति। सूत्राणि त्वेव योजनीयानि—'पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणत्व द्विशेषत्वात्' इत्युक्तार्थक पूर्वपक्षपरम्। 'अपनयाद्वा पूर्वस्यानुपलक्षणम्' इति द्वितीयसूत्र तु सिद्धान्तपरम्। अभ्युन्नीतसोमेऽध्वर्युणा भक्ष्यमाणेऽवर्जनीयपूर्वशेषभक्षणस्यावैधत्वेन ततो भक्षणमन्त्रस्यापनीततया इन्द्रस्योपलक्षणमप्रसक्तमित्यर्थ। तर्हि 'इन्द्रपीतस्य' इत्याम्नान प्रकृतिभूतादैन्द्रप्रदानादपेयादित्यत्र तृतीयसूत्रमुत्तरम् 'अग्रहणाद्वानपायः स्यात्' इति। "भक्ष्यत कारिणा चमसाध्वर्यवो वषट्कृतानुवषट्कृता जुहुत" "प्रैतु होतुश्चमस, प्र ब्रह्मण', प्रोद्गातु, प्र यजमानस्य" "होत्रकाणा चमसाध्वर्यव' सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वम्" इति प्रैषानुसारेण होत्रकचमसव्यतिरिक्तब्रह्मादिचमसानामैन्द्रप्रदानानन्तर मित्रावरुणाद्यर्थं पुनरभ्युन्नयनाभावेन तद्भक्षणे ब्रह्मादिभि क्रियमाणे 'इन्द्रपीतस्य' इति निर्बाधतया भक्षमन्त्रस्य प्रकृतिभूतादैन्द्रप्रदानादनपाय इत्यर्थं। न चाभ्युन्नीतसोमे पूर्वशेषसंसृष्टे वषट्कारनिमित्तेन होत्रकैर्भक्ष्यमाणे 'इन्द्रमित्रावरुणपीतस्य' इत्येवमूहसम्भव इति वाच्यम्। पूर्वहोमे ऐन्द्रे तेषा वषट्कर्तृत्वाभावेन तच्छेपभक्षणस्याप्रसक्ते, तेषाम् 'भक्षेहि' इति मन्त्रा-

सम्बन्ध इति शङ्क्यम्। न ह्युन्नयनकाले देवतोद्देशोऽस्ति येन पुनरुन्नीतांशस्यैव मित्रावरुणादिसम्बन्धात्पूर्वशेषस्येन्द्रसम्बन्धो नापेयात्। प्रदानकाल एव हि याज्यातो देवतोद्देशः। तदानीं पुनरुन्नीतांशस्यैव मित्रावरुणादिसम्बन्धात्पूर्वशेषस्य च संसृष्टत्वान्न पुनरुन्नीतांशमात्रस्य मित्रावरुणादिदेवतोद्देशसम्भवः। देवता वा कथं पूर्वशेषाद्वि-विच्य पुनरुन्नीतसोमांशं गृहीत्वा भोक्तुं शक्नुयात्, संसर्गिद्रव्यस्य विवेकासम्भवात्। ततश्च संसृष्टस्य मित्रावरुणादिदेवतासम्बन्ध'[पूर्वदेवतासम्बन्धे सति न सम्भवतीति पूर्वशेषांशस्य पूर्वदेवतासम्बन्धापनयात्पूर्वदेवताया अनुपलक्षणम्। किन्तु मित्रावरु-णादिदेवतानामेवोपलक्षणमिति ॥

तदिदं सिद्धान्ती निराचष्टे—

**अग्रहणाद्वानपायः[1] स्यात् ॥ २९ ॥**

वाशब्दश्चार्थे। पूर्वशेषस्यापि मित्रावरुणादिदेवतान्तरार्थत्वेनाग्रहणादुन्नयनका-लेऽभ्युन्नीतमात्रस्य करिष्यमाणयागार्थत्वावधारणाच्च पूर्वदेवताया अनपाय पूर्वशेषा-दपनयनं न स्यादित्यर्थः। अभ्युन्नयनस्य हि सामर्थ्यात्करिष्यमाणयागार्थत्वमसन्दिग्ध-म्। ततश्चाभ्युन्नीतांशस्यैव मित्रावरुणादिसम्बन्धोऽवधृत, न तु पूर्वशेषस्यापि। वच-नाद्धि सशेषेषु चमसेषून्नयनम्। तत्र चमसोपलक्षणत्वेनोपपन्न पूर्वशेष। यदा चोन्न-यनवेलाया पूर्वशेषस्य देवतान्तरार्थत्वं नावधृत तदा प्रदानवेलायामपि यथागृहीतस्यैव होमात्सन्निहितोऽपि पूर्वशेषोऽसावसङ्कल्पितत्वान्न देवतान्तरार्थो भवितुमर्हति। इन्द्राय त्यक्तस्य पूर्वशेषस्य देवतान्तरोद्देशेन पुनस्त्यागायोगाच्च। यत्तु संसर्गिद्रव्यत्वाद-भ्युन्नीतसोमांश पूर्वशेषात्कथ पृथगुद्दिश्येत देवता वा कथ स्वीकुर्यादिति तन्न, बुद्ध्या निष्कृष्य पृथगुद्देशसम्भवात्, हंसस्य क्षीरोदकविभजन इव पूर्वशेषतदभ्युन्नीतसोम-विभजने महात्मनां मित्रावरुणादिदेवताना सामर्थ्यसम्भवाच्च। एवञ्च पूर्वशेषस्य न देवतान्तरसम्बन्ध। अभ्युन्नीते सोमे हूयमाने पूर्वशेषोऽपि नान्तरीयकतया प्रक्षिप्यते, न तु मित्रावरुणादिभ्यो दीयते। ततश्च पूर्वदेवतापनायकस्य देवतान्तरसम्बन्धस्य पूर्वशेषेऽभावान्न तत्र पूर्वदेवतापनय इति भवतीन्द्रमित्रावरुणपीतस्येत्येवमुपलक्षण-मिति स्थितम् ॥

अत्रेदं चिन्त्यम्—'यथादेवत वा तत्प्रकृतित्वं हि दर्शयति' इति पूर्वतरसूत्रेऽ-नैन्द्रप्रदानानामैन्द्रप्रदानविकृतित्वाद्यथादेवतमूह इति स्थितम्। प्रकृते चैन्द्रप्रदानशेषस्य

1. अपनय.

पेणैव पत्नीवद्रूपदेवतान्तरार्थतया ग्रहणात्पूर्वशेष' पूर्वदेवतासम्बन्धादपनीतः स्यादित्यर्थः। न च 'आग्रयणात्' इत्यपादनत्वश्रवणादाग्रयणावयवस्यैव पात्नीवतत्वमवगम्यते, न तु पूर्वशेषस्यापि तत्संसृष्टस्येति वाच्यम्। न ह्यपादानत्वेऽवयवावयविभावः प्रयोजक', 'धावतोऽश्वात्पुरुषः पतति' इत्यादौ व्यभिचारात्। किन्तु विश्लेषमात्रं प्रयोजकम्। तत्राग्रयणांशवदनाग्रयणस्यापि पूर्वशेषस्य संसृष्टस्यैव सम्भवति, आग्रयणमात्रांशस्य विश्लेषयितुमशक्यत्वात्। तस्मादुभयस्यापि पत्नीवत्सम्बन्धात्पूर्वदेवतापनये सति 'पत्नीवत्पीतस्य' इत्येवोह' ॥

इति त्रयोदशं पात्नीवताधिकरणम् ॥ १३ ॥

( अन्तरागर्भिण्यां द्वितीयमधिकरणम् )

१४

अस्ति पात्नीवतग्रहहोममन्त्र "अग्ना ३ इ पत्नीवा ३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इति। 'अग्ने' इति सम्बोधनम्। 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्येकारस्य पूर्वार्धमकारः प्लुतो भवति। उत्तरार्धमिकारः। 'अग्ना ३ इ' इति रूपम्। हे पत्नीवन् अग्ने देवेन त्वष्ट्रा सह जुषमाणः सोम पिबेत्यर्थः। अनेन मन्त्रेण हुते पात्नीवते तच्छेषे भक्ष्यमाणे 'त्वष्टृपत्नीवत्पीतस्य' इति त्वष्टाप्युपलक्षणीयो न वा ? इति सशये, पूर्वपक्षयति—

त्वष्टारं तूपलक्षयेत्पानात्[1] ॥ ३२ ॥

तुःप्रत्यवस्थाने। मास्तु वाय्वादीनां पात्नीवतभक्षण उपलक्षणम्, पूर्वशेषस्य वाय्वादिसम्बन्धापनयात्। त्वाष्टारन्तु उपलक्षयेत्। कुतः ? पानात्। मन्त्रतो ह्यग्ने पत्नीवत त्वष्ट्रा सह पानं गम्यते। न चैतत्त्वष्टुर्देवतात्वमन्तरेण सम्भवति। तस्मात्सोऽप्युपलक्षणीय' ॥

अथ सिद्धान्तयति—

अतुल्यत्वात्तु नैवं स्यात् ॥ ३३ ॥

तुरवधारणे। त्वष्टारमुपलक्षयेदित्येवं यदुक्तं तन्नैव स्यात्। कुतः ? अतुल्यत्वात्—पाने त्वष्टु पत्नीवता तुल्यत्वाभावात्। पानेऽन्वयाभावादिति यावत्।

1. पानादिति नास्ति

भावाच्च। "वाग्देवी सोमस्य तृप्यतु" इति भक्षणे मन्त्रान्तरस्यैव वा च्ये समाम्नानात्। तस्मात्पुनरभ्युन्नीतसोमभक्षणे मित्रावरुणपीतस्य मरुत्पीतस्य त्वष्टृपीतस्य अग्निपीतस्य इत्येवं केवलमित्रावरुणादीनामुपलक्षणमिति युक्तम्। तदेतन्मीमांसकयाज्ञिकशिरोमणयो विदाङ्कुर्वन्तु ॥

इति द्वादशमभ्युन्नीताधिकरणम् ॥ १२ ॥

## ( अन्तरागर्भिण्या प्रथममधिकरणम् )

## १३

सन्ति प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विना द्विदेवत्या ग्रहाः। तेषु हुतेषु तदीयाः शेषा आदित्यस्थाल्यामवनीयन्ते। अस्ति च तृतीयसवने आदित्यग्रहः। स च सशेष हूयते। अस्ति च तृतीयसवने आग्रयणग्रहणविधिः। "चतसृभ्यो धाराभ्य आग्रयणं गृह्णाति" 'आग्रयणादुत्सिच्य द्वितीयां धारां करोति" "आदित्यस्थाल्यास्तृतीयाम्" "आदित्यग्रहसम्पाताच्चतुर्थीम्" इति। तदेतस्मादाग्रयणात्पात्नीवतग्रहग्रहणमाम्नातम् "आग्रयणात्पात्नीवतं गृह्णाति" इति। तस्मिन् पात्नीवते हुते तच्छेषे भक्ष्यमाणे किम् 'वाय्विन्द्रवायुमित्रावरुणाश्व्यादित्यपत्नीवत्पीतस्य' इत्यूहः? उत 'पत्नीवत्पीतस्य' इत्येव? इति संशये, पूर्वपक्षयति—

**पात्नीवते तु पूर्ववत्[1] ॥ ३० ॥**

तुरप्यर्थे। यथा पुनरभ्युन्नीताशस्यैवोन्नयनेन देवतान्तरसम्बन्धात्पूर्वशेषांशस्य तत्संसृष्टस्यापि देवतान्तरसम्बन्धाभावान्न पूर्वदेवतापनयः। ततश्च तद्भक्षणमन्त्रे 'वाय्विन्द्रवायुमित्रावरुणाश्व्यादित्यपत्नीवत्पीतस्य' इत्यूहः। भाष्यादौ 'इन्द्रवायुपत्नीवत्पीतस्य' इति वायुमित्रावरुणादेरपि प्रदर्शनार्थम् ॥

अथ सिद्धान्तयति—

**ग्रहणाद्वापनीतः[2] स्यात् ॥ ३१ ॥**

वाशब्दस्तुपर्यायो वैषम्ये। पुनरभ्युन्नीताशस्यैवोन्नयनेन मित्रावरुणादिदेवतान्तरार्थतया तत्संसृष्टस्याप्यैन्द्रशेषस्य मित्रावरुणादिदेवतान्तरसम्बन्धाभावान्न पूर्वदेवतापनय इति युक्तम्। इह तु द्विदेवत्यादिशेषसंसृष्टादाग्रयणाद् गृह्यमाणस्य संसृष्टत्वरू-

1. पूर्ववत्वात् 2. नीत.

स्त्येव। ततश्च 'पत्नीवद्भ्य इद न मम' इति त्याग। भक्षणमन्त्रे 'पत्नीवत्पीतस्य' इत्यत्राग्निस्त्रयस्त्रिंशद्देवताश्च पत्नीवन्तः प्रत्येतव्या इति प्राप्ते, सिद्धान्तयति—

## त्रिंशच्च परार्थत्वात् ॥ ३४ ॥

'त्रिंशत्' इति त्र्यधिकोपलक्षणम्। त्वष्टृवत्त्रयस्त्रिंशद्देवा अपि न पात्नीवते देवतात्वं लभन्ते। कुत.? परार्थत्वात्। याज्याया तन्निर्देशो हि स्तुत्यर्थ. 'इत्थमयमग्नि प्रशस्तो यत्स्वकीयेन हविषा महानुभावांस्त्रयस्त्रिंशद्देवानपि पत्नीवतस्तर्पयति' इति। अतो न तेषां देवतात्वम्। यद्यप्यग्नेर्मादयितृत्वमवगतं, तथापि न तत्तस्य देवतात्वं व्याहन्ति, प्रत्युत तस्य देवतात्वमावहति। न ह्यग्निर्यजमानद्रव्येण त्रयस्त्रिंशद्देवान्मादयितु शक्नोति, किन्तु स्वकीयेन। कथञ्च यजमानद्रव्यमग्नेः स्व स्याद्यदि यजमानोऽग्नये न दद्यात्। अतोऽग्नेरेव यजमानसङ्कल्पविषयत्वादितरेषामग्निदत्तेन माद्यतामपि यजमानसङ्कल्पविषयत्वाभावान्न देवतात्वम्। एवञ्च 'पात्नीवतम्' इति तद्धितोऽप्यसति बहुवचनग्राहकानन्यथासिद्धप्रमाणे एकवचनेनैव विगृहीतो भवतीति लाघवम्। ततश्च 'पत्नीवत इद न मम' इति त्याग.। 'पत्नीवत्पीतस्य' इत्यत्राग्निरेव पत्नीवान् प्रत्येतव्य'। यत्तु 'अग्नित्रयस्त्रिंशद्देवपत्नीवत्पीतस्य' इति पूर्वपक्षे ऊह•, सिद्धान्ते तु 'पत्नीवत्पीतस्य' इत्याहुस्तन्न, मन्त्रवर्णलब्धाना त्रयस्त्रिंशद्देवानामग्नेश्च विधिगतपत्नीवच्छब्देनैवोपलक्षणीयत्वात्। यथा चैतत्तथा नवमे वक्ष्यते ॥

इति पञ्चदश त्रिंशदधिकरणम् ॥ १५ ॥

( अन्तरागर्भिण्या चतुर्थमधिकरणम् )

१६

अस्ति प्रतिसोमयागाभ्यासमनुवषट्कारः "सोमस्याग्ने वीहीत्यनुयजति" इति। तत्र मन्त्रवर्णादग्निर्देवता। नात्र पूर्ववत्पारार्थ्यं किञ्चिदुपलक्ष्यते। अतोऽनुवषट्कारप्रयुक्तशेषभक्षणे 'अग्निपीतस्य' इत्यूह इति प्राप्ते, सिद्धान्तयति—

## [1]अनुवषट्कारश्च कर्तृवत् ॥ ३५ ॥

अनुवषट्कारदेवतापि नोपलक्षणीया। यथा 'होत्रादिपीतस्य' इति कर्ता नोपलक्ष्यते। अयमाशय—अनुवषट्कारस्तावत् "सोमेन यजेत" इति विहितैन्द्रवाय-

1. वषट्कारश्च पूर्ववत्.

त्वष्टुर्हि सहभावमात्रं न तु पानेऽन्वयः, 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र क्रियान्वयाभावेऽपि सहभावस्य दर्शनात्। अस्तु वा त्वष्टुरपि पातृत्वम्। तन्मात्रेण कथं तस्य देवतात्वम्, तस्य त्यज्यमानहविरुद्देश्यत्वात्मकत्वात्। ननु पाने प्रतीयमानोऽपि सम्बन्ध उद्देश्यत्व एव पर्यवस्यतीत्यत्राप्यतुल्यत्वादित्येवोत्तरम्। विध्युद्देशमन्त्रवर्णयोर्बलविषयेऽतुल्यत्वादित्यर्थः। "पात्नीवतं गृह्णाति" इति विध्युद्देशे हि केवलस्य पत्नीवतो देवतात्वं तद्धितादवगम्यते। तदेतन्मन्त्रवर्णतस्त्वष्टुरपि देवतात्वे बाध्येत। त्वष्टृसापेक्षतया पत्नीवतो देवतात्वे तद्धितानुपपत्तिः। न हि मन्त्रवर्णेन तद्धितस्य बाधो युज्यते, मन्त्रवर्णस्य शाब्दविधया देवतात्वरूपेण त्वष्टृभिधायकत्वाभावेन पानवत्स्वत्कल्पकतया देवतावाचितद्धितापेक्षया दुर्बलत्वात्। अदेवताभूतस्यापि त्वष्टुर्मन्त्रे उपादानन्तु स्तुत्यर्थं भविष्यति 'महानुभावेन त्वष्ट्रा सेव्यमानः पत्नीवानग्निः' इति। तैत्तिरीयशाखायाम् "तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते" इति वचनं मन्त्रोपात्तत्वष्टृसहभावोपपादनार्थत्वादर्थवादमात्रमिति दिक्॥

इति चतुर्दशं त्वष्ट्रधिकरणम्॥ १४॥

( अन्तरागर्भिण्या तृतीयमधिकरणम् )

१५

अस्त्यस्मिन्नेव पात्नीवते याज्यामन्त्रः "ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इति। 'आ एभिः' इति च्छेदः। हे अग्ने एभिर्वक्ष्यमाणैस्त्रयस्त्रिंशद्देवैः सरथं एकरथं यथा तथा अर्वाङ् समीपे आयाहि। तवाश्वा हि यतः विभवः विविधरूपग्रहणे समर्थाः। अतो नानारथं वा आयाहि। पत्नीवतः त्रिंशतं त्रींश्च देवान्। अनुष्वधं स्वधा अन्नं सोमः, तमन्नमभिलक्ष्य तदर्थम् आवह प्रापय। ततो मादयस्व तर्पय इति मन्त्रार्थः। अत्राग्नेर्मादयितृत्वमवगतम्, न तृप्तिः। पत्नीवता तु त्रयस्त्रिंशद्देवाना तृप्तिरवगतेति तेषामेव देवतात्वमवगतम्। "अग्ना ३ इ पत्नीवा३ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इति मन्त्रे तु पत्नीवतोऽग्नेर्देवतात्वमवगतम्। पत्नीवान् पत्नीवन्तश्च देवता अस्य पात्नीवत इति कृतैकशेषबहुवचनान्ततद्धितेन तदुभयेषामपि देवतात्वमविरुद्धम्। विद्ध्युद्देशविरोधात्त्वष्टुर्देवतात्वाभावेऽपि त्रयस्त्रिंशद्देवानां तदविरोधात्तद्देवतात्वम-

धीनां तदेकोपायकत्वात् । प्रकृते च मानग्रहणादिमन्त्राणा सर्वप्रदानसाधारण्येन विधानाभावादनैन्द्रप्रदानीयसोममानादेरुपायान्तरेणापि स्मरणसम्भवाच्च मन्त्रबलान्न सङ्कोच इति वैषम्यम् । नन्वनैन्द्रप्रदानानां समानविधानत्वे षोडशिनि 'अनुष्टुप्छन्दस इति भक्षमन्त्र नमति' इति विरोध इत्यत आह—छन्द प्रतिषेधः सर्वगामित्वादिति । प्रात. सवनिकसवनमुखीयैन्द्रप्रदानीयशेषभक्षणमन्त्रस्य 'गायत्रच्छन्दस ' इति घटितस्य षोडशिनि प्रतिषेध. निवृत्ति. भवति, तृतीयसवनस्य 'जगतीच्छन्दसः' इति मन्त्रान्तरस्य कृत्स्नतृतीयसवनगामित्वात् षोडशिनश्च तृतीयसवनस्थत्वात् । अतस्तार्तीयसवनिकमन्त्रविशेषे ऊहविधानमेतत्, न तु प्रात.सवनिकसवनमुखीयैन्द्रप्रदानत प्राप्तमन्त्रे, येनैतदूहवचनमैन्द्रप्रदानस्य तस्य प्रकृतित्वमितरेषा च प्रदानाना विकृतित्व गमयेत् । समानविधानत्वेऽपि तार्तीयसवनिकमन्त्रे ऊहवचनस्योपपन्नत्वात् । ततश्च ऐन्द्रानैन्द्रप्रदानाना सर्वेषामपि समानविधानत्वान्न प्रकृतिविकृतिभाव इत्यनैन्द्रप्रदानेषूहविरोधात् 'इन्द्रपीतस्य' इत्यस्य चासमवायादमन्त्रकमेव भक्षणमिति प्रथमपक्ष एव स्थित. ॥

इति सप्तदशमनैन्द्राणाममन्त्रकभक्षाधिकरणम् ॥ १७ ॥

१८

एवं स्थित इद चिन्त्यते । अस्ति ज्योतिष्टोमे ऐन्द्राग्नो ग्रह. "ऐन्द्राग्नं गृह्णाति" इति । तस्मिन् भक्ष्यमाणे 'इन्द्रपीतस्य' इति भवति न वा ? इति सशये पूर्वपक्षयति—

**ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ३७ ॥**

तु प्रत्यवस्थाने । अस्त्वनैन्द्राणा मैत्रावरुणादीनाममन्त्रकं भक्षणम् । ऐन्द्राग्ने तु भक्ष्यमाणे 'इन्द्रपीतस्य' इति स्यात् । कुतः ? लिङ्गभावात् 'इन्द्रपीतस्य' इत्यस्य इन्द्राग्निपीतेऽपि प्रतिपादनसामर्थ्यसत्त्वात् इन्द्राग्निपीते इन्द्रपीतत्वस्यापि सत्त्वात् । नन्वाग्नेयशब्देनाग्नीषोमीयस्यापि व्यपदेशः स्यादिति चेत्सत्यम्, ऐन्द्राग्नग्रहयजौ समुदितवेषेण इन्द्राग्न्योर्देवतात्वान्मिश्रोद्देशेन दीयते सोमः । मिश्राभ्याञ्च स्वीक्रियते प्रत्येक तूभाभ्या पीयते, क्रियास्वाभाव्येन पानस्य प्रत्येकं परिसमाप्तेः । अग्नीषोमीयपुरोडाशे तु न देवताकर्तृकं भक्षण श्रुतमस्ति । दानस्वीकारौ तु समुदितयोरेव सम्भवतः । तस्मादैन्द्राग्नभक्षणे 'इन्द्रपीतस्य' इत्यस्ति मन्त्रः ॥

वादिग्रहयजिवन्न सोमयागाभ्यासरूपं । किन्तु "सोमस्याग्ने वीहीत्यनुयजति" इति वाक्यान्तरविहितत्वात्कर्मान्तरं सोमयागाङ्गतया विधीयत इति सङ्कर्षकाण्डे 'अनुयजतीत्यनुवषट्कारश्चोद्यते' इति प्रथमाधिकरणे वक्ष्यते । तत्र प्रकृतिभूतैन्द्रप्रदानाङ्गभूतानुवषट्कारदेवता न भक्षण उपलक्षणमर्हति, प्रकृतावूहाभावेन[1] मन्त्राभावात् । एवञ्च विकृतिभूतानैन्द्रप्रदानाङ्गभूतानुवषट्कारभक्षणेऽपि मन्त्रस्य न प्राप्तिः । यथा "व्रीहीणां मेधः" इत्यस्य मन्त्रस्य प्रकृतौ यवेष्वभावान्न विकृतावपि यवेषु प्राप्तिस्तद्वत् । वैकृताङ्गदेवतायाः प्राकृतप्रधानकार्यापत्त्यभावाच्च । तस्माद्विकृतावपि नानुवषट्कारदेवतोपलक्षणीया ॥

इति षोडशमनुवषट्काराधिकरणम् ॥ १६ ॥

( अन्तरागर्भिण्या पञ्चममधिकरणम् )

१७

तदेवं द्वितीयः पूर्वपक्षः सप्रपञ्चमुपवर्णितः । अथ तं निराकुर्वन् प्रथमपक्षो प्रत्यवतिष्ठते—

**[2]छन्दः प्रतिषेधस्तु सर्वगामित्वात् ॥ ३६ ॥**

तुः प्रत्यवस्थाने । ऐन्द्रानैन्द्रप्रदानानां समानविधानत्वमेवास्तु । ततश्चानैन्द्रप्रदानेषु कथं यथादेवतमूहः, प्रकृतित्वात् । इत्थम्भावाकाङ्क्षाया धर्मान्वयः । सा च नैन्द्रयजित्वेन, "सोमेन यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति सामान्यरूपेणैव विधानात् । सर्वेषु प्रदानेष्वेकस्यैव यागस्याभ्यस्यमानत्वात् । न च प्रदानानां फले विधिरस्ति, येन तेषां प्रत्येकमित्थम्भावाकाङ्क्षा स्यात्, प्रत्येकं चैन्द्रप्रदानेषु धर्मान्वयः स्यात् । यजिरूपेण सर्वेषामपि प्रदानानां विधानसत्त्वान्न प्रकृतिविकृतिभावः । न च सोममानग्रहणादिमन्त्रवशादैन्द्रप्रदानविषयत्वेनावगतस्य सोमस्याभिषवादिधर्माम्नानादैन्द्रप्रदानमेव प्रकृतिरिति वाच्यम् । मानग्रहणादिमन्त्राणां सोमद्रव्यं प्रत्यङ्गभूतत्वेन तदनुरोधेन सोमस्यैन्द्रप्रदानमात्रे सङ्कोचस्यायुक्तत्वात्, सोमद्रव्यस्योत्पत्तिशिष्टस्योत्पन्नशिष्टमन्त्रापेक्षया प्रबलत्वाच्च । क्रतुविधीनान्तु गुणभूताहवनीयाद्यनुसारेणाहिताग्निविषये सङ्कोचो युज्यते, "यदाहवनीये जुह्वति" "यद्गार्हपत्य आज्यमधिश्रयन्ति सम्पत्नीर्याजयन्ति" इत्यादिविधिभिराहवनीयादीनां होमाद्यर्थतया विधानेन क्रतुवि-

1. विरोधेन. क, ग, घ, मु पा. 2. छन्दोनिषेधस्तु.

वादिग्रहयजिवन्न सोमयागाभ्यासरूप'। किन्तु "सोमस्याग्ने वीहोत्यनुयजति" इति वाक्यान्तरविहितत्वात्कर्मान्तर सोमयागाङ्गतया विधीयत इति सङ्कर्षकाण्डे 'अनुयज तीत्यनुवषट्कारश्चोद्यते' इति प्रथमाधिकरणे वक्ष्यते। तत्र प्रकृतिभूतैन्द्रप्रदानाङ्गभूता- नुवषट्कारदेवता न भक्षण उपलक्षणमर्हति, प्रकृतावूहाभावेन[1] मन्त्राभावात्। एवञ्च विकृतिभूतानैन्द्रप्रदानाङ्गभूतानुवषट्कारभक्षणेऽपि मन्त्रस्य न प्राप्ति। यथा "व्रीहीणा मेध" इत्यस्य मन्त्रस्य प्रकृतौ यवेष्वभावान्न विकृतावपि यवेषु प्राप्तिस्तद्वत्। वैकृ- ताङ्गदेवतायाः प्राकृतप्रधानकार्यापत्त्यभावाच्च। तस्माद्विकृतावपि नानुवषट्कारदेव- तोपलक्षणीया॥

इति षोडशमनुवषट्काराधिकरणम्॥ १६॥

( अन्तरागर्भिण्या पञ्चममधिकरणम् )

१७

तदेवं द्वितीयः पूर्वपक्षः सप्रपञ्चमुपवर्णित। अथ तं निराकुर्वन् प्रथमपक्षो प्रत्यवतिष्ठते—

**[2]छन्दः प्रतिषेधस्तु सर्वगामित्वात्॥ ३६॥**

तुः प्रत्यवस्थाने। ऐन्द्रानैन्द्रप्रदानाना समानविधानत्वमेवास्तु। ततश्चानैन्द्रप्र- दानेषु कथ यथादेवतमूहः, प्रकृतित्वात्। इत्थम्भावाकाङ्क्षाया धर्मान्वय.। सा च नैन्द्रयजित्वेन, "सोमेन यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति सामान्यरूपे- णैव विधानात्। सर्वेषु प्रदानेष्वेकस्यैव यागस्याभ्यस्यमानत्वात्। न च प्रदानाना फले विधिरस्ति, येन तेषां प्रत्येकमित्थम्भावाकाङ्क्षा स्यात्, प्रत्येक चैन्द्रप्रदानेषु धर्मान्वयः स्यात्। यजिरूपेण सर्वेषामपि प्रदानाना विधानसत्त्वान्न प्रकृतिविकृतिभाव.। न च सोममानग्रहणादिमन्त्रवशादैन्द्रप्रदानविषयत्वेनावगतस्य सोमस्याभिषवादिधर्मो- म्नानादैन्द्रप्रदानमेव प्रकृतिरिति वाच्यम्। मानग्रहणादिमन्त्राणा सोमद्रव्यं प्रत्यङ्गभूत- त्वेन तदनुरोधेन सोमस्यैन्द्रप्रदानमात्रे सङ्कोचस्यायुक्तत्वात्, सोमद्रव्यस्योत्पत्तिशिष्ट- स्योत्पन्नशिष्टमन्त्रापेक्षया प्रबलत्वाच्च। क्रतुविधीनान्तु गुणभूताहवनीयाद्यनुसारेणाहि- ताग्निविषये सङ्कोचो युज्यते, "यदाहवनीये जुहोति" "यद्गार्हपत्य आज्यमधिश्रयन्ति सम्पत्नीर्याजयन्ति" इत्यादिविधिभिराहवनीयादीना होमाद्यर्थतया विधानेन क्रतुवि-

1. विरोधेन. क, ग, घ, मु. पा. 2. छन्दोनिषेधस्तु.

प्रदाने। कुत ? एकच्छन्दसः अभावात्—केवलगायत्रीच्छन्दस्कप्रदानस्याभावात्। वेदत्रयसाध्ये ज्योतिष्टोमे सर्वेष्वपि प्रदानेषु छन्दोन्तराणामवश्यम्भावात् सर्वप्रदानसाधारणाङ्गभूतप्रातरनुवाकादौ छन्दोन्तराणा नियतत्वाच्च। एतेन 'केवलगायत्रे बृहस्पतिसवादौ गायत्रच्छन्दस इति सावकाशम्' इति निरस्तम्। एवञ्च छन्दोन्तरसहितस्यैवान्यपदार्थसम्बन्धितया नित्यसापेक्षत्वान्नासामर्थ्यम्। तस्माच्छन्दोन्तरसत्त्वेऽपि 'गायत्रच्छन्दस' इति भवति मन्त्र ॥

इत्यूनविंश गायत्रीच्छन्दस्केऽपि भक्षमन्त्रविनियोगाधिकरणम् ॥१९॥

२०

तदेवमनैन्द्रप्रदानेष्वमन्त्रकं भक्षणमिति प्रथमपूर्वपक्ष. स्थित'। अथ तृतीयपक्षेण सिद्धान्तयति—

**र्वेषां [1]त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ ४१ ॥**

तुरवधारणे। सर्वेषाम् ऐन्द्रानैन्द्रप्रदानानां शेषभक्षणे ऐकमन्त्र्यमेव ऐतिशायनाचार्यस्याभिमतम्। एकरूपः अविकृतो मन्त्रः येषु तेषा भावः ऐकमन्त्र्यम्। अनैन्द्रप्रदानेष्वपि 'इन्द्रपीतस्य' इत्यविकृत एव भवतीति यावत्। कुतः ? सवनाधिकारो हि—सवनमधिकरोति विशिनष्टीति सवनाधिकार। इन्द्रेण पीत सोमो यस्मिन्निति बहुव्रीहिणा 'प्रात सवनस्य' इत्यस्य विशेषणम् 'इन्द्रपीतस्य' इत्येतदिति यावत्। न त्वेतत्तृतीयासमासेन सोमविशेषण भवितुमर्हति। कुत ? भक्तिपानत्वात्—भक्त्या उपचारेणाभिधीयमान पानं यस्य सोमस्य तस्य भाव भक्तिपानत्वम्। यो हि सामांशो हुतः न तस्य भक्षणप्रसक्तिः। यस्तु हुतशिष्टश्चमसस्थ सोम' स तु नेन्द्रपीत, अनुपलब्धिप्रसङ्गात्। अत. पिबतिना स्वीकारो लक्षणीयः। ततश्च "सोमदेव ते मतिविद." इति सम्बुद्ध्यन्तेन सोमशब्देन 'ते' इति प्रत्यक्षतया च निर्दिष्टस्य हुतशिष्टसोमस्य तावत् 'इन्द्रपीतस्य' इति विशेषणेन भवितव्यम्। न च हुतशिष्ट सोम इन्द्रस्वीकृत, उन्नयनादिसमये सङ्कल्पितस्य होम्यतदितरसमुदायस्यैवेन्द्राय दत्तत्वाद् अदत्तस्य च तदेकदेशस्य स्वीकारायोगात्। तथा च 'इन्द्र-

1. त्वेकमन्त्रत्वम्

अथ सिद्धान्तयति—

एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ३८ ॥

वाशब्द एवार्थे। एकशब्दः कैवल्ये। 'एके मुख्यान्यकेवलाः' इति कोशः। अन्तरशब्दो भेदवाची। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इति कोशः। एकस्मिन् केवले इन्द्रप्रदानीयशेषभक्षण एव 'इन्द्रपीतस्य' इति मन्त्रः, न त्वैन्द्राग्नभक्षणेऽपि। कुतः? देवतान्तरात् अग्निसापेक्षस्यैन्द्रस्य केवलेन्द्रादन्यत्वात्। विभागवत् विभागश्चतुर्धाकरणं, यथा केवलाग्निदेवत्ये पुरोडाशे भवति न त्वग्नीषोमीये तद्वत्। अयमाशयः—हुत एव सोम इन्द्रपीतः, "न हि देवा अहुतस्याश्नन्ति" इति लिङ्गात्। न तस्य भक्षणप्रसक्तिः। हुतशिष्टस्तु नेन्द्रपीतः, तस्य प्रत्यक्षमुपलभ्यमानत्वात्। अतः पीतशब्देन स्वीकारो लक्ष्यते। शक्यते हि हुताहुतसमुदाय इन्द्रेण स्वीकृतत्वात् '[1]इन्द्रपीतः' इति वक्तुम्। दानञ्च तद्धितानुसारेण मिश्रयोरेवेन्द्राग्न्योरिति न तत्र 'इन्द्रपीतस्य' इति मन्त्रो भवतीत्यमन्त्रकमेवैन्द्राग्नभक्षणम् ॥

इत्यष्टादशमैन्द्राग्नभक्षे मन्त्राभावाधिकरणम् ॥ १८ ॥

१९

तत्रैव भक्षमन्त्रे 'गायत्रच्छन्दसः' इति सोमविशेषणं श्रुतम्। गायत्र्येव गायत्रं छन्दो यस्य स्तोत्रशस्त्रादिविषये इति बहुव्रीहिः। किमयं भक्षमन्त्रः केवलगायत्रीच्छन्दस्के प्रदाने भवति? उत च्छन्दोन्तरसहितगायत्रीच्छन्दस्केऽपि प्रदाने? इति संशये, पूर्वपक्षयति—

छन्दश्च देवतावत् ॥ ३९ ॥

यथा 'इन्द्रपीतस्य' इत्यत्र केवल इन्द्रो गृह्यते न त्वग्न्यादिसहितस्तथा गायत्रच्छन्दोऽपि केवलमेव समासवशाद्गृह्यते न तु च्छन्दोन्तरसहितम् ॥

अथ सिद्धान्तयति—

सर्वेषु वाभावादेकच्छन्दसः ॥ ४० ॥

वाशब्द एवार्थे। छन्दोन्तरसहितगायत्रीच्छन्दस्केषु केवलगायत्रीच्छन्दस्केषु च सर्वेष्वेव प्रदानेषु 'गायत्रच्छन्दसः' इति भवति, न तु केवलगायत्रीच्छन्दस्क एव

1. इन्द्रदत्तः क.

इति विशेषणस्य पूर्वनिपातविधिना पूर्वपदार्थस्य चित्रत्वस्योत्तरपदार्थविशेषणताया अवगमाच्च। नाद्य; तर्हि चित्रत्वविशिष्टविशेष्यवाचकोत्तरपदमात्रस्यान्यपदार्थलक्षकतया पदद्वयलक्षणाव्याघातात्। अस्तूत्तरपदस्यैवान्यपदार्थलक्षकतेति चेत्तर्हि गोपदेनैव गोस्वामिलक्षणया गवि चित्रत्वान्वयो न स्यात् पदार्थैकदेशत्वात्। न च शक्यार्थयोरन्वयबोधानन्तरं लक्षणाभ्युपगमात् चित्रपदस्य तात्पर्यग्राहकतया गोपदेनैव चित्रगोस्वामिलक्षकत्वाद्वा न दोष इति वाच्यम्। एवमपि 'प्राप्तोदको ग्राम.' इत्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया दुर्वारत्वात्। तथाहि—किं तत्र प्राप्तिकर्तृभूतमुदकमिति बोधोत्तरं तत्सम्बन्धिग्रामलक्षणा ? उत उदककर्तृका प्राप्तिरिति बोधोत्तरं तत्कर्मग्रामलक्षणा ? नाद्य', एवमप्युदककर्तृकप्राप्तिकर्म ग्राम इति विवक्षितार्थानिर्वाहात्। न द्वितीय', प्रत्ययार्थप्राधान्यस्यान्यत्र क्लृप्तस्य भङ्गापत्त्या 'सत्त्वप्रधानानि नामानि' इति निरुक्तवचनविरोधेन च तथा बोधासम्भवात्। 'घटो नित्य'' इत्यतो नित्याभिन्नघटत्ववानिति बोधवारणायाभेदससर्गेण नामार्थप्रकारबोधे विशेष्यतावच्छिन्ननामजन्योपस्थितेर्हेतुतया कर्तरि उदकाभेदान्वयासम्भवाच्च। न चोदकपदेनोदककर्तृकप्राप्तिकर्मीभूतो लक्ष्यते प्राप्तपदञ्च तत्र तात्पर्यग्राहकमिति वाच्यम्। प्राप्तपदमेव तथा लक्षकमुदकपद तात्पर्यग्राहकमित्यपि वक्तुं शक्यत्वेन विनिगमनाविरहात्। एवम् 'उद्धृतौदना स्थाली' 'ऊढरथोऽनड्वान्' इत्यादावप्यषष्ठ्यर्थबहुव्रीहावूह्यम्। तथा च 'प्राप्तोदक' इत्यादौ प्राप्तादिपदेभ्यो विशेषणविशेष्यभावव्यत्यासेन तद्विशिष्टान्यपदार्थकर्माद्युपस्थिति', 'चित्रगु' इत्यादौ यस्येति प्रकृतिप्रत्ययार्थव्यत्यासेन तद्विशिष्टान्यपदार्थोपस्थितिश्च समुदायशक्तिसाध्यैव। न च व्याससमासयोरेकार्थत्वाय चित्राणा गवामयमिति विग्रहोऽस्त्विति वाच्यम्। एवं विग्रहेऽपि षष्ठ्यर्थसम्बन्धस्य भेदेनायमित्यत्रान्वयेऽपि चित्रगोसम्बन्धवानिति सम्बन्धनिष्ठप्रकारतानिरूपितभेदससर्गीयविषयताशाली बोध , समासे तु चित्रगववानिति चित्रगोनिष्ठप्रकारतानिरूपितसम्बन्धिनिष्ठविशेष्यताशाली बोध इति भेदस्य तदवस्थत्वात्। अषष्ठ्यर्थबहुव्रीहौ प्राप्तस्योदकस्यायमिति विग्रहेऽप्युदककर्तृकप्राप्तिकर्म ग्राम इत्यादिबोधस्य समासे दुरुपपादत्वाच्च। तस्माद्व्याससमासयोरेकार्थत्वनियमाभावात्समुदायशक्तितः समासे विशिष्टार्थबोधो विग्रहवाक्याद्भिन्नलक्षणोऽभ्युपेयः। नन्वेवमपि स्वघटकपदघटितवाक्यदृष्टार्थमात्रविषयतत्पुरुषीयशक्तिग्रहापेक्षया बहुव्रीहिसमासीय-

पीतस्य' इत्यनेन ऐन्द्रसमुदायावयवो हुतशिष्टः सोमांशो लक्षणीय' स्यात् । एव चेन्द्रपीतपदे तृतीयासमासे इन्द्रशब्दस्येन्द्रकर्तृके पीतशब्दस्य स्वीकृतावयवे चेति पूर्वोत्तरपदयोर्द्वयोरपि लक्षणाप्रसङ्गाद्बहुव्रीहिरेवाश्रयणीयः । इन्द्रेण पीत. सोमो यस्मिन्सवने तस्य य सोम त भक्षयामीत्यन्वय. । न च बहुव्रीहावपि इन्द्रपदस्येन्द्रकर्तृके पीतशब्दस्य स्वीकृतेऽवयविनि सोमे च लक्षणा, अवयविन सोमस्य पीतपदाच्छक्त्यानुपस्थितेरिति पूर्वोत्तरपदयोर्लक्षणा तुल्येति वाच्यम् । अवयवस्वीकारस्यावयविस्वीकारापेक्षत्वेन विलम्बोपस्थितिकतया वैषम्यात् । वस्तु तस्तु, पीतपदे 'आदिकर्मणि क्तः कर्तरि च' इति क्तप्रत्ययः । ततश्च इन्द्र प्रथम पाता यस्मिन्सवने इत्यर्थलाभान्न पूर्वपदे लक्षणेति तृतीयासमासाद्वैषम्यम् । प्रकरणाच्च पान सोमविषयमिति गम्यते । पीतशब्दस्याहिताग्न्यादित्वात्परनिपात । न च बहुव्रीहावपि पदद्वयस्यान्यपदार्थे लक्षणा दोष इति वाच्यम् । बहुव्रीहावन्यपदार्थस्य समासशक्यत्वाद् अन्वयतात्पर्यानुपपत्तिप्रतिसन्धानं विना शाब्दबोधस्य तत्रानुभवसिद्धत्वात् 'अनेकमन्यपदार्थे' इत्यनुशासनबलाच्च । न चैव सति 'चित्रगु' इत्यत्र चित्रपदार्थस्य गोपदार्थस्य चान्यपदार्थे विशेषणतया भानं न स्यादिति वाच्यम् । अवयवशक्तिसहकृतसमुदायशक्त्या वर्तिपदार्थविशिष्टान्यपदार्थस्य वाच्यत्वाभ्युपगमात् । 'चित्रगु' 'पीताम्बर.' 'प्राप्तोदको ग्राम' 'उद्धृतौदना स्थाली' इत्यादाववयवार्थविशिष्टेऽन्यपदार्थे नियततात्पर्यवचनानुरोधाच्च न लक्षणा युक्ता । यदि ह्येते शब्दा लाक्षणिकास्तर्हि गङ्गाशब्दस्य तीरादौ लाक्षणिकस्य प्रवाहविशेषे मुख्येऽपि यथा प्रयोगस्तथा चित्रासु गोषु, पीतेऽम्बरे, प्राप्त उदके, उद्धृत ओदने, इत्याद्यवयवार्थे मुख्येऽपि केवले 'चित्रगु' 'पीताम्बर.' 'प्राप्तोदक.' 'उद्धृतौदन.' इत्यादिप्रयोग स्यात् । निरूढलक्षणयातिप्रसङ्गपरिहारे तु समुदायशक्तिरेवाभ्युपगता भवति, निरूढलक्षणाया. शक्तेश्चानतिभेदात् । उक्तञ्च वार्तिके—'निरूढालक्षणा. काश्चित्सामर्थ्यादभिधानवत्' इति, 'इह केषुचिदर्थेषु शक्तिवदेव लक्षणाप्यनादिकालवृत्तित्वेन निरूढा' इति च । किञ्च 'चित्रगु.' इत्यत्र वर्तिपदद्वयस्यान्यपदार्थलक्षणां वदन् प्रष्टव्य —किं पूर्वपदस्योत्तरपदार्थान्वयमुखेनान्यपदार्थे लक्षणा ? उत तन्नैरपेक्ष्येण ? नान्त्य., परस्परनिरपेक्षत्वेनासामर्थ्यात्समासानुपपत्तेः, चित्रत्वस्य गोविशेषणतयैव बोधस्यानुभवसिद्धत्वाच्च, चित्रत्वस्यान्यपदार्थेऽनुपलब्धिपराहतत्वाच्च । 'सप्तमी विशेषणे बहुव्रीहौ'

# तृतीयः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थाने ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वयो पादयोः श्रुतिलिङ्गविनियोगौ निरूपितौ । सम्प्रति तदुभयसापेक्षवाक्यादिविनियोगस्तृतीयपादे निरूप्यते । वाक्यं नाम यथाश्रुतार्थस्य पदस्य संसर्गविधया लक्षणया वार्थान्तरकल्पनानुकूलं पदान्तरसमभिव्याहारः । "धेनुर्दक्षिणा" इत्यादौ या दक्षिणा सा धेनुरित्येवमुद्देश्यविधेयभावादेः "उच्चैर्ऋचा क्रियते" इत्यादौ करणत्वादेश्चोच्चैस्त्वादिगतस्य संसर्गमर्यादया 'प्रयाजशेषेण हवींष्यभिघारयेत्" इत्यादौ प्रयाजशेषं हविःषु क्षारयेदित्येव कर्मत्वादेश्च लक्षणया भानात् । पदसमभिव्याहारलक्षणवाक्यस्य च योग्यताज्ञानं विना उक्तविधार्थान्तरकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकता, धेन्वा दक्षिणाकार्यं सम्पादयेदिति श्रुतिकल्पकत्वञ्च । यद्यपि श्रुतस्यैव धेन्वादिपदस्य करणत्वादिलक्षकतया न[1] तद्वाचकपदश्रुतिरूपश्रुतिकल्पकता, तथापि करणत्वादिरूपतात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनाच्छ्रुतिकल्पकता । ततश्च लिङ्गश्रुतिकल्पनामुखेन वाक्यमङ्गत्वे प्रमाणम् । तदिह ज्योतिष्टोमे तावत् "प्रजापतिरकामयत प्रजाः सृजेयेति, स तपोऽतप्यत, तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः" इत्युपक्रम्य श्रूयते "उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना" इति । किमत्र ऋचा यत्क्रियते तदुच्चैरित्येवमृगादिशब्दा मन्त्रपरा ? उत वेदपरा ? वेदानाञ्च मन्त्रवत्क्रियां प्रति करणत्वाभावात् 'क्रियते' इति करोतिना 'ऋग्वेदेन विधीयते' इत्येव विधानं लक्ष्यते । कोटिद्वयेऽप्युच्चैस्त्वादेः शब्दधर्मस्य क्रियायां सन्निवेशासम्भवादानर्थक्यतदङ्गन्यायेन तदङ्गमन्त्रेषु निवेशः । तत्र पूर्वपक्षयति—

---

1. नञ् एषोऽस्माभिः कल्पितः, मातृकासु क्वचिदपि न दृश्यते. मु. पु.

शक्तिग्रहस्य स्वघटकपदघटितवाक्यदृष्टार्थातिरिक्तबहिर्भूतान्यपदार्थविषयकत्वेन बहिरङ्गतया कथम् 'इन्द्रपीतस्य' एति बहुव्रीहिरिति चेन्न, इन्द्रपदस्य तत्कर्तृके पीतपदस्य च स्वीकृते लक्षणापत्त्या बहुव्रीहेरेवात्र बहिरङ्गस्याप्याश्रयणात् । तस्मादनैन्द्रप्रदानेष्वपि 'इन्द्रपीतस्य' इत्यविकृत एव भक्षमन्त्र इति सिद्धम् ॥

इतीन्द्रपीताधिकरणसिद्धान्तः ॥

( भक्षपेटिका समाप्ता )

इति तृतीयाध्यायस्य द्वितीयः पादः ॥



र्थवादानुसरणं युज्यते, विरोधाभावात्। घृतनियमे हि न विध्युद्देशो विरुध्यते। अर्थवादोऽप्यनुगृह्यते। घृततैलाद्यनियमे तु यद्यपि विध्युद्देशो न विरुध्यते अर्थवादस्तु विरुध्यते, सम्भवति च घृतनियमाद्गुणभूतस्याप्यर्थवादस्याविरोधे सति न घृततैलाद्याश्रयण युक्तम्। अत. कांस्यभोजिन्यायेन (इ) तत्र विध्युद्देशस्य प्रधानस्यापि गुणभूतार्थवादानुसारेण घृते सङ्कोचः। 'अधिकश्च बहुगुण. साधारणे विरोधात्कांस्यभोजिवदमुख्येऽपि' इति द्वादशाधिकरणन्यायात्। प्रकृते त्वर्थवादानुसारेण विध्युद्देशे ऋगादिशब्दानामृगादिबहुलवेदलक्षणया मुख्यार्थातिलङ्घनाद्विरोधान्न तदनुसरणमिति वैषम्यम्। तस्मादुच्चैस्त्वादिविधिषु ऋगादिशब्दा मन्त्रपरा., न तु वेदपराः॥

अथ सिद्धान्तयति—

## वेदो वा प्रायदर्शनात् ॥ २ ॥

वाशब्द एवार्थे। वेद इति सामान्याभिप्रायमेकवचनम्। उच्चैस्त्वादिविधिष्वृगादिशब्दैर्वेदा एव लक्षणया विवक्षिताः, न त्वृगादिमन्त्रा। कुतः? प्रायदर्शनात्। प्रपूर्वादिण्धातोर्भावे घञि प्रायशब्द उपसर्गवशादुपक्रमवाची। दृशिश्च श्रवणे। उपक्रमे वेदशब्दश्रवणादित्यर्थ.। अङ्गीकुर्मः प्रधान मुख्यादपि बलीय इति। तत्तु लब्धात्मकमेव तथा। प्रकृते तु प्रधानस्य लब्धात्मकत्वाभावान्न मुख्यबाधकता। तथाहि—ऋगादिशब्दसंयुक्तविध्युद्देशजन्यं ज्ञान वेदशब्दसयुक्तमर्थवादमन्यथयतीति वदन् प्रष्टव्य.—किं विध्युद्देशजन्य ज्ञानमर्थवादैकवाक्यताप्रतिसन्धानात्प्राचीनमिह विवक्षितम्? उत तत्कालीनम्? नाद्य.; केवलविध्युद्देशश्रवणदशायामर्थवादस्फूर्तेरेवाभावेन तज्जन्यज्ञानस्यार्थवादगौणतापादनाक्षमत्वात्। न द्वितीयः, न हि तद्दशाया विध्युद्देशेन ऋगादिमन्त्रविषयज्ञानं जनयितु शक्यम्, विध्युद्देशस्यार्थवादाननुगुणार्थकत्वे तदेकवाक्यताया अनिर्वाहात्। अतो विध्युद्देशस्य नास्ति लब्धात्मकता। अर्थवादस्य तु प्राथमिकत्वेनासञ्जातविरोधितया स्वार्थपरत्वादस्ति लब्धात्मकता। सुत्याकालस्तु य इष्ट्यादिवाक्यलब्धात्मकत्वादङ्गभूतदीक्षणीयाकाल बाधत इति युक्तम्। एतेनोपक्रमगतस्य 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायात् (कि) परेण बाध इति प्रत्युक्तम्। परस्य लब्धात्मकत्व एव तन्न्यायप्रवृत्ते.। प्रकृते च विधेः स्तुतिसापेक्षत्वेनार्थवादैकवाक्यतया तस्य ऋगादिमन्त्रपरत्वेऽर्थवादाननुगुणत्वेनैकवाक्यतानुपपत्त्या लब्धात्मकत्वाभावात्। तदुक्तम्—

## श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥

जातिर्जातमिति पर्याय'। 'जातिर्जात च सामान्यम्' इति कोश । इह ऋगादिमन्त्रगतजातिविशेषा ऋक्त्वादयो विवक्षिता । अधिकार शेषित्वविशेषापरपर्याय प्राधान्यम्। तच्च 'दम्पत्यो' सहाधिकार' इत्यादौ कर्मफलभोक्तृत्वलक्षणम्। इह तु तात्पर्यविषयत्व विवक्षितम्। ततश्चोच्चैस्त्वादिविधौ ऋगादिशब्दानामेव श्रवणाद्वेदशब्दाश्रवणादृगादिशब्दो जातिपरस्सन्नाकृत्यधिकरणन्यायेनाक्षेपलब्धतदाश्रयमन्त्रपर स्यान्न तु वेदपरः, लक्षणाप्रसङ्गात्। ननूपक्रमगतार्थवादस्थवेदशब्दानुसारेणोपसंहारस्थविधिगतेषु ऋगादिशब्देषु वेदलक्षणाश्रयणीया, न च विनिगमनाविरह, 'मुख्य वा पूर्वचोदनाल्लोकवत्' इति द्वादशिकाधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे मुख्यधर्मानुग्रहस्य वक्ष्यमाणतया तन्न्यायेन प्रकृतेऽपि प्रथमश्रुतार्थवादस्यैवानुसरणीयत्वादिति चेत्—नैतद्युक्तम्, उपक्रमे वेदशब्दस्य वेदयत्यनुष्ठेयार्थमिति व्युत्पत्त्या ऋगादिमन्त्रमात्रेऽप्युपपत्ते मन्त्रब्राह्मणसमुदायस्यैव वेदशब्दार्थत्वे शूद्रस्य मन्त्राध्ययने वेदाध्ययननिषेधस्याप्रवृत्तिप्रसङ्गात्। अस्तु वा वेदशब्दो मन्त्रब्राह्मणसमुदाये मुख्य, तथाप्युपसहारस्थविध्युद्देशानुसारेणोपक्रमगतार्थवादस्थवेदशब्दस्य ऋगादिमन्त्रलक्षकताश्रयण युक्तम्। यत्तु 'मुख्य वा पूर्वचोदनाल्लोकवत्' इति न्यायेन प्रथमश्रुतार्थवादानुसरणमिति, तन्न, तत्र हि सूत्रे पूर्वसूत्राद्विप्रतिषिद्धधर्माणां समवाय इत्यनुवर्तते। तुल्यबलयोर्विरोधो विप्रतिषेध'। ततश्च प्रधानयोर्विरोधे मुख्यानुसरणम्। न त्वङ्गप्रधानयोर्विप्रतिषेधोऽस्ति, प्रधानानुसारित्वादङ्गानामतुल्यबलत्वात्। ततश्च दीक्षणीयासुत्ययोरङ्गप्रधानयोरतुल्यबलत्वादविप्रतिषेधान्मुख्यस्यापि दीक्षणीयाकालस्य पर्वणो य इष्ट्यादिवाक्यप्राप्तस्य एकदीक्षापक्षे प्रधानसुत्याकालेन पर्वणा बाध इति 'अङ्गगुणविरोधे च तादर्थ्यात्' इति तदुत्तराधिकरणे वक्ष्यते। अर्थवादविध्युद्देशयोश्च न तुल्यबलत्वम्, अर्थवादस्य विध्यपेक्षितस्तुतिसमर्पकतया विधिशेषत्वात्। किञ्च विधेरप्राप्तविषयतया स्वतन्त्रत्व ... न्यम्, अर्थवादस्य तु प्राप्तानुवादतया प्राप्तिपरतन्त्रत्वाद्दुर्बलतेति नास्ति त... ।

प्रधानत्वादप्राप्तविषयत्वाच्चोच्चैस्त्वादिविधिगतेषु ऋगादिशब्देषु

अर्थवादस्य तु गुणत्वात्प्राप्तानुवादत्वाच्च तद्गतवेदशब्दे

शर्करा उपदधाति" "तेजो वै घृतम्" इत्यत्र तु. ...

र्थवादानुसरणं युज्यते, विरोधाभावात्। घृतनियमे हि न विध्युद्देशो विरुध्यते। अर्थवादोऽप्यनुगृह्यते। घृततैलाद्यनियमे तु यद्यपि विध्युद्देशो न विरुध्यते अर्थवादस्तु विरुध्यते, सम्भवति च घृतनियमाद्गुणभूतस्याप्यर्थवादस्याविरोधे सति न घृततैलाद्याश्रयण युक्तम्। अत. कास्यभोजिन्यायेन (इ) तत्र विध्युद्देशस्य प्रधानस्यापि गुणभूतार्थवादानुसारेण घृते सङ्कोचः। 'अधिकश्च बहुगुण. साधारणे विरोधात्कास्यभोजिवदमुख्येऽपि' इति द्वादशाधिकरणन्यायात्। प्रकृते त्वर्थवादानुसारेण विध्युद्देशे ऋगादिशब्दानामृगादिबहुलवेदलक्षणया मुख्यार्थातिलङ्घनाद्विरोधान्न तदनुसरणमिति वैषम्यम्। तस्मादुच्चैस्त्वादिविधिषु ऋगादिशब्दा मन्त्रपरा, न तु वेदपराः॥

अथ सिद्धान्तयति—

## वेदो वा प्रायदर्शनात्॥ २॥

वाशब्द एवार्थे। वेद इति सामान्याभिप्रायमेकवचनम्। उच्चैस्त्वादिविधिष्वृगादिशब्दैर्वेदा एव लक्षणया विवक्षिता', न त्वृगादिमन्त्रा। कुतः? प्रायदर्शनात्। प्रपूर्वादिण्धातोर्भावे घञि प्रायशब्द उपसर्गवशादुपक्रमवाची। दृशिश्च श्रवणे। उपक्रमे वेदशब्दश्रवणादित्यर्थ। अङ्गीकुर्मः प्रधान मुख्यादपि बलीय इति। तत्तु लब्धात्मकमेव तथा। प्रकृते तु प्रधानस्य लब्धात्मकत्वाभावान्न मुख्यबाधकता। तथाहि— ऋगादिशब्दसंयुक्तविध्युद्देशजन्यं ज्ञान वेदशब्दसयुक्तमर्थवादमन्यथयतीति वदन् प्रष्टव्यः—किं विध्युद्देशजन्य ज्ञानमर्थवादैकवाक्यताप्रतिसन्धानात्प्राचीनमिह विवक्षितम्? उत तत्कालीनम्? नाद्य.; केवलविध्युद्देशश्रवणदशायामर्थवादस्फूर्तेरेवाभावेन तज्जन्यज्ञानस्यार्थवादगौणतापादनाक्षमत्वात्। न द्वितीय., न हि तद्दशाया विध्युद्देशेन ऋगादिमन्त्रविषयज्ञान जनयितुं शक्यम्, विध्युद्देशस्यार्थवादाननुगुणार्थकत्वे तदेकवाक्यताया अनिर्वाहात्। अतो विध्युद्देशस्य नास्ति लब्धात्मकता। अर्थवादस्य तु प्राथमिकत्वेनासञ्जातविरोधितया स्वार्थपरत्वादस्ति लब्धात्मकता। सुत्याकालस्तु य इष्ट्यादिवाक्यलब्धात्मकत्वादङ्गभूतदीक्षणीयाकाल बाधत इति युक्तम्। एतेनोपक्रमगतस्य 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायात् (कि) परेण बाध इति प्रत्युक्तम्। परस्य लब्धात्मकत्व एव तन्न्यायप्रवृत्ते.। प्रकृते च विधेः स्तुतिसापेक्षत्वेनार्थवादैकवाक्यतया तस्य ऋगादिमन्त्रपरत्वेऽर्थवादाननुगुणत्वेनैकवाक्यतानुपपत्त्या लब्धात्मकत्वाभावात्। तदुक्तम्—

## श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥

जातिर्जातमिति पर्याय.। 'जातिर्जात च सामान्यम्' इति कोश । इह ऋगादिमन्त्रगतजातिविशेषा ऋक्त्वादयो विवक्षिता । अधिकार शेषित्वविशेषापरपर्यायं प्राधान्यम्। तच्च 'दम्पत्योः सहाधिकार' इत्यादौ कर्मफलभोक्तृत्वलक्षणम्। इह तु तात्पर्यविषयत्व विवक्षितम्। ततश्चोच्चैस्त्वादिविधौ ऋगादिशब्दानामेव श्रवणाद्वेदशब्दाश्रवणादृगादिशब्दो जातिपरस्सन्नाकृत्यधिकरणन्यायेनाक्षेपलब्धतदाश्रयमन्त्रपर. स्यान्न तु वेदपर., लक्षणाप्रसङ्गात्। ननूपक्रमगतार्थवादस्थवेदशब्दानुसारेणोपसंहारस्थविधिगतेषु ऋगादिशब्देषु वेदलक्षणाश्रयणीया, न च विनिगमनाविरह, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति द्वादशिकाधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे मुख्यधर्मानुग्रहस्य वक्ष्यमाणतया तन्न्यायेन प्रकृतेऽपि प्रथमश्रुतार्थवादस्यैवानुसरणीयत्वादिति चेत्—नैतद्युक्तम्, उपक्रमे वेदशब्दस्य वेदयत्यनुष्ठेयार्थमिति व्युत्पत्त्या ऋगादिमन्त्रमात्रेऽप्युपपत्ते मन्त्रब्राह्मणसमुदायस्यैव वेदशब्दार्थत्वे शूद्रस्य मन्त्राध्ययने वेदाध्ययननिषेधस्याप्रवृत्तिप्रसङ्गात्। अस्तु वा वेदशब्दो मन्त्रब्राह्मणसमुदाये मुख्य, तथाप्युपसंहारस्थविध्युद्देशानुसारेणोपक्रमगतार्थवादस्थवेदशब्दस्य ऋगादिमन्त्रलक्षकताश्रयणं युक्तम्। यत्तु 'मुख्य वा पूर्वचोदनाल्लोकवत्' इति न्यायेन प्रथमश्रुतार्थवादानुसरणमिति, तन्न, तत्र हि सूत्रे पूर्वसूत्राद्विप्रतिषिद्धधर्माणां समवाय इत्यनुवर्तते। तुल्यबलयोर्विरोधो विप्रतिषेध'। ततश्च प्रधानयोर्विरोधे मुख्यानुसरणम्। न त्वङ्गप्रधानयोर्विप्रतिषेधोऽस्ति, प्रधानानुसारित्वादङ्गानामतुल्यबलत्वात्। ततश्च दीक्षणीयासुत्ययोरङ्गप्रधानयोरतुल्यबलत्वादविप्रतिषेधान्मुख्यस्यापि दीक्षणीयाकालस्य पर्वणो य इष्ट्यादिवाक्यप्राप्तस्य एकदीक्षापक्षे प्रधानसुत्याकालेन पर्वणा बाध इति 'अङ्गगुणविरोधे च तादर्थ्यात्' इति तदुत्तराधिकरणे वक्ष्यते। अर्थवादविध्युद्देशयोश्च न तुल्यबलत्वम्, अर्थवादस्य विध्यपेक्षितस्तुतिसमर्पकतया विधिशेषत्वात्। किञ्च विधेरप्राप्तविषयतया स्वतन्त्रत्वात्प्राबल्यम्; अर्थवादस्य तु प्राप्तानुवादतया प्राप्तिपरतन्त्रत्वाद्दुर्बलतेति नास्ति तयोर्विप्रतिषेध ।

प्रधानत्वादप्राप्तविषयत्वाच्चोच्चैस्त्वादिविधिगतेषु ऋगादिशब्देषु न लक्षणा। अर्थवादस्य तु गुणत्वात्प्राप्तानुवादत्वाच्च तद्गतवेदशब्दे ऋगादिमन्त्रलक्षणा। "अक्ताः शर्करा उपदधाति" "तेजो वै घृतम्" इत्यत्र तूपक्रमस्थास्यापि विध्युद्देशस्योपसंहारगता-

र्थवादानुसरणं युज्यते, विरोधाभावात्। घृतनियमे हि न विध्युद्देशो विरुध्यते। अर्थवादोऽप्यनुगृह्यते। घृततैलाद्यनियमे तु यद्यपि विध्युद्देशो न विरुध्यते अर्थवादस्तु विरुध्यते; सम्भवति च घृतनियमाद्गुणभूतस्याप्यर्थवादस्याविरोधे सति न घृततैलाद्याश्रयण युक्तम्। अत. कांस्यभोजिन्यायेन (इ) तत्र विध्युद्देशस्य प्रधानस्यापि गुणभूतार्थवादानुसारेण घृते सङ्कोच। 'अधिकश्च बहुगुण. साधारणे विरोधात्कांस्यभोजिवदमुख्येऽपि' इति द्वादशाधिकरणन्यायात्। प्रकृते त्वर्थवादानुसारेण विध्युद्देशे ऋगादिशब्दानामृगादिबहुलवेदलक्षणया मुख्यार्थातिलङ्घनाद्विरोधान्न तदनुसरणमिति वैषम्यम्। तस्मादुच्चैस्त्वादिविधिषु ऋगादिशब्दा मन्त्रपरा', न तु वेदपराः॥

अथ सिद्धान्तयति—

## वेदो वा प्रायदर्शनात्॥ २॥

वाशब्द एवार्थे। वेद इति सामान्याभिप्रायमेकवचनम्। उच्चैस्त्वादिविधिष्वृगादिशब्दैर्वेदा एव लक्षणया विवक्षिता', न त्वृगादिमन्त्रा। कुतः? प्रायदर्शनात्। प्रपूर्वादिण्धातोर्भावे घञि प्रायशब्द उपसर्गवशादुपक्रमवाची। दृशिश्च श्रवणे। उपक्रमे वेदशब्दश्रवणादित्यर्थ। अङ्गीकुर्मः प्रधान मुख्यादपि बलीय इति। तत्तु लब्धात्मकमेव तथा। प्रकृते तु प्रधानस्य लब्धात्मकत्वाभावान्न मुख्यबाधकता। तथाहि—ऋगादिशब्दसंयुक्तविध्युद्देशजन्यं ज्ञान वेदशब्दसंयुक्तमर्थवादमन्यथयतीति वदन् प्रष्टव्य.–किं विध्युद्देशजन्य ज्ञानमर्थवादैकवाक्यताप्रतिसन्धानात्प्राचीनमिह विवक्षितम्? उत तत्कालीनम्? नाद्यः; केवलविध्युद्देशश्रवणदशायामर्थवादस्फूर्तेरेवाभावेन तज्जन्यज्ञानस्यार्थवादगौणतापादनाक्षमत्वात्। न द्वितीयः, न हि तद्दशाया विध्युद्देशेन ऋगादिमन्त्रविषयज्ञानं जनयितु शक्यम्, विध्युद्देशस्यार्थवादाननुगुणार्थकत्वे तदेकवाक्यताया अनिर्वाहात्। अतो विध्युद्देशस्य नास्ति लब्धात्मकता। अर्थवादस्य तु प्राथमिकत्वेनासञ्जातविरोधितया स्वार्थपरत्वादस्ति लब्धात्मकता। सुत्याकालस्तु य इष्ट्यादिवाक्यलब्धात्मकत्वादङ्गभूतदीक्षणीयाकाल बाधत इति युक्तम्। एतेनोपक्रमगतस्य 'पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायात् (कि) परेण बाध इति प्रत्युक्तम्। परस्य लब्धात्मकत्व एव तन्न्यायप्रवृत्तेः। प्रकृते च विधेः स्तुतिसापेक्षत्वेनार्थवादैकवाक्यतया तस्य ऋगादिमन्त्रपरत्वेऽर्थवादाननुगुणत्वेनैकवाक्यतानुपपत्त्या लब्धात्मकत्वाभावात्। तदुक्तम्—

## श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥

जातिर्जातमिति पर्यायः। 'जातिर्जातं च सामान्यम्' इति कोशः। इह ऋगादिमन्त्रगतजातिविशेषा ऋक्त्वादयो विवक्षिताः। अधिकारः शेषित्वविशेषापरपर्यायं प्राधान्यम्। तच्च 'दम्पत्योः सहाधिकार' इत्यादौ कर्मफलभोक्तृत्वलक्षणम्। इह तु तात्पर्यविषयत्वं विवक्षितम्। ततश्चोच्चैस्त्वादिविधौ ऋगादिशब्दानामेव श्रवणाद्वेदशब्दाश्रवणादृगादिशब्दो जातिपरस्सन्नाकृत्यधिकरणन्यायेनाक्षेपलब्धतदाश्रयमन्त्रपरः स्यान्न तु वेदपरः, लक्षणाप्रसङ्गात्। ननूपक्रमगतार्थवादस्थवेदशब्दानुसारेणोपसंहारस्थविधिगतेषु ऋगादिशब्देषु वेदलक्षणाश्रयणीया, न च विनिगमनाविरहः, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति द्वादशिकाधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे मुख्यधर्मानुग्रहस्य वक्ष्यमाणतया तन्न्यायेन प्रकृतेऽपि प्रथमश्रुतार्थवादस्यैवानुसरणीयत्वादिति चेत्—नैतद्युक्तम्, उपक्रमे वेदशब्दस्य वेदयत्यनुष्ठेयार्थमिति व्युत्पत्त्या ऋगादिमन्त्रमात्रेऽप्युपपत्ते मन्त्रब्राह्मणसमुदायस्यैव वेदशब्दार्थत्वे शूद्रस्य मन्त्राध्ययने वेदाध्ययननिषेधस्याप्रवृत्तिप्रसङ्गात्। अस्तु वा वेदशब्दो मन्त्रब्राह्मणसमुदाये मुख्यः, तथाप्युपसंहारस्थविध्युद्देशानुसारेणोपक्रमगतार्थवादस्थवेदशब्दस्य ऋगादिमन्त्रलक्षकताश्रयणं युक्तम्। यत्तु 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति न्यायेन प्रथमश्रुतार्थवादानुसरणमिति, तन्न, तत्र हि सूत्रे पूर्वसूत्राद्विप्रतिषिद्धधर्माणां समवाय इत्यनुवर्तते। तुल्यबलयोर्विरोधो विप्रतिषेधः। ततश्च प्रधानयोर्विरोधे मुख्यानुसरणम्। न त्वङ्गप्रधानयोर्विप्रतिषेधोऽस्ति, प्रधानानुसारित्वादङ्गानामतुल्यबलत्वात्। ततश्च दीक्षणीयासुत्ययोरङ्गप्रधानयोरतुल्यबलत्वादविप्रतिषेधान्मुख्यस्यापि दीक्षणीयाकालस्य पर्वणो य इष्ट्यादिवाक्यप्राप्तस्य एकदीक्षापक्षे प्रधानसुत्याकालेन पर्वणा बाध इति 'अङ्गगुणविरोधे च तादर्थ्यात्' इति तदुत्तराधिकरणे वक्ष्यते। अर्थवादविध्युद्देशयोश्च न तुल्यबलत्वम्, अर्थवादस्य विध्यपेक्षितस्तुतिसमर्पकतया विधिशेषत्वात्। किञ्च विधेरप्राप्तविषयतया स्वतन्त्रत्वात्प्राबल्यम्, अर्थवादस्य तु प्राप्तानुवादतया प्राप्तिपरतन्त्रत्वाद्दुर्बलतेति नास्ति तयोर्विप्रतिषेधः।

प्रधानत्वादप्राप्तविषयत्वाच्चोच्चैस्त्वादिविधिगतेषु ऋगादिशब्देषु न लक्षणा। अर्थवादस्य तु गुणत्वात्प्राप्तानुवादत्वाच्च तद्गतवेदशब्दे ऋगादिमन्त्रलक्षणा। "अक्ताः शर्करा उपदधाति" "तेजो वै घृतम्" इत्यत्र तूपक्रमस्थस्यापि विध्युद्देशस्योपसंहारगता-

इतोऽप्येवमित्याह—

## धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ४ ॥

चशब्दोऽन्वाचये। द्रव्यशब्दमृक्षु प्रयुञ्जते छन्दोगा'। इह तदाधारक साम लक्ष्यते। यदि ऋगादिमन्त्राणामेवोच्चैस्त्वादिधर्मः स्यात्तर्हि ऋच उच्चैस्त्वधर्मोपदेशादेव तदाधारसाम्न उच्चैस्त्वसिद्धेः द्रव्येण ऋगाधारकसाम्नोच्चैस्त्वसम्बन्ध हि यत' न विधातव्य स्यात्, अतोऽप्युच्चैस्त्वादिर्वेदधर्म। तथा च 'उच्चैर्ऋचा' इति ऋग्वेदविहितकर्मसु मन्त्राणामृग्यजुःसाम्नामुच्चैस्त्वसिद्धावपि सामवेदविहितकर्माङ्गमन्त्रेषु तेषूच्चैस्त्वस्यासिद्धया 'उच्चै साम्ना' इत्यर्थवत्। यद्यप्युच्चैस्त्वस्य ऋग्धर्मत्वेऽपि प्रजापतेर्हृदयाद्यनृक्सामसु 'उच्चैः साम्ना' इत्यर्थवत्, तथाप्यभ्युच्चयमात्रमेतदिति नातीवात्राभिनिवेष्टव्यम् ॥

यत्तु वेदशब्दो मन्त्राणामेव वाचकः, न तु ब्राह्मणसमुदायस्येति तत्राह—

## त्रयीविद्याख्या च तद्विदि ॥ ५ ॥

चशब्दोऽवधारणे। त्रयो वेदास्त्रयी विद्या यस्य स त्रयीविद्य' त्रयीविद्यशब्दस्याख्या प्रयोग। तद्विदि ऋग्यजुःसामप्रचुरवेदत्रयाध्येतर्येव दृश्यते, न त्वृगादिमन्त्रमात्राध्येतरि। ततश्चोपक्रमगततथाविधवेदशब्दानुसारेण विध्युद्देशेपु वेदलक्षणा युज्यते। न चैवं सति ऋगादिमन्त्रमात्राध्ययन शूद्रस्य न प्रतिषिध्येतेति वाच्यम्।

'कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।
वेदाक्षरविचारेण शूद्रश्चण्डालतामियात्' ॥
'शूद्रेवेदाक्षरेणैव निष्कृतिर्नैव विद्यते'।

इति पाराशर्यादिस्मृत्यनुसारेण 'न स्त्रीशूद्रौ वेदमधीयाताम्' इत्यत्रावयवमुखेन तन्निषेधाभ्युपगमात्, कलञ्जादिनिषेधे तदवयवनिषेधवदुपपत्तेश्च ॥

नन्वेवमपि ऋचां यजुर्वेदविहितकर्माङ्गत्वे उपांशुत्वम्, ऋक्सामवेदविहितकर्माङ्गत्वे उच्चैस्त्वमिति वैरूप्य स्यात्, एव यजुषा साम्ना च यजुर्वेदविहितकर्माङ्गत्वे उपांशुत्वम्, वेदान्तरविहितत्वे उच्चैस्त्वमिति वैरूप्यं स्यात्; उच्चैस्त्वादेर्मन्त्रधर्मत्वे तु नायं दोषो भवतीति मन्त्रधर्मत्वमेवास्थेयमित्याशङ्क्य निराकरोति—

'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्' ॥ इति ।

यच्चोक्तमप्राप्तविषयत्वाद्विध्युद्देशस्य यथाश्रुतार्थत्व न्याय्यमिति तत्र ब्रूम.— उपक्रमे तावद्वेदशब्दश्रवणमात्रादेतावदवगतम् । नूनमत्र वेदानां स्तूयमानत्वादुद्देश्यत्व विधेयत्वं वा विवक्षितमिति, [1]ततोचैस्त्वादिविधेयलाभात्परिशेषादेव तस्योद्देश्यत्वावगतेर्वस्तुतः ऋगादिपदमनुवादकमेव सदुद्देश्यपरम् । अतो विध्युद्देशगतोऽप्यृगादिशब्द. प्राप्तानुवादित्वाल्लक्षणा सहते । असञ्जातविरोधिन उपक्रमस्थवेदशब्दस्यैव तात्पर्यग्राहकस्य सत्त्वात् । न चोपक्रमस्थार्थवादानुसारेण विध्युद्देशस्यान्यथानयनेऽपि "श्येनेनाभिचरन्यजेत" इत्यत्र विध्युद्देशस्य "यथा ह वै श्येनो निपत्यादत्ते एवमय द्विषन्त निपत्यादत्ते" इति चरमश्रुतार्थवादवशेन कथ प्रसिद्धार्थत्यागेन नामधेयत्वाश्रयणमिति वाच्यम् । तत्र हि मत्वर्थलक्षणाप्रसङ्गेन गुणविध्यसम्भवात्सामानाधिकरण्याच्च कर्मनामत्वम् । अर्थवादेन तु प्रवृत्तिनिमित्तसमर्पणेन तन्निर्वाहमात्र क्रियते । न तु तावतार्थवादवशादेवोपक्रमस्थविध्युद्देशस्य प्रसिद्धार्थत्याग इत्यदोषः । ननूपक्रमेऽपि ऋग्वेदादिशब्दाः कथं तत्तद्वेदपरा , ऋग्यजु.साम्नां सर्वेष्वपि वेदेषु सङ्कीर्णत्वादित्यत्राप्येतदेवोत्तरम् वेदो वा प्रायदर्शनादिति । प्रायशब्दो बाहुल्ये । 'प्रायो भूम्न्यन्तगमने' इति कोश. । क्वचिदृचा क्वचिद्यजुषा क्वचित्साम्ना बाहुल्येन दर्शनादृग्वेदादिशब्दैस्तत्तद्वेदोऽभिधीयत इत्यर्थ. । एवमर्थान्तरद्योतनायैव प्रायपद प्रायुङ्क्त । अन्यथा 'उपक्रमदर्शनात्' इत्येवावक्ष्यत् ॥

इतोऽप्येवमित्याह—

## लिङ्गाच्च ॥ ३ ॥

चशब्दोऽन्वाचये । "ऋग्भि पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्न । सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्य " इति मन्त्रे आद्यपादे 'ऋग्भि.' इत्युपादाय द्वितीयतृतीयपादयोर्यजुर्वेदसामवेदौ सङ्कीर्त्य चतुर्थपादे 'वेदै.' इति बहुवचनेनोपसहारादाद्यपादे ऋक्छब्देन ऋग्वेदसङ्कीर्तनस्य सिद्धवत्कारदर्शनाल्लिङ्गादपि ऋगादिशब्दास्तत्तद्वेदपरा लक्षणया भवन्ति ॥

---

1. ततश्चोच्चैस्त्वादि. क, ग, घ, मु. पा.

वगतम्। मन्त्राश्च विनियोजकवाक्यैर्विहिताः। तेषु तत्तद्वेदविहितत्वनिबन्धनस्वरस्य साक्षादेव निवेशसम्भवान्नात्रानर्थक्यतदङ्गन्यायावतरणमिति न स्वरविधिः प्रधान-कर्मापेक्षः। ततश्च वारवन्तीयस्य सामवेदविहितत्वादुच्चैस्त्वमेव। न च 'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्' इत्येकादशेऽङ्गानामपि प्रधानविधिविहितत्वस्य वक्ष्यमाणतया वारवन्तीयस्यापि याजुर्वेदिकाधानविधिविहितत्वादुपांशुत्वमिति वाच्यम्। प्रधानविधेरङ्गविधायकतायाः अङ्गविधिप्रवृत्तिनिबन्धनत्वेन प्रधानवेदस्व-रस्योपांशुत्वस्याङ्गेषु मन्दप्रवृत्तिकतया, अङ्गवेदस्वरस्य चोच्चैस्त्वस्य निरपेक्षतया प्रथमं प्रवृत्तत्वेन प्रथमोपस्थिताङ्गवेदस्वरस्यैव ग्राह्यत्वात्। तस्मादिह वारवन्तीयस्यो-च्चैस्त्वमिति प्राप्ते, सिद्धान्तयति—

## गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ८ ॥

गुणमुख्ययोरङ्गविधिप्रधानविधिनिबन्धनस्वरयोरुच्चैस्त्वोपांशुत्वयोर्व्यतिक्रमे वारवन्तीयसाम्नि विरोधे सति, गुणस्य मुख्यार्थत्वात्, मुख्येन प्रधानविधिनैव निमि-त्तेन, 'उपांशु यजुषा' इति यजुर्वेदसंयुक्तस्वरः प्रत्येतव्यः। अङ्गविधिनिबन्धनस्वरो हि प्रथमोपस्थितोऽप्यङ्गधर्मत्वाद्दुर्बलः। प्रधानविधिनिबन्धनस्वरस्तु पश्चादुपस्थितोऽपि प्रधानधर्मत्वात्प्रबलः। तथाहि—प्रधानविधिस्तावत्साङ्गं प्रधानं विधत्ते प्राच्योदीच्या-ङ्गकलापोपकृतेनाधानेनाग्निमुत्पादयेदिति। एवञ्च प्रधानविधिनिबन्धनस्वरोऽङ्गेष्वनु-ष्ठितोऽपि प्रधानस्यैव धर्मः। न स पृथगङ्गानां भवितुमर्हति। अङ्गानां प्रधानशेषत्वे-नास्वतन्त्रतया स्वातन्त्र्येण धर्मग्रहणानर्हत्वात्। ततश्च प्रधानस्यैवाङ्गसाहित्यविशेषेणो-पांशुत्वसम्पत्तयेऽङ्गभूतवारवन्तीये तदनुष्ठानमात्रम्, प्रधाने साक्षात्तदनुष्ठानासम्भ-वात्। न त्वेतावता सोऽङ्गधर्मः। ततश्च प्रधानवेदस्वरस्योपांशुत्वस्य प्रधानधर्मत्वात्त-द्बाधे प्रधानवैगुण्यम्। अङ्गवेदस्वरस्योच्चैस्त्वस्य बाधे त्वङ्गवैगुण्यमिति वारवन्तीयस्य प्रधानवेदनिबन्धनमुपांशुत्वमेव ॥

तदिदं भाष्यकारीयमधिकरणमनुपपन्नम्। अङ्गवेदस्वरस्याप्युच्चैस्त्वस्य प्रधाने श्रुतस्याङ्गद्वारा प्रधानोपकारकतया तद्बाधेऽपि प्रधानवैगुण्यस्य दुर्वारत्वात्, 'अङ्ग-गुणविरोधे च तादर्थ्यात्' इति द्वादशिकाधिकरणेन गतप्रायत्वात्, प्रधानविध्या-श्रितस्य स्वरस्य प्रधाने श्रुतस्याङ्गेष्वनुष्ठानकल्पनस्य गुरुत्वात्, यजुर्वेदे वारवन्तीय-विधेराम्नातत्वाच्च इत्यादिदूषणमुद्भाव्याधिकरणमन्यथा वर्णितं वार्तिके। कश्चिन्मन्त्र

## व्यतिक्रमे यथाश्रुतीति चेन्न सर्वस्मिन्निवेशात् ॥ ६ ॥

ऋगादिमन्त्राणां वेदान्तरविहितकर्माङ्गत्व व्यतिक्रमः, तस्मिन्सति, यथाश्रुति ऋक्त्वादिश्रवणानतिक्रमेण ऐकरूप्येणैव उच्चैस्त्वमुपांशुत्व च भवति, यदि मन्त्रधर्मत्वत्वमभ्युपगम्येत, वेदधर्मत्वे तु न स्यादैकरूप्यमिति न वेदधर्मत्वमिति चेत्, तन्न, कुत ? सर्वस्मिन्निवेशात्। सर्वस्मिन् तत्तद्वेदविहिते कर्मणि अङ्गभूतानां व्यतिक्रान्तानामपि ऋगादिमन्त्राणा विधिबलादेव स्वरान्तरसन्निवेशादेकस्यैव मन्त्रस्योच्चैस्त्वादिवैरूप्य वचनबलान्न दुष्यतीति यावत् ॥

ननु उच्चैस्त्वस्य वेदधर्मत्वे प्रकरणबाध स्यात्, ज्योतिष्टोमो हि याजुर्वेदिक इत्यनुपदमेव वक्ष्यते, अतस्तदङ्गानामृग्यजु साम्नामुपांशुत्वमेव, ततश्च 'उच्चैर्ऋचा' 'उच्चै साम्ना' इत्यनयो पूषानुमन्त्रणन्यायेनान्यत्र "पुत्रकामा ह्याप्याख्यापयेरन्" इति बह्वृचब्राह्मणादिविहिते छन्दोगब्राह्मणविहिते अद्भुतशान्तिप्रमुखे च कर्मण्युत्कर्ष. स्याद् इत्याशङ्क्याह—

## [1]वेदसंयोगात्प्रकरणं बाध्येत ॥ ७ ॥

उपक्रमगतवेदशब्दसमभिव्याहाररूपवाक्यप्रमाणेन उच्चैस्त्वोपांशुत्वविधीना तत्तद्वेदविहितकर्माङ्गमन्त्रोद्देश्यकत्वरूपवेदसंयोगात्प्रकरणं बाध्यताम्। वाक्येन प्रकरणबाधस्य न्याय्यत्वादिति भावः। तदेवमृग्वेदविहितकर्माङ्गाना सामवेदविहितकर्माङ्गानाञ्च ऋग्यजु.साम्नामुच्चैस्त्वम्। यजुर्वेदविहितकर्माङ्गानां तेषामुपांशुत्वमिति स्थितम् ॥

इति प्रथममुपक्रमाधिकरणम् ॥ १ ॥

२

याजुर्वेदिकस्याधानस्य सामवेदे "वारवन्तीयं गायति" इत्यङ्गविधि। तत्र वारवन्तीयस्य साम्न सामवेदिक स्वर उच्चैस्त्वम् ? उत याजुर्वेदिक. स्वर उपांशुत्वम् ? इति सशय। सामवेदिक स्वर इति ब्रूम। न च पूर्वाधिकरणन्यायेन यजुर्वेदविहिताधानेऽपि ज्ञायमानमुपांशुत्वं तत्रासम्भवादानर्थक्यतदङ्गन्यायेन तदङ्गमन्त्रेषु निविशमान वारवन्तीयसामाप्यास्कन्दतीति वाच्यम्। पूर्वाधिकरणे ह्युपक्रमवशाद्वेदपरत्वेऽवधृते ऋगादिवेदैर्यद्विधीयते तत् 'उच्चै' 'उपांशु' इत्येतावद-

1. सयोगात्प्र.

## व्यतिक्रमे यथाश्रुतीति चेन्न सर्वस्मिन्निवेशात् ॥ ६ ॥

ऋगादिमन्त्राणां वेदान्तरविहितकर्माङ्गत्व व्यतिक्रम. ; तस्मिन्सति, यथाश्रुति ऋक्त्वादिश्रवणाननिक्रमेण ऐकरूप्येणैव उच्चैस्त्वमुपांशुत्वं च भवति, यदि मन्त्रधर्मत्वत्वमभ्युपगम्येत, वेदधर्मत्वे तु न स्यादैकरूप्यमिति न वेदधर्मत्वमिति चेत्, तन्न, कुत ? सर्वस्मिन्निवेशात्। सर्वस्मिन् तत्तद्वेदविहिते कर्मणि अङ्गभूतानां व्यतिक्रान्तानामपि ऋगादिमन्त्राणा विधिबलादेव स्वरान्तरसन्निवेशादेकस्यैव मन्त्रस्योच्चैस्त्वादिवैरूप्य वचनबलान्न दुष्यतीति यावत् ॥

ननु उच्चैस्त्वस्य वेदधर्मत्वे प्रकरणबाध' स्यात्, ज्योतिष्टोमो हि याजुर्वेदिक इत्यनुपदमेव वक्ष्यते, अतस्तदङ्गानामृग्यजु साम्नामुपांशुत्वमेव, ततश्च 'उच्चैर्ऋचा' 'उच्चैः साम्ना' इत्यनयो पूषानुमन्त्रणन्यायेनान्यत्र "पुत्रकामा ह्याप्याख्यापयेरन्" इति बह्वृचब्राह्मणादिविहिते छन्दोगब्राह्मणविहिते अद्भुतशान्तिप्रमुखे च कर्मण्युत्कर्ष. स्याद् इत्याशङ्क्याह —

## [1]वेदसंयोगात्प्रकरणं बाध्येत ॥ ७ ॥

उपक्रमगतवेदशब्दसमभिव्याहाररूपवाक्यप्रमाणेन उच्चैस्त्वोपांशुत्वविधीना तत्तद्वेदविहितकर्माङ्गमन्त्रोद्देश्यकत्वरूपवेदसयोगात्प्रकरणं बाध्यताम्। वाक्येन प्रकरणबाधस्य न्याय्यत्वादिति भावः। तदेवमृग्वेदविहितकर्माङ्गाना सामवेदविहितकर्माङ्गानाञ्च ऋग्यजु.साम्नामुच्चैस्त्वम्। यजुर्वेदविहितकर्माङ्गानां तेषामुपांशुत्वमिति स्थितम् ॥

इति प्रथममुपक्रमाधिकरणम् ॥ १ ॥

२

याजुर्वेदिकस्याधानस्य सामवेदे "वारवन्तीयं गायति" इत्यङ्गविधि। तत्र वारवन्तीयस्य साम्न सामवेदिक. स्वर उच्चैस्त्वम् ? उत याजुर्वेदिक. स्वर उपांशुत्वम् ? इति सशय। सामवेदिक स्वर इति ब्रूम। न च पूर्वाधिकरणन्यायेन यजुर्वेदविहिताधानेऽपि ज्ञायमानमुपांशुत्वं तत्रासम्भवादानर्थक्यतदङ्गन्यायेन तदङ्गमन्त्रेषु निविशमान वारवन्तीयसामाप्यास्कन्दतीति वाच्यम्। पूर्वाधिकरणे ह्युपक्रमवशाद्वेदपरत्वेऽवधृते ऋगादिवेदैर्यद्विधीयते तत् 'उच्चै.' 'उपांशु' इत्येतावद-

1. सयोगात्प्र

स्वरविधीनां विनियोगविधिवेदनिवन्धनत्वात्, ज्योतिष्टोमे च वेदत्रयविनियुक्तानामपि मन्त्राणा सत्त्वाद् इति योजना। तदेवं वार्तिकमते विनियोगविधिवेदनिवन्धनत्वं स्वरविधीनामिति स्थितम्।

स्यादेतत्। कः स्वरविधीना विषयः? न तावद्दर्शपूर्णमासौ, ज्योतिष्टोमप्रकरणे श्रुतत्वात्। न च 'उच्चैर्ऋचा' इत्यादिवाक्यानामविशेषप्रवृत्तत्वाज्ज्योतिष्टोमादन्यत्रापि तत्सम्भवः, प्रकरणेन वाक्यसङ्कोचायोगादिति वाच्यम्। एवमपि 'मन्द्रया वाचाज्यभागान्त पर मध्यमया उत्तमयानूयाजादि' इति वैशेषिकस्वरान्तरविधानेन दर्शपूर्णमासयोरुक्तस्वरविधिप्रवृत्ते। अत एव दर्शपूर्णमासविकृतय इष्टिपशुवन्धा न विषय., तत्रापि चोदकतो मन्द्रादिस्वरप्राप्ते'। न च 'उच्चैर्ऋचा' 'उपांशु यजुषा' इति प्रत्यक्षोपदिष्टस्वराभ्यां तद्बाध इति वाच्यम्। [1]अग्रिमसप्तमपादे 'तद्ग्रहणाद्वा 'स्वधर्मं स्यात्' इत्यधिकरणे वैकृतप्रधानप्रयोगवचनस्य चोदकोपजीवकतया दुर्बलत्वस्य वक्ष्यमाणत्वेन चोदकतो मन्द्रादिस्वराणामेव विकृतीष्टिपशुषु प्राप्ते। नापि ज्योतिष्टोमो विषयः। तत्र हि "यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" "यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उच्चै प्रवर्ग्येण चरन्ति" इत्यग्नीषोमीयात्प्राग्वर्तिषु दीक्षणीयाप्रायणीयादिषु स्वरविशेषा विहिताः। अग्नीषोमीये तु चोदकतो मन्द्रमध्यमोत्तमस्वराः प्राकृता भवन्ति। एवमुदयनीयानुवन्ध्यादियज्ञपुच्छेऽपि। सुत्यायान्तु "मन्द्रया वाचा प्रात.सवने मध्यमया माध्यन्दिने सवने उत्तमया तृतीयसवने" इति स्वरविशेषा विहिताः। तस्मात् 'उच्चैर्ऋचा' इत्यादिस्वरविधीनां विषयो दुर्निरूप इति चेत्—अत्र वार्तिककृत',यदृग्वेदसामवेदयोः काम्य नैमित्तिक वा ज्योतिष्टोमाङ्ग तत्सर्वमुच्चै. कर्तव्यम्; यथा "भिन्नमभिमृशेयद्दते चिदभिश्रिष" इत्यादि।"मन्द्रया वाचा प्रात.सवने" इत्यादि हि नित्यवदाम्नातत्वादनित्यै काम्यनैमित्तिकैरसम्वध्यमानं नित्याङ्गविषयमेवेति युक्तम्। एव याजुर्वेदिकमुपांशुत्वमप्युदाहार्यम्। तथावभृथस्यापूर्वत्वात्तत्र प्राकृतस्वराप्राप्ते. सोऽपि स्वरविधिविषय इत्याहु। तदेतद्याज्ञिका न सम्मन्यन्ते। मन्द्रत्वादयो ह्युच्चैस्त्वावान्तरधर्मा.। उच्चैस्त्वमृक्सामवेदविहितमन्त्रेषु विहितम्। तत्र 'मन्द्र प्रात सवने स्तुवीरन्' 'मन्द्रं प्रात सवने शसति' इत्यादिभिः स्तुतशस्त्रेषु

1. 'अग्रिमाष्टमपादे' इत्येव सर्वासु मातृकासु दृश्यते.

ऋक्सामवेदयोः केवलमाम्नायते न तु विनियुज्यते, यजुर्वेदे एव च विनियुज्यते। यथा—"यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सर्वा अपि दाशतयीरनुब्रूयात्" "गोषूक्तेन साम्नोपतिष्ठेत" इत्यादौ। तत्र कः स्वर इति संशये अविज्ञातस्वरूपस्य मन्त्रस्य विनियोक्तुमशक्यत्वात्तत्स्वरूपज्ञानस्य चाम्नानाधीनत्वात्तद्वेदनिबन्धनस्यैव प्रथमोपस्थितत्वाद्बलवत्त्वम्। 'ऋचा क्रियते' इति करोतिरुत्पत्तौ। ऋग्वेदेन यदुत्पद्यते सामवेदेन च तदुच्चैः, यजुर्वेदेन यत्तदुपांश्वित्यर्थः। इति प्राप्ते, सिद्धान्तयति—

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥

गुणमुख्ययोराम्नानविनियोगवेदनिबन्धनस्वरयोर्विरोधे सति आम्नानस्य विनियोगार्थत्वात् मुख्येन विनियोगविधिनैव निमित्तेन वेदसंयुक्तः स्वरः प्रत्येतव्यः। करोतिरुत्पत्ताविति न युक्तम्। आम्नानं ह्युत्पत्तिः। नैतावन्मात्रेण 'क्रियते' इति व्यपदेशमर्हति मन्त्रः, कर्तव्यत्वेनावगम्यमानस्यैव 'क्रियते' इति व्यपदेशार्हत्वात्। विनियोगविधिना कर्तव्यत्वेनावगम्यमानो मन्त्रः 'क्रियते' इति व्यपदेशमर्हति। 'क्रियते' इत्यस्य विधीयत इत्येवार्थः। तदुक्तम्—'तेन तु क्रियते मन्त्रो यत्र मन्त्रो विधीयते' इति। प्रकृते च ऋक्सामवेदयोर्मन्त्रस्य विनियोगविध्यभावान्न तद्वेदस्वरः। किञ्च कर्तव्यत्वेनावगतस्य स्वराकाङ्क्षा। कर्तव्यत्वावगमश्च विध्यायत्तः। तद्दशायाञ्च सन्निहितत्वाद्विनियोगविधिवेदस्वर एव ग्रहीतुमुचितः। अङ्गविधिष्वपीतिकर्तव्यताकाङ्क्षालक्षणप्रकरणावान्तरप्रकरणस्य[1] अपूर्वपादे 'साकाङ्क्षं त्वेकवाक्यं स्यात्' इत्यधिकरणे वार्तिके प्रपञ्चितत्वेनाङ्गानामपि धर्मग्राहित्वात्। तदेव प्रकृते यजुर्वेदविनियुक्तमन्त्रेषूपांशुत्वमेवेति स्थितम्। एवमन्यत्राप्येवञ्जातीयकेषु योज्यम्। एवं ज्योतिष्टोमे ऋग्यजुःसाममन्त्राणां सर्वेषामपि तत्तद्वेदविनियुक्तानां यथायथमुच्चैस्त्वोपांशुत्वयोः सन्निवेशसम्भवादुच्चैस्त्वविध्योः प्रकरणादुत्कर्षो न कल्प्यत इति लाघवम्। प्रधानविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वात्तदङ्गानामृग्यजुःसाम्नां तत्तद्वेदविनियुक्तत्वेऽप्युपांशुत्वस्यैव प्राप्तेरुच्चैस्त्वविध्योः प्रकरणादुत्कर्षः स्यात्। न चैवं सति 'वेदसंयोगात्प्रकरणं बाध्येत' इति पूर्वाधिकरणगुणसूत्रविरोधः, तत्रोच्चैस्त्वविध्योः प्रकरणबाधस्योक्तत्वादिति वाच्यम्। 'वेदसंयोगान्न प्रकरणेन बाध्येत' इत्येव वार्तिके पठितत्वात्। उच्चैस्त्वविधिद्वयमपि न प्रकरणेन बाध्येत न प्रकरणादुत्कृष्येत,

1. लक्षणावान्तर. ग, घ.

इत्यादि। तदेतदुभयश्रुति उभयत्र श्रूयमणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुना अन्यतरत्र विहितमिति निर्धार्यम्। सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न सम्भवति। तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधि॰। यजुर्वेदे "रथन्तरमभिगायते गार्हपत्य आधीयमाने" इत्यादि तु सामवेदविहितरथन्तरानुवादेन [1]कालान्तरविधिपरमिति न[2]तत्र तद्विधि॰। ततश्चाधानाङ्गरथन्तरादिसामसूत्रैस्त्वमेव; यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम्, विनियोगविधिश्चानन्यथासिद्ध, तत्रागत्या विकल्पः॥

## इति तृतीयं भूयस्त्वाधिकरणम्॥ ३॥

४

तदेवं श्रुतिलिङ्गवाक्यैर्विनियोगे निरूपिते प्रकरणेन विनियोगो निरूप्यते। "दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इत्यत्र "समिधो यजति" "तनूनपात यजति" इत्यादि श्रुतम्। तदेतद्दर्शपूर्णमासाङ्ग न वा? इति संशयः। नाङ्गमिति ब्रूम, श्रुतिलिङ्गवाक्यानामङ्गताबोधकानामभावात्। न च प्रकरणादङ्गत्वमिति वाच्यम्। प्रकरणं हि किं सन्निधि॰? उत साकाङ्क्षत्वम्? अथवा प्रकाराकाङ्क्षत्वे सति सन्निहितत्वम्? नाद्य०, "गोदोहनेन पशुकामस्याप॰ प्रणयेत्" इत्यादिगुणकामाना दर्शपूर्णमासाङ्गत्वापत्ते॰। न द्वितीय, प्रयाजादिवाक्याना दर्शपूर्णमासवाक्यस्य च स्वस्वार्थपर्यवसन्नत्वेन पदार्थविषयाकाङ्क्षाविरहात्, प्राकृताङ्गानां विकृत्यपेक्षितत्वेन तेषा विकृतिप्रकरणपरिग्रहापत्तावतिदेशोच्छेदापत्तेश्च। न तृतीय, कथ यागेन कुर्यादिति कथम्भावाकाङ्क्षाया अनुष्ठानमात्रेण शान्ते॰। अनुष्ठानमेव हि यागस्य प्रकार॰, अनुष्ठितस्यैव फलसाधकत्वात्। अनुष्ठानस्य च लोकतो विज्ञातत्वान्नास्त्यपेक्षा। ननु समिदादिवाक्य फलाकाङ्क्षम्, प्रकारविशेषसमर्पणमेव फलम्, तदाकाङ्क्षावशाच्च दर्शपूर्णमासवाक्यस्याप्याकाङ्क्षोत्तिष्ठतीति चेन्न, विश्वजिन्न्यायेन स्वर्गफलकल्पनया वा, रात्रिसत्रन्यायेन "यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय" इत्याद्यर्थवादिकफलकल्पनया वा, दर्शपूर्णमासवाक्यगतस्वर्गपदानुषङ्गेण वा समिदादिवाक्याना फलाकाङ्क्षाशान्त्या तद्वशेन दर्शपूर्णमासवाक्ये प्रकाराकाङ्क्षानुत्थानात्। न च प्रकारतया प्रयाजाद्यनाकाङ्क्षायामपीतिकर्तव्यतात्वेन तदाकाङ्क्षासम्भव इति

1. कालान्तरादि. क, ग, घ. मु. पा.  2. नञ् मातृकासु न दृश्यते.

मन्द्रत्वादिरूपेण व्यवस्थाप्यते। इतरेषु तु परिसामादिषु हारियोजनीयप्रैषयाज्यादिषु चोच्चैस्त्वं यथाकथञ्चिद्भवति। एवं यजुर्वेदविहितेष्वाश्रुतप्रत्याश्रुतसम्प्रैषादिषु परप्रत्यायनार्थतयार्थप्राप्तमुच्चैस्त्वम् 'मन्द्रयाज्यभागान्तम्' इत्यादिविशेषेषु व्यवस्थाप्यते। तदितरेषु तु जपानुमन्त्रणादिमन्त्रेषु 'उपांशु यजुषा' इति व्यवतिष्ठते। एवञ्च मन्द्रादिविधीना नापूर्वविधित्वमिति लाघवम्। एवं ज्योतिष्टोमदर्शपूर्णमासविकारेष्वपूर्वेषु च दर्वीहोमेषु यथायथमूह्यम्॥

इति द्वितीय गुणमुख्यव्यतिक्रमाधिकरणम्॥ २॥

३

ज्योतिष्टोमे वेदत्रयसमाम्नाते किमुच्चैस्त्वमुपांशुत्व वा? इति संशये एकस्यैव शाखान्तराधिकरणन्यायेन वेदत्रयेऽपि विधिसम्भवादनियम इति प्राप्ते, सिद्धान्तयति—

## भूयस्त्वेनोभयश्रुति॥ ९॥

उभयशब्दोऽनेकत्वपर। अनेकस्मिन्वेदे श्रवण यस्य तत् उभयश्रुति ज्योतिष्टोमकर्म भूयस्त्वेन विधिप्रतीतिपौष्कल्येन अस्मिन्नेव वेदे विहितमिति निर्धार्यम्। द्रव्यदेवतं यागस्य स्वरूपम्। ततश्च सोमद्रव्यस्याभिषवादितद्धर्मसंयुक्तस्य इन्द्रवाय्वादिदेवताना च यजुर्वेदे समाम्नानात्तत्रैव तद्विधि। वेदान्तरे तु सोमद्रव्ययुक्तयजिमात्रश्रवणे[1] विधेयकर्मस्वरूपविशेषानवगमाद्विधिप्रतीतिपर्यवसानाभावान्न तत्र तद्विधिः। किन्तु [2]स्तोत्रादिविधानाय तदनुवादमात्रमिति ज्योतिष्टोमाङ्गमन्त्रेषु याजुर्वेदिकस्वरत्वम्। यत्र तु कर्मणि द्रव्यदेवतादि समस्तं वेदत्रये समाम्नातम्, यथाग्निहोत्रे, तस्यर्ग्वेदे ऐतरेयकौषीतकादिब्राह्मणे यजुर्वेदे च तैत्तिरीयादौ सामवेदे तलवकारीयादौ कृत्स्नाम्नानात्, एवञ्जातीयेषु कर्मसूच्चैस्त्वोपांशुत्वयोर्विकल्प इति भाष्यानुसारी पन्था। वार्तिकरीत्या विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वेऽपि तदङ्गमन्त्रेषु तत्तद्वेदस्वरप्राप्तेः तस्य याजुर्वेदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम्। तद्यथा आधानमधिकृत्य सामवेदे श्रुतम् "जातेऽग्नौ रथन्तर गायति[3]" इत्यादि, तथा यजुर्वेदे श्रुतम् "रथन्तरमभिगायते गार्हपत्य आधीयमाने"

---

1. श्रवणेन ग, घ 2. स्तोत्रशस्त्रादि. ग, घ. 3. गायन्ति. ख, घ, मु पा

इत्यादि। तदेतदुभयश्रुति उभयत्र भूयमणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुना अन्यतरत्र विहितमिति निर्धार्यम्। सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न सम्भवति। तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः। यजुर्वेदे "रथन्तरमभिगायते गार्हपत्य आधीयमाने" इत्यादि तु सामवेदविहितरथन्तरानुवादेन [1]कालान्तरविधिपरमिति न[2]तत्र तद्विधिः। ततश्चाधानाङ्गरथन्तरादिसामसूत्रैस्त्वमेव; यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम्, विनियोगविधिश्चानन्यथासिद्धः, तत्रागत्या विकल्पः॥

इति तृतीयं भूयस्त्वाधिकरणम्॥ ३॥

४

तदेवं श्रुतिलिङ्गवाक्यैर्विनियोगे निरूपिते प्रकरणेन विनियोगो निरूप्यते। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र "समिधो यजति" "तनूनपातं यजति" इत्यादि श्रुतम्। तदेतद्दर्शपूर्णमासाङ्गं न वा? इति संशयः। नाङ्गमिति ब्रूमः, श्रुतिलिङ्गवाक्यानामङ्गताबोधकानामभावात्। न च प्रकरणादङ्गत्वमिति वाच्यम्। प्रकरणं हि किं सन्निधिः? उत साकाङ्क्षत्वम्? अथवा प्रकाराकाङ्क्षत्वे सति सन्निहितत्वम्? नाद्यः, "गोदोहनेन पशुकामस्याप प्रणयेत्" इत्यादिगुणकामानां दर्शपूर्णमासाङ्गत्वापत्तेः। न द्वितीयः, प्रयाजादिवाक्यानां दर्शपूर्णमासवाक्यस्य च स्वस्वार्थपर्यवसन्नत्वेन पदार्थविषयाकाङ्क्षाविरहात्, प्राकृताङ्गानां विकृत्यपेक्षितत्वेन तेषां विकृतिप्रकरणपरिग्रहापत्तावतिदेशोच्छेदापत्तेश्च। न तृतीयः; कथं यागेन कुर्यादिति कथम्भावाकाङ्क्षाया अनुष्ठानमात्रेण शान्तेः। अनुष्ठानमेव हि यागस्य प्रकारः, अनुष्ठितस्यैव फलसाधकत्वात्। अनुष्ठानस्य च लोकतो विज्ञातत्वान्नास्त्यपेक्षा। ननु समिदादिवाक्यं फलाकाङ्क्षम्, प्रकारविशेषसमर्पणमेव फलम्, तदाकाङ्क्षावशाच्च दर्शपूर्णमासवाक्यस्याप्याकाङ्क्षोत्तिष्ठतीति चेन्न, विश्वजिन्न्यायेन स्वर्गफलकल्पनया वा, रात्रिसत्रन्यायेन "यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय" इत्याद्यर्थवादिकफलकल्पनया वा, दर्शपूर्णमासवाक्यगतस्वर्गपदानुषङ्गेण वा समिदादिवाक्यानां फलाकाङ्क्षाशान्त्या तद्वशेन दर्शपूर्णमासवाक्ये प्रकाराकाङ्क्षानुत्थानात्। न च प्रकारतया प्रयाजाद्यनाकाङ्क्षायामपीतिकर्तव्यतात्वेन तदाकाङ्क्षासम्भव इति

1. कालान्तरादि क, ग, घ. मु. पा.　　2. नञ् मातृकासु न दृश्यते.

मन्द्रत्वादिरूपेण व्यवस्थाप्यते। इतरेषु तु परिसामादिषु हारियोजनीयप्रैषयाज्यादिषु चोच्चैस्त्वं यथाकथञ्चिद्भवति। एवं यजुर्वेदविहितेष्वाश्रुतप्रत्याश्रुतसम्प्रैषादिषु परप्रत्यायनार्थतयार्थप्राप्तमुच्चैस्त्वम् 'मन्द्रयाज्यभागान्तम्' इत्यादिविशेषेषु व्यवस्थाप्यते। तदितरेषु तु जपानुमन्त्रणादिमन्त्रेषु 'उपांशु यजुषा' इति व्यवतिष्ठते। एवञ्च मन्द्रादिविधीनां नापूर्वविधित्वमिति लाघवम्। एवं ज्योतिष्टोमदर्शपूर्णमासविकारेष्वपूर्वेषु च दर्वीहोमेषु यथायथमूह्यम्॥

इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम्॥ २॥

३

ज्योतिष्टोमे वेदत्रयसमाम्नाते किमुच्चैस्त्वमुपांशुत्वं वा? इति संशये एकस्यैव शाखान्तराधिकरणन्यायेन वेदत्रयेऽपि विधिसम्भवादनियम इति प्राप्ते, सिद्धान्तयति—

**भूयस्त्वेनोभयश्रुति॥ ९॥**

उभयशब्दोऽनेकत्वपरः। अनेकस्मिन्वेदे श्रवणं यस्य तत् उभयश्रुति ज्योतिष्टोमकर्म भूयस्त्वेन विधिप्रतीतिपौष्कल्येन अस्मिन्नेव वेदे विहितमिति निर्णेयम्। द्रव्यदेवतं यागस्य स्वरूपम्। ततश्च सोमद्रव्यस्याभिषवादितद्धर्मसंयुक्तस्य इन्द्रवाय्वादिदेवतानां च यजुर्वेदे समाम्नानात्तत्रैव तद्विधिः। वेदान्तरे तु सोमद्रव्ययुक्तयजिमात्रश्रवणे[1] विधेयकर्मस्वरूपविशेषानवगमाद्विधिप्रतीतिपर्यवसानाभावान्न तत्र तद्विधिः। किन्तु [2]स्तोत्रादिविधानाय तदनुवादमात्रमिति ज्योतिष्टोमाङ्गमन्त्रेषु याजुर्वेदिकस्वरत्वम्। यत्र तु कर्मणि द्रव्यदेवतादि समस्तं वेदत्रये समाम्नातम्, यथाग्निहोत्रे, तस्यर्ग्वेदे ऐतरेयकौषीतकादिब्राह्मणे यजुर्वेदे च तैत्तिरीयादौ सामवेदे तलवकारीयादौ कृत्स्नाम्नानात्, एवञ्जातीयेषु कर्मसूच्चैस्त्वोपांशुत्वयोर्विकल्प इति भाष्यानुसारी पन्था। वार्तिकरीत्या विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वेऽपि तदङ्गमन्त्रेषु तत्तद्वेदस्वरप्राप्ते तस्य याजुर्वेदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम्। तद्यथा आधानमधिकृत्य सामवेदे श्रुतम् "जातेऽग्नौ रथन्तरं गायति[3]" इत्यादि, तथा यजुर्वेदे श्रुतम् "रथन्तरमभिगायते गार्हपत्य आधीयमाने"

1. श्रवणेन ग, घ. 2. स्तोत्रशस्त्रादि. ग, घ. 3. गायन्ति ख, घ, मु. पा

शास्त्रदीपिकायान्तु—'अननुगृहीतस्यापि कर्मण. संयोगारम्भकत्वदर्शनान्नानुग्रहाकाङ्क्षा प्रकरणम्; किन्तु सामान्यात्मना व्यापार एवार्थभावनात्मा आख्यातेनाभिधीयते, तद्विशेषापेक्षैवेतिकर्तव्यताकाङ्क्षा, प्रयाजादीना चाभेदसम्बन्धेन विशेपणतया भावनायामन्वय:, इदमेव च प्रकरणम्; तथा च प्रयाजादिरूपा स्वर्गभावनेति वचनव्यक्तिः' इत्युक्तम्। एव तर्हि यागस्य भावनाया कथ करणत्वेनान्वय.। भावना हि प्रयाजादिरूपा पर्यवसन्ना। तस्याञ्च यागस्य करणत्वं नाम न तावत्साधकतमत्वम्, असम्भवात्। न हि प्रयाजादिव्यापारो यागजन्य'। यत्तु—'कुठारेण च्छिनत्ति' इत्यत्रोद्यमननिपतनादिव्यापारो न कुठार प्रत्युद्यमनत्वादिरूपेण साध्य; कुठारोऽपि न तत्र स्वरूपेण साधनम्, वैयर्थ्यात्, किन्तु द्वैधीभावजननसामर्थ्यरूपाभिघाताद्यतिशयविशिष्टतया कुठार उद्यमननिपतनादिव्यापारे द्वैधीभावानुकूलव्यापारात्मनि करण सम्पद्यते; ततश्च द्वैधीभावानुकूलव्यापारे उद्यमनादौ कुठारः करणमित्युक्ते 'सविशेषणे हि' इति न्यायेन द्वैधीभावनिष्पत्तौ कुठारः करणमिति पर्यवस्यति, एवम् "यजेत स्वर्गकाम" इत्यत्रापि दृष्टादृष्टोपकारविशिष्टतया यागस्यावघातप्रयाजादिरूपे कर्तृव्यापारे स्वर्गानुकूलव्यापारत्वरूपापन्ने साधनत्वम् 'सविशेषणे हि' इति न्यायेन स्वर्गोत्पत्तौ पर्यवस्यति, एतन्मूलक एव भावनाभाव्यनिर्वर्तकस्य करणत्वमिति प्रवाद इति। तदयुक्तम्, एव सति प्रयाजादिरूपा यागकरणिका स्वर्गभावनेत्येव करणस्य यागस्य प्रयाजादिव्यापारस्य च परस्परवार्तानभिज्ञतयैव भावनान्वयापत्तौ यागवत्प्रयाजादिव्यापारस्यापि प्रधान्यापत्ते, तस्यैव भावनात्वात्, फलस्य भावनाभाव्यत्वात् फलसाधनस्यैव च प्रधानत्वात्। न च करणान्वयद्वारा प्रयाजादिव्यापारस्य भावनान्वयान्नोक्तदोष इति वाच्यम्। करणेऽनुग्रहाकाङ्क्षायाः कर्मादौ व्यभिचारोपन्यासेनानभ्युपगमात्। न च करणस्य यागस्यानुग्रहाकाङ्क्षाविरहेऽप्युद्यमनादिव्यापारस्य कुठारादिकरणानुग्रहमुखेनैव फलोत्पादकत्वदर्शनात्प्रयाजादिव्यापारस्यापि करणानुग्रहमुखेनैव फलभावनान्वयस्य वाच्यतया, अन्यतराकाङ्क्षयैव करणभूतयागानुग्रहमुखेन स्वर्गभावनान्वयान्न प्रयाजादीनां यागवत्प्राधान्यसम्भव इति वाच्यम्। फलाकाङ्क्षाणा प्रयाजादीना फलभावनायामभेदेनान्वये सति फलाकाङ्क्षाया' शान्तत्वेन तेषा करणाकाङ्क्षाया असिद्धे। किञ्चैव यदि प्रयाजाद्यनुगृहीतयागकरणिका स्वर्गभावनेति वचनव्यक्ति, तर्हि भावनायामभेदसम्बन्धेन विशेषकत्वं प्रयाजादीनामभ्युपगतं व्याहत स्यात्। यदि च यागानुग्राहकप्रयाजादिरूपा फलभावनेति वचनव्यक्तिः,

वाच्यम् । इतिकर्तव्यतात्वं हि यागेन फले जननीये सहकारित्वं वा ? करणजन्यत्वघटितावान्तरव्यापारत्वं वा ? नाद्य., एकेन प्रधानेन फले जननीये प्रधानान्तरस्यापि सहकारित्वेनाङ्गतयातिदेशापत्तेः । न द्वितीय ; प्रयाजादिष्वभावात् । न हि प्रयाजादयो यागेन प्रधानेन जन्यन्ते । अतो नास्ति प्रकरणं नाम प्रमाणान्तरमिति प्रयाजादीनां न दर्शपूर्णमासाङ्गत्वमिति प्राप्ते, सिद्धान्तयति—

## असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्[1] ॥ १० ॥

श्रुत्याद्यसयुक्तमपि प्रयाजादिक प्रकरणाद्दर्शपूर्णमासाङ्गतां भजते । प्रकरणादित्यस्य व्याख्यानमितिकर्तव्यतार्थित्वादिति । करणगतशक्त्याधायको व्यापार इतिकर्तव्यता । तामर्थयतेऽपेक्षते यत्तदितिकर्तव्यतार्थि तस्य भावस्तत्त्वम् । दर्शपूर्णमासाभ्यां फल साधयेत् कथम् ? इत्याकाङ्क्षायामश्रुतप्रयोजनानि प्रयाजादिकर्माणि पठितानि । तत्र करणभूतानां यागानामस्ति शक्तिजननाख्यानुग्रहापेक्षा । अशक्तस्य कोमलदण्डस्य करणत्वाभावात् । सा च जन्यशक्तिश्चेज्जन्यत इत्युत्सर्ग. । अग्नेर्दाहजनकताशक्तौ कर्मणः संयोगजनकताशक्तौ चोत्पादकसामग्र्यभावादनादिता । एवञ्च यागानामपि करणानामस्ति शक्त्याधायकसामग्र्यपेक्षा, प्रयाजादीनाञ्च साध्यापेक्षा । तदुभयाकाङ्क्षावशादेवं ज्ञायते—दर्शपूर्णमासयागोऽय शक्तिजननरूपमनुग्रहमाकाङ्क्षति ; स नूनमेभि. प्रयाजादिभि. क्रियते , यच्च प्रयाजादयः प्रयोजनमपेक्षन्ते तद्दे तद्यागानुग्रहरूपमिति । तस्मान्नष्टाश्वदग्धरथन्यायेन ( खि ) प्रयाजादिवाक्याना दर्शपूर्णमासवाक्यस्य च परस्परमभिसम्बन्धः सिद्धः । तदेवं सम्भवत्युभयाकाङ्क्षालक्षणसम्बन्धेऽन्यतराकाङ्क्षालक्षण. सम्बन्धो न परिग्रहीतु युज्यत इति विश्वजिदादिवत्फलान्तरकल्पन न शक्यमाश्रयितुम् । नापि दर्शपूर्णमासवाक्यगतफलानुषङ्ग.; अन्यत्रान्वयेन शान्ताकाङ्क्षफलस्यात्र सम्बन्धकाभावाच्च । न चैवम् 'समिधो यजति' 'तनूनपात यजति' इत्येव प्रयाजाद्यनुगृहीतयागै. स्वर्गं कुर्यादित्यनेकाख्यातैकवाक्यत्वस्य "येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्" इत्यादिवद्यच्छब्दाद्युपबन्धाभावेन प्रत्यक्षतोऽनवगमात्तत्कल्पनेऽपि गौरवं तुल्यमिति वाच्यम् । फलान्तरकल्पनापेक्षया एवमेकवाक्यत्वकल्पनस्य लघीयस्त्वात् । अन्यथा अनुग्रहाकाङ्क्षा क्रतोरनिवृत्तैव स्यात् । तत्सिद्ध प्रकरण नाम चतुर्थं विनियोजकप्रमाणमिति वार्तिककृत ।

1. तार्यत्वात्.

५

अथ क्रमप्रमाण निरूप्यते । दर्शपूर्णमासयो' आग्नेयादिप्रधानानि येन क्रमेणाम्नातानि, तेनैव क्रमेण "अग्नेरहं देवयज्ययान्नादो भूयासम्" इत्यादयो हुतानुमन्त्रणमन्त्रा आम्नाता' । तत्र उपांशुयाजक्रमे "दब्धिरस्यदब्धो भूयासम्" इति हुतानुमन्त्रणमन्त्र आम्नात । स किमुपांशुयाजाङ्गम् ? उताग्नेयादिसर्वप्रधानाङ्गम् ? इति संशय. । सर्वाङ्गमिति ब्रूम. । श्रुतिलिङ्गयोर्विशेषकयोरभावात्, प्रकरणस्य चाविशेषात् । यत्र क्वचित्पठितव्यस्यास्य मन्त्रस्य तत्र पाठ इत्येतावन्मात्रेण क्रमस्य चोपपत्त्या तस्य नियामकत्वाभावात् । तथा च "अग्नेरहं देवयज्यया" इत्यादिमन्त्राणा दब्धिमन्त्रस्य च विकल्प इति प्राप्ते, सिद्धान्तयति—

## क्रमश्च देशसामान्यात्[1] ॥ ११ ॥

क्रमश्च विनियोजकः । कुत' ? देशसामान्यात् । उपांशुयाजविधेर्दब्धिमन्त्रस्य च स्थानसाम्यात् यत्र [2]क्वचित्पठितव्यस्य तत्र पाठ इत्यभ्युपगमे क्रमपाठस्यादृष्टार्थत्वापत्ति. । शक्नोति च क्रमोऽपि विनियोक्तुम् । पुरुषो हि प्रथमस्य प्रधानस्य मन्त्रमन्विच्छन्मन्त्रसमाम्नायमादित' पर्यालोचयति । तत्र प्रथममन्त्र प्रथमं हृदयमागच्छति । न चास्यातिक्रमे हेतुरस्तीति स एव गृह्यते । तथा मन्त्रस्यापि शेषिणमपेक्षमाणस्य प्रथमेन शेषिणा सह सम्बन्धो भवति । ततश्च तन्निराकाङ्क्षतया द्वितीयादीनामप्येवमेव द्वितीयादिभि सम्बन्धेन भवितव्यम् । एवञ्च क्रमेण समाम्नाय आकाङ्क्षालक्षण प्रकरण कल्पयित्वा तद्द्वारा च वाक्यलिङ्गश्रुती. कल्पयित्वा शक्नोत्यङ्गत्वं बोधयितुमिति भवति क्रमोऽपि विनियोगे प्रमाणम् । न च क्रमाद्बलवता प्रकरणेन दब्धिमन्त्रस्य सर्वार्थतैव स्यादिति वाच्यम् । आग्नेयादीनाम् "अग्नेरहं देवयज्यया" इत्यादिमन्त्रान्तरावरुद्धत्वेन तस्य सर्वार्थत्वासम्भवात् । विकल्पस्य चाष्टदोषदुष्टत्वात् । कृताकृतप्रत्यवेक्षणार्थत्वेन समुच्चयस्यानुपपत्ते. । अदृष्टार्थत्वेऽपि 'अग्नेरहम्' इत्यादिविशेषलिङ्गैर्मन्त्रै कृतार्थेनाग्नेयादिप्रधानजातेनानपेक्षितस्य दब्धिमन्त्रस्य सत्या गतौ तै समुच्चयायोगात् । अस्ति ह्युपांशुयाजस्तस्य गति । तस्माद्दब्धिमन्त्र उपांशुयाजाङ्गम् । न च 'लिङ्गक्रमसमाख्यानात्' इत्यत्र क्रमादस्य विनियोग उक्त

1 साम्यात् 2 क्वापि क, ग, घ मु पा.

एवमपि यागानुग्राहकत्वमवघातप्रयाजादीनां दृष्टादृष्टोपकारवत्तया यागनिष्पादकत्वमेव वाच्यम्। एवञ्च याग स्वर्गश्च प्रयाजादिव्यापारात्मकभावनायाः साध्यः स्यात्। न चैव सम्भवति; प्रयाजादिव्यापारेण याग कुर्यात्स्वर्गं कुर्यादिति वाक्यभेदप्रसङ्गात्। अत एव 'यागविषयैव कृतिः शब्देनोच्यते' इति प्राभाकरमतमुद्भाव्य— विषयत्वं न साध्यत्वम्। स्वर्गो ह्यत्र साध्यतया सम्बध्यते, न तु यागोऽपि। न ह्येव सम्भवति स्वर्गं यागं कुर्यादिति' इति स्वय दूषितमुपपद्यते। एतेन प्रयाजत्वादिविशेषरूपेण यागानुग्राहकता, व्यापारसामान्यात्मना फलभावनात्मकतेत्यादि शिष्यदन्धनमपि निरस्तम्। प्रयाजत्वादिविशेषरूपापन्नेन व्यापारेण यागम्, व्यापारसामान्यात्मना च स्वर्गं साधयेदिति वाक्यभेदात्। एतदपेक्षया करणभूतयागस्यानुग्रहाकाङ्क्षामुक्तरीत्यानुसृत्य प्रयाजाद्यतिरिक्ता फलभावना चाख्यातवाच्यामङ्गीकृत्य तस्यां यागानुग्रहमुखेन प्रयाजादिव्यापारस्य भेदेनैवान्वयोऽभ्युपगन्तव्यः। प्रयत्न एव हि फलभावना आख्यातेनाभिधीयते। पचति पाकं करोतीति विवरणात्करोतेर्यत्नार्थकत्वात्। न च तस्य यतिवदकर्मकत्व शङ्क्यम्। शब्दशक्तिस्वाभाव्यादुत्पत्त्यनुकूलयत्नत्वेन तद्वाचकत्वाद्वा। न चैवं सति सर्वेषां सकर्मकत्वापत्तिः, इष्टापत्तेः। पचति पाक करोति, आस्ते आसनं करोति, शेते शयन करोति, इत्यादिविवरणेन धात्वर्थस्यैव कर्मत्वात्। अत एव किं करोतीति प्रश्ने 'आस्ते' 'शेते' इत्युत्तरमुपपद्यते। 'सुखकाम आसीत' 'स्वास्थ्यकामः शयीत' 'ओदन पचति' इत्यादौ तु साध्यत्वगमककर्मितिपदद्वितीयाविभक्त्यादिसमभिव्याहाराद्धात्वर्थः करणत्वमापद्यते। तदुक्त वार्तिके 'करोतेः सर्वदा सकर्मकत्वादकर्मकाख्यातानामपि किं करोत्यास्ते शेत इति तत्सामानाधिकरण्यदर्शनात्सिद्धैवमादिष्वपि सकर्मिका भावना' इत्यादि। कस्तर्हि सकर्मकाकर्मकयोर्भेद इति चेत्सोऽपि वार्तिके विवेचितः—

'साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्।
सकर्मकः स धातुः स्यात्पारम्पर्ये त्वकर्मकः'॥ इति।

विवृत चेद तत्रैव 'आसनशयनादीनां न नियमेन आनन्तर्येण वा इदं तदिति वा कर्म निरूप्यते। तेनाकर्मका इत्यभिधीयन्ते। पचिगम्यादीनान्तु विक्लिन्नसंयुज्यमानादिसाक्षात्सम्बन्धिकर्माव्यभिचारित्वात्सकर्मकत्वम्' इत्यादि। विस्तरस्तु वार्तिककौस्तुभादिग्रन्थेषु ज्ञेय॥

इति चतुर्थं प्रकरणाधिकरणम्॥ ४॥

## श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौ-र्बल्यमर्थविप्रकर्षात् ॥ १३ ॥

श्रुतिलिङ्गयोर्लिङ्गवाक्ययोर्वाक्यप्रकरणयो. प्रकरणस्थानयो. स्थानसमाख्ययोरित्येव प्रमाणाना समवाये सन्निपाते सति परस्योत्तरोत्तरप्रमाणस्य दौर्बल्य प्रत्येतव्यम्। अर्थस्य विनियोगस्य पूर्वपूर्वश्रुत्यादिकल्पनेन विप्रकर्षात्—व्यवहितत्वादित्यर्थ । समवायशब्देन च विरोधाधायक एकविषयसन्निपातो विवक्षित । एवञ्च "अरुणया क्रीणाति" इत्यत्र श्रुतिवाक्यप्रकरणानां त्रयाणामपि विनियोजकता न विहन्यते। आरुण्यस्य तृतीयाश्रुत्या क्रियासामान्यं प्रति शेषत्वं गम्यते। क्रीणातिसमभिव्याहारलक्षणवाक्येन च क्रयरूपक्रियाविशेष प्रति, प्रकारणेन च ज्योतिष्टोमापूर्वसाधनतापन्न प्रति, इत्येव भिन्नविषयत्वेन विरोधाभावात्। न हि वाक्यावगत क्रयरूपक्रियाविशेषसम्बन्धस्तावत्तृतीयाश्रुत्यावगतं क्रियासामान्यसम्बन्ध विरुणद्धि, प्रकरणावगता क्रयस्यापूर्वसाधनतापि न क्रयरूपक्रियाविशेषसम्बन्धम्। न चैकैकस्य पञ्चभिः सह बलाबलविचारस्य कर्तव्यत्वात्किमेकैकेन सह क्रियत इति शङ्क्यम्। यानि वाक्यादीनि श्रुत्यादिवाक्यैः पूर्वपूर्वलिङ्गादिभिर्बाध्यन्ते तानि लिङ्गादिबाधकै श्रुत्यादिभिर्बाध्यन्त इत्यनुक्तसिद्धम्। बाधितबाध्यस्य बाधकबाधकेन सुतरां बाध्यत्वात्।

तत्र प्रथमं तावच्छ्रुतिलिङ्गयोर्विरोधे चिन्त्यते—किं लिङ्ग श्रुतिश्चेत्युभयं तुल्यबलम्? उत लिङ्गं बलीय? अथ श्रुतिरेव बलीयसी? इति। अविशेषात्तुल्यबलत्वम्। ततश्च "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यत्र मन्त्रस्येन्द्राभिधानसामर्थ्याद्गार्हपत्यमित्यस्येन्द्रलक्षकतयेन्द्रोपस्थाने लैङ्गिको विनियोग; 'ऐन्द्र्या गार्हपत्यम्' इति श्रुत्या इन्द्रपदघटिताया ऋचो गार्हपत्यस्य च शेषशेषिभावेऽवगते मन्त्रे इन्द्रशब्दस्य गार्हपत्यपरतया गार्हपत्य एव मन्त्रेणोपस्थेय इति श्रौतो विनियोग इति विकल्प । न च विनियोगे लिङ्गस्य श्रुतिकल्पनापेक्षा विद्यते। सामर्थ्यपर्यालोचनमात्रादेव साक्षाद्विनियोगसिद्धे । अथवा गार्हपत्य इन्द्रश्चोपस्थेय इति समुच्चयोऽस्तु, द्वयोरुपस्थानस्य युगपदशक्यत्वेऽपि मन्त्रस्यावृत्त्या उभयत्र प्रयोगसम्भवात्, प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् समुच्चयसम्भवे च श्रुतिबलीयस्त्वेऽपि लिङ्गबाधो न युज्यते, विरोधाभावात्। यद्वा अशक्यस्य श्रुतिसहस्रेणापि विनियोक्तुमशक्यत्वेन विनियोज्यशक्त्यनुसारेणैव श्रुतेर्विनियोजकत्वस्य वाच्यतया श्रुतिविनियोगेऽपि लिङ्गस्योप-

इति मन्तव्यम्। अत्रोपपादितस्य क्रमस्य तत्र लिङ्गविनियोगेऽपेक्षितत्वमात्रप्रतिपादनात् ॥

इति पञ्चम क्रमाधिकरणम् ॥ ५ ॥

६

दर्शपूर्णमासयो शाखाच्छेदनाद्य पदार्था आध्वर्यवसमाख्याताः सन्ति। ते किमध्वर्युणैव कर्तव्याः ? उत येन केनचित् ? इति संशय । नियामकश्रुत्याद्यभावाद्येनकेन चिदिति ब्रूमः। न चाध्वर्योरिदमाध्वर्यवमिति समाख्यया कर्तृविशेषलाभ इति वाच्यम्। अध्वर्यो पदार्थानाञ्च समाख्यया सम्बन्धमात्रावगमेऽप्यमी पदार्था अनेन कर्तव्या इति विध्यभावेन कर्तृनियमासिद्धे । प्रथमतः पुरुषः सम्बन्ध ज्ञात्वा समाख्यां प्रवर्तयति, प्रवर्तकस्य च पुरुषस्य सम्बन्धबोधने समाख्यैव प्रमाणमित्यन्योन्याश्रयाच्च। तस्मान्न समाख्या विनियोजिकेति प्राप्ते, सिद्धान्तयति—

[1]आख्या चैवं तदर्थत्वात् ॥ १२ ॥

क्रमो यथा विनियोजयत्येवं समाख्यापि विनियोजिका। कुतः ? तदर्थत्वात् कर्तृविशेषसमर्पणार्थत्वात्। यत्तु समाख्यया सम्बन्धमात्रमवगम्यते न त्वनेन कर्त्रेद कर्तव्यमिति विनियोग इति तन्न, विहितस्याध्वर्यो प्रयोजनापेक्षाया समाख्यावगतसम्बन्धेन शाखाच्छेदनादिपदार्थोपस्थिते, पदार्थानाञ्च कर्त्रपेक्षायां तेनैव सम्बन्धेनाध्वर्यूपस्थिते, मिथ उपस्थितानाञ्च तेषां परस्परसम्बन्धस्य योग्यतावशात्क्रियाकर्तृभावलक्षणतया सिद्धस्य प्रयोगविधिपरिग्रहात्। समाख्या चानादि, सङ्केतयितुरस्मरणात्। तदुक्तम्—

'लौकिक वैदिक वापि प्रमाणं दोषवर्जितम्।
सर्वमाश्रीयते स्वार्थे न चास्मिन्दोषसम्भव ' इति।

अतो गवादिशब्दानां सङ्केतग्रह इवात्रापि न परस्पराश्रयप्रसक्ति ॥

इति षष्ठ समाख्याधिकरणम् ॥ ६ ॥

७

उक्तानि श्रुत्यादिषड्विधविनियोजकप्रमाणानि। अधुना तेषां बलाबलविचार प्रस्तूयते। तत्रेद सूत्रम्—

1. समाख्या.

यद्वाक्यगम्यं तत्पर लिङ्गेन विरुध्यत इति लिङ्गवाक्ययोरेवात्र विरोधः, न तु श्रुति-लिङ्गयोरिति चेत्—न[1], अस्ति ह्यत्र श्रुत्युक्तसामान्यरूपशेषशेषिभावस्यापि लिङ्गेन विरोधः। न हि 'गार्हपत्यम्' इति श्रुत्युक्तशेषित्वसामान्यमाग्नेयीविषय भवितुमर्हति, न वा 'ऐन्द्रया' इति श्रुत्युक्तशेषत्वमपीन्द्रविषयम्, किन्तु तद्व्यतिरिक्तविषयमेव। अन्यथा गार्हपत्ये आग्नेयीशेषित्वस्य ऐन्द्रयामिन्द्रशेषत्वस्य च लिङ्गादेव प्राप्तत्वेन वचनानर्थक्यात्। वाक्यविरोधहेत्वभावादपि श्रुतिलिङ्गविरोध एवायम्। विरोध-स्थले हि प्रबलेन दुर्बलस्यावश्य बाधो वाच्य.। ययोश्च प्रबलदुर्बलयोर्बाध्यबाधक-भावो भवति तयोरेव विरोधो नान्ययो'। प्रकृते न च लिङ्गेन वाक्य शक्यते बाधितुम्। तद्बाधे पृथग्भूतयोरैन्द्रीगार्हपत्यपदयोः कस्याप्यर्थस्याप्रतिपादकत्वात्पद-मात्रस्याप्रामाण्यात्। एवञ्चात्र लिङ्गेन वाक्यस्यात्यन्तबाधे सति श्रुतिवाक्ययोरुभ-योरप्यप्रामाण्यापत्तौ तत्सामान्यात्कृत्स्नवेदाप्रामाण्यापत्तेर्न वाक्यस्य बाधसम्भव इति न लिङ्गवाक्ययोर्विरोध। "स्योनं ते सदनं करोमि" इत्यत्र तु वाक्यबाधेऽपि तदवयवयो पृथग्भूतयोरपि स्वस्वार्थप्रतिपादनसम्भवेनाप्रामाण्याभावाद्भवति लिङ्ग-वाक्योदाहरणमिति वक्ष्यते। प्रकृते लिङ्गेन श्रुतिबाधेऽपि न तदप्रामाण्यम्। लिङ्गा-न्मन्त्रस्येन्द्रशेषत्वे सति 'गार्हपत्यम्' इत्यस्य श्रुतार्थपरित्यागेऽपि गौण्या अर्थान्तर-प्रामाण्योपपत्ते। तथा च लिङ्गस्य बलीयस्त्वे तेन श्रुतिर्बाधितु शक्यत इति श्रुति-लिङ्गविरोध एवायमिति दिक्॥

इति सप्तमे बलाबलाधिकरणे श्रुतिप्राबल्याधिकरणम्॥ ७॥

८

अथ लिङ्गवाक्ययोर्विरोधे चिन्त्यते। अस्ति दर्शपूर्णमासयोर्मन्त्र. "स्योनं ते सदनं करोमि, घृतस्य धारया सुशेव कल्पयामि, तस्मिन्त्सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमान" इति। हे पुरोडाश, ते तव स्योन सुखहेतुं सदन स्थानं करोमि। घृतस्य धारया सुशेव सुखशयनयोग्यमाधार कल्पयामि। तस्मिन्त्सदने हे व्रीहीणां मेध सारभूत, सुमनस्यमान प्रीयमाण' अमृते शाश्वते स्थाने तस्मिन् प्रतितिष्ठ स्थिरो भवेत्यर्थ। तत्र किं लिङ्गाद्वाक्य बलीय? उतोभय तुल्यबलम्? अथवा लिङ्गमेव बलीय? इति सशय। पदाना सहप्रयोगमात्रेणार्थबोधमनपेक्ष्य प्रथमत. प्रतीयमा-

1 अत्रेद न दृश्यते क, ग, घ

जीव्यतया प्रबलत्वाल्लैङ्गिकेन्द्रोपस्थानविनियोग एव युक्त इति पूर्व. पक्ष. ।

सिद्धान्तस्तु—श्रुतिविनियोगे लिङ्गस्योपजीव्यत्वमसिद्धम् । श्रौतविनियोगेऽवगतेऽशक्तस्य विनियोगानुपपत्त्या पश्चात्तन्निर्वाहमात्रे शक्तेर्व्यापारात्। न चात्र श्रौतविनियोगस्यानिर्वाह. । 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यधिकरणे 'गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात्' इति गुणसूत्रेण मन्त्रगतेन्द्रशब्दो हवि श्रपणेशितृत्वादिगुणयोगेन गार्हपत्यमभिधत्त इत्येव गौणसामर्थ्येन श्रौतविनियोगनिर्वाहस्योक्तत्वात्। अतो न लिङ्गस्य श्रुत्यपेक्षया बलवत्त्वम्। नापि तयो समानबलत्वम्। प्रथमतो हि मन्त्रतोऽर्थं प्रत्येति। ततस्तस्य प्रयोजनमाकाङ्क्षन्निन्द्रोपस्थाने मन्त्रः सामर्थ्यसत्त्वाद्विनियोक्तुं युज्यत इति सामर्थ्यं पर्यालोच्य तस्मादेव मन्त्रस्येन्द्रशेषत्वप्रत्यायिकां श्रुतिं कल्पयति, शेषत्वस्य विध्येकगम्यत्वात्। ततश्च लैङ्गिको विनियोगो विलम्बते। श्रौतो विनियोगस्तु प्रत्यक्षश्रुत्या झटिति प्रवर्तते। ततश्च लिङ्गविनियोगस्य श्रुतिकल्पनया विप्रकर्षान्न श्रुतिलिङ्गयोस्तुल्यबलत्वम् । न च लिङ्गोपस्थापितसाध्यसाधनभावस्य प्रयोगविधित एव विध्युपपत्तौ किं पृथग्विधिकल्पनयेति वाच्यम्। अङ्गस्यैव सत. प्रयोगविधिपरिग्रह । न चाविहितमङ्ग भवति। ततश्च प्रयोगविधिपरिग्रहसिद्ध्यर्थमेव प्रातिस्विकविधि कल्पनीय । स च प्रत्ययमात्रस्य तद्घटितपदमात्रस्य चाप्रामाण्यात् 'इदमनेन कुर्यात्' इति कल्प्यत इत्यन्यदेतत्। न चैवमपि श्रुतिप्रवृत्तिदशायां लिङ्गस्याप्रवृत्त्या कथं तस्य श्रुत्या बाध इति वाच्यम्। वह्न्यौष्ण्यप्रत्यक्षेण प्रथमप्रवृत्तेन पश्चात्प्रवृत्ततदनुष्णत्वानुमानस्येव लिङ्गस्यापि प्रथमप्रवृत्तया श्रुत्या बाधसम्भवात्। यच्च विरोधाभावात्समुच्चय इति तन्न, विषयापहारलक्षणविरोधाभावेऽपि श्रुतेर्लिङ्गप्रवृत्तिप्रयोजकाकाङ्क्षाविच्छेदकतया विरोधसत्त्वात्। लिङ्गं ह्याकाङ्क्षितमेव मन्त्रं विनियोक्तुमुद्युङ्क्ते। मन्त्राकाङ्क्षा च प्रत्यक्षश्रुत्या गार्हपत्ये विनियोगादेव शान्तेति लिङ्गस्य प्रवृत्तिप्रतिबन्धादस्ति श्रुत्या विरोध इति न समुच्चयावकाशः। स्यादेतत्, श्रुतिलिङ्गयोरत्र विरोध एव नास्ति। द्वितीयाश्रुत्या हि गार्हपत्यस्य प्राधान्यम्, तृतीयया चैन्द्र्याः शेषत्वमवगतम्। ऐन्द्रीं प्रति गार्हपत्यस्य प्राधान्य गार्हपत्य प्रति चैन्द्र्या शेषत्वमित्यन्वयस्तु पदान्तरसमभिव्याहाररूपवाक्यगम्य । तत्र यच्छ्रुत्युपात्तमनिर्धारितविशेष शेषशेषित्व न तल्लिङ्गेन विरुध्यते। लिङ्गान्मन्त्रस्येन्द्रार्थत्वे सत्यपि श्रुत्युपात्तसामान्यरूपस्य गार्हपत्यप्राधान्यस्य काञ्चिदाग्नेयीं प्रति, ऐन्द्र्या शेषत्वस्य चेन्द्र प्रति सम्भवात्। परस्परनिरूपित शेषशेषित्व

सिद्धान्तस्तु—यद्यप्युभयोरपि श्रुतिकल्पनापेक्षा, तथापि श्रुतिकल्पने तस्मिँल्लिङ्गस्यास्ति सन्निकर्षः। सर्वमपि हि विनियोजकं प्रमाण विनियोज्यसामर्थ्यानुसारेण विनियुङ्क्ते। विनियोज्यसामर्थ्यं च पर्यालोच्यमाने पृथग्भावस्य सदनकरण एव सामर्थ्यं प्रत्यक्षमवगम्यते। ततश्च लिङ्ग श्रुतिमनुमाय झटिति प्रवर्तते। वाक्यन्तु प्रतिष्ठापने तस्य विनियोगसिद्ध्यर्थं वचनपूर्वकत्वरूपप्रतिष्ठापनविशेषणसमर्पकतया गौणसामर्थ्यात्मक लिङ्ग प्रथमतः कल्पयति, तत· श्रुतिमिति मन्द विनियुङ्क्ते। एवञ्च वाक्यप्रमाण श्रुतिकल्पनेन लिङ्गकल्पनेन च व्यवहितमिति वाक्यस्य लिङ्गापेक्षया विप्रकृष्टत्वाल्लिङ्गमेव बलीय'। किञ्च अर्थैक्यनिबन्धनमेकवाक्यत्व समभिव्याहारात्स्वध्यवसानम्। ततश्चार्थैक्याभावे एकवाक्यत्वस्यैवानिर्वाहात्तेन श्रुतिकल्पनानुपपत्तेरेकवाक्यतासिद्ध्यर्थं प्रथमतः सामर्थ्यकल्पनमावश्यकम्। सामर्थ्ये च पर्यालोच्यमाने नानावाक्यत्वस्यैवावगमान्नैकवाक्यताया उन्मेषोऽपीति विभज्यैव विनियोगः॥

इत्यष्टम लिङ्गप्राबल्याधिकरणम्॥ ८॥

९

अथ वाक्यप्रकरणयोर्विरोधे चिन्त्यते। सूक्तवाकनिगदे "अग्नीषोमाविद हविरजुषेताम्, अवीवृधेतां महो ज्यायोऽक्राताम्" "इन्द्राग्नी इद हविरजुषेताम्" इत्यादावग्नीषोमादिदेवतापदं पौर्णमास्याममावास्यायाञ्च यथालिङ्ग विनिष्कृष्य प्रयोक्तव्यमिति 'कृत्स्नोपदेशादुभयत्र सर्ववचनम्' इत्यधिकरणे स्थितम्। तत्र पौर्णमास्या विनियुक्तस्य 'अग्नीषोमौ' इत्यस्य शेष· "अवीवृधेतां महो ज्यायोऽक्राताम्" इति। स किम् 'अग्नीषोमौ' इत्यनेनैकवाक्यं सद्वाक्यप्रमाणेन पौर्णमासीमात्राङ्गम्? उत प्रकरणादुभयार्थं सदिन्द्राग्निप्रकाशनद्वारा दर्शाङ्गमपि? इति सशय। प्रधानाकाङ्क्षालक्षण प्रकरणमव्यभिचरितप्रधानसंस्पर्शि। अतो नैवविधवाक्यप्रमाणात्प्रबलमिति तन्निबन्धन एव विनियोग'। नापि प्रकरणस्य श्रुतिकल्पनाविप्रकर्षो दौर्बल्यहेतुरस्ति। तथा चामावास्यायाम् 'इन्द्राग्नी' इत्यतः पूर्वोत्तराभ्याम् "इद हविरजुषेताम्, अवीवृधेता महो ज्यायोऽक्राताम्" इत्युभाभ्यामिन्द्राग्नी प्रकाशयितव्याविति पूर्व पक्ष॥

सिद्धान्तस्तु—'अग्नीषोमौ' इत्यस्य 'इद हवि.' इत्यादेश्च प्रत्यक्षमेकवाक्यता गम्यते। तत्र सामर्थ्यश्रुत्योर्द्वयोरेव कल्पनमिति सन्निकर्षः। 'इन्द्राग्नी' इत्यनेन तु

नत्वाद्वाक्यमेव बलीयः। अन्यथा "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याममग्नये जुष्टं निर्वपामि" इत्यत्र सवित्रादिपदानामेकवाक्यत्वानुसारेण निर्वापप्रशंसार्थकत्वानुपपत्तेः। ततश्च 'स्योनं ते' इति पूर्वभागस्य 'तस्मिन्त्सीद' इत्युत्तरभागस्य चैकवाक्यतया प्रतिष्ठापने विनियोगः। एकवाक्यतया सदनकरणपूर्वकप्रतिष्ठापनस्य मन्त्रप्रतिपाद्यत्वात्। न तु लिङ्गात्पूर्वभागस्य सदनकरणे उत्तरभागस्य च प्रतिष्ठापने इति विभज्य विनियोगः। सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात्, लिङ्गाद्विभज्य प्रयोगे उत्तरभागे 'तस्मिन्' इत्यस्य पूर्वोक्तसापेक्षत्वेनाबोधकत्वापाताच्च। ननु तत्र प्रकरणे सवित्रादिदेवतानामभावात्सवित्रादिपदानां पृथग्भावे सत्यानर्थक्यापत्त्या निर्वापप्रशंसार्थत्वं स्वीक्रियते। नैतावता लिङ्गाद्वाक्यप्राबल्यमायाति। प्रकृते हि पृथग्भूतयोरपि पूर्वोत्तरभागयोर्नानर्थक्यम्। तयोः स्वार्थप्रतिपादनसम्भवात्, 'तस्मिन्' इति सर्वनामाकाङ्क्षाया वाक्यान्तरोपस्थितिमादाय शान्तेश्च, पुरुषसूक्ते "तस्माद्विराडजायत" इति मन्त्रगततच्छब्दवत्। "ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्त्रं पातु ता इदं ब्रह्म क्षत्त्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा" इत्यादिराष्ट्रभृन्मन्त्रेषु 'ताभ्यः स्वाहा' इतिवच्च। तत्र हि तच्छब्दः "तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्मक्षत्त्रं पान्तु" इति पूर्वपूर्वमन्त्रोपात्ता अप्सरसः परामृशति। न च तत्र "ऋताषाडृतधामाग्निर्गन्धर्वः स इदं ब्रह्मक्षत्त्रं पातु तस्मै स्वाहा" "तस्यौधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्मक्षत्त्रं पान्तु ताभ्यः स्वाहा" इति यथालिङ्गं स्त्रीवाचकशब्दानां विनिष्कृष्यैव प्रयोग इति वाच्यम्। सङ्कर्षकाण्डे एवमपि 'तस्य' इति तच्छब्दस्य पूर्वपूर्वमन्त्रोपात्ताग्न्यादिसाकाङ्क्षत्वात् 'ऋताषाडृतधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात्' इति पूर्वपक्षयित्वा, 'यथासमाम्नानं वा' इति सूत्रेण यथामन्त्रपाठमेव व्यतिषक्ततया पूर्वपूर्वमन्त्रस्य प्रयोगः, 'ताभ्यः स्वाहा' इति सर्वनाम्नः पूर्वपूर्वमन्त्रव्यतिषक्तस्त्रीवाचकपदान्तरोपस्थितिमादायाकाङ्क्षाशान्तेरिति सिद्धान्तयिष्यमाणत्वाच्च। ततश्च प्रकृतेऽपि यथालिङ्गं विभज्य विनियोगोऽस्त्विति चेत्तर्हि मा भूद्वाक्यं लिङ्गाद्बलीयः। विनिगमनाविरहादुभयं तुल्यबलमस्तु। उभयोरपि श्रुतिकल्पनामुखेनैव विनियोजकत्वाविशेषात्पूर्वोत्तरभागसमभिव्याहारात्मकवाक्यप्रमाणेनापि मन्त्रस्य सदनं प्रतिष्ठापनञ्च प्रति साध्यसाधनभावप्रतीत्या श्रुतिकल्पनायास्तत्राप्यवश्यम्भावात्। एवञ्च सकलस्य सदने प्रतिष्ठापने च, अथवा विभज्य सदनकरणे पूर्वभागस्य, प्रतिष्ठापने उत्तरभागस्य विनियोग इति पूर्वः पक्षः।

विदेवनादिषु राजसूयशब्दो नास्ति, तथापि राजसूयसंशब्दिताङ्गसन्दष्टत्वात्तेषामप्यस्ति राजसूयप्रकरणपरिग्रहः। अतो राजसूयार्थो विदेवनादयः॥

इति दशम प्रकरणप्राबल्याधिकरणम्॥ १०॥

११

अथ क्रमसमाख्ययोर्विरोधे चिन्त्यते। पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्रप्रोक्षणक्रमे 'शुन्धध्वम्' इति मन्त्रः समाम्नातः। स किं समाख्यया पुरोडाशपात्राङ्गम्? उत क्रमवशात्सान्नाय्यपात्राङ्गम्? इति संशय.। 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्न' इत्यधिकारे 'पौरोडाशपुरोडाशात्ष्ठन्' इति व्युत्पादितपौरोडाशिकसमाख्यायाः पुरोडाशसम्बन्धवाचिन्या. श्रुतिवद्विनियोगे इतरानपेक्षत्वेन क्रमापेक्षया प्राबल्यात्पुरोडाशपात्राङ्गमेव मन्त्र इति पूर्वः पक्ष। सिद्धान्तस्तु—पाचकादिशब्दे प्रत्ययेन पुरुषोऽभिधीयते। सम्बन्धस्तु न कस्यचिद्वाच्यः, समभिव्याहारलभ्य एव, अनन्यलभ्यस्यैव शब्दार्थत्वात्। उक्तञ्च वार्तिके—

'पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यक'।
पाकयुक्तः पुनः कर्ता वाच्यो नैव तु कस्यचित्'॥ इति।

एव पौरोडाशिकशब्देऽपि प्रकृत्या पुरोडाशः प्रत्ययेन काण्डमभिधीयते। सम्बन्धस्तु समभिव्याहारलभ्य। क्रमे तु समानदेशत्वलक्षण' सम्बन्धः प्रत्यक्ष इति क्रमो बलवान्। न चानभिहितस्यापि वाक्यार्थविषया प्रतीयमानत्वान्न कल्पनप्रसक्तिरिति वाच्यम्। पौरोडाशिकपदं हि केवलं स्वतो न सम्बन्धसद्भावे प्रमाणम्, केवलस्य[1] पदस्याप्रमाणत्वात्। ततश्च 'पौरोडाशिकमधीते' 'पौरोडाशिक समाप्तम्' इत्यादौ समाख्या सम्बन्धनिमित्ता श्रुत्वा पुरोडाशस्य मन्त्रस्य च सम्बन्धः कश्चिदस्तीति कल्पनीयम्। तेन च समाख्याकल्पितमन्त्रसम्बन्धेन पुरोडाशपात्रशुन्धनस्य स्मारकतन्मन्त्रविशेषाकाङ्क्षा कल्प्या। तत एकवाक्यत्वम्। तच्च मन्त्राम्नानबलकल्प्यमन्त्रविध्येकवाक्यत्वरूपम्। मन्त्रस्य सामान्यत पात्रशुन्धनसमर्थताया. स्वत एव सिद्धे, तत श्रुति कल्प्या। ततो विनियोग। मन्त्रस्य तु समानदेशत्वलक्षण-

1 'प्रमाणम्' 'केवलस्य' इत्यनयोर्मध्ये. क, ख, ग. पुस्तकेषु 'वस्तुसिद्धे--प्रमाणाधीनत्वात्' इत्यधिक दृश्यते

तदुत्तरेण 'इदं हवि.' इत्यनेन शान्ताकाङ्क्षेण तस्यैकवाक्यता कल्पयित्वा, तस्मात्सा मर्थ्यश्रुत्यो. कल्पनमिति विप्रकर्ष. । ततश्च प्रधानसंस्पर्शिनोऽपि प्रकरणस्य प्रामाण्यं श्रुतिकल्पनाधीनमिति तद्विप्रकर्षाद्दौर्बल्यमेव । ततश्च 'अग्नीषोमौ' इत्यनन्तरपठितस्य 'इद हवि ' इत्यादे. पौर्णमास्यङ्गत्वमेव । एवम् "पौर्णमास्या वैमृधमनुनिर्वपति" इति वाक्यावगतेन वैमृधस्य पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शपूर्णमासोभयाङ्गत्वबाध इत्यादि द्रष्टव्यम् ॥

इति नवम वाक्यप्राबल्याधिकरणम् ॥ ९ ॥

१०

अथ प्रकरणस्थानयोर्विरोधे चिन्त्यते । स्थान नाम क्रम । अस्ति राजसूय । तत्र सन्ति "अनुमत्यै पुरोडाशमष्टाकपालम्" इत्याद्या इष्टयः । "आदित्या मल्हा गर्भिणीमालभते" इत्याद्या पशव । "अग्निष्टोममग्र आहरति" इत्यादयः सोमाश्च । सर्वे चैते राजसूयशब्दवाच्याः फलवन्त' समप्रधाना । तेषाञ्च विकृतित्वान्नास्ति प्रातिस्विक प्रकरणम्, प्राकृतेनेत्थम्भावेन कथम्भावाकाङ्क्षापूरणात् । सत्या हि वैकृताकाङ्क्षाया सन्निधिपठितैरुपहोमादिभिस्तस्या शान्त्या विकृतिषु कथ चोदकप्रवृत्ति. स्यात् । राजसूयात्मना तु तेषामस्त्येव प्रकरणम् । न च निवृत्ताकाङ्क्षत्वादेव राजसूयात्मनापि कथ प्रकरण स्यादिति वाच्यम् । "राजसूयाय श्येना उत्पुनाति" "राजसूयेनेजान' सर्वमायुरेति" इत्येव राजसूयशब्दसहचरिततदङ्गविध्यनुसारेण निवृत्ताया अप्याकाङ्क्षाया. पुनरुत्थानात् । अतो राजसूयात्मना प्रकरणमस्ति । तत्र राजसूयेऽभिषेचनीयो नामास्ति सोम. । तत्सन्निधौ "दिशोऽभ्यय राजाभूदिति पञ्चाक्षान् प्रयच्छति" "शौन शेपमाख्यापयते" इत्येव विदेवनादयः समाम्नाता । ते किं कृत्स्नस्य राजसूयस्याङ्गम् ? उताभिषेचनीयस्यैव ? इति सशय । प्रकरणात्साधारणात्सन्निधिरूपक्रमस्यासाधारणतया बलवत्त्वात्तद्वशादभिषेचनीयाङ्गमिति प्राप्ते, सिद्धान्त —यद्यपि सन्निधिरसाधारण, तथापि न तस्य साक्षादङ्गत्वप्रत्यायकता । किन्तु विशिष्याकाङ्क्षाकल्पकतयैव वाच्या । एवञ्चाभिषेचनीयस्य विदेवनादीनाञ्च विशिष्याकाङ्क्षाकल्पनामुखेन सन्निधेर्विनियोजकत्वम् । ततश्च क्लृप्ताकाङ्क्षालक्षणप्रकरणेन झटिति सर्वार्थतया तेषा विनियोगाद्विप्रकृष्ट. सन्निधिस्तेन बाध्यते । यद्यपि

श्रूयते—"तिस्र' साह्नस्योपसदो द्वादशाहीनस्य" इति। समानेनाह्ना सन्ति ते यस्य सुत्या स क्रतुः साह्नः एकदिनसाध्यसुत्याको ज्योतिष्टोमः। छान्दसं रूपम्। तत्र साह्नस्य ज्योतिष्टोमस्य त्र्युपसत्कत्वमङ्गमिति निर्विवादम्। द्वादशोपसत्कत्वमप्यहीनश्रुत्या विधीयमान प्रकरणात्तस्यैवाङ्गम्? उत द्विरात्राद्यहर्गणाङ्गम्? इति संशयः। तत्र पूर्वपक्षयति—

## अहीनो वा प्रकरणाद्गौणः ॥ १४ ॥

वाशब्दः सम्भावनायाम्। अहीनशब्द प्रकरणाज्ज्योतिष्टोमेऽपि वर्तितुमर्हति। नन्वप्रसिद्ध' कथ तत्र वर्तेतेत्यत आह—गौण इति। अवयवयोगयुक्त इत्यर्थः। न हीनः अहीन इति व्युत्पत्तेः। ज्योतिष्टोमो हि केनापि सोमक्रतुना न हीयते न त्यज्यते, तस्य प्रकृतित्वेन सर्वैः सोमक्रतुभिरपेक्ष्यमाणत्वात्। ततश्च नाहीनश्रुत्या प्रकरणस्य विरोध इति भवति द्वादशोपसत्कत्व त्र्युपसत्कत्वं वा ज्योतिष्टोमाङ्गमिति ॥

अथ सिद्धान्तयति—

## असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १५ ॥

तुर्नार्थे। द्वादशोपसत्कत्वं न ज्योतिष्टोमाङ्गम्। किन्तु तस्माज्ज्योतिष्टोमप्रकरणादपकृष्येत अन्यत्र निविशेत। द्विरात्राङ्गमिति यावत्। कुत? मुख्यस्य असंयोगात्—मुख्यस्य प्रकृतिभूतज्योतिष्टोमस्य साह्नशब्देनोपात्तस्य पुनरहीनशब्देन संयोगासम्भवात्। एकार्थविषये शब्दद्वयप्रयोगस्य वैयर्थ्यात्। एवं साह्नशब्दवाच्यज्योतिष्टोमादन्यस्यैवाहीनशब्दतः प्रतीयमानत्वेन प्रकरणस्य 'अहीनस्य' इति षष्ठीश्रुत्या विरोधान्न ज्योतिष्टोमाङ्गता द्वादशोपसत्कत्वस्य युज्यते। मुख्यस्य प्रकृतिभूतज्योतिष्टोमस्य द्विरात्राद्यहर्गणे रूढेनाहीनशब्देन संयोगासम्भवादित्यप्यर्थः। 'तस्य समूह' इत्यधिकृत्य 'अह्नः खः क्रतौ' इति सूत्रेणाहर्गणसाध्यसुत्याकक्रतौ वाच्ये अहन्शब्दात्खप्रत्यये 'आयनेयीन्' इत्यादिना तस्य ईनादेशे अहीनशब्दस्य व्युत्पादितत्वात्। ननु द्विरात्रादावप्यहर्गणसाध्यसुत्यासमूहेऽहीनशब्दो योगेनैवानुशिष्यते। ततश्च योगविशेषात्प्रकरणानुग्रहाय नञ्समास एवाश्रयणीय इति चेत्—न, एव सति [1]सत्रेष्वप्यहीनशब्दस्य प्रयोगापत्तेः। एव चाहर्गणविशेषे द्विरात्रादावेवायमहीनशब्द। मुख्यस्य प्रकृतिभूतज्योतिष्टोमस्य मध्योदात्ताहीनशब्देन संयोगासम्भवादित्यप्यर्थः। अहीन-

1. सत्रेऽपि. क, ग, घ, मु. पा.

सम्बन्धस्य प्रत्यक्षत्वान्न तत्कल्पने समाख्या व्याप्रियते, किन्त्वेकवाक्यत्वादिश्रुत्यन्तकल्पन एव व्याप्रियत इति श्रुतिकल्पने सन्निकर्षात्समाख्यातः क्रमो बलवान्। तस्मात्सान्नाय्यपात्राङ्गमेव मन्त्रः। यद्यपि तैत्तिरीयशाखायामयं मन्त्रः पुरोडाशपात्रशुन्धनक्रमेऽप्याम्नातः, तथापि शाखान्तरविषयो विचार इत्यदोषः ॥

इत्येकादशं क्रमप्राबल्याधिकरणम् ॥ ११ ॥

१२

तदेवं श्रुत्यादिप्रमाणेषु पूर्वंपूर्वं प्रबलमुत्तरोत्तरं दुर्बलमिति स्थितम्। किमस्य विचारस्य फलम्। प्रबलेन पूर्वपूर्वेणोत्तरोत्तरस्य बाध इति चेत्—न, उत्तरोत्तरं लिङ्गादि हि किं श्रुतिकल्पनया लब्धप्रमाणभावं सद्बाध्यते ? उतालब्धप्रमाणभावम् ? नाद्यः, श्रुतिकल्पनया प्रमाणभावं प्राप्तस्य बाधानुपपत्तेः। न द्वितीयः, अलब्धप्रमाणभावस्य लिङ्गादेरकिञ्चित्करतया तद्विनियोगस्याप्रसक्तत्वात्। नैष दोषः, श्रुत्यादिभिर्हि पूर्वंपूर्वैः स्वस्वविषयविनियोगे मन्त्रादीनामवगमिते सति लैङ्गिकादिविनियोगान्तराकाङ्क्षालक्षणमूलोच्छेदाच्छ्रुतिकल्पना प्रतिबध्यते। ततश्चालब्धप्रमाणभावस्यैव लिङ्गादेर्बाधान्नोक्तदोषः। एवञ्च श्रुत्यादिप्रवृत्त्या लिङ्गादेः प्रवृत्तिप्रतिबन्ध एव बाधः। सोऽयमप्राप्तबाध इत्युच्यते। अत्र दृष्टान्तः प्रदर्शितो वार्तिके—

'निश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च।
एकमेव फलं प्राप्तुमुभावारोहतो यदि ॥
अधःसोपानमेकोऽन्य उत्तरं तु तयोः श्रितः।
उभयोस्तु जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥
आरोहतोस्तदेको हि तत्फलं प्राप्नुयात्तयोः।
प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा ॥' इत्यादि।

"कुशमयं बर्हिर्भवति" इति प्राकृतं तु प्राप्तमेव कुशमयत्वम् "शरमयं बर्हिर्भवति" इति वैकृतेन बाध्यत इति दशमाद्ये वक्ष्यते ॥

इति द्वादशं बाधयोग्यताधिकरणम् ॥ १२ ॥

१३

तदेवं श्रुत्यादीनां बलाबलं विचारितम्। अधुना विरोधः क्वास्ति नास्तीति विचार्यते। प्रथमं तावत्प्रकरणस्य श्रुत्या विरोधसद्भावविचारः प्रस्तूयते। ज्योतिष्टोमे

यजमानेभ्य." इति श्रुतम्। बहिष्पवमानस्तोत्रे आद्या स्तोत्रीया ऋक्प्रतिपदित्युच्यते। किमिद प्रतिपद्विधिद्वय ज्योतिष्टोम एव निविशते ? उत "कुलायेन राजा पुरोहितश्च सायुज्यकामौ यजेयाताम्" "एको द्वौ बहवो वाहीनैर्यजेरन्" इति द्विबहुयजमानकेषु कुलायादिषूत्कृष्यते ? इति संशये, सिद्धान्तेनोपक्रमते—

## द्वित्वबहुत्वयुक्तं [1]चाचोदनात्तस्य ॥ १६ ॥

यजमानद्वित्वबहुत्वयुक्त प्रतिपद्विधिद्वयमपि कुलायादावुत्कृष्यते। कुत. ? तस्य अचोदनात्। तस्य द्वित्वस्य बहुत्वस्य च प्रकृतौ ज्योतिष्टोमे अविधानात्। 'यजेत' इति तदेकत्वस्यैव श्रवणात्। तस्य चोपादेयकर्तृगतत्वेन विवक्षितत्वात्॥

अथ पूर्वपक्षमुत्थाप्य निराकरोति—

## पक्षेणार्थकृतस्येति चेन्न प्र तेरेकसंयोगात् ॥ १७ ॥

"वसन्ते वसन्ते ज्योतिष्टोमेन यजेत" इति ज्योतिष्टोमस्य नित्यप्रयोगविधि., "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति काम्यप्रयोगविधिरिति द्वितीयस्य चतुर्थे यावज्जीविकाधिकरणे निरूपितम्। तत्र काम्यप्रयोग सर्वाङ्गोपेत एव फल साधयति। नित्यप्रयोगस्य त्ववश्यकर्तव्यत्वादशक्यानुष्ठानमङ्गं प्रयोगविधिर्न सङ्गृह्णातीति तत्राशक्यकतिपयाङ्गत्यागेऽपि न दोष इति षष्ठतृतीयाद्ये वक्ष्यते। तथा च बहुद्रव्यसाध्यं ज्योतिष्टोम यद्येक' कर्तुं न शक्नुयात्तदा कर्त्रेकत्वमङ्गं परित्यज्य द्विबहव कुर्यु'। ततश्चार्थकृतस्याशक्तिनिमित्तकस्य यजमानद्विबहुत्वस्य सम्बन्धि प्रतिपद्द्वयं नित्यप्रतिपद्य पक्षेण विकल्पेन ज्योतिष्टोम एव निवेशमर्हति। तथा चैकस्य शक्तौ नित्या प्रतिपत्। तदशक्तावनेकयजमानक इद प्रतिपद्द्वयमिति विकल्पो व्यवतिष्ठत इति चेत्—तन्न, कुत: ? प्रकृते एकसयोगात्। ज्योतिष्टोमस्योत्पत्तिवाक्ये 'यजेत' इत्येकेनैव कर्त्रा सयोगात्। उत्पत्तिकालेऽनुष्ठानाशक्तिहेतुदक्षिणाबाहुल्याद्यनवगमेन कर्त्रेकत्वस्यासद्भावविरोधितया सर्वथा परित्यागानर्हत्वात्। यदशक्यमङ्गं नित्यप्रयोगविधिर्न सङ्गृह्णाति तत्परित्यागमर्हति। यजमानैकत्वन्तु नित्यप्रयोगविधावपि श्रूयमाण कथ परित्यागमर्हति। किञ्च पुरुषप्रयत्नसाध्य यत्प्रधानविधिना कर्तव्यतया चोद्यते तद्विषय एव यथाशक्त्युपबन्ध नानुपादेयकालादिविषय इति वक्ष्यते। अनुपादेयञ्च यजमानस्यात्मीयमेकत्वम्। ततश्चैकमेव यजमानमधिकृत्य यथाशक्त्युपबन्ध. प्रवर्तते

1. वाचोद.

शब्दो हि मध्योदात्तः पठ्यते। नञ्समासे तु 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति पूर्वपदस्य नञः प्रकृतिस्वरेणोदात्तत्वे अहीनशब्द आद्युदात्तः स्यात्। नञो हि 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्युदात्तत्वमेव प्रकृतिसिद्धः स्वरः। न च 'प्रत्ययः' 'परश्च' 'आद्युदात्तश्च' इति प्रत्ययसंज्ञासन्नियोगशिष्टेनाद्युदात्तस्वरेणान्तरङ्गत्वादीनादेशात्पूर्वप्रवृत्तेन खप्रत्ययाकारस्योदात्तत्वे तत

ारस्य ईनादेशे तदीकारस्याहन्शब्दाकारस्य च 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तत्वे सति खप्रत्ययान्तत्वेऽप्यहीनशब्दस्य कथं मध्योदात्तत्वमिति वाच्यम्। 'आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' इति कात्यायनवार्तिके प्रत्ययोपदेशावस्थायामेवायनादिविधानेन ईनादेशस्य प्रत्ययसंज्ञाप्रवृत्तिदशायामेव प्रवर्तमानतया प्रत्ययस्वरेण तस्याद्युदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इत्यहन्शब्देऽकारस्य नकाराद्कारस्य चानुदात्तत्वे, [1]तस्य स्वरितत्वेऽहीनशब्दस्य मध्योदात्तत्वोपपत्तेः। यद्यपि द्वादशाहे विहितस्य द्वादशोपसत्कत्वस्य द्विरात्रादावपि चोदकतः प्राप्तेर्ज्योतिष्टोमप्रकरणे 'द्वादशाहीनस्य' इति न विधिः। किन्तु महतोऽहीनस्य महती संख्योचिता, अल्पस्य तु ज्योतिष्टोमस्याल्पेत्येवं त्र्युपसत्कत्वप्रशंसार्थोऽर्थवादः। तस्य च ज्यौतिष्टौमिकत्र्युपसत्कत्वस्तुत्युपयुक्तत्वान्न प्रकरणविरोधोऽस्ति। तथापि यत्र शाखासु द्वादशाहे द्वादशोपसत्कत्वं न विहितं तद्विषयोऽयं विचार इति वार्तिककृतः। शाखान्तरोपसंहारानित्यत्वस्य शाखान्तराधिकरणे प्रपञ्चितत्वादिति तदाशयः। प्रकारान्तरेणाप्यधिकरणप्रवृत्तिर्वार्तिकं उत्प्रेक्षिता क्लिष्टत्वादुपेक्षिता। याज्ञिकास्तु द्वादशाहप्रकरणे 'द्वादशोपसदः' इति विधिं सत्रभूतद्वादशाहविषय इति मन्यन्ते। वस्तुतस्तु स्वरविरोधात्पूर्वपक्षस्यैवानुत्थितेरधिकरणप्रवृत्तिश्चिन्त्या। छान्दसस्वरव्यत्ययेन पूर्वपक्षोत्थितिवर्णनन्तु क्लिष्टमेवेत्यास्तां तावत्॥

इति त्रयोदशमहीनाधिकरणम्॥ १३॥

१४

ज्योतिष्टोमे "उपास्मै गायता नरः" इति नित्यां प्रतिपदं विधाय "युवं हि स्थ स्वर्पती इति, द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" "एते असृग्रमिन्दव इति बहुभ्यो

1. 'तस्य' इत्यतः पूर्वं 'स्वरितात्संहितायामिति' इत्यधिकोंऽशः सर्वत्र दृश्यते, स चासङ्गतत्वादुपेक्षितः।

यजमानेभ्यः" इति श्रुतम्। बहिष्पवमानस्तोत्रे आद्या स्तोत्रीया ऋक्प्रतिपदित्युच्यते। किमिद प्रतिपद्विधिद्वयं ज्योतिष्टोम एव निविशते ? उत "कुलायेन राजा पुरोहितश्च सायुज्यकामौ यजेयाताम्" "एको द्वौ बहवो वाईानैर्यजेरन्" इति द्विवबहुयजमानकेषु कुलायादिषूत्कृष्यते ? इति संशये, सिद्धान्तेनोपक्रमते—

## द्वित्वबहुत्वयुक्तं [1]चाचोदनात्तस्य ॥ १६ ॥

यजमानद्वित्वबहुत्वयुक्त प्रतिपद्विधिद्वयमपि कुलायादावुत्कृष्यते। कुत ? तस्य अचोदनात्। तस्य द्वित्वस्य बहुत्वस्य च प्रकृतौ ज्योतिष्टोमे अविधानात्। 'यजेत' इति तदेकत्वस्यैव श्रवणात्। तस्य चोपादेयकर्तृगतत्वेन विवक्षितत्वात्॥

अथ पूर्वपक्षमुत्थाप्य निराकरोति—

## पक्षेणार्थकृतस्येति चेन्न प्रकृतेरेकसंयोगात् ॥ १७ ॥

"वसन्ते वसन्ते ज्योतिष्टोमेन यजेत" इति ज्योतिष्टोमस्य नित्यप्रयोगविधि, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति काम्यप्रयोगविधिरिति द्वितीयस्य चतुर्थे यावज्जीविकाधिकरणे निरूपितम्। तत्र काम्यप्रयोग सर्वाङ्गोपेत एव फल साधयति। नित्यप्रयोगस्य त्ववश्यकर्तव्यत्वादशक्यानुष्ठानमङ्गं प्रयोगविधिर्न सङ्गृह्णातीति तत्राशक्यकतिपयाङ्गत्यागेऽपि न दोष इति षष्ठतृतीयाद्ये वक्ष्यते। तथा च बहुद्रव्यसाध्यं ज्योतिष्टोम यद्येक' कर्तुं न शक्नुयात्तदा कर्त्रेकत्वमङ्गं परित्यज्य द्विवबहव कुर्यु'। ततश्चार्थकृतस्याशक्तिनिमित्तकस्य यजमानद्विवबहुत्वस्य सम्बन्धि प्रतिपद्द्वयं नित्यप्रतिपच्च पक्षेण विकल्पेन ज्योतिष्टोम एव निवेशमर्हति। तथा चैकस्य शक्तौ नित्या प्रतिपत्। तदशक्तावनेक्यजमानक इद प्रतिपद्द्वयमिति विकल्पो व्यवतिष्ठत इति चेत्—तन्न, कुत ? प्रकृते. एकसयोगात्। ज्योतिष्टोमस्योत्पत्तिवाक्ये 'यजेत' इत्येकेनैव कर्त्रा सयोगात्। उत्पत्तिकालेऽनुष्ठानाशक्तिहेतुदक्षिणाबाहुल्याद्यनवगमेन कर्त्रेकत्वस्यासञ्जातविरोधितया सर्वथा परित्यागानर्हत्वात्। यदशक्यमङ्गं नित्यप्रयोगविधिर्न सङ्गृह्णाति तत्परित्यागमर्हति। यजमानैकत्वन्तु नित्यप्रयोगविधावपि श्रूयमाण कथ परित्यागमर्हति। किञ्च पुरुषप्रयत्नसाध्य यत्प्रधानविधिना कर्तव्यतया चोद्यते तद्विषय एव यथाशक्त्युपबन्ध. नानुपादेयकालादिविषय इति वक्ष्यते। अनुपादेयञ्च यजमानस्यात्मीयमेकत्वम्। ततश्चैकमेव यजमानमधिकृत्य यथाशक्त्युपबन्ध. प्रवर्तते

---

1. वाचोद.

शब्दो हि मध्योदात्तः पठ्यते। नञ्समासे तु 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या.' इति पूर्वपदस्य नञः प्रकृतिस्वरेणोदात्तत्वे अहीनशब्द आद्युदात्तः स्यात्। नञो हि 'निपाता आद्युदात्ता.' 'उपसर्गाश्चाभिवर्जम्' इत्युदात्तत्वमेव प्रकृतिसिद्धः :। न च 'प्रत्ययः' 'परश्च' 'आद्युदात्तश्च' इति प्रत्ययसञ्ज्ञासन्नियोगशिष्टेनाद्युदात्तस्वरेणान्तरङ्गत्वादीनादेशात्पूर्वप्रवृत्तेन खप्रत्ययाकारस्योदात्तत्वे तत ।रस्य ईनादेशे तदीकारस्याहन्शब्दाकारस्य च 'अनुदात्त पदमेकवर्जम्' इत्यनुदात्तत्वे सति खप्रत्ययान्तत्वेऽप्यहीनशब्दस्य कथं मध्योदात्तत्वमिति वाच्यम्। 'आयनादिषूपदेशिवद्वचन स्वरसिद्ध्यर्थम्' इति कात्यायनवार्तिके प्रत्ययोपदेशावस्थायामेवायनादिविधानेन ईनादेशस्य प्रत्ययसञ्ज्ञाप्रवृत्तिदशायामेव प्रवर्तमानतया प्रत्ययस्वरेण तस्याद्युदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इत्यहन्शब्देऽकारस्य नकारादकारस्य चानुदात्तत्वे, [1]तस्य स्वरितत्वेऽहीनशब्दस्य मध्योदात्तत्वोपपत्तेः। यद्यपि द्वादशाहे विहितस्य द्वादशोपसत्कत्वस्य द्विरात्रादवपि चोदकतः प्राप्तेर्ज्योतिष्टोमप्रकरणे 'द्वादशाहीनस्य' इति न विधि'। किन्तु महतोऽहीनस्य महती संख्योचिता, अल्पस्य तु ज्योतिष्टोमस्याल्पेत्येव त्र्युपसत्कत्वप्रशंसार्थोऽर्थवाद.। तस्य च ज्यौतिष्टौमिकत्र्युपसत्कत्वस्तुत्युपयुक्तत्वान्न प्रकरणविरोधोऽस्ति। तथापि यत्र शाखासु द्वादशाहे द्वादशोपसत्कत्व न विहितं तद्विषयोऽयं विचार इति वार्तिककृतः। शाखान्तरोपसंहारानित्यत्वस्य शाखान्तराधिकरणे प्रपञ्चितत्वादिति तदाशय.। प्रकारान्तरेणाप्यधिकरणप्रवृत्तिर्वार्तिक उत्प्रेक्षिता क्लिष्टत्वादुपेक्षिता। याज्ञिकास्तु द्वादशाहप्रकरणे 'द्वादशोपसद ' इति विधि. सत्रभूतद्वादशाहविषय इति मन्यन्ते। वस्तुतस्तु स्वरविरोधात्पूर्वपक्षस्यैवानुत्थितेरधिकरणप्रवृत्तिश्चिन्त्या। छान्दसस्वरव्यत्ययेन पूर्वपक्षोत्थितिवर्णनन्तु क्लिष्टमेवेत्यास्ता तावत्॥

इति त्रयोदशमहीनाधिकरणम् ॥ १३ ॥

१४

ज्योतिष्टोमे "उपास्मै गायता नर." इति नित्या प्रतिपद विधाय "युव हि स्थ स्वर्पती इति, द्वयोर्यजमानयो' प्रतिपदं कुर्यात्" "एते असृग्रमिन्दव इति बहुभ्यो

1. 'तस्य' इत्यत पूर्वं 'स्वरितात्संहितायामिति' इत्यधिकोंऽशः सर्वत्र दृश्यते, स चासङ्गतत्वादुपेक्षित.

शब्दस्याप्येकदेशवचनत्वेन तद्द्रव्यकयागस्य स्वयं द्रव्यान्तराप्रयोजकतया यत्रैकदेशो विद्यते तत्र तदीयैकदेशस्य ग्राह्यत्वात्तस्य चैकदेशिसम्मतायातस्य प्रतिपाद्यत्व न्याय्य-मिति पत्नीसयाजादीनामग्नीषोमीयपशुहविर्हृदयाद्यनुनिष्पाद्यजाघनीप्रतिपत्तिकर्म-त्वात्प्रकरणं बाधित्वा वाक्यात्तत्रोत्कर्ष.। तृतीया तु "प्रयाजशेषेण हवींषि" इति-वद्व्यत्ययेन नेतव्या ॥

अथ सिद्धान्तयति—

## चोदना वापूर्वत्वात् ॥ १९ ॥

वाशब्द एवार्थे। जाघन्या एव पत्नीसयाजार्थतया चोदना, न तु जाघन्य-र्थतया पत्नीसयाजानाम्। कुत ? पूर्वत्वात् अपूर्वत्वाच्च। तथाहि—किं जाघन्युद्देशेन पाशुका पत्नीसयाजा प्रतिपत्तितया विधीयन्ते ? उत दार्शपूर्णमासिका ? नाद्य', अपूर्वत्वात् पाशुकाना पत्नीसंयाजानां प्रकरणान्तरगतत्वेनासन्निहितत्वात्। न द्वितीय, दार्शपूर्णमासिकपत्नीसंयाजानाम् 'पत्नी संयाजयन्ति" इत्युत्पत्तिवाक्ये द्रव्यविशेषासंयुक्ततया सन्निहितत्वात् द्रव्यापेक्षेषु च तेषु जाघन्या विधानौचित्यात् दर्शपूर्णमासयोर्जाघन्या भूतभाव्युपयोगाभावेन संस्कारानर्हतया पाशुक्याश्च तस्या असन्निहिततया [1]दार्शपूर्णमासिकपत्नीसंयाजानां तत्प्रतिपत्तितया विधानानुपपत्तेश्च। ततश्च द्रव्यासंयुक्तोत्पन्नदार्शपूर्णमासिकपत्नीसयाजोद्देशेन तदपेक्षितजाघनीद्रव्य-विधिरिति युक्तम्। न च जाघन्युद्देशेनापूर्वाः पत्नीसंयाजाः प्रतिपत्तितया विधीय-न्तामिति वाच्यम्। 'पत्नीः संयाजयन्ति' इत्यनन्तरविहिताना मनसि विपरिवर्तमा-नानामेव जाघनीवाक्येऽपि 'पत्नी सयाजयन्ति' इत्यनेन परामर्शौचित्यात्, जाघ-न्युद्देशेन यागविधौ यागोद्देशेन च पत्नीशब्दप्रतिपाद्यसोमादिदेवताविधौ विरुद्धत्रि-कद्वयापाताच्च। पत्नीविशिष्टयागविधौ गौरवात्। विशिष्टयागानुवादेन जाघनीमात्र-विधानोपपत्ते'। न च विशिष्टानुवादेऽपि वाक्यभेद' शङ्क्य। पत्नीशब्दस्याविव-क्षितार्थत्वात्। 'जाघन्या सयाजयन्ति' इत्येतावतैवानन्तरवाक्यविहिताना पत्नीसंया-जानामुपस्थितिसम्भवात्। अपूर्वत्वादप्राप्तत्वाज्जाघन्या एव चोदनेत्यपि योज्यम्। एवञ्च जाघन्या अकृतार्थत्वात्तामुद्दिश्य पत्नीसयाजविधेरप्रवृत्ते 'प्रयाजशेषेण' इति-वद्विभक्तिव्यत्ययकल्पनापि न प्रसज्यते ॥

1. दर्शपूर्णमास. क

'एको यथाशक्ति कुर्यात्' इति। तथा च ज्योतिष्टोमे यजमानद्विबहुत्वाभावात्तत्संयुक्तं प्रतिपद्विधानं कुलायादिषूत्कृष्यते। न च यजमानश्च यजमाना च, यजमानश्च यजमाने च इत्येवम् 'पुमान्स्त्रिया' इति कृतैकशेषयोर्द्विवचनबहुवचनान्तयजमानशब्दयोरेकानेकपत्नीकयजमानाभिधायिनोर्ज्योतिष्टोमे सम्भवान्नोत्कर्ष इति वाच्यम्। विरूपैकशेषस्य लाक्षणिकत्वात्। किञ्च द्विबहुवचनयोः पत्न्यभिधायकत्वे ज्योतिष्टोमस्य कदाप्येकयजमानकत्वाभावादिमे एव प्रतिपदौ स्याताम्। ततश्च नित्यप्रतिपद्विधिरनर्थकः स्यात्। विषमशिष्टविकल्पो वा स्यात्। तस्मादुत्कर्षः॥

इति चतुर्दश प्रतिपदधिकरणम्॥ १४॥

१५

दर्शपूर्णमासयोः श्रूयते "जाघन्या पत्नी संयाजयन्ति" इति। अत्र "सोमं यजति" "त्वष्टारं यजति" "देवानां पत्नीर्यजति" "अग्निं गृहपतिं यजति" इति सोमादय पत्नीशब्देन सृष्टिन्यायेन (गि) विवक्षिताः। द्वितीया तु 'सम्प्रदानस्य च कर्मसंज्ञा वक्तव्या' इति वाचनिकी। जाघनीशब्दो लाङ्गूलमाचष्टे। तत्र किं जाघनीमुद्दिश्य पत्नीसंयाजाः संस्कारा विधीयन्ते? ततश्च संस्कार्यतया प्राधान्याद्यत्र जाघनी तत्र पत्नीसंयाजा उत्कृष्यन्त इत्यग्नीषोमीयपश्वनुनिष्पन्नजाघनी संस्कर्तव्येति फलति, उत पत्नीसंयाजोद्देशेन जाघनी विधीयते? दर्शपूर्णमासयोरेवापणस्थजाघनी सम्पाद्येति संशये, पूर्वपक्षयति—

## जाघनी चैकदेशत्वात्॥ १८॥

जाघनीसंस्कारविधिः संस्कार्यानुसारेणाग्नीषोमीयपशावुत्कृष्यते। संस्कारविधौ हि पत्नीसंयाजानां सन्निपत्योपकारकतया दृष्टार्थत्वम्। ननु तृतीयाश्रुत्या जाघन्या गुणत्वप्रतीतेस्तत्संस्कारविधित्वमसिद्धम्, ततश्च पत्नीसंयाजोद्देशेनैव [1]विधीयमाना जाघनी दर्शपूर्णमासयोरेव क्रयादिना छागहरिणादिप्रकृतिकस्वनिष्पत्तिं प्रयोजयेदिति नोत्कर्ष इत्यत आह—एकदेशत्वादिति। 'उत्तरार्धात्स्विष्टकृते समवद्यति' इत्युत्तरार्धशब्दस्यैकदेशवचनतया कस्योत्तरार्धादित्याकाङ्क्षायां प्रकृताग्नेयादिद्रव्यस्येत्यवगमेन द्रव्यान्तराप्रयोजकत्वात्स्विष्टकृतः प्रतिपत्तित्वमिति चतुर्थाद्यपादे 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' इत्यधिकरणे व्यवस्थापयिष्यते। तथा च जाघनी-

1. विधीयमाना जाघनी क, ख, ग. पुस्तकेषु नास्ति.

शब्दस्याप्येकदेशवचनत्वेन तद्द्रव्यकयागस्य स्वयं द्रव्यान्तराप्रयोजकतया यत्रैकदेशो विद्यते तत्र तदीयैकदेशस्य ग्राह्यत्वात्तस्य चैकदेशिसम्पत्तायातस्य प्रतिपाद्यत्व न्याय्यमिति पत्नीसयाजादीनामग्नीषोमीयपशुहविर्हृदयाद्यनुनिष्पाद्यजाघनीप्रतिपत्तिकर्मत्वात्प्रकरणं बाधित्वा वाक्यात्तत्रोत्कर्ष.। तृतीया तु "प्रयाजशेषेण हवींषि" इतिवद्व्यत्ययेन नेतव्या ॥

अथ सिद्धान्तयति—

## चोदना वापूर्वत्वात् ॥ १९ ॥

वाशब्द एवार्थे। जाघन्या एव पत्नीसयाजार्थतया चोदना, न तु जाघन्यर्थतया पत्नीसयाजानाम्। कुत ? पूर्वत्वात् अपूर्वत्वाच्च। तथाहि—किं जाघन्युद्देशेन पाशुका पत्नीसयाजा प्रतिपत्तितया विधीयन्ते ? उत दार्शपूर्णमासिका ? नाद्य; अपूर्वत्वात् पाशुकानां पत्नीसंयाजानां प्रकरणान्तरगतत्वेनासन्निहितत्वात्। न द्वितीय, दार्शपूर्णमासिकपत्नीसयाजानाम् 'पत्नीः संयाजयन्ति" इत्युत्पत्तिवाक्ये द्रव्यविशेषासंयुक्ततया सन्निहितत्वात् द्रव्यापेक्षेषु च तेषु जाघन्या विधानौचित्यात् दर्शपूर्णमासयोर्जाघन्या भूतभाव्युपयोगाभावेन संस्कारानर्हतया पाशुक्याश्च तस्या असंनिहिततया [1]दार्शपूर्णमासिकपत्नीसंयाजानां तत्प्रतिपत्तितया विधानानुपपत्तेश्च। ततश्च द्रव्यासयुक्तोत्पन्नदार्शपूर्णमासिकपत्नीसयाजोद्देशेन तदपेक्षितजाघनीद्रव्यविधिरिति युक्तम्। न च जाघन्युद्देशेनापूर्वाः पत्नीसंयाजा प्रतिपत्तितया विधीयन्तामिति वाच्यम्। 'पत्नीः संयाजयन्ति' इत्यनन्तरविहिताना मनसि विपरिवर्तमानानामेव जाघनीवाक्येऽपि 'पत्नी सयाजयन्ति' इत्यनेन परामर्शौचित्यात्, जाघन्युद्देशेन यागविधौ यागोद्देशेन च पत्नीशब्दप्रतिपाद्यसोमादिदेवताविधौ विरुद्धत्रिकद्वयापाताच्च। पत्नीविशिष्टयागविधौ गौरवात्। विशिष्टयागानुवादेन जाघनीमात्रविधानोपपत्ते·। न च विशिष्टानुवादेऽपि वाक्यभेद. शङ्क्य। पत्नीशब्दस्याविवक्षितार्थत्वात्। 'जाघन्या सयाजयन्ति' इत्येतावतैवानन्तरवाक्यविहितानां पत्नीसयाजानामुपस्थितिसम्भवात्। अपूर्वत्वादप्राप्तत्वाज्जाघन्या एव चोदनेत्यपि योज्यम्। एवञ्च जाघन्या अकृतार्थत्वात्तामुद्दिश्य पत्नीसंयाजविधेरप्रवृत्तेः 'प्रयाजशेषेण' इतिवद्विभक्तिव्यत्ययकल्पनापि न प्रसज्यते ॥

1. दर्शपूर्णमास. क.

'एको यथाशक्ति कुर्यात्' इति। तथा च ज्योतिष्टोमे यजमानद्विबहुत्वाभावात्तत्संयुक्त प्रतिपद्विधानं कुलायादिषूत्कृष्यते। न च यजमानश्च यजमाना च, यजमानश्च यजमाने च इत्येवम् 'पुमान्स्त्रिया' इति कृतैकशेषयोर्द्विवचनबहुवचनान्तयजमानशब्दयोरेकानेकपत्नीकयजमानाभिधायिनोर्ज्योतिष्टोमे सम्भवान्नोत्कर्ष इति वाच्यम्। विरूपैकशेषस्य लाक्षणिकत्वात्। किञ्च द्विबहुवचनयो. पत्न्यभिधायकत्वे ज्योतिष्टोमस्य कदाप्येकयजमानकत्वाभावादिमे एव प्रतिपदौ स्याताम्। ततश्च नित्यप्रतिपद्विधिरनर्थक. स्यात्। विषमशिष्टविकल्पो वा स्यात्। तस्मादुत्कर्ष. ॥

इति चतुर्दश प्रतिपदधिकरणम् ॥ १४ ॥

१५

दर्शपूर्णमासयोः श्रूयते "जाघन्या पत्नी सयाजयन्ति" इति। अत्र "सोम यजति" "त्वष्टारं यजति" "देवानां पत्नीर्यजति" "अग्नि गृहपति यजति" इति सोमादय पत्नीशब्देन सृष्टिन्यायेन (गि) विवक्षिता। द्वितीया तु 'सम्प्रदानस्य च कर्मसज्ञा वक्तव्या' इति वाचनिकी। जाघनीशब्दो लाङ्गूलमाचष्टे। तत्र किं जाघनीमुद्दिश्य पत्नीसयाजा सस्कारा विधीयन्ते ? ततश्च सस्कार्यतया प्राधान्याद्यत्र जाघनी तत्र पत्नीसयाजा उत्कृष्यन्त इत्यग्नीषोमीयपश्वनुनिष्पन्नजाघनी सस्कर्तव्येति फलति, उत पत्नीसयाजोद्देशेन जाघनी विधीयते ? दर्शपूर्णमासयोरेवापणस्थजाघनी सम्पाद्येति सशये, पूर्वपक्षयति—

## जाघनी चैकदेशत्वात् ॥ १८ ॥

जाघनीसस्कारविधि सस्कार्यानुसारेणाग्नीषोमीयपशावुत्कृष्यते। सस्कारविधौ हि पत्नीसंयाजाना सन्निपत्योपकारकतया दृष्टार्थत्वम्। ननु तृतीयाश्रुत्या जाघन्या गुणत्वप्रतीतेस्तत्सस्कारविधित्वमसिद्धम्, ततश्च पत्नीसंयाजोद्देशेनैव [1]विधीयमाना जाघनी दर्शपूर्णमासयोरेव क्रयादिना छागहरिणादिप्रकृतिकस्वनिष्पत्ति प्रयोजयेदिति नोत्कर्ष इत्यत आह—एकदेशत्वादिति। 'उत्तरार्धात्स्विष्टकृते समवद्यति' इत्युत्तरार्धशब्दस्यैकदेशवचनतया कस्योत्तरार्धादित्याकाङ्क्षायां प्रकृताग्नेयादिद्रव्यस्येत्यवगमेन द्रव्यान्तराप्रयोजकत्वात्स्विष्टकृत प्रतिपत्तित्वमिति चतुर्थाद्यपादे 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसयोगात्' इत्यधिकरणे व्यवस्थापयिष्यते। तथा च जाघनी-

1. विधीयमाना जाघनी क, ख, ग. पुस्तकेषु नास्ति.

## सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २१ ॥

सन्तर्दनं प्रकृतौ ज्योतिष्टोमे स्यात्। कुत ? अनर्थलोपात्—इष्टिपशुदर्विहोमापेक्षया दीर्घकालके प्रकृतिभूतज्योतिष्टोमे दीर्घसोमशब्दस्यावयवार्थलोपाभावात्। तथा च प्रकरणानुग्रहान्नोत्कर्ष । तस्मादसन्तर्दनविधिना सन्तर्दनविधि प्रकृतौ विकल्प्यते, क्रयणवत्। 'यथा गोवासोहिरण्यादिसोमक्रयणद्रव्याणि तद्वत्' इति भाष्यम्। 'क्रयाणां[1] विकल्पं पूर्वपक्षयित्वा समुच्चयस्य द्वादशे वक्ष्यमाणत्वात्पूर्वपक्षाभिप्रायो दृष्टान्त' इति वार्तिककृत । अन्यथापि योजित वार्तिके। अनर्थलोपात् वाक्यशेषश्रुतधारणशक्ते[2] सन्तर्दनप्रयोजनस्य प्रकृतौ ज्योतिष्टोमे सम्भवात् सन्तर्दनं नोत्कृष्यते। ननु प्रकृतिभूतज्योतिष्टोमस्योक्थ्याद्यपेक्षयाल्पत्वान्मन्दफल तत्सन्तर्दनमित्यत आह—क्रयणवदिति। प्रयोजनलोपाभावे दृष्टान्त.। यथा अल्पमूल्यस्य सोमद्रव्यस्य गोवास प्रभृतिद्रव्याणामन्यतमेन क्रये सिद्धेऽप्यानतिसौकर्यार्थं शेषाणा दानम्। अधिकमूल्यदाने हि विक्रेतु. स्वानतत्वात्क्रयसिद्धिरविलम्बिता भवति। अविलम्बितक्रयकश्च सोमोऽभ्युदयकारी भवतीति शास्त्रार्थो विज्ञायते। तथा सन्तृण्णयोरेव फलकयोरभिषवक्षमत्ववचनसामर्थ्याद्दृढतरकृतोऽभिषव. श्रेयस्कर इति विज्ञायते। ननु तर्हि 'न सन्तृणत्ति' इत्यसन्तर्दनविधायकपूर्ववाक्यादसन्तृण्णयोरेवाधिषवणफलकयोः प्रकृतावभिषवक्षमत्वस्यादृढकृताभिषवश्रेयस्करत्वस्य[3] चावगमात् "दीर्घसोमे सन्तृद्ये धृत्यै" इत्युत्तरवाक्य दृढतरकृताभिषवक्षमत्वफलकसन्तर्दनविधायक प्रकृतौ क्षमार्थं सद्विकृतौ दीर्घसोम उक्थ्यादावेवोत्कर्षमर्हतीति चेत्—असन्तर्दनवाक्य नास्तीति कृत्वा क्रयणवदिति दृष्टान्तः समर्थनीय इति तदेतच्छिछ्यदन्धनमात्रम्। वस्तुतस्तु 'अनर्थलोपात्' इत्येतद् इष्टिपशुदर्विहोमापेक्षया द्रव्यव्ययायासकालाद्यधिकत्वात्प्रकृतावेव दीर्घसोमशब्दस्य सम्भवादित्येव व्याख्येयम्। क्रयणवदिति सन्तर्दनासन्तर्दनविकल्पे दृष्टान्त। तैत्तिरीयादिशाखागतदशक्रयणविषय. "गवा हिरण्येन वाससा अजेति चतुर्भि क्रीणाति" इति बह्वृचब्राह्मणगतचतु.क्रयणविषयश्च यथा विकल्प्यन्ते, तद्वत्सन्तर्दनमसन्तर्दन च प्रकृतौ विकल्प्यत इत्यर्थः ॥

---

1. क्रयणानाम् क 2. धारणाशक्ते क, ग, मु पु 3 'अभिषवस्य श्रेयस्करत्वावगमात्' इत्येव सर्वत्र पाठ. अय त्वस्माभि कल्पित.

एकदेशत्वादित्याह—

एकदेश इति चेन्न प्रकृतेरशा निष्पत्तेः ॥ २० ॥

उत्तरार्धादिशब्दवज्जाघनीशब्द एकदेशवचनः; अतो द्रव्यान्तराप्रयोजकत्वात्स्विष्टकृद्वत्प्रतिपत्तिकर्मत्वं पत्नीसयाजानामिति चेत्—तन्न, कुतः? प्रकृतेरशास्त्रनिष्पत्तेः। दर्शपूर्णमासयोरङ्गत्वेन जाघन्याः शास्त्रतोऽनिष्पत्तेरविधानात्। लोकत एव तन्निष्पत्तेः। जाघनीशब्देन हि अग्नीषोमीयपश्वङ्गनिष्पन्ना जाघन्येव न विवक्षिता, जाघनीमात्रस्यैव शब्दार्थत्वात्। यद्यप्युत्तरार्धादिशब्दवज्जाघनीशब्दस्याप्यवयववाचित्वम्। तथाप्युत्तरार्धादिशब्दा उत्तरार्धत्वादिना प्रकृतिसापेक्षरूपेणाभिधत्ते। ततश्चाग्नेयादिद्रव्यज्ञानं विना उत्तरार्धत्वस्य ज्ञातुमशक्यत्वात्सापेक्षवृत्तित्वम्। जाघनीशब्दस्तु हृदयादिशब्दवज्जातिवचनः। जातिश्चानपेक्षा। ततश्चाग्नीषोमीयपशुज्ञानाभावेऽपि प्राणिमात्रजाघनी ज्ञातुं शक्यत इति, जाघनीशब्दस्य निरपेक्षवृत्तित्वमेव। तथा च हरिणादेर्यस्य कस्यचित्प्राणिनो जाघन्यापणादिस्था[1] क्रयादिना सम्पाद्या। अग्नीषोमीये तु पशौ वपादीनामुत्पत्तिप्रकारः संज्ञपनादिः शास्त्रनियत इति न क्रयाद्याश्रयणम्। अतो दार्शपूर्णमासिकपत्नीसंयाजेषु 'आज्येन पत्नीसंयाजा इज्यन्ते' इति शाखान्तरविधिना जाघनीविधिर्विकल्प्यते ॥

इति पञ्चदश जाघन्यधिकरणम् ॥ १५ ॥

१६

तदेवं श्रुतिप्रकरणयोर्विरोधाविरोधचिन्ता प्रस्तुता। अधुना वाक्यप्रकरणयोर्विरोधाविरोधचिन्ता प्रस्तूयते। ज्योतिष्टोमे श्रूयते "हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्ति" "अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै" इति। ययोरुपरि सोमोऽभिषूयते ते अधिषवणे फलके यत् यतः यज्ञस्य हनुस्थानीये, अत ते फलके न सन्तृणत्ति यथा न विश्लिष्येते तथा न कीलिते करोति। दीर्घसोमे तु ते सन्तृद्ये अविश्लिष्टत्वाय कीलिते करोति। धृत्यै अभिषवयोग्यदार्ढ्यायेत्यर्थः। तदिदं सन्तर्दनं किं प्रकृतिभूते ज्योतिष्टोम एव निविशते? उतान्यत्रोत्कृष्यते? यदा चोत्कृष्यते तदा किं [2]द्विरात्राहीनसत्रेषु? उत उक्थ्यादि संस्थास्वेव? अथवा तास्वहीनसत्रेषु चाग्निष्टोमाधिकक्रतुषु? इति पञ्चधा संशयः। तत्र पूर्वपक्षयति—

1. आपणस्था. घ. 2. द्विरात्राद्यहीन. क.

## सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २१ ॥

सन्तर्दनं प्रकृतौ ज्योतिष्टोमे स्यात्। कुत ? अनर्थलोपात्—इष्टिपशुदर्विहोमापेक्षया दीर्घकालके प्रकृतिभूतज्योतिष्टोमे दीर्घसोमशब्दस्यावयवार्थलोपाभावात्। तथा च प्रकरणानुग्रहान्नोत्कर्ष । तस्मादसन्तर्दनविधिना सन्तर्दनविधि. प्रकृतौ विकल्प्यते, क्रयणवत्। 'यथा गोवासोहिरण्यादिसोमक्रयणद्रव्याणि तद्वत्' इति भाष्यम्। 'क्रयाणां[1] विकल्पं पूर्वपक्षयित्वा समुच्चयस्य द्वादशे वक्ष्यमाणत्वात्पूर्वपक्षाभिप्रायो दृष्टान्त.' इति वार्तिककृत। अन्यथापि योजित वार्तिके। अनर्थलोपात् वाक्यशेषश्रुतधारणशक्ते[2] सन्तर्दनप्रयोजनस्य प्रकृतौ ज्योतिष्टोमे सम्भवात् सन्तर्दन नोत्कृष्यते। ननु प्रकृतिभूतज्योतिष्टोमस्योक्थ्याद्यपेक्षयाल्पत्वान्मन्दफल तत्सन्तर्दनमित्यत आह—क्रयणवदिति। प्रयोजनलोपाभावे दृष्टान्त.। यथा अल्पमूल्यस्य सोमद्रव्यस्य गोवास.प्रभृतिद्रव्याणामन्यतमेन क्रये सिद्धेऽप्यानतिसौकर्यार्थं शेषाणा दानम्। अधिकमूल्यदाने हि विक्रेतु स्वानतत्वात्क्रयसिद्धिरविलम्बिता भवति। अविलम्बितक्रयकश्च सोमोऽभ्युदयकारी भवतीति शास्त्रार्थो विज्ञायते। तथा सन्तृण्णयोरेव फलकयोरभिषवक्षमत्ववचनसामर्थ्याद्दृढतरकृतोऽभिषव. श्रेयस्कर इति विज्ञायते। ननु तर्हि 'न सन्तृणत्ति' इत्यसन्तर्दनविधायकपूर्ववाक्यादसन्तृण्णयोरेवाधिषवणफलकयो. प्रकृतावभिषवक्षमत्वस्यादृढकृताभिषवश्रेयस्करत्वस्य[3] चावगमात् "दीर्घसोमे सन्तृद्ये धृत्यै" इत्युत्तरवाक्य दृढतरकृताभिषवक्षमत्वफलकसन्तर्दनविधायक प्रकृतौ लुप्तार्थं सद्विकृतौ दीर्घसोम उक्थ्यादावेवोत्कर्षमर्हतीति चेत्—असन्तर्दनवाक्य नास्तीति कृत्वा क्रयणवदिति दृष्टान्त' समर्थनीय इति तदेतच्छिद्यदर्शनमात्रम्। वस्तुतस्तु 'अनर्थलोपात्' इत्येतद् इष्टिपशुदर्विहोमापेक्षया द्रव्यव्ययायासकालाद्यधिकत्वात्प्रकृतावेव दीर्घसोमशब्दस्य सम्भवादित्येव व्याख्येयम्। क्रयणवदिति सन्तर्दनासन्तर्दनविकल्पे दृष्टान्त। तैत्तिरीयादिशाखागतदशक्रयणविषय: "गवा हिरण्येन वाससा अजेति चतुर्भि' क्रीणाति" इति बह्वृचब्राह्मणगतचतु.क्रयणविषयश्च यथा विकल्प्यन्ते, तद्वत्सन्तर्दनमसन्तर्दन च प्रकृतौ विकल्प्यत इत्यर्थ.॥

---

1. क्रयणानाम् क.	2. धारणाशक्ते क, ग, मु पु	3 'अभिषवस्य श्रेयस्करत्वावगमात्' इत्येव सर्वत्र पाठ. अयं त्वस्माभि. कल्पित.

एकदेशत्वादित्याह—

**एकदेश इति चेन्न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २० ॥**

उत्तरार्धादिशब्दवज्जाघनीशब्द एकदेशवचनः, अतो द्रव्यान्तराप्रयोजकत्वात्स्विष्टकृद्वत्प्रतिपत्तिकर्मत्वं पत्नीसयाजानामिति चेत्—तन्न, कुतः ? प्रकृतेरशास्त्रनिष्पत्तेः। दर्शपूर्णमासयोरङ्गत्वेन जाघन्या शास्त्रतोऽनिष्पत्तेरविधानात्। लोकत एव तन्निष्पत्तेः। जाघनीशब्देन हि अग्नीषोमीयपशुतनुनिष्पन्ना जाघन्येव न विवक्षिता, जाघनीमात्रस्यैव शब्दार्थत्वात्। यद्यप्युत्तरार्धादिशब्दवज्जाघनीशब्दस्याप्यवयववाचित्वम्। तथाप्युत्तरार्धादिशब्द उत्तरार्धत्वादिना प्रकृतिसापेक्षरूपेणाभिधत्ते। ततश्चाग्नेयादिद्रव्यज्ञानं विना उत्तरार्धत्वस्य ज्ञातुमशक्यत्वात्सापेक्षवृत्तित्वम्। जाघनीशब्दस्तु हृदयादिशब्दवज्जातिवचनः। जातिश्चानपेक्षा। ततश्चाग्नीषोमीयपशुज्ञानाभावेऽपि प्राणिमात्रजाघनी ज्ञातुं शक्यत इति, जाघनीशब्दस्य निरपेक्षवृत्तित्वमेव। तथा च हरिणादेर्यस्य कस्यचित्प्राणिनो जाघन्यापणादिस्था[1] क्रयादिना सम्पाद्या। अग्नीषोमीये तु पशौ वपादीनामुत्पत्तिप्रकारः सञ्ज्ञपनादिः शास्त्रनियत इति न क्रयाद्याश्रयणम्। अतो दार्शपूर्णमासिकपत्नीसयाजेषु 'आज्येन पत्नीसंयाजा इज्यन्ते' इति शाखान्तरविधिना जाघनीविधिर्विकल्प्यते ॥

इति पञ्चदशं जाघन्यधिकरणम् ॥ १५ ॥

१६

तदेवं श्रुतिप्रकरणयोर्विरोधाविरोधचिन्ता प्रस्तुता। अधुना वाक्यप्रकरणयोर्विरोधाविरोधचिन्ता प्रस्तूयते। ज्योतिष्टोमे श्रूयते "हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्ति" "अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै" इति। ययोरुपरि सोमोऽभिषूयते ते अधिषवणे फलके यत् यतः यज्ञस्य हनुस्थानीये, अतः ते फलके न सन्तृणत्ति यथा न विश्लिष्येते तथा न कीलिते करोति। दीर्घसोमे तु ते सन्तृद्ये अविश्लिष्टत्वाय कीलिते करोति। धृत्यै अभिषवयोग्यदार्ढ्यायेत्यर्थः। तदिदं सन्तर्दनं किं प्रकृतिभूते ज्योतिष्टोम एव निविशते ? उतान्यत्रोत्कृष्यते ? यदा चोत्कृष्यते तदा किं [2]द्विरात्राहीनसत्रेषु ? उत उक्थ्यादिसंस्थास्वेव ? अथवा तास्वहीनसत्रेषु चाग्निष्टोमाधिकक्रतुषु ? इति पञ्चधा संशयः। तत्र पूर्वपक्षयति—

1. आपणस्था. घ. 2. द्विरात्राद्यहीन क

यमानं धृत्यै भवतीत्यर्थवाद उपपद्यते । न हि यजमानस्य दीर्घत्वे ह्रस्वत्वे वा प्रकृताभिपवस्य किञ्चिदाधिक्यमस्ति, येन तत्रापि विश्रेपशङ्का स्यात, 'धृत्यै' इत्यर्थवादश्चोपपद्येत । तस्मादुत्कर्षः ॥

स च द्विरात्रादिष्वेव, न तूक्थ्यपोडश्यतिरात्रसस्थास्विति तृतीयं पक्षमुपक्षिपति—

[1]संस्थासु च कर्तृवद्धारणार्थाविशेषात् ॥ २५ ॥

चो नार्थे । अग्निष्टोमवदुक्थ्यादिसंस्थास्वपि न सन्तर्दनम् । कुतः ? धारणार्थाविशेषात्—धारणरूपप्रयोजनानुपपत्तेरविशेषो धारणार्थाविशेषः । शाकपार्थिवादिवन्मध्यमपदलोपी समासः । धारणार्थवादानुपपत्तेरविशेषादिति यावत् । अग्निष्टोमे तावद्यजमाने दीर्घे ह्रस्वे वा दशमुष्टिपरिमित एव सोमोऽभिषूयते । "[2]एकयकयाङ्गुल्याङ्गुष्ठेन चांशून्सङ्गृह्य मिमीते" "पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम्" इत्यादिवचनात् उक्थ्यादिसस्थास्वपि तावानेव सोमोऽभिषूयते । ततश्चाग्निष्टोम इवोक्थ्यादिसंस्थास्वपि धारणार्थवादानुपपत्तेस्तुल्यत्वान्न सन्तर्दनमिति द्विरात्रादिष्वेवोत्कर्षः ॥

तमिमं तृतीयं पक्षं निराकुर्वंश्चतुर्थपक्षमवलम्बते—

स्यादनित्यत्वात् ॥ २६ ॥

उक्थ्यादिसंस्थासु धारणार्थवादोपपत्तिः स्यात् । तत्राग्निष्टोमापेक्षया यागाभ्यासाधिक्येनाधिकसोमस्याभिषोतव्यत्वात् । न च तोयेन सोमरसवृद्धिं सम्पाद्येति वाच्यम् । सोमसाधनके कर्मणि वचनं विना द्रव्यान्तरप्रक्षेपानुपपत्तेः । ननु सोमरसवृद्धिरेकादशादिमुष्टिवृद्ध्या न सम्भवति, नापि लतादैर्घ्येण, दशमुष्टित्रिपर्वत्वयोर्विधानादित्यत आह—अनित्यत्वादिति । [3]पर्वणामायामपरिमाणस्यानियतत्वादित्यर्थः । तथा च दीर्घत्रिपर्वदशमुष्टिपरिमितसोमलतोपादाने सति प्रदानवृद्धिः यथोक्तपरिमाणस्याप्यबाधः सम्भवति । वस्तुतस्तु अनित्यत्वादित्यस्य दशमुष्ट्यवशिष्टसोमलतापरिमाणस्यानित्यत्वादित्यर्थः । श्रूयते हि "प्रजाभ्यस्त्वा इत्यवशिष्टानंशूनुपसमूहति" इति दशमुष्टिपरिमितसोमेनावशिष्टसोमलताः सयोजयतीत्यर्थः । अवशिष्टलतानां च न किञ्चिदपि परिमाणं श्रुतम् । ततश्च प्रदानवृद्ध्यनुसारेण सर्वत्र सोमद्रव्यस्यैव

1 सस्थासु कर्तृवद्धारणाविशेषात्. 2. एकैकया. ख 3. पर्वणामायामस्य. ख.

अथ सिद्धान्तयति—

उ वा ग्रहणाद्विशेषस्य ॥ २२ ॥

वाशब्द एवार्थे। सन्तर्दनस्य प्रकरणादुत्कर्ष एव स्यात्। कुत.? विशेषस्य ग्रहणात्–दीर्घसोमशब्देन प्रकृतिसोमविकारस्य ग्रहणात्। न हीष्टिपशुदर्वीहोमापेक्षया दीर्घत्वं[1] दीर्घसोमशब्दप्रवृत्तौ निमित्तम्। तथा सति सोमशब्दस्य वैयर्थ्यात् सर्वस्यापि सोमस्य इष्ट्याद्यपेक्षया दीर्घत्वात्। अतः सजातीयसोमान्तरापेक्षमेव बहुसोमद्रव्यकत्वचिरकालत्वादिरूपमेव दीर्घत्व विवक्षितमिति स्यादुत्कर्ष ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

कर्तृतो वा विशेषस्य [2]सन्निमित्तत्वात् ॥ २३ ॥

वाशब्दः प्रत्यवस्थाने। कर्तृतः। सार्वविभक्तिकस्तसिः। कर्तरि यजमाने दीर्घशब्दोऽस्तु। ततश्च दीर्घस्य यजमानस्य सोम इति षष्ठीसमास' प्रकृतिसोम एवोपपद्यते; न तु दीर्घश्चासौ सोमश्चेति कर्मधारय'। कुतः? विशेषस्य सन्निमित्तत्वात्—समासविशेषनिर्धारणस्य, विद्यमाननिमित्तकत्वात्। न हि स्वरविशेष. कश्चित्समासविशेषको धर्मोऽत्र विद्यते। अन्तोदात्तत्वस्य षष्ठीसमासकर्मधारायसाधारण्यात्। कथञ्चित्प्रकृतावेव सम्भवतीति दीर्घसोमशब्दे प्रकरणबाधो न युक्त आश्रयितुम् ॥

अथ सिद्धान्ती परिहरति—

क्रतुतो वार्थवादानुपपत्तेः स्यात् ॥ २४ ॥

वाशब्द एवार्थे। क्रतावेव दीर्घशब्दो वर्तते, न तु यजमाने। दीर्घसोमशब्द कर्मधारय इति यावत्। कुत'? अर्थवादानुपपत्तेः—षष्ठीतत्पुरुषे पूर्वपदार्थस्योत्तरपदार्थोपसर्जनतया प्राधान्येन स्वार्थवदनानुपपत्ते। पूर्वपदस्य लक्षणया स्वार्थसम्बन्धिपरतया मुख्यवृत्त्या स्वार्थवादित्वानुपपत्तेश्च। कर्मधारये तु द्वयोरपि पदयो प्राधान्येन मुख्यवृत्त्या च स्वस्वार्थवदन भविष्यति। वृत्या इत्यर्थवादस्यानुपपत्तेरित्यप्यर्थ.। कर्मधारयसमासे हि द्विरात्रादिदीर्घसोमे चिरकालबहुसोमद्रव्यकक्रतौ चिरकाल ग्रावभिरभिपूयमाणे सोमेऽधिपवणफलकयोर्विश्लेषशङ्काया सन्तर्दन विधी-

1, दीर्घसोमत्वम् क, ख, ग. 2. तन्नि.

च 'संस्थासु च कर्तृवद्धारणार्थाविशेषात्' इत्यनन्तरम् 'उक्थ्यादिषु वार्थस्य विद्यमानत्वात्' 'अविशेषात्स्तुतिर्व्यर्थेति चेत्स्यादनित्यत्वात्' इत्येव सूत्रानुपूर्वी भाष्यपुस्तकेष्विदानीन्तनेषु दृश्यते । तत्रैवं योजना—

संस्थासु च कर्तृवद्धारणार्थाविशेषात् ॥

इति सूत्रेऽग्निष्टोम उक्थ्यादिसंस्थासु च दशमुष्टिपरिमित एव सोमोऽभिपूयत इति धारणार्थवादानुपपत्तेस्तुल्यत्वादहीनसत्रेष्वेव सन्तर्दनमिति शङ्का स्थिता । ता परिहरति—

उक्थ्यादिषु वार्थस्य विद्यमानत्वात् ।

वाशब्द एवार्थे । उक्थ्यादिसंस्थास्वेव सन्तर्दनम् । कुत ? सन्तर्दनप्रयोजनस्य धारणस्य तासु सत्त्वात् । ग्रागाभ्यासाधिक्येन तासु प्रदेयसोमवृद्धेरावश्यकत्वात् । ननु दशमुष्टित्वत्रिपर्वत्वविरोधादेकादशादिमुष्टिवृद्ध्या लतादैर्घ्यवृद्धया वा वृद्धिर्न सम्भवति, तोयत एव वृद्धिः सम्पाद्या, ततश्चाभिषोतव्यसोमस्याग्निष्टोमवदुक्थ्यादिसंस्थास्वप्यविशेषात्सन्तर्दनप्रयोजनधारणार्थवादस्तत्रापार्थक स्यादिति द्विरात्रादिष्वेव सन्तर्दनम् , न संस्थास्वित्याशङ्क्य निराकरोति—

अविशेषात्स्तुतिर्व्यर्थेति चेत्स्यादनित्यत्वात् ।

चेदन्त स्पष्टम् । स्यादनित्यत्वादिति तु भाष्यरीत्या वार्तिकरीत्या च पूर्ववदेव व्याख्येयम् ॥

इति षोडश सन्तर्दनाधिकरणम् ॥ १६ ॥

१७

कौषीतकब्राह्मणे ज्योतिष्टोमप्रकरणे प्रवर्ग्यं प्रकृत्य श्रूयते—"न प्रथमयज्ञे प्रवृञ्ज्यात्" इति । तत्र किं ज्योतिष्टोमाङ्गमय प्रतिषेध' ? उत तदीयप्रथमप्रयोगाङ्गम् ? इति सशये, पूर्वपक्षयति—

सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ २७ ॥

सङ्ख्यावाचिप्रथमशब्दसयुक्त प्रवर्ग्यप्रतिषेधनमाद्यानाद्यप्रयोगसाधारण्येन ज्योतिष्टोमक्रतोरङ्गं स्यात् । कुत. ? प्रकरणात् । न च प्रकरणं बाधित्वा प्रथमशब्दसयुक्तवाक्यवशेन प्रथमप्रयोगाङ्ग स्यादिति वाच्यम् । न प्रथमशब्द' प्रयोगाभिप्रायकः, यज्ञशब्दसामानाधिकरण्यविरोधात् । यज्ञशब्दस्य प्रयोगपरत्वे लक्षणाप्रस-

वृद्धेरुक्थ्यादिसंस्थासु धारणार्थवाद उपपद्यत इति सन्तर्दनस्य तास्वेव निवेशः। एवञ्च प्रकरणमप्यनुगृहीतं भवति, उक्थ्यादिष्वपि ज्योतिष्टोमस्वरूपानुस्यूतेः सत्त्वात्। ननु 'संस्थाश्च समानविधानाः प्रकरणाविशेषात्' इत्यधिकरणे उक्थ्यादिसंस्थाना प्रकरणं निराकरिष्यत इति चेत्—सत्यम्, तत्र ह्यग्निष्टोमसंस्थस्य नित्यत्वात्तदीयप्रकरणेनाविशेषसंयुक्ता नित्यवदाम्नाता एव धर्मा गृह्यन्ते, उक्थ्यादीनान्तु काम्यत्वेनानित्यत्वान्न तद्धर्मा गृह्यन्ते, नित्यानित्यसंयोगविरोधादिति वक्ष्यते। ततश्च यथा "आग्नेयमग्निष्टोम आलभते" "ऐन्द्राग्नमुक्थ्ये" इत्यादयो धर्मा उक्थ्यादिसंयुक्ता उक्थ्यादिरूपज्योतिष्टोमप्रकरणेन गृह्यन्ते, तद्वत्सन्तर्दनस्यापि दीर्घसोमसंयुक्तस्याग्निष्टोमेऽसम्भवत्प्रवृत्तिकस्य प्रकरणेनापरिगृहीतस्यापि [1]दीर्घसोमसंशब्दितोक्थ्यादिरूपज्योतिष्टोमप्रकरणेन परिग्रहे सम्भवति न द्विरात्रादिषूत्कर्षो युज्यते। तस्मादुक्थ्यादिसंस्थास्वेव प्रकरणदीर्घसोमशब्दाभ्यां सन्तर्दनस्य निवेशः। 'उत्कर्षो वा ग्रहणाद्विशेषस्य' इति सूत्रे उत्कर्षशब्दस्त्वग्निष्टोमापेक्षया ज्ञेयः। एवञ्च 'स्यादनित्यत्वात्' इति सूत्रेऽपि 'अनित्यत्वात्' इति बहुव्रीहिः। न विद्यते नित्यं प्रकरणं यस्य तदनित्यम्, ततश्च सन्तर्दनस्य नित्याग्निष्टोमप्रकरणेनापरिग्रहात्केवलोक्थ्याद्यनित्यप्रकरणपरिग्रहः अविरुद्धः स्यादित्यपि योजना। सोऽयं चतुर्थपक्षो भाष्यसिद्धान्तः।

वार्तिककृतस्तु 'स्यादनित्यत्वात्' इति सूत्रं पञ्चमपक्षपरं योजयामासुः। उक्थ्यादिसंस्थासु द्विरात्रादिषु च सन्तर्दनं स्यात्, न तूक्थ्यादिष्वेव। कुतः? अनित्यत्वात्। दीर्घसोमशब्दस्योक्थ्यादिसंस्थास्वेव व्यवस्थितत्वाभावात्। संस्थासु द्विरात्रादिषु चाग्निष्टोमापेक्षया दीर्घत्वस्याविशेषादिति यावत्। "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत" इत्यत्र अन्यशब्दो यथाग्निष्टोमान्यसर्वक्रतुपरः न तु उक्थ्यादिसंस्थामात्रपरः, एवं दीर्घसोमवाक्यमप्यग्निष्टोमाधिकसर्वक्रतुषु प्रवर्तमानं न प्रकरणात्संस्थास्वेव व्यवस्थापयितुं शक्यते, प्रकरणाद्वाक्यसङ्कोचस्यायुक्तत्वात्। यदि च सन्तर्दनमुक्थ्यादिसन्निधौ तदवान्तरप्रकरणे वा श्रूयेत तदा स्यादपि संस्थास्वेव तस्य निवेशः। इदन्तु तदसन्निधौ समाम्नातं संस्थाधिकरणन्यायेन तदीयप्रकरणाग्राह्यैर्ज्योतिष्टोमधर्मैरन्तरित तदीयकथम्भावसंस्पर्शं न भजते। तस्मान्न प्रकरणं संस्थासु सन्तर्दनस्य विनियोजकम्। किन्तु दीर्घसोमशब्दसंयुक्तं वाक्यमेव। तच्च संस्थासु द्विरात्रादिषु चाविशिष्टमेवेति। अत्र

1. दीर्घसोमशब्द. घ.

च 'संस्थासु च कर्तृवद्धारणार्थाविशेषात्' इत्यनन्तरम् 'उक्थ्यादिषु वार्थस्य विद्यमानत्वात्' 'अविशेषात्स्तुतिर्व्यर्थेति चेत्स्यादनित्यत्वात्' इत्येव सूत्रानुपूर्वी भाष्यपुस्तकेष्विदानीन्तनेषु दृश्यते । तत्रैवं योजना—

संस्थासु च कर्तृवद्धारणार्थाविशेषात् ॥

इति सूत्रेऽग्निष्टोम उक्थ्यादिसंस्थासु च दशमुष्टिपरिमित एव सोमोऽभिपूयत इति धारणार्थवादानुपपत्तेस्तुल्यत्वादहीनसत्रेष्वेव सन्तर्दनमिति शङ्का स्थिता । तां परिहरति—

उक्थ्यादिषु वार्थस्य विद्यमानत्वात् ।

वाशब्द एवार्थे । उक्थ्यादिसंस्थास्वेव सन्तर्दनम् । कुत ? सन्तर्दनप्रयोजनस्य धारणस्य तासु सत्त्वात् । यागाभ्यासाधिक्येन तासु प्रदेयसोमवृद्धेरावश्यकत्वात् । ननु दशमुष्टित्वत्रिपर्वत्वविरोधादेकादशादिमुष्टिवृद्ध्या लतादैर्घ्यवृद्ध्या वा वृद्धिर्न सम्भवति, तोयत एव वृद्धिः सम्पाद्या, ततश्चाभिषोतव्यसोमस्याग्निष्टोमवदुक्थ्यादिसंस्थास्वप्यविशेषात्सन्तर्दनप्रयोजनधारणार्थवादस्तत्रापार्थकः स्यादिति द्विरात्रादिष्वेव सन्तर्दनम्, न संस्थास्वित्याशङ्क्य निराकरोति—

अविशेषात्स्तुतिर्व्यर्थेति चेत्स्यादनित्यत्वात् ।

चेदन्तं स्पष्टम् । स्यादनित्यत्वादिति तु भाष्यरीत्या वार्तिकरीत्या च पूर्ववदेव व्याख्येयम् ॥

इति षोडशं सन्तर्दनाधिकरणम् ॥ १६ ॥

१७

कौषीतकब्राह्मणे ज्योतिष्टोमप्रकरणे प्रवर्ग्यं प्रकृत्य श्रूयते—"न प्रथमयज्ञे प्रवृञ्ज्यात्" इति । तत्र किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः ? उत तदीयप्रथमप्रयोगाङ्गम् ? इति संशये, पूर्वपक्षयति—

सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ २७ ॥

सङ्ख्यावाचिप्रथमशब्दसंयुक्तं प्रवर्ग्यप्रतिषेधनमाधानाद्यप्रयोगसाधारण्येन ज्योतिष्टोमक्रतोरङ्गं स्यात् । कुतः ? प्रकरणात् । न च प्रकरणं बाधित्वा प्रथमशब्दसंयुक्तवाक्यवशेन प्रथमप्रयोगाङ्गं स्यादिति वाच्यम् । न ह्यत्र प्रथमशब्दः प्रयोगाभिप्रायकः, यज्ञशब्दसामानाधिकरण्यविरोधात् । यज्ञशब्दस्य प्रयोगपरत्वे लक्षणाप्रस-

वृद्धेरुक्थ्यादिसंस्थासु धारणार्थवाद उपपद्यत इति सन्तर्दनस्य तास्वेव निवेशः। एवञ्च प्रकरणमप्यनुगृहीतं भवति, उक्थ्यादिष्वपि ज्योतिष्टोमस्वरूपानुस्यूतेः सत्त्वात्। ननु 'संस्थाश्च समानविधानाः प्रकरणाविशेषात्' इत्यधिकरणे उक्थ्यादिसंस्थानां प्रकरणं निराकरिष्यत इति चेत्—सत्यम्, तत्र ह्यग्निष्टोमसंस्थस्य नित्यत्वात्तदीय-प्रकरणेनाविशेषसंयुक्ता नित्यवदाम्नाता एव धर्मा गृह्यन्ते, उक्थ्यादीनान्तु काम्यत्वे-नानित्यत्वान्न तद्धर्मा गृह्यन्ते, नित्यानित्यसंयोगविरोधादिति वक्ष्यते। ततश्च यथा "आग्नेयमग्निष्टोम आलभते" "ऐन्द्राग्नमुक्थ्ये" इत्यादयो धर्मा उक्थ्यादिसंयुक्ता उक्थ्यादिरूपज्योतिष्टोमप्रकरणेन गृह्यन्ते, तद्वत्सन्तर्दनस्यापि दीर्घसोमसंयुक्तस्याग्नि-ष्टोमेऽसम्भवत्प्रवृत्तिकस्य प्रकरणेनापरिगृहीतस्यापि [1]दीर्घसोमसशब्दितोक्थ्यादिरू-पज्योतिष्टोमप्रकरणेन परिग्रहे सम्भवति न द्विरात्रादिषूत्कर्षो युज्यते। तस्मादुक्थ्या-दिसंस्थास्वेव प्रकरणदीर्घसोमशब्दाभ्यां सन्तर्दनस्य निवेशः। 'उत्कर्षो वा ग्रहणाद्विशे-षस्य' इति सूत्रे उत्कर्षशब्दस्त्वग्निष्टोमापेक्षया ज्ञेयः। एवञ्च 'स्यादनित्यत्वात्' इति सूत्रेऽपि 'अनित्यत्वात्' इति बहुव्रीहिः। न विद्यते नित्यं प्रकरणं यस्य तदनित्यम्, ततश्च सन्तर्दनस्य नित्याग्निष्टोमप्रकरणेनापरिग्रहात्केवलोक्थ्याद्यनित्यप्रकरणपरिग्रहः अविरुद्धः स्यादित्यपि योजना। सोऽयं चतुर्थपक्षो भाष्यसिद्धान्तः।

वार्तिककृतस्तु 'स्यादनित्यत्वात्' इति सूत्रं पञ्चमपक्षपरं योजयामासुः। उक्थ्यादिसंस्थासु द्विरात्रादिषु च सन्तर्दनं स्यात्, न तूक्थ्यादिष्वेव। कुतः? अनि-त्यत्वात्। दीर्घसोमशब्दस्योक्थ्यादिसंस्थास्वेव व्यवस्थितत्वाभावात्। संस्थासु द्विरात्रादिषु चाग्निष्टोमापेक्षया दीर्घत्वस्याविशेषादिति यावत्। ततश्च "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत" इत्यत्र अन्यशब्दो यथाग्निष्टोमान्यसर्वक्रतुपरः न तु उक्थ्यादिसंस्थामात्रपरः, एवं दीर्घसोमवाक्यमप्य-ग्निष्टोमाधिकसर्वक्रतुषु प्रवर्तमानं न प्रकरणात्संस्थास्वेव व्यवस्थापयितुं शक्यते, प्रकरणाद्वाक्यसङ्कोचस्यायुक्तत्वात्। यदि च सन्तर्दनमुक्थ्यादिसन्निधौ तदवान्तर-प्रकरणे वा श्रूयेत तदा स्यादपि संस्थास्वेव तस्य निवेशः। इदन्तु तदसन्निधौ समा-म्नातं संस्थाधिकरणन्यायेन तदीयप्रकरणाग्राह्यैर्ज्योतिष्टोमधर्मैरन्तरितं तदीयकथम्भाव-संस्पर्शं न भजते। तस्मान्न प्रकरणं संस्थासु सन्तर्दनस्य विनियोजकम्। किन्तु दीर्घसोमशब्दसंयुक्तं वाक्यमेव। तच्च संस्थासु द्विरात्रादिषु चाविशिष्टमेवेति। अत्र

1. दीर्घसोमशब्द घ

नामधेयमित्यपि प्रत्युक्तम्। द्वितीयादिवारं ज्योतिष्टोमे प्रयुज्यमानेऽपि प्रथमयज्ञ इति व्यपदेशापत्तेश्च।

अत्रेदमवधेयम्—क्वचिच्छाखायामनारभ्याधीतः प्रवर्ग्यः, प्रथमयज्ञवाक्यमपि तत्रैवाम्नातम्। न तद्विषयेयमधिकरणप्रवृत्तिः, अस्याधिकरणस्य वाक्यप्रकरणविरोधविषयत्वात्। क्वचित्तु शाखायां प्रवर्ग्योऽनारभ्याधीतः। प्रथमयज्ञवाक्यं तु ज्योतिष्टोमप्रकरणे पठितम्। तत्र प्रवर्ग्यस्यानारभ्याधीतत्वेऽपि प्रथमयज्ञवाक्यस्य प्रकरणाधीतत्वमात्रेणाधिकरणप्रवृत्तिरुपपद्यत एव। एवमपि 'ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य श्रूयते—'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति भाष्यमनुपपन्नमिति, तत्समर्थयितुं वार्तिके कौषीतकब्राह्मणमुदाहृतम्। तत्र हि प्रवर्ग्यस्य प्रथमयज्ञवाक्यस्य च ज्योतिष्टोम एव पाठः प्रत्यक्षसिद्ध इति। ननु प्रकरणबाधेन यदि प्रथमप्रयोगाङ्गमेव प्रतिषेधस्स्यान्न तु ज्योतिष्टोमाङ्गम्, तर्हि यस्य कस्यचित्प्रथमप्रयोगेऽपि प्राप्नुयात्। नैष दोषः, प्रतिषेधस्य प्राप्त्यपेक्षत्वेन यत्र प्रवर्ग्यस्य प्राप्तिस्तत्रैव ज्योतिष्टोमे सामर्थ्यात्प्राप्तेः। प्रवर्ग्यश्च कौषीतकब्राह्मणे प्रकरणपाठाज्ज्योतिष्टोमाङ्गमेव। तैत्तिरीयशाखायां त्वनारभ्याधीतः प्रवर्ग्यः—"यत्प्रवर्ग्यं प्रवृणक्ति" इति। स च "पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति" इति सोमाव्यभिचरितोपसदादिसम्बन्धात्सोमं गच्छति, तत्राप्यनारभ्यन्यायेन प्रकृतिभूतं ज्योतिष्टोमम्, तत्रापि प्रथमशब्दसंयोगात्तदीयाद्यप्रयोगमिति नातिप्रसङ्गः। न च विकृतिसोमानामपि प्रथमप्रयोगे प्रवर्ग्यनिषेधश्चोदकतः प्राप्नुयादिति वाच्यम्। प्रथमशब्दस्याविशेषितस्य सर्वाद्ये वर्तमानस्यान्यत्राप्रवृत्तेः। ननु एवमपि तैत्तिरीयशाखायाम् "अग्निष्टोमे प्रवृणक्ति" इति व्यर्थम्। उक्तरीत्या प्रवर्ग्यस्य तत्रैव प्राप्तेः। न च 'न प्रथमयज्ञे' इति प्रतिषिद्धस्य प्रवर्ग्यस्य पक्षे प्रतिप्रसवार्थं तदिति वाच्यम्, भिन्नविषयत्वात्। प्रतिषेधवाक्यानुसारेणाग्निष्टोमवाक्यस्य तदीयाद्यप्रयोगपरत्वे लक्षणाप्रसङ्गात्। अतोऽग्निष्टोमवाक्यस्य प्रतिप्रसवार्थत्वाय प्रतिषेधवाक्यस्यापि क्रतुविषयत्वमेव स्वीकार्यम्, न तु प्रयोगविषयत्वम् इति चेत् सत्यम्, यदि प्रतिषेधवाक्यं प्रतिप्रसववाक्यञ्च क्रतुविषयमेव स्यात्तर्हि प्रतिप्रसवफलस्य प्रकृतिसोमे प्रवर्ग्यविकल्पस्य प्रकरणानारभ्यन्यायानुगृहीतेन 'यत्प्रवर्ग्यं प्रवृणक्ति' इति सामान्यविधिना प्रतिषेधेन च सिद्धेः प्रतिप्रसववाक्यं सर्वथानर्थकमेव स्यात्। प्रतिषेधप्रतिप्रसवयोः प्रयोगविषयत्वे तु प्रतिप्रसवोऽर्थवान् भवति। तत्र हि प्रतिप्रसववाक्याभावे प्रवर्ग्यप्रतिषेधविकल्पस्याद्यप्रयोगाङ्गतया अप्राप्तिरस्ति। सामान्यविधेः क्रतुविषयत्वेन प्रति-

ङ्गात्। न च यज्ञशब्दस्य यज्ञविशेषे ज्योतिष्टोमेऽपि लक्षणा तुल्येति वाच्यम्। विशेषांशस्य प्रकरणत एव लाभात्। "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत गर्तपत्यमेव तत्" इति वाक्यान्तरेण प्रथमयज्ञशब्दस्य प्रथमप्रयोगप्रवृत्तिनिमित्तकत्वस्य ज्योतिष्टोम एवावगमितत्वाच्च। तथा च दीर्घसोमवाक्ये वाक्यप्रकरणयोर्विसंवादाद्वाक्येन प्रकरणबाधेऽपि प्रकृते विसवादाभावान्न प्रकरणबाध इति प्रकरणाद्वाक्यानुगृहीताज्ज्योतिष्टोमाङ्ग प्रतिषेधः॥

अथ सिद्धान्तयति—

**नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्॥२८॥**

वाशब्द एवार्थे। प्रथमपद नैमित्तिकमेव—शक्यसम्बन्धनिमित्तकमेव। ज्योतिष्टोमे लाक्षणिकमेवेति यावत्। कुत.? कर्तृसंयोगात् लिङ्गस्य तन्निमित्तत्वात्। कर्तृसयोगादिति ल्यब्लोपे पञ्चमी। लिङ्गस्य प्रतिषेधोपलक्षणभूतप्रथमपदस्य कर्तृसंयोगमपेक्ष्य [1]मुख्यवृत्तिनिमित्तकत्वात्। प्रथमशब्दो ह्यप्रवृत्तपूर्वस्य कर्तुराद्यप्रवर्तन एव मुख्यवृत्त्या वर्तते। तादृशप्रवर्तनविषयतया तु ज्योतिष्टोमे लक्षणया वर्तते। आकृत्यधिकरणव्युत्पादितेन नागृहीतविशेषणान्यायेनाद्यप्रवर्तनापरपर्यायाद्यानुष्ठानात्मकाद्यप्रयोगस्यैव प्रथमशब्दमुख्यार्थतया प्रथमप्रयोगाङ्गमेव प्रतिषेध इति युज्यते। आद्यप्रयोगो हि प्रथमशब्दश्रवणमात्राद्गम्यते, ज्योतिष्टोमस्तु यज्ञशब्दसामानाधिकरण्यानुपपत्तिप्रतिसन्धानमूलकलक्षणागम्य इति प्रथमयज्ञवाक्यात्प्रयोगाङ्ग प्रतिषेधो गम्यते। प्रकरणात्तु क्रत्वङ्गमिति विसंवादे प्रकरण बाधित्वा वाक्यात्प्रयोगाङ्गमेव प्रतिषेधो विज्ञायते। न च प्रथमशब्दस्याद्यप्रयोगपरत्वे यज्ञशब्दसामानाधिकरण्यानुपपत्तिरिति वाच्यम्। अत एव यज्ञशब्दस्य प्रयोगपरत्वाभ्युपगमात्। 'टिल्करणं करोति' इतिवत्सामान्यविशेषभावेन पौनरुक्त्याभावात्। न चोभयथापि लक्षणा तुल्येति वाच्यम्। जघन्यस्य यज्ञशब्दस्य लक्षणयापि नेतु शक्यत्वात्। मुख्यस्य प्रथमशब्दस्य श्रुतिवृत्तस्यैव ग्राह्यत्वात्। न च प्रथमशब्दे 'एष वाव प्रथमो यज्ञ" इति सामानाधिकरण्यान्नामत्वे निश्चिते श्येनादौ वत्यर्थवल्लक्षणा न दोष इति वाच्यम्। स्तुत्यर्थं प्रवृत्तार्थवादगतप्रयोगस्य लक्षणयापि नेतु शक्यत्वेन शक्तिकल्पनायामसमर्थतया नामत्वनिश्चयस्यैवासिद्धे। एतेन "एष वाव प्रथमो यज्ञो यज्ञाना यज्ज्योतिष्टोम" इति सामानाधिकरण्यात् 'प्रथमयज्ञ' इति ज्योतिष्टोमस्य रूढ

1. मुख्यप्रवृत्तीत्येव सर्वत्र पाठ.। मयन्तु कल्पित।

पश्चाच्छिष्येभ्यो [1]वक्ति सोऽनूचान इति व्युत्पत्तेरिति तदाशय'। बोधायनस्तु साङ्गाध्याय्यनूचान इति मन्यते। 'अनूचान प्रवचने साङ्गेऽधीती गुरोस्तु य' इत्यमरः। अस्मिंस्तु पक्षे श्रोत्रियग्रहणमनर्थकमित्युक्त एवार्थः। 'मार्गादनपेतोऽनूचान' इति भारद्वाजः॥

इति सप्तदश प्रवर्ग्याधिकरणम्॥ १७॥

१८

दर्शपूर्णमासयो प्राशित्रं प्रकृत्य श्रूयते "तत्पूषा प्राश्य दतोऽरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इति। तदिद पूषभागस्य पेषणं किं प्रकृतौ निविशते? उत विकृतौ? इति संशय। प्रकरणात्प्रकृताविति ब्रूम। यजमानं पोषयतीति व्युत्पत्त्या पूषन्शब्दस्याग्न्यादिदेवतापरत्वेनाविरोधादिति प्राप्ते, सिद्धान्तयति—

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ॥ २९॥**

पौष्णम्। पूषन्शब्दात् 'तस्येदम्' इत्यण्। पौष्णद्रव्यसम्बन्धि पेषणं विकृतौ पूषदेवत्यायां प्रतीयेत। कुत.? प्रकृतावचोदनात्। पूष्ण इति शेष'[2]। नन्वग्न्यादीन् पूषन्शब्दो गौण्या वृत्त्या वदतीति। सत्यमेवम्, यदि तस्य मुख्यार्थो न लभ्येत। अस्ति तु विकृतौ पूषा "पौष्ण चरुं निर्वपति" इत्यादौ। अतस्तत्रैव पेषणमिदमुच्यते। प्रकरणबाधश्च युक्त एव बलीयसो वाक्यात्। न च 'लिङ्गक्रमसमाख्यानात्काम्ययुक्त समाम्नानम्' इत्यत्रेन्द्रादीनां कर्मणो बहिरपि सद्भावस्य प्रतिपादिततया पूष्ण क्रतुव्यभिचारात्क्रतूपस्थितौ प्रमाणाभाव इति वाच्यम्, भागशब्देन तदुपस्थितेर्वक्ष्यमाणत्वात्। न च प्रकृतावङ्गतया द्रव्यदेवताविशिष्टकर्मान्तरविधिरेव किं न स्यादिति वाच्यम्, विशेषणमात्रस्य विधिसम्भवे विशिष्टविध्याश्रयणायोगात्। तत्र पूषपदेन तद्यागमुद्दिश्य प्रपिष्टद्रव्यविधि। भागोद्देशेन पेषणविधौ पदस्यैकप्रसरत्वभङ्गापत्ते'। फलतस्तु पेषणमात्रविधि। द्रव्यांशस्यान्यत. प्राप्तत्वात्। तदिदमधिकरण नोन्मिषति। पूषन्शब्दस्य प्रकरणादग्न्यादिपरत्वेऽपि तदीयद्रव्यपेषणस्याप्यन्यत एव सिद्धत्वेन पुनस्तद्विधिवैयर्थ्यापत्त्या पूर्वपक्षस्यातिमन्दत्वात्। सन्तर्दनाधिकरणन्या-

---

1 विविनक्ति. ख.

2 अत. पर 'पौष्णपेषणम् इति पाठ सुगम' इत्यधिक घ पुस्तके दृश्यते.

षेधस्य प्रयोगविषयत्वेन भिन्नविषयत्वात्। तथा चाद्यप्रयोगविषयकविकल्पप्रयोजनत्वात्प्रतिप्रसवोऽर्थवान्सम्पद्यत इति प्रयोगविषयक एव प्रतिप्रसवोऽवश्यमास्थेयः। प्रतिप्रसवबलादेव प्रतिषेधस्य, प्रथमप्रयोगपर्यवसानमात्रम्, न तु वाचनिकमग्निष्टोमप्रयोगविषयत्वम्। एवञ्चाग्निष्टोमशब्दस्य प्रयोगलक्षणेति निरस्तम्। सोऽयं प्रतिप्रसवलब्ध अग्निष्टोमे प्रवर्ग्यविकल्प. "कामन्तु योऽनूचान श्रोत्रिय. स्यात्तत्र प्रवृञ्ज्यात्" इति वचनेनोपसंह्रियते। ततश्चानूचानस्य श्रोत्रियस्याग्निष्टोमप्रथमप्रयोगे प्रवर्ग्यविकल्पः, काममित्यव्ययस्य विकल्पार्थकत्वात्, 'आ द्वादशभ्यो ददाति काममूर्ध्वं देयम्' इति यथा। अननूचानस्याश्रोत्रियस्य तु तत्र नित्य एव प्रवर्ग्यप्रतिषेध इति वार्तिककृत.। येषान्तु 'योऽनूचान. श्रोत्रियस्तस्य प्रवृञ्ज्यात्' इत्येव वचनम्, न तु कामशब्द., तेषान्तु मतेऽनूचानस्य श्रोत्रियस्याग्निष्टोमाद्यप्रयोगे नित्य प्रवर्ग्यः, अननूचानश्रोत्रियस्य तु विकल्प। सोऽयमापस्तम्बभारद्वाजसत्याषाढादिकल्पसूत्रानुयायी पक्ष.। येषान्तु 'प्रथममतिरात्रेण यजेत' इति वचनम्, तेषामप्यतिरात्रस्य ज्योतिष्टोमस्याद्यप्रयोगे 'न प्रथमयज्ञे' इति प्रतिषेधादनग्निष्टोमत्वेन प्रतिप्रसवाभावाच्च नित्यमेव नास्ति प्रवर्ग्य। याज्ञिकमते त्वनूचानवाक्ये काममित्यव्ययाभावात्तत्रापि नित्य एव प्रवर्ग्य।

ननु 'धर्मेण वेदानामेका शाखामधीत्य श्रोत्रियो भवति' इति धर्मसूत्रात्तल्लक्षण श्रोत्रिय एव कर्मस्वधिक्रियते, न त्वन्य., 'नाश्रोत्रियस्य यज्ञ.' इति प्रतिषेधात्। एवञ्चाश्रोत्रिये प्रवर्ग्यस्यैवाप्रसक्ते तत्प्रतिषेधे श्रोत्रियग्रहणमनर्थकमिति चेत्—अत्र वार्तिककृत 'श्रोत्रियस्येति पुनर्वचनसामर्थ्यात्प्रकर्षगतिर्विज्ञायते श्रोत्रियतमस्येति, यथा हि—अभिरूपाय कन्या देया इत्युक्तेऽभिरूपतमायेति गम्यत' इति समादधते। याज्ञिकास्तु 'नाक्रियो ब्राह्मणो नासंस्कारो द्विजो नाविद्वान्विप्रो नैतैर्हीन श्रोत्रियो नाश्रोत्रियस्य यज्ञ. धर्मेण वेदानामेकैका शाखामधीत्य श्रोत्रियो भवति' इत्यादिश्रोत्रियलक्षणे गर्भाधानादिक्रियाया जातकर्मादिसंस्काराणा नियमाध्ययनस्य च श्रोत्रियत्वोत्कर्षनिमित्तस्य प्रविष्टत्वादन्यस्य च तदुत्कर्षनिमित्तस्याभावाच्छ्रोत्रियग्रहण व्यर्थं सत्कर्मोपयुक्तवेदैकदेशाध्ययनमात्रादश्रोत्रियस्यापि गौण कर्माधिकारमभ्युपजानातीति मन्यन्ते। तदेतदग्रिमाष्टमपादे 'ज्ञाते च वाचन न ह्यविद्वान्विहितोऽस्ति' इत्यत्र वार्तिकेऽपि स्पष्ट भविष्यति। अनूचानस्त्वध्यापयिता, तद्ग्रहणन्तु क्षत्रियवैश्यव्यावृत्त्यर्थम्, न हि तयोरध्यापयितृत्वमस्तीति वार्तिककृत.। आचार्यादधिगत वेद

गौरवम्। अत्यन्ताप्राप्तप्रापणापेक्षया प्राप्तनिवृत्तप्रतिप्रसवस्य लघुत्वात्। इतोऽपि पशौ पेषणं निवर्तत इत्याह—अर्थविप्रतिषेधात्पशौ न स्यादिति। पेषणे सति अर्थस्य आकृतिविशेषात्मकहृदयादिस्वरूपस्य विप्रतिषेधात् विनाशात् पशौ पेषण न भवतीत्यर्थः। न हि पेषणे सति "हृदयस्याग्रेऽवद्यति" इत्याद्युपपद्यते। न च पिष्ट्वा पुनस्तदाकृतिकरणं शङ्क्यम्। एवमपि मृद्गवयादौ गवयादिशब्दवद्धृदयादिशब्दोऽपि तत्र गौण एव स्यात्। "उत्सादनदेशादवद्यति" इति श्रुतस्यार्थस्य पशौ विरोधात्पेषण निवर्तत इत्यप्यर्थः। उत्सादनदेश. उत्कृत्तदेश। न हि पिष्टस्य हृदयादेरुत्कृत्तदेशो विज्ञायते अनेन प्रदेशेन इद पशोरुत्कृत्तमिति। तस्मात्पौष्णचरावेवाविप्रतिषिद्धमप्राप्तञ्च पेषणं विधीयते॥

ननु दशमे 'ओदनो वाप्रयुक्तत्वात्' इति चरुशब्दस्यौदनवाचकताया व्यवस्थापयिष्यमाणत्वादन्योन्यासल्लग्नत्वलक्षणवैशद्ययुक्ते तण्डुलप्रकृतिकपक्वान्न एव चौदनत्वप्रसिद्धे पेषणे च सति वैशद्यासम्भवात्कथ चरौ पेषणमित्याशङ्क्य परिहरति—

**चरावपीति चेन्न पक्तिनामत्वात्॥ ३२॥**

चरावपि पेषण चरुत्वविघातकमिति चेत्—तन्न; कुत? पक्तिनामत्वात्। ओदनशब्दस्य तण्डुलप्रकृतिकावस्रावितानवस्रावितोभयविधविशदपक्वान्नवाचकत्वात्। चरुशब्दस्य तण्डुलप्रकृतिकानवस्रावितान्तरूष्मपक्वविशेषवाचकत्वाच्च। शाकादिनिरासाय तण्डुलप्रकृतिकेति, भ्राष्ट्रपक्वापूपादिनिरासायान्तरूष्मेति। दाशमिकसूत्रन्तु चरुशब्दस्य स्थालीपरत्वव्यावृत्तिपरमिति दशमे वक्ष्यते। तस्माच्चरावेव पौष्णे पेषणम्॥

इत्येकोनविंश पौष्णपेषणस्य चरावेव निवेशाधिकरणम्॥ १९॥

२०

राजसूये समामनन्ति 'सोमापौष्णं चरु निर्वपत्यैन्द्रापौष्णं चरुं पौष्ण चरु श्यामो दक्षिणा" इति। तत्र "पूषा प्रपिष्टभागः" इति पेषण किं केवलपूषदेवत्यचरौ? उतान्यसहितपूषदेवत्येऽपि? इति सशये, सिद्धान्तेनोपक्रमते—

**एकस्मिन्नेकसंयोगात्॥ ३३॥**

'एके मुख्यान्यकेवला' इत्यमर। एकस्मिन् केवलपूषदेवत्यचरावेव पेषणम्, न तु द्विदेवत्येऽपि। कुत? एकसयोगात् "पूषा प्रपिष्टभाग." इति केवलपूषसयो-

येन वाक्यप्रकरणविरोधे विकृत्यर्थताया सिद्धत्वाच्च। किन्तु पौष्णपेषण किं सर्वत्र भवति ? उत चरावेव ? इति करिष्यमाणविचारस्य प्रकृतौ चरोरभावेन विकृतावुत्कर्षं विनानुपपत्त्या तत्सिद्ध्यर्थम्, प्रकरणविरोधचिन्ताप्रस्तावे साक्षात्सङ्गतत्वाभावेन तस्य प्रासङ्गिकत्वसिद्ध्यर्थतया च, पेषणस्य वाक्येनोत्कर्षप्राप्तिमात्रमनेन सूत्रेणानूद्यत इति प्राञ्च.॥

इत्यष्टादश पौष्णपेषणाधिकरणम्॥ १८ ॥

१९

सन्ति पौष्णाः पशव "पौष्ण श्याममालभेतान्नकाम" इत्यादय । सन्ति च तत्र पौष्णा. पशुपुरोडाशा "यद्देवत्य. पशुस्तद्देवत्य. पुरोडाश" इति वचनात्। सन्ति च पौष्णाश्चरवः "पौष्ण चरुं श्यामो दक्षिणा" इत्यादय.। किमेतेषु सर्वेषु "पूषा प्रपिष्टभागः" इत्येतन्निविशते ? उत चरुमात्रे ? इति सशये, पूर्वपक्षयति—

## तत्सर्वार्थमविशेषात्॥ ३० ॥

तत् पौष्णपेषण पश्वादिसर्वद्रव्यार्थम्। कुत ? अविशेषात्। सर्वेषु पश्वादि-द्रव्येषु पौष्णत्वस्य 'अदन्तको हि' इति हेतुवादस्य चाविशेषात्॥

अथ सिद्धान्तयति—

## चरौ वार्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्॥ ३१ ॥

वाशब्द एवार्थे। पौष्णपेषण चरावेव भवति, न तु पुरोडाशे पशौ च। यत पुरोडाशे पेषणमर्थादेव प्राप्त न विधातव्यं स्यात्। न हि विना पेषण पुरोडाशो भवति। यदि त्वापणादिस्थितलौकिकपिष्टोपादानेनापि पुरोडाशसिद्धे नार्थिक पेषणमिति कश्चिद्ब्रूयात्, तर्ह्येव व्याख्येयम्—अर्थे प्राकृतोपकारे साधनतयोपदिष्ट पेषणमर्थोक्तम्। चोदकसिद्ध पुरोडाशे पेषणमिति यावत्। ननु पाकात्प्रागेव चोदकत पेषण प्राप्नोति, इदन्तु पेषण पाकोत्तरमन्यदेव विधीयत इति चेन्न, विधेरप्राप्तपेषणके चरौ चरितार्थत्वेन पाकोत्तर पेषणान्तरकल्पनायामसामर्थ्यात्, पेषणान्तरविधौ गौरवाच्च। एतेन पौष्णपेषणस्य पशुविषयकत्वमपि निरस्तम्। पशो सान्नाय्यवि-कारत्वस्याष्टमे वक्ष्यमाणत्वेन पुरोडाशधर्मस्य पेषणस्य तत्रात्यन्ताप्राप्तत्वेन तद्विधौ गौरवात्। चरौ चोदकप्राप्त पेषण प्रयोजनाभावान्निवर्तमान प्रतिप्रसूयत इति न

सेन केवलेन्द्रपीतत्वस्यैवावगमात् ऐन्द्राग्ने च तदभावात्। तद्धितवृत्त्या मिश्रयोरेव देवतात्वावगमात्। एवञ्च पूषानुरोधेन भागान्तरमपि कास्यभोजिन्यायेनाविरोधात्पिष्यते। भागद्वयमप्येकस्यामेव स्थाल्या ग्राहकद्वयवत्या पच्यते। ततश्च न पाकवैषम्यम्, नापि भागसङ्कर ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ३६ ॥

पौष्णपेषणे पूष्णो भग्नदन्तत्व हेतुरुच्यते। स च हेतु सोमापौष्णेऽपि पूषणि विद्यते। न हि सद्वितीयस्य पूष्णो [1]देवतान्तरसहभावमात्रेण पुनर्दन्ता उत्तिष्ठन्ति। ततश्चादन्तत्वहेतुवादादपि लिङ्गात्पूषा स्वरूपेणैव पेषणे निमित्तम्, न तु देवतात्वेन। किञ्च "सोमापौष्ण चरु निर्वपेन्नेमपिष्टं पशुकामः" इति कश्चित्सोमापौष्णेऽर्धपिष्टमनुवदति। तदेवदन्यत्रापि सद्वितीये पूषणि पेषणे लिङ्गम् ॥

ननु 'नेमपिष्टम्' इति नानुवाद, येनान्यत्रापि द्विदेवत्ये पेषणप्रवृत्तौ लिङ्ग स्यात्। किन्तु 'नेमपिष्टम्' इति विधिरेव। क्वचिच्च द्विदेवत्येऽर्धपेषणविधानमन्यत्र सद्वितीये पूषणि पेषणाभावमेव प्रत्युत ज्ञापयतीत्याशङ्क्याह—

## वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चराघपेषणं भवति ॥ ३७ ॥

सोमपूषदेवताकचरोस्तत्र नेमपिष्टत्वस्य च विधौ वाक्यभेद। 'सोमापौष्ण चरुम्' इत्यनूद्य नेमपिष्टत्वविधौ चोभयानुवादप्रयुक्तवाक्यभेददोष। अन्यतरानुवादे यश्चरुः स नेमपिष्ट इत्याश्रयणे 'सोमापौष्णम्' इत्यनर्थक स्यात्। य सोमापौष्ण स नेमपिष्ट इत्याश्रयणे चरुशब्दोऽनर्थक स्यात्। यदि तु चरमश्रुतत्वाच्चरुशब्दस्यैवानर्थक्यमाश्रित्य य सोमापौष्ण स नेमपिष्ट इत्याश्रीयते तर्हि वचनाच्चरुत्वमपुरस्कृत्य नेमपिष्टत्वविधानात्सर्वस्यापि सोमापौष्णस्य पशुचरुपुरोडाशात्मकस्यार्धांशपेषणं स्यात्। कुत? तं प्रति शास्त्रवत्त्वात्। चरुत्वाविशेषितं सोमापौष्ण सर्वं प्रत्येवार्धांशपेषणस्य शास्त्रतात्पर्यविषयीभूतत्वात्। नन्वस्तु तर्हि पश्वादेरपि सोमापौष्णस्य पेषण तत्राह–अर्थाभावादिति। चरुशब्दस्यानर्थक्यप्रसङ्गान्नैवाश्रयितु युक्तमित्यर्थ। ननु तवापि नेमपिष्टमित्यस्यानुवादत्वादानर्थक्य तुल्यमित्यत्राप्येतदेवोत्तरमर्थाभावा-

---

1. देवतात्वभावमात्रेण देवतात्वाभावाद्दन्ता उत्तिष्ठन्ति. क, ग.

गेनैव पेषणश्रवणात्। यथा "आग्नेय चतुर्धा करोति" इत्यैन्द्राग्नो न चतुर्धा क्रियते, यथा वा 'इन्द्रपीतस्य' इत्यैन्द्राग्नग्रहो न भक्ष्यते तद्वत्॥

इतोऽप्येवमित्याह—

## धर्मविप्रतिषेधाच्च ॥ ३४ ॥

सोमापौष्णादावर्धं वा पिष्यते समस्त वा। आद्येऽपि यद्येकस्यामेव स्थाल्या पच्यते, तत्र पिष्टांश शीघ्रतरं पच्येत अपिष्टाशस्तु चिरेण। तत्र पक्के पिष्टांशे यदि चरुरुद्वास्यते, तर्ह्यपिष्टाशस्य पक्वता न स्यात्। यदि त्वपिष्टाशपाकपर्यन्तं पिष्टांशोऽपि चिरेण पच्येत, तर्हि पिष्टांशस्य पाके विलयनप्रसङ्गाच्चरुत्व विहन्येत। चरुशब्दार्थे विलयनस्यापि प्रवेशात्। न च पिष्टापिष्टाशयो पात्रभेदेन पाके सति न विरोध इति वाच्यम्। 'सोमापौष्ण चरुम्' इत्येकत्वसङ्ख्याया याग प्रत्युपादेयचरुगताया विवक्षितत्वेन पात्रभेदे तद्विरोधात्। चर्वेकत्वे पात्रैकत्वस्यैव नियामकत्वात्। यदि च पूषानुरोधेन भागान्तरमपि कांस्यभोजिन्यायेन पिष्येत एकस्यामेव च स्थाल्या पच्येत, तर्हि भागसङ्करादन्यदीयभागेऽन्यस्मै दीयमाने वैगुण्यमापद्येत। न चैन्द्राग्न-पुरोडाशवन्मिश्रितोद्देशेन युगपद्दानाभ्युपगमान्न दोष इति वाच्यम्। वैषम्यात्, ऐन्द्राग्नपुरोडाशे हि सामर्थ्यापेक्षतद्धितश्रुत्या 'पुरोडाशम्' इत्येकवचनेन च मिश्र-योरेवानुत्पन्नभागविवेकैकहविरुद्देश्यत्वावगमात्। सङ्कीर्णदत्तमप्येकैका देवता स्व स्व भाग विभज्य गृह्णातीति युज्यते। सोमापौष्णे तु चरौ 'पूषा प्रपिष्टभाग' इति पूषभाग पेषणीय इत्यवधृतम्। ततश्च सिद्धे भागविवेके वचनादृते पुनरेकीकरणा-नुपपत्तेर्भवत्येव सङ्करो दोप इति विप्रतिषिद्धमेव तत्र पेषणम्॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥३५॥

अपिशब्दो व्युत्क्रम। वाशब्द प्रत्यवस्थाने। सद्वितीयेऽपि पूपणि स्यादेव पेपणम्। कुत ? देवतानिमित्तत्वात्—पेपणस्य स्वरूपेण पूपप्रयुक्तत्वात्। पेषणे हि पूपा स्वरूपेणैव निमित्तमवगतम्, न तु देवतात्वेन। देवतातद्धिताद्यभावात्। ततश्च सोमापौष्णे चरौ तद्धितवशेन देवतात्वस्य व्यासज्यवृत्तितया पूष्णो देवतात्वेनासद्भा-वेऽपि स्वरूपेण सद्भावात्स्यादेव पेपणम्। ऐन्द्राग्ने तु पुरोडाशेऽग्नेर्देवतात्वाभावा-न्नाग्नेयधर्मश्चतुर्धाकरण प्रवर्तते। तद्धितवशेन मिश्रयोरेव देवतात्वावगमात्। 'इन्द्रपी-तस्य' इति भक्षणमन्त्रोऽप्यैन्द्राग्नग्रहे न प्रवर्तते। 'इन्द्रपीतस्य' इति सामर्थ्यापेक्षसमा-

त्वादिति भाव । कस्यापूर्वमित्यपेक्षिते पूपदेवत्ययागस्येति गम्यते । तथाहि— भज्यते प्राप्यत इति भाग. । कर्मणि घञ् । स्वीकार्यं द्रव्यमुच्यते । प्रपिष्टो भाग स्वीकार्यं द्रव्य यस्येति बहुव्रीहिणा पूपणि स्वीकार्यप्रपिष्टसम्बन्धो योग्यतया स्वीकर्तृत्वमेवेति गम्यते । पूषा च प्रपिष्ट द्रव्यं परस्वं परेण पूषोद्देशेनात्यक्त न स्वीकर्तुं प्रभवतीति प्रपिष्टस्य पूषोद्देशेन त्यागोऽप्याक्षेपाल्लभ्यते । त्यज्यमानहविरुद्देश्यत्वमेव देवतात्वमिति देवतोद्देश्यकद्रव्यत्यागो यागः समानसंवित्संवेद्य । ततश्च पूषदेवताकयाग' प्रपिष्टद्रव्यक इत्यर्थे पर्यवस्यति । एवञ्च पूपदेवत्ययागापूर्वधर्म पेषणमिति देवतात्वेनैव पूषा पेषणनिमित्तम्, न तु स्वरूपेण । एवञ्च सोमापौष्णे तद्धितवशेनोभयो' सोमापूष्णोर्मिश्रयोरेव देवतात्वात्पूष्णो देवतात्वचोदनाभावात्पेषण न भवति, ऐन्द्राग्नवत् । यथा ऐन्द्राग्नपुरोडाशे आग्नेयधर्मश्चतुर्धाकरण न भवति तद्वत् । न च सोमापूष्णोर्देवतात्वस्य व्यासज्यवृत्तित्वेऽपि पूष्णोऽपि देवतात्वाश्रयत्वात्पेषण कथ न स्यादिति वाच्यम् । न हि व्यासज्यवृत्तिधर्मप्रकारताया प्रत्येकवृत्तिसम्बन्ध' संसर्गो भवितुमर्हति । अन्यथा एको द्वित्ववानिति बोधापत्ते । ततश्च सोमापूष्णोरुभयोर्देवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात्तस्य च पूषांशे बाधात्केवलपूपदेवत्य एव पेषणम् ॥

अथ यदुक्तम् 'अदन्तको हि' इति पेषणहेतोरदन्तकत्वस्य सद्वितीयेऽपि साम्यावृत्ति पेषणमिति, तत्राह—

## हेतुमात्रमदन्तत्वम् ॥ ३९ ॥

अकिञ्चित्करताया मात्रशब्द, 'सशयमात्रमेतद्भवति' 'प्रयोजनमात्रमेतद्भवति' इति महाभाष्यप्रयोगदर्शनात् । पेषणेऽदन्तकत्व न हेतुरिति यावत्, हेत्वधिकरणे एवञ्जातीयकहेतुवादस्याकिञ्चित्करत्वनिश्चयात् । ततश्च केवलपूषदेवत्ययागे पेषणविधेरेव प्रशसापरमदन्तकवाक्यं व्यवतिष्ठते । न त्वन्यत्रापि सोमापौष्णे पेषणं कल्पयितुमलम्, देवतात्वनिमित्तकपेषणविधिविरोधात् । यथा "तेन ह्यन्न क्रियते" इति वाक्यम् "शूर्पेण जुहोति" इति विधेरेव प्रशसापरमवतिष्ठते, न तु येन येनान्न क्रियते तेन तेन होतव्यमिति विधि कल्पयितुमलम्, तद्वत् ॥

यच्च पेषणे पूषा स्वरूपेणैव निमित्तम् इत्यत्र क्वचित्सोमापौष्णे 'नेमपिष्टम्' इत्यनुवादो लिङ्गमिति, तत्राह—

## वचनं परम् ॥ ४० ॥

यदन्यत् 'नेमपिष्टम्' इत्येतत् तत् वचनम् अर्धपेषणविधायकमेव, न त्वनुवाद'

दिति । 'नेमपिष्टम्' इत्यनुवादस्य पूषा स्वरूपेण पेषणनिमित्तं न तु देवतात्वेनेति ज्ञापनं प्रयोजनमस्तीति तस्यानुवादत्व युज्यते । 'नेमपिष्टम्' इत्यस्य विधित्वे तूक्तरीत्या 'चरुम्' इत्यनुवादस्यानर्थक्यमेव । [1]पाक्षिकानुवादत्वञ्च दोष , सोमापौष्णशब्दस्य यदा पशुविषयत्व पुरोडाशविषयत्वं वा तदा चर्वनुवादत्वासम्भवात् । अत 'नेमपिष्टम्' इत्यस्यैवानुवादत्वमाश्रयितु युज्यते । ननु पूर्वाधिकरणे पुरोडाशेऽर्थात्प्राप्त पेषण न विधातव्यम् । पशौ त्वर्थविप्रतिषेधान्न पेषण विधातु शक्यमिति परिशेषाच्चरोरेव पेषणमित्युक्तम् । अत "नान्तरिक्षे न दिव्यग्निश्चेतव्य " इतिवत् 'चरुम्' इति नित्यानुवादोऽस्त्वित्याह—अर्थाभावाद्धि चरावपेषण भवतीति । 'असूर्यपश्या राजदाराः' इत्यादिवत् 'अपेषणम्' इत्यसमर्थसमास । 'चरौ वार्थोक्त पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्' इति पूर्वाधिकरणसूत्र केवलपूषदेवत्यविषयं न तु सद्वितीयविषयम् । न हि सोमापौष्णपुरोडाशेऽर्धपेषणमर्थप्राप्तम् , येन तद्विधिर्नोपपद्येत । कृत्स्नपेषणस्यैव तत्र प्राप्ते । ततश्च सर्वपेषणे प्राप्तेऽर्धपेषण तत्र विधीयते । तावतैव च पुरोडाश निष्पाद्यार्धान्तरं त्याज्यम् । अथवा अपिष्ट पिष्ट चोभय ससृज्य कथञ्चित्पुरोडाशो निष्पाद्य । हृदयादीनामपि उत्सादनदेशविशिष्टमर्धं विहायार्धान्तरपेषणे सति नात्यन्तमाकृतिनाशः, नाप्युत्सादनदेशव्यामोह । तस्मान्न परिशेषसिद्ध चरो पेषणम् । ततश्च, हि यत , 'अर्थोक्त पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्' इत्युक्तार्थस्य पशौ पुरोडाशे चाभावाच्चरोरेव पेषणमिति परिशेषो न सम्भवति, अत पेषणस्य पश्वादिसाधारणत्वात् 'सोमापौष्ण चरुम्' इति चरुशब्द. पाक्षिकोऽनुवाद स्यादिति पूषदेवताकचरुद्रव्यकयागविधिपरमेवेद वाक्य स्वरूपेण पूषसम्बन्धनिमित्तक पेषण प्राप्तमनुवदतीत्यवश्यमास्थेयमिति भवत्ययमनुवाद पूषा स्वरूपेणैव पेषणनिमित्तमित्यत्र लिङ्गमिति ॥

तदेतत्सिद्धान्ती निराचष्टे—

**एकस्मिन्वार्थधर्मत्वादैन्द्रा ग्नवदुभयोर्न स्यादचोदितत्वात् ॥३८॥**

वाशब्द एवार्थे । एकस्मिन् केवले एव पूषणि पेषणम् , न तु सद्वितीये । कुत ? अर्थधर्मत्वात् । अर्थ्यते फलनिष्पादकतयेत्यर्थ अपूर्वम् , तच्छेषत्वात्पेषणस्येत्यर्थ । प्रोक्षणादीना व्रीह्यादिस्वरूपे आनर्थक्यादपूर्वसाधनरूपार्थत्वस्य नवमादौ वक्ष्यमाण-

---

1 पाक्षिकानुवादश्च क

स्वादिति भाव । कस्यापूर्वमित्यपेक्षिते पूषदेवत्ययागस्येति गम्यते । तथाहि—भज्यते प्राप्यत इति भाग'। कर्मणि घञ्। स्वीकार्यं द्रव्यमुच्यते। प्रपिष्टो भाग स्वीकार्यं द्रव्य यस्येति बहुव्रीहिणा पूषणि स्वीकार्यप्रपिष्टसम्बन्धो योग्यतया स्वीकर्तृत्वमेवेति गम्यते। पूषा च प्रपिष्ट द्रव्य परस्व परेण पूषोद्देशेनात्यक्त न स्वीकर्तुं प्रभवतीति प्रपिष्टस्य पूषोद्देशेन त्यागोऽप्याक्षेपाल्लभ्यते। त्यज्यमानहविरुद्देश्यत्वमेव देवतात्वमिति देवतोद्देश्यकद्रव्यत्यागो याग. समानसवित्संवेद्य । ततश्च पूषदेवताकयाग' प्रपिष्टद्रव्यक इत्यर्थं पर्यवस्यति। एवञ्च पूषदेवत्ययागापूर्वधर्म पेषणमिति देवतात्वेनैव पूषा पेषणनिमित्तम्, न तु स्वरूपेण। एवञ्च सोमापौष्णे तद्धितवशेनोभयो सोमापूष्णोर्मिश्रयोरेव देवतात्वात्पूष्णो देवतात्वचोदनाभावात्पेषण न भवति, ऐन्द्राग्नवत्। यथा ऐन्द्राग्नपुरोडाशे आग्नेयधर्मश्चतुर्धाकरण न भवति तद्वत्। न च सोमापूष्णोर्देवतात्वस्य व्यासज्यवृत्तित्वेऽपि पूष्णोऽपि देवतात्वाश्रयत्वात्पेषण कथ न स्यादिति वाच्यम्। न हि व्यासज्यवृत्तिधर्मप्रकारताया प्रत्येकवृत्तिसम्बन्ध' ससर्गो भवितुमर्हति। अन्यथा एको द्वित्ववानिति बोधापत्ते'। ततश्च सोमापूष्णोरुभयोर्देवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात्तस्य च पूषांशे बाधात्केवलपूषदेवत्य एव पेषणम्॥

अथ यदुक्तम् 'अदन्तको हि' इति पेषणहेतोरदन्तकत्वस्य सद्वितीयेऽपि साम्यादस्ति पेषणमिति, तत्राह—

## हेतुमात्रमदन्तत्वम्॥ ३९॥

अकिञ्चित्करताया मात्रशब्द, 'सशयमात्रमेतद्भवति' 'प्रयोजनमात्रमेतद्भवति' इति महाभाष्यप्रयोगदर्शनात्। पेषणेऽदन्तकत्वं न हेतुरिति यावत्, हेत्वधिकरणे एवञ्जातीयकहेतुवादस्याकिञ्चित्करत्वनिश्चयात्। ततश्च केवलपूषदेवत्ययागे पेषणविधेरेव प्रशसापरमदन्तकवाक्यं व्यवतिष्ठते। न त्वन्यत्रापि सोमापौष्णे पेषणं कल्पयितुमलम्, देवतात्वनिमित्तकपेषणविधिविरोधात्। यथा "तेन ह्यन्न क्रियते" इति वाक्यम् "शूर्पेण जुहोति" इति विधेरेव प्रशसापरमवतिष्ठते, न तु येन येनान्न क्रियते तेन तेन होतव्यमिति विधिं कल्पयितुमलम्, तद्वत्॥

यच्च पेषणे पूषा स्वरूपेणैव निमित्तम् इत्यत्र क्वचित्सोमापौष्णे 'नेमपिष्टम्' इत्यनुवादो लिङ्गमिति, तत्राह—

## वचनं परम्॥ ४०॥

यदन्यत् 'नेमपिष्टम्' इत्येवत् तत् वचनम् अर्धपेषणविधायकमेव, न त्वनुवाद

दिति। 'नेमपिष्टम्' इत्यनुवादस्य पूषा स्वरूपेण पेषणनिमित्तं न तु देवतात्वेनेति ज्ञापनं प्रयोजनमस्तीति तस्यानुवादत्व युज्यते। 'नेमपिष्टम्' इत्यस्य विधित्वे तूक्तरीत्या 'चरुम्' इत्यनुवादस्यानर्थक्यमेव। [1]पाक्षिकानुवादत्वञ्च दोष, सोमापौष्णशब्दस्य यदा पशुविषयत्वं पुरोडाशविषयत्वं वा तदा चर्वनुवादत्वासम्भवात्। अत 'नेमपिष्टम्' इत्यस्यैवानुवादत्वमाश्रयितु युज्यते। ननु पूर्वाधिकरणे पुरोडाशेऽर्थात्प्राप्त पेषण न विधातव्यम्। पशौ त्वर्थविप्रतिषेधान्न पेषण विधातु शक्यमिति परिशेषाच्चरोरेव पेषणमित्युक्तम्। अत "नान्तरिक्षे न दिव्यग्निश्चेतव्य." इतिवत् 'चरुम्' इति नित्यानुवादोऽस्त्वित्याह—अर्थाभावाद्धि चरावपेषण भवतीति। 'असूर्यंपश्या राजदारा.' इत्यादिवत् 'अपेषणम्' इत्यसमर्थसमास। 'चरौ वार्थोक्त पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्' इति पूर्वाधिकरणसूत्र केवलपूषदेवत्यविषयं न तु सद्वितीयविषयम्। न हि सोमापौष्णपुरोडाशेऽर्धपेषणमर्थप्राप्तम्, येन तद्विधिर्नोपपद्येत। कृत्स्नपेषणस्यैव तत्र प्राप्ते। ततश्च सर्वपेषणे प्राप्तेऽर्धपेषण तत्र विधीयते। तावतैव च पुरोडाश निष्पाद्यार्धान्तरं त्याज्यम्। अथवा अपिष्ट पिष्ट चोभय संसृज्य कथञ्चित्पुरोडाशो निष्पाद्य। हृदयादीनामपि उत्सादनदेशविशिष्टमर्धं विहायार्धान्तरपेषणे सति नात्यन्तमाकृतिनाशः, नाप्युत्सादनदेशव्यामोह। तस्मान्न परिशेषसिद्ध चरो पेषणम्। ततश्च, हि यत', 'अर्थोक्त पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्' इत्युक्तार्थस्य पशौ पुरोडाशे चाभावाच्चरोरेव पेषणमिति परिशेषो न सम्भवति, अत पेषणस्य पश्वादिसाधारणत्वात् 'सोमापौष्ण चरुम्' इति चरुशब्द पाक्षिकोऽनुवाद' स्यादिति पूषदेवताकचरुद्रव्यकयागविधिपरमेवेद वाक्य स्वरूपेण पूषसम्बन्धनिमित्तक पेषण प्राप्तमनुवदतीत्यवश्यमास्थेयमिति भवत्ययमनुवाद पूषा स्वरूपेणैव पेषणनिमित्तमित्यत्र लिङ्गमिति॥

तदेतत्सिद्धान्ती निराचष्टे—

**एकस्मिन्वार्थधर्मत्वादैन्द्रा दुभयोर्न स्यादचोदितत्वात् ॥३८॥**

वाशब्द एवार्थे। एकस्मिन् केवले एव पूषणि पेषणम्, न तु सद्वितीये। कुत'? अर्थधर्मत्वात्। अर्थ्यते फलनिष्पादकतयेत्यर्थ अपूर्वम्, तच्छेषत्वात्पेषणस्येत्यर्थं। प्रोक्षणादीना व्रीह्यादिस्वरूपे आनर्थक्यादपूर्वसाधनरूपार्थत्वस्य नवमादौ वक्ष्यमाण-

1 पाक्षिकानुवादश्च क

# चतुर्थः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं श्रुत्यादिषु षट्सु प्रमाणेषु श्रुतिलिङ्गे प्रथमद्वितीयपादयो तृतीयपादेऽवशिष्टानि चत्वारि विचार्य, तेषां षण्णां बलाबलविचार तन्मूलभूतविरोधाविरोधविचारश्च प्रपञ्चितः । चतुर्थेऽस्मिन् पादे स एव विरोधाविरोधविचार• प्रस्तूयते । पूर्वत्र तद्विचार• प्रकरणबाधफलकः, इह प्रायेण प्रमाणान्तरबाधफलक इति पादान्तरत्वम् । दर्शपूर्णमासयो• श्रूयते—"निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र 'निवीत मनुष्याणाम्' इति किमयं मनुष्यधर्म ? उत कर्मधर्मः ? अथ कर्मयुक्तमनुष्यधर्म ? अथवा प्रकरणे यन्मनुष्यप्रधानमन्वाहार्यपचनादि कर्म तस्य धर्मः ? आहोस्विदप्रकरणे यन्मनुष्यपूजात्मकमातिथ्यादि कर्म तस्य धर्म• ? इति पञ्चधा संशय• । तत्र पूर्वपक्षयति—

**निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥**

'निवीतम्' इत्यादिना मनुष्यधर्म —मनुष्यप्रधानं निव्यानं विधीयते । 'व्येञ् संवरणे' । अवसञ्जनमत्र विवक्षितम् । 'निवीतम्' इति भावे निष्ठा, कर्मणि वा । अजिनवास•सूत्राणामन्यतम कर्णावसक्त निवीतमिति स्मरन्ति । मनुष्यान्निव्यानेन संस्कुर्यादिति वचनव्यक्ति । कुत ? शब्दस्य तत्प्रधानत्वात्—'मनुष्याणाम्' इति षष्ठ्यन्तशब्दस्य मनुष्यप्रधानत्वावगमकत्वादित्यर्थ• । यथा "द्वादशाहीनस्य" इति षष्ठीश्रुत्या बलीयस्या प्रकरण बाध्यते । तस्मात्सुवर्णभरणादिवन्मनुष्यधर्मो निवीतम् ॥

अत्र सिद्धान्ती प्रत्यवतिष्ठते—

**अपदेशो वार्थस्य विद्यमानत्वात् ॥ २ ॥**

वाशब्द प्रत्यवस्थाने । 'निवीतम्' इत्यनुवादः स्यात्, न तु मनुष्यधर्मविधिः । कुत ? अर्थस्य विद्यमानत्वात्—निवीतशब्दार्थस्य कर्णावसञ्जनस्य लोकत एव प्राप्ति-

येनान्यत्रापि द्विदेवत्ये पेषणे लिङ्गं स्यात्। न च वाक्यभेद, विशिष्टविधानात्। प्राप्तकर्मानुवादेनानेकविधावेव तस्य दोषत्वात्। अन्यथा यदाग्नेयादिवाक्ये का गति। तस्मान्न सोमापौष्णादौ द्विदेवत्ये पेषणमिति सिद्धम्। यद्यपि वाजसनेयके "प्रपिष्टानां पौष्ण चरु श्रपयति" इति तद्धितश्रुत्या चरुशब्देन च केवलपूषदेवत्ये चरावेव पेषण श्रुतम्, ततश्च 'तत्सर्वार्थमविशेषात्' इति पूर्वाधिकरणस्य पेषणे पूषा स्वरूपेण निमित्त देवतात्वेन वेति विचारपरस्यैतदधिकरणस्य च नोन्मेष, तथापि शाखान्तरोपसहारस्यानित्यताया शाखान्तराधिकरणे निर्णीतत्वात् 'प्रपिष्टाना पौष्ण चरुम्' इति वाजसनेयकवाक्ये 'पूषा प्रपिष्टभाग' इति तैत्तिरीयकवाक्यस्यानुपसहारे सति तद्विषयेयमधिकरणद्वयप्रवृत्तिरित्यास्तां तावत्॥

इति विंश पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम्॥ २०॥

इति तृतीयाध्यायस्य तृतीयः पादः॥



# चतुर्थः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं श्रुत्यादिषु षट्सु प्रमाणेषु श्रुतिलिङ्गे प्रथमद्वितीयपादयो' तृतीयपादेऽवशिष्टानि चत्वारि विचार्य, तेषां षण्णा बलाबलविचार तन्मूलभूतविरोधाविरोधविचारश्च प्रपञ्चित. । चतुर्थेऽस्मिन् पादे स एव विरोधाविरोधविचार. प्रस्तूयते । पूर्वत्र तद्विचार प्रकरणबाधफलक', इह प्रायेण प्रमाणान्तरबाधफलक इति पादान्तरत्वम् । दर्शपूर्णमासयो' श्रूयते—"निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र 'निवीतं मनुष्याणाम्' इति किमयं मनुष्यधर्म ? उत कर्मधर्म. ? अथ कर्मयुक्तमनुष्यधर्म. ? अथवा प्रकरणे यन्मनुष्यप्रधानमन्वाहार्यपचनादि कर्म तस्य धर्मः ? आहोस्विदप्रकरणे यन्मनुष्यपूजात्मकमातिथ्यादि कर्म तस्य धर्मः ? इति पञ्चधा संशयः । तत्र पूर्वपक्षयति—

**निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥**

'निवीतम्' इत्यादिना मनुष्यधर्म.—मनुष्यप्रधानं निव्यान विधीयते । 'व्येञ् संवरणे' । अवसञ्जनमत्र विवक्षितम् । 'निवीतम्' इति भावे निष्ठा, कर्मणि वा । अजिनवास'सूत्राणामन्यतमं कण्ठावसक्त निवीतमिति स्मरन्ति । मनुष्यान्निव्यानेन संस्कुर्यादिति वचनव्यक्ति । कुत. ? शब्दस्य तत्प्रधानत्वात्—'मनुष्याणाम्' इति षष्ठ्यन्तशब्दस्य मनुष्यप्रधानत्वावगमकत्वादित्यर्थः । यथा "द्वादशाहीनस्य" इति षष्ठीश्रुत्या बलीयस्या प्रकरण बाध्यते । तस्मात्सुवर्णभरणादिवन्मनुष्यधर्मो निवीतम् ॥

अत्र सिद्धान्ती प्रत्यवतिष्ठते—

**अपदेशो वार्थे विद्यमानत्वात् ॥ २ ॥**

वाशब्द प्रत्यवस्थाने । 'निवीतम्' इत्यनुवादः स्यात् , न तु मनुष्यधर्मविधिः । कुत ? अर्थस्य विद्यमानत्वात्—निवीतशब्दार्थस्य कण्ठावसञ्जनस्य लोकत एव प्राप्ति-

येनान्यत्रापि द्विदेवत्ये पेषणे लिङ्ग स्यात्। न च वाक्यभेद, विशिष्टविधानात्। प्राप्तकर्मानुवादेनानेकविधावेव तस्य दोषत्वात्। अन्यथा यदाग्नेयादिवाक्ये का गति। तस्मान्न सोमापौष्णादौ द्विदेवत्ये पेषणमिति सिद्धम्। यद्यपि वाजसनेयके "प्रपिष्टाना पौष्णं चरु श्रपयति" इति तद्धितश्रुत्या चरुशब्देन च केवलपूषदेवत्ये चरावेव पेषणं श्रुतम्, ततश्च 'तत्सर्वार्थमविशेषात्' इति पूर्वाधिकरणस्य पेषणे पूषा स्वरूपेण निमित्त देवतात्वेन वेति विचारपरस्यैतदधिकरणस्य च नोत्क्षेप, तथापि शाखान्तरोपसहारस्यानित्यतया शाखान्तराधिकरणे निर्णीतत्वात् 'प्रपिष्टाना पौष्णं चरुम्' इति वाजसनेयकवाक्ये 'पूषा प्रपिष्टभाग' इति तैत्तिरीयकवाक्यस्यानुपसहारे सति तद्विषयेयमधिकरणद्वयप्रवृत्तिरित्यास्ता तावत्॥

इति विंश पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम्॥ २०॥

इति तृतीयाध्यायस्य तृतीयः पादः॥



गम्यमान मनुष्यधर्मत्वं प्रकरणगम्यञ्च कर्मधर्मत्वं समाख्यागम्यञ्चाध्वर्युधर्मत्व विरुध्यते, येन बाध्यबाधकभाव स्यात्। अत क्रतुयुक्ताध्वर्युधर्म। एतदेव सूत्र चतुर्थपक्षपरमपि योज्यम्। तथाहि--दर्शपूर्णमासप्रकरणे तत्सयुक्त मनुष्योद्देश्यक- मन्वाहार्यपाकादिकर्म यत् तदर्थमेव निवीतम्। कुत? एवं सत्येव अविप्रतिषेधात् अन्यथा 'मनुष्याणाम्' इत्यस्य वैयर्थ्यापत्त्या तद्विरोधात्। 'मनुष्याणाम्' इत्यस्य 'निवीतम्' इत्यनेनोद्देश्यतया सम्बन्धे सति 'मनुष्याणाम्' इत्यनुवादवैयर्थ्यात्। अतो मनुष्याणां शेषभूतं यत्कर्म तत्र निवीतमित्येव युक्तम्। "प्राचीनावीत पितॄणामुपवीत देवानाम्" इत्यत्र पितृदेवोद्देश्यककर्मधर्मत्वस्यैव वक्तव्यतया निवीतस्य [1]क्रतुयुक्त- कर्तृधर्मत्वे तद्वैषम्यरूपविरोधाच्च। अप्राकरणिकातिथिपूजादिव्यावृत्तये 'तत्प्रकरणे' इति। ततश्च दर्शपूर्णमासप्रकरणे यन्मनुष्यप्रधानमन्वाहार्यपाकादिकर्म तत्र अध्वर्युणा निव्यातव्यमिति पर्यवस्यति। तत्र 'मनुष्याणाम्' इति षष्ठ्या मनुष्यप्रधानकत्व प्रकरणादन्वाहार्यपाकादिसमाख्यया चाध्वर्युरूपमनुष्यविशेषवत्त्व गम्यत इति विवेक.।

ननु षष्ठीश्रुत्या लब्ध मनुष्यधर्मत्वमेव निव्यानस्याश्रयितुमुचितम्, न तु प्रकरण- लब्धस्यान्वाहार्यपाकादिकर्मण: समाख्यालब्धाध्वर्युत्वस्य चोद्देश्यकोटौ निवेश उचित:, बलीयस्या श्रुत्या तयोर्बाधादित्यत्राप्येतदेवोत्तरम् 'अविप्रतिषेधात्' इति। श्रुतिप्रकर- णसमाख्यानामविरोधादित्यर्थ। मनुष्योद्देश्यकान्वाहार्यपाकादिकर्म अध्वर्युर्निव्यानेन कुर्याद् इत्येवं श्रुत्यादिलब्धाना परस्परान्वयसम्भवात्। अयमेव पक्ष. केनचित्सि- द्धान्ततया परिगृहीत:। तद्भाष्यवार्तिकाननुगुणम्॥

अथ पञ्चमपक्षपरिग्रहेण सिद्धान्तयति—

येनान्यत्रापि द्विदेवत्ये पेषणे लिङ्गं स्यात्। न च वाक्यभेदः, विशिष्टविधानात्। प्राप्तकर्मानुवादेनानेकविधावेव तस्य दोपत्वात्। अन्यथा यदाग्नेयादिवाक्ये का गति। तस्मान्न सोमापौष्णादौ द्विदेवत्ये पेषणमिति सिद्धम्। यद्यपि वाजसनेयके "प्रपिष्टाना पोष्ण चरु श्रपयति" इति तद्धितश्रुत्या चरुशब्देन च केवलपूषदेवत्ये चरावेव पेषणं श्रुतम्, ततश्च 'तत्सर्वार्थमविशेपात्' इति पूर्वाधिकरणस्य पेपणे पूषा स्वरूपेण निमित्त देवतात्वेन वेति विचारपरस्यैतदधिकरणस्य च नोन्मेप, तथापि शाखान्तरोपसहारस्यानित्यताया शाखान्तराधिकरणे निर्णीतत्वात् 'प्रपिष्टाना पौष्ण चरुम्' इति वाजसनेयकवाक्ये 'पूषा प्रपिष्टभाग' इति तैत्तिरीयकवाक्यस्यानुपसहारे सति तद्विपयेयमधिकरणद्वयप्रवृत्तिरित्यास्तां तावत्॥

इति विंश पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम्॥ २०॥

इति तृतीयाध्यायस्य तृतीयः पादः॥



गम्यमान मनुष्यधर्मत्वं प्रकरणगम्यञ्च कर्मधर्मत्वं समाख्यागम्यञ्चाध्वर्युधर्मत्व विरुध्यते, येन बाध्यबाधकभाव' स्यात्। अत क्रतुयुक्ताध्वर्युधर्म। एतदेव सूत्र चतुर्थपक्षपरमपि योज्यम्। तथाहि—दर्शपूर्णमासप्रकरणे तत्सयुक्त मनुष्योद्देश्यक-मन्वाहार्यपाकादिकर्म यत् तदर्थमेव निवीतम्। कुत. ? एव सत्येव अविप्रतिषेधात् अन्यथा 'मनुष्याणाम्' इत्यस्य वैयर्थ्यापत्त्या तद्विरोधात्। 'मनुष्याणाम्' इत्यस्य 'निवीतम्' इत्यनेनोद्देश्यतया सम्बन्धे सति 'मनुष्याणाम्' इत्यनुवादवैयर्थ्यात्। अतो मनुष्याणां शेषभूत यत्कर्म तत्र निवीतमित्येव युक्तम्। "प्राचीनावीत पितॄणामुपवीत देवानाम्" इत्यत्र पितृदेवोद्देश्यककर्मधर्मत्वस्यैव वक्तव्यतया निवीतस्य [1]क्रतुयुक्त-कर्तृधर्मत्वे तद्वैषम्यरूपविरोधाच्च। अप्राकरणिकातिथिपूजादिव्यावृत्तये 'तत्प्रकरणे' इति। ततश्च दर्शपूर्णमासप्रकरणे यन्मनुष्यप्रधानमन्वाहार्यपाकादिकर्म तत्र अध्वर्युणा निव्यातव्यमिति पर्यवस्यति। तत्र 'मनुष्याणाम्' इति षष्ठ्या मनुष्यप्रधानकत्व प्रकरणादन्वाहार्यपाकादिसमाख्यया चाध्वर्युरूपमनुष्यविशेषवत्वं गम्यत इति विवेक.। ननु षष्ठीश्रुत्या लब्ध मनुष्यधर्मत्वमेव निव्यानस्याश्रयितुमुचितम्, न तु प्रकरण-लब्धस्यान्वाहार्यपाकादिकर्मणः समाख्यालब्धाध्वर्युत्वस्य चोद्देश्यकोटौ निवेश उचित', बलीयस्या श्रुत्या तयोर्बाधादित्यत्राप्येतदेवोत्तरम् 'अविप्रतिषेधात्' इति। श्रुतिप्रकर-णसमाख्यानामविरोधादित्यर्थः। मनुष्योद्देश्यकान्वाहार्यपाकादिकर्म अध्वर्युर्निव्यानेन कुर्याद् इत्येव श्रुत्यादिलब्धाना परस्परान्वयसम्भवात्। अयमेव पक्षः केनचित्सि-द्धान्ततया परिगृहीत.। तद्भाष्यवार्तिकाननुगुणम्॥

अथ पञ्चमपक्षपरिग्रहेण सिद्धान्तयति—

**तत्प्रधाने वा तुल्यवत्प्रसङ्ख्यानादितरस्य तदर्थत्वात्॥ ७॥**

वाशब्दोऽवधारणे। दर्शपूर्णमासप्रकरणापरिगृहीते मनुष्यप्रधानके आतिथ्या-दिकर्मण्येव निवीत निविशते, न तु प्रकरणपरिगृहीते मनुष्यप्रधानकान्वाहार्यपा-कादाविव्युद्देश्यकोटौ प्रकरणमपि निवेशनीयम्। कुतः ? तुल्यवत्प्रसङ्ख्यानादितरस्य तदर्थत्वात्—'तुल्यवत्' इति क्रियाविशेषणम्। स्वार्थे वति. तुल्यमेतानि वाक्यानि समाम्नातानि "निवीत मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानाम्" इति। तत्रोपवीतप्राचीनावीते स्वतन्त्रदेवपितृप्रधानकर्मविषये समधिगते। 'उपवीत देवा-

1. क्रतुयुक्तकर्मकर्तृधर्मत्वे. क

सद्भावात् । कृतपरिकरबन्धा एव ह्यव्यग्रतया लोके कर्मसु प्रगल्भन्ते । ततश्च परिकरबन्धत्वेन प्राप्तस्य निव्यानस्यायमनुवादः ॥

अथ पूर्वपक्षी निराचष्टे—

**[1]विधिस्त्वपूर्ववत्त्वात्स्यात् ॥ ३ ॥**

तुः शङ्कानिरासे । 'निवीतम्' इति मनुष्यधर्मविधि स्यात्, न त्वनुवाद. । कुतः ? अपूर्ववत्त्वात्—पूर्वं प्रापकं प्रमाणान्तरं यस्य विद्यते तत्पूर्ववत् । नियमतस्तत्प्रापकप्रमाणान्तराभावादित्यर्थः । न हि निव्यानमवश्य प्राप्तम्, तेन विनाप्यव्यग्रताया कट्यादिनिबन्धनेन[2] कदाचित्सम्भवात् । तथा चापूर्वविधित्वाभावेऽपि पुरुषार्थनियमविधित्वं न विरुध्यते ॥

अथ कर्मधर्म इति द्वितीय पक्षमुपक्षिपति—

**स धर्मः त् ॥ ४ ॥**

स.—निव्यानाख्योऽजिनादिविन्यासविशेष दर्शपूर्णमासकर्मशेष स्यात् । कुतः ? प्रायात्—सामिधेन्यादिदर्शपूर्णमासधर्मबहुलप्रदेशपाठात् । तथा च प्रयाजादिवन्निवीतमपि कथम्भावपरिग्रहात्कर्मधर्मः । मनुष्यग्रहणं त्वनुवाद । ततश्च दर्शपूर्णमासयो सर्वैरपि ऋत्विग्भिर्यजमानेन च निव्यान कर्तव्यम् । तच्च 'उपव्ययते' इत्यनेन विकल्प्यते ॥

अथ तृतीयमुपक्षिपति—

**[3]वाक्यशेषवत्त्वात् ॥ ५ ॥**

शेषशब्देन अन्तिम समाख्याप्रमाण विवक्षितम् । निवीतवाक्यस्य यजुर्वेदाम्नातस्याध्वर्युसमाख्यानवत्त्वाद् यजुर्वेदस्य चाध्वर्यु वेदत्वप्रसिद्धे. कर्मोपयुक्तकर्तृधर्मे सत्येव निव्याने कर्मापेक्षितकर्तृविशेषसर्पिका आध्वर्यसमाख्यानुगृह्यते । केवलकर्मधर्मत्वे तु सा व्यर्था सती बाध्येत । अत. कर्मयुक्तमनुष्यधर्म. ॥

इतोऽप्येवमित्याह—

**तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥**

दर्शपूर्णमासप्रकरणे यत् अध्वर्युरूपमङ्गं श्रुतम्, तत्सयुक्तं तच्छेषभूत निवीतम् । कुत. ? अविप्रतिषेधात् श्रुतिप्रकरणसमाख्यानामविरोधात् । न हि षष्ठीश्रुत्या

1 विधिस्त्वपूर्वत्वात्स्यात् 2 कट्या निबन्धनेन, क, 3, वाक्यशेषत्वात्.

अत्र च "निवीतं मनुष्याणा प्राचीनावीतं पितृणामुपवीतं देवानाम्" इत्यन्यत प्राप्तानामनुवादात् तत्प्रापकवचनानि वेदेषु विज्ञेयानि। तत्र "यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा" "सवीतं मानुषम्" इत्यादिवचन तैत्तिरीयादिशाखासु प्रत्यक्षमेव। 'उपव्ययते' इति विधेस्तु प्रयोजन वक्ष्यते। प्राचीनावीतविषये तु शाखान्तरे ज्ञेयम्। ज्ञात्वैव च स्मर्तारो निबध्नन्ति "यज्ञोपवीती दैवानि कर्माणि कुर्वीत प्राचीनावीती पित्र्याणि निवीती मानुषाणि' इति। तत्र निवीतकार्याणि परिगणयति बोधायन — 'निवीतकार्याण्यृषीणां तर्पण व्यवाय प्रजासस्कारा अन्यत्र होमान्मूत्रपुरीषोत्सर्ग प्रेतोद्वहन यानि चान्यानि मनुष्यकार्याणि' इति। अतिथिपूजा तु दैवकर्मैव, 'स एक' प्राजापत्य कुटुम्बिनो यज्ञो नित्यप्रतत' इत्यादिना आतिथ्यकर्मण प्रजापतिदेवताकत्वावगमात्। अतिथिस्तु आहवनीयादिवद्धवि प्रक्षेपाधारमात्रम् इति तत्रोपवीतमेवेति। एव नित्यभोजनेऽपि आद्याना पञ्चाना ग्रासाना प्राणादिदेवत्यत्वात्, 'तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्' इति तदितरग्रासाना प्रजापतिदेवत्यत्वात्। इदमेवाभिप्रेत्य स्मरन्ति 'उपासने गुरूणा वृद्धानामतिथीना होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्' इत्यादि। अन्वाहार्यपाकादेर्मनुष्यकर्मत्वेऽपि तत्रोपवीतमेवेत्यनुपदमेव वक्ष्यते॥

इति प्रथम निवीताधिकरणम्॥ १॥

२

'उपव्ययते' इति दर्शपूर्णमासयो श्रुतमुपवीतं किं सर्वकर्माङ्गम्? उत दर्शपूर्णमासाङ्गम्? इति सशये पूर्वपक्षयति—

## उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्॥ १०॥

उपवीतं सर्वकर्माङ्ग स्यात्। कुत? लिङ्गदर्शनात् जीवदवस्थाया प्रक्रान्ते दिष्टगताग्निहोत्रे श्रूयते "प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इति। तत्र यद्यपि 'तूष्णीं जुहोति' इति वचनात् "यत्तूष्णीं तत्प्राजापत्यम्" इति प्रजापतिदेवताकत्व प्राप्तम्, तथाप्यत्र दोहने प्राचीनावीतविधानात्पित्र्यत्व विज्ञायत इति स्थिति। तत्र यदि सर्वकर्मार्थमुपवीत स्यात्, तदा जीवदग्निहोत्रेऽग्निसूर्यादिदेवप्रधाने कर्मणि "यज्ञोपवीती हि देवेभ्यो दोहयति" इत्यनुवाद उपपद्यते। उपवीतस्य दर्शपूर्णमासार्थत्वे तु तत्रोपवीतस्याप्राप्तेरनुवादो नावकल्पेत, अग्निहोत्रस्यापूर्वत्वेन

नाम्' इति हि दर्शपूर्णमासकर्मणि देवप्रधाने उपवीतं विदधाति। 'प्राचीनावीतं पितृणाम्' इति तु पितृप्रधाने पिण्डपितृयज्ञादिकर्मणि प्राचीनावीतं विदधाति। अतस्तद्वैषम्याय इतरस्य निवीतवाक्यस्यापि अतिथिपूजादिरूपमनुष्यप्रधानस्वतन्त्रकर्मार्थत्वं समभिव्याहाररूपवाक्यप्रमाणात् मन्यामहे। अतः प्रकरणादुत्कर्षो निवीतविधेरिति स्थितम् ॥

तदेवं निवीतवाक्यस्य विधित्वमभ्युपगम्य मनुष्यधर्मत्वादिविचारः प्रक्रान्तः। वस्तुतो विधित्वमेव नास्ति। मनुष्यधर्मत्वादिविचारस्तु कृत्वाचिन्तयैवेति वक्तुं सिद्धान्ततयोत्प्रेक्षित पञ्चमपक्षमपि निराकुर्वन्नर्थवादत्वमवलम्बते—

## अर्थवादो वा रणात् ॥ ८ ॥

वाशब्दोऽवधारणे। निवीतवाक्यम् 'उपव्ययते' इति विधेरर्थवाद एव। न त्वतिथिपूजादिकर्मणि निवीतविधि । कुत ? प्रकरणात्। दार्शपूर्णमासिकोपव्याानविध्यर्थवादत्वे सत्येव प्रकरणानुग्रहात्। 'अप्रकरणात्' इत्यपि च्छेद.। अप्रकरण बुद्धावपरिवृत्ति'। श्रुत्यादिषट्प्रमाणासंस्पृष्टातिथ्यादिकर्मणो बुद्ध्यनारोहाच्च ॥

इतोऽप्यर्थवादत्वमित्याह —

## विधिना चैकवाक्यत्वात् ॥ ९ ॥

'शशाङ्कस्य रोहिणी' 'नलस्य दमयन्ती' इत्यादौ दारान्तरसत्त्वेऽपि रोहिण्यादय. प्रियतमा इति गम्यते। एवञ्च निवीतप्राचीनावीते यथा मनुष्याणां पितॄणाञ्च प्रिये तथा देवानामुपवीतम् इत्येवं स्तुत्या वा निवीतप्राचीनावीतयोर्मनुष्यपितृविषयत्वेन देवान् प्रत्ययोग्यत्वादुपवीतमेव देवाना प्रशस्तम् इति विपर्ययमुखेन वा स्तुत्या 'उपव्ययते' इति प्रकृतविध्येकवाक्यत्वे सम्भवति अप्रकृतातिथिपूजादिविध्येकवाक्यत्वस्यानुचितत्वादर्थवादत्वमेव। चकारोऽनुक्तसमुच्चये। "निवीतं मनुष्याणां प्राचीनावीतं पितॄणाम्" इत्यत्र विधिप्रत्ययाश्रवणात् अनेकादृष्टकल्पनाप्रसङ्गाच्चेत्यर्थ.। यद्यप्यौदुम्बराधिकरणे फलाय विध्यसम्भवात् विध्येकवाक्यत्वसम्भवाच्चार्थवादत्वमास्थितम्, तथैवेहाप्यर्थवादत्व वर्ण्यत इति पौनरुक्त्यम्, विध्यर्थवादत्वचिन्ताप्यस्मिन्नध्यायेऽसङ्गता, तथापि कृत्वाचिन्तात्वस्फोरणार्थमेव तदधिकरणसिद्धार्थवादत्वोपन्यास इत्यदोष । तदेवम् 'उपव्ययते' इति विधीयमानमुपवीत स्तोतु निवीतादिवाक्य प्रवृत्तमिति स्थितम्।

"भूर्भुवःसुवरित्याहवनीये जुहुयात्" इति प्रायश्चित्तमग्निहोत्रादौ भवति। दर्श-पूर्णमासयोस्तु 'उपव्ययते' इति यजुर्वेदे तैत्तिरीयशाखायां विधानात् तदपचारे "यदि यजुष्टो यज्ञभ्रेष आगच्छेद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्" इति प्रायश्चित्त भवति ॥

इति द्वितीयमुपवीताधिकरणम् ॥ २ ॥

३

'उपव्ययते' इत्यनुवादो विधिर्वा ? इति संशयः। तत्र 'नित्ययज्ञोपवीती' इति स्मृतिमूलश्रुत्या विहितमेक यज्ञोपवीत पुरुषार्थतया नित्यधार्यम्। "यज्ञोपवीत्येवा-धीयीत याजयेद्यजेत" इति तैत्तिरीयश्रुत्या 'यज्ञोपवीती दैवानि कर्माणि करोति' इति स्मृतिमूलश्रुत्या च सर्वार्थतया विहितमन्यद्यज्ञोपवीतम्। तदेतत्पुरुषार्थेन यज्ञोपवीतेन समुच्चीयते, क्रतुपुरुषार्थतया संयोगभेदात्। बोधायनसूत्रे 'नित्यमित्याचार्या सम्प्रति-पन्ना कथमेतदुच्यते' इति कर्मसु 'नित्ययज्ञोपवीती' इत्येव सिद्धे पुनस्तद्विधान व्यर्थमित्याक्षिप्य 'अजिनं वासः सूत्र वा द्वितीयं यस्य यद्भवति तेन स उपव्ययते' इति समुच्चयवचनाच्च, टुप्टीकावार्तिके 'यज्ञोपवीतेनोपवीतस्याविरोधात्समुच्चयः' इति वक्ष्यमाणत्वाच्च। तदेतदुभयविधस्योपवीतस्य 'उपव्ययते' इत्यनुवादो दर्शपूर्णमासयो-रिति प्राप्ते, सिद्धान्तयति—

## विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

वाशब्द एवार्थे। 'उपव्ययते' इति विधिरेव, न त्वनुवादः। स हि गुणवि-ध्यर्थो वा स्यात्? स्तुत्यर्थो वा? नात्र विधेयो गुण कश्चिदुपलभ्यते। नापि स्तोतव्य किञ्चिदस्ति। यदुक्तम् उपवीतमन्यतः प्राप्तत्वान्न विधेयमिति, तत्राह— अपूर्वत्वादिति। न विद्यते पूर्वं प्रापकं प्रमाणं यस्य तदपूर्वम्। प्रापकप्रमाणाभावा-दित्यर्थः। दर्शपूर्णमासयोर्हि मनुष्यप्रधानान्वाहार्यपाकादिकर्मणि "स्वधा पितृभ्यः" इति प्रोक्षणीशेषनिनयने च पित्र्यकर्मणि निवीतप्राचीनावीताभ्या बाधितमुपवीतम् 'उपव्ययते' इति प्रतिप्रसूयते। भवस्वामिप्रभृतयो याज्ञिका अपि बहव एवमाहु। एव चाग्निहोत्राद्यङ्गभूतपित्र्यकर्मणि 'स्वधा पितृभ्य' इति लेपनिर्मार्गादौ प्रतिप्रसवा-भावात्प्राचीनावीत मेव भवति ॥

इति तृतीयमुपवीतविध्यधिकरणम् ॥ ३ ॥

दर्शपूर्णमासतश्चोदकतस्तत्प्राप्त्यभावात्। ततश्च जीवदग्निहोत्रे दोहने यज्ञोपवीतस्य सिद्धवदनुवादाल्लिङ्गात्प्रकरण बाधित्वा 'उपव्ययते' इति विधे. सर्वकर्मसु निवेश मन्यामहे। न च दर्शपूर्णमासस्थोपवीतस्यैवायमनुवादोऽस्त्विति वाच्यम्, विप्रकृष्टत्वात् 'देवेभ्यो दोहयति' इति बहुवचनानुपपत्तेश्च। तत्रेन्द्रस्य महेन्द्रस्य वा एकस्यैव सान्नाय्यदेवतात्वात्। न च द्वितीयस्य तृतीये 'अयनेषु चोदनान्तरं सञ्ज्ञोपबन्धात्' इत्यधिकरणे दाक्षायणयज्ञस्य दर्शपूर्णमासानन्यत्ववर्णनात् "पूर्णमासे सन्नयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेत" इति तदीयदेवताबहुत्वाभिप्रायं बहुवचनमिति वाच्यम्, दाक्षायणयज्ञस्य काम्यत्वेनानित्यतया तदीयदोहदेवतानां नित्यवच्छ्रुतबहुवचनेनानुवादासम्भवात्। तस्मात् "यज्ञोपवीती हि देवेभ्यो दोहयति" इति जीवदग्निहोत्रविपयमेवेति तदनुवादाल्लिङ्गात्सर्वकर्मार्थम् 'उपव्ययते' इति विधानम् ॥

अथ सिद्धान्तयति—

## न वाप्रकरणात्तस्य दर्शनम् ॥ ११ ॥

वाशब्द एवार्थे। 'अप्रकरणात्' इत्यपि च्छेद। नैवोपवीतं सर्वकर्माङ्गम्, किन्तु दर्शपूर्णमासाङ्गमेव। कुत ? प्रकरणात्। अथ लिङ्गदर्शनमन्यथयति—अप्रकरणात्तस्य दर्शनमिति। तस्य उपवीतस्य दर्शपूर्णमासगतस्यैव 'यज्ञोपवीती हि देवेभ्य' इत्यनुवादः। कुत. ? अप्रकरणात् प्रकृताळाभात्। अनुवादो हि प्राप्त्यपेक्षः। स च सन्निकृष्टाभावे विप्रकृष्टविषयोऽप्याश्रीयते। बहुवचन प्रकृतिविकृतिदेवताभिप्रायमविवक्षितार्थं वेति अगत्या आश्रयणीयम्। न ह्यग्निहोत्रविषयमिद बहुवचनमिति युज्यते, तस्याग्निसूर्यमात्रप्रधानदेवत्यत्वस्य तत्प्रख्याधिकरणे निरूपितत्वात्। अङ्गदेवता प्रजापतिमादाय बहुवचनसमावेशे स्विष्टकृतमादाय दर्शपूर्णमासयोरेव तदुपपत्ते। दर्शे स्विष्टकृति दोहद्रव्यस्यापि समावेशात्। केचित्तु 'तस्य दर्शनम्' इत्येतदन्यथा व्याचक्षते। तस्य उपवीतस्य 'यज्ञोपवीती दैवानि कर्माणि करोति' इति स्मृतिमूलश्रुत्या जीवदग्निहोत्रे प्राप्तस्य "यज्ञोपवीती हि देवेभ्य." इत्यनुवाद इति। ततश्च 'यज्ञोपवीती हि' इत्यनुवादस्य दर्शपूर्णमासविषयत्वान्, अग्निहोत्रविषयत्वेऽपि स्मार्तयज्ञोपवीतविषयत्वेनान्यथासिद्धत्वात्, दर्शपूर्णमासाङ्गतयैव 'उपव्ययते' इति विधिरिति सिद्धम्। यद्यप्यग्निहोत्रादावपि स्मृत्या यज्ञोपवीत प्राप्यत एव, तथापि स्मृतिमूलश्रुतेरविज्ञातवेदविशेषस्थत्वात्, तद्विहितापचारेऽविज्ञातवेदविहितभ्रेषे

तु उदक्त्वस्याविज्ञातवेदविशेषमूलकस्मृतिमूलकत्वात् तदपचारे [1]अविज्ञातप्रेपप्रायश्चित्तमिति।'

तदेवम् 'विधिर्वा स्यादपूर्वत्वात्' इति सूत्रेणैकमधिकरणम्, तदुत्तरसूत्राभ्याञ्च अधिकरणान्तरं वर्णितम्। तत्र 'विधिर्वा स्यादपूर्वत्वात्' 'सतो वा लिङ्गदर्शनम्' इति सूत्रयोरधिकरणान्तरपरत्वमप्यावृत्त्या लभ्यते। तथाहि—"यज्ञोपवीती हि देवेभ्यो दोहयति" इति किमयं जीवदग्निहोत्रे दैवे यज्ञोपवीतविधि? उत मृताग्निहोत्रदोहे "प्राचीनावीती दोहयति" इति विधानात् दर्शपूर्णमासादिषु प्राप्तस्योपवीतस्य विधेयप्राचीनावीतस्तुत्यर्थोऽनुवाद? इति संशये, पूर्वपक्षयति—

## विधिर्वा स्यादपूर्वत्वात्।

जीवदग्निहोत्रदोहे उपवीतविधिरेवायम्। यद्यपि 'न वाप्रकरणात्तस्य दर्शनम्' इति पूर्वसूत्रे दार्शपूर्णमासिकानुवादत्वमुक्तं, तथापि तन्न सम्भवति, दिष्टगताग्निहोत्रदोहविषयप्राचीनावीतसमभिव्याहारेण "यज्ञोपवीती हि देवेभ्यः" इत्यस्य जीवदग्निहोत्रदोहविषयत्वस्य स्वरसत. प्रतीते, [2]अग्निहोत्रे चाप्राप्तत्वेन यज्ञोपवीतस्य विधिरयम्। यद्यपि 'यज्ञोपवीती दैवानि कर्माणि' इति स्मृत्या "यज्ञोपवीत्येवाधीयीत, याजयेद्यजेत" इत्यादिश्रुत्या च सर्वकर्मार्थं यज्ञोपवीतं विहितं जीवदग्निहोत्रे प्राप्तम्, तथापि तत्र "स्वधा पितृभ्य इति लेपं निमार्ष्टि" इत्यादिपित्र्यकर्मणि स्मृतिप्राप्तेन प्राचीनावीतेन बाधो मा भूदिति पुनर्विधि.। हिशब्दस्तु विधानानन्तरभाविप्रसिद्धिद्योतक इति न विरोध इति स्थिते, वाक्यान्तरविषयेऽपि पूर्वपक्षमुपक्षिपति—

## उदक्त्वं चापूर्वत्वात्॥

उक्तोऽर्थ.। तदिदं पूर्वपक्षद्वयमप्येकेनैव सूत्रेण निराचष्टे—

## सतो वा लिङ्गदर्शनम्॥

'ये पुरोदञ्च.' इति विषये सिद्धान्ततया व्याख्यातमेवैतत्। "यज्ञोपवीती हि देवेभ्य." इति वाक्यविषयेऽप्येवं योज्यम्। उक्तश्रुतिस्मृतिभ्या सर्वकर्मार्थतया विहितस्य जीवदग्निहोत्रे सत—विद्यमानस्योपवीतस्य अनुवाद एवायम्, यतः लिङ्गस्य अनुवादत्वद्योतकस्य हिशब्दस्यात्र दर्शनमस्ति, स्वरसतः स्ववाक्यगतहिशब्दाव-

1 अविज्ञातप्रायश्चित्तम्. क. 2. अग्निहोत्रे चाप्राप्तत्वात्. क.

४

तत्रैव दिष्टगताग्निहोत्रे श्रूयते "ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रान् करोति" इति। पुरा जीवदवस्थायां प्रक्रान्ते दिष्टगताग्निहोत्रे ये परिस्तरणदर्भा उदग्राः स्थिताः, तान्दिष्टगताग्निहोत्रे दक्षिणाग्रान् कुर्यादित्यर्थः। तत्र 'ये पुरोदञ्चः' इति किं विधिः? उतानुवादः? इति संशये, पूर्वपक्षयति—

## उदक्त्वं चापूर्वत्वात् ॥ १३ ॥

'तान्दक्षिणाग्रान्' इत्यनेन दिष्टगताग्निहोत्रे परिस्तरणदर्भाणा दक्षिणाग्रत्वमिव जीवदग्निहोत्रे तेषामुदगग्रत्व 'ये पुरोदञ्च' इत्यनेन विधीयते। कुतः? अपूर्वत्वात्— अप्राप्तार्थत्वात्। न च 'प्रागग्राण्युदगग्राणि वा' इति स्मृत्या तत्प्राप्तिरिति वाच्यम्। स्मृते श्रुतिमूलकत्वेन श्रुते स्मृतिप्राप्तानुवादत्वासम्भवात्, स्मृतिमूलश्रुतित प्राप्त्यभिधाने चावश्यकत्वादस्या एव श्रुतेर्मूलतया अन्यतस्तत्प्राप्त्यसम्भवात्। ततश्च यच्छब्दोपबन्धे सत्यपि व्यवहितान्वयाध्याहारकल्पनया वाक्यभेदेन च विधिद्वयमास्थेयम्। तत्र पुरा जीवदवस्थायां प्रक्रान्तेऽग्निहोत्रे ये दर्भा, ते उदगग्रा कार्या इत्येक वाक्यम्, ये पुरा उदञ्च परिस्तरणदर्भा, तान्दक्षिणाग्रान् कुर्यादित्यपर वाक्यम् ॥

अथ सिद्धान्तयति—

## सतो वा लिङ्गदर्शनम् ॥ १४ ॥

वाशब्द एवार्थे। सत स्मृतिप्राप्तस्योदगग्रत्वस्यायमनुवाद, न तु विधि। यतः अनुवादत्वे एकवाक्यत्वे च लिङ्गस्य यत्तच्छब्दोपबन्धस्य दर्शनमस्ति। न च प्राप्त्यभाव, 'उदगग्राणि प्रागग्राणि वा' इति स्मृत्या तत्प्राप्तेः। न चेयमेव श्रुति स्मृतेर्मूलमिति वाच्यम्, स्मृते सर्वसाधारणतया ता प्रति जीवदग्निहोत्रमात्रविषयाया 'ये पुरोदञ्च' इति श्रुतेर्मूलत्वासम्भवेन मूलान्तरस्यैव कल्पनीयत्वात्, कल्पिते तस्मिन् श्रुत्यन्तरे तत एव जीवदग्निहोत्रेऽपि प्राप्तेरनुवाद एवायम्। एवञ्च यत्तच्छब्दोपबन्धाभ्या स्वरसत प्रतीयमानमेकवाक्यत्वमप्यनुसृत भवति। वाक्यभेदे च 'तान्दक्षिणाग्रान् करोति' इति तच्छब्दस्य वाक्यान्तरगतयच्छब्देनान्वय, 'ये पुरोदञ्च' इति पूर्ववाक्ये तच्छब्दान्तरस्य कार्या इत्यस्य चाध्याहारश्च नाश्रितो भवति। प्रयोजनम्—पूर्वपक्षे जीवदग्निहोत्रे उदक्त्वस्यापचारे यजुर्भ्रेषप्रायश्चित्तम्, सिद्धान्ते

## दिग्विभागश्च तद्वत् ॥ १६ ॥

प्रतीचीविभागोऽपि निवीतवदेव प्रत्येतव्यः। देवपितृरुद्राणां कर्मानधिकारस्य षष्ठे वक्ष्यमाणत्वात्तद्धर्मत्वादिसर्वपक्षाणां देवादिसंयुक्तवाक्येष्वसम्भवान्न तेषामिह विषयत्वम्। तत्र 'मनुष्या व्यभजन्त' इति सामानाधिकरण्यश्रवणादेव मनुष्यधर्मत्वमिति प्रथमसूत्रं योज्यम्। प्रायेण पूर्वाह्णे व्याम्रियमाणानां मनुष्याणामादित्यं पृष्ठतः कर्तुं प्रतीचीसम्बन्धस्यार्थतः प्राप्तत्वान्न मनुष्यधर्मतया तद्विधिरिति शङ्कापरतया 'अपदेशो वा' इति द्वितीयं सूत्रं योज्यम्। नियोगतस्तदप्राप्तेर्नियमविधिरिति 'विधिस्त्वपूर्वत्वात्स्यात्' इति सूत्रेण तत्परिहारः। प्रकरणसमाख्यानाभ्यां कर्मधर्मः, मनुष्यसामानाधिकरण्यश्रवणप्रकरणसमाख्यानामविरोधात्क्रतुयुक्तकर्तृधर्मः, मनुष्यपदस्यावैयर्थ्याय श्रुत्यादिप्रमाणानुग्रहाय च प्राकरणिकमनुष्यप्रधानदक्षिणाप्रतिग्रहादिकर्मधर्मः, वाक्येन प्रकरणसमाख्ययोर्बाधादातिथ्यादौ निवेशः, आतिथ्यादिकर्मणोऽतिव्यवहितत्वात् प्रकरणे सम्भवतश्चानुत्कर्षात् 'प्राचीनवंशं करोति' इति विध्येकवाक्यत्वाच्च प्रतीचीविभागवाक्यमर्थवाद इत्येवं यथासम्भवं पक्षा योज्याः।

केचित्तु 'दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वात्' इति पठन्ति—दिग्विभागवाक्यमपि निवीतवाक्यवन्नेयम्, न च 'प्रतीची मनुष्यैर्विभाज्या' इति विधिः कल्प्यतामिति वाच्यम्, सम्बन्धस्यार्थहेतुत्वात्, अर्थ्यते अपेक्ष्यत इत्यर्थः स्तुतिः, प्रतीच्या मनुष्यसम्बन्धकीर्तनस्य प्राचीनवंशविध्याकाङ्क्षितस्तुतिप्रयोजनकत्वे सम्भवति विध्यन्तरकल्पनाया अनुचितत्वादिति व्याख्येयम्। ननु निवीताधिकरणातिदेशपरत्वे तदनन्तरमेवेदमधिकरणं प्रवर्तयितुमुचितमिति चेत्—अत एव 'उपवीतं लिङ्गदर्शनात् सर्वधर्मः स्यात्' इति षट् सूत्राण्यनार्षाणीति ब्रूमः, भाष्ये तेषामव्याख्यातत्वाच्चेति केचित्; भाष्यकृतो विस्मरन्ति स्मेत्येके, भाष्यसन्दर्भे त्रुटितानि इत्यपरे, फल्गुत्वादुपेक्षितानीत्यन्ये, वृत्तिकारैस्तु सर्वैर्व्याख्यातानीमानि षट् सूत्राणि, सन्ति च जैमिनेरप्येवम्प्रकाराण्यसारभूतानि सूत्राणि, व्यवहितातिदेशाश्च 'पानव्यापच्च तद्वत्' इत्यादावाश्रिता इति वार्तिके बहुधोत्प्रेक्षितम्॥

इति षष्ठं दिग्विभागाधिकरणम्॥ ६ ॥

७

महापितृयज्ञे श्रूयते "यत्परुषि दिनं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत्समूलं तत्पितॄणाम्, समूलं बर्हिर्भवति व्यावृत्त्यै" इति। परुषि पर्वणि, दिनं

गतानुवादत्वाश्रयणे सम्भवति वाक्यान्तरसमभिव्याहारलभ्यस्य जीवदग्निहोत्रविषयत्वस्याश्रयणायोगादिति भावः। प्रयोजनम्—पूर्वपक्षे जीवदग्निहोत्रे पित्र्यनिमार्जनादिकर्मणि यज्ञोपवीतमेव न तु प्राचीनावीतम्, सिद्धान्ते तु प्राचीनावीतमिति ॥

इति चतुर्थमुदक्त्वाधिकरणम् ॥ ४ ॥

५

दिष्टगताग्निहोत्रे श्रूयते "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इति। गार्हपत्यसमीपे स्थालीगतं हविरग्निहोत्रहवण्यामुन्नीय तदधस्तात्समिधं धारयन्नाहवनीयसमीपं नयेत्, हि यतः दैवे जीवदग्निहोत्रे समिधमग्निहोत्रहवण्यामुपरि धारयतीत्यर्थः। तत्र "उपरि हि देवेभ्यो धारयति" इति किमनुवादः? उत विधिः? इति संशयः। सर्वमभ्यर्हितं द्रव्यमाच्छाद्यैव नेयमिति समयाचारसिद्धम्। तत्राग्निहोत्रद्रव्यस्यापि नीयमानस्य येन केनचिदाच्छादने प्राप्ते 'समिधमुपसङ्गृह्य' इति समिन्नियम्यते। सा च समित् उपरि धार्यमाणैवाच्छादयितुं प्रभवतीति जीवदग्निहोत्रे प्राप्तमुपरिधारणमनूद्यते दिष्टगताग्निहोत्रे विधेयमधस्ताद्धारणं स्तोतुमिति प्राप्ते, सिद्धान्तयति—

**विधिस्तु धारणेऽपूर्वत्वात् ॥ १९ ॥**

तुर्वैषम्ये। न पूर्ववदनुवादोऽत्र युज्यते। किन्तु जीवदग्निहोत्रे उपरिधारणे विधिरेवायम्। कुतः? अपूर्वत्वात्—जीवदग्निहोत्रे उपरिधारणस्याप्राप्तत्वात्। उपरिधारणविध्यभावे हि 'स्रुग्दण्डे समिधमुपसङ्गृह्य' इति श्रवणात् कृत्स्नाया अपि समिधः स्रुग्दण्ड एव धारणं भवेत्, न तु बिलस्थहविरुपरि। ततश्च समिधा आच्छादनमत्यन्ताप्राप्तमिति विधिरेवायम् 'धारयति' इति। लेट्रूपं कल्प्यम्। हिशब्दश्च विध्यनन्तरभाविप्रसिद्धिं द्योतयति। सति चोपरिधारणविधौ स्रुग्दण्डे बिलसमीपप्रदेशे समिधो मूलांशस्य बिलप्रदेशे च मध्याग्रांशस्य धारणमिति न विरोधः ॥

इति पञ्चममुपरिधारणाधिकरणम् ॥ ५ ॥

६

ज्योतिष्टोमे श्रूयते—"दिशो व्यभजन्त प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः" इति। तत्र 'प्रतीचीं मनुष्याः' इति वाक्ये निवीताधिकरणमतिदिशति—

सोमे च तानूनप्त्रादिप्रचारे [1]आज्यस्य निष्पक्वत्वं कार्यम्। अथवा स्वतन्त्रमनुष्यप्रधानातिथ्यादिकर्मणि विष्टरादिदर्भाणामन्तरालवनम् ओदनादीनां पूर्णत्वम् आज्यस्य च निष्पक्वत्वं कार्यमिति। तत्र विधित्वाभ्युपगमे नियमादृष्टकल्पनादिदोषप्रसङ्गादर्थवादत्वमिति स्थितम्। यद्यप्यत्र नियमादृष्टस्याविघ्नसमाप्त्यर्थतयापेक्षावशाल्लवनादिष्वेवोपयोगसम्भवाददृष्टसाध्यस्वर्गादिफलं न कल्प्यम्, तथा विदग्धवाक्येऽपि नैर्ऋतादियागोपकारस्यैव फलत्वान्नादृष्टफलकल्पनम्, तथापि लवनादिसौकर्यसिद्ध्यर्थतया लोकत प्राप्तत्वादन्तरादीनामनुवादः, ततश्च यादृच्छिकलौकिकान्तरालवनमुद्दिश्य मनुष्यसम्बन्धस्तुत्यर्थतयैवोपदेशोपपत्तेर्न विधिकल्पनम्, विदग्धवाक्येऽपि विदग्धस्य कर्मानर्हत्वफलकनिर्ऋतिसम्बन्धमात्रस्य प्रतिपादनान्निर्ऋतेश्च [2]देवतानर्हभक्षकत्वस्य प्रमाणान्तरसिद्धत्वान्न विधिकल्पनम् इत्यधिकाशङ्कापरिहारार्थमेतत्सूत्रम्॥

इति सप्तमं परुषिदिनाधिकरणम्॥ ७॥

८

दर्शपूर्णमासयो श्रूयते "नानृतं वदेत्" इति। किमयं पुरुषधर्मतया विधिः? उत क्रतुयुक्तपुरुषधर्मतयानुवादः? यद्वा केवलक्रतुधर्मतयानुवादः? अथवा केवलक्रतुधर्मतया विधिः? इति संशये, पूर्वपक्षयति—

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात्॥ १८॥**

निवीतसूत्रान्मण्डूकप्लुत्या मनुष्यधर्म इत्यनुवर्तते। अकर्म अनृतवदनवर्जनं प्रकरणात्क्रतुसंयुक्ततया प्रसक्तं पुरुषधर्मतयैव प्रत्येतव्यम्। कुत? संयोगात्—अनृतवर्जनस्य श्रुत्या पुरुषसंयोगावगमात्। 'वदेत्' इत्याख्यातेन हि कर्ताभिधीयते, कर्तुस्तत्र नियमेन प्रतीते। 'ल. कर्मणि च भावे चाकर्मकेभ्य.' इति स्मरणाच्च, तत्र चकारेण 'कर्तरि कृत्' इति पूर्वसूत्रस्थकर्तुरनुकर्षणात्। कर्तृविशेषसमर्पकप्रथमान्तपदसामानाधिकरण्याच्च, कथमन्यथा 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम' 'अस्मद्युत्तम' 'शेषे प्रथमः' इति तिङ्समानाधिकरणे युष्मदस्मदि च क्रमेण मध्यमोत्तमपुरुषौ, अन्यत्र प्रथमपुरुष इति पुरुषव्यवस्था सिध्येत्। तथा च कर्तुराख्यातवाच्यत्वे सति प्रत्ययार्थत्वेन प्रधानतया त प्रति धात्वर्थस्य वदनस्य गुणत्वात्

1 आज्य निष्पक्व क, ख

2. 'देवतान्नभक्षकत्वस्य' इत्येव पाठो सर्वत्र दृश्यते। अयं तु कल्पित।

लूनम्, अन्तरा मूलपर्वणोर्मध्ये। तत्रैव श्रूयते "यत्पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम्, अर्धं पितृणाम्, अर्धं उपमन्थति" इति। तथा ज्योतिष्टोमे श्रूयते "घृत देवाना मस्तु पितृणा निष्पक्व मनुष्याणां तद्वा एतत्सर्वदेवत्य यन्नवनीत यन्नवनीतेना-भ्यङ्क्ते" इति। घृतम् अग्नौ विलीनम्, मस्तु स्वयं विलीनम्, निष्पक्वं सुरभि वस्तु प्रक्षिप्य पक्वम्, 'सुरभि घृतं मनुष्याणाम्' इति बह्वृचब्राह्मणम्। तथा दर्शपूर्णमासयो श्रूयते "यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृत' स सदेवस्तस्माद्विदहता शृतंकृत्यः" इति। एतेष्वपि वाक्येषु निवीताधिकरणमतिदिशति—

## [1]परुषिदिनपूर्णघृतविदग्धश्च तद्वत् ॥ १७ ॥

समाहारद्वन्द्वः। परुषिदिनादिशब्दैस्तद्घटितवाक्यानि विवक्षितानि, अनुकरणत्वात्। परुषीति सप्तम्या न लुक्। एतान्यपि वाक्यानि निवीतवाक्यवदेव प्रत्येतव्यानि। तत्र मनुष्यसयुक्तेषु "यदन्तरा तन्मनुष्याणाम्" "यत्पूर्णं तन्मनुष्याणाम्" "निष्पक्व मनुष्याणाम्" इत्येतेषु मनुष्यधर्मत्वादय. सर्वेऽपि पक्षा. सुयोजाः। विदग्धवाक्ये तु निर्ऋतिधर्मं इत्यसम्भवात्प्राकरणिकहविषो विदाहे निमित्ते प्राकरणिकदेवतापनयेन निर्ऋतिदेवताविधि, एव रौद्रवाक्येऽपि, अथवा यो नैर्ऋत' स विदग्धः कार्यं यो रौद्र सोऽशृत. कार्यं इति नैर्ऋते रौद्रे च हविषि विदग्धादिविधि', यद्वा अर्थवाद इति पक्षा योज्या। तत्र 'यदन्तरा' इत्यादिमनुष्यसंयुक्तवाक्येषु मनुष्यभागाय क्रियमाण दर्भलवन मूलपर्वणोर्मध्ये कार्यम्, धान्यादिकञ्च मीयमान पूर्णं मातव्यम्, अभ्यञ्जनादि स्नेहकार्यं निष्पक्वेन कार्यमिति नियम्यत इति मनुष्यधर्मत्वपक्षः। यद्वा प्रकरणसमाख्याभ्या तत्तत्कर्मधर्म', ततश्च महापितृयज्ञे दर्भाणामन्तरालवनम् 'समूलं बर्हिर्भवति' इत्यनेन विकल्पते, आज्यञ्च स्थाल्या पूर्णं निर्वपणीयम्, सोमे चाज्यकार्यं निष्पक्वेन कर्तव्यमिति नियमः फलति, 'मनुष्याणाम्' इति अर्थप्राप्तकर्त्रनुवाद। अथवा श्रुतिप्रकरणसमाख्यानामविरोधात्प्राकरणिकाध्वर्युधर्म., ततश्च महापितृयज्ञे दर्भाणामन्तरालवन धान्यादीना च पूर्णत्व सोमे चाज्यस्य निष्पक्वत्वमध्वर्युणा कर्तव्यम्, एतै संस्कृतोऽध्वर्यु कर्माङ्गम्। अपि वा मनुष्यपदावैयर्थ्याय श्रुत्यादिसर्वप्रमाणाविरोधाय च प्राकरणिकमनुष्यप्रधानकर्मणि निवेश, ततश्च महापितृयज्ञे तथाविधहोतृसदनार्थदर्भाणामन्तरालवनम् अन्वाहार्यस्य पूरण

1 परुषिवित

विधीयते, किन्त्वनूद्यत इत्याह—नित्यानुवादः स्यादिति। नित्यसिद्धप्रतिषेधस्यानुवादो नित्यानुवाद।

'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः'॥
'प्रागुपनयनात्कामचारवादभक्षः'

इत्यादिस्मृत्योपनयनप्रभृति यावज्जीवं विहितमनृतवदनवर्जनं दर्शपूर्णमासयोरपि नित्यं प्राप्तत्वादनूद्यते। न च स्मृतेरिदमेव वैदिकं वचनं मूलमिति युक्तम्, क्रतुमात्रकालकानृतवदनप्रतिषेधश्रुतेरस्या सार्वकालिकतत्प्रतिषेधकस्मृतिं प्रति मूलत्वासम्भवेन तत्र तथाविधश्रुत्यन्तरमूलत्वस्यैव कल्प्यत्वात्। न चैवमपि क्रतुयुक्तपुरुषसंस्कारत्वस्य स्मृतित प्राप्त्यभावात् कथं क्रतुयुक्तपुरुषधर्मतानुवादत्वं श्रुते, स्मृतिवचनस्य प्रकरणपाठाभावादिति वाच्यम्। क्रतुर्हि स्वस्य फलसाधनत्वसिद्ध्यर्थं यजमानस्य फलाधारत्वयोग्यतामपेक्षते, निषिद्धाचारवतश्च पुंसो नास्ति फलाधारत्वयोग्यता, 'अदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि' इत्यादिस्मरणात्, ततश्च पुरुषार्थमनृतवदनवर्जनं सार्वकालिक विदधाना स्मृति कर्मदशायामपि यजमानमनृतवदनाद्व्यावर्तयन्ती तस्मिन् क्रत्वपेक्षितफलाधारत्वयोग्यतामादधाना क्रत्वपूर्वीयत्वरूपेणापि पुरुषार्थतां प्रतिषेधस्यावगमयतीति तदनुवादत्वं श्रुतेरिति युज्यते। एवञ्च क्रतोर्बहिः प्रतिषेधातिक्रमे पुरुष केवल प्रत्यवैति, तत्र पूर्वोक्तमाचमनादि स्मार्तं प्रायश्चित्त भवत्येव; क्रतौ प्रतिषेधातिक्रमे तु पुरुषोऽपि प्रत्यवैति, ततः कर्तृवैगुण्यात्क्रतोश्च वैगुण्यम्, तत्र प्रतिषेधश्रुते स्मृतिप्राप्तानुवादत्वात् स्मृतेश्च अविज्ञातवेदविशेषमूलकत्वात् "यद्यविज्ञाते भूर्भुवःसुवः स्वाहेत्याहवनीये जुहुयात्" इत्यविज्ञातवेदविशेषविहितयज्ञाङ्गभ्रेषनिमित्तक श्रौतप्रायश्चित्तम् आचमनादि स्मार्तप्रायश्चित्तञ्च समुच्चीयत इति द्वितीय पक्ष।

तृतीयपक्षपरमप्येतत्सूत्रम्। अकर्म अनृतवदनवर्जनं पुरुषम् अद्वारीकृत्य साक्षादेव क्रतुना शेषतया युज्यते। कुत? सयोगात्—कर्तुराख्यातप्रत्ययवाच्यत्वेऽपि तस्य क्रियां प्रति गुणत्वेन सयोगात्, कर्तु कारकत्वेन क्रियागुणत्वावश्यम्भावात्, 'भावप्रधानमाख्यातम्' इति निरुक्ताच्च प्रत्ययार्थप्राधान्यस्मरणस्य च आख्यातव्यतिरिक्तविषयत्वोपपत्ते। ततश्च धात्वर्थवदनं प्रति पुरुषस्य शेषित्वप्रत्यायकश्रुत्यभावे सति प्रकरणात्प्रतिषेधस्य साक्षादेव क्रत्वर्थत्व न तु पुरुषद्वारेति पर्यवस्यति। स चाथ

समानपदश्रुत्या पुरुषार्थं वदनमिति तत्प्रतिषेधस्यापि पुरुषार्थत्वं सिध्यति। यदर्थं वदनं तदर्थताया एव तत्प्रतिषेधस्य न्याय्यत्वात्। प्रतिषेधविधिर्हि प्रतिषेध्यस्यानिष्टसाधनत्वं गमयति, अन्यथा तत्प्रतिषेधस्यानर्थक्यात्, तत्रैकस्मिन्वाक्ये 'वदेत्' इति वदने पुरुषं प्रतीष्टसाधनत्वस्य तन्वानिष्टसाधनत्वस्य चावगमविरोधात् प्रतिषेधापेक्षितप्रसक्तिसमर्पकानुवादत्वम् 'वदेत्' इत्यस्याश्रित्य, यत् पुरुषस्येष्टसाधनतया पुरुषार्थं वदनं प्रसक्तं तन्न तथा, किन्तु अनिष्टमेव पुरुषस्य साधयतीति वाक्यार्थो वर्णनीयः। पुरुषस्येष्टसाधनमेव वदनं क्रतोरनिष्टसाधनमपीत्यर्थस्तु न सम्भवति, येन प्रतिषेधस्य क्रत्वर्थता लभ्येत। 'वदेत्' इति शब्दो हि प्रसक्तां वदनक्रियामनुवदन् श्रुत्या पुरुषं प्रतीष्टसाधनतया वदनमुपस्थापयति, न तु प्रकृतं कर्म प्रति, प्रकरणाच्छ्रुतेर्बलीयस्त्वात्, ततश्च प्रतिषेधोऽप्यनुवादानुसारेण पुरुषं प्रत्येव तस्यानिष्टसाधनतां गमयति, न तु क्रतुं प्रति, तस्य तदानीमप्रतिपन्नत्वात्। न च प्रतिषेध्यप्रतिषेधयोरैकरूप्यनियमात् यदर्थं वदनं तदर्थः प्रतिषेध इत्यभ्युपगमे, "दीक्षितो न ददाति, न पचते, न जुहोति" इति दानपाकहोमानां क्रत्वर्थं प्रतिषेध इति दशमे वक्ष्यमाणं विरुध्येतेति वाच्यम्, तत्र हि दानादीनां क्रत्वर्थतया विहितानां प्रतिषेधे विकल्पापत्तेः अगत्या पुरुषार्थानामेव क्रत्वर्थः प्रतिषेध इति वक्ष्यते। ततश्च प्रतिषेध्यस्य पुरुषार्थत्वावगमिकया 'वदेत्' इत्येकपदश्रुत्या प्रतिषेधस्यापि पुरुषार्थत्वमावहन्त्या प्रकरणबाधात्पुरुषार्थत्वमेवानृतवदनवर्जनस्य स्वीकार्यम्। ननु स्मृतावेव पुरुषार्थतयानृतवदनवर्जनस्य विधानात्प्रतिषेधविधिरयमनर्थक इत्यत आह—नित्यानुवादः स्यादिति। नित्यम् अपौरुषेयं वेदवाक्यमनृतवदननिषेधकम्। तदनुवादः स्यात्स्मृतिः, तत्राप्येतदेव मूलं भवतीति यावत्। तस्मादनृतवदनप्रतिषेधोऽयं केवलपुरुषधर्मः, तदतिक्रमे च—

'भुक्त्वा क्षुत्वा च जृम्भित्वा ष्ठीवित्वोक्त्वानृतं वचः।
आचान्तः पुनराचामेद्वासो विपरिधाय च' ॥

इत्यादिस्मृतिसिद्धं द्विराचमनादिप्रायश्चित्तमिति प्रथमः पक्षः।

द्वितीयपक्षेऽप्येतत्सूत्रं योज्यम्। अकर्म अनृतवदनवर्जनं प्रकरणात्क्रतुयुक्तमेव सद् उक्तरीत्या श्रुत्या पुरुषसंयोगावगमात्पुरुषधर्मोऽपि स्यात्, श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मोऽयं प्रतिषेध इति यावत्। तथा च दर्शपूर्णमासौ कुर्वाणस्यानृतवदनं वर्जनीयमिति पर्यवस्यति। स चायं प्रतिषेधः क्रतुयुक्तपुरुषधर्मतया नात्र

वदनवर्जन न प्राप्नुयात्। अनृतवदनवर्जनश्रुत्या तु प्रकरणगतया अनृतवदनतद्वर्ज-नाभ्यां क्रतुगत एव प्रत्यवायस्तत्परिहारश्च बोध्यत इत्यप्राप्तक्रतुसंयोगार्थत्वान्न तस्या अनुवादता। न च क्रतुदशायां प्रतिषेधातिक्रमे क्रतोर्वैगुण्यमेव, अदृष्टकर्मणामेव कर्माधिकारस्योक्तत्वादिति वाच्यम्। कर्मारम्भात्प्राक्तनमेव हि निषिद्धाचरण कर्मानधिकारमावहति। आरब्धे तु कर्मणि निषिद्धाचरण पुरुषस्य केवल प्रत्यवाय-माधत्ते, न तु कर्मानधिकारमपि, तस्य कर्मप्रवृत्त्ययोग्यतात्मकत्वात् इह च प्रवृत्ते-र्वृत्तत्वात्। 'यदि यजमान· सुरापो वा स्याद्ब्रह्महा वा तस्य ध्रुवाया यजमानभाग-मवधाय समिष्टयजुषा प्रस्तरेण वा सह जुहुयात्' इत्यादिकल्पसूत्राण्यप्यत्रानुकूलानि। किञ्च 'नानृतं वदेत्' इत्यत्र निषेधवत् निषेध्यस्याप्यनृतवदनस्य क्रत्वर्थतयैवोपस्थि-तत्वात् 'दर्शपूर्णमासयोरनृतवदनेनोपकुर्यादिति न भवति' इत्यर्थपर्यवसानात् क्रतु-मध्येऽपि क्रत्वर्थद्रव्यार्जनादिविषयानृतवदन एव क्रतोर्वैगुण्यं न तु पुरुषार्थानृतवदने, किमुत 'न कलञ्ज भक्षयेत्' इत्याद्यप्राकरणिकपुरुषार्थप्रतिषेधातिक्रमे। तदुक्त वार्तिके—

'यो नाम क्रतुमध्यस्थ कलञ्जादीनि भक्षयेत्।
न क्रतोस्तस्य वैगुण्य यथाचोदितसिद्धितः'॥ इति।

'क्रतुमध्यस्थ'' इत्यनेन क्रत्वारम्भात्प्राक्तनं निषिद्धाचरणं क्रत्वधिकारं विरुण-द्धीति सूचितम्। एव चानृतवदनवर्जनस्य यजुर्वेदविहितत्वात् तदतिक्रमे यजुष्टो यज्ञभ्रेषप्रायश्चित्तं भवति। स्यादेतत्, 'वदेत्' इति कर्तृवाचकलिङा एकपदश्रुत्या प्रतिषेध्यस्य पुरुषार्थत्वावगमिकया प्रतिषेधस्यापि पुरुषार्थत्वमावहन्त्या प्रकरणेन चाविरुद्धया पुरुषद्वारैव कर्मधर्मतैवानृतवदनवर्जनस्य न्याय्या। यत्तु कर्तुराख्यात-वाच्यत्वेऽपि तस्य कारकत्वात् 'भावप्रधानमाख्यातम्' इति निरुक्तस्मरणाच्च क्रियां प्रति गुणतया पुरुषस्य धात्वर्थवदनं प्रति शेषित्वप्रत्यायकश्रुत्यभावे सति प्रकरणा-त्प्रतिषेधस्य केवलकर्मधर्मत्वमिति, नैतद्युक्तम्, न हि धात्वर्थः क्रिया, येन तत्र कर्ता गुणत्वेनान्वीयेत। भावनैव हि क्रिया। तत्रैव सर्वकारकाणामन्वय·। न च धात्वर्थस्य क्रियात्वाभावे भूप्रभृतीना कथ धातुसंज्ञा, 'भूवादयो धातव·' इति क्रियावाचिनामेव धातुसंज्ञाविधानादिति वाच्यम्। तत्र हि क्रियात्वं नोत्पादनारूपभावनात्वं विव-क्षितम्, किन्तु लिङ्गसङ्ख्याद्यनन्वयित्वमेवेति न दोषः। एवञ्च धात्वर्थस्याख्यात-प्रत्ययवाच्यकर्तुश्च परस्परवार्तानभिज्ञयोरेव प्रथम भावनान्वये सति पश्चादरुणै-कहायनीन्यायेन तयो' परस्परसन्वयो वाच्यः। स च कर्तुः प्रत्ययवाच्यतया प्रत्य-

प्रतिषेधः स्मृतिप्राप्तत्वान्न विधीयते, किन्त्वनूद्यते। न च स्मृतेरप्राकरणिकत्वेन तस्याः पुरुषार्थप्रतिषेधपरतया क्रत्वर्थप्रतिषेधस्य ततः प्राप्त्यभावात् कथं स्मृतिप्राप्तानुवादकत्वं श्रुतेरिति वाच्यम्। न हि 'नानृतं वदेत्' इति स्मृतावनृतवदनवर्जनं पुरुषार्थतया विहितम्, क्रियां प्रति कर्तुर्गुणभूतत्वात्, कर्तृगुणकस्य चानृतवदनस्य वर्जनं विधीयमानं फलमाकाङ्क्षत् अर्थात्कर्त्रभिलषितार्थमेव, ततश्चानृतवदनं वर्जयन् क्रतुदशायामपि वर्जयत्येव, तदानीञ्च तद्वर्जनं क्रत्वर्थं सम्पद्यते, यदर्थं ह्यनृतवदनं तदर्थमेव तद्वर्जनमुचितं भवति, यद्यप्यनृतवदनं क्रतौ न विहितमस्ति, तथापि स्वकार्यसिद्ध्यर्थमनृतं वदन् पुरुषः क्रतोरपि स्वकार्यत्वाविशेषात्तदर्थमपि यदनृतं वदति द्रव्यार्जनादिविषये तदेव क्रत्वर्थमनृतवदनं वाच्यम्, तच्च क्रतुबहिःकार्यान्तरार्थानृतवदनवत् पुरुषाभिलषितार्थतयैव वर्जनीयतया क्रतावपि स्मृतितः प्राप्तमित्यर्थादेकविषयोपनिपाताद्युक्तं स्मृत्यनुवादत्वं श्रुतेः। तदेतदाह—नित्यानुवादः स्यादिति। क्रतौ तद्बहिश्च सर्वदा स्मृतितः प्राप्तस्यानृतवदनवर्जनस्य क्रत्वर्थतया प्रतिषेधश्रुतिरनुवाद इत्यर्थः। एवञ्च प्रतिषेधश्रुतेः स्मृतिप्राप्तानुवादतया, स्मृत्या कर्तृगुणकानृतवदनवर्जनस्य कर्त्रभिलषितकार्यार्थतयैव विहितस्य क्रतुदशायामपि सत्त्वेऽपि विधिगम्याङ्गत्वाभावात्तद्भ्रेषेऽविज्ञातवेदविशेषविहिताङ्गभ्रेषप्रायश्चित्तं न भवति, किन्तु स्मार्तमाचमनादिकमेव। क्रतुयुक्तपुरुषधर्मत्वपक्षे तु प्रतिषेधस्य फलिसंस्कारत्वात् तदतिक्रमे फलिनोऽङ्गस्य पुरुषस्य भ्रेषात् प्रत्यवायाच्च अविज्ञातप्रायश्चित्तं स्मार्तप्रायश्चित्तेन समुच्चीयत इति भेदः। एवञ्च शुद्धक्रतुधर्मतयानुवाद इति प्राप्ते, सिद्धान्तयति—

## विधिर्वा संयोगान्तरात् ॥ १९ ॥

वाशब्द एवार्थे। क्रतुपुरुषसंयोगभेदेन विषयभेदादप्राप्तत्वात्केवलकर्मधर्मतयैव विधिरित्यर्थः। 'धर्मातिक्रमे खलु पुनर्नरकः' इत्यादिस्मृत्या हि विहितस्यानृतवदनवर्जनस्यातिक्रमे नरको गम्यते। तस्मिंश्च कालान्तरदेहान्तरोपभोग्ये प्रतिषेधातिक्रमणस्यानृतवदनादिरूपस्याशुतरविनाशिनः साधकत्वनिर्वाहाय दुरदृष्टं किञ्चित्कल्प्यते, सोऽयं प्रत्यवाय इत्युच्यते। ततश्च अनृतं वदतः पुरुषस्य प्रत्यवायो भवति, तद्वर्जनाच्च न भवतीत्येतावदनृतवदनप्रतिषेधस्मृत्यावगतम्। नैतावतानृतवदनतद्वर्जनाभ्यां कर्मणो वैगुण्यमवैगुण्यञ्च लभ्यते। ततश्च क्रतुदशायामनृतवदनवर्जनातिक्रमेऽपि प्रायश्चित्तेन तत्प्रयुक्तप्रत्यवायं परिहरिष्यामीत्येव प्रत्यवायमभ्युपेत्य क्रतावनुष्ठीयमाने तद्वैगुण्याप्रसक्ते सत्यपि स्मृत्या पुरुषसंयोगेन निषेधे क्रतावनृत-

पलब्धस्यानभिधेयस्यापि कर्तुः सङ्ख्योपलक्षणमात्रत्वात्। 'त्वं करोषि' 'अहं करोमि' 'चैत्र' पचति' इति कर्तृसामानाधिकरण्यमपि तिङामाक्षेपलभ्यकर्तारमादायैवोपपन्नम्। यथा 'गौः शुक्ल' इति जातिगुणवाचिनोर्गोशब्दशुक्लशब्दयोरनभिधेयावपि व्यक्तिगुणिनावादाय सामानाधिकरण्यं तद्वत्। ननु, कर्तुराख्यातानभिधेयत्वे 'देवदत्त' पचति' इत्यत्र तृतीया स्यात्, तिङ्कृत्तद्धितसमासैरनभिहिते कर्मकर्त्रादिकारके द्वितीयातृतीयादिविभक्तिविधानात्, इह च कर्तुस्तिङानभिहितत्वात्। न च कर्तरि यदेकत्वादि तस्मिन्ननभिहिते तृतीयैकवचनादिकमित्येकवाक्यत्वात् इह च कर्त्रेकत्वस्य तिङाभिहितत्वात् न तृतीयेति वाच्यम्; एवमपि 'देवदत्त. पक्ता' इत्यत्र तृतीयापत्ते, तृच कर्तृमात्रवाचकत्वात् कर्तृगतसङ्ख्यायाश्च सुब्विभक्तिवाच्यत्वात्। न चानभिहितस्य कर्तुरेकत्वादौ तृतीयैकवचनादीत्यर्थान्न दोप इति वाच्यम्, एव सति 'देवदत्तः पचति' इत्यत्र तृतीयापत्ते'। न च 'अनभिहिते' इत्यस्य अबोधिते इत्यर्थं, बोधश्च शक्त्या आक्षेपाद्वा, तत्र 'पक्ता' इत्यादौ कृति शक्त्या 'पचति' इत्यादौ तिङि त्वाक्षेपादिति नोभयत्र तृतीयेति वाच्यम्, 'ओदनो देवदत्तेन पच्यते' इति कर्मप्रत्ययस्थलेऽपि पाक क्रियत इति विवरणेन भावनाया वाच्यत्वावश्यकतया तस्याश्च विनाश्रयमनुपपत्त्या कर्तुराक्षेपादभिहितत्वेन तृतीयानापत्तेः। तस्मात् कर्तुराख्याताभिधेयत्वमावश्यकमिति चेत्, अत्र वार्तिककृत —

'कर्तुर्यद्यपि शास्त्रेऽस्मिन्नाभिधेयत्वमाश्रितम्।
तथाप्याश्रितसिद्ध्यर्थमभिधेयत्वमिष्यते॥'

अनभिहितस्य कर्तुरेकत्वे तृतीयैकवचनमित्येवार्थः। 'ल कर्मणि' इति सूत्रे च न कर्तरि वस्तुतोऽभिधेये लकारोऽनुशिष्यते, येन तदादेशस्य तिङो वस्तुतः कर्तृवाचिता लभ्येत। किन्तु अस्मिन्व्याकरणशास्त्रे 'अनभिहिते' इत्यादिकार्यवशेन अनभिधेयस्याप्यभिधेयत्वं पारिभाषिकमाश्रीयते 'देवदत्त पचति' इत्यादौ तृतीयादिवारणार्थम्, यथा 'अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठ हरि' इत्यादौ द्वितीयालाभाय 'अधिशीङ्स्थासां कर्म' इत्यधिकरणस्यापि कर्मत्वमाश्रीयते तद्वत्। न शक्नोति हि 'ल कर्मणि' इति सूत्रं वस्तुतो लकारस्य कर्तृवाचिता बोधयितुम्, लकारस्य 'भवति' 'पचति' इत्यादौ क्वाप्यश्रूयमाणस्यानुपलब्धिपराहतत्वात्। न च 'ल कर्मणि' इति लादेशानामर्थादेशनमिति वाच्यम्, लादेशस्यापारमार्थिकत्वात्, सुशब्दापशब्दविवेचनोपायस्य प्रकृतिप्रत्ययविभागकल्पनस्यापारमार्थिकस्यैव लेश-

यार्थप्राधान्यस्य च सति सम्भवे भङ्गानुपपत्त्या तस्यैव धात्वर्थवदनं प्रति प्रधानतया पर्यवस्यति । निरुक्तवचनं त्वाख्यातगम्यानां मध्ये भावः प्रधानमित्येवम्परम् । अत एव 'भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भाव प्रधानम्' इति तद्भाष्य सङ्गच्छते। तथा च कर्तुर्धात्वर्थवदन प्रति प्रधानत्वादुक्तरीत्या समानपदश्रुत्या प्रकरणानुगृहीतया क्रतुयुक्तपुरुषार्थत्वमनृतवदनवर्जनस्य सिध्यति। तत्र च निषेध्यस्यानृतवदनांशस्य श्रुतिप्रकरणाभ्या क्रतुयुक्तपुरुषार्थतयैवोपस्थितत्वात् यजमानसंस्कारवपनस्नानाद्युपयोगितया प्रसक्तमनृतवदन वर्ज्यम्, तदतिक्रमे यजुष्टो यज्ञभ्रेषप्रायश्चित्तमिति चेत्, अत्र ब्रूम —'प्रशसाया रूपप्' इति सूत्रे महाभाष्ये 'प्रशसाया यत्प्रातिपदिकं वर्तते तिङन्त वा तस्मात्स्वार्थे रूपब्भवति' इत्युपक्षिप्य, 'पचतिरूपम्' 'पचतोरूपम्' 'पचन्तिरूपम्' इत्यत्र स्त्रीप्रत्ययद्विवचनबहुवचने चाशङ्क्य, 'सिद्ध तु क्रियाप्रधानत्वात्' इति तत्परिहारवार्तिकमवतार्य, "क्रियाप्रधानमाख्यातम्, द्रव्यप्रधानं नाम, यत्क्रिया पृष्टस्तिङाचष्टे—किं देवदत्तः करोति? पचति, द्रव्य पृष्टः कृताचष्टे—कतरो देवदत्तः? य कारको हारक." इत्युक्त्या 'भावप्रधानमाख्यातम्, सत्त्वप्रधानं नाम' इति निरुक्ते यास्कोक्त्या च ऋष्यनुभवानुसृतया भावना तावदाख्यातवाच्येत्यविवादम्। ततश्च भावनया तदविनाभावात् कर्ता लभ्यत इति स. नाख्याताभिधेयो भवितुमर्हति, अनन्यलभ्यस्यैव शब्दार्थत्वात्। ततश्चाख्यातात्कर्तृप्रतीतेरन्यथासिद्धत्वात् न सा कर्तुस्तद्वाच्यत्वगमिका। न च कर्तृत एव तदविनाभावाद्भावना लभ्यत इति विपर्यय. शङ्क्य, कृदन्तेषु पाचकादिशब्देषु कर्तृवाचकेषु व्यभिचारात्। 'लः कर्मणि' इत्यपि न कर्तुर्वाच्यत्वगमकम्, तस्य सूत्रस्य 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रद्वयैकवाक्यतया भावनाक्षिप्तकर्तृगतैकत्वादिसङ्ख्यावाचकत्वस्यैव तेन लाभात्। न च सत्यप्येकवाक्यत्वे एकस्मिन् कर्तरि लकारैकवचनमित्येवमर्थकतया कर्तृवाचकत्वमेव लभ्यते, न तु सङ्ख्यावाचकत्वमिति वाच्यम्। 'द्व्येकयो' इत्यस्य हि द्वित्वैकत्वयोरित्यर्थ, धर्मिपरत्वे बहुवचनप्रसङ्गात्, द्वयोरेकस्य च सन्निपाते बहुत्वात्। भावप्रत्ययनिर्देशे वर्णाधिक्यप्रसङ्गात्तु 'द्व्येकयो' इत्येव सूत्रितम्। न च 'बहुत्वे बहुवचनम्' इत्येव सूत्र्यतामिति वाच्यम्, वैपुल्याद्यर्थकत्वनिरासेन त्रित्वादिसङ्ख्याव्याप्यबहुत्वस्फोरणाय 'बहुषु' इति निर्देशोपपत्ते । न च कर्तृसङ्ख्यावाचित्वेऽपि विशेषणीभूतकर्तृवाचित्वमपि सिध्यतीति वाच्यम्, भावनया आक्षे-

यदेकत्वादि तत्र द्वितीयैकवचनादीत्यर्थं । 'देवदत्त पचति' इत्यादौ तु परमार्थतोऽनभिधेयस्यापि कर्त्रादे अभिहितवदाश्रयणान्न तृतीयादिविभक्ति । तदेतत् 'अनभिहिते' इति सूत्रव्याख्यावसरे पातञ्जलभाष्ये स्पष्टमेवोक्तम्—'अनभिहिताधिकार कर्तव्यः, यदेकत्वादयो विभक्त्यर्थाः, यदि तु कर्मादय', नार्थोऽनभिहिताधिकारेण' इति । अनभिहिताधिकारारम्भसामर्थ्यादेकत्वादयो विभक्त्यर्थाः इत्येव पाणिनेरभिमतमिति पतञ्जलेराशय । कर्मादयो विभक्त्यर्थाः इत्याश्रित्यानभिहिताधिकारप्रत्याख्यानन्तु पतञ्जलेर्नाभिमतम्, पूर्वग्रन्थसन्दर्भे सङ्ख्यावाचित्वकारकवाचित्वपक्षावुपक्षिप्य कर्मादिगतसङ्ख्यावाचित्वस्यैव कात्यायनपतञ्जलिभ्यां वाक्यभाष्यकाराभ्यामवधारितत्वात्, 'बहुषु बहुवचनम्' इति सूत्रव्याख्यावसरे 'एकत्वादयो विभक्त्यर्थाः कर्मादयोऽपि विशेषणत्वेन' इति ताभ्यामेवोक्तत्वाच्च । न च 'एकत्वादयो विभक्त्यर्थाः' इति पातञ्जलभाष्यं सुब्विभक्तिविषयमिति वाच्यम् ।

'सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह ।
एकवाक्यतया युक्तमुपदेशं वितन्वते' ॥

इति न्यायेन 'कर्मणि द्वितीया' इत्यादिवत् 'ल कर्मणि' इत्यस्यापि 'द्व्येकयोः' इत्याद्येकवाक्यतावश्यम्भावात् । तथा चाख्यातेषु भावनाक्षेपलब्धस्य कर्तुरनभिधेयस्यैव सत तत्सङ्ख्योपलक्षणमात्रत्वमाश्रीयते । सुब्विभक्तिषु तु भावनाया अनभिधानान्न किञ्चित्कारकोपस्थापकमस्तीति स्वय कारकमनभिधाय तद्विशिष्टसङ्ख्याभिधानानुपपत्त्या कारकमप्यभिधेयमास्थातव्यम् । ततश्च 'पचति' इत्यत्राख्यातत्वेन भावना वाच्या । तदाश्रयस्य कर्तुरेकत्वादिकन्तु तिप्त्वादिना वाच्यम् । तस्य च भावनाया कारकद्वारा यथायथमन्वयः । एवञ्च प्रकृते कर्तुरवाच्यत्वे सति पुरुषश्रुत्यभावात् प्रकरणात्केवलकर्मधर्म एवानृतवर्जनमिति समादधते । प्रयोजन तूक्तमेव । प्रयोजनान्तरमप्युक्त वार्तिके—

'विधयोऽपि हि पूर्वस्मिन् पक्षे सस्कारता गता' ।
ते सर्वे याजमाना स्युर्दीक्षासस्कारवर्गवत्' इति ।

सर्वेऽप्यङ्गविधय पूर्वस्मिन् पक्षे कर्तृसस्कारविधय सम्पन्नाः, ततश्च 'सस्कारास्तु पुरुषसामर्थ्ये यथावेद व्यवतिष्ठेरन्' 'याजमानास्तु तत्प्रधानत्वात्कर्मवत्' इत्यष्टमपादीयाधिकरणन्यायेन (घि) याजमानाः स्यु, तत्र बहुयजमानकेऽपि सत्रे

गवयन्यायेन व्याकरणशास्त्रे व्युत्पादनाभ्युपगमात् । उक्तं हि हरिणा—

'उपाया शिक्ष्यमाणानां बालानामुपकारका । 
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति ।

किञ्चानधीतव्याकरणाना लादेशत्वमविदुषामपि बोधात् कथ लादेशत्वं शक्ततावच्छेदकं स्यात् । किञ्च कचिद्व्याकरणे तिबादेशाना कडादेशत्वम्, कचित्तडादेशत्वम् अन्यत्र च पडाद्यादेशत्वमुक्तम् । एव सुशब्दापशब्दविवेचनोपायभेदा अनन्ता व्याकरणेषु सन्ति । उक्त च हरिणा—

'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता ' इति ।

ततश्च व्यभिचारान्न कस्यापि स्थानिन शक्ततावच्छेदकता, किन्तु शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण भावनायामेव श्रूयमाणेषु 'ति, तस्, अन्ति' इत्यादिषु आख्यातत्वेनैव शक्तिग्रहः, सर्वेष्वाख्यातेषु भावनाया नियमेन प्रतीते, कर्त्रादिकारकस्य कर्मप्रत्ययादिस्थले प्रतीत्यभावेन व्यभिचारात्, भावनया आक्षेपलभ्यत्वेनान्यथासिद्धत्वाच्च । ततश्च 'लः कर्मणि' इत्यर्थादेशन किं लोकवेदव्यवहारार्थम्, उत स्वशास्त्रे व्यवहारार्थमिति परीक्षाया लोकवेदयोराख्यातस्य कर्त्रादिकारकवाचिताया निरस्तत्वात् स्वशास्त्रे व्यवहारार्थमिति विज्ञायते । तथा च 'देवदत्त पचति' इत्यत्र कर्तु परमार्थतोऽनभिधानेऽपि व्याकरणेऽभिहितवदाश्रयणादनभिहिताधिकारविहिता तृतीया न भवतीति [1]परमार्थ । कर्त्रादेरनभिधानादेव चानभिहिताधिकारोऽर्थवान् भवति, अन्यथा 'बहुपटु' इत्यादौ 'विभाषा सुपो बहुच्पुरस्तात्तु' इति बहुच्प्रत्ययेनोक्तार्थत्वात् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति कल्पबादयो यथा न भवन्ति, तथा 'देवदत्त पचति' 'ओदन पच्यते' 'पक्ता देवदत्त' 'शतेन क्रीत शत्य' 'प्राप्त आनन्दो य स प्राप्तानन्दो ग्राम ' इत्यादौ तिङ्कृत्तद्धितसमासैरुक्तत्वादेव कर्त्रादौ तृतीयादिविभक्तिर्न भवतीति किमनभिहिताधिकारेण । यदा तु परमार्थतो न कर्त्रादेराख्याताभिधेयता, किन्तु तद्गतैकत्वादेरेव, तदा यद्यपि 'पच्यते' 'पचति' इत्यत्र कर्मादिगतैकत्वादेस्तिङोक्तत्वादेव द्वितीयाद्यप्रसक्तावपि, 'पक्ता देवदत्त' 'कृत कट ' इत्यत्र तृजादिप्रत्ययेन कर्तृकर्ममात्रोक्तावपि तदेकत्वाद्यनुक्त्या द्वितीयादे प्राप्तौ तन्निवृत्तयेऽनभिहिताधिकार आवश्यक । अनभिहिते कर्मादौ

1. परमार्थत कर्त्रादिः, घ

'क्रियाप्रधानमाख्यातम्' इत्याद्युदाहृतमहाभाष्यादिवचनेन 'ल. कर्मणि' इत्यस्य पारिभाषिककर्त्रभिधायित्वस्वीकारेऽपि, 'द्रव्यप्रधानं नाम' इत्याद्युदाहृतमहाभाष्यादिवचनेन कृतां द्रव्यवाचितया तत्र भावनाया वाच्यत्वाभावेन कर्त्राक्षेपासिद्ध्या 'कर्तरि कृत्' इत्यस्य वस्तुत' कर्तृवाचित्वानुशासनपरताया एव स्वीकार्यत्वात्। 'धातो. परोऽकारोऽकशब्दो वा स्वाभावतः कर्तारं ब्रुवन् कृत्सञ्ज्ञो भवति प्रत्ययसञ्ज्ञश्च' इति 'कर्तरि कृत्' इति सूत्रस्थमहाभाष्ये वस्तुतः कर्तु. कृद्वाच्यताया उक्तत्वाच्च। न च 'ल कर्मणि' इत्यत्र चकारेण 'कर्तरि कृत' इत्यत एव 'कर्तरि' इत्यस्यानुकृष्टत्वाद्दाख्यातेऽपि कर्तुर्वस्तुतो वाच्यत्वापत्तिरिति वाच्यम्। 'बहुगणवतुडति सङ्ख्या' इति सूत्रस्थसङ्ख्याशब्दस्य सञ्ज्ञाभूतस्यापि 'ष्णान्ता षट्' इत्युत्तरसूत्रेऽनुवृत्तस्य शब्दाधिकाराश्रयणेन पूर्वसूत्रे वस्तुतो वाच्यतासमर्पकस्यापि 'कर्तरि' इत्यस्य उत्तरस्मिन् लविधिसूत्रे योग्यतावशेन पारिभाषिकतया वाच्यत्वसमर्पकत्वाश्रयणोपपत्ते। एतेन लादेशेषु विहा न कर्तृवाचित्व कृतान्तु शानजादीनां कर्तृवाचित्वमित्यर्धजरतीन्यायमापादयन्तो वैयाकरणा प्रत्युक्ता., उभयत्र कथञ्चिद्वाच्यत्वाक्षते. पारिभाषिकत्वपारमार्थिकत्वयोर्योग्यतालभ्यत्वेन तत्र शब्दव्यापाराभावात्। एतेन शानचो लादेशत्वाल्लविधौ च 'कर्तरि' इत्यस्य सङ्ख्याविशेषणत्वात् न लविधिना शानच. कर्तृवाचित्वमित्यपि वैयाकरणोक्त प्रत्युक्तम्। एकस्यापि लविधिशास्त्रस्य तिङ्भाविलकारविध्यंशमात्रे सङ्ख्याशास्त्रेणैकवाक्यता, न त्वतिङ्भाविलविध्यशेऽपि। शानच्प्रभृतीनामतिङ्रूपाणां लादेशानामेकवचनादिसञ्ज्ञाविरहात्। ततश्च अतिङ्भाविलकारविध्यशस्य कर्तृवाचित्वानुशासनपरत्वमेव पर्यवस्यति। विषयभेदाच्चैकस्यापि शास्त्रस्य कर्तृतत्सङ्ख्यानुशासनपरतया वैषम्यं न दोषाय। अत एव 'आदेशप्रत्यययो' इति सूत्रे 'एकापि षष्ठी विषयभेदाद्भिद्यते, आदेशरूपस्य सकारस्य प्रत्ययावयवस्य सकारस्य' इति वैयाकरणैरुक्त सङ्गच्छते। यदपि वैयाकरणैरुक्तम्—'कर्तरि कृदिति कृद्वाच्यशेषोऽयमनिर्दिष्टार्थेषु ण्वुल्तृजादिषूपतिष्ठते न तु लादेशेषु शानजादिषु, तेषा लविधिलभ्यस्थान्यर्थेनैव निराकाङ्क्षत्वात्' इति, तदयुक्तम्, उक्तरीत्या लविधौ अतिङ्भाविलविध्यशस्य सङ्ख्याशास्त्रैकवाक्यत्वासम्भवेन तत्र 'ल कर्मणि' इत्यस्याप्रवृत्त्या शानजादिस्थानिनोऽर्थवत्त्वस्यैवासिद्ध्या तेष्वपि 'कर्तरि कृत्' इत्यस्योपस्थानावश्यम्भावात्। एवञ्च 'पच्यमानः' इत्यादौ शानचो न कर्तृवाचित्वप्रसक्तिरपि। अति-

प्रयाजादियागात्मकस्य संसृष्टसाधारणद्रव्यत्यागव्यापारस्य दीक्षणीयादिवत्तन्त्रेण प्रयोग इति संस्कारकर्मत्वार्थकर्मत्वयोर्न कश्चिद्भेद । स्तोत्रशस्त्रजपादीनान्तु साधारण-द्रव्यत्यागवत्तन्त्रत्वं न सम्भवतीति दन्तधावनादिवत् ते गुणभूतकर्तृनियमनसमर्था प्रधाननियमानधिकृतामौद्गात्रादिसमाख्या बाधित्वा यजमानकर्तृका सन्तः प्रतियज-मानं भिद्येरन् । कर्तुरवाच्यतयार्थकर्मत्वे तु स्तोत्रशस्त्रजपादीना केवलकर्मधर्मत्वा-त्सकृदेव प्रयोग इत्यादि । तथा कर्तुरवाच्यत्वमनुमानतोऽपि साधितं वार्तिके— 'पचति' इत्याख्यातशब्दो न कर्तुरभिधाता, तदत्यन्ताविनाभूतार्थाभिधायित्वात् । यो यदत्यन्ताविनाभूतार्थाभिधायी स तस्य न वाचक । यथा शिंशुपाशब्द. वृक्षत्वनि-यतशिंशुपात्वस्य वाचको न वृक्षत्वस्य । कर्ता तिङा नाभिधीयते, तदभिधेयापरित्या-गात्, तद्व्यापाराद्विनापि च प्रतीयमानत्वाच्च, द्रव्यवत्, तस्मिन्नेव शिंशुपाशब्दे वृक्षत्ववत् करणादिवच्च । तिङ्प्रत्ययो न कर्तृवाचकः, आख्यातत्वात्, 'आस्यते' इत्यादिवत् । अत्र दूषणभूषणानि तत्रैव प्रपञ्चितानि ॥

इत्यष्टमं कर्त्रधिकरणम् ॥ ८ ॥

९

दर्शपूर्णमासयो. श्रूयते—"जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति" इति । 'जभ' जृम्भणे । यङन्तात्कर्तरि लट. शानच् । तदिद मन्त्रवदन किं केवलक्रतुधर्मः ? उत केवलपुरुषधर्म ? अथवा क्रतुयुक्तपुरुषधर्म ? इति संशये, पूर्वाधिकरणन्या-येन 'ब्रूयात्' इत्यत्र कर्तुरश्रुतत्वात् प्रकरणात्केवलक्रतुधर्म इति प्राप्ते, द्वितीयप-क्षमुपक्षिपति—

अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥

पुरुषस्यैवाय धर्म , न तु क्रतो । कुत ? तदर्थत्वात् । 'ब्रूयात्' इत्याख्यातस्य कर्तृवाचित्वाभावेऽपि 'जञ्जभ्यमान' इति लादेशस्य शानच' 'कर्तरि कृत्' इत्यधि-कारविहितस्य कर्तृवाचित्वात् । न हि शानज्विधेर्लकारविधिवत् 'द्व्येकयोर्द्विवच-नैकवचने' 'बहुषु बहुवचनम्' इत्येकवाक्यतास्ति, येन कर्तृसङ्ख्या लभ्येत । 'तान्ये-कवचनद्विवचनबहुवचनान्येकश ' 'सुपश्च' इत्येकवचनादिसञ्ज्ञाना सुप्तिङ्मात्रवि-षयत्वात् । न च पूर्वाधिकरणोक्तरीत्या लविधाविव कृद्विधावपि कर्तृवाचित्व पारि-भाषिकमेवाश्रीयते 'पक्ता देवदत्त.' इत्यादावभिधानव्यवस्थासिद्ध्यर्थमिति वाच्यम् ।

यथा "ज्योतिर्गौरायु" इति विहितरात्रिसत्रे "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इत्यार्थवादिकफलेन निराकाङ्क्षतया न विश्वजिन्न्यायेन फलकल्पना, एवमिहापि "सर्वमायुरेति" इत्यार्थवादिकफलेन निराकाङ्क्षतया अश्रुतफलकल्पनाया असम्भवाच्च। तस्मात्केवलपुरुषधर्म इति प्राप्ते, सिद्धान्तयति—

## प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥

वाशब्द एवार्थे। क्रतुयुक्तस्यैव जञ्जभ्यमानस्य "मयि दक्षक्रतू" इति मन्त्राभिधान धर्म', न तु केवलपुरुषस्य। कुतः? प्रकरणविशेषात्। प्रकरणम् इत्थम्भावाकाङ्क्षालक्षणम्, तेन विशेषात् अक्रतुयुक्तस्य व्यावर्तनात्। प्रकरणवशेन क्रतुयुक्तस्यैव जञ्जभ्यमानस्य ग्रहणादिति यावत्। द्रव्यवत्। यथा व्रीह्यादिद्रव्य दर्शपूर्णमासापूर्वसाधनरूपापन्नमेव प्रोक्षणादि प्रतिपद्यते, तद्वत्। यद्यपि वाक्य प्रकरणात्प्रबल तथापि विरोधे सत्येव बाध्यबाधकभाव'। प्रकृते च प्राकरणिकपुरुषविषयत्वेन[1] जञ्जभ्यमानवाक्यस्योपपत्तेर्न विरोधोऽस्ति। एवञ्च नाश्रुतफलकल्पनाप्रसक्ति। तदुक्तम्—

'अविरोधात्समावेशे लभ्यमाने प्रमाणयोः।
बाधो न युज्यते कर्तुं न च दूरात्फलश्रुति'॥ इति।

ननु तथापि पुरुषार्थत्वात्फलकल्पनं दुर्वारमित्यत आह- संस्कार इति। नास्य मन्त्राभिधानस्य प्राधान्यमभ्युपगम्य क्रतुयुक्तपुरुषधर्मत्वमुच्यते, येन विश्वजिदादिवत्फलं कल्प्येत। किन्तु पुरुषसस्कारमुखेन क्रत्वर्थत्वमेवेति [2]न दोषः। न चैवमपि सामान्यविषयवाक्यप्रमाणस्य दुर्बलप्रकरणेन सङ्कोचो न युक्त इति वाच्यम्। प्रबलमपि हि वाक्यमपेक्षितफललाभाद्दुर्बलेनापि प्रकरणेन सङ्कोचमनुमन्यते। एवञ्च क्रतुफलेनैव मन्त्रवदनस्य फलवत्त्वसिद्धेर्न फलवाचकशब्दाध्याहार इति लाघवम्। "सर्वमायुरेति" इत्यर्थवादेऽपि वर्तमानापदेशात्फलप्रत्यायककामशब्दाभावाच्च तत्प्रत्यायकशब्दाध्याहारस्य दुर्वारत्वान्न ततोऽपि फलकल्पनम्॥

अथ यदुक्तमहीनवदिति तत्राह—

## व्यपदेशादपकृष्येत ॥ २२ ॥

दिशिरुच्चारणार्थक इति 'आदेच उपदेशे' इत्यादिसूत्रमहाभाष्ये स्पष्टम्, अपेति विप्रकर्षे, वीत्यतिशये। अहीनस्य ज्योतिष्टोमप्रकरणादत्यन्तविप्रकृष्टाम्नाना-

1 प्रकारणिकपुरुषीयत्वेन क, घ, ग मु पा.    2. नोक्तदोष. क, ग, घ. मु. पा.

ङ्भाविलविध्यंशस्य सङ्ख्याशास्त्रैकवाक्यत्वाभावेन[1] शानज्भाविलविधे[2] स्वतन्त्रतया [3]तत्र लकारस्य कर्मार्थतया स्थान्यर्थविरोधेन 'कर्तरि' इत्यस्यानुपस्थानात्।

वस्तुतस्तु—'धातोः परोऽकारः स्वभावतः कर्तारं ब्रुवन् कृत्सञ्ज्ञो भवति प्रत्ययसंज्ञश्च एवमकादिः' इति सञ्ज्ञाया एवात्र नियमः क्रियते, न तु कृत्प्रत्ययस्य कर्त्रर्थकत्वमत्रानुशिष्यते, तथा सति 'काष्ठभिद्ब्राह्मणः' इति दकारादकारस्यापि कर्तृवाचित्वस्य कृत्सञ्ज्ञाया प्रत्ययसंज्ञायाश्चापत्तेरिति 'कर्तरि कृत्' इति सूत्रस्थतद्भाष्यसन्दर्भे 'कर्तरि' इत्यन्यतः प्राप्तकर्तृवाचित्वं कृत्सञ्ज्ञाप्रत्ययसंज्ञाविधानायानूद्यत इति गम्यते। धातोः परत्वेन श्रुतानामकाराकादिशब्दानाम् 'कतरो देवदत्तः ? पच, पाचकः' इति लोके प्रतिवचनबलादेव 'द्रव्यप्रधानं नाम' इति पतञ्जलियास्कवचनतदनुभवानुगृहीतात् कर्तृवाचित्वं सिद्धम्, न तु शास्त्रस्य तत्र व्यापारः। 'सिद्धे शब्दार्थसम्बन्धे, लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु' इति पस्पशाह्निके, 'सिद्धन्तु नित्यशब्दत्वात्' 'किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्' इति वृद्धिसूत्रे च महाभाष्ये तथा व्यवस्थापितत्वात्। उक्तञ्च वार्तिके भट्टपादैः—

'वाच्यवाचकसम्बन्धो नाचार्यैरुपदिश्यते।
अन्यथानुपपत्त्या हि व्यवहारात्स गम्यते'॥ इति।

एवञ्च शानजादिलादेशानां लविधिलभ्यस्थान्यर्थेनैव निराकाङ्क्षतया 'कर्तरि कृत्' इत्यस्यानुपस्थानेऽपि न तेषां कर्तृवाचित्वहानिः, लोकव्यवहारादेव तदुपपत्तेरुक्तत्वात्। उक्तरीत्या लस्य वस्तुतः कर्तृवाचित्वाभावेन लादेशशानजादिषु स्थान्यर्थेनावास्तवेन कर्त्रा वास्तवकर्त्राकाङ्क्षाया अशान्ततया वस्तुतः कर्तुर्वाच्यत्वसमर्पणाय तत्रापि 'कर्तरि कृत्' इत्यस्योपस्थानावश्यम्भावाच्च। एवञ्च जञ्जभ्यमानशब्दस्य जृम्भणकर्तृवाचितया वाक्योपात्तेन पुरुषेण संयुक्तमिदं मन्त्राभिधानं प्रकरणं हित्वा प्रबलाद्वाक्यप्रमाणात्केवलपुरुषधर्मतामेव प्रतिपद्यते। अहीनवत्। यथा 'द्वादशाहीनस्य' इति द्वादशोपसत्कत्वं ज्योतिष्टोमप्रकरणमुल्लङ्घ्य द्विरात्राद्यहीनेषु निविशते तद्वत्। न च पुरुषार्थत्वे विश्वजिन्न्यायेन फलकल्पनैव दोष इति वाच्यम्, प्रबलवाक्यप्रमाणावगतजञ्जभ्यमानपुरुषार्थत्वबलेन फलकल्पनस्य न्याय्यतया अदोषत्वात्।

---

1 वाक्यत्वासम्भवेन. ख, घ, ग मु पा 2 शानज्विधे क

3. तत्र लविधिना लकारस्य. क

## शंयौ सर्वपरिदानात् ॥ २३ ॥

शंयूपक्रमे वाक्येऽपगोरणादिप्रतिषेधः केवलपुरुषधर्मः, न तु क्रतुयुक्तपुरुषधर्मः। कुतः? सर्वपरिदानात्। 'योऽपगुरातै' इत्यादिवाक्यशेषे यच्छब्दे क्रतुतद्बहिर्गतसाधारण्येन सर्वस्यैव पुरुषस्य परिदानात्[1] उपादानात् परामर्शात्। ततश्च तत्संयुक्तमिदमपगोरणादिवर्जनं प्रकरणं हित्वा प्रबलाद्वाक्यप्रमाणात्केवलपुरुषधर्मता प्रतिपद्यते। न च फलकल्पना शङ्क्या। सत्यां फलाकाङ्क्षायाम् 'शतेन यातयात्' इत्यादिवाक्यशेषेण रात्रिसत्रन्यायेन फललाभात्। न च पूर्वाधिकरणरीत्या 'सर्वमायुरेति' इति जञ्जभ्यमानवाक्यशेषवदस्यापि फलसमर्पकत्वाभावः शङ्क्यः। तत्र हि वर्तमानापदेशात्साध्यत्वगमककर्मपदाद्यभावाच्च न फलसमर्पकतेति युक्तम्। नेह वर्तमानापदेशको लकारोऽस्ति। अस्ति च साध्यत्वाभिधायको लेट्, 'हेतुहेतुमतोर्लिङ्' इति लिङर्थत्वेनावगते हेतुहेतुमद्भावे विवक्षिते 'लिङर्थे लेट्' इति विधानात्। एवञ्च शतयातनादेरपगोरणादिसाध्यत्वावगमे सति अर्थाच्छतयातनादिनिवृत्तेरपगोरणादिवर्जनसाध्यत्वावगमात् अपगोरणादिनिषेधः स्ववाक्य एवार्थात्साध्यत्वेनावगता शतयातनादिनिवृत्तिमेव फलत्वेन स्वीकरोति, न तु क्रतूपकारम्। क्रतुतद्बहिःसाधारण्येन यच्छब्दोपात्तपुरुषसंयुक्तवाक्यतो हि पुरुषमात्रविषयेऽपगोरणादेः शतयातनादिनरकः साध्यत्वेनावगतः। स च नरको यद्गतस्तस्य तत्परिहारार्थोऽपगोरणादिप्रतिषेध इति युज्यते, न तु क्रतूपकारार्थ इति। नन्वेवं सति ऋत्विगानमनार्थापगोरणादेः प्रतिषेधो न स्यादित्यत्राप्येतदेवोत्तरं सर्वपरिदानादिति। परिदानमिहोपसर्गवशाद्वरदानं विवक्षितम्। शंयुना हि बृहस्पतिपुत्रेण देवान् प्रति वरोऽभ्यर्थितः 'किं मे प्रजायाः' इति। ब्राह्मणत्वेन मत्सजातीयायाः प्रजाया ब्राह्मणजातेः किमभीष्टं दातुं भवन्तो मन्यन्त इत्यर्थः। एवं पृष्टे सति 'योऽपगुरातै शतेन यातयात्' इत्यादिवराः देवैर्ब्राह्मणजातये दत्ताः। तदिदं वरदानम् 'मे प्रजायाः' इति स्वारस्येन क्रतुतद्बहिःसाधारण्येन ब्राह्मणजातिविषयमवगतम्। ततश्च ऋत्विगानमनार्थं प्रसक्तमप्यपगोरणादिकं ब्राह्मणविषयमिति 'ब्राह्मणाय नापगुरेत' इत्यादिनिषेधस्तस्यापि भवतीति विज्ञायते। अतः केवलपुरुषधर्म एवायमपगोरणादिप्रतिषेधः ॥

इति दशममपगोरणाधिकरणम् ॥ १० ॥

---

1 परिदानात्परामर्शात् क, ग घ, मु पा.

दहीनसंयुक्तं द्वादशोपसत्कत्वं ज्योतिष्टोमप्रकरणेनागृह्यमाणत्वाज्ज्योतिष्टोमादुत्कृष्यत इति युक्तम्। प्रकृते तु जञ्जभ्यमानपुरुषस्य क्रतौ लाभात्तद्विषयत्वेन मन्त्रवदनमुपपन्नमिति न तस्य क्रतुत उत्कर्षः। तस्मात्क्रतुयुक्तपुरुषसंस्कार एवेदं मन्त्राभिधानमिति स्थितम्। प्रयोजनं केवलक्रतुधर्मत्वे समाख्यानान्मन्त्राभिधानमिदमाध्वर्यवं क्रतुबहिश्च न, केवलपुरुषधर्मत्वे क्रतोर्बहिरपि स्यात्, क्रतौ च सर्वेषां स्यात्, क्रत्वङ्गत्वाभावेन समाख्याया अकिञ्चित्करत्वात्। क्रतुयुक्तपुरुषधर्मत्वे तु क्रतावेव, न तु ततो बहिः, याजमानं च 'संस्कारास्तु पुरुषसामर्थ्ये' इत्यग्रिमाष्टमपादीयाधिकरणन्यायादित्याद्यूह्यम् ॥

इति नवमं जञ्जभ्यमानाधिकरणम् ॥ ९ ॥

१०

दर्शपूर्णमासयोः "देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्, ते शयुं बार्हस्पत्यमब्रुवन्" इत्युपक्रम्य श्रूयते—"ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यात्" इति। 'ब्राह्मणाय' इति द्वितीयार्थे चतुर्थी। 'गुरी' उद्यमने। नापगुरेत हन्तुं नोद्युञ्जीत। स्पष्टमन्यत्। सोऽयमपगोरणादिप्रतिषेधः क्रत्वर्थः पुरुषार्थो वेति संशयः। प्रकरणात्क्रत्वर्थ एवायम्, पुरुषार्थत्वे च फलकल्पनाप्रसङ्गात्। ननु 'योऽपगुरातै शतेन यातयात्, यो निहनत्सहस्रेण यातयात्, यो लोहितं करवद्यावतः प्रस्कद्य पांसून्त्संगृह्णात्तावतः संवत्सरान्पितृलोकं न प्रजानात्" इत्यर्थवादादेव तत्सिद्धिः। यो ब्राह्मणमपगुरेत स शतसंवत्सरैरनुभवितव्यां यातनां प्राप्नुयात्, एवमग्रेऽपीति चेत्, न, यातनाया अनिष्टत्वेन फलत्वाभावात्, तन्निवृत्तेश्चापगोरणादिवर्जनसाध्यत्वाश्रवणेन फलत्वासम्भवात्। युज्यते च क्रत्वर्थतया प्रसक्तस्यापगोरणादेः प्रतिषेधोऽप्यनृतवदनवर्जनन्यायेन क्रत्वर्थ इति वक्तुम्। ऋत्विजा हि सामदानभेददण्डैरानमने प्रसक्तेऽन्वाहार्याख्यौदनदानेनानमयेदिति[1] नियमितम्। यदि च तावता नानमन्ति तदा, तेषामानमने लौकिकोपायप्रसक्तौ सत्यामथ दण्डप्रकारः अपगोरणादिः कदाचित्प्राप्तः प्रतिषिध्यते। ततश्च तद्व्यतिरिक्तसामाद्युपायाश्रयणमभ्यनुज्ञातं भवतीति प्राप्ते, सिद्धान्तयति—

1. अन्वाहार्याख्यौदनेनानमयेत्. ग, घ, मु पा.

प्रसिद्धि' इति वार्तिककृत'। उपगमनं स्त्रीणामन्नवत्प्रियतममिति वाक्यशेषार्थ'। उपगमनञ्च पुरुषार्थं इत्यविवादम्। यदर्था च प्राप्तिस्तदर्थं प्रतिषेध। ब्रह्मचर्यविधानाच्च क्रतौ पुरुषार्थस्यापि तस्य न प्रसक्तिरस्ति येन तस्य क्रतौ प्रतिषेध. स्यात्। अतो वाक्यशेषानुसारात् 'नास्या अन्नमद्यात्' इति प्रतिषेध पुरुषार्थ इति तत्प्रायपाठात्सवादप्रतिषेधस्यापि पुरुषार्थत्वं विज्ञायते ॥

इत्येकादश मलवद्वासस्सवादनिषेधाधिकरणम् ॥ ११ ॥

१२

किञ्चिदप्यनारभ्य श्रूयते—"सुवर्णं हिरण्य भार्यम्, सुवर्ण एव भवति" "दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति। 'सर्वं हिरण्य रजतम्' इति रजतेऽपि हिरण्यशब्ददर्शनात्तद्व्यावृत्त्यर्थं 'सुवर्णम्' इति। किमय सुवर्णभरणविधि. क्रत्वर्थ.? उत पुरुषार्थ.? इति संशय। क्रत्वर्थत्वेऽपि त्रेधा संशयः—किं विशिष्टविधिः 'सुवर्णहिरण्यभरणेन क्रतुमुपकुर्यात्' इति? उत क्रतुगतहिरण्यसंस्कारविधि 'क्रतुगतं हिरण्य भरणेन संस्कुर्यात्' इति? अथवा क्रतौ भरणीये हिरण्ये सुवर्णत्वगुणविधि 'क्रतौ भार्यं यद्धिरण्य तत्सुवर्णम्? इति। तत्र सिद्धान्तेनोपक्रमते –

**अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥**

तुरवधारणे। अप्रकरणे आम्नात हिरण्यभरणं पुरुषधर्म एव न तु क्रतुधर्म। कुतः? ततो विशेषात्। तत' अप्रकरणाम्नानेन हेतुना हिरण्यभरणस्य प्रकरणाम्नातप्रयाजाद्यपेक्षया पुरुषधर्मत्वरूपविशेषावगमात्। 'अविशेषात्' इत्यपि च्छेद'। यदि अप्रकरणाम्नात प्रकरणाम्नातञ्च क्रत्वङ्ग स्यात्, ततः प्रकरणाम्नातादप्रकरणाम्नातस्य विशेषकत्वाभावात् प्रकरणाप्रकरणाम्नानविवेकोऽनर्थकः स्यात्। अतोऽवगम्यते 'अप्रकरणाम्नातं हिरण्यभरण पुरुषधर्म'' इति। ततश्च 'सुवर्णहिरण्यभरणेनेष्ट भावयेत्' इति पुरुषधर्मतया विशिष्टविधि' ॥

अथ एतदेव सूत्र प्रथमपूर्वपक्षपरमपि योज्यम्। तुरप्यर्थे। अप्रकरणे आम्नातमपि हिरण्यभरण तद्धर्म' क्रतुधर्म। कुत'? ततो विशेषात्। तत तस्मात् पुरुषार्थत्वात् क्रत्वर्थत्वस्य विशिष्टत्वात्। पुरुषार्थत्वे वर्तमानापदेशार्थवादस्त फलकल्पनापेक्षया क्लृप्तफलकक्रतूपकारार्थत्वाश्रयणस्य न्यायस्त्वादिति यावत्। ननु क्रतूपस्थापकशब्दाभावात्कथ क्रत्वर्थता हिरण्यभरणस्य इत्यत्राप्येतदेवोत्तरम्— ततोऽविशेषादिति।

११

दर्शपूर्णमासयो श्रूयते "मलवद्वाससा न संवदेत" इति। रजस्वलया न सम्भाषेतेत्यर्थः। किमयं प्रतिषेध. क्रत्वर्थ ? पुरुषार्थो वा ? इति सशय.। पुरुपार्थत्वे आर्थवादिकस्यापि फलस्याभावाद्विश्वजिन्न्यायेन तत्कल्पनापत्ते प्रकरणादनृतवदनन्यायेन क्रत्वर्थं एवाय प्रतिषेध'। क्रतौ साधारणव्रीह्यादिद्रव्यानुमतिविषये तया सवादस्य प्रसक्ते, हस्तसंज्ञादिना कदाचित्तदनुमतिसूचनसम्भवेऽपि कदाचित्सवादस्यापि प्रसक्ते। न च 'रजस्वला च पण्डश्च' इत्युपक्रम्य 'दैवे कर्मणि पित्र्ये च तानप्यपनयेत्तत.' इति मनुस्मृत्या रजस्वलाया अपनयविधानात् तया सवादो दर्शपूर्णमासयोरप्रसक्त इति वाच्यम्। 'नाशुचि काम्य तप आतिष्ठेन्न यजेन्न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासेभ्य' इति बोधायनादिवचनेनोक्तस्मृतेस्तदन्यविषयत्वावगमात्। न च "यस्य व्रत्येऽहन् पत्न्यनालम्भुका भवति तामपरुध्य यजेत" इति रजस्वलाया अपनयविधानात् दर्शपूर्णमासयोर्द्रव्यानुमतिविषयसवादस्याप्यप्रसक्तिरिति वाच्यम्। 'व्रत्येऽहन्' इत्यनेन व्रतग्रहणप्रभृति व्रतविसर्गपर्यन्तमेव तदपनयस्य तद्वाक्यादवगमेऽपि व्रतग्रहणात्प्राग्यागीयद्रव्यानुमतिविषये व्रतविसर्गानन्तर क्रत्वङ्गब्राह्मणभोजनद्रव्यानुमतिविषये च सवादस्य प्रसक्ते। ततश्च क्रत्वर्थं एव तत्प्रतिषेध इति प्राप्ते, सिद्धान्तयति—

**प्रागपरोधान्मलवद्वाससः ॥ २४ ॥**

मलवद्वासस रजस्वलाया सम्भाष्यत्वप्रतिषेध पुरुषार्थ एव न तु क्रत्वर्थ। कुत ? प्रागपरोधात्। 'अपरुध्य' इति ल्यपा 'यजेत' इति च लिङा अशत्रयविशिष्टभावनावाचिना रजस्वलाया' पत्न्या क्रतुव्यापारनिवर्तनरूपापरोधस्य साङ्गप्रयोगात्पूर्वकालकत्वावगमात्। ततश्चारम्भप्रभृति समाप्तिपर्यन्त क्रतौ रजस्वलासवादस्याप्रसक्तत्वान्न तत्प्रतिषेध' क्रत्वर्थो भवति। 'व्रत्येऽहन्' इति तु नियतकर्मयोग्यकालो विवक्षित। तेनानियतकाम्यकर्मसु नायमपरोधविधिः प्रवर्तते ॥

इतोऽप्येवमित्याह—

**अन्नप्रतिषेधाच्च ॥ २५ ॥**

'मलवद्वाससा न सवदेत' इत्यनन्तर श्रुतम् "नास्या अन्नमद्यात्" "अभ्यञ्जन वाव स्त्रिया अन्नम्" इति। 'अभ्यञ्जनमुपगमन यष्विरिति पर्याया इति लाटेषु

योग्यतया प्राप्तमनूद्यत इति न दोषः। तदेवं त्रेधा वर्णिते क्रत्वर्थत्वे युक्त्यन्तरमाह—

**वेदसंयोगात् ॥ २८ ॥**

अध्वर्युवेदसमाख्याते यजुर्वेदे तावदिदं भरणं विहितम्। तस्य च प्रधानकर्मण. संस्कारकर्मणो वा क्रत्वर्थत्वे सत्येव यजुर्वेदसमाख्या अध्वर्युसंयोग नियमयन्ती अनुगृहीता भवति। पुरुषार्थत्वे तु सा बाध्येत। एतेन प्रथमपूर्वपक्षे सामान्याल्लौकिकस्यापि भरणकर्मणो ग्रहणमिति निरस्तम्। द्वितीयपूर्वपक्षे च लोके क्रयविक्रयादिव्यवहारगतस्यापि हिरण्यस्य संस्कार इत्यपि निरस्तम् ॥

अथ यदेतत् द्वितीयपूर्वपक्षे भरणस्य स्वभावादेव संस्कारत्वमुक्तम्, तत्र हेत्वन्तरमाह—

**द्रव्यपरत्वाच्च ॥ २९ ॥**

'भार्यम्' इति कर्मणि विहितकृत्यप्रत्ययेन भरणस्य हिरण्यलक्षणद्रव्यप्रधानकत्वावगमेनापि तस्य तत्संस्कारत्वमध्यवसीयत इत्यर्थः ॥

तदेवं त्रेधा क्रत्वर्थत्वमुत्प्रेक्षित सिद्धान्ती निराचष्टे—

**स्याद्वा संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मैतिशायनः ॥ ३० ॥**

वाशब्द एवार्थे। प्रवर्तनात्मको विधिस्तावत्पुरुष स्वाभिलषितसाधने प्रवर्तयन् विहितस्य पुरुषार्थत्वमेव स्वरसतोऽवगमयति। पुरुषाभिलषितञ्च फल यदि स्ववाक्ये न श्रूयेत, तदा विश्वजिन्न्यायेन कल्पनीयम्। अर्थवादे च श्रूयमाण फल स्ववाक्यगतमेव भवति, तस्य विध्येकदेशत्वात्। अतस्तादर्थ्यमेव विहितस्य भरणस्याध्यवसातु युक्तम्। संयोगवत्—स्ववाक्यैकदेशस्वर्गकामपदसंयोगे सति यथा फलसम्बन्ध, तथात्राप्यार्थवादिकफलेनैव स्वशोभनवर्णत्वभ्रातृव्यदुर्वर्णत्वलक्षणफलेन सबन्ध उचित। ततश्च स्ववाक्य एव विध्यपेक्षितपुरुषाभिलषितफललाभात्तदुद्देशेन सुवर्णहिरण्यविशिष्टभरणात्मकं कर्म विधीयत इत्यैतिशायनो नामाचार्यो मन्यते, तदेवास्माकमप्यभिमतमित्यर्थ'। यत्तु वैदिकक्रियात्वसामान्याद्विशिष्टभरणस्य क्रत्वर्थत्वमिति, तन्न, स्वर्गोत्पत्तेरपि वेदावगतक्रियात्वेन तत्र व्यभिचारात्। न च संस्कार्यत्ववशाद्धिरण्यस्य क्रतुगतस्यैव प्रतीतिरिति वाच्यम्। क्रतुगतहिरण्यदानत्वे निश्चिते संस्कार्यत्वनिश्चय', सति च तस्मिन् निष्प्रयोजनस्य हिरण्यस्य संस्कार्यत्वायो-

षष्ठ्यर्थे तसिः। तस्य हिरण्यभरणस्य फलापेक्षस्य अविशेषात् वैदिकक्रियात्वेन साम्यात् प्रयाजादिवत्क्रतूपकारकत्वं युज्यते ॥

अथ द्वितीयं पूर्वपक्षमुत्थापयति—

**अद्रव्यत्वात्तु शेषः स्यात् ॥ २७ ॥**

तुर्नार्थे। न विशिष्टविधिः किन्तु क्रतौ 'हिरण्यं दक्षिणा' इत्यादिविहितहिरण्यस्य भरणं शेषः संस्कारः स्यात्। कुतः? अद्रव्यत्वात्। विधेर्हिरण्यरूपद्रव्यगोचरत्वाभावेन क्रतुगतं सुवर्णं हिरण्यमनूद्य भरणमात्रस्य विधौ लाघवात्। न च कथं हिरण्यस्य क्रतुसम्बन्धित्वेनानुवादः, क्रतूपस्थापकाभावादिति वाच्यम्। भरणं हि स्वभावात्प्रथमतो द्रव्यशेषत्वेनावगतम्। तच्च यत्र द्रव्यं तत्र गच्छतीति भवति हिरण्यस्य क्रतुसम्बन्धित्वोपस्थितिः ॥

भाष्ये तु पूर्वसूत्रोपक्षिप्ते पुरुषार्थतया प्रधानकर्मत्वे आक्षेपपरतया इदं सूत्रमेव योजितम्—'यागहोमदानानामेव प्रधानकर्मत्वम्। भरणन्तु न तेष्वन्तर्गतम्। न च यागाद्यन्यतममत्र कल्पयितुं शक्यम्। कुतः? अद्रव्यत्वात्। द्रव्यमात्रमिह विद्यते, न तु देवता तत्सम्बन्धश्च। तथा च द्रव्यदेवतासम्बन्धस्य कल्पकस्याभावान्न यागहोमाविह लभ्येते। सम्प्रदानाभावाच्च न दानम्। अतः परिशेषाद्भरणं कर्मशेष एव स्यात्' इति। तदिदं सूत्राक्षराननुगुणम्। न हि 'अद्रव्यत्वात्' इत्यस्य द्रव्यदेवतासम्बन्धाभावादित्यर्थपर्यवसानं सम्प्रदानाभावादित्यर्थश्च कथञ्चिदक्षरपदवीमारोहति। गायत्रीजपादीनामपि पुरुषार्थत्वेन विहितानां प्रधानकर्मत्वाच्च। तदेतदुक्तं वार्तिके— 'यत्त्वत्र भाष्यकारेण देवताग्रहणं कृतम्, तदुत्सूत्रमयुक्तञ्च प्रधानं हि जपाद्यपि' इति। क्वचित्तु भाष्यपुस्तकेषु 'अद्रव्यदेवतत्वात्' इति सूत्रपाठोऽपि दृश्यते। स तु 'उत्सूत्रम्' इति वार्तिकविरुद्धत्वादुपेक्ष्यः ॥

अथ तृतीयपूर्वपक्षपरतयाप्येतत्सूत्रं योज्यम्। भरणीयं हिरण्यमनूद्य सुवर्णत्वाख्यः शेषो गुणो विधेयः स्यात्, न तु हिरण्यमनूद्य भरणविधिः। कुतः? अद्रव्यत्वात्—सुवर्णत्वस्य हिरण्यरूपद्रव्यान्वयविरोधात्। हिरण्यानुवादेन भरणविधौ सुवर्णपदानर्थक्यापत्त्या सुवर्णत्वस्यापि विधौ 'भरणेन हिरण्यं संस्कुर्यात्' 'तच्च सुवर्णं भवेत्' इति वाक्यभेदप्रसङ्गादिति यावत्। न च 'भार्यं हिरण्यं यत्' इति विशिष्टोद्देशे गौरवमिति वाच्यम्। हिरण्यमेव हि अनूद्य अत्र सुवर्णता विधीयते, भरणं

ताग्ने. कृष्यादिकर्मण्याहवनीयाभावेऽप्याहितान्नेस्तत्सत्त्वाच्च। तस्माल्लौकिकवैदिक-सर्वकर्मार्था जयहोमा इति प्राप्ते, सिद्धान्तयति—

## होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ ३२ ॥

तुरवधारणे। जयहोमा वैदिकेष्वेव कर्मसु व्यवतिष्ठेरन्, न तु लौकिकेषु। कुतः? आहवनीयसंयोगात् "यदाहवनीये जुहोति" इति होमानामाहवनीयसाध्यत्वावगमात् कृष्यादिषु च लौकिककर्मस्वाहवनीयाभावात्। अङ्गगुणविरोधन्यायश्च, यानि प्रयोगविधि उपादेयत्वेनाङ्गानि विधत्ते तन्मात्रविषय। यानि तु विध्यन्तरप्रयुक्तानि स्वयं सिद्धानि वा अङ्गत्वेन परिगृह्णाति, तानि तु स्वरूपत एवाधिकारिविशेषणतां प्रतिपद्यन्ते, न तु तत्राङ्गगुणविरोधन्याय, नापि सर्वशक्त्यधिकरणन्याय। अन्यथा तिर्यगधिकरणे अङ्गानुसारेण प्रधानवाक्यसङ्कोचाश्रयणमसङ्गतं स्यात्। अग्निहोत्रादीनि च कर्माणि यथाशक्त्युपबन्धादनाहिताग्नेरपि प्रसज्येरन्। नापि कृष्यादिकर्मण्याहवनीय सम्भवति, तस्याग्न्यगारस्थत्वात्। 'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्, तस्मिन्स्स्यादेकदेशत्वम्' इत्येकादशस्य द्वितीये अङ्गानां प्रधानदेशत्वस्य व्यवस्थापयिष्यमाणतया अग्न्यगारे कृताना जयहोमानां कृष्यर्थत्वायोगात्। न चाहवनीयमात्रस्य कृषिदेशे प्रणयनमिति युज्यते, गार्हपत्यादष्टासु प्रक्रमेष्वाहवनीयस्यायतनमिति विरोधात्। न च गार्हपत्योऽपि कृषिदेशे नीयतामिति वाच्यम्, तावता कृषिसामीप्यमात्रलाभेऽपि तत्सादेश्यालाभात्। हलेन क्षेत्रविदारणं हि कृषिः, न ह्येकैकस्मिन्विदारणदेशे आहवनीयं निक्षिप्य होतुं शक्यते। आहवनीयप्रदेशस्य कर्षणासम्भवाच्च। न च प्रयोगवचनपरिगृहीतानामेवाङ्गप्रधानानां समानदेशत्वस्य एकादशे वक्ष्यमाणत्वात् लौकिककर्मण कृषेः प्रयोगवचनपरिग्रहाभावान्न सादेश्यनियम इति वाच्यम्, 'पुरस्तात्कृषिकर्मणां प्राच्यां क्षेत्रमर्यादाया द्यावापृथिवीय बलिं हरेत्' इत्याद्यङ्गविधिस्मरणेन 'तद्युक्तंकृषिं कुर्यात्' इति प्रयोगवचनकल्पनस्यावश्यकत्वात्। एवञ्च कृष्यादिषु क्रियमाणा जयहोमा वैदेश्याद्विगुणा भवेयु। वैदिकेषु तु कर्मस्वाहवनीयवत्सु क्रियमाणास्ते प्रधानसादेश्यात्सगुणा भवन्ति। अत सादेश्यसम्पादनसामर्थ्यरूपलिङ्गानुसारेण जयहोमविधिर्वैदिकविषय एव सङ्कोचमर्हति ॥

इतोऽप्येवमित्याह—

## शेषश्च समाख्यानात् ॥ ३३ ॥

अध्वर्युसमाख्याते यजुर्वेदे जयहोमा विहिताः। ते च समाख्यावशादध्वर्यु-

गात्क्रतुगतत्वप्रतीतिरित्यन्योन्याश्रयात् । न च क्रतुगतत्वेन हिरण्यप्रतीतेः पूर्वमेव स्वभावादेव भरणस्य संस्कारत्वावगमसम्भवान्नान्योन्याश्रय इति वाच्यम्, अदृष्टार्थतयापि भरणस्योपपन्नतया स्वभावत. संस्कारत्वनिश्चयासम्भवात् । न च कृत्यप्रत्ययात्संस्कार्यत्वावगमे सति तद्वशात्क्रतुगतत्वेन हिरण्योपस्थितिरिति वाच्यम् । कृत्यप्रत्ययो हि कर्मत्वमाह, 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोरनुशासनात् । तच्च साध्यत्वमात्र न तु शेषित्वम् । न च कर्मत्वमेव शेषित्वमिति युक्तम्, 'यागात्स्वर्गो भवति' इत्यत्र कर्मत्वाभावेऽपि शेषित्वसत्त्वात् । न चाश्वप्रतिग्रहेष्टौ यथा वैदिकत्वसामान्याद्वैदिकमेवाश्वदानमुद्देश्यम्, तद्वदिहापि वैदिकमेव हिरण्यभरणमुद्देश्यमिति स्यात्क्रतूपस्थितिरिति वाच्यम्, अश्वप्रतिग्रहेष्टौ हि अश्वदाननिमित्तकत्वस्य निश्चितत्वाद् वैदिकमेवाश्वदानमुद्देश्यमिति युज्यते, इह विधानस्यापि सम्भवेन हिरण्योद्देश्यकत्वस्यैवानिश्चयान्न तथा । तस्मात्सुवर्णहिरण्यभरणं पुरुषार्थमेव ॥

इति द्वादश सुवर्णधारणाधिकरणम् ॥ १२ ॥

१३

इदमनारभ्यामनन्ति—"येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्" इति । ईर्त्सेत् ऋद्धिमिच्छेत् । 'चित्त च' इत्यादिमन्त्रका होमा जया, "यज्जयैरजयन् तज्जयाना जयत्वम्" इति निर्वचनात् । तदिमे जया किं लौकिकवैदिककर्मसाधारणा. ? उताहवनीययुक्तवैदिककर्ममात्रविषया' ? इति सशये, पूर्वपक्षयति—

**शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ ३१ ॥**

अप्रकरणे य शेष कर्माङ्गत्वेनावगत, स अविशेषात् लौकिकवैदिकसर्वकर्मणा साधारण प्रत्येतव्य । ततश्च जयहोमा एते कृष्यादिलौकिककर्मस्वपि फलभूमात्मकसमृद्धीच्छाया भवन्ति, यथावस्थितफलेच्छायान्तु न भवन्ति । न च वैदिकत्वसामान्यान्न लौकिककर्मस्वेषा प्रवृत्तिरिति वाच्यम्, वैदिकत्वसामान्यस्य सन्निधिरूपस्थानप्रमाणान्तर्गतत्वेन ततो वाक्यस्य सङ्कोचायोगात् । अश्वप्रतिग्रहेष्टौ तु लौकिके दाने पुरुषार्थत्व वैदिके तु क्रत्वर्थत्वमिति वैरूप्यापत्त्या विशेषापेक्षया वैदिकत्वसामान्याद्वैदिकदानमेव निमित्तमिति युज्यते । न च "यदाहवनीये जुह्वति" इति जयहोमानामाहवनीयसाध्यत्वात्कथं कृष्यादिकर्मणि प्रवृत्तिरिति वाच्यम्, अङ्गगुणविरोधन्यायेनाहवनीयाभावे लौकिकेऽप्यग्नौ जयहोमाना कर्तुं शक्यत्वात्, अनाहि-

ताग्ने' कृष्यादिकर्मण्याहवनीयाभावेऽप्याहिताग्नेस्तत्सत्त्वाच्च। तस्माल्लौकिकवैदिक-सर्वकर्मार्था जयहोमा इति प्राप्ते, सिद्धान्तयति—

**होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ ३२ ॥**

तुरवधारणे। जयहोमा वैदिकेष्वेव कर्मसु व्यवतिष्ठेरन, न तु लौकिकेषु। कुतः? आहवनीयसंयोगात् "यदाहवनीये जुहोति" इति होमानामाहवनीयसाध्यत्वावगमात् कृष्यादिषु च लौकिककर्मस्वाहवनीयाभावात्। अङ्गगुणविरोधन्यायश्च, यानि प्रयोगविधि रुपादेयत्वेनाङ्गानि विधत्ते तन्मात्रविषय'। यानि तु विध्यन्तरप्रयुक्तानि स्वयं सिद्धानि वा अङ्गत्वेन परिगृह्णाति, तानि तु स्वरूपत एवाधिकारिविशेषणतां प्रतिपद्यन्ते, न तु तत्राङ्गगुणविरोधन्याय., नापि सर्वशक्त्यधिकरणन्याय.। अन्यथा तिर्यगधिकरणे अङ्गानुसारेण प्रधानवाक्यसङ्कोचाश्रयणमसङ्गत स्यात्। अग्निहोत्रादीनि च कर्माणि यथाशक्त्युपबन्धादनाहिताग्नेरपि प्रसज्येरन्। नापि कृष्यादिकर्मण्याहवनीय सम्भवति, तस्याग्न्यगारस्थत्वात्। 'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्, तस्मिन्त्स्यादेकदेशत्वम्' इत्येकादशस्य द्वितीये अङ्गानां प्रधानदेशत्वस्य व्यवस्थापयिष्यमाणतया अग्न्यगारे कृताना जयहोमाना कृष्यर्थत्वायोगात्। न चाहवनीयमात्रस्य कृषिदेशे प्रणयनमिति युज्यते, गार्हपत्यादष्टासु प्रक्रमेष्वाहवनीयस्यायतनमिति विरोधात्। न च गार्हपत्योऽपि कृषिदेशे नीयतामिति वाच्यम्, तावता कृषिसामीप्यमात्रलाभेऽपि तत्सादेश्यालाभात्। हलेन क्षेत्रविदारण हि कृषि; न ह्येकैकस्मिन्विदारणदेशे आहवनीयं निक्षिप्य होतुं शक्यते। आहवनीयप्रदेशस्य कर्षणासम्भवाच्च। न च प्रयोगवचनपरिगृहीतानामेवाङ्गप्रधानाना समानदेशत्वस्य एकादशे वक्ष्यमाणत्वात् लौकिककर्मण कृषेः प्रयोगवचनपरिग्रहाभावान्न सादेश्यनियम इति वाच्यम्, 'पुरस्तात्कृषिकर्मणां प्राच्या क्षेत्रमर्यादाया द्यावापृथिवीय बलिं हरेत्' इत्याद्यङ्गविधिस्मरणेन 'तद्युक्कृषिं कुर्यात्' इति प्रयोगवचनकल्पनस्यावश्यकत्वात्। एवञ्च कृष्यादिषु क्रियमाणा जयहोमा वैदेश्याद्विगुणा भवेयु। वैदिकेषु तु कर्मस्वाहवनीयवत्सु क्रियमाणास्ते प्रधानसादेश्यात्सगुणा भवन्ति। अत. सादेश्यसम्पादनसामर्थ्यरूपलिङ्गानुसारेण जयहोमविधिर्वैदिकविषय एव सङ्कोचमर्हति ॥

इतोऽप्येवमित्याह—

**शेषश्च समाख्यानात् ॥ ३३ ॥**

अध्वर्युसमाख्याते यजुर्वेदे जयहोमा विहिता.। ते च समाख्यावशादध्वर्यु-

गात्क्रतुगतत्वप्रतीतिरित्यन्योन्याश्रयात् । न च क्रतुगतत्वेन हिरण्यप्रतीते पूर्वमेव स्वभावादेव भरणस्य संस्कारत्वावगमसम्भवान्नान्योन्याश्रय इति वाच्यम्; अदृष्टार्थतयापि भरणस्योपपन्नतया स्वभावतः संस्कारत्वनिश्चयासम्भवात् । न च कृत्यप्रत्ययात्संस्कार्यत्वावगमे सति तद्वशात्क्रतुगतत्वेन हिरण्योपस्थितिरिति वाच्यम् । कृत्यप्रत्ययो हि कर्मत्वमाह, 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोरनुशासनात् । तच्च साध्यत्वमात्रं न तु शेषित्वम् । न च कर्मत्वमेव शेषित्वमिति युक्तम्, 'यागात्स्वर्गो भवति' इत्यत्र कर्मत्वाभावेऽपि शेषित्वसत्त्वात् । न चाश्वप्रतिग्रहेष्टौ यथा वैदिकत्वसामान्याद्वैदिकमेवाश्वदानमुद्देश्यम्, तद्वदिहापि वैदिकमेव हिरण्यभरणमुद्देश्यमिति स्यात्क्रतूपस्थितिरिति वाच्यम्, अश्वप्रतिग्रहेष्टौ हि अश्वदाननिमित्तकत्वस्य निश्चितत्वाद् वैदिकमेवाश्वदानमुद्देश्यमिति युज्यते; इह विधानस्यापि सम्भवेन हिरण्योद्देश्यकत्वस्यैवानिश्चयान्न तथा । तस्मात्सुवर्णहिरण्यभरणं पुरुषार्थमेव ॥

इति द्वादशं सुवर्णधारणाधिकरणम् ॥ १२ ॥

१३

इदमनारभ्यामनन्ति—"येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्" इति । ईर्त्सेत् ऋद्धिमिच्छेत् । 'चित्तं च' इत्यादिमन्त्रका होमा जयाः, "यज्जयैरजयन् तज्जयानां जयत्वम्" इति निर्वचनात् । तदिमे जयाः किं लौकिकवैदिककर्मसाधारणाः? उताहवनीययुक्तवैदिककर्ममात्रविषयाः? इति संशये, पूर्वपक्षयति—

**शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ ३१ ॥**

अप्रकरणे यः शेषः कर्माङ्गत्वेनावगतः, स अविशेषात् लौकिकवैदिकसर्वकर्मणां साधारणः प्रत्येतव्यः । ततश्च जयहोमा एते कृष्यादिलौकिककर्मस्वपि फलभूमात्मकसमृद्ध्येच्छाया भवन्ति, यथावस्थितफलेच्छायान्तु न भवन्ति । न च वैदिकत्वसामान्यान्न लौकिककर्मस्वेषां प्रवृत्तिरिति वाच्यम्, वैदिकत्वसामान्यस्य सन्निधिरूपस्थानप्रमाणान्तर्गतत्वेन ततो वाक्यस्य सङ्कोचायोगात् । अश्वप्रतिग्रहेष्टौ तु लौकिके दाने पुरुषार्थत्वं वैदिके तु क्रत्वर्थत्वमिति वैरूप्यापत्त्या विशेषापेक्षया वैदिकत्वसामान्याद्वैदिकदानमेव निमित्तमिति युज्यते । न च "यदाहवनीये जुहोति" इति जयहोमानामाहवनीयसाध्यत्वात्कथं कृष्यादिकर्मणि प्रवृत्तिरिति वाच्यम्, अङ्गगुणविरोधन्यायेनाहवनीयाभावे लौकिकेऽप्यग्नौ जयहोमानां कर्तुं शक्यत्वात्, अनाहि-

कर्तृका'। लौकिककर्मणि चाध्वर्योरभावात् अनध्वर्युणा क्रियमाणा होमाः समाख्यां बाधेरन्। यदि च होममात्रमध्वर्युं' करोति तदा यद्यपि समाख्या अनुगृह्यते, तथापि कृषेर्होमानाञ्च समानकर्तृकत्व बाध्येत, कृषेरवैदिकत्वेन समाख्याभावेन तत्राध्वर्यु-नियमाप्राप्ते'। अत' समाख्यानुग्रहादपि वैदिककर्मशेषत्वेनैव जयहोमविधि ॥

इति त्रयोदश जयहोमाधिकरणम् ॥ १३ ॥

१४

इदमामनन्ति—"वरुणो वा एत गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति, स एवैनं वरुणपाशान्मुञ्चति" इति। अत्र प्रतिपूर्वो गृह्णातिर्दाने वर्तत इत्युत्तराधिकरणे वक्ष्यते। किमेषा इष्टिर्लौकिके वैदिके चाश्वदाने भवति ? उत लौकिके ? अथवा वैदिके ? इति सशय। तत्र निमित्तस्याश्वदानस्य लौकिकत्वेन वैदिकत्वेन च विशेषणे वाक्यभेदप्रसङ्गादुभयत्रापीति प्रथमपक्ष [1]सिद्धवत्कृत्य निराकुर्वन् द्वितीयपक्ष-मुपक्षिपति—

**दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ ३४ ॥**

तुर्नार्थे। नोभयत्र इयमिष्टि', किन्तु लौकिक एव दाने स्यात्। कुतः ? दोषात्। वरुणपाशग्रहदोषयुक्ताश्वदानस्य निमित्तत्वावगमात् वैदिकदाने च दोषाभावात्। न च दोषविशिष्टनिमित्तानुवादे वाक्यभेद शङ्क्य। अश्वदानत्वेनैव हि तन्निमित्त शब्द-वृत्त्यावगम्यते। पर्यवसानगत्यैव दोषवदश्वदान निमित्तम्। तथाहि—अश्वदाने विहिताया इष्ट फलाकाङ्क्षायाम् "स एवैन वरुणपाशान्मुञ्चति" इति वाक्यशेषाद्वरुण-पाशग्रहदोषनिर्घात फलमवगम्यते। दोषश्च प्रतिषेधसमनियतः। लौकिकमेव चाश्व-दानम् 'न केसरिणो ददाति' इति प्रतिषिद्धम्, न तु वैदिकमपि, तस्य विहितत्वात्, अहिंसावाक्यवत् नकेसरिवाक्यस्यापि विहितेतरविषयत्वात्। ततश्च हि यत 'अश्वो दक्षिणा' इत्यादिशास्त्राद्वैदिकाश्वदाने दोषो नास्ति, अतोऽवैदिकमेवाश्वदान निमित्त पर्यवस्यति। तथा च आर्थवादिकफलानुसारेण लौकिकस्यैवाश्वदानस्य निमित्तत्वादिष्टे पुरुषार्थत्वमेव, न तु क्रत्वर्थत्वम्। न च क्रतुबहिरपि अश्वदानस्य "अश्विसालोक्य-मावद' इत्यादिश्रुतिविहितत्वात् "न केसरिणो ददाति" इति प्रतिषेधविषयत्वा-

1. विधिवत्कृत्य ख

ऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति श्रुतम्। प्रजापतिर्वरुणायाश्वमनयत् दत्तवान्। स प्रजापतिः स्वा स्वकीया देवता सम्प्रदानभूतं वरुणम् आर्च्छत्प्राप्तवान्। प्रजापतिरश्वं दत्त्वा वरुणग्रहं प्राप्तवानिति यावत्। स प्रजापतिः पर्यदीर्यत जलोदरेण व्याधिना उदरे विदीर्णोऽभवत्। स प्रजापतिरेतं चतुष्कपालमित्यादि स्पष्टम्। इयमिष्टिः प्रतिग्रहीतुः दातुर्वा ? इति संशये पूर्वपक्षयति—

## अचोदितं च कर्मभेदात् ॥

दानप्रतिग्रहकर्मणोर्भेदात्प्रतिग्रहीतृसम्बन्धित्वेन श्रुतमिदं कर्म [दातुरचोदित मन्यामहे। चशब्दो युक्त्यन्तरमनुक्तं समुच्चिनोति—विध्युद्देशस्य बलीयस्त्वात् उपक्रमगतोऽप्यर्थवाद अन्यथा नेय इति। उपक्रमे हि यद्यपि प्रजापतिरश्वदानाद्वरुणगृहीतोऽभवत्, वारुण्येष्ट्या तन्मोचनमात्मनः कृतवान्, तस्मादन्योऽप्येवं कुर्यादिति विज्ञायते, तथापि विध्युद्देशस्य प्रबलत्वात् तदनुसारेण तद्वाक्यशेषः उपक्रमगतोऽपि अङ्गगुणविरोधन्यायेनान्यथा नेयः—दातुरपि यदि दोषः स्यात् किमुत प्रतिग्रहीतुरिति। न च 'दोषात्त्विष्टिः' इति सूत्रद्वयसिद्धपूर्वाधिकरणे 'याज्ञे प्रतीयेत' इति वैदिककर्माङ्गत्वबलादेव दातुरिष्टिरिति लभ्यते, अन्यथा यजमानस्य सकाशात्प्रतिग्रहीतुरस्यामिष्टावधिकारसिद्धये तद्गाम्येव फलं कल्प्यमिति यजमानरूपदातृगामिफलककर्माङ्गत्वासम्भवात्, न हि प्रतिग्रहीत्रधिकारिकाया इष्टेः दात्रधिकारिकज्योतिष्टोमादिवैदिककर्मणश्चाङ्गाङ्गिभावः सम्भवति, अङ्गप्रधानयोरेककर्तृकत्वनियमादिति वाच्यम्। एतदधिकरणप्रवृत्त्युपजीवनेनैव [1]पूर्वाधिकरणे याज्ञत्वव्यवहारप्रवृत्तेः। तस्मात्प्रतिग्रहीतुरिष्टिः। तस्याश्च प्रतिग्रहीतृकर्तृकाया यजमानकर्तृकवैदिककर्माङ्गत्वाभावेन पुरुषार्थतया ऋत्विजामितरेषाञ्च फलकल्पनायास्तुल्यत्वाल्लौकिकेऽपि प्रतिग्रहे इयमिष्टिरिति।

अथ सिद्धान्तयति—

## सा लिङ्गादार्त्विजे स्यात् ॥

सा इष्टिः आर्त्विजे ऋत्विक्सम्प्रदानके याजमानेऽश्वदाने स्यात्। कुतः ? लिङ्गात्—उपक्रमसामर्थ्यात्। उपक्रमे हि प्रजापतिरश्वं दत्त्वा वरुणग्रहं प्राप्तः, वारुणेष्ट्या ततो मुक्त इत्यवगतम्। तदेतद्दातुरेवेष्टिविधौ युज्यते। न हि प्रजापति-

[1] पूर्वाधिकरणप्रवृत्ते. ख, ग

'गौश्चाश्वश्च' इत्यादिविहितेऽश्वदाने विहिता एषा इष्टि क्रत्वर्थतया प्रतीयेत ॥

अत्र शङ्कते—

**अचोदितश्च कर्मभेदात् ॥ ३६ ॥**

च शब्दः शङ्कायाम् । 'कर्मभेदात्' इति ल्यब्लोपे पञ्चमी । लौकिकं वैदिकमिति विशेषमुपादाय इदमिष्टिकर्म अचोदित न विहितम्, किन्तु अविशेषेणाश्वदानमात्रे विहितम् । अतो लौकिके वैदिके चाश्वदाने स्यात् । उक्तरीत्या 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषस्य दोषनिर्घातपरत्वासम्भवेन केवलस्तुतिपरतया दोषवदश्वदानस्यैव निमित्तत्वालाभेन अश्वदानमात्रस्यैव निमित्तत्वलाभे सति वैदिकमात्रपरिशेषनिर्णायकाभावात् । तस्मात् 'याज्ञे प्रतीयेत' इत्यनुपपन्न ॥

अथ परिहरति—

**सा लिङ्गादार्त्विजे स्यात् ॥ ३७ ॥**

सा इष्टि आर्त्विजे—ऋत्विक्सम्प्रदानके क्रत्वङ्गभूते अश्वदाने स्यात्, न तु लौकिके । कुत ? लिङ्गात्—वैदिकत्वसामर्थ्यात् । प्रसिद्धे ह्यश्वदाने निमित्ते इद कर्म विधीयते । प्रसिद्धौ च पर्यालोच्यमानाया नैमित्तिककर्मणोऽस्य वैदिकत्वात् तत्सदृश वैदिकमेवाश्वदान निमित्त शीघ्रमुपतिष्ठत इति तत्सम्बन्धिक्रतूपस्थानात् तदुपकारार्थत्व गम्यते । ततश्च तेनैव निराकाङ्क्षत्वान्न लौकिकस्य ग्रहणम् । एवञ्च फल न कल्प्यमिति लाघवम् । किञ्च, लौकिकेऽश्वदाने इष्टे· पुरुषार्थता, वैदिकदाने तु तस्या· क्रत्वर्थता, न चैकस्य कर्मणस्तदुभयार्थत्व युज्यते, क्रत्वर्थत्वे ज्योतिष्टोमादिप्रधानविधिपरतन्त्रत्वात् नाधिकारान्तरप्रयोजकत्वम्, पुरुषार्थत्वे तु स्वातन्त्र्येणाधिकारान्तरप्रयोजकत्वमिति वैषम्यापत्ते । तस्माद्वैदिक एवाश्वदाने इयमिष्टि । तत्रापि श्रौत एव दाने, न तु स्मार्ते, तस्य प्रत्यक्षवेदविहितत्वाभावेन प्रत्यक्षवेदविहितनैमित्तिकविसदृशतया लौकिकवदेव शीघ्रोपस्थित्यभावात् । तदेवम् 'दोषात्त्विष्टि' इत्यारभ्य चत्वारि सूत्राण्यैकाधिकरण्यपरतया वार्तिके योजितानि ॥

भाष्ये तु 'अचोदित च कर्मभेदात्' 'सा लिङ्गादार्त्विजे स्यात्' इति सूत्रद्वयम् अस्यामेवेष्टावधिकरणान्तरपरतया योजितम्—"प्रजापतिर्वरुणायाश्वमनयत्, स स्वा देवतामार्च्छत्, स पर्यदीर्यत, स एत वारुण चतुष्कपालमपश्यत्, तन्निरवपत्, ततो वै स वरुणपाशादमुच्यत, वरुणो वा एत गृह्णाति योऽश्व प्रतिगृह्णाति, यावतो-

मिहापि प्रतिग्रहस्य प्रयोजकः कर्ता 'प्रतिगृह्णीयात्' इत्यनेन विवक्ष्यते। एतेनो-पक्रमाधिकरणन्यायेन गतार्थत्व निरस्तम्, [1]उक्ताधिकशङ्कापरिहारार्थत्वात्। ननु मैत्रायणीयशाखायाम् "स एषोऽश्वः प्रतिगृह्यते" इत्येव प्रतिग्रहोपक्रमाया एवास्या इष्टेराम्नानात् तैत्तिरीयशाखागतस्याप्यस्योपक्रमस्थस्यार्थवादस्य प्रतिग्रहीतृपरत्व-मेवोचितमिति चेत्—न, तत्रोपक्रमे प्रतिग्रहावगमेऽपि तदनुसारेण तैत्तिरीयशाखा-यामुपक्रमार्थवादस्य स्पष्टमेव दातृपरस्य विरुद्धत्वेन प्रतिग्रहीतृपरत्वाश्रयणानुप-पत्ते.। न हि विरुद्धयोरेकवाक्यतास्ति। तदुक्त वार्त्तिके—

'प्रतिग्रहीतरि स्पष्ट यदि वाक्यान्तरं तत ।
भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते' ॥ इति ।

एतच्छङ्कापरिहारार्थोऽपि सूत्रे चकारः। इति शाबरमतानुसारी भट्टा-नुमतः पन्थाः ॥

प्राचीनभाष्येषु मैत्रायणीयशाखीयोपक्रमानुसारेण तैत्तिरीयशाखायामप्यु-पक्रमार्थवादस्य प्रतिग्रहविषयत्वमविरोधादभ्युपेत्य चत्वार्यपि सूत्राणि प्रतिग्रह-विषय एव एकाधिकरणपरतया योजितानि। तद्यथा—"स स्वा देवतामाच्छेत्" इति तच्छब्दो वरुणमेव सन्निहित परामृशति न तु दातार प्रजापतिम्, व्यवहित-त्वात्। न ह्येकविभक्त्युपात्तपरामर्शित्व सर्वनाम्नां नियतम्, 'अजाद्दशरथो जातो रामस्तस्मादजायत' इत्यादौ व्यभिचारात्, "वरुणमेव स्वेन भागधेयेनोपधावति स एवैन वरुणपाशान्मुञ्चति" इत्युत्तरवाक्ये तच्छब्दस्य भिन्नविभक्त्युपात्तवरुण-परताया निर्विवादत्वाच्च। ततश्च मैत्रायणीयतैत्तिरीयशाखयोरविरोधलाभात्प्रति-ग्रहीतुरेवेष्टि। न च 'अनयत्' इत्याख्यातोपात्तकर्तुः प्रजापतेरेव सन्निहितत्वात् 'स स्वाम्' इति तच्छब्देन परामर्शो युक्त इति वाच्यम्, आख्यातस्य कर्तृवाचिताया कर्त्रधिकरणे निरस्तत्वात्। वरुणस्यैव कथ वरुणग्रह इति विरोधस्तु "अग्निर्वा अकामयत अन्नादो देवाना स्यामिति, स एतमग्नये कृत्तिकाभ्य पुरोडाशमष्टाक-पाल निरवपत्" इत्यादिवत् "आत्मनो वपामुदक्खिदत्" इत्यादिवच्च महानुभावाना देवाना लोकानुग्रहार्थं रूपभेदाश्रयणेन परिहार्य। सा चेयमिष्टि किं लौकिके-ऽश्वप्रतिग्रहे ? उत वैदिके ? इति सशये, पूर्वपक्षयति—

1 उक्तातिशङ्का. ख, ग.

नाश्वदात्रा वारुणेष्ट्या वरुणपाशविमोचनस्य कृतत्वात् अश्वप्रतिग्रहीत्रा वारुणेष्ट्या यष्टव्यमिति समञ्जसम् । न च दातुरपि दोषश्चेत्किमुत प्रतिग्रहीतुरित्येवमङ्गगुणविरोधन्यायेन विध्युद्देशमनुसृत्य उपक्रमगतवाक्यशेषोऽन्यथा नेय इति वाच्यम् । असञ्जातविरोधित्वेनोपक्रमगतार्थवादस्य यथाश्रुततयैव व्याख्यातव्यताया अङ्गगुणविरोधन्यायस्य विध्युद्देशतद्वाक्यशेषान्यविषयतायाश्चोपक्रमाधिकरणे व्यवस्थापितत्वात् । ननु, प्रजापतिर्वरुणायाश्वमनयत् अददात्, स. वरुण. स्वा स्वकीया देवता देवत्वम् 'वारुणो वा अश्व' इति तदभिमानित्वम्, आच्छंत् 'नोभयतोदत प्रतिगृह्णीयात्' इति अप्रतिग्राह्यप्रतिग्रहात् आर्तिमकरोत्, स वरुण. पर्यदीर्यत जलोदरेण उदरे परिदीर्णोऽभवत्, स. वरुण एत वारुणमित्यादि स्पष्टम्, तदेवमुपक्रमस्य प्रतिग्रहीतृपरतयैवोपपत्ते विध्युद्देशस्य तत्परत्वमेवेति चेन्न, 'प्रजापतिर्वरुणायाश्वमनयत्' इति हि प्रजापतिर्दाता सङ्कीर्तित, वरुणश्च सम्प्रदानम्, 'स स्वां देवताम्' इति तच्छब्दश्च प्रथमान्त प्रजापतिमेव परामृशति समानविभक्त्यन्तत्वात्, न तु वरुणम्, तस्य चतुर्थ्यन्तोपात्तत्वात् । एवम् 'स पर्यदीर्यत' 'स एत वारुणम्' इत्यत्रापि । वरुण एव वरुणपाश प्राप्त. इत्यस्य वारुणेष्ट्या तस्मान्मुक्त इत्यस्य च व्याहतत्वाच्च । न हि स्वेनैव स्वयं पीड्यते । नापि वरुणस्यात्मोद्देशेन याग सम्भवति, स्वद्रव्यत्यागात्मकस्य यागस्यात्मोद्देश्यकत्वे व्याघातात् । ततश्चोक्तरीत्या उपक्रमस्य दातृपरत्वमेव युक्तमिति तदनुसृत्योपक्रमाधिकरणन्यायेन विध्युद्देशस्य दातृपरत्वमेवास्थेयम् । ननु "ऋग्भि पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्न, सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्य" इत्यादावृगादिशब्दाना वेदेष्वपि बहुशो दृष्टत्वात् 'अग्नेर्ऋग्वेद' इत्युपक्रमानुसारेण 'उच्चैर्ऋचा क्रियते' इत्यादिविध्युद्देशाना तत्तद्वेदपरत्वमुचितम्, इह तु प्रतिगृह्णाते क्वापि दाने प्रयोगाभावान्न विध्युद्देशस्य दातृपरत्व सम्भवति इति, अत्राप्येतदेवोत्तरम्—'सा लिङ्गादार्त्विजे स्यात्' इति । सा इष्टि आर्त्विजे ऋत्विक्सम्प्रदानके याजमानेऽश्वदाने स्यात्, कुत ? लिङ्गात् 'तत्प्रयोजको हेतुश्च' इति प्रयोजकस्यापि क्वचित्कर्तृत्वस्मरणात् । 'प्रतिगृह्णीयात्' इति हि कर्ता गम्यते । स च प्रतिग्रहस्य प्रयोजको दातापि भवति । यथा 'षड्भिर्हलै कृषति' इति । तत्र हि कर्षणस्य मुख्यकर्ता भृत्य । क्षेत्रस्वामी तु तत्प्रयोजक । स एव च तत्र 'कृषति' इति विवक्षित । न हि क्षेत्रस्वामी स्वय कृषति । किन्तु कर्षणे भृत्य प्रयोजयति । एव-

१५

इदमामनन्ति "सोमेन्द्रं श्यामाकं चरुं निर्वपेत् यः सोमं वमिति" इति। किमियमिष्टिर्लौकिकसोमस्य धातुसाम्यार्थं पीतस्य वमने निमित्ते भवति? उत वैदिकसोमवमने? अथ वोभयत्र? इति संशये वमनस्य विहितत्वाभावेनावैदिकतया अश्वदानवद्वैदिकस्यैव तस्य शीघ्रोपस्थित्यसम्भवादुभयत्रापि निमित्ते इयमिष्टिरिति प्राप्ते, सिद्धान्तयति—

**पानव्यापच्च तद्वत् ॥ ३८ ॥**

पानेति कर्मणि ल्युट्। पीतसोमरसस्य व्यापत्—व्यापत्ति वान्तिरपि तद्वत् वैदिक्येव निमित्तमित्यर्थः। यद्यपि वमनं न विहितं तथापि सोमपानस्य विहितत्वेन तद्वमनस्यापि वैदिकत्वात् शीघ्रोपस्थितिः सम्भवतीति भावः। भाष्ये तु 'दोषात्त्विष्टिर्लौकिके' इति [1]व्यवहिताधिकरणपूर्वपक्षपरतया इदं सूत्रं योजितम्। तदेतत्क्लिष्टत्वादुपेक्ष्य[2] वार्त्तिकेऽव्यवहिताधिकरणसिद्धान्तातिदेशपरं योजितम्। 'सा लिङ्गादार्त्विजे स्यात्' इत्यव्यवहितपूर्वसूत्रस्य वैदिकाश्वदानमात्रविषयतयापि वार्त्तिके योजितत्वेन तथा व्याख्यानस्य युक्तत्वात्। स्यादेतत्, "इन्द्रियेणैष वीर्येण व्यृध्यते यः सोमं वमिति" इति सोमवमने इन्द्रियवीर्यसमृद्ध्यभावदोषस्य "नेन्द्रियेण वीर्येण व्यृध्यते" इति इष्टेस्तन्निर्घातार्थत्वस्य च श्रवणाद्वैदिकस्य च सोमस्य विहितपानमात्रेण कृतप्रतिपत्तिकस्य वमनेऽपि दोषाभावात् न तत्र दोषनिर्घातार्थेष्टिविधानमर्थवत्, अतो लौकिकसोमवमन एवेष्टिः। न च "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" इतिवत् "इन्द्रियेण वा एष व्यृध्यते" इत्येतदप्यर्थवाद इति वाच्यम्। न ह्यश्वदाने सति जलोदरग्रहवत् सोमवमने इन्द्रियवीर्यव्यृद्धिरत्यन्ताविद्यमाना। न च लौकिकवमनादिन्द्रियवीर्यसमृद्धिरेव, अन्यथा धातुसाम्यानुपपत्तेरिति वाच्यम्, वमनादूर्ध्वमिन्द्रियवीर्यसमृद्धावपि तत्काले इन्द्रियवीर्यशोषसत्त्वात् इत्याशङ्क्य निराकरोति—

**दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् ॥ ३९ ॥**

तुरवधारणे। इन्द्रियवीर्यसमृद्धिदोषनिर्घातार्थत्वश्रवणादिष्टिर्वैदिकसोमवमन एव स्यात्। लौकिके हि वमने अर्थात् प्रयोजनवशादेव दोषो न स्यात्। सोमपान

1 व्यवहितसूत्र ख, ग 2. दुष्टत्वादुपेक्ष्य. क,

१५

इदमामनन्ति "सोमेन्द्रं श्यामाकं चरुं निर्वपेत् यः सोमं वमिति" इति। किमियमिष्टिर्लौकिकसोमस्य धातुसाम्यार्थं पीतस्य वमने निमित्ते भवति ? उत वैदिकसोमवमने ? अथ वोभयत्र ? इति संशये वमनस्य विहितत्वाभावेनावैदिकतया अश्वदानवद्वैदिकस्यैव तस्य शीघ्रोपस्थित्यसम्भवादुभयत्रापि निमित्ते इयमिष्टिरिति प्राप्ते, सिद्धान्तयति—

## पानव्यापच्च तद्वत् ॥ ३८ ॥

पानेति कर्मणि ल्युट्। पीतसोमरसस्य व्यापत्—व्यापत्तिः वान्तिरपि तद्वत् वैदिक्येव निमित्तमित्यर्थः। यद्यपि वमनं न विहितं तथापि सोमपानस्य विहितत्वेन तद्वमनस्यापि वैदिकत्वात् शीघ्रोपस्थितिः सम्भवतीति भावः। भाष्ये तु 'दोषात्त्विष्टिर्लौकिके' इति [1]व्यवहिताधिकरणपूर्वपक्षपरतया इदं सूत्रं योजितम्। तदेतत्क्लिष्टत्वादुपेक्ष्य[2] वार्त्तिकेऽव्यवहिताधिकरणसिद्धान्तातिदेशपरं योजितम्। 'सा लिङ्गादार्त्विजे स्यात्' इत्यव्यवहितपूर्वसूत्रस्य वैदिकाश्वदानमात्रविषयतयापि वार्त्तिके योजितत्वेन तथा व्याख्यानस्य युक्तत्वात्। स्यादेतत्, "इन्द्रियेणैष वीर्येण व्यृध्यते यः सोमं वमिति" इति सोमवमने इन्द्रियवीर्यसमृद्ध्यभावदोषस्य "नेन्द्रियेण वीर्येण व्यृध्यते" इति इष्टेस्तन्निर्घातार्थत्वस्य च श्रवणाद्वैदिकस्य च सोमस्य विहितपानमात्रेण कृतप्रतिपत्तिकस्य वमनेऽपि दोषाभावात् न तत्र दोषनिर्घातार्थेष्टिविधानसामर्थ्यवत्, अतो लौकिकसोमवमन एवेष्टिः। न च "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" इतिवत् "इन्द्रियेण वा एष व्यृध्यते" इत्येतदप्यर्थवाद इति वाच्यम्। न ह्यश्वदाने सति जलोदरग्रहवत् सोमवमने इन्द्रियवीर्यव्यृद्धिरत्यन्ताविद्यमाना। न च लौकिकवमनादिन्द्रियवीर्यसमृद्धिरेव, अन्यथा धातुसाम्यानुपपत्तेरिति वाच्यम्, वमनादूर्ध्वमिन्द्रियवीर्यसमृद्धावपि तत्काले इन्द्रियवीर्यशोषसत्त्वात् इत्याशङ्क्य निराकरोति—

## दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् ॥ ३९ ॥

तुरवधारणे। इन्द्रियवीर्यसमृद्धिदोषनिर्घातार्थत्वश्रवणादिष्टिर्वैदिकसोमवमन एव स्यात्। लौकिके हि वमने अर्थात् प्रयोजनवशादेव दोषो न स्यात्। सोमपान

1. व्यवहितसूत्र ख, ग  2. दुष्टत्वादुपेक्ष्य. क.

दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥

जलोदरपर्यायवरुणपाशनिर्घातार्थत्वादियमिष्टिर्लौकिकेऽश्वप्रतिग्रहे स्यात्, वैदिकेऽश्वप्रतिग्रहे विहितत्वादेव दोषासम्भवादित्यर्थः। सिद्धान्तयति—

अर्थवादो वानुपपातात्तस्माद्याज्ञे प्रतीयेत ।

'स एवैनं वरुणपाशान्मुञ्चति' इत्यर्थवाद एव, न तु फलवाद । कुत ? अनुपपातात्—जलोदरनिर्घाते मुख्यार्थे उक्तरीत्यो वाक्यस्य समावेशासम्भवात्। तस्मादिष्टेर्दोषनिर्घातार्थत्वासम्भवादप्रसक्तदोषेऽपि याज्ञे क्रत्वङ्गभूतेऽश्वप्रतिग्रहे इष्टिः प्रतीयेत ।

अत्र शङ्कते—

अचोदितं च कर्मभेदात् ॥

ल्यब्लोपे पञ्चमी। लौकिक वैदिकमिति विशेषमनपेक्ष्य अश्वप्रतिग्रहमात्रे इदमिष्टिकर्म विहितम्। अत उभयत्र स्यात्, वाक्यशेषस्य केवलस्तुतिपरतया दोषवदश्वप्रतिग्रहस्यैव निमित्तत्वालाभात्। अतो याज्ञे प्रतीयेतेत्यनुपपन्नम् ॥

अथ परिहरति—

सा लिङ्गादार्त्विजे स्यात् ॥

सा इष्टिः, लिङ्गात् वैदिकत्वसामान्यात्, आर्त्विजे ऋत्विग्भ्यो दक्षिणात्वेन देयस्याश्वस्य प्रतिग्रहे यजमानकर्तृके प्रत्येतव्या। ततश्च यजमानगामिफलकक्रत्वर्थत्वं भवति। अस्ति हि क्रत्वङ्गतया यजमानकर्तृकोऽश्वप्रतिग्रह—"दीक्षितो द्वादशाहं भृतिं वन्वीत" "पूषा सन्येति सनिहारान्प्रहिणोति" "चन्द्रमसीति हिरण्य प्रतिगृह्णाति" "वरुमसीति वास " "उस्रासीति गाम्" "हयोऽसीत्यश्वम्" इत्यादिश्रवणात्। भृतिर्दक्षिणार्थं द्रव्यम्। वन्वीत याचेत। सनिं याच्ञालब्ध द्रव्यं हरन्तीति सनिहारा, तान्प्रहिणोति दातृसकाश प्रापयति। स्पष्टमन्यत्। तदेतत्षष्ठोपान्त्याधिकरणे 'याच्ञाक्रयणमविद्यमाने लोकवत्' इत्यत्र स्पष्ट भविष्यति। अत प्रतिग्रहीतुरेवैषा इष्टिः। सोऽय प्राचीनभाष्यानुसारी पक्षोऽपि वार्त्तिके ध्वनित याज्ञिकसम्मतश्च। तथा च भारद्वाजसूत्रम् 'प्रतिग्रह इष्टि स्यादित्याश्मरथ्योऽश्वप्रतिग्रह इत्यालेखन आर्त्विजे प्रतिग्रहे यजमानस्यैव स्यात्' इति ॥

इति चतुर्दशमश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १४ ॥

सोम वमिति स सौमेन्द्र चरुं निर्वपेत्" इति च यच्छन्दवलादिष्टिवमनयोरेककर्तृकत्वमवगतम्[1]। अतो याजमानमेव सोमवमनं निमित्तम्। न चैव सति ऋत्विजां सोमवमने क्रतुवैगुण्यस्य कथ परिहार, ऋत्विग्विपर्येऽपि सोमपानस्य जरणपर्यन्तत्वादिति वाच्यम्, सर्वप्रायश्चित्तादिना तत्सम्भवात्॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ४२ ॥

य सोमपानात्समृद्धि कामयते तस्यैव तद्वैगुण्याद्व्यृद्धिरुद्भाव्यते "इन्द्रियेण वा एष वीर्येण व्यृध्यते" इति। तदेतत् स्वामिन एवोपपद्यते, न त्वृत्विजाम्। तत्सामर्थ्यादपि स्वामिन एवेष्टिरिति मन्यामहे॥

इति षोडश सोमेन्द्रचरोर्याजमानताधिकरणम्॥ १६ ॥

१७

दर्शपूर्णमासयो "आग्नेयोऽष्टाकपालो भवति" इत्यादि श्रुतम्, "द्व्यवदान जुहोति" इति च, "उपस्तृणाति" "द्विर्हविषोऽवद्यति" "अभिघारयति" "चतुरवत्त जुहोति" इति च। तत्र द्व्यवदानवाक्यमुपस्तरणाभिघारणाज्यसहितद्व्यवदानपरं चतुरवत्तवाक्येन समानार्थकम्। शाखाभेदाच्च न पौनरुक्त्यम्। तत्र किं कृत्स्नस्य पुरोडाशस्याहवनीये होमः? उत उपस्तरणाभिघारणसंस्कृतद्व्यवत्तमात्रस्य? इति संशये, पूर्वपक्षयति—

## सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥

सर्वप्रदान कृत्स्नस्यैव पुरोडाशस्याहवनीये होम न तु द्व्यवदानमात्रस्य, कुतः? हविषस्तदर्थत्वात्—कृत्स्नस्य पुरोडाशस्य देवतार्थत्वात्। "आग्नेयोऽष्टाकपाल." इति हि अष्टसु कपालेषु संस्कृतस्य पुरोडाशस्याग्निदेवत्यत्वमवगम्यते, न तु द्व्यवदानस्य तदवयवस्य। अवयविशब्दस्यावयवे लक्षणाप्रसङ्गात्। ततश्च न द्व्यवदानमात्रस्य होम। किन्तु कृत्स्नस्यैव पुरोडाशस्य। विना होम तस्य देवतासम्बन्धानिर्वाहात्। न च 'अग्नय इद न मम' इति त्यागमात्रेण होम विनापि कृत्स्नस्य पुरोडाशस्य देवतासम्बन्ध सिध्यतीति वाच्यम्, "अग्निमुखा वै देवा." इति वाक्यशेषबलेन देवतासम्बन्धस्याहवनीयाद्यग्निसाध्यत्वावगमेन होम विना तदनिर्वाहात्। न च कृत्स्नस्य पुरोडाशस्य होमे सति "शेषात्स्विष्टकृते समवद्यति"

1. एककर्तृत्वनियमात्कत्वङ्गत्वमवगतम् क, ग, घ, मु. पा.

हि लोके वमनायैव प्रयोजनाय क्रियते। वमने ह्यन्तर्गतदोषनिःसारणेन धातुसाम्यं जायते। ततश्च तात्कालिकेन्द्रियवीर्यशोषाभ्युपगमेनैव लोके वमनप्रवृत्तेः 'अङ्गीकृता ग्लानिर्न दोषाय' इति न्यायेन लौकिकसोमवमने दोषो नास्ति। वेदे तु सोमपानस्य "हिन्व मे गात्रा हरिव" इत्यादिमन्त्रवर्णतो जरणपर्यन्तस्यैव शास्त्रार्थतया तद्वमने दोषोऽस्त्येव। अतो दोषवशादेव वैदिकसोमवमने स्यादिष्टिः। ननु वमनप्रयुक्तेन्द्रियवीर्यव्यृद्धेरिष्ट्यनुष्ठानेनाप्यपरिहार्यतया इष्टेर्दोषनिर्घातार्थत्वासम्भवात् "इन्द्रियेण वा एष वीर्येण व्यृध्यते" इत्यर्थवादमात्रमिति कुतस्तद्वशाद्वैदिकवमनमात्रे इष्टिः स्यादिति, अत्राप्येतदेव सूत्रमुत्तरम्। अस्तु दोषश्रवणमर्थवादः। अर्थात् अर्थनात् अपेक्षावशात् वैदिकवमन एव स्यात् न तु लौकिकवमने। तत्र हि दोषाभावात्प्रतीकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चित्तेष्टिविधानम्। वेदे तु जरणपर्यन्तस्यैव सोमपानस्य क्रतौ विधानात् वमने क्रतुवैगुण्यात् तत्प्रतीकाराय अपेक्षितमिष्टिविधानमिति तत्रैवेष्टिः। किञ्च लोकेऽपि तात्कालिकेन्द्रियवीर्यव्यृद्धेरवर्जनीयत्वेन तन्निर्घातार्थत्वासम्भवाद्दोषश्रवणं पूर्वपक्षिणाप्यर्थवादमात्रमित्येव स्वीकार्यमिति, ततः फलाकाङ्क्षापूरणाभावात्तत्पक्षे फलकल्पनागौरवं स्यादिति फलकल्पनालाघवादपि वैदिकवमन एवेष्टिः॥

इति पञ्चदशं पानव्यापदधिकरणम्॥ १५॥

१६

किमिदं वैदिकसोमवमनं याजमानमेव निमित्तम्? उतार्त्विजमपि? इति संशये पूर्वपक्षयति—

**तत्सर्वत्राविशेषात्॥ ४०॥**

तत्—वैदिकसोमवमनं सर्वत्र यजमाने ऋत्विक्षु च विद्यमानं निमित्तम्। कुतः? अविशेषात् यजमानस्येव ऋत्विजां सोमवमनेऽपि सम्यग्जरणपर्यन्तप्रतिपत्तिवैगुण्येन क्रतुवैगुण्यापत्त्या पूर्वाधिकरणोक्तापेक्षितविधानस्याविशेषात्॥

अथ सिद्धान्तयति—

**स्वामिनो वा तदर्थत्वात्॥ ४१॥**

वाशब्दोऽवधारणे। स्वामिनः यजमानस्यैव सोमवमनं निमित्तम्, न त्वृत्विजामपि। कुतः? तदर्थत्वात्—इष्टेर्यजमानार्थत्वात्। इष्टिर्ह्येषा क्रत्वङ्गमिति पूर्वाधिकरणे स्थितम्। ततश्चाङ्गप्रधानयोरेककर्तृकत्वनियमात्क्रत्वधिकारिकत्वमेवेष्टेरास्थेयम्। "य

इत्यादिशेषकार्याणां लोपः स्यादिति वाच्यम्, अत एवाक्षिप्तपुरोडाशान्तरतस्तत्सम्भवात्। न च शेषकार्याणामप्रयोजकत्वस्य चतुर्थे वक्ष्यमाणत्वान्नात्र द्रव्यान्तराक्षेपसम्भव इति वाच्यम्, 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्' इति चातुर्थिकाधिकरणे हि एकदेशद्रव्यकस्य सत कर्मण सन्निहितशेपसत्त्वान्न द्रव्यप्रयोजकत्वमिति वक्ष्यते। इदानी च सर्वहोमे सति सन्निहितशेषाभावेन तदधिकरणन्यायाप्रवृत्त्या द्रव्यान्तराक्षेपो निर्बाधः। न चैकस्मिन्नवयविन्युपयुक्तावयवादितरस्यैवानुपयुक्तावयवस्य शेषशब्दार्थत्वात् कथ पुरोडाशान्तरे शेषशब्द इति वाच्यम्, अवयवावयविभावमनपेक्ष्यापि शेषशब्दस्यान्यशब्दपर्यायताया श्रुतिस्मृत्योर्दर्शनात्। तत्र वेदे तावत् "पर्यग्निकृतं पात्नीवतमुत्सृजति" "आज्येन शेषं सस्थापयति" इत्यत्र शेषशब्दोऽन्यपर्याय 'आज्येन शेषम्' इति कर्मान्तरविधिरिति नवमान्त्याधिकरणे वक्ष्यते। धर्मसूत्रे स्वर्गारम्भककर्मणां फलभोगमुक्त्वा तत 'शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति स्वर्गारम्भकसुकृतादन्यस्मिन्सुकृते शेषशब्द प्रयुक्त। न च स्वर्गारम्भकसुकृतस्यैकेनाशेन स्वर्गमुपभुज्य अवशिष्टांशेनेह जन्म प्रतिपद्यन्त इति युक्तम्, स्वर्गारम्भककर्मणा नि शेषमेव फलोपभोगात्, अन्यफलकस्य सुकृतस्यान्यत्र व्यापारासम्भवेन स्वर्गारम्भकसुकृतांशेनेह जन्मप्राप्तेरसम्भवाच्च। ततश्च पुरोडाशान्तरमेव शेषशब्देन विवक्षितमित्यविरोध ॥

अथ सिद्धान्तयति—

## निरवदानात्तु शेषः स्यात् ॥ ४४ ॥

तुनर्थे। न सर्वस्य पुरोडाशस्य होम। किन्तु द्व्यवदानमात्रस्य। शेषस्तु स्विष्टकृदाद्यर्थं स्थापनीय स्यात्। कुत.? निरवदानात् पुरोडाशान्निष्कृष्य द्व्यवदान यस्मिन्वाक्यजाते प्रत्यक्षश्रुतमस्ति तन्निरवदानम्। 'द्विर्हविषोऽवद्यति" 'मध्यात्पूर्वार्धाच्च द्विरवद्यति" "अङ्गुष्ठपर्वमात्रमवद्यति' "द्व्यवदान जुहोति इत्यादिवाक्यजातादित्यर्थं। अत्र हि पुरोडाशान्निष्कृष्याङ्गुष्ठपर्वमात्रशो द्विरवत्तस्यांशस्य होमसाधनता श्रुता। आग्नेयादिवाक्यात्तु कृत्स्नस्य पुरोडाशस्य देवतासम्बन्धित्वेनावगतस्य "अग्निमुखा वै देवा" इति वाक्यशेषवशेन होम विनानुपपत्त्या होमसाधनत्व कल्प्यते। एवञ्च प्रत्यक्षश्रुतद्व्यवदानहोमसाधनतानुसारेण आग्नेयवाक्यतोऽपि द्व्यवदानप्रणाडिकया होमसाधनत्व पर्यवस्यति। अतो द्व्यवदानमात्र हुत्वा शेषयितव्यम् ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## उपायो वा तदर्थत्वात् ॥ ४५ ॥

वाशब्द प्रत्यवस्थाने। आग्नेयवाक्यात् "अग्निमुखा वै देवा" इत्यर्थवादसहकृतात्कृत्स्नस्य पुरोडाशस्य होमेऽवगते सति निरवदानवाक्यजातमुपायोपदेशपर भविष्यति 'मध्यात्पूर्वार्धाच्च पुन पुनर्द्विर्द्विरवदाय होतव्यम्' इति। ननु पुन पुनर्द्विर्द्विरवदाय होम इति कुत, अभ्यासस्याश्रवणात्? इत्यत आह—तदर्थत्वादिति। उत्पत्तौ कृत्स्नस्य पुरोडाशस्य होमार्थत्वावगमादित्यर्थ। ततश्च यथा उत्पत्त्यवगतकृत्स्नपुरोडाशहोमे द्व्यवदानहोमोऽयमुपाय. स्यात् तथा सोमयागवदभ्यसितव्यो द्व्यवदानहोम इति पर्यवस्यति। तथा च [1]द्विर्द्विरवदायावदाय पुन पुनर्होमात्कृत्स्नस्य पुरोडाशस्य होमसाधनत्वम् ॥

अथ सिद्धान्ती निराचष्टे—

## कृतत्वात्तु कर्मणः सकृत्स्यादुद्रव्यस्य गुणभूतत्वात् ॥ ४६ ॥

तुर्नार्थे। यद्यपि कृत्स्नस्य पुरोडाशस्योत्पत्तिवाक्ये होमार्थत्वमवगतम्, तथापि द्व्यवदानहोमस्य सकृदेव प्रयोग. स्यात्। नाभ्यास, कृतत्वात्। सकृत्प्रयोगेणैव "द्व्यवदान जुहोति" इति [2]शास्त्रार्थस्य पर्यवसन्नत्वात्। न चोत्पत्तिवाक्यावगत कृत्स्नस्य पुरोडाशस्य होमसाधनत्व द्व्यवदानहोमाभ्यासमन्तरेणानुपपद्यमान तदभ्यास प्रयोजयतीति वाच्यम्। अग्निदेवत्यहोमसाधनत्वमेव ह्याग्नेयत्व पुरोडाशस्य। तच्च वाक्यान्तरपर्यालोचनया द्व्यवदानप्रणाडिकया कृत्स्नस्य पुरोडाशस्योपपाद्यम्। यथा व्रीहीणा पुरोडाशप्रणाडिकया पशोर्हृदयादिप्रणाडिकया सोमस्य च रसप्रणाडिकया तद्वत्। एवञ्च द्व्यवदानप्रणाडिकया कृत्स्नस्य पुरोडाशस्याग्नेयत्वमुपपन्नमिति न तत् द्व्यवदानस्याभ्यास प्रयोजयितुमीष्टे। ननु द्व्यवदानहोमोऽभ्यस्यताम् आग्नेयत्वं वा प्रणाडिकया नीयतामित्यत्र विनिगमनाविरह इत्यत आह—द्रव्यस्य गुणभूतत्वादिति। होमो हि "दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इति फलसम्बन्धात्प्रधानम्, पुरोडाशस्तु तत्र साधनत्वाद्गुणभूत। न च तदनुसारेण प्रधानभूतहोमस्यावृत्तिर्न्याय्या। न च "स्वर्गकामो यजेत" इति यागस्यैव फलसम्बन्धात्प्राधान्यम्, न तु होमस्येति वाच्यम्, यजतेरपि होमवाचित्वात् जुहोतिचोदितेष्वपि कर्मसु

1. द्विर्द्विरवदाय पुन पुनरादाय क. 2 शास्त्रस्य ख.

इत्यादिशेषकार्याणां लोपः स्यादिति वाच्यम्, अत एवाक्षिप्तपुरोडाशान्तरतस्तत्सम्भवात्। न च शेषकार्याणामप्रयोजकत्वस्य चतुर्थे वक्ष्यमाणत्वान्नात्र द्रव्यान्तराक्षेपसम्भव इति वाच्यम्, 'एकदेशद्रव्ये चोत्पत्तौ विद्यमानसंयोगात्' इति चातुर्थिकाधिकरणे हि एकदेशद्रव्यकस्य सतः कर्मणः सन्निहितशेषसत्त्वान्न द्रव्यप्रयोजकत्वमिति वक्ष्यते। इदानीं च सर्वहोमे सति सन्निहितशेषाभावेन तदधिकरणन्यायाप्रवृत्त्या द्रव्यान्तराक्षेपो निर्बाधः। न चैकस्मिन्नवयविन्युपयुक्तावयवादितरस्यैवानुपयुक्तावयवस्य शेषशब्दार्थत्वात् कथं पुरोडाशान्तरे शेषशब्द इति वाच्यम्, अवयवावयविभावमनपेक्ष्यापि शेषशब्दस्यान्यशब्दपर्यायतायाः श्रुतिस्मृत्योर्दर्शनात्। तत्र वेदे तावत् "पर्यग्निकृतं पात्नीवतमुत्सृजति" "आज्येन शेषं संस्थापयति" इत्यत्र शेषशब्दोऽन्यपर्यायः 'आज्येन शेषम्' इति कर्मान्तरविधिरिति नवमान्त्याधिकरणे वक्ष्यते। धर्मसूत्रे स्वर्गारम्भककर्मणां फलभोगमुक्त्वा ततः 'शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति स्वर्गारम्भकसुकृतादन्यस्मिन्सुकृते शेषशब्दः प्रयुक्तः। न च स्वर्गारम्भकसुकृतस्यैकेनांशेन स्वर्गमुपभुज्य अवशिष्टांशेनेह जन्म प्रतिपद्यन्त इति युक्तम्, स्वर्गारम्भककर्मणा निःशेषमेव फलोपभोगात्, अन्यफलकस्य सुकृतस्यान्यत्र व्यापारासम्भवेन स्वर्गारम्भकसुकृतांशेनेह जन्मप्राप्तेरसम्भवाच्च। ततश्च पुरोडाशान्तरमेव शेषशब्देन विवक्षितमित्यविरोधः॥

अथ सिद्धान्तयति—

**निरवदानात्तु शेषः स्यात्॥ ४४॥**

तुर्नार्थे। न सर्वस्य पुरोडाशस्य होमः। किन्तु द्व्यवदानमात्रस्य। शेषस्तु स्विष्टकृदाद्यर्थं स्थापनीयः स्यात्। कुतः? निरवदानात् पुरोडाशान्निष्कृष्य द्व्यवदानं यस्मिन्वाक्यजाते प्रत्यक्षश्रुतमस्ति तन्निरवदानम्। 'द्विर्हविषोऽवद्यति" "मध्यात्पूर्वार्धाच्च द्विरवद्यति" "अङ्गुष्ठपर्वमात्रमवद्यति" "द्व्यवदानं जुहोति" इत्यादिवाक्यजातादित्यर्थः। अत्र हि पुरोडाशान्निष्कृष्याङ्गुष्ठपर्वमात्रशो द्विरवत्तस्यांशस्य होमसाधनता श्रुता। आग्नेयादिवाक्यात्तु कृत्स्नस्य पुरोडाशस्य देवतासम्बन्धित्वेनावगतस्य "अग्निमुखा वै देवाः" इति वाक्यशेषवशेन होमं विनानुपपत्त्या होमसाधनत्वं कल्प्यते। एवञ्च प्रत्यक्षश्रुतद्व्यवदानहोमसाधनतानुसारेण आग्नेयवाक्यतोऽपि द्व्यवदानप्रणाडिकया होमसाधनत्वं पर्यवस्यति। अतो द्व्यवदानमात्रं हुत्वा शेषयितव्यम्॥

भ्याधीतसामान्यवचनस्य तु शाखाभेदान्न पौनरुक्त्यम्। शाखान्तरोपसंहाराभावे सर्वविकृत्यर्थञ्च शाखान्तरोपसहारानित्यत्वस्य शाखान्तराधिकरणे व्यवस्थापितत्वात्। केचित्तु सामान्यवचनतो विज्ञानमभ्युदयकारीत्याहु । इह त्वष्टाकपालस्य स्फुट एव देवतासम्बन्ध तद्धितश्रुत्याभिहितत्वात्। 'आग्नेय' इति हि तद्धितेन 'सास्य देवता' इत्यधिकृत्य विहितेन 'अग्निकलिभ्या ढग्वक्तव्य' इति ढक्प्रत्ययेनाष्टाकपालपुरोडाशस्याग्निर्देवतेत्यवगतम्। त्यज्यमानहविरुद्देश्यत्वमेव च देवतात्वम, न तु वेदपुराणप्रसिद्धो जातिविशेष, 'रक्षोदेवत्यम्' 'पितृदेवत्यम्' इत्यादावसम्भवात्। देवतोद्देश्यकद्रव्यत्याग एव याग'। तथा च "आग्नेयोऽष्टाकपाल" इत्युत्पत्तिवाक्यादग्निदेवताकयागसाधनमष्टाकपालपुरोडाश इति शब्दमर्यादयैव स्फुटमवगतम्। नात्र साम्रदश्यानारभ्यवादवदनुमानापेक्षास्ति। द्रव्यवदानस्य तु न स्फुटो देवतासम्बन्ध., "द्व्यवदान जुहोति" इत्यत्र तथाविधशब्दाभावात्। यद्यपि जुहोतिर्देवतोद्देश्यकत्यज्यमानहवि'प्रक्षेपवाची, तथापि तावता सामान्यतो देवतासम्बन्ध एव द्रव्यवदानस्य शाब्दः। अग्नित्वेन रूपेण तस्य देवताविशेषसम्बन्धस्त्वाग्नेयपुरोडाशावयवत्वादनुमेय इत्यस्पष्टमेव द्रव्यवदानस्याग्नेयत्वम्। तथा च "आग्नेयोऽष्टाकपाल" इति स्पष्ट. सामान्यविधि. कथमस्पष्टाग्नेयताकद्रव्यवदानमात्र उपसह्रियते। यद्यपि द्रव्यवदानस्य होमात्मकत्यागसम्बन्ध शाब्द, पुरोडाशस्य तु श्रुतदेवतासम्बन्धस्य "अग्निमुखा वै देवा" इत्यर्थवादवशेनाहवनीये प्रक्षेपमन्तरेणानुपपत्त्या कल्प्यते, तथापि द्रव्यवदानस्याग्नेयत्वे सिद्धे तत्र सामान्यश्रुतस्याग्नेयत्वस्योपसंहारो वाच्य.। द्रव्यवदानस्य चाग्नेयत्वमाग्नेयवाक्यप्राप्ताग्निदेवताकपुरोडाशावयवत्वादनुमेयमित्याग्नेयवाक्यं तत्रोपजीव्य भवति। अपर्यवसन्नार्थक एव तस्मिन्नाग्नेयवाक्ये सति द्व्यवदानस्याग्नेयत्वानुमान प्रवर्तितुमर्हतीति स्वार्थपर्यवसानान्यथानुपपत्त्या प्रथमतरानुमित पुरोडाशस्य कृत्स्नस्य होमसम्बन्ध प्रत्यक्षविशेषवचनशतेनापि द्रव्यवदानमात्रविषयतामापादयितु' न शक्यते।

किञ्च यत्र विशेषस्य सामान्यात्मना अभेद तत्रैव सामान्यविधेर्विशेष उपसंहार। न ह्यत्र द्रव्यवदानं पुरोडाशस्यावयभूत पुरोडाशात्मकं भवति, येन पुरोडाशस्यावयविन उक्तमाग्नेयत्व तदवयवभूतद्रव्यवदानविषयमुपसह्रयेत, अवयवाव-

'अग्निहोत्रस्य यज्ञक्रतोः, एक ऋत्विक्' इत्येव यजिनानुवाददर्शनात्। ततश्चाग्नेयवाक्यं द्व्यवदानहोमवाक्यं चैकवाक्यं सम्पद्यते—अष्टाकपालपुरोडाशप्रकृतिकद्व्यवदानमग्निदेवत्यहोमसाधनम् इति। तुशब्दश्चार्थोऽनुक्तसमुच्चयेऽपि, पुनः पुनरवदाने मध्यात्पूर्वार्धादिति विरोधश्चेति। तस्मान्न सर्वहोमः॥

इतोऽप्येवमित्याह—

## शेषदर्शनात् ॥ ४७ ॥

"शेषात्स्विष्टकृतं यजति" इत्यादिशेषकार्यदर्शनादपि न सर्वहोमः। न च हविरन्तरपरः शेषशब्द इति युक्तम्, शेषशब्दस्योपयुक्तावशिष्टांशविषयां प्रसिद्धिं परित्यज्य अन्यशब्दपर्यायत्वाश्रयणस्यान्याय्यत्वात्। वस्तुतस्तु, वाजसनेयके "अथाय देवो योऽयं पशूनामीष्टे" इत्युपक्रम्य "यावतीभ्यो देवताभ्यो हवींषि गृहीतान्यभवन्सर्वाणि तानि हुतानि, कथमस्मा आहुतिं कल्पयेम" इत्युक्त्वा "स यथापूर्वं हवींष्यभिघारयत्तदेकस्मा अवदानाय पुनराप्याययदयातयामान्यकरोत्तत एकैकमवदानमवाद्यत्" इति स्विष्टकृद्वाक्यशेषे देवतान्तरहुतशिष्टत्वाद्यागान्तरायोग्यत्वाधायकदोषमुद्भाव्य अवत्तप्रदेशप्रत्यभिघारणादयातयामत्वम्, अत स्विष्टकृद्यागार्हत्वमाग्नेयादियागशिष्टहविषामित्येव दृश्यते। तदेतच्छेषशब्दस्योपयुक्तावशिष्टांशपरत्व एव घटते। तस्मादपि न सर्वहोम इति व्याख्येयम्॥

तदेतदधिकरणं भाष्योत्प्रेक्षितं वार्तिके परिष्कृतं दूषितं च। तद्यथा—यत्तावदुक्तमाग्नेयत्वं द्व्यवदाने उपसंहृतमिति तदयुक्तम्,

> 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
> स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भवः'॥

"सप्तदश सामिधेनीरनुब्रूयात्" इत्यनारभ्यवादेन तावत्साप्तदश्यस्य सामिधेनीसम्बन्ध एव स्फुटमवगम्यते न तु क्रतुसम्बन्धः, क्रतूपस्थापकशब्दाभावात्। क्रत्वव्यभिचरितसामिधेनीलिङ्गादेव क्रतूपस्थितिः। तत्र सामिधेनीलिङ्गात्सर्वास्विष्टिपूपस्थितासु साप्तदश्यमनारभ्याधीतं प्रकृतिभूतदर्शपूर्णमासौ प्राप्य पाञ्चदश्यावरुद्धत्वात्ततः परावृत्य सर्वासु विकृतीष्टिषु यावन्निवेष्टुमुद्युङ्क्ते ततः प्रागेव मित्रविन्दादीष्टिषु प्रत्यक्षोपदिष्टं साप्तदश्यं प्रवृत्तं पर्यालोच्य ततोऽपि परावृत्य अनाम्नातसाप्तदश्यासु विकृतीष्टिषु निवेष्टुमुद्युञ्जानं सत् मित्रविन्दादिषु क्वचिदिष्टिषु प्रत्यक्षोपदेशवैयर्थ्यं पर्यालोच्य तत्रैव प्रत्यक्षोपदिष्टसाप्तदश्ये उपसंह्रियते। अनार-

थविनो· सामान्यविशेषभावव्यवहाराभावात् । यच्चोक्तं व्रीह्यादीनां पुरोडाशादिप्रणाडिकयेव पुरोडाशस्यापि द्व्यवदानद्वारा आग्नेयत्वमिति, तद्युक्तम्, अवघातादिना व्रीह्यादिस्वरूपस्याभिषवादिना सोमलतास्वरूपस्य विशसनादिना पशुस्वरूपस्य च विनष्टत्वेन व्रीह्यादीना साक्षाद्यागसाधनत्वासम्भवेन पुरोडाशरसहृदयादीनामेव "आग्नेयोऽष्टाकपाल" "ऐन्द्रवायव गृह्णाति" "हृदयस्याग्रेऽवद्यति" इत्यादिवाक्यान्तरतो यागसाधनत्वावगमात् । प्रणाड्याश्रयणेऽपि प्रकृते साधकबाधकप्रमाणाभावेन प्राणाड्याश्रयणस्यायुक्ततया स्वरसत· साक्षादेवावगतस्य कृत्स्नपुरोडाशदेवतासम्बन्धस्य द्व्यवदानद्वारा आश्रयणायोगात् । अथ "द्व्यवदानं जुहोति" इति वाक्यमेव तत्र प्रमाणमिति चेत्, किमिह वाक्ये अष्टाकपालं जुहोति इति यत् तत् पुरोडाशाद्द्विरवदाय इति विधि ? उत द्व्यवदानं होमेन सस्कुर्यात् इति ? नाद्य·, होमस्याप्राप्तत्वेनानुवादायोगात् । उत्पत्तिवाक्यात्तत्प्राप्तिरिति चेत्—न, तत्राष्टाकपालपुरोडाशेऽग्निदेवतासम्बन्धस्य 'अग्नय इदं न मम' इति त्यागमात्रेण आहवनीये प्रक्षेपात्मकं होमं विनाप्युपपत्ते । अग्नौ प्रक्षेपाभावेऽपि पदहोमादौ देवतासम्बन्धदर्शनेन 'अग्निमुखा वै देवा' इत्यर्थवादतो होमसम्बन्धस्यासिद्धे· । कथञ्चान्यथा "पात्नीवतमुत्सृजेत्" इत्यादौ देवतासम्बन्ध· स्यात्, होमस्यैवाभावात् ? ततश्च "द्विर्हविषोऽवद्यति" इति प्राप्तद्व्यवदान द्वितीयया प्राधान्येन निर्दिश्य तत्संस्कारो विधीयत इति द्वितीय· पक्ष· परिशिष्यते । एवञ्च कथ द्व्यवदानप्रणाड्या पुरोडाशस्याग्नेयत्वसिद्धि ? 'द्व्यवदानं जुहोति' इति वाक्ये द्व्यवदानस्य प्रक्षेपमात्रावगमात्, तस्य चोत्पत्तिवाक्यावगतसमस्तपुरोडाशाग्नेयत्वेनाविरोधात् । तथा हि—उत्पत्तिवाक्ये तावदष्टाकपाल· पुरोडाशोऽग्न्युद्देश्यकस्वत्वत्यागात्मकयागसाधनमित्यवगतम् । तस्य च पुरोडाशस्यावघातपेषणादिना प्रोक्षणादिना च दृष्टादृष्टविधयोत्पादितस्य यत्र क्वचित्प्रदेशे स्थितस्य यागसाधनत्वे प्राप्ते "वेद्या बर्हिषि हवींष्यासादयति' इति प्रदेशविशेषो नियमित । तदेवविधं बर्हिष्यासादित पुरोडाशलक्षण हवि 'अग्नय इद न मम' इति यजमानस्त्यजति । त्यक्तञ्च तद्धवि प्रतिपत्तिमपेक्षते । यजमानश्च स्वत्वत्यागात्तस्मिन्नुदास्ते । एव स्थिते वाक्यान्तराणि श्रूयन्ते "उपस्तृणाति" "द्विर्हविषोऽवद्यति" "अ[illegible]"
"चतुरवत्त जुहोति" "शेषात्स्विष्टकृत यजति" "यजमानपञ्चमा इडा
"ऋत्विजो हवि शेषान् भक्षयन्ति" इति । ततश्चाज्येनोपस्तीर्णाभिघारि
हविषो द्व्यवदानम होतव्यमित्यवगतम । न चेद द्व्यवदानमप्रकृतद्रव्या

प्रक्षेपस्यापि प्राधान्ये सति तस्य विकृतिष्वतिदेशानापत्ते 'कर्मणस्त्वप्रवृत्तत्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्' इत्याष्टमिकाधिकरणे वक्ष्यमाणत्वात्। किञ्च प्रक्षेपस्य प्राधान्येऽग्निहोत्रादिवद्दर्शपूर्णमासादिष्वपि जुहोतिव्यवहार एव स्यात्। तथा च होमस्य यजिविशेषत्वेऽपि यत्र फलवाक्ये यजिश्रवण तत्र प्रक्षेप विहाय केवलयागस्य फलसम्बन्धात्प्राधान्यम्। यत्र तु फलवाक्ये जुहोति श्रूयते तत्र प्रक्षेपांशस्यापि प्राधान्यम्, यथा अग्निहोत्रादौ। प्रकृते तु फलवाक्ये यजिश्रवणादाग्नेयवाक्यावगतयागस्यैव समस्तपुरोडाशद्रव्यकस्य प्राधान्यम्। तदेकदेशद्रव्यवदानस्य तु केवल प्रक्षेप प्रोक्षणादिवत्संस्कारः। इयांस्तु विशेष.—प्रोक्षणादिरुपयोक्ष्यमाणसंस्कार., स्विष्टकृदादिरुपयुक्तसंस्कार. प्रतिपत्त्यपरनामधेय., द्रव्यवदानस्य वषट्काराव्यवहितोत्तरकाले आहवनीये प्रक्षेपस्तूपयुज्यमानसंस्कार इति। केचित्तु वषट्कारानन्तर त्याग, तदव्यवहितोत्तरक्षणे प्रक्षेप. प्रतिपत्तिरुपयुक्तसंस्कार एव, यागप्रक्षेपयोरत्यन्तमव्यवहितत्वात्, त्यागानन्तर प्रक्षेपात्प्राग्द्रव्यवदाननाशस्यासम्भावितत्वान्न पाष्ठाधिकरणविरोध इत्याहु.। तदयुक्तम्, एव सति "वषट्कृते जुहोति" इति प्रक्षेपांशस्य वषट्काराव्यवहितोत्तरकालकत्वावगमविरोधात्, त्यागेन व्यवहितत्वात्, "सह वा वषट्कारेण जुहुयात्" इत्यस्मिन् पक्षे प्रक्षेपस्य वषट्कारसमकालकतया ततः पूर्वमेव यागनिष्पत्तौ "वषट्कारेण देवेभ्योऽन्न दीयते" इति यागस्य वषट्कारसंयोगश्रवणविरोधाच्च। स्मृतिनिबन्धनकृतस्तु केचिदर्वाचीना.—

'अवश्यं तु त्यजेदन्न मनसा वचसापि च।<br>
ततश्च प्रक्षिपेदग्नावेष धर्मः सनातन'॥<br>
अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः।<br>
न स तत्फलमाप्नोति नरकं प्रतिपद्यते'॥

इति जैमिनिस्मृतिवचनमुदाहरन्ति। तदेतद्विज्ञानेश्वरमाधवहेमाद्र्यादिप्राचीननिबन्धनेष्वदर्शनादुपेक्ष्यम्। अस्तु वा तदपि जैमिनिवचन प्रमाणम्, तथापि जुहोतिचोदिताग्निहोत्रादिविषय भविष्यति। तत्र हि जुहोति देवतोद्देशत्यागप्रक्षेपात्मकत्र्यवयवकसमुदाये वर्तते मुख्यवृत्त्या। अन्यत्र तु यजतिचोदिते दर्शपूर्णमासादिकर्मण्युत्पत्तिवाक्यावगतदेवतोद्देशत्यागयो. प्राप्तत्वात् "द्रव्यवदान जुहोति" इति प्रक्षेपमात्रे वर्तते। प्रक्षेपत्यागयोश्च "वषट्कृते जुहोति" "वषट्कारेण देवेभ्योऽन्न दीयते" इति वषट्काराव्यवहितोत्तरकालकत्व प्रत्यक्षश्रुतम्। वषट्कारानन्तरं त्यागस्तदन-

इध्माधानम्, पूर्वाघारः, प्रवरः, उत्तराघारः, प्रयाजाः, आज्यभागौ, 'अग्नय इद न मम' इति याजमानस्त्यागः, 'अग्नयेऽनुब्रूहि' इति सम्प्रैषः, पुरोनुवाक्यावचनम्, उपस्तरणम्, द्विरवदानम्, अभिघारणम्, दक्षिणातिक्रमणम्, आश्रावणम्, प्रत्याश्रावणम्, 'अग्निं यज' इति सम्प्रैषः, याज्यावचनम्, तदन्ते वषट्कारः, वषट्कृते द्रव्यवदानस्याहवनीये प्रक्षेप इति क्रमः । यद्याज्यभागानन्तरमेव यागः स्यात्, तदनन्तरं चोपस्तरणादिविधिना द्रव्यवदानस्य केवलः प्रक्षेपः स्यात्, तर्हि प्रक्षेपस्य तस्य यागत्वाभावाद्याज्यासम्बन्धो वषट्कारसम्बन्धश्चानुपपन्नः स्यात् । वाजसनेयके "अनया यजतीति हि याज्या वषट्कारे हि देवेभ्योऽन्नं दीयते" इति याज्यावषट्कारसाध्यत्वश्रवणञ्च यागस्य विरुध्येत, ततः प्रागेव यागस्य निष्पन्नत्वात् । तस्माद्यागः प्रधानम्, होमस्तु केवलः प्रक्षेपात्मकः प्रतिपत्तिरिति न युज्यते इति दूषयित्वा अथवेत्यादिना पक्षान्तरमप्युत्प्रेक्षितं वार्त्तिके ।

तद्यथा—देवतोद्देश्यकद्रव्यत्यागो यागः, स एव च प्रक्षिप्यमाणद्रव्यविषयको होमः । स च यागान्नातिरिच्यते, प्रक्षेपांशाधिक्यमात्रेण यागस्याविघातात् । न ह्यङ्गुल्यन्तरोपजनने सति देवदत्तो न मनुष्यो भवति । तथा च देवतोद्देश्यकद्रव्यत्यागत्वं यागस्य सामान्यरूपम् । देवतोद्देश्यकप्रक्षिप्यमाणद्रव्यविषयकत्वात्मकहोमत्वञ्च तस्य विशेषरूपमिति द्व्याकारो यागः । तत्र "आग्नेयोऽष्टाकपालो भवति" इति सामान्यरूपापन्नयागसाधनत्वं पुरोडाशस्यावगतम् । 'द्व्यवदानं जुहोति' इति तु तदवयवस्य द्व्यवदानस्य विशेषरूपापन्नतत्साधनत्वमवगतम् । तत्र वषट्कारोत्तरकाले यजमानेन समस्तपुरोडाशोऽग्नये त्यक्तव्यः । तस्मिन्नेव क्षणे द्व्यवदानमध्वर्युणा प्रक्षेप्तव्यम् । एवञ्च द्व्याकारोऽयं यागः समस्तपुरोडाशेन युगपदेकस्मिन्क्षणे कृतो भवति । उभाभ्यामेव च वाक्याभ्यामुत्पन्नस्य द्व्याकारस्य यागस्य "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलसम्बन्धात्प्राधान्यम् । नापि याज्यावषट्कारसंयोगविरोधः, तदनन्तरमेव यागनिष्पत्तेः । त्यागप्रक्षेपयोरेककालतया प्रक्षेपात्प्राग्यागस्यानिष्पत्तिनियमेन तदा द्रव्यनाशे सति प्रक्षेपार्थतया द्रव्यप्रयुक्त्यभावेऽपि त्यागार्थतया द्रव्यप्रयुक्त्यवश्यम्भावान्न षाष्ठाधिकरणविरोधः । अमुमपि द्वितीयपक्षं प्रतिक्षिप्य तृतीयपक्ष उपक्षिप्तो वार्त्तिके—

यथा—सत्यं याज्यावषट्कारोत्तरकालमेव यागनिष्पत्तिरिति । किन्तु द्व्याकारो याग इति कृत्वा प्रक्षेपांशस्यापि प्राधान्यकोटौ निवेश इत्येतत्तु न मृष्यामहे ।

'यागहोमावभेदेन यैर्मोहात्परिकल्पितौ ।
तेषामपरिहार्यत्वं भेदे त्वेषोऽभिधीयते' ॥

इति कारिकाव्याख्यावसरे 'तयोस्तु यागहोमयोर्भेदः शब्दान्तराधिकरणन्यायसिद्धः' । 'जुहोतिरासेचनाधिकः स्यात्' इति सूत्रकारेणोच्यमानमपि तयोर्भेदं तत्रैव समर्थयिष्यामहे । यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागः, देवतोद्दिश्य त्यज्यमानस्वत्वकद्रव्यप्रक्षेपो जुहोति' इत्यादि प्रपञ्चितम् । तस्मात्सर्वत्र त्यागप्रक्षेपयोः समानकालकत्वमित्यास्तां तावत्प्रसक्तानुप्रसक्तम् । तदेव कृत्स्न एव पुरोडाशो यागसाधनम् । तदवयवद्व्यवदानस्याहवनीये प्रक्षेपस्तु त्यज्यमानपुरोडाशसंस्कार इति वार्तिकनिष्कर्षः ।

वस्तुतस्तु भाष्यरीत्या द्व्यवदानप्रणाड्यैव पुरोडाशस्याग्नेयत्वं युक्तमाश्रयितुम् । तथा हि यथा पशुशब्दः सोमशब्दश्च विशसनाभिषवाभ्यां पश्वाकृतेः सोमलताकृतेश्च भङ्गात्तदवयवपरः, तथात्रापि पुरोडाशशब्दः मध्यात्पूर्वार्धाच्च द्विरवदानतः पुरोडाशाकृतेर्भङ्गात्तदवयवद्व्यवदानपरः । अवयवसामान्यावच्छेदेनावगम्यमानोऽपि देवतासम्बन्धस्तावत् 'अङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि' 'ज्यायांसि सौविष्टकृतानि' इत्यादिवाक्यान्तरगततद्धितान्तदैवतशब्देन द्व्यवदानस्य देवतासम्बन्धानुवादमहिम्ना तन्मात्रविषये विश्राम्यति । अत एव च 'शेषात्स्विष्टकृतं यजति' इत्युपपद्यते । अन्यथा कृत्स्नस्य पुरोडाशस्याग्नये त्यक्तत्वेन तदेकदेशस्य स्विष्टकृते पुनस्त्यागासम्भवात् । अथाग्नये त्यक्तस्यापि पुरोडाशस्यैकदेशमग्नेः सकाशात्स्वीकृत्य स्विष्टकृते त्यागसम्भव इति चेत्—शिष्यदन्धनमेतत् । उक्तरीत्या द्व्यवदानमात्रस्याग्नेययागसाधनत्वाश्रयणेन स्विष्टकृद्विधेः सामञ्जस्ये सति त्यक्तपुनःस्वीकारकल्पनस्याश्रयणायोगात् । किञ्च 'व्रीहिभिर्यक्ष्ये' इति सङ्कल्प्य प्रक्रान्ते प्रयोगे यदि द्व्यवदानपर्याप्तमात्रा व्रीहयो लभ्यन्ते, नीवारास्तु शेषकार्येभ्योऽपि पर्याप्ता लभ्यन्ते, तदा व्रीहिकार्यस्याग्नेययागस्य प्रधानस्य द्व्यवदानत एव सम्भवादङ्गभूतस्विष्टकृदादिकार्यानुरोधेन प्रधानगुणस्य व्रीहित्वस्य बाधितुमशक्यत्वात् न नीवाराः प्रतिनिधातव्याः, किन्तु व्रीहिभिरेव कथञ्चिद्द्व्यवदानपर्याप्तं पुरोडाशमुत्पाद्य ततः प्रधानमात्रं कर्तव्यम्, स्विष्टकृदाद्यङ्गकार्याणि तु नावर्तव्यानीति षष्ठस्य तृतीये 'विधिरप्येकदेशे स्यात्' 'अपि वार्थस्य शक्यत्वादेकदेशेन निर्वर्तेतार्थानामविभक्तत्वाद्गुणमात्रमितरत्तदर्थत्वात्' इत्यधिकरणे व्यवस्थापयिष्यते ।

न्तरं च प्रक्षेप इति स्मार्तक्रमे च तद्विरोधः । वषट्कारेण सह जुहुयादित्यस्मिन् पक्षे वषट्कारात्प्रागेव त्यागापत्तौ "वषट्कारेण देवेभ्योऽन्नं दीयते" इति श्रुतिविरोधश्च । ततश्च श्रुतिविरुद्धाया जैमिनिस्मृतेरस्या अग्निहोत्रादिजुहोतिचोदितकर्मविषयत्वमेव युक्तमाश्रयितुम् । तत्र हि "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति जुहोति" इति त्र्यंशहोमम् "अग्निहोत्रं जुहोति" इत्युत्पत्तिवाक्यप्राप्तमनूद्य मन्त्रविधिः । प्रक्षेपशिरस्को याग एव च होमः । [1]तथा च स्वाहान्ते यजमानेन त्यक्तव्यम्, तदुत्तरक्षणेऽध्वर्युणा प्रक्षेप्तव्यमिति लभ्यते । अमुमेव वेदसिद्धमर्थमुदाहृतजैमिनिस्मृतिरुपोद्बलयतीति न विरोधः । ततश्च यजतिचोदितदर्शपूर्णमासादिकर्मसु वषट्कृते "अग्नय इदं न मम" इति समस्तपुरोडाशो यजमानेन देवताय त्यक्तव्यः । याग एव च प्रधानम् । तस्मिन्नेव च क्षणे तदीयद्रव्यवदानमध्वर्युः प्रक्षेपेण संस्करोति । जुहोतिचोदितेषु त्वग्निहोत्रादिषु "अग्निहोत्रं जुहोति" इत्युत्पत्तिवाक्येऽग्निहोत्रस्थालीस्थकृत्स्नद्रव्यस्य देवतासम्बन्धानवगमाद्यावदग्नौ प्रक्षेप्तव्यं स्वाहान्ते तावदेव प्रक्षेपात्प्राग्यजमानेन देवतायै त्यक्तव्यम्, तदव्यवहितोत्तरक्षण एव चाध्वर्युणा प्रक्षेप्तव्यम्, प्रक्षेपशिरस्कयागस्य होमशब्दार्थत्वाद् इति फलति । अधिकरणन्तु यजतिजुहोत्योः पर्यायत्वमभ्युपगम्य प्रवर्तितमिति स्थितम् ।

वस्तुतस्तु जुहोतिचोदितेष्वपि त्यागप्रक्षेपयोः समकालकत्वमेव मन्यामहे । उत्पत्तिवाक्ये हि जुहोतीति त्र्यंशो होमोऽवगतः । त्यागानन्तरं प्रक्षेप इत्येतत्तु नावगतम् । सूत्रकारोऽपि चतुर्थे 'जुहोतिरासेचनाधिकः स्यात्' इत्येव तल्लक्षणं वक्ष्यति । प्रक्षेपांशस्याधिक्यञ्च यागतत्पूर्वोत्तरतरक्षणेषु यथाकथञ्चित्साहित्यमात्रेणोपपद्यते । तत्र "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति जुहोति" इति होमकरणत्वं मन्त्रस्यावगम्यमानं समाख्याबलात् यागांशस्य च याजमानत्वात् अध्वर्युकर्तृकप्रक्षेपांशं प्रति करणत्वे विश्राम्यतीति स्वाहान्ते प्रक्षेपः सिद्धः । "स्वाहाकारेण देवेभ्योऽन्नं दीयते" इति श्रवणाद्यागांशोऽपि स्वाहान्तेऽवगतः । ततश्च जुहोतिचोदितेष्वपि त्यागप्रक्षेपयोः स्वाहान्ते युगपत्प्रयोगस्य प्रत्यक्षश्रवणात् तदनुसारेणोदाहृतस्मृतिवचने तत इति सार्वविभक्तिकतसिप्रत्ययमाश्रित्य 'यदा त्यजेत्तदा अग्नौ प्रक्षिपेत्' इति व्याख्येयम् । 'अत्यक्त्वा जुहुयात्' इत्यत्रापि समानकर्तृकत्वमिव पूर्वकालकत्वमपि 'मुखं व्यादाय स्वपिति' इतिवदविवक्षितम् । अत एव वार्त्तिके—

---

1. ततश्च क.

कुत आभासता ? शेषस्य गुणभूतत्वात्—हविःशेषस्य कृतकार्यतया संस्कारानवसरलक्षणं गुण प्राप्तत्वात्। अकृतकार्यमेव द्रव्यं सस्कारमपेक्षते। कार्यार्थमेव द्रव्येण संस्कारस्याकाङ्क्षितत्वात्। प्रकृते च कार्यस्य यागस्य निर्वृत्ततया तदानीमेव विनष्टतया च तदुत्तरकालं द्रव्यसस्काराणामनवसर इति प्रधानकर्मत्वमेवैषामुचितम्। तेषु च हवि शेषस्य साधनत्वेन गुणभूततया न तदनुरोधेनैषामावृत्ति प्रतिहवि शेषमित्येव चातुर्थिकन्यायोपमर्देन पूर्वः पक्ष ॥

इतोऽप्येवमित्याह –

**संस्कृतत्वाच्च ॥ ४९ ॥**

स्विष्टकृदादिभिर्हि हविःशेषेष्वदृष्ट एव सस्कार उपजन्यते। स चादृष्टसंस्कार एकद्रव्यनिष्पादितैरेव स्विष्टकृदादिभि सर्वेषु सिध्यति। अतोऽप्येकस्माद्देव शेषकार्याणि ॥

अथ सिद्धान्तयति—

**सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥**

वाशब्द एवार्थे। सर्वेभ्य एव हवि शेषेभ्य स्विष्टकृदादीनि क्रियेरन् नैकस्मादेव। कुत ? कारणाविशेषात्—'उत्पत्तौ येन संयुक्तम्' इति चतुर्थे वक्ष्यमाणस्य प्रतिपत्तिकर्मत्वकारणस्य कृतकार्यकरत्वस्य सर्वेष्वपि हवि.शेषेष्वविशेषात्। कृतकार्यमपि हि द्रव्यं सकीर्णकरतया स्थलरिक्तीकरणायान्यत्रापनयात्मिकां प्रतिपत्तिमपेक्षते। अपेक्षितविधान च न्याय इति हवि.शेषसयुक्तस्विष्टकृदादिवाक्यानि प्रतिपत्तिविधय इति तत्र वक्ष्यते। यच्चोक्त निष्पन्ने कार्ये सस्काराणामनवसर इति तत्राह—सस्कारस्य तदर्थत्वादिति। निष्पन्नेषु विनष्टेषु च प्रधानेषु तदीयानामेव सतां हवि शेषाणा का प्रतिपत्तिरित्यपेक्षाया प्रतिपत्तिनियमो विधातु शक्यते ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ५१ ॥**

"सकृत्सकृदवद्यति" इति सौविष्टकृतावदानवीप्सा सर्वेभ्यो हवि शेषेभ्य [1]स्विष्टकृतं तस्य च सस्कारकर्मत्व गमयति। अतोऽपि सर्वेभ्य. शेषकार्याणि ॥

इत्यष्टादश सर्वहविर्भि. स्विष्टकृदनुष्ठानाधिकरणम् ॥ १८ ॥

1. स्विष्टकृदादिक क, ग, घ, मु पा.

तदेतत्कृत्स्नस्य पुरोडाशस्याश्वशफमात्रपरिमाणस्य यागसाधनत्वे विरुध्येत। अतो द्रव्यवदानस्यैव यागसाधनत्वमिति भाष्यमेव समञ्जसमिति प्रतीमः। यजतिजुहोत्यो पर्यायत्व चाभ्युपेत्याधिकरण भाष्ये प्रवर्तितमिति स्थितम्। नन्वेवमपि वषट्कृते यजमानेन द्रव्यवदाने देवतार्थे त्यज्यमाने यद्यध्वर्यु. प्रमादात्प्रक्षेप विलम्ब्य कुर्यात्, तत्र च प्रक्षेपात्प्राग्यागानन्तर द्रव्यवदान नश्येत्, तदा हविरन्तर नोत्पादयितव्यं स्यात्, यागस्य प्रधानस्य निर्वृत्तत्वात् प्रक्षेपस्य चोपयुज्यमानसंस्कारतयाङ्गत्वेन हविरन्तरप्रयोजकत्वाभावात् इति चेत्—तुल्यमेतत्कृत्स्नस्य पुरोडाशस्य यागसाधनत्वेऽपि। तत्त्वन्तु "न हि देवा अहुतस्याश्नन्ति" इति वाक्यशेषबलेन प्रक्षेपसस्कारस्याङ्गभूतस्यापि हविरन्तरप्रयोजकत्व विज्ञायते, "उपरि हि देवेभ्यो धारयति" इतिवदस्यापि वाक्यशेपस्य स्वार्थपरत्वोपपत्ते। एतदेवाभिप्रेत्य वार्तिके 'प्राक्प्रक्षेपादनिर्वृत्तयागावगमान्नाशादिष्वन्यद्द्रव्यमागमयितव्यम्' इति। तदेतत्सङ्कर्षकाण्डे द्वितीयस्य चतुर्थे 'देवतासयोगेन चोद्यमाने प्रदान आहुतिर्यथा लोके' इत्यत्र प्रपञ्चयिष्यत इति सक्षेप ॥

इति सप्तदशं सर्वप्रदानाधिकरणम् ॥ १७ ॥

१८

हवि शेषकार्याणि स्विष्टकृदिडाचतुर्धाकरणादीनि किमेकस्मादेव हवि शेषात्कर्तव्यानि ? उत सर्वेभ्यः ? इति सशये, पूर्वपक्षयति—

**अप्रयोजकत्वादेकस्मात्क्रियेरञ्छेषस्य गुणभूतत्वात् ॥ ४८ ॥**

एकस्मादेव हवि शेषात्स्विष्टकृदादिकार्याणि[1] क्रियेरन्। कुतः ? अप्रयोजकत्वात्। स्विष्टकृदादिकार्याणा प्रतिहवि शेषमावृत्तिप्रयोजकत्वाभावात्। कुत. ? शेषस्य गुणभूतत्वात्—हवि शेषस्य स्विष्टकृदादिकार्येषु साधनतया गुणभावात्। गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्। ननु चतुर्थस्य द्वितीये 'उत्पत्तौ येन सयुक्तम्' इत्यधिकरणे स्विष्टकृदादीना प्रतिपत्तिरूपसस्कारकर्मत्व व्यवस्थापयिष्यते, तथा च सस्कार्यहवि.शेषलक्षणप्रधानानुसारेण प्रतिहवि शेषं तदावृत्तिरुचितेति शङ्कायामपि एतदेव सूत्रमुत्तरम्। एकस्मादेव हवि शेषात्स्विष्टकृदादिकार्याणि क्रियेरन्। कुत ? चातुर्थिकन्यायस्याभासतया प्रतिहवि शेष तदावृत्तौ प्रयोजकत्वाभावात्।

1 स्विष्टकृदिडादि क, घ

दानं श्रुतम्। किमिदमानत्यर्थं सत् ऋत्विक्संस्कारार्थम्? उत भक्षणार्थम्? इति संशये, पूर्वपक्षयति—

## भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ५४ ॥

'आदधाति' 'परिहरति' इति च योऽयं दानपर शब्द स परिक्रये परिक्रयणफलके समर्पणे प्रत्येतव्यः। कुत.? भक्षाश्रवणात्। यद्यपि परिक्रयोऽपि न श्रुत:, तथापि कर्मकरेभ्यो दानस्यान्वाहार्यादिदक्षिणादानवत्परिक्रयश्रुतिमन्तरेणापि तदर्थता लभ्यते। यथेष्टविनियोगार्हद्रव्यलाभफलकस्य कर्मकरेभ्यो दानस्य भक्षणनियमे विरोधात्। न च पुरोडाशभागानामल्पाना कथमृत्विगानत्यर्थत्वमिति वाच्यम्। ऋतुपेये सोमचमसवदल्पानतिकरत्वेऽपि तदुपपत्ते.। तस्मात्परिक्रयार्थमेव भागदानमिति ॥

इतोऽप्येवमित्याह—

## तत्संस्तव ॥ ५५ ॥

"दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते, यत्पुरोडाशं बर्हिषद करोति" इति दक्षिणात्वसस्तवादपि परिक्रयार्थत्वमेव लभ्यते ॥

अथ सिद्धान्तयति—

## भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥

वाशब्द एवार्थे। भक्षणार्थ एवायं भागदानविधि'। कुत.? द्रव्ये समत्वात् हवि'शेषलक्षणे द्रव्ये ऋत्विजां यजमानस्य च स्वामित्वाभावस्य तुल्यत्वात्। सकलहविषि देवतायै त्यक्ते सति तत्रानीशानो यजमान' ऋत्विग्भिस्तुल्य' सन् तदेकदेशै' कथमृत्विज' परिक्रेतुं प्रभवेत्। तथा च भक्षणाश्रवणेऽपि अदनीयद्रव्यत्वेन योग्यतया भक्षणार्थत्वमेव युक्तमाश्रयितुम्। यद्यपि भाष्यमते द्रव्यदानमात्रस्य देवतायै त्यक्तत्वेन तदवशिष्टांशे यजमानस्य स्वामित्वसम्भव:, तथापि तन्मते सूत्रमन्यथा योज्यम्। तद्यथा—हवि शेषस्य प्रतिपत्त्यपेक्षस्यादनीयत्वेन योग्यतया भक्षणमेव प्रतिपत्तिरित्यवगतम्। भक्षणे च कर्तृविशेषापेक्षाया ब्रह्मादयो नियम्यन्ते। तथा च भक्षाय दानविधौ कर्तृनियममात्रमिति लाघवम्। परिक्रयार्थत्वे तु अन्वाहार्यदक्षिणया ऋत्विजामानतत्वात्तया सह समुच्चयेन विकल्पेन वा भागदानविध्यापत्तेर्गौरवम्। एवञ्च

१९

एकस्मादेव हविःशेषात्स्विष्टकृदादिकार्याणीत्यभ्युपगम्य चिन्त्यते—किं यस्मात्कस्माच्चिदेकस्मात्? उत प्रथमात्? इति। तत्र पूर्वपक्षयति—

**एकस्माच्चेद्याथाकाम्यमविशेषात् ॥ ५२ ॥**

यद्येकस्माच्छेषकार्याणि तदा यथाकाम्यं यथेच्छम्, यस्मात्कस्माच्चिदित्यनियम इति यावत्। कुतः? अविशेषात्। न च प्राथम्यादाग्नेयादेव शेषकार्याणीति वाच्यम्। आग्नेययागोपस्थितिदशायां सर्वप्रधानयागोत्तरविहितशेषकार्योपस्थित्यभावात्। तदुपस्थितिवेलायाञ्च शेषशब्देन सकृच्छ्रुतेन तन्त्राभिधानशक्त्या "यजेत स्वर्गकामः" इति यजिना यागानामिव सर्वेषां हविःशेषाणां युगपदुपस्थितेः। अत एकस्माद्यस्मात्कस्माच्चिदिति प्राप्ते, सिद्धान्तयति—

**मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥**

वाशब्दोऽवधारणे। मुख्यात् प्रथमादेव हविःशेषात् स्विष्टकृदादीनि भवन्ति। कुतः? पूर्वकालत्वात्—शेषकार्योपस्थितेः प्रथमकालत्वात्। "शेषात्स्विष्टकृतं यजति" इत्यादौ शेषशब्देन प्रधानहविःशेषाणामेव परामर्शो वक्तव्यः, अन्यथातिप्रसङ्गात्। प्रधानानाञ्च शेषकार्योपस्थितिवेलाया न यजिनोपस्थितिरस्ति, येन 'यजेत स्वर्गकामः' इति यजिना यागानामिव युगपदुपस्थितिः स्यात्। किन्तु प्रकरणवशादेव तदुपस्थितिः। प्रकरणे च यदाग्नेयादिवाक्यैः क्रमेणोत्पन्नाना प्रधानाना शेषकार्योपस्थितिवेलायामपि तथैवानुसन्धानात्तदनुसारेण प्रथमहविःशेषादेव शेषकार्याणां प्रथममनुष्ठाने सति तेनैव नैराकाङ्क्ष्यादन्येतरेभ्यः शेषकार्याणि। तदनेन न्यायेन "पुरोडाशकपालेन तुषानुपवपति" इति पुरोडाशद्रव्यानुनिष्पादितुषोपवाप पूर्वपक्षे येनकेनचित्कपालेन कार्यः, सिद्धान्ते तु प्रथमोपधेयकपालेनेति फलति। सङ्गतिलोभेन तु हविःशेषविषया सूत्रप्रवृत्तिरिति दिक् ॥

इत्येकोनविंशं स्विष्टकृति कृत्वाचिन्ताधिकरणम् ॥ १९ ॥

२०

दर्शपूर्णमासयोराग्नेयपुरोडाशस्य चतुर्धाकृतस्य 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति व्यादिष्टस्य "अग्नीधे प्रथमायादधाति" "वेदेन ब्रह्मणे ब्रह्मभागं परिहरति" "अथ काममन्येन" "ततो होत्रे" "अथाध्वर्यवे" इति भाग-

# पञ्चमः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

चतुर्थपादान्त उपक्षिप्तो हविश्शेषकार्यविचारः। स एव च पञ्चमे पादे विस्तरेणाभिधीयते। स्विष्टकृदादिशेषकार्याणि किमुपांशुयाजद्रव्यादाज्यादपि भवन्ति? उत न? इति संशये पूर्वपक्षयति—

## आज्याच्च सर्वसंयोगात् ॥ १ ॥

आज्यादपि शेषकार्याणि विद्यन्ते। कुतः? सर्वसंयोगात्—'सर्वेभ्यो वा कारणाविशेषात्' इत्यनुपदमेव सर्वहविषा शेषकार्यसंयोगस्य व्यवस्थापितत्वात् ॥

इतोऽप्येवमित्याह—

## कारणाच्च ॥ २ ॥

"देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति। वृणीष्वेत्यब्रुवन् सोऽब्रवीदुत्तरार्धादेव मह्य सकृत्सकृत् समवद्यतेति" इत्यादिवाक्यशेषे आग्नेयादिहविष्षु स्विष्टकृतो भागप्राप्तेः तत्तद्देवतायै तत्तद्धविर्वहनं कारणमुपन्यस्तम्। अतोऽपि भवत्याज्यादपि स्विष्टकृत्। तत्सामान्यादितराण्यपि शेषकार्याण्याज्यस्य भवन्ति।

इतोप्येवमित्याह—

## एकस्मिन् समवत्तशब्दात् ॥ ३ ॥

ज्योतिष्टोमे प्रायणीयेष्टौ "आज्यस्यैताश्चतस्रो देवता यजति पथ्यां स्वस्ति पुरस्तादग्निं दक्षिणतस्सोमं पश्चात्सवितारमुत्तरतो मध्येऽदितिञ्चरुणा इति पञ्च यागास्सन्ति। तत्रेदं कश्चिच्छाखाया श्रुतम्—"अग्नये स्विष्टकृते समवद्यति" इति। समित्येकत्र सम्मेलने। एकत्र सम्मेलयन्नवद्यतीत्यर्थः। तत्राग्नेयविकारत्वाच्चरो-

द्रव्ये हवि शेषे परिक्रयफलकसमर्पणविधेर्भक्षणार्थतद्विध्यपेक्षया असमत्वात्—विषम-त्वात् गुरुत्वात् भक्षार्थं एव भागदानविधिरिति युक्तम् । अथ 'तत्संस्तवाच्च' इत्यत्राह—

**व्यादेशाद्दानसंस्तुतिः ॥ ५७ ॥**

'अथ ते भाग'' इति विभज्य निर्देशो व्यादेश । स तावत्सौमिकदक्षिणादाने इह च भागसमर्पणेऽस्ति । तत्सौम्यादिदक्षिणादानत्वसस्तव अर्थवाद । अत एव 'यथैवाद. सौम्येऽप्यध्वरे आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते तादृगेव तत्' इति चतुर्धाकृतभागसमर्पणस्य दक्षिणादानसाम्यवाद सङ्गच्छते । अत एव च 'पृथिव्यै भागोऽसीति होता भक्षयति'' 'अन्तरिक्षस्य भागोऽसीत्यध्वर्यु:' 'दिवो भागोऽसीति ब्रह्मा' इति भक्षण नित्यवदनूद्य मन्त्रविधय सङ्गच्छन्ते । अतो भक्षार्थता न तु परिक्रयार्थता । प्रयोजनं पूर्वपक्षे 'दक्षिणा प्रतिग्रहीष्यत्सप्तदशकृत्वोऽपान्यात्' इति विधिना प्रतिग्रह. यथेष्टविनियोगश्च । सिद्धान्ते तु न विधिवत्प्रतिग्रहः भक्षणनि-यमश्चेति सिद्धम् ॥

इति विश पुरोडाशविभागाधिकरणम् ॥ २० ॥

इति तृतीयाध्यायस्य चतुर्थः पादः ॥



त्व सम्भवति। तदुत्तरभाव्यग्नीषोमीयपुरोडाशोपस्तरणाभिघारणादिकार्यान्तरानिष्पत्त्या कृतप्रयोजनत्वाभावात्। कृतकार्यमेव हि द्रव्य शेषव्यपदेशमर्हति। न चोपस्तरणादिभाविकार्यार्थस्यापि सत उपांशुयाजशेषत्वमविरुद्धमेव, तदंशेऽकृतकार्यत्वादिति वाच्यम्, साधारणद्रव्यस्य सर्वकार्यनिष्पत्ते प्राक् शेषव्यपदेशाभावात्। न हि बहूनामतिथीनामेकस्मिन् पात्रे पक्वस्यौदनस्यैकस्मिन् भागे प्रथमभ्यागताय समर्पिते सति तदतिरिक्तभागानां तच्छेषत्वव्यपदेशोऽस्ति ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते सिद्धान्ती च प्रत्याचष्टे—

**अवत्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥**

अवत्तत्वाच्च जुह्वामिति सूत्रभाग प्रत्यवस्थानपर। चकारस्तुकारस्थाने द्रष्टव्यः। तदुत्तरभागस्तु तत्प्रत्याख्यानपर। ध्रौवाज्य साधारणमस्तु, तथाप्युपांशुयाजार्थतया ध्रुवातो यज्जुह्वां गृहीतमाज्यं तदेकदेशेनोपांशुयाजहोमे कृते सति तदितरांशेन शेषो भवत्येव। तस्य जुहूस्थस्याज्यस्य केवलोपांशुयाजार्थतया चतुरवत्तत्वात्। तत्रोत्तरम्—तस्य च होमसयोगादिति। चतुरवत्तस्यापि तस्य—जुहूस्थाज्यस्य कृत्स्नस्यैव होमसयोगात्, "चतुरवत्त जुहोति" इति विधानात् ॥

अत्राशङ्क्य परिहरति—

**चमसवदिति चेन्न चोदनाविरोधाद्धविः प्रकल्पनत्वाच्च ॥ ८ ॥**

यथा चमसेषून्नीतस्य सोमस्य होमसयोगे सत्यपि शेषो विद्यते तथोपांशुयाजार्थचतुरवत्तस्यापि होमशेषो भविष्यतीति चेत्—तन्न, कुत ? चोदनाविरोधात्—चमसेषून्नीतस्य सोमस्य निश्शेष होमे सति "असर्वहुत जुहोति" इत्यादिविधिविरोधादस्ति चमसेषु हुतशेष। इह तु चतुरवत्तस्याज्यस्याशेषहोमे न किञ्चिद्बाधकमस्ति। नापि सशेषहोमे किञ्चित्प्रमाणमस्ति। "शेषात्स्विष्टकृतम्" इत्यस्य पुरोडाशादिविषयतयैवोपपत्ते, प्रत्युत "चतुरवत्त जुहोति" इति द्वितीयया चतुरवत्तहोमसस्कार्यमवगतम्। तत्र यावतोंऽशस्य होमो न भवति तावतस्सस्कारलोप प्रसज्यत इति कृत्स्नस्यैव चतुरवत्तस्य होम उचित। चमसेषु तून्नीतस्सोमो नैव होमसयुक्त श्रुतः, उन्नीत सोमञ्जुहोतीति विध्यदर्शनात। प्रत्युत "चमसेषून्नयति" इति होमासयुक्तमेवोन्नयनं श्रुतम्। तच्च प्रधानयागाभ्याससिध्यर्थतया हवि प्रकल्पनमात्र सम्पद्यते। तस्य होमसयोगस्तु भक्षसहभावेन श्रूयते—"हुत्वा प्रत्यञ्च परेत्य सदसि भक्षयन्ति" इति। तथा च चमसेषून्नीतस्य सोमस्य

रस्ति चोदकत स्विष्टकृत्। आज्यहविपस्तु यागा उपांशुयाजविकारा। यदि प्रकृतावुपांशुयाजस्य स्विष्टकृन्न स्यात् तदा विकृतावस्यामिष्टौ आज्ययागाना न चोदकतः स्विष्टकृत्प्राप्तिरस्ति। ततश्च समवद्यतीति नोपपद्यते। यदि तु प्रकृतावुपांशुयाजस्यास्ति स्विष्टकृत् तदा विकृतावत्राज्यहविपां यागानामाज्याना स्विष्टकृदस्तीति तदर्थावदानसत्त्वात्समवदानानुवाद उपपद्यते। अतोऽपि लिङ्गात्प्रकृताज्यादपि स्विष्टकृत्। तत्सामान्यादन्यान्यपि शेषकार्याण्याज्यस्य भवन्ति। सूत्रे समवत्तेति भावे क्त। समवादानप्रतिपादकात् समवद्यतीति शब्दादित्यर्थः।

इतोऽप्येवमित्याह—

**आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥**

आज्येऽपि स्विष्टकृत्प्रापकार्थवादो दृश्यते—"अवदायावदाय ध्रुवा प्रत्यभिघारयति स्विष्टकृतेऽवदाय न प्रत्यभिघारयति, न हि ततः परामाहुतिं यक्ष्यन् भवति" इति। ध्रुवाज्यादवदाय ध्रुवा प्रति अभिघारयति। पुन पूरयति। अन्यथा ध्रुवाया रिक्तत्वप्रसङ्गात्। स्विष्टकृते तु ध्रुवातोऽवदाय ता न प्रत्यभिघारयति। हि यत, ततः परा तदुत्तरकालकामाहुतिं ध्रुवातोऽवदाय न करिष्यन् भवतीत्यर्थः। अत्र स्विष्टकृतेऽवदायेति स्विष्टकृदर्थमाज्यावदानानुवादादपि लिङ्गादाज्यादपि स्विष्टकृत्॥

अथ सिद्धान्तयति—

**अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ५ ॥**

तुरवधारणे। आज्यादपि शेषकार्यमिति यदुक्त तन्नैव स्यात्। कुत? अशेषत्वात्—ध्रुवाज्यस्य उपांशुयाजशेषत्वाभावात्। अशेषत्वमपि कुत.? [1]सर्वादानादशेषता। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति ध्रुवायामाज्यस्य सर्वयज्ञार्थतया आदानात् ग्रहणाच्च ध्रौवाज्यस्योपांशयाजशेषता॥

ननु तथाप्युपांशुयाजार्थचतुरवत्तशेषत्व ध्रुवाज्यस्य सम्भवत्येवेत्यत आह—

**साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥**

ध्रुवाया यदाज्य तस्य नोपांशुयाजार्थचतुरवत्तशेषता स्यात्। कुत? साधारण्यात्—ध्रौवाज्यस्य सर्वयज्ञार्थत्वात्। न हि सर्वयज्ञार्थस्य तस्योपांशुयाजशेष-

1 सर्वदानात्, क.

तत्रेदं श्रुतम्—"आज्यभागाभ्यामाग्नेयेन च पुरोडाशेन प्रचर्याग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरतिक्रामन्नाह—इन्द्रायानुब्रूहि आश्रावयेन्द्रं यजेति सम्प्रैषौ" इति। तत्र स्विष्टकृदादिकार्यशेषकार्याणि सन्ति न वा? इति संशय। तत्रोपांशुयाजस्य शेषाभावात्स्विष्टकृदाद्यभावेऽपि प्रकृते शेषसत्त्वादिति तत्कार्यम्। न च "सहकुम्भीभिरतिक्रामन्" इत्यपरेणाहवनीय कुम्भीभिस्सह होमदेश गत्वा दक्षिणातिक्रमणस्य दृष्टार्थत्वाय तद्गतदोहानामशेषाणामेव होमस्य वक्तव्यतया कथमिह शेषकार्यमिति वाच्यम्, दक्षिणातिक्रमणानन्तर यथाप्रकृति जुह्वामवदाय तया होमे सति कुम्भीसाहित्यदृष्टार्थोपपत्तेरिति प्राप्ते सिद्धान्तयति—

## साकम्प्रस्थायीये स्विष्टकृदिडञ्च तद्वत् ॥ १२ ॥

साकम्प्रस्थायीयेऽपि तद्वत्—उपांशुयाजवत् शेषाभावान्न दोहानां स्विष्टकृदादिशेषकार्यम्। इह हि कुम्भीसाहित्यविशिष्टमतिक्रमणं प्राकृताद्धोमार्थातिक्रमणादन्यदपूर्वं न विधेयम्, अदृष्टार्थत्वप्रसङ्गात् विशिष्टविधिगौरवाच्च। किन्तु प्राकृत एव होमार्थातिक्रमणे कुम्भीसाहित्यमात्र विधेयम्। अतिक्रमस्य च प्राकृतस्य जुह्वा साहित्यादिहापि कुम्भीसाहित्ये विधीयमाने कुम्भीनां प्राकृतजुहूस्थानापन्नत्वात् प्रकृतौ च जुह्वा होमार्थत्वात् कुम्भीनां होमार्थत्वं विज्ञायमानं कुम्भीदोहानामशेषाणामेव होमं गमयति। अन्यथा होमार्थातिक्रमणे कुम्भीगताशेषदोहसाहित्यस्यादृष्टार्थत्वापत्ते। ततश्च शेषाभावान्न स्विष्टकृदादि कार्यम्। वस्तुतस्तु प्राकृते होमार्थातिक्रमणे कुम्भीसाहित्यस्य दृष्टार्थत्वाय तद्गतदोहानामशेषाणा होमार्थत्वस्य वक्तव्यतया कुम्भीषु शेषाभावात् स्विष्टकृदिडं न विद्यते उपांशुयाजवदित्येव सूत्र व्याख्येयम्, न त्विह कुम्भीनां जुहूप्रत्याम्नायत्वमप्यभिमतम्। अत एव सङ्कर्षे प्रथमस्य तृतीये "सह कुम्भीभिरतिक्रामन्नाह" इति स्रुक्प्रत्याम्नाय श्रूयते 'यथा पलाशस्य मध्यमेन पर्णेन जुहोतीति' सूत्रेण पूर्वपक्षयित्वा 'दारुपात्राणि कुम्भीभिर्विकल्पो नैकार्थत्वात्' इति तदुत्तरसूत्रेण "सह कुम्भीभि." इति वचनात् "दारुपात्रेण जुहोति" इति वचनाच्च विकल्प। दारुपात्रेणेत्येकत्वन्तु न विवक्षितम्। जात्यभिप्राय वा। शाखान्तरे—"यावत्य' कुम्भ्य तावन्ति दारुपात्राण्युपक्लृप्तानि स्यु" इति श्रवणादिति पक्षान्तरमुपक्षिप्य सहकुम्भीभिरतिक्रमणेन प्रक्रान्तस्य होमस्य कुम्भीभ्योऽपायो भवति। "यावत्य कुम्भ्यः तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपेत्य कुम्भीभ्यः पात्राणि पूरयित्वा तैरध्वर्युं जुह्वन्तमनु जुह्वति" इति श्रवणात्। यथा प्रक्रान्तस्य

होमभक्षाभ्यां संयोगे सति स होमस्तदेकदेशस्यैव सिध्यति। तथा च सर्वार्थाज्यस्योपांशुयाजशेषत्वाभावान्न शेषकार्याणि ॥

अथ "सर्वेभ्यो हविर्भ्यस्समवद्यति" इति वचनादाज्यादपि स्विष्टकृदिति शङ्कां निरस्यति—

## उत्पन्नाधिकारात्सति सर्ववचनम् ॥ ९ ॥

सति-विद्यमाने हविश्शेषे सर्वशब्दः प्रत्येतव्यः। कुतः? उत्पन्नाधिकारात्—बुद्धिमारूढस्याधिकारात् विषयीकरणात्। प्रकृतविषयत्वादिति यावत्। यथा 'सर्व ओदनो भुक्तः' इति सर्वशब्दः प्रकृतविषयः। एवमिहापि। ये हविश्शेषाः प्रकृता विद्यन्ते तेभ्यस्सर्वेभ्य इति मन्यामहे ॥

यदुक्तं प्रायणीयायां 'समवद्यति' इति लिङ्गादाज्यादपि स्विष्टकृदिति तत्राह—

## जातिविशेषात्परम् ॥ १० ॥

ल्यब्लोपे पञ्चमी। परं—हेत्वन्तरं समवद्यतीत्येतत् उपस्तरणाभिघारणाज्यसंसृष्टबहुसिद्धावयवकौदनगतामाज्यजातिमोदनजातिञ्चापेक्ष्य प्रयुक्तं वेदितव्यम्।

यच्चोक्तभाष्ये च दर्शनात्स्विष्टकृदर्थवादस्येति तत्राह—

## अन्यमरेकार्थे ॥ ११ ॥

आज्यादपि स्विष्टकृदित्यत्र 'स्विष्टकृतेऽवदाय' इति स्विष्टकृदर्थाज्यावदानानुवाददर्शनं पूर्वपक्षान्ते यत्साधकमुपन्यस्तं तत् अरेकार्थे विषये प्रत्येतव्यम्। रेकः—शेषः, तत्सम्बन्धिकार्ये रेकार्थे। शेषकार्यमिति यावत्। स न भवत्यरेकार्थः तस्मिन्। उपांशुयाजप्रयुक्तशेषकार्यं यदाज्यावदानं न तस्येदमनुवादकं "स्विष्टकृतेऽवदाय" इति, येनाज्यादपि स्विष्टकृद्गम्येत। किन्तु "उपस्तीर्य सकृत्सकृत् सर्वेभ्यो हविर्भ्यस्समवद्यति द्विरभिघारयति" इति सौविष्टकृतपुरोडाशसान्नाय्यशेषावदानसंस्कारकोपस्तरणाभिघारणार्थाज्यावदानमेव "स्विष्टकृतेऽवदाय" इत्यनूद्यते। अतो नाज्यादुपांशुयाजीयशेषकार्यगमकमेतत् ॥

इति प्रथममुपांशुयाजाज्यास्विष्टकृदननुष्ठानाधिकरणम् ॥ १ ॥

२

अस्ति साकम्प्रस्थायीयो नाम दर्शगुणविकारः "साकं प्रस्थायीयेन यजेत पशुकामः" इति। तत्र द्वौ सायं दोहौ प्रातर्दोहौ च। तेषां चत्वारः कुम्भ्यस्सन्ति।

"यथा गृहीतान् ग्रहान् ऋत्विज उपाददते उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणे सुराग्रहान्" इति येन क्रमेण गृहीताः तेन क्रमेणाददत इति नार्थ होमानामेककालकतया यौगपद्येन तदादानानामपि यौगपद्यात् । किन्तु यथागृहीतास्तथा हुतानेवाददते, न तु ततः प्रकृतिवज्जुह्वामवदायेति तदर्थः ॥

ननु मास्तु जुह्वामवदान तथापि ग्रहाणामेकदेशेषु हुतेषु तच्छेषत. प्राकृतं वैकृतञ्च शेषकार्यमस्तु । न च प्रत्यक्षोपदिष्टवैकृतशेषकार्यत एव निराकाङ्क्षत्वात् प्राकृतशेषकार्याणामिह चोदकतो न प्राप्तिसम्भव इति वाच्यम्। "न सर्वहुत जुहोति शिनष्टि" इति पुनरिह वचनेन प्राकृतशेषकार्याणामपि प्रवृत्तेरभ्यनुज्ञानम्। अन्यथा वैकृतशेषकार्यविधिबलादेव शेषणसिद्धे पुनर्वचनवैयर्थ्यादित्यत आह—

तद्वच्च शेषवचनम् ॥ १४ ॥

सोमे ऐन्द्रवायवादिग्रहेषु हुतशेषभक्षणविधिबलादेव सिद्धेः न सर्वं जुहोतीति वचनं यथानुवाद तद्वदत्रापि तद्वचनमनुवाद इत्यर्थ ॥

इति तृतीय सौत्रामण्यधिकरणम् ॥ ३ ॥

४

अस्ति सर्वपृष्ठा नामेष्टि—"य इन्द्रियकामो वीर्यकामो वा स्यात्तमेतया सर्वपृष्ठया याजयेत्" इति । तत्र सन्ति षड्यागा—"इन्द्राय राथन्तराय निर्वपति, यदिन्द्राय बार्हताय, यदिन्द्राय वैरूपाय, यदिन्द्राय वैराजाय, यदिन्द्राय शाक्वराय, यदिन्द्राय रैवताय" इति । तत्रैकैकस्यै देवतायै चरुश्चतुरो मुष्टीनेकस्मिन् शूर्पे निरुप्य सहावहत्य पिष्ट्वा तैर्महान्तमेक पुरोडाशं कृत्वा उत्तानेषु द्वादशसु कपालेषु श्रपयित्वाऽऽसाद्य प्रचरणकाले पुरोडाशस्य मध्यभागमपहाय परितः प्रान्तभागं मनसा षड्धा विभज्य पूर्वभागस्य मध्यात्पूर्वार्धाच्च द्विरवदाय प्रथमा देवतां यजति। एव तत आरभ्य प्रदक्षिणमुत्तरापवर्गं प्रान्तदेशेभ्यो मध्यात्पूर्वार्धाच्च द्विर्द्विरवदाय इतरा देवता यजति इति स्थिति । "उत्तानेषु कपालेष्वधिश्रयन्ति" "द्वादशकपालः पुरोडाशो भवति" "समन्त पर्यवद्यति" इत्यादिवचनात्। तत्र किं तत्तत्प्रधानावदानदेशस्योत्तरार्धात्सकृत् सकृत् स्विष्टकृतेऽवादातव्यम्? उत पुरोडाशस्योत्तरार्धात् सकृदेवाचदातव्यम्? इति सशये पूर्वपक्षयति—

पात्नीवतस्य पर्यग्निकरणोत्तरप्रयोगापनयः तद्वत् । जुह्वन्तमनु इत्यनुस्सहार्थकः । तृतीयार्थ इति कर्मप्रवचनीयः । अध्वर्युणा सह जुह्वतीत्यर्थः । अध्वर्युणाऽन्वारब्धा जुह्वतीति यावत् । ततश्च कुम्भ्यो दोहाना दक्षिणतो नयनार्था एव । दारुपात्रैरेव तु होम इति सिद्धान्तयिष्यते प्रवृत्तस्य प्रदानस्य पात्रविधानादपनयः, यथा पात्नीवत पर्यग्निकृतमुत्सृजेत्' इति सूत्रेण । तदुत्तराधिकरणे च 'तत्र शेषकार्याणि क्रियेरन् पात्रान्यत्वात्' इति पूर्वपक्षयित्वा 'नापनीतेष्वश्रुतत्वात्तद्व्याख्यातम्' इति सूत्रेण प्राकृते होमातिक्रमणे सर्वहोमार्थत्वफलककुम्भीसाहित्यविधिना शेषकार्येष्वपनीतेषु दारुपात्राणि श्रुतानि । तस्मान्न शेषकार्यमिति द्वादशाध्याये तृतीयस्य पञ्चमे व्याख्यातमिति सिद्धान्तयिष्यत इति दिक् ॥

इति द्वितीय साकम्प्रस्थायीये शेषकार्याननुष्ठानाधिकरणम् ॥ २ ॥

३

सौत्रामण्यां श्रूयते—"आश्विनं सारस्वतं मैत्रमिति त्रीन् पयोग्रहान् गृह्णाति त्रीन् सुराग्रहान्" इति । तेषु स्विष्टकृदादि शेषकार्यमस्ति न वा ? इति संशयः । तत्र गृह्णातिशब्दितेष्वैन्द्रवायवादिसोमग्रहेषु "न सर्वहुतं जुहोति" इति शेषसत्त्वादिहापि शेषोऽस्तीति स्यादेव शेषकार्यम् । इयांस्तु विशेषः—सोमस्यापूर्वत्वात्तत्र शेषसत्वेऽपि न प्राकृत स्विष्टकृदादि कार्यम् । इह तु पयसस्सान्नाय्यविकारत्वात् सुरायाश्च पिष्टप्रकृतिकायाः पुरोडाशविकारत्वात्सम्भवत्येव प्राकृत शेषकार्यमिति प्राप्ते सिद्धान्तयति—

**सौत्रामण्याश्च ग्रहेषु ॥ १३ ॥**

सौत्रामण्यामपि आश्विनादिग्रहेषु न प्राकृत शेषकार्यं विद्यते । तत्र शेषस्य वैकृतकार्यान्तरश्रवणात् । श्रूयते हि—"अध्वर्युः प्रतिप्रस्थाताग्नीध्रश्चाश्विनं भक्षयन्ति, होता ब्रह्मा मैत्रावरुणश्च सारस्वतम्, मैत्रं यजमानः, सुराग्रहान् दक्षिणतः प्राचीनावीतिनो भक्षयन्ति, अपि वा ब्राह्मणं परिक्रीणीयात् उच्छेषणस्य पातारम्, यदि ब्राह्मणं न विन्देद्वल्मीकवपायामवनयेत्" इत्यादि । न च वैकृतशेषकार्यार्थं तत्तद्ग्रहपात्रेषु किञ्चित्स्थापयित्वा अन्यभागान् प्रकृतिवत् जुह्वामवदाय तदेकदेशेषु हुतेषु जुह्वां शेषसद्भावात्[1] तत्र प्राकृतशेषकार्यं न विरुध्यत इति वाच्यम् । इह हि श्रूयते—

1 सत्वात्. क

**ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षस्स्यात् ॥ १७ ॥**

तुर्वैषम्ये। ऐन्द्रवायवे ग्रहे "द्विरैन्द्रवायव भक्षयति" इति वचनादेव प्रतिकर्म-प्रतियाग वायव्ययागनिमित्तम् ऐन्द्रवायवयागनिमित्तञ्च भक्षणभेद स्यात्, न तु वषट्कारनिबन्धनस्तत्र द्विर्भक्षः। "द्विर्होतस्य वषट्करोति" इत्यस्य (द्वि) हेत्वधिकरणन्यायेनार्थवादत्वात्। तस्मादिह सकृदेव पुरोडाशस्योत्तरार्द्धात्स्विष्टकृतेऽवदानम् ॥

इति चतुर्थं सर्वपृष्ठेष्टौ स्विष्टकृत्सकृदनुष्ठानाधिकरणम् ॥ ४ ॥

५

वचनादैन्द्रवायवस्य द्विर्भक्ष इत्युक्तम्। [1]तत्प्रसङ्गात् सोमभक्षविषयो विचार प्रस्तूयते। ज्योतिष्टोमे सन्ति सोमग्रहा चमसाश्च बहव। होतृब्रह्मादयश्च कर्तार। तेषु ग्रहचमसेषु किं क्वचिदपि कस्यचिदपि न भक्षणम्? उत सर्वत्र सर्वेषामविशेषेण भक्षणम्? अथवा यस्य यत्र प्रत्यक्षवचन तस्य तत्र भक्षणम्? किं वा यस्य यत्र होतृचमसो ब्रह्मचमस इत्यादि समाख्या वषट्कर्तृत्व वा होमाभिषवकर्तृत्वं वा प्रत्यक्षवचनं वा तस्य तत्र भक्षणम्? इति सशये [2]प्रथमं पक्ष गृह्णाति—

**सोमेऽवचनाद्भक्षो न विद्यते ॥ १८ ॥**

सोमे हुतशिष्टे क्वचिदपि कस्यचिदपि भक्षो न विद्यते। कुतः? अवचनात्—दर्शपूर्णमासयोरिव सोमे भक्षणविध्यभावात्, सोमस्यापूर्वत्वेन चोदकतो भक्षणाप्रवृत्ते.। यद्यपि "अल्प जुहोति" इति वचनादस्ति शेषः, तथापि न तस्य भक्षणनियमे प्रमाणमस्ति। "पुरस्तादैन्द्रवायव भक्षयति" इति तु रागप्राप्तकादाचित्कभक्षणे पुरस्तात् स्वापरादिगुणविधिपर भविष्यति। "हार्योजनस्य सर्वे एव लिप्सन्ते" इति च हारियोजनाख्यग्रहविशेषलिप्सामात्रपरम्, न तु भक्षणपरम्। तस्माद्ग्रहचमसेषु क्वचिदपि कस्यचिदपि न भक्षणम् ॥

अथ द्वितीय पक्षमुपक्षिपति—

**स्याद्वान्यार्थदर्शनात् ॥ १९ ॥**

वाशब्द पक्षान्तरे। सर्वत्र सोमशब्दे सर्वेषामृत्विग्यजमानाना भक्षण स्यात्। कुत? अन्यार्थदर्शनात्—'पुरस्तादैन्द्रवायव भक्षयति" इति गुणविधिपरे वाक्ये

1. तत्प्रयोगात्. क.　　2. प्रथमपक्षयति. क, प्रथम पक्षयति. ग.

## द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन् ॥ १५ ॥

सत्यपि पुरोडाशद्रव्यैकत्वे प्रतिकर्म—यावत्प्रधानम्, स्विष्टकृतेऽवदानानि क्रियेरन्। कुत.? कर्मभेदात्—प्रकृतौ "उत्तरार्धात्स्विष्टकृतेऽवद्यति" इति प्रधानदेशस्योत्तरार्धात् स्विष्टकृदवदान विहितम्। "समन्त पर्यवद्यति" इति प्रधानावदानदेशाना भिन्नत्वात्तदुत्तरार्धभेदेन तत्प्रतिपत्तिकर्मस्विष्टकृदवदानभेदावश्यम्भावादित्यर्थ। वषट्कारभेदादित्यप्यर्थः। प्रतियाग वषट्कारभेदात् स्विष्टकृदवदानभेद। सोमे ह्यैन्द्रवायवग्रहो वायव इन्द्रवायुभ्याञ्च गृह्यते। स च द्विवषट्कारक। वायव एको वषट्कार इन्द्रवायुभ्यामपर। तस्य च ग्रहस्य द्विर्भक्षण विहितम्—"द्विरैन्द्रवायवस्य भक्षयन्ति" इति। तत्र हेतुवाद. श्रूयते—"द्विर्ह्येतस्य वषट्करोति" इति। अस्मादेव हेतुवादात् प्रकृतेऽपि प्रतियाग वषट्कारभेदाच्छेषकार्यभेदोऽनुमीयते॥

अथ सिद्धान्तयति—

## अविभागात्तु शेषस्य सर्वान् प्रत्यविशिष्टत्वात् ॥ १६ ॥

तुर्नार्थे। न प्रतिप्रधान स्विष्टकृदवदानभेद., किन्तु पुरोडाशस्योत्तरार्धात् स (मवाद्य) स्विष्टकृत्कार्य। कुत? सर्वान् प्रत्यविशिष्टत्वात् शेषस्याविभागात्। सर्वान् षडपि यागान् प्रति पुरोडाशस्य [1]साधारणत्वेन शेषस्याविभागात् ससृष्टत्वात् प्रकृत (भागादु) द्धृतयागद्रव्यस्योत्तरार्द्धादवद्यतीत्येव शास्त्रार्थ। कृतकार्यद्रव्यस्य प्रतिपत्त्यपेक्षाया प्रवर्तमानस्य "उत्तरार्द्धादवद्यति" इत्यस्य तदुत्तरार्द्धविषयताया एवोचितत्वात्। यद्यागीयद्रव्यस्योत्तरार्द्ध तदेव प्रकृत वस्तुत उत्तरार्द्धमभूदिति न स शास्त्रार्थ। एवञ्चेह कृतषड्यागकार्यस्य पुरोडाशशेषस्य संसृष्टमप्यारब्धस्य सर्वयागसाधारणतया तदीयमुत्तरार्द्धमपि सर्वयागसाधारणमिति तस्यैकस्यागृह्यमाणविशेषत्वात्तन्त्रेणैव स्विष्टकृदवदानम्॥

अथ यदुक्तमैन्द्रवायवग्रहशेषस्य प्रतिवषट्कारं भक्षणदर्शनादत्रापि शेषकार्यभेद इति तत्राह—

---

1 'साधारणत्वेऽपि न शेषस्य' इति पाठो मातृकासूपलभ्यते। 'साधारणत्वेन शेषस्य' इति पाठ कल्पितः।

न्निति चमस । होतुश्चमस —होतुर्भक्षणपात्रम् इत्यर्थ. । होत्रादिकर्तृकसोमभक्षणाधारतया निर्देशात्मिका समाख्या भक्षणनिमित्तम् । नन्वोदनादिद्रव्यान्तरस्य तेपु भक्षणेनापि होतुश्चमस इत्यादि समाख्योपपत्तौ सोमस्यैव भक्षलाभ. [कुत ] इत्यत्राप्येतदेव सूत्रमुत्तरम् । सोमचमस इति समाख्यानात् सोमस्यैव भक्ष इति लभ्यते । सयोगस्य तन्निमित्तत्वाच्च—'न सोमेनोच्छिष्टा भवन्ति' इति सोमसयोगस्यैवानुच्छिष्टत्वनिमित्तत्वमवगतम् । ओदनादिद्रव्ये तु भक्ष्यमाणे पात्राणामुच्छिष्टत्वात् कथ पुनर्होमसम्भव. । शुद्ध्यर्थं तक्षणाश्रयणे तु यद्रूपस्य होत्रादिचमसत्वमवधारित तस्य नाशप्रसङ्ग । पात्रान्तरोत्पादने तु 'एकादश चमसा' इति सङ्ख्याविरोध' । अतश्चमसिना चमसेषु समाख्या सोमभक्षस्य निमित्तम् । केचित्तु याज्ञिका आस्यस्पर्शं विनैव सोमभक्षणमाहु. । 'न सोमेनोच्छिष्टा भवन्ति' इति स्मृतिस्तु पीतशेषपाननिषेधप्रतिप्रसवपरम् । हविरुच्छिष्टं दक्षिणेतिवत् शेषवाची उच्छिष्टशब्द. । सोमेन भक्षितेन च ग्रहचमसाः तच्छेपदुष्टा न भवन्ति । पीतशेषपानदोषो न भवतीति यावदिति मन्यन्ते । तदेतत् शुद्ध्यर्थतक्षणाश्रयणादिशङ्कातत्परिहारादिपरवार्तिकविरुद्धम् ।

'भुक्त्वा पात्रे यतिर्नित्यं क्षालयेन्मन्त्रपूर्वकम् ।
न दुष्येत्तस्य तत्पात्र यज्ञेषु चमसो यथा ॥
चमसस्सोमसयोगाद्यथा वै मेध्य उच्यते ।
अपा तथैव संयोगान्नित्यो मेध्य. कमण्डलुः' ॥

इति मन्वादिस्मरणविरुद्धश्चेत्युपेक्ष्यम्[1] ॥

इतोऽप्येवमित्याह—

## तस्माच्चाब्राह्मणस्य सोमभक्षणं प्रतिषेधति ॥ २२ ॥

श्रुतिरिति शेष । तस्मात्—समाख्याकल्पितभक्षणविधिबलादेव अब्राह्मणस्य क्षत्रियवैश्ययजमानस्य स्वचमसे भक्षण प्रतिषेधति श्रुति.—"यदि राजन्य वैश्य वा याजयेत् स यदि सोम विभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्ष प्रयच्छेन्न सोमम्" इति । यदि समाख्या भक्षणनिमित्त न स्यात्तदा यजमानस्य स्वचमसे भक्षणप्रसक्त्यभावात् 'यदि सोम विभक्षयिषेत्' इति तत्र-

1. उपेक्ष्यो. क.

भक्षणस्य नित्यानुवाददर्शनात् । रागप्राप्तकादाचित्कभक्षपरत्वे च पाक्षिकानुवादत्वापातात् कचिच्च कस्यचित् भक्षानुवाद स्थालीपुलाकन्यायेन सर्वत्र सोमशेषे सर्वेषा भक्षणं गमयति ॥

अथ तृतीय पक्षमुपक्षिपति—

**वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २० ॥**

तु पक्षान्तरे । "पुरस्तादैन्द्रवायवमध्वर्युर्भक्षयति, पुरस्तान्मैत्रावरुणम्, सर्वत परिहारमाश्विनम्" इत्यादिवाक्येषु न प्राप्तभक्षानुवादेन गुणविधि । येन कचित्कस्यचित् भक्षानुवादस्सर्वत्र सर्वेषा भक्षण गमयेत्, किन्तु पुरस्तात्स्थापनादिगुणविशिष्टभक्षणविधायकान्येवैतानि वाक्यानि स्यु । कुत ? अपूर्वत्वात् भक्षणस्य लोकतो नित्यमप्राप्तत्वात् । तस्माद्भक्षणस्य सर्वत्र प्राप्त्यभावात् यथोपदेश— भक्षविधिमनतिक्रम्य, यत्र यस्य भक्षण प्रत्यक्षमुपदिश्यते तत्र तस्य भक्षणम् न तु सर्वत्र सर्वेषामिति तृतीय पक्ष' । यत्र प्रत्यक्षवचन तत्र भक्ष इत्यङ्गीकुर्म. । किन्तु प्रत्यक्षवचनमेव भक्षप्रापकम् "पुरस्तादैन्द्रवायव भक्षयति" इत्यादयश्च गुणविशिष्टभक्षणविधिय इति न मृष्यामहे, प्रत्यक्षवादवत् समाख्याया वषट्कारस्य होमाभिषवयोश्च भक्षप्रापकत्वात् । एवञ्चैन्द्रवायवादिषु होमाभिषवाभ्यामध्वर्योर्भक्षस्य प्राप्तत्वान्न विधानम् । किन्तु तदनुवादेन गुणविधानमेव । तथा च समाख्यादिकमपि सोमभक्षणे निमित्तमिति सिद्धान्तसङ्ग्रहः ॥

तत्र समाख्याया भक्षनिमित्तत्व तावदाह—

**चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २१ ॥**

चमसेषु हुतशेषस्य भक्षोऽस्ति । कुत ? समाख्यानात्—'होतृचमसो ब्रह्मचमस' इत्येव चमसाना होत्रादिसयुक्तनिर्देशात् । अस्ति हि शुक्रामन्थिप्रचारे सम्प्रैष.—"प्रैतु होतुश्चमस प्रब्रह्मण प्रोद्गातु प्रयजमानस्य प्रसदस्यस्य" इति । होतृचमस सद प्रैतु गच्छतु । प्रब्रह्म इत्यादिष्वपि एतु इत्यनुषज्यते, ब्रह्मणश्चमस प्रैतु । एव [मुद्गात्रादिचमसा ?] नाम् । नन्वस्तु चमसाना होत्रादिसयुक्तनिर्देश, तावता कथ तेषु भक्षप्राप्तिरित्यत आह—सयोगस्य तन्निमित्तत्वादिति । चमसेषु होत्रादिसम्बन्धस्य भक्षणद्वारकत्वात् । चमु अदने । 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्'[1] इत्यौणादिकोऽसच् प्रत्यय । चम्यते भक्ष्यतेऽस्मि-

1. 'अतिचमिरभियुभ्योऽस.' क, ग, घ.

निगदो यजुर्विशेष एव। अतएव व्याकरणेन 'सुब्रह्मण्यायाम्' इत्यैकश्रुत्यं प्रतिषिध्यते। सामत्वे हि 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति पर्युदासादेवैकश्रुत्यनिवृत्तिसिद्धे किं तेन। तस्मादपसुब्रह्मण्यानां त्रयाणामेव स्तोत्रकारिणामुद्गातृचमसे भक्षणम्॥

अथ चतुर्थपक्षवादी प्रत्यवतिष्ठते—

**सर्वे तु वेदसंयोगात्कारणादेकदेशः स्यात्॥ २६॥**

तु प्रत्यवस्थाने। सर्वे सामगा उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्या उद्गातृचमसं भक्षयेयुः। कुतः? वेदसंयोगात्—प्रस्तावः उद्गीथः प्रतिहारः उपद्रवः निधनमिति साम्नां पञ्च भक्तयः। तत्र द्वितीयभक्तेर्गाने उत्पूर्वो गायतिर्मुख्यवृत्त्या वर्त्तते। तां च भक्तिं यो गायति तत्रोद्गातृशब्दो मुख्यः प्रस्तोतृप्रतिहर्तृसुब्रह्मण्येषु तु उद्गातृवेदविहितप्रतिहारगानसुब्रह्मण्याह्वानकर्तृत्वयोगान्निरूढलक्षणया वर्त्तते। प्रोद्गातृणामिति प्रथमप्रतीतप्रातिपदिकरूढ्यर्थपरिग्रहे बहुवचनमनुपपद्यमानमेव प्रातिपदिकनिरूढलक्षणामनुमन्यते, न तूच्चैर्गानमित्यवयवयोगम्, तत्र रूढिपरित्यागात्। तथा चोद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याश्चत्वार उद्गातृशब्देनात्र विवक्षिताः। "उद्गातारो विनिषद्य स्तुवते" इत्यत्र तु स्तौतिसमभिव्याहारात् कारणाद् एकदेशः स्यात्। दिश अतिसर्जने। अतिसर्जनं त्यागः। चतुर्षुच्छन्दोगेषु एकस्य सुब्रह्मण्यस्य वर्जनं स्यात्, प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्त्ता प्रतिहरति, उपद्रवमुद्गाता गायति, निधनन्तु त्रय उपयन्तीति त्रयाणामेव स्तोत्रत्वात्। तस्मादुद्गातृचमसभक्षणेऽपसुब्रह्मण्यवादः।

अपन्यायेन प्रत्यवस्थाने एतदेव सूत्रमुत्तरम्। तुस्सम्भावनायाम्। यद्यप्युक्तरीत्या वेदसंयोगात् सर्वे ससुब्रह्मण्याः स्तोत्रकारिण उद्गातृशब्दगम्या भवितुमर्हन्ति, तथापि कस्माच्चित्कारणादुद्गातृशब्दे एकस्य सुब्रह्मण्यस्य देशः—अतिसर्जनं वर्जनं स्यात्। कर्मव्यापृतिः प्रैषकाले नियमेन सन्निधानञ्च भक्षकारणम्। शेषप्रतिपत्त्यर्थेऽपि हि भक्षणे कर्तृनियमस्यार्थवत्त्वाय कर्तृगतमपि किञ्चित् प्रयोजनं वाच्यम्। एवञ्च कर्मणि व्याप्रियमाणानामानुषङ्गिकक्षुत्पिपासानिवृत्तिमुखेनादृष्टाय कर्तृनियमो भवति। सुब्रह्मण्यस्य च न तदानीं कर्मणि व्यापृतिरस्ति, प्रातरनुवाकानन्तरमेव सुब्रह्मण्याह्वानस्य तद्व्यापारस्योपरतत्वात्। यद्यपि शाखान्तरे दक्षिणाकाले सुब्रह्मण्याह्वानमस्ति, तथापि भक्षवेलायां तदभावात् सुब्रह्मण्यविषये

सक्त्युद्धावन 'न सोमम्' इति प्रतिषेधश्च नोपपद्येत। अतोऽपि समाख्या भक्षणनिमित्तम्। एतेन होतृचमससमाख्या वषट्कारनिमित्तभक्षणेनान्यथासिद्धेति निरस्तम्। ब्रह्मयजमानादिचमसेषु वषट्कारनिमित्तभक्षणाप्रसक्तेः। केचित्तु—नेदं सूत्रं, सङ्ग्राहक भाष्यमेवेति मन्यन्ते ॥

इति पञ्चमं सोमे शेषभक्षणाधिकरणम् ॥ ५ ॥

६

किमुद्गातृचमसमुद्गातैव भक्षयेत्? उत सर्वे ऋत्विजः? अथवा स्तोतार उद्गातृप्रस्तोतृप्रतिहर्तारः? यद्वा ते त्रयस्सुब्रह्मण्यश्चेति चत्वार? इति संशये पूर्वपक्षयति—

**उद्गातृचमसमेकस्य श्रुतिसंयोगात् ॥ २३ ॥**

उद्गातृचमसमेकस्यैव—उद्गातुर्भक्षणीय प्रतीयात्, उद्गातुश्चमस इति तस्यैव श्रुत्या संयोगात्। न च "प्रैतु होतुश्चमस" इत्यादिप्रैषे 'प्रोद्गातॄणाम्' इति कचिच्छाखायां पाठादुद्गातृबहुत्वावगमात् कथमेकस्यैव भक्ष इति वाच्यम्, उद्गातुरेकत्वेन बहुवचनस्याविवक्षितार्थकत्वात्। न चोद्गातृशब्दस्य शक्तिन्यायेन तदितरपरत्वमप्याश्रित्य बहुवचनं स्वार्थमेव नीयतामिति वाच्यम्। प्रातिपदिकस्य प्रथमप्रतीतत्वेन तत्र लक्षणाश्रयणायोगात् ॥

अथ द्वितीयं पक्षमुपक्षिपति—

**सर्वे वा सर्वसंयोगात् ॥ २४ ॥**

वाशब्द पक्षान्तरे। ऋत्विजस्सर्वे भक्षयेयुः। कुतः? सर्वसंयोगात्—उद्गातृशब्दस्योद्गातृतदितरेषु सर्वेष्वित्विक्षु वाचकतया संयोगात्, पश्चात्प्रतीतस्यापि बहुवचनस्यात्यन्तबाधापेक्षया पूर्वप्रतीतस्यापि प्रातिपदिकोद्गातृशब्दस्याजहत्स्वार्थलक्षणा युक्ता ॥

अथ तृतीयपक्षेण सिद्धान्तयति—

**स्तोत्रकारिणो वा तत्संयोगाद्बहुत्वश्रुतेः ॥ २५ ॥**

वाशब्द एवार्थे। स्तोत्रकारिण उद्गातृप्रस्तोतृप्रतिहर्तार एव उद्गातृचमस भक्षयेयुः। कुतः? तत्संयोगात्—तेषां त्रयाणां गानसंयोगात्। प्रोद्गातॄणामिति बहुवचनश्रवणाच्च। एवञ्च प्रातिपदिकबहुवचनयोरुभयोरपि मुख्यार्थत्वं लभ्यते। सुब्रह्मण्यस्तु न गाता, तस्य सामाभावात्। "सुब्रह्मण्योमिन्द्रागच्छ" इत्यादिस्तु

तृप्रतिहर्तारौ सुब्रह्मण्यश्चोपहवमिष्ट्वा भक्षयन्ति" इति। तस्मात्ससुब्रह्मण्या स्तोत्र-कारिण उद्गातृचमसं भक्षयेयुरिति भाष्यसिद्धान्तो भगवतो जैमिनेरभिमत इति प्रतिभाति। द्राह्यायणसूत्रे तु—अपसुब्रह्मण्यानां स्तोत्रकारिणामेवोद्गातृचमसभक्षणमुक्तम्। तदिदं वचनान्तरमूलकं यथाकथञ्चिदस्तु, न तु तज्जैमिनीयन्यायसरणिमनुसरति। एवञ्च भाष्यानुसारिण प्रभाकरा यद्वार्तिकमदूषयन्—'अपसुब्रह्मण्यवादिनोऽपन्यायवादिन' इति तत् 'प्राज्ञैरुन्मत्तभाषितवदुपेक्ष्यम्' इति यत्पार्थसारथिमिश्रैरुक्तं तदेवोन्मत्तप्रलपितवदुपेक्ष्यम्॥

इति षष्ठमुद्गातृचमसभक्षणाधिकरणम्॥ ६॥

७

तदेवं वृत्तस्समाख्याभक्षविचारः। (अथ वचनात्स) प्रस्तूयते। "यथाचमसमन्यांश्चमसाश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते" इति श्रुतम्। किमिदं हारियोजनस्य भक्षणम् ग्रावस्तुतोऽपि ऋत्विग्विशेषस्य विद्यते? न वा? इति संशये पूर्वपक्षयति—

**ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात्॥ २७॥**

ग्रावस्तुत' क्वचिदपि भक्षो न विद्यते। कुत'? अनाम्नानाद् वचनाभावात्। समाख्यावषट्कारहोमाभिषवानामुक्तवक्ष्यमाणकारणानाञ्चाभावात्। "हारियोजनस्य लिप्सन्ते" इति तु हारियोजनग्रहलिप्सामात्र गमयति, न तु भक्षम्। लब्धस्य यथेष्टविनियोगोपपत्त्या लाभस्य भक्षणनियतत्वाभावात्॥

अथ सिद्धान्तयति—

**हारियोजने वा सर्वसंयोगात्॥ २८॥**

वाशब्द एवार्थे। हार्योजनग्रहे ग्रावस्तुतो भक्षो विद्यत एव। कुत? सर्वसयोगात्—"हारियोजनस्य सर्व एव लिप्सन्ते" इति सर्वेषा भक्षश्रवणात्। लाभस्य प्रयोजनाकाङ्क्षाया भक्षयतीति पूर्ववाक्यश्रुतभक्षार्थत्वे सति लिप्सतेर्भक्षपरत्वे पर्यवसानात्॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**चमसिनो वा सन्निधानात्॥ २९॥**

वाशब्द प्रत्यवस्थाने। सर्वशब्देन पूर्ववाक्योपात्ताश्चमसिन एव परामृश्यन्ते, न तु प्राकरणिका ऋत्विग्यजमाना'। कुत.? सन्निधानात्—प्रकरणरूपसन्निध्यपेक्षया

भक्षकर्तृनियमस्य केवलादृष्टार्थत्वं स्यात्। अतो न तस्य भक्षः। प्रोद्गातॄणामिति प्रैषकाले[1] सुब्रह्मण्यस्यावश्यं सन्निध्यभावाच्च। न हि कदाचित् सन्निहितस्य तस्य नित्यवत्प्रैषविषयत्वमस्ति। सन्निधानस्यापि समाख्यया विधौ तु गौरवम्। न च समाख्यया सुब्रह्मण्यस्य भक्षे विहितेऽर्थादेतस्य सन्निधानमपि नित्यं लब्धमिति वाच्यम्। प्रोद्गातॄणामिति प्रैषगतसमाख्याकल्प्यभक्षविधेः समुपस्थितस्तोत्रकारिमात्रविषयतयैवोपपन्नत्वेन ततस्सन्निध्यलाभात्। तस्मादपसुब्रह्मण्यानां [2]स्तोत्रकारिणामेवोद्गातृचमसभक्षणमिति [3]वार्तिकसिद्धान्तः।

भाष्ये तु—सर्वे तु वेदसंयोगादित्यादिसूत्रे उद्गातृवेदसमाख्यातसामवेदविहितकर्मत्वलक्षणगुणयोगात् सर्वे ससुब्रह्मण्याश्छन्दोगाः प्रोद्गातॄणामित्यत्र विवक्षिताः। अतस्समाख्यया सुब्रह्मण्यस्यास्ति भक्षः। "उद्गातारो विनिषद्य स्तुवते" इत्यत्र तु स्तौतियोगात्कारणादपसुब्रह्मण्याः स्तोत्रकारिण एव विवक्षिता इत्येवं सिद्धान्तपरतयैव योजितम्। युक्तञ्चैतत्—तुशब्दस्वारस्यात्। यत्तु सोमभक्षस्य कर्मणि व्याप्रियमाणस्य कर्तृषु क्षुत्पिपासानिवृत्तिलक्षणतृप्तिमुखेनादृष्टार्थत्वात्, भक्षवेलायाञ्च सुब्रह्मण्यस्य कर्मव्यापाराभावान्न इति, तस्य भक्षणस्य केवलशेषप्रतिपत्त्यर्थत्वात्। अन्यथा कदाचित् क्षुत्पिपासयोरभावे भक्षणस्य लोपे सति तस्य नित्यवच्छ्रवणविरोधात्। अत एव च 'न भक्षः कर्तृसंस्कारो द्रव्यसंस्कारोऽयम्' इति वार्तिकं सङ्गच्छते। यच्चोक्तम्—प्रैषकाले सुब्रह्मण्यस्य नित्यं सन्निधानप्रमाणमिति, तदपि न; उपगानार्थतया तत्सन्निधेरावश्यकत्वात्। सप्तमपादे 'उपगाश्च लिङ्गदर्शनात्' इत्यत्राध्वर्युव्यतिरिक्तानामृत्विजामुपगातृत्वस्य वक्ष्यमाणत्वात्। यद्यपि 'चत्वारो वराध्या उपगातारः' इत्युक्तं, तथापि 'ये केचिच्चतुराद्या उपगायेयुः' इति मत्वा सर्वस्यैकैकस्यासन्निधावुपगानलोपप्रसङ्गस्स्यादिति सर्वेषामपि सन्निधेः प्रतीक्षणीयत्वादस्ति सुब्रह्मण्यस्यापि नित्यं सन्निधिः। किञ्च तलवकारशाखामधिकृत्य प्रवृत्ते जैमिनिकल्पसूत्रे सुब्रह्मण्यस्यापि भक्षणमुक्तम्—"अथ चमसमवेक्षेत उद्गाता श्येनो नृचक्षा इत्येवमितरे यथापूर्वमथोपहवमिच्छ (न्ते) न्तो होतरुपह्वय प्रस्तोतरुपह्वयस्व, प्रतिहर्तरुपह्वयस्व, सुब्रह्मण्योपह्वयस्वोद्गातैव होतर्युपह्वयमिच्छन्ते उद्गातरि प्रस्तो-

---

1 न ज्ञप्रैषकाले, ग    2. स्तोत्रकारिणामेवोद्गाततॄणामेवोद्गातृ क, ख, ग

भक्षणात्पूर्वमेव स्वचमसमेव भक्षयति, न तु चमसान्तराणि नापि ग्रहम्, तेषु होतुस्समाख्याया अभावात्, वषट्कारस्य चेदानी भक्षनिमित्तत्वासिद्धे । एव मैत्रावरुणादेरपि वषट्कर्तु स्वस्वचमस एव प्रथम समाख्याभक्षो नेतरेषु । तत्रान्येषा स्वस्वचमसेषु समाख्याभक्ष, वषट्कारनिमित्तस्तु भक्षो न क्वचिदप्यस्तीति प्राप्ते, सिद्धान्तयति—

वषट्काराच्च भक्षयेत् ॥ ३१ ॥

वषट्कारोऽपि सोमभक्षस्य निमित्तमित्यर्थ । न तावदिह यो भक्षस्स प्रथम इति केवलभक्षोद्देशेन प्राथम्यविधि, अवषट्कर्तुरपि भक्षप्राथम्यापत्ते । नापि वषट्कर्तुर्यो भक्ष स प्रथम इति विधि, विशिष्टोद्देशे वाक्यभेदात् । किञ्च भक्षोद्देशेन प्राथम्यविधावुद्देश्यस्य प्रथमप्रतीत्यवश्यम्भावात् भक्षशब्देन स्वार्थ प्रथम प्रतिपाद्य, पश्चात्प्रथमशब्देन तदर्थ इति वक्तव्यम् । न चैतत्सम्भवति, समस्यमानपदयोर्युगपत्प्रसरतया युगपदेव विशिष्टैकार्थप्रतिपादकत्वात् । अन्यथा एकार्थीभावलक्षणसामर्थ्याभावेन समासासम्भवात् 'समर्थ पदविधि' इति अनुशासनात् । तस्माद्वषट्कारे निमित्ते प्राथम्यविशिष्टभक्षविधि । वषट्कर्तु प्राथम्यविशिष्टे भक्षे विधीयमानेऽर्थाद्वषट्कारस्य प्राथम्यनिमित्तत्वलाभात् । एवञ्च होतुर्वषट्कारे हुतेषु ग्रहचमसेषु सर्वत्र समाख्याया असत्वेऽपि वषट्कारनिमित्त तस्य भक्षान्तर, मैत्रावरुणादीना स्वस्वचमसेषु समाख्याभक्षणात्पूर्वमेव भवति । ततो होतुरन्येषाञ्च स्वस्वचमसेषु समाख्याभक्ष इति सिद्धम् ॥

इत्यष्टम वषट्कर्तृप्रथमभक्षाधिकरणम् ॥ ८ ॥

९

अथान्यद्भक्षकारणमभिधीयते । "हविर्धाने चर्मण्यधिग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्च परेत्य सदसि भक्षयन्ति" इति श्रुतम् । तत्र किं भक्षानुवादेन गुणविधि ? उताभिषवहोमनिमित्त भक्षान्तरविधि ? इति संशय । भक्षानुवादेन गुणविधिरिति ब्रूम । न च प्राप्तकर्मानुवादेनानेकगुणविधौ वाक्यभेद शङ्क्य, अनेकगुणविशिष्टभक्षविधौ सति प्राप्ताप्राप्तविवेकेन [1]समाख्यानिमित्तके प्राप्ते भक्षे गुणविधित्वपर्यवसानसम्भवादिति प्राप्ते, सिद्धान्तयति—

---

1. समाख्यादिति निमित्तके. ग

स्थानाख्यसन्निधे· प्रबलत्वात्। अन्यथा "यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति" इति पूर्ववाक्यस्य वैयर्थ्यात्। न ह्यस्य सर्वविशेषणत्वादन्यत् प्रयोजनमस्ति। ततश्च ग्रावस्तुतश्चमसित्वाभावात् न हार्योजनभक्षः॥

अथ सिद्धान्ती परिहरति—

**सर्वेषान्तु विधित्वात्तदर्था चमसिश्रुतिः॥ ३०॥**

तुरवधारणे। सर्वेषामेवर्त्विग्यजमानानां हारियोजनभक्षः, न तु चमसिनामेव। कुतः? विधित्वात्–यो यो यस्य यस्य चमसस्समाख्यातः स स एकैकस्तं तं चमसमित्येवमन्यान् चमसान् चमसिनो भक्षयन्ति, हारियोजनस्य तु चमसिनस्तदितरे चेत्येवमस्य वाक्यस्य चमसितदितरसाधारण्येन भक्षविधिपरत्वात्। यथासमाख्य तं त चमसमित्येकैकम् इत्येव चमसिनश्चमसान् भक्षयन्ति, हारियोजनस्य तु नैको भक्षयति, किन्तु सर्वे चमसिन इति तु नार्थः। तथा सति चमसिन इत्यस्य वैयर्थ्यात्, 'यथाचमस चमसान् भक्षयन्ति' इत्येतावतैव 'चमसिन' इत्यस्य लाभात्। अत पूर्ववाक्ये चमसिग्रहणम् 'अथैतस्य' इत्युत्तरवाक्ये सर्वशब्दस्य चमसितदितरप्राकरणिकसर्वर्त्विग्यजमानविषयत्व [ प्रसिध्य ] र्थमित्येव वक्तव्यमिति, तदेतदाह—तदर्था चमसिश्रुतिरिति। चमसिग्रहण सर्वशब्दस्य चमसितदितरर्त्विग्यजमानविषयत्वसिध्यर्थमित्यर्थ। नन्वेवमपि 'हार्योजनस्य सर्व एव लिप्सन्ते' इत्येतावतैव प्राकरणिकानामृत्विग्यजमानाना लाभाद् 'यथाचमसम्' इत्यादि पूर्ववाक्य व्यर्थमित्यत्राप्येतदेवोत्तरम्–'तदर्था चमसिश्रुति.' इति। अल्पत्वाच्चमसाना चमसिन एव तान् भक्षयन्ति हारियोजनस्य तु महानुभावत्वात् तत्र तदितरेऽपि सर्वे भक्षयेयुरिति प्रशसार्थमित्यर्थ.॥

इति सप्तम हारियोजनाधिकरणम्॥ ७॥

८

अथान्यद्भक्षनिमित्तमभिधीयते। "वषट्कर्तुं प्रथमभक्ष" इति श्रुतम्। तत्र किं वषट्कर्तुर्यो भक्ष स प्रथम इति विधि? उत यो वषट्करोति तस्य प्रथमभक्ष इति विधि? इति सशय। तत्र कथञ्चिदनुवादत्वे सम्भवति प्राथम्यविशिष्टविध्ययोगाद्वषट्कर्तुर्होत्रादेश्चमसे यत्समाख्यया भक्षण प्राप्त तत्प्रथम कर्तव्यमित्यर्थ। एवञ्च होत्रा वषट्कारे ग्रहचमसेषु हुतेषु, मैत्रावरुणादीना स्वस्वचमसेषु समाख्या-

अथ सिद्धान्तयति—

**स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥ ३४ ॥**

वाशब्दोऽवधारणे। स्यादेव चमसेषु समाख्यादिभक्षाणां समुच्चय'। कुत ? कारणभावात्—भक्षकारणाना समाख्यादीना सत्त्वात्। यत्तु समाख्या चमसेषु विशिष्टभक्षविधिप्रापिकेति तत्राह—अनिर्देशश्चमसाना कर्तुरिति। यद्यपि समाख्या 'चमसिनश्चमसान् भक्षयन्ति' इति विशेषविधिप्रापिका, तथापि चमसानां भक्षण-विषये वषट्कर्तुर्होमाभिषवनिमित्तयो' प्रत्यक्षविहितयोः समाख्याकल्पितेन सामान्यविधिनापि बाधो युज्यते। किञ्च सति विरोधे विशेषविधिस्सामान्यविधिं बाधते। न त्विह विरोधोऽस्ति। सोमरसस्यावयवश्चमसिभिस्तदितरैश्च भक्षयितु शक्यत्वात्। यद्यप्येकेनैव भक्षेण प्रतिपत्तिस्सिध्यति, तथाप्यबाधेनैवोपपत्तौ बाधस्या-न्याय्यत्वात्, अवयवशो भक्षणेनैव प्रतिपत्तिस्सम्पाद्या। ततश्चमसेषु समाख्या-दिभक्षाणा समुच्चय., एव ग्रहेष्वपि वषट्कारनिमित्तहोमाभिषवनिमित्तयो तुल्यन्या-यत्वात्समुच्चय. ॥

इतोऽप्येवमित्याह—

**चमसेषु चान्यदर्शनात् ॥ ३५ ॥**

चमसेषु चमसिभ्योऽन्यस्यापि भक्षो दृश्यते—"हुत्वा चमसाश्चमसाध्वर्यवो भक्षान् वषट्कर्त्रे हरन्ति" इति। न हि वषट्कर्तुर्होतुरन्यस्य वा सर्वचमसेषु समाख्या-भक्षस्सम्भाव्यते, होतृचमसादिसमाख्याया एकैकचमसमात्रविषयत्वात्। अतो भक्षा-न्तरार्थमेव हरणमिद वाच्यमिति सिद्ध वषट्कारादीनामपि चमसभक्षे निमित्तत्वम् ॥

इति दशम भक्षनिमित्तसमुच्चयाधिकरणम् ॥ १० ॥

११

एकस्मिन् पात्रे होमाभिषवकर्तृवषट्कर्त्रोर्भक्षे प्रसक्ते कतर पूर्वो भक्षयतीति संशये पूर्वपक्षयति—

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ ॥**

एकस्मिन् पात्रे अध्वर्यु.-होमाभिषवकर्ता, पूर्वो भक्षयेत्। कुत ? क्रमात्—'हुत्वा भक्षयति' इति भक्षस्य होमानन्तर्यावगमात्। वषट्कर्तृभक्षप्राथम्ये च तद्वि-रोधाद् "वषट्कर्तु. प्रथमभक्ष" इति वचनन्तु वषट्कर्ता चमसिभ्य पूर्वं भक्षयेदि-त्येवम्परम् ॥

## होमाभिषवाभ्यां च ॥ ३२ ॥

भक्षयेदित्यनुषज्यते। होमाभिषवावपि सोमभक्षनिमित्तमित्यर्थः। "सोममभिषुणोति" "हविर्धाने ग्रावभिरभिषुणोति" "चर्मण्यभिषुणोति" "ग्रहाञ्जुहोति" "चमसाञ्जुहोति" "यदाहवनीये जुह्वति" इति वचनैरभिषव-हविर्धान-ग्राव-चर्म-होमा-हवनीयाः प्राप्ता। "अभिषुत्य हुत्वा भक्षयन्ति" इति क्रमोऽपि, अभिषवं विना रसस्य होमासम्भवात्। होमाभावे तु तत्कार्यत्वाभावेन भक्षणरूपप्रतिपत्त्यनपेक्षत्वाच्चार्थादेव सिद्धः। वषट्कर्त्रादीनां भक्षयितॄणां सदसि स्थितत्वात्तत्र समाख्यादिनिमित्तभक्षतदुपह्वानार्थमध्वर्योराहवनीयदेशे स्थितस्य सदः प्रति गमनं प्रत्यङ्मुखत्वञ्चार्थादेव प्राप्तम्। तस्माद् "अभिषुत्य हुत्वा भक्षयन्ति" इति होमाभिषवसमानकर्तृकभक्षविधौ होमाभिषवयोर्भक्षणप्राग्भावनियमादर्थान्निमित्तत्वमवगतमिति सिद्धं होमाभिषवनिमित्तं भक्षान्तरम्। न च भक्षणमपि समाख्यानिमित्तं प्राप्तमेवेति वाच्यम्, अभिषवहोमकर्ता ह्यध्वर्युरेव भवति। न चाध्वर्युचमस इति समाख्यास्ति। नापि तस्य वषट्कर्तृत्वमस्ति, येन तस्य भक्षणं प्राप्नुयात्। [1]तस्माद्धोमाभिषवनिमित्तकभक्षान्तरविधिः ॥

इति नवमं होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् ॥ ९ ॥

१०

अथैकस्मिन् पात्रे समाख्यानिमित्तस्य वषट्कारनिमित्तस्य होमाभिषवनिमित्तस्य च भक्षस्य समवाये सति बाधविकल्पसमुच्चयसंशये पूर्वपक्षयति—

## प्रत्यक्षोपदेशाच्चमसि व्यक्तश्शेषे ॥ ३३ ॥

हुतशेषे वषट्कारहोमाभिषवनिमित्तो भक्षः अव्यक्तः—सामान्यविहितः ग्रहचमससाधारणः। स तावत्समाख्याभक्षे बाध्यत इत्यध्याहारः। कुतः? प्रत्यक्षोपदेशात्—होतृचमसादिसमाख्याकल्पितविधिना चमसभक्षणस्य विशिष्यविधानात्। न च सम्भवात्समुच्चयः किं न स्यादिति वाच्यम्। भक्षणस्य प्रतिपत्त्यर्थत्वात्प्रतिपत्तेश्चैकेन[2] विशिष्यविहितसमाख्याभक्षणेनैव[3] सिद्धेः। एतेन चमसेषु समाख्याभक्षस्य कल्पोऽपि प्रत्युक्तः। एवञ्च ग्रहेषु वषट्कारनिमित्तहोमाभिषवनिमित्तभक्षयोस्तु बलवत्त्वाद्विकल्पस्सूचितो भवति ॥

---

1. निमित्तभक्ष. ग. 2 चैकेनैव. ग. 3. भक्षणेन. क.

अनुज्ञापनं विनाऽनुज्ञानानुपपत्तेरनुज्ञापनमर्थादाक्षिप्तम्। तदुभयमपि—'अनुजानीहि, अनुज्ञातोऽसि' इत्यादिशब्दोच्चारणादिलौकिकोपायेन प्राप्तम्, तत्राह—

**तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ ४१ ॥**

"उपहूतः" इत्येको मन्त्रः। भक्ष कर्तुमनुज्ञातोऽसीत्यर्थः। "उपह्वयस्व" इत्यन्यो मन्त्र। भक्षणमनुजानीहीत्यर्थः। तत्र होतरित्यादिसम्बुध्यन्तपदमध्याहार्यम्—'होतरुपह्वयस्व' इत्यादि। 'असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयेत्' इति कल्पसूत्रम्। अनुज्ञापयेदित्युपलक्षणम्, तल्लक्षणम् अनुज्ञापयेदनुजानीयाच्चेत्यर्थः। कुत ? लिङ्गात्—मन्त्रसामर्थ्यात्। इदमपि सूत्रमुत्तरविवक्षार्थमेव ॥

"उपहूत उपह्वयस्व" इति मन्त्रद्वयेनानुज्ञानमनुज्ञापनञ्च कर्तव्यमिति स्थितम्। तत्र किमिद मन्त्रद्वयमनुज्ञानानुज्ञापनयोरन्यतरत्र प्रयोक्तव्यम् अन्यतरत्र तु लौकिको ह्याय आश्रयणीय ? उतोभयोत्रोभय प्रयोक्तव्यम् ? अथवा यथालिङ्गं विनियोगो विभज्य ? इति सशय। तत्र यथालिङ्ग विभज्य विनियोगे स्वीक्रियमाणे अनुज्ञानस्य 'उपहूत.' इति प्रतिवचनार्थकस्य 'होतरुपह्वयस्व' इत्याद्यनुज्ञापनोत्तरभावित्वात्[1] 'उपह्वयस्व' इति द्वितीयमन्त्रस्य प्रथमकर्तव्येऽनुज्ञापने प्रथम प्रयोग, "उपहूत." इति प्रथममन्त्रस्य तु तदुत्तरात्कर्तव्येऽनुज्ञाने पश्चात्प्रयोगस्यादिति मन्त्रपाठक्रमो बाध्येत। अतो मन्त्रद्वयमिद यथापाठमेवान्यतरत्र प्रयोक्तव्यम्। तत्रोपहूत इत्यस्यानुज्ञापने विशेषेण प्रतिपादनमुखेन समावेश। तथोपह्वयस्वेत्यस्यानुज्ञाने विनियोगबलादैन्द्रीन्यायेन व्यत्ययमाश्रित्यानुजानीयामित्यर्थाश्रयणेन समावेश। एवञ्च लिङ्गमनुगृह्यते पाठश्च। तथाच मन्त्रद्वयमेकत्र प्रयोक्तव्यम् अन्यत्र तु लौकिकोपाय आश्रयणीय। अथवा प्रतिप्रधान गुणावृत्तेर्न्याय्यत्वादुभयमुभयत्रेति प्राप्ते, सिद्धान्तयति—

**तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥**

तत्र—तयोर्मन्त्रयोर्मध्ये "उपहूत" इति मन्त्रेण प्रतिवचनम्—अनुज्ञानं कर्तव्यम्। [2]कुत ? अर्थात्—सामर्थ्यानुसारात्। एवञ्च परिशेषाद् 'उपह्वयस्व' इति मन्त्रेणानुज्ञापनं कर्तव्यमित्युक्तप्रायम्। 'उपहूत' इत्यस्य विशेषणमुखेनानुज्ञापन-

1 ॰बाध्यत्वात्, क. 2 कुत नास्ति. ग.

अथ सिद्धान्तयति—

## होता वा मन्त्रवर्णात् ॥ ३७ ॥

वाशब्द एवार्थे । होता—वषट्कर्तैव प्रथमं भक्षयेत्, ततो होमाभिषवकर्ता। कुतः ? मन्त्रवर्णात्—"ग्रावाणस्सुकृतस्सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत" इति मन्त्रलिङ्गात् । ग्रावाणस्सुकृत—शोभनं कुर्वाणा:, सुकृत्यया—सुकर्मणाभिषवेण, होतुश्चित् होतुरपि पूर्वे हविरद्य—सोमभक्षणम्, आशत—प्राप्नुवन् इति तदर्थः। अत्र होतुरपि पूर्वमित्युक्त्या सर्वापेक्षया पूर्वं ग्राव्णा सोमभक्षणं ततो होतुः तत इतरेषामित्यवगम्यते ॥

इतोऽप्येवमित्याह—

## वचनात् ॥ ३८ ॥

"वषट्कर्तुः प्रथमभक्ष" इति वचनादपि वषट्कर्तैव प्रथमं भक्षं लभते। न च चमसिभ्यः पूर्वं वषट्कर्ता भक्षयतीत्येतदर्थं इति वाच्यम् । 'हुत्वा भक्षयति' इति क्त्वाप्रत्ययस्य पूर्वकालतामात्रविषयतया तदव्यवहितस्य न्यायतः कल्प्यत्वेन तदनुसारेण प्रथमपदस्याविशेषेण प्रवृत्तस्य चमसिमात्रापेक्षया सङ्कोचायोगात् ॥

युक्त्यन्तरमाह—

## कारणानुपूर्व्याच्च ॥ ३९ ॥

"वषट्कृते जुहोति" इति वचनादादौ वषट्कारः प्रथमं क्रियते पश्चाद्धोमः। अतो निमित्तक्रमादपि वषट्कर्तुः प्राथम्यम् । यद्यपि वषट्कारात्पूर्वमेवाभिषवो भवति, तथापि न दोषः । न ह्यभिषव एव निमित्तम्, किन्तु स च होमश्च द्वयं समुदितं निमित्तमिति षष्ठस्य चतुर्थे 'होमाभिषवभक्षणञ्च तद्वत्' इत्यत्र वक्ष्यते ॥

इत्येकादशं भक्षकर्तृव्यवस्थाधिकरणम् ॥ ११ ॥

१२

## वचनादनुज्ञातभक्षणम् ॥ ४० ॥

"नानुपहूतेन सोमं पातवै" इति वचनादनुज्ञातस्यैव भक्षणमित्यर्थः । पातवै—पातव्यं । कृत्यार्थे तवै प्रत्ययः। अनुज्ञातेत्यनेन उपपूर्वो ह्वयतिरनुज्ञानार्थ इति सूचितम् । उत्तरविवक्षार्थमेतत्सूत्रम् ॥

निषद्य यजति" इति वचनात्पुनर्होतुरपनीता पच्चे यजमानेऽवतिष्ठते। होतुर्धिष्णियस्य पश्चादुपविश्येत्यर्थ.। तत्र यदा यजमानप्रेषितो होता याज्यां वदति तदा होतुरेव वषट्कर्तृत्वाद्भक्ष इत्यविवादम्। यदा तु यजमानो याज्या वदति तदा होतुर्भक्षोऽस्ति नास्तीति संशये, पूर्वपक्षयति—

## याज्यापनये नापनीतो भक्षः प्रवरवत् ॥ ४४ ॥

होतुस्सकाशाद्याज्याया अपनये सत्यपि भक्षो नापनीतस्स्यात्, भक्षनिमित्तस्य वषट्कारस्य होतुस्सकाशादपनयाभावात्। न हि वषट्कारो याज्यान्तर्भूता, "याज्याया अधि वषट्करोति" इति वचनात्। प्रवरवत्; यथा होतुस्सकाशाद्याज्याया अपनयेऽपि "इन्द्र होत्रा सजूर्दिव आपृथिव्यासौ मानुषः इति होतारं वृणीते" इति ऋत्विग्याज्यार्थवरणलक्षण. प्रवरो नापनीतस्तद्वत् वषट्कारस्तन्निमित्तश्च[1] भक्षो नापनीत। सूत्रे भक्षग्रहणं वषट्कारस्याप्युलक्षणम् ॥

अथ सिद्धान्तयति—

## यष्टुर्वा कारणागमात् ॥ ४५ ॥

यष्टु—यजमानस्यै याज्याप्रयोक्तुरेव भक्षो भवति। कुतः? कारणागमात्—"याज्याया अधिवषट्करोति" इति वचनेन याज्याप्रयोक्तुरेव वषट्कारस्यागमात् प्राप्ते। न च यजमानप्रयुक्ताया याज्याया उपरि होता वषट्करोतीति युक्तम्, 'सन्ततमृचा वषट्कर्तव्यम्' इति विरोधात्। न हि पुरुषभेदे याज्यावषट्कारयोस्सान्तत्यं सम्भवति। अविच्छिन्न प्रयोक्तुमेव हि सान्तत्यम्। याज्यामात्रञ्च ब्रुवन् यजमान उपरतप्रयत्नस्स्यात्। किञ्च 'स्वयं यजति' इति यजमानस्य प्रदानार्थवषट्कारार्थकयाज्याप्रयोक्तृत्व श्रुतम्। केवलयाज्याप्रयोक्तृत्वे प्रदानार्थकयजेस्तत्र जहत्स्वार्थलक्षणाप्रसङ्गात्। तस्माद्याज्याप्रयोक्तुर्यजमानस्यैव वषट्कारो भक्षश्च ॥

प्रवरवदित्यत्राह—

## प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥

"इन्द्रं होत्रा" इति प्रवरो न केवलमेतद्याज्यार्थः, किन्तु तन्त्रेण सकलसौमिकहोत्रीययाज्यार्थतया प्रवृत्तः। अतो याज्यायामस्यां होतुस्सकाशादपनीतायां

---

1. तन्निमित्तभक्षश्च. ग.

परत्वेऽजहत्स्वार्था वृत्तिराश्रिता स्यात्। 'उपह्वयस्व' इत्यस्य तु विशेष्यपरित्यागेनानुज्ञापरत्वे स्वार्थैकदेशत्यागात् जहत्स्वार्था वृत्तिराश्रिता स्यात्। अतो यथालिङ्गं विभज्य विनियोग'। यत्तु पाठक्रमो बाध्यत इति तत्राप्येतदेव सूत्रमुत्तरम्। अर्थक्रमेण[1] पाठक्रमं बाधित्वा यथालिङ्गमेव विनियोग इत्यर्थः ॥

इति द्वादशं भक्षस्यानुज्ञानानुज्ञापनाधिकरणम् ॥ १२ ॥

१३

तदेतत् 'होतरुपह्वयस्व' इत्यनुज्ञापनं भक्षयित्रा कर्तव्यमित्यविवादम्। तत्र किं यं कञ्चिदनुज्ञापयेत्, 'उपहूत' इत्यनुज्ञानञ्च यः कश्चित्कुर्यादित्यनियमः ? उतैकस्मिन् पात्रे यावन्तो भक्षयन्ति तावन्तोऽभ्यनुजानीयु'—एको द्वौ बहवो वा ? इति संशये, मन्त्रलिङ्गकल्पितानुज्ञापनविधेरेकमेवानुज्ञाप्यमादाय चरितार्थत्वाददृष्टार्थत्वाच्चानुज्ञापनानुज्ञानयोर्यं कञ्चिदेकमनुज्ञापयेत्। स एवैकोऽनुजानीयाच्चेति प्राप्ते, सिद्धान्तयति —

**तदेकपात्राणां समवायात् ॥ ४३ ॥**

तदनुज्ञापनमनुज्ञानञ्च, एकपात्राणाम्—एकं भक्षणपात्रं येषां त एकपात्राः। एकस्मिन् पात्रे भक्षयितार, तत्कर्तृकं भवति। कुत ? समवायात्—एकपात्रभक्षयितृकर्तृकयोरेवानुज्ञापनानुज्ञानयोः प्रयोजनेन संयोगात्। तथाहि–एकपात्रस्थशेषः 'समं स्यादश्रुतत्वात्' इति न्यायेन [2]समशो भक्षणीय, न्यूनाधिकभावस्तु तत्रावर्जनीय। तन्मर्षणायानुज्ञापनं क्रियते। तस्मादेकपात्रे बहूनां भक्षणे सर्वे भक्षयितारोऽनुज्ञाप्या। एवञ्चैकस्मिन्नेव समये नानापात्रेषु बहुभिर्भक्ष्यमाणेषु, तथैकस्मिन् पात्रे एकेनैव भक्ष्यमाणेऽपि नानुज्ञापनमनुज्ञानञ्चेति स्थितम् ॥

इति त्रयोदशमेकपात्राणानुज्ञापनाधिकरणम् ॥ १३ ॥

१४

ज्योतिष्टोमे सन्ति ऋतुग्रहा। तत्र होतृवेदसमाख्याते ऋग्वेदे काचिद्याज्या पठिता—"अग्निं गृहपतिम्" इत्यादि। सा तावत्समाख्यया होतारं प्राप्ता। "अग्निं गृहपतिमिति यजमानस्य याज्या" इति वचनाद्धोतुरपनीता यजमानं प्राप्ता। "सोऽभिप्रेष्यति होतरेतद्यज" इति यजमानसम्प्रैषात् पुनर्होतारं प्राप्ता। "स्वयं

---

1. अर्थक्रमात्. क. 2. समांशो. क

क्षणसम्बन्धाद्यागसाधनत्वमुन्नेयेतेति निरस्तम् । "यदि सोमं विभक्षयिपेत्" इत्यनेन[1] हि यागीयसोमभक्षप्रत्याम्नायत्वं फलचमसभक्षस्यावगतम् । अतस्तथाविधभक्षण-सम्बन्धात् यागीयत्वं तस्योन्नेतुं शक्यते । तत्र भक्षसम्बन्धादुन्नीतं यागसाधनत्व-मेव [2]विधेयम् । फलचमसस्य नैमित्तिकतया सोमरसविकारत्वेन चोदकतो भक्षस्य प्राप्तत्वादनुवाद इति न वाक्यभेदः ॥

इतोऽप्येवमित्याह—

## होमात् ॥ ४९ ॥

"यदाऽन्यांश्चमसाञ्जुह्वत्यथैतस्य दर्भतरुणकेनोपहत्य जुहोति" इति होमा-नुवादाद्यागो गम्यते, होमस्य यागाविनाभावात् । ननु 'स्वय वा निषद्य यजति" इति वषट्कारनिमित्तो यजमानऋतुग्रहभक्षोऽस्तीति पूर्वाधिकरणे स्थितम् । ततश्च तद्यागसाधनत्वमपि न्यग्रोधस्तिभिनीनां कुतो न स्याद् इत्यत्राप्येतदेव सूत्रमुत्तरम् । 'हुदानादनयो.' इति हुधातुर्भक्षणेऽपि वर्तते । ततश्च होमादिति सूत्रस्य ऋतुग्रह-पात्रे बहूनां भक्षणादित्यर्थः । एकमेव हि ऋतुग्रहपात्रमध्वर्युप्रतिप्रस्थातारौ होत्रा-दयश्च भक्षयन्ति । तेषाञ्च सोम एव भक्ष्य· । एवञ्च भूयोऽनुग्रहन्यायाद्यजमान-स्यापि तत्र सोमभक्ष एव युज्यत इति न तत्र स्तिभिनीनां यागसाधनत्वम् ॥

इतोऽपि फलचमसो यागविषये सोमचमसप्रत्याम्नाय इत्याह—

## चमसैस्तुल्यकालत्वात् ॥ ५० ॥

"यदान्यांश्चमसानुन्नयत्यथैतञ्चमसमुन्नयति" इति यागीयचमसान्तरैस्सह फलचमसस्योन्नयनमेककर्तृक श्रुतम् । अतोऽपि तस्य यागसाधनत्वमनुमिमीमहे, चमसमात्रविषयत्वञ्च ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ५१ ॥

पूर्वपक्षे तावत् भक्षणमिद न फलचमससंस्कार भूतभाव्युपयोगाभावात् । अतस्सकृद्धोमवदारादुपकारकमेवेद फलचमसभक्षण वाच्यम् । सोमभक्षणन्तु कृत-यागकार्यसोमप्रतिपत्त्यर्थम् । अतो भिन्नकार्यत्वान्न फलचमसस्सोमभक्ष निवर्तयेत् । ततश्च "न सोमम्" इत्यनुवादो नावकल्पेत । न च "न सोमम्" इति नानुवाद.,

---

1. इति हि ग　　2. विधेयस्तद्विपयिवोच इति ग पुस्तकेऽशुद्ध पाठ.

यजमानं प्राप्ताया तदर्थं यजमानवरणावश्यम्भावेऽपि तदितरसकलयाज्यार्थं होतुरपि वरणस्यावश्यम्भावान्न तस्य होतुस्सकाशादपनय इति वैषम्यमित्यर्थः ॥

इति चतुर्दश स्वयंयष्टुर्भक्षाधिकरणम् ॥ १४ ॥

१५

ज्योतिष्टोमे श्रूयते—"यदि राजन्यं वैश्यं वा याजयेत्स यदि सोम विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति। न्यग्रोधस्तिभिनी–न्यग्रोधफलस्तबकान्, सम्पिष्य–सूक्ष्म पिष्ट्वा, दधन्युन्मृज्य सङ्कलय्य, स्पष्टमन्यत्। सोऽयं फलचमस केवल सोमभक्षप्रत्याम्नायः भक्षार्थो यजमानस्य, यागार्थस्तु यजमानचमसोऽस्त्येव ? उत यजमानचमसस्यैवायं फलचमस प्रत्याम्नाय., नास्त्येवान्यो यजमानचमस', तत्स्थाने फलचमसेन यष्टव्यम् ? इति संशये, पूर्वपक्षयति—

**चमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥**

दधिसंसृष्टन्यग्रोधफलपिष्टद्रवपूर्णश्चमस फलचमस.। स च यजमानस्य राजन्यत्वे वैश्यत्वे च निमित्ते विहित.। स भक्षविकार –भक्ष सोमभक्षण विकरोति बाधत इति भक्षविकार'। सोमभक्षमात्रविषये सोमचमसप्रत्याम्नाय. न त्विज्याया इति यावत्। कुत ? श्रुतिसयोगात्–विभक्षयिषेत् भक्ष प्रयच्छेत् इति सोमभक्षणकार्यकारित्वश्रवणेन फलचमसस्य सयोगात्, यजतेश्च तत्राश्रवणात्। तस्माद्यजमानस्य केवल सोमभक्षप्रत्याम्नायो भक्षार्थ[1] फलचमस। इज्यार्थस्तु यजमानसोमचमसोऽस्त्येव। तस्य तु वषट्कर्तृभक्षणमेव प्रतिपत्ति ॥

अथ सिद्धान्तयति—

**इज्याविकारो वा संस्कारस्य तदर्थत्वात्।**

वाशब्दोऽवधारणे। इज्याविषय एवाय फलचमसो यज [illegible] म्नाय, न तु भक्षणमात्रे। कुत. ? सस्कारस्य तदर्थत्वात्– [illegible] पत्तिविधया यागार्थत्वात्। प्रतिपत्तिरू[illegible]भणस्य य [illegible] यजेरश्रवणाद्यागार्थत्वमेव फलचमर [illegible] येन तस्य य

1, भक्षणार्थं. ग,

क्षणसम्बन्धाद्यागसाधनत्वमुन्नीयेतेति निरस्तम्। "यदि सोमं विभक्षयिषेत्" इत्यनेन[1] हि यागीयसोमभक्षप्रत्याम्नायत्वं फलचमसभक्षस्यावगतम्। अतस्तथाविधभक्षणसम्बन्धात् यागीयत्वं तस्योन्नेतुं शक्यते। तत्र भक्षसम्बन्धादुन्नीतं यागसाधनत्वमेव [2]विधेयम्। फलचमसस्य नैमित्तिकतया सोमरसविकारत्वेन चोदकतो भक्षस्य प्राप्तत्वादनुवाद इति न वाक्यभेदः॥

इतोऽप्येवमित्याह—

## होमात्॥ ४९॥

"यदाऽन्यांश्चमसाञ्जुह्वत्यथैतस्य दर्भतरुणकेनोपहत्य जुहोति" इति होमानुवादाद्यागो गम्यते, होमस्य यागाविनाभावात्। ननु 'स्वय वा निषद्य यजति" इति वषट्कारनिमित्तो यजमानऋतुग्रहभक्षोऽस्तीति पूर्वाधिकरणे स्थितम्। ततश्च तद्यागसाधनत्वमपि न्यग्रोधस्तिभिनीना कुतो न स्याद् इत्यत्राप्येतदेव सूत्रमुत्तरम्। 'हुदानादनयो.' इति हुधातुर्भक्षणेऽपि वर्तते। ततश्च होमादिति सूत्रस्य ऋतुग्रहपात्रे बहूनां भक्षणादित्यर्थः। एकमेव हि ऋतुग्रहपात्रमध्वर्युप्रतिप्रस्थातरौ होत्रादयश्च भक्षयन्ति। तेषाञ्च सोम एव भक्ष्य। एवञ्च भूयोऽनुग्रहन्यायाद्यजमानस्यापि तत्र सोमभक्ष एव युज्यत इति न तत्र स्तिभिनीनां यागसाधनत्वम्॥

इतोऽपि फलचमसो यागविषये सोमचमसप्रत्याम्नाय इत्याह—

## चमसैस्तुल्यकालत्वात्॥ ५०॥

"यदान्यांश्चमसानुन्नयत्यथैतञ्चमसमुन्नयति" इति यागीयचमसान्तरैस्सह फलचमसस्योन्नयनमेककर्तृकं श्रुतम्। अतोऽपि तस्य यागसाधनत्वमनुमिमीमहे, चमसमात्रविषयत्वञ्च॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च॥ ५१॥

पूर्वपक्षे तावत् भक्षणमिद न फलचमससंस्कार भूतभाव्युपयोगाभावात्। अतस्सक्तुहोमवद्वारादुपकारकमेवेद फलचमसभक्षण वाच्यम्। सोमभक्षणन्तु कृतयागकार्यसोमप्रतिपत्त्यर्थम्। अतो भिन्नकार्यत्वान्न फलचमसस्सोमभक्ष निवर्तयेत्। ततश्च "न सोमम्" इत्यनुवादो नावकल्पेत। न च "न सोमम्" इति नानुवाद.,

---

1. इति हि ग  2. विधेयस्तद्विषयिणीच इति ग पुस्तकेऽशुद्ध पाठ.

यजमानं प्राप्तायां तदर्थं यजमानवरणावश्यम्भावेऽपि तदितरसकलयाज्यार्थं होतुरपि वरणस्यावश्यम्भावान्न तस्य होतुस्सकाशादपनय इति वैषम्यमित्यर्थः ॥

इति चतुर्दश स्वयंयष्टुर्भक्षाधिकरणम् ॥ १४ ॥

१५

ज्योतिष्टोमे श्रूयते—"यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति । न्यग्रोधस्तिभिनो—न्यग्रोधफलस्तबकान्, सम्पिष्य—सूक्ष्मं पिष्ट्वा, दधन्युन्मृज्य सङ्कलय्य, स्पष्टमन्यत् । सोऽयं फलचमस केवल सोमभक्षप्रत्याम्नायः भक्षार्थो यजमानस्य, यागार्थस्तु यजमानचमसोऽस्त्येव ? उत यजमानचमसस्यैवायं फलचमस प्रत्याम्नाय, नास्त्येवान्यो यजमानचमस, तत्स्थाने फलचमसेन यष्टव्यम् ? इति संशये, पूर्वपक्षयति—

**चमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥**

दधिसमृष्टन्यग्रोधफलपिष्टद्रवपूर्णश्चमस फलचमस । स च यजमानस्य राजन्यत्वे वैश्यत्वे च निमित्ते विहित.। स भक्षविकार'—भक्ष सोमभक्षण विकरोति बाधत इति भक्षविकारः । सोमभक्षमात्रविषये सोमचमसप्रत्याम्नाय न त्विज्याया इति यावत् । कुत ? श्रुतिसंयोगात्—विभक्षयिषेत् भक्षं प्रयच्छेत् इति सोमभक्षणकार्यकारित्वश्रवणेन फलचमसस्य सयोगात्, यजतेश्च तत्राश्रवणात् । तस्माद्यजमानस्य केवल सोमभक्षप्रत्याम्नायो भक्षार्थ [1] फलचमस । इज्यार्थस्तु यजमानसोमचमसोऽस्त्येव । तस्य तु वषट्कर्तृभक्षणमेव प्रतिपत्ति ॥

अथ सिद्धान्तयति—

**इज्याविकारो वा ॰ ारस्य तदर्थत्वात् ॥ ४८ ॥**

वाशब्दोऽवधारणे । इज्याविषय एवाय फलचमसो यजमानसोमचमसप्रत्याम्नाय, न तु भक्षणमात्रे । कुत. ? सस्कारस्य तदर्थत्वात्—भक्षणरूपसस्कारस्य प्रतिपत्तिविधया यागार्थत्वात्। प्रतिपत्तिरूपभक्षणस्य यागाविनाभूतत्वादिति यावत्। एतेन यजेरश्रवणाद्यागार्थत्वमेव फलचमसस्यासिद्धम्, येन तस्य यागार्थद्रव्यसस्काररूपभ-

1. भक्षणार्थं . ग.

अथ सिद्धान्तयति—

ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

वाशब्दोऽवधारणे। यजमानचमसमपि ब्राह्मणा एव भक्षयेयुः। कुतः? तुल्यशब्दत्वात्—"शत ब्राह्मणाः पिबन्ति" इति लटो लेड्रूपकल्पनया अनुप्रसर्पेयुरिति लिङ्प्रत्ययान्तेन तुल्यशब्दत्वात्। "समिधो यजति" इत्यादिवद्विधायकत्वादिति यावत्। तत्र दशदशेति विधिलब्धा शतसङ्ख्यामनूद्य ब्राह्मणा इति तदाश्रयविधि। ततश्च यजमानचमसे राजन्यजातिर्निवर्तते। 'सोमम्' इति 'भक्षयन्ति' इति चार्थप्राप्तमिति न विशिष्टोद्देश। दश दशैकैकञ्चमसमित्येवं ये सोमस्य भक्षयितारस्ते ब्राह्मणा इति वचनव्यक्ति। दश दशैकैकञ्चमसमिति दशत्वसङ्ख्याविधि, एकैकमित्यादिरनुवाद इत्युक्तमेव। एवञ्चोभयोरपि वाक्ययोर्विधायकत्वादर्थवत्त्व लभ्यते, ब्राह्मणशब्दे च लक्षणा नाश्रिता भवति। शतं ब्राह्मणा इति च कृत्स्नमेव वाक्यमनुवादकञ्चेदनर्थकमेव स्यात्। एवञ्च दश ब्राह्मणा एव यजमानचमस भक्षयेयु। तेनैव च नैराकाङ्क्ष्यान्न यजमानभक्ष, प्रकृतावब्राह्मणस्य सोमभक्षप्रतिषेधाच्च॥

इति षोडशमनुप्रसर्प्यधिकरणम् ॥ १६ ॥

इत्यध्वरमीमांसाकुतूहलवृत्तौ तृतीयाध्यायस्य पञ्चमः पादः ॥



किन्तु प्रतिषेधविधिरेवायमिति वाच्यम्। फलचमसभक्षणस्य सोमभक्षप्रतिषेधस्य च विधौ वाक्यभेदात्, अनेकादृष्टकल्पनापाताच्च। सिद्धान्ते तु फलचमसस्य यागसाधनत्वात्तस्य च सोमचमसविकारत्वाद्यजमानचमसयागप्रयुक्त भक्षण तस्यैव प्राप्तम्, न तु सोमस्य, उन्नयनाभावात्। ततश्च "न सोमम्" इत्यनुवादादपि लिङ्गात् फलचमस इज्याविकारः॥

## इति पञ्चदश फलचमसाधिकरणम् ॥ १५ ॥

## १६

अस्ति राजसूये दशपेयो नाम सोम.। तत्र श्रूयते—"शत ब्राह्मणा. पिबन्ति दश दशैकैक चमसमनुप्रसर्पेयु" इति। भक्षार्थं गच्छेयुरित्यर्थ.। तत्र किं यजमानचमसोऽपि ब्राह्मणैरेव दशभिर्भक्षयितव्य॰ ? उत राजन्यैः ? इति सशये, पूर्वपक्षयति—

## अनुप्रसर्पिषु मान्यात् ॥ ५२ ॥

अनुप्रसर्पेयुरिति विहितभक्षयितृषु मध्ये राजन्या एव यजमानचमसं भक्षयेयुः। कुत ? सामान्यात्—"राजा राजसूयेन यजेत" इति यजमानान्यस्य राजन्यत्वं प्राप्तम्। एकत्वन्तु चोदकत प्राप्तम। तत्र दशत्व विधीयमानं तुल्यजातीयत्वादेकत्वमेव बाधते, न तु जातिमपि। ततश्चानिवृत्तराजन्यजातिरेव यजमानचमसो दशत्वसङ्ख्यया युज्यत इति दश राजन्यास्तं भक्षयेयुः। "शतं ब्राह्मणा." इति ब्राह्मणशब्दस्तु ॰ ? न्यायेन राजन्येष्वपि लाक्षणिक। अनुवादत्वाच्च लक्षणा न दुष्यति। "शत ब्राह्मणा." इति हि "दश दशैकैकश्चमसम्" इति विधिलभ्यसमस्तसङ्ख्यानुवाद। न च "शत ब्राह्मणाः" इत्येव विधिः। ततश्च 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रतिचमस दशसङ्ख्याप्राप्तेः दशेति वाक्यमेवानुवाद॰ किं न स्यादिति वाच्यम्, 'अनुप्रसर्पेयु' इति विधिप्रत्ययश्रवणेन दशदशेति वाक्यस्यैव विधित्वात्। पिबतेर्वर्तमानापदेशेन "शत ब्राह्मणाः" इत्यस्यानुवादत्वात्। तत्र चमसमित्युद्दिश्य दशेति विधीयते, अनुप्रसर्पणमनूद्यते। अतश्चमसविशिष्टानुप्रसर्पणस्योद्देश्यत्वाभावान्न विशिष्टानुवाददोष। तथाच प्रत्युद्देश्य वाक्यपरिसमाप्तिन्यायेन प्राप्तार्थत्वाद्दश दशेति वीप्सा एकैकमिति चानुवाद इति नानेकविधिप्रयुक्तवाक्यभेदः। तस्मादिह राजन्या एव यजमानचमस भक्षयेयु.॥

प्रापयति। कुतः ? वचनप्राप्ते.—प्रत्यक्षस्यानारभ्यवचनस्यानुमानिकातिदेशप्रवृत्तेः प्रागेव विकृतिषु प्राप्तत्वेन तत्रातिदेश[1] प्रवृत्तेरनारभ्यविहितव्यतिरिक्तविषयत्वावश्यम्भावात्[2]।

नन्वेवं सति विकृतिषु प्रत्यक्षानारभ्यविहितैरेवोपकारकाकांक्षाशान्तौ तत्र प्रयाजादयो न प्राप्नुयुः। ततश्च सौर्येष्टौ "प्रयाजे प्रयाजे कृष्णलाञ्जुहोति" इति प्रयाजानुवादो नोपपद्येत। अतः प्रकृत्यर्थ एवानारभ्यवाद इति सिद्धान्तिन पूर्वपक्षी निराचष्टे—

## दर्शनादिति चेन्न चोदनैकार्थ्यात् ॥ ४ ॥

क्वचिद्विकृतौ प्रयाजानुवाददर्शनात् प्रकृत्यर्थोऽनारभ्यवाद इति चेत्—न, कुत ? चोदनैकार्थ्यात्। अनारभ्यवादेन प्राकरणिकविधिभिश्च चोद्यन्ते [3]प्रत्यक्षमुपदिश्यन्त इति चोदना—खादिरत्वादयः प्रयाजादयश्च। तदुभयेषामैकार्थ्यात्—[4]भिन्नकार्यत्वात्। एकशब्दोऽन्यपर्याय। 'एके मुख्यान्यकेवला' इति कोशः। एककार्यत्वे सत्येव वैकृतैरङ्गै प्राकृताङ्गानि बाध्यन्ते। यथा शरै कुशादय। न[5] तु भिन्नकार्यत्वेऽपि। अन्यथाऽऽ[6]मनहोमादिभिरपि वैकृतैरङ्गै प्राकृतानि प्रयाजाद्यङ्गानि बाध्येरन्। तथा च सौर्येष्टौ प्रयाजदर्शनस्य न विरोधः।

यद्वा—अनारभ्यविहितैश्चोदकप्राप्ता न बाध्यन्ते। कुत. ? चोदनाया अनारभ्यविधेः ऐकार्थ्यात्—[7]एकविधेयकत्वात्। खादिरादिवाक्येषु प्राप्त[8]स्रुवाद्युद्देशेन खादिरत्वादि [9]विधीयते, न तु स्रुवाद्यपि, वाक्यभेदप्रसङ्गात्। स्रुवादि च प्रकृतावुपदिष्टम्, न तु विकृतिषु। अनारभ्यवादश्च प्रकृतिविकृतिसाधारण्येन स्रुवाद्युद्दिश्य खादिरादि[10] प्रत्यक्षमुपदिशन् विकृतिषु स्रुवाद्यपश्यन्[11] तत्प्राप्तेरतिदेशाधीनत्वादुद्देश्यस्रुवादिविधे[12]रतिदेशमनुमन्यमान[13] एकदेशानुमत्या सर्वाङ्गविषयमतिदेशमनुमन्यत इति न सौर्येष्टौ प्रयाजादिदर्शनविरोधः। स च सर्वाङ्गविषयमतिदेशमनुमन्यमानो विकृतिषु स्वप्रवृत्ते द्विरुक्तदोष पर्यालोच्य स्वविधेयखादिरत्वादिव्यति-

---

1. प्राप्ते. क. 2 विषयत्वाभावात्. 3. प्रत्यर्थम् ख. 4. न भिन्नकार्यत्वात् अ. 5. न हि. ख. 6 क्रमनहोमादि अ 7. एकविधायकत्वात् क. 8 स्रुवादिको. ख, ग. 9 खादिरत्वादिर्विधी. क. 10 खादिरत्वादि. ख, ग. 11. स्रुवाद्यप्युपदिशन्. ग. 12. स्रुवादिविषये. क, ख. 13. अनुमन्यमान. ग.

# षष्ठः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अनारभ्याधीतहिरण्यभरण-[1]जयहोमा-श्वप्रतिग्रहेष्टि-पानव्या[2]पद्विचारे प्रस्तुते तत्र सोमवमनप्रसङ्गागतह[3]विश्शेषविचारे च वृत्ते सति षष्ठे पादेऽस्मिन् स एवानारभ्याधीतविचारः प्राधान्येन प्रस्तूयते ।

"यस्य खादिरः स्रुवो भवति, यस्य पर्णमयी जुहूर्भवति" इत्याद्यनारभ्याम्नानं प्रकृतिविकृतिसाधारणम् ? [4]प्रकृतिमात्रविषयं वा ? इति संशये पूर्वपक्षयति—

**सर्वार्थमप्रकरणात् ॥ १ ॥**

खादिरत्वाद्याम्नानं सर्वार्थम्—प्रकृतिविकृत्यर्थम् । कुतः ? अप्रकरणात्—प्रकरणविशेषाभावात् ।

अथ सिद्धान्तयति—

**प्रकृतौ वा[5] द्विरुक्तत्वात् ॥ २ ॥**

अनारभ्याम्नानं प्रकृतिविषयमेव, न तु विकृतिविषयमपि । कुतः ? द्विरुक्तत्वात् । प्रकृतिमात्रोपदिष्टस्य खादिरत्वादेश्चोदकतो विकृतिष्वपि प्राप्तिसम्भवेन तत्र पुनरुपदेशे द्विरुक्तत्वापातात् ।

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**तद्वर्जनन्तु ... तेः[6] ॥ ३ ॥**

तुः प्रत्यवस्थाने । अनारभ्याम्नानं विकृत्यर्थमप्यस्तु । न च द्विरुक्तिदोषः । हि यतः, तद्वर्जम् अनारभ्यविहितवर्जं प्रकरणाम्नात[7]प्रयाजादिकमेव चोदक

---

1. जयादि. ख 2 विपद्. ख 3 हविर्विचारे क, ग 4. क्रममात्र विषय भ. 5. वाऽद्विरुक्तत्वात्. 6. प्राप्ते. क, ख. भाष्यसम्मतोऽप्ययमेव पाठः । 7. प्रकरणाम्नात. क, ख

प्रापयति। कुतः ? वचनप्राप्ते.—प्रत्यक्षस्यानारभ्यवचनस्यानुमानिकातिदेशप्रवृत्तेः प्रागेव विकृतिषु प्राप्तत्वेन तत्रातिदेश[1] प्रवृत्तेरनारभ्यविहितव्यतिरिक्तविषयत्वावश्यम्भावात्[2]।

नन्वेवं सति विकृतिषु प्रत्यक्षानारभ्यविहितैरेवोपकारकाकांक्षाशान्तौ तत्र प्रयाजादयो न प्राप्नुयु। ततश्च सौर्येष्टौ "प्रयाजे प्रयाजे कृष्णलाञ्जुहोति" इति प्रयाजानुवादो नोपपद्येत। अत. प्रकृत्यर्थ एवानारभ्यवाद इति सिद्धान्तिनं पूर्वपक्षी निराचष्टे—

## दर्शनादिति चेन्न चोदनैकार्थ्यात् ॥ ४ ॥

क्वचिद्विकृतौ प्रयाजानुवाददर्शनात् प्रकृत्यर्थोऽनारभ्यवाद इति चेत्—न; कुत ? चोदनैकार्थ्यात्। अनारभ्यवादेन प्राकरणिकविधिभिश्च चोद्यन्ते [3]प्रत्यक्षमुपदिश्यन्त इति चोदना.—खादिरत्वादयः प्रयाजादयश्च। तदुभयेषामैकार्थ्यात्—[4]भिन्नकार्यत्वात्। एकशब्दोऽन्यपर्याय। 'एके मुख्यान्यकेवला' इति कोशः। एककार्यत्वे सत्येव वैकृतैरङ्गै प्राकृताङ्गानि बाध्यन्ते। यथा शरै. कुशादय। न[5] तु भिन्नकार्यत्वेऽपि। अन्यथाऽऽ[6]मनहोमादिभिरपि वैकृतैरङ्गै प्राकृतानि प्रयाजाद्यङ्गानि बाध्येरन्। तथा च सौर्येष्टौ प्रयाजदर्शनस्य न विरोधः।

यद्वा—अनारभ्यविहितैश्चोदकप्राप्ता न बाध्यन्ते। कुत. ? चोदनाया अनारभ्यविधेः ऐकार्थ्यात्—[7]एकविधेयकत्वात्। खादिरादिवाक्येषु प्राप्त[8]स्रुवाद्युद्देशेन खादिरत्वादि [9]विधीयते, न तु स्रुवाद्यपि, वाक्यभेदप्रसङ्गात्। स्रुवादि च प्रकृतानुपदिष्टम्, न तु विकृतिषु। अनारभ्यवादश्च प्रकृतिविकृतिसाधारण्येन स्रुवाद्युद्दिश्य खादिरादि[10] प्रत्यक्षमुपदिशन् विकृतिषु स्रुवाद्यपश्यन्[11] तत्प्राप्तेरतिदेशाधीनत्वादुद्देश्यस्रुवादिविधे[12]रतिदेशमनुमन्यमान[13] एकदेशानुमत्या सर्वाङ्गविषयमतिदेशमनुमन्यत इति न सौर्येष्टौ प्रयाजादिदर्शनविरोधः। स च सर्वाङ्गविषयमतिदेशमनुमन्यमानो विकृतिषु स्वप्रवृत्ते. द्विरुक्तदोष पर्यालोच्य स्वविधेयखादिरत्वादिव्यति-

---

1. प्राप्ते. क　2. विषयत्वाभावात्.　3. प्रत्यर्थम्. ख.　4. न भिन्नकार्यत्वात् अ.　5. न हि. ख.　6. क्रमनहोमादि. अ　7. एकविधायकत्वात् क.　8. स्रुवादिको. अ, ग.　9. खादिरत्वादिर्विधी. क.　10 खादिरत्वादि. ख, ग　11 स्रुवाद्यप्युपदिशन्. ग.　12. स्रुवादिविषये. क, ख.　13. अनुमन्यमानं. ग.

# षष्ठः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अनारभ्याधीतहिरण्यभरण-[1]जयहोमा-प्रतिग्रहेष्टि-पानव्या[2]पद्विचारे प्रस्तुते तत्र सोमवमनप्रसङ्गागतह[3]विश्शेषविचारे च वृत्ते सति षष्ठे पादेऽस्मिन् स एवानारभ्याधीतविचारः प्राधान्येन प्रस्तूयते ।

"यस्य खादिर स्रुवो भवति, यस्य पर्णमयी जुहूर्भवति" इत्याद्यनारभ्याम्नान प्रकृतिविकृतिसाधारणम् ? [4]प्रकृतिमात्रविषय वा ? इति संशये पूर्वपक्षयति—

**सर्वार्थमप्रकरणात् ॥ १ ॥**

खादिरत्वाद्याम्नानं सर्वार्थम्—प्रकृतिविकृत्यर्थम् । कुत. ? अप्रकरणात्—प्रकरणविशेषाभावात् ।

अथ सिद्धान्तयति—

**प्रकृतौ वा[5] द्विरुक्तत्वात् ॥ २ ॥**

अनारभ्याम्नान प्रकृतिविषयमेव, न तु विकृतिविषयमपि । कुतः ? द्विरुक्तत्वात् । प्रकृतिमात्रोपदिष्टस्य खादिरत्वादेश्चोदकतो विकृतिष्वपि प्राप्तिसम्भवेन तत्र पुनरुपदेशे द्विरुक्तत्वापातात् ।

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**तद्वचनन्तु प्रेः[6] ॥ ३ ॥**

तुः प्रत्यवस्थाने । अनारभ्याम्नान विकृत्यर्थमप्यस्तु । न च द्विरुक्तिदोष । हि यत', तद्वर्जम् अनारभ्यविहितवर्जं प्रकरणाम्नात[7]प्रयाजादिकमेव चोदक.

1. जयादि. ख. 2. विपद् ख 3 हविर्विचारे. क, ग. 4. क्रममात्र विषय अ. 5 वाऽद्विरुक्तत्वात्. 6. प्राप्ते. क, ख. भाष्यसम्मतोऽप्ययमेव पाठ । 7. त्स्मात. क, ख

व्यतिरिक्तपदार्थेष्वेव चोदकाश्रयणात्तद्वर्जं प्राप्तिर्युज्येत[1]। नैवमस्ति, तत्तत्पदार्थसाध्यस्य[2] दृष्टादृष्टावान्तरव्यापारनिचयात्मकाखण्डस्योपकारस्या[3]तिदेश इति दशमे (छि) वक्ष्यमाणत्वात्[4]। न चैवमपि पदार्थानां प्रत्येकमुपकारविशेषणतया चोदकस्य [5]कतिपयपदार्थवर्जं प्रवृत्तिस्सम्भवतीति वाच्यम्, समुच्चितानामेव पदार्थानामुपकारविशेषणत्वस्य वक्ष्यमाणत्वात्। ततश्चानारभ्यविहितवर्जं चोदक[6] प्रापयतीत्यनुपपन्नम्। यदप्युक्तम्—चोदकप्रवृत्ते प्रागेव प्रत्यक्षमनारभ्यवचनं प्रवर्तत इति, तदप्यसिद्धमित्याह–मुख्यस्य विप्रतिषेधादिति। [7]मुख्यस्य–प्रथमप्रमाण[8]प्रत्यक्षस्याप्यनारभ्यवादस्य, विप्रतिषेधात्–अतिदेशप्रवृत्ते. प्राक्प्रवृत्तिविरोधात्। प्रत्यक्षानुमानयोर्हि शीघ्रमन्थरप्रवृत्तिकृत बलाबलम्। इह च प्रत्यक्षस्याप्यनारभ्यवादस्य स्रुवादिप्राप्तिसापेक्षत्वान्न शीघ्रप्रवृत्ति, किन्तु स्रुवादिप्राप्तिमुपजीव्यैव प्रवृत्तिरित्यनुमानस्यैव शीघ्र प्रवृत्ति। ततश्च प्रत्यक्षस्या[9]प्यनारभ्यवादस्य चोदकबाधकत्वासम्भवान्न प्रत्याम्नायप्रतिषेधद्वारलोपस्थल[10] इव चोदकस्य तस्य[11] तद्व्यतिरिक्तपदार्थेषु पर्यवसानम्। एवञ्च यस्यानारभ्यवादस्यातिदेशिकपदार्थानपेक्षत्व तत्र प्रत्यक्षस्य तस्य शीघ्रप्रवृत्तेः प्रकृतिविकृतिसाधारण्यमेव। यथा—"अग्निष्टोमे प्रवृणक्ति' इत्यादौ। न हि तत्र [12]विकृत्यग्निष्टोमस्यातिदेशकतास्ति। एवञ्च चोदकत एव खादिरत्वादीना विकृतौ प्रवृत्तिसम्भवादनारभ्यवादस्य विकृतिसाधारण्ये द्विरुक्तिदोषप्रसङ्गात्प्रकृतिमात्रविषयत्वमेवाश्रयणीम्। प्रयोजन पूर्वपक्षे—अनारभ्यविहितपदार्थाश्रितगुणकामाना विकृतिषु प्रवृत्ति। सिद्धान्ते त्वप्रवृत्तिरिति॥

इति प्रथम पर्णमय्यधिकरणम्॥ १॥

२

"सप्तदश सामिधेनीरनुब्रूयात्" इत्यनारभ्यवाद. प्रकृतौ निविशते? उत विकृतावेव[13]? इति सशयः। पूर्वाधिकरणन्यायात्प्रकृतिविषयत्वम्[14]। न च "पञ्चदश सामिधेनीरनुब्रूयात्" इति प्रकरणविहितपाञ्चदश्यविरोध[15] इति वाच्यम्। अत एव

1. मुच्यते अ, ग 2. साध्यदृष्ट दृष्ट ग 3 अखण्डोपकारस्य ग, घ 4 वक्ष्यते ग. 5. कतिचित् अ. 6 चोदक नास्ति. अ, ग. 7. मुख्यप्रथम अ. 8. प्रत्यक्षगोचरानारम्य क. 9. अपि नास्ति. अ, ग. 10 स्थलचोदक अ, स्थल एव. क. 11. तस्य नास्ति. अ. 12. विकृताग्नि. अ, ग. 13. एव नास्ति. अ. 14 गामित्वम्. अ, ग. 15. श्याविरोध. ख.

रिक्तसर्वाङ्गविषयमेव चोदकमनुमंन्यत इति न[1] द्विरुक्तिदोषोऽपि। तस्मात्सर्वार्थोऽनारभ्यवाद.।

ननु स्रुवादीनां [2]प्रकृतावेव प्रत्यक्षोपदेश.[3]। [4]विकृतिष्वतिदेशतस्तत्प्राप्तिः। अतः शीघ्रप्रवृत्तिकस्रुवादिद्वारा प्रकृतावन्वय एव खादिरत्वादीनां न्याय इति पुनः प्रत्यवतिष्ठमान सिद्धान्तिनं पूर्वपक्षी निराचष्टे—

## उत्पत्तिरिति चेन्न तुल्यत्वात् ॥ ५ ॥

प्रकृतावेवोत्पत्तिः—प्रत्यक्षोपदेश. स्रुवादीनाम्। अतस्तद्द्वारा प्रकृतावेवान्वयोऽनारभ्यवादस्येति चेत्—न, कुत ? तुल्यत्वात्। खादिरत्वादिविधौ हि स्रुवादिप्राप्तिरपेक्षिता[5] तच्छीघ्रत्वमकिञ्चित्करम्, अन्यथा प्रकृतावपि तन्निवेशो न स्यात्। कदाचित्कस्यचित्पुरुषस्य प्रकृतिप्रयोगसम्बन्धिस्रुवादीनामपि झटित्युपस्थित्यभावसम्भवात्[6]। यथा च या औपदेशिकी [7]आतिदेशिकी वा स्रुवादिप्राप्तिस्सा सर्वापि प्राप्तित्वेन रूपेण तुल्या। अतस्तदनुवादेन विधीयमान खादिरत्वादिक सर्वार्थमेव। तथा च यथा [8]सर्वपदार्थगोचरस्यापि चोदकस्य प्रत्याम्नानप्रतिषिद्धलुप्तद्वारान् पदार्थान् वर्जयित्वा पर्यवसानम्, [9]तथा प्रत्यक्षाम्नानखादिरत्वादिकमपि वर्जयित्वा पर्यवसानसम्भवान्न द्विरुक्तिदोष'। तदेवं [10]'तद्वर्जन्तु वचनप्राप्ते'रिति पूर्वपक्षः स्थितः।

अथ सिद्धान्ती प्रत्याचष्टे—

## [11]चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ६ ॥

[12]तुरवधारणे। प्रकृत्यर्थ एवानारभ्यवाद, न तु विकृत्यर्थोऽपि[13], द्विरुक्ति[14]दोपप्रसङ्गात्। यत्तु 'तद्वर्जन्तु वचनप्राप्ते' इति तत्राह—चोदनार्थकार्त्स्न्यादिति विकृतिषु[15] चोदकत प्रापणीय उपकार. [16]चोदनार्थ तस्य कार्त्स्न्यात् कृत्स्नपदार्थविशिष्टाखण्डोपकाररूपत्वात्। न हि प्रतिपदार्थ चोदको भिद्यते, येनानारभ्यविहित-

1. द्विरुक्त ग. 2. प्रकृतावेव नास्ति. ख 3 उपवेश ग. 4 विकृतिषु तु. ख, ग 5. अपेक्ष्यते ग. 6 उपस्थित्यसभावात् क 7 कृति ग 8 सर्वाङ्ग.ग 9. तथाच. अ. 10 तद्वर्ज्यं. अ, ग 11 चोदनार्थकार्त्स्न्यात्. ग 12. तुरेवार्थं क, ख. 13. अपि नास्ति. ग. 14. द्विरुक्त. ग. 15. विकृतिषु नास्ति. ग. 16. चोदकार्थं ग.

३

दर्शपूर्णमासयोः श्रूयते—"पञ्चदश सामिधेनीरन्वाह। सप्तदशानुब्रूयाद्वैश्यस्य" इति। तदिदं साप्तदश्यं विकृतिषु प्रकृतौ वेति संशय।

तत्र प्रकृतेः पाञ्चदश्यावरुद्धत्वात्साप्तदश्यस्यानारभ्यविहितसाप्तदश्यवद्विकृतिषूत्कर्ष.। न च विनिगमनाविरह', ब्राह्मणकर्तृकप्रकृतिप्रयोगे साप्तदश्यस्याप्रवृत्त्या तत्र निर्बाधस्यास्य पाञ्चदश्यस्य[1] लब्धात्मकताया एव विनिगमकत्वात्। अथवा द्वयोरप्यनयो पाञ्चदश्यसाप्तदश्यवाक्ययो प्रकरणाधीतत्वेन पूर्ववत्सामिधेनीशब्दे लक्षणाप्रवृत्तौ शैघ्रयमान्द्यकृतविशेषाभावात्प्रकृतौ पाञ्चदश्यसाप्तदश्ययोर्विकल्प इति प्राप्ते, सिद्धान्तयति—

**नैमित्तिकन्तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ ८ ॥**

तुर्वैषम्ये। प्रकृतेः पाञ्चदश्यावरुद्धत्वादनारभ्यविहितं[2] साप्तदश्य विकृतावेव निविशत इति[3] युक्तम्। इदन्तु नैमित्तिकं वैश्यत्वनिमित्तक साप्तदश्यं प्रकृतौ तद्विकार—तस्य पाञ्चदश्यस्य विकार—प्रत्याम्नाय' बाधकं सन्निविशते। कुत ? सयोगविशेषात्—पाञ्चदश्यसाप्तदश्ययोर्नित्यनैमित्तिकसयोगभेदात्। पाञ्चदश्यविधिस्तावत्प्रकरणाविशेषात् दर्शपूमासप्रयोगसामान्यविषय। स च विशेषविषयत्व विनाऽनुष्ठेयपर्यवसानाभावात्सामान्यमुखेन तत्तत्प्रयोगविशेषान् लक्षयित्वा पर्यवस्यति। [4]यावच्च लक्षणया वैश्यकर्तृकप्रयोगविपयीभवितुमुद्युङ्क्ते तत प्रागेव विशिष्य वैश्यशब्देन विधीयमान साप्तदश्य वैश्यकर्तृकप्रयोगे प्रवर्तत इति [5]बलवद्भवति। तथा नित्यस्य निमित्तानपेक्षतया[6] पूर्वमेव प्रवृत्ति। नैमित्तिकस्य तु निमित्तानुसन्धानसापेक्षतया[7] पश्चात्प्रवृत्ति'। तत्र निमित्तस्य प्रवृत्तिवेलाया नैमित्तिकस्यासञ्जाततया नैमित्तिकमबाधित्वैव प्रवृत्ति। नैमित्तिकन्तु नित्ये प्रतिपक्षे उत्पन्ने सति तद्विज्ञानावस्थायामेवोत्पत्तुमुद्युञ्जानं न नित्यमबाधित्वोत्पत्तुमर्हति। ततश्च—

'पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्तरोत्पादात्पूर्वाबाधेन सम्भव.॥

इत्यपच्छेदाधिकरणन्यायेन नैमित्तिक साप्तदश्य पश्चादुत्पन्नमेव बलवत्। तथाच पाञ्चदश्य [8]ब्राह्मणराजन्यविषये सावकाशम्। साप्तदश्यन्तु वैश्यादन्यत्र

1. पाञ्चदश्यलब्धा. अ, ग　2. विहितसाप्तदश्य. अ ग.　3. इत्युक्तम् अ.
4 यावल्लक्ष. ख.　5. बलात् अ.　6–7. असापेक्षत्वेन. अ　8. ब्रह्मविषये. अ.

विकल्पसम्भवात् । ननु पाञ्चदश्यं प्रकरणोपस्थितदर्शपूर्णमासात्मकक्रतुविशेष[1]-सम्बन्धितया विहितत्वात्प्रबलम् । साप्तदश्यन्तु क्रत्वव्यभिचरितसामिधेन्युपस्थितक्रतुसामान्यसम्बन्धितया विहितत्वाद्दुर्बलमित्यतुल्यबलत्वान्न विकल्पसम्भव[2] । किन्तु विशेषविहितपाञ्चदश्येन साप्तदश्यस्य बाध एवोचित इति चेत्—सत्यम्; पाञ्चदश्यवाक्यमपि साप्तदश्यवाक्यवच्छब्दमर्यादया पाञ्चदश्यस्य सामिधेनीमुखेन क्रतुसामान्यसम्बन्धमेव बोधयति । तस्य दर्शपूर्णमासात्मकक्रतुविशेषसम्बन्धस्तु प्रकरणाल्लभ्यते । प्रकरणञ्च वाक्याद्दुर्बलम् । ततश्च विशेषस्य तुल्यप्रमाणकत्वाभावान्न सामान्यबाधकत्वम् । ततश्च यावत्प्रकरणं व्याप्रियते तत प्रागेव शब्दमर्यादया तुल्यबलेन वाक्यद्वयेन विकल्पेऽवधारिते सति पश्चादुन्मिषदपि प्रकरणं दुर्बलत्वान्नानुसर्तव्यम्[3] । तस्मात्प्रकृतौ पाञ्चदश्येन साप्तदश्यस्य विकल्प इति प्राप्ते सिद्धान्तयति—

## प्रकरणविशेषात्तु विकृतौ [4]विरोधि स्यात् ॥ ७ ॥

तुरवधारणे । साप्तदश्यवादो [5]विकृतिष्वेव स्यात्, न तु प्रकृतौ । [6]यतः प्रकृतौ साप्तदश्यं तेन पाञ्चदश्येन [7]विरुध्यते । न च विकल्पः । कुतः ? प्रकरणविशेषात् । पाञ्चदश्यस्य प्रकरणकृत[8] वैलक्षण्यात् । तथाहि—पाञ्चदश्यसाप्तदश्ययोश्शब्दमर्यादया स्वरूपेण सामिधेनीसम्बन्धस्यावगम्यमानस्यानर्थक्यापत्त्या (जि) नावसिकाद्याधिकरणन्यायेन सामिधेनीशब्देनापूर्व[9]साधनतापन्नसामिधेनीलक्ष्यत्वादपूर्वसाधनत्वरूपेण तयोस्सामिधेनीसम्बन्धो वाच्य' । अपूर्व[10]साधनरूपलक्षणा च पाञ्चदश्यवाक्ये झटिति प्रवर्तते, प्रकरणबलात् । साप्तदश्यवाक्ये त्वपेक्षितापूर्वसाधनरूपस्य झटित्युपस्थापकप्रमाणाभावात् सामिधेनीशब्देन तदुपस्थितेस्तल्लक्षणा[11] न शीघ्र प्रवर्तते । ततश्च बलवता पाञ्चदश्येन प्रकृतौ बाधितत्वाद्विकृतिष्वेव साप्तदश्यं निविशते ॥

इति द्वितीय सामिधेन्यधिकरणम् ॥ २ ॥

---

1. विशेष नास्ति. अ 2. न विकल्प . अ, ग 3 नानुसरणीयम् अ
4 तद्विरोधात् अ 5 विकृतावेव ख 6 यत प्रकृतौ नास्ति अ 7 रुध्यते अ
8 कृत नास्ति. अ 9. साधनापन्न अ. 10. साधनलक्षणरूपपाञ्च. अ. 11 लक्षण अ.

नैमित्तिकन्तु प्रकृतौ तद्विकारः संयोगविशेषादिति ॥

अत्र नैमित्तिकमित्यनेन कादाचित्कतया काम्य गोदोहन विवक्षितम्। प्रकृतौ तद्विकार.—त चमसं विकरोति बाधते, नित्यानित्यसयोगकृतवैलक्षण्यादित्यर्थ। तत्र बाध्यबाधकभावे त्रयो हेतव. पूर्वमुक्तास्त अत्राप्यनुसन्धातव्या[1]। किञ्च काम्य गोदोहन फलस्य प्रत्यासन्नं शीघ्र प्रयुज्यते। क्रत्वर्थस्तु चमसद्वारेण प्रयुज्यते। तस्य क्रतूपकारद्वारा फलोपयोगात्। ततश्च पुरुषार्थं प्रत्यासन्नत्वाद्गोदोहन बलवत्। तेन चमसस्य बाध।

ननु भिन्नविषयत्वात्कथं बाध्यबाधकभाव [2]इत्यत्रैतदेवोत्तरम्—सयोगविशेषादिति। [3]चमसो गोदोहनश्च येन द्वारेण सयुज्यते तद्विशेषात्प्रणयनरूपद्वारविशेषस्यैकत्वादिति यावत्। [4]सत्यपि कार्यभेदे द्वाराभेदादस्ति विरोध। ततश्च पशुकामप्रयोगादन्यस्मिन् प्रकृतिप्रयोगे चमस. प्रणयन साधयति। पशुकामप्रयोगे तु गोदोहनेन चमसो [5]बाध्यते। [6]बाधितत्वादेव चमसस्य नास्ति पशुकामप्रकृतिप्रयोगे [7]चमसाभावकृत वैगुण्यम्। पशुकामप्रयोगवेलाया चमसस्य बाधितत्वेनानङ्गत्वात्। यथा कृष्णलेष्ववघातस्य बाधितत्वात्तदभावकृत न वैगुण्यं तद्वत्॥

इति तृतीय सासदस्याधिकरणम्॥ ३॥

४

"अग्नीनादधीत। अग्नये पवमानायाष्टाकपालं [8]पुरोडाश निर्वपेत् अग्नये पावकाय, अग्नये शुचये" इति श्रुतम्। तत्राग्न्याधेयं पवमानेष्ट्यङ्ग न वेति सशये[9] पूर्वपक्षयति—

इष्ट्यर्थमग्न्याधेयं प्रकरणात्॥ ९॥

पवमानेष्ट्यर्थमग्न्याधेयम्। कुत ? प्रकरणात्। ननु नास्ति पवमानहविषां प्रकरणम्, फलाश्रवणात्। कथमिद फलमनेन कर्तव्यमित्याकाङ्क्षैव[10] हि प्रकरणम्। किञ्च फलवत्सन्निधावफलं तदङ्गम्, आधानञ्चाग्नीनिति स्ववाक्यगत द्वितीया-

1 सन्धेया क 2. इत्यत्राप्येतदेव क 3 चमसेश्वरेण प्रयुज्यते, तस्य क्रतूपक्रमाद्विशेषात्. अ. 4 सर्वोऽपि कार्यभेदद्वारा भेदात्. अ 5 साध्यते. अ. 6 साधितत्वादेव. अ. 7. चमसाभावात्. अ 8 पुरोडाशमष्टाकपाल. क. 9. सशय तत्र अ. 10. आकाङ्क्षाया. क.

निरवकाशमिति तदेव बलवत्। तस्मात्प्रकृतावेव वैश्यप्रयोगे पाञ्चदश्यं बाधित्वा साप्तदश्य निविशते। अनुपदिष्टसाप्तदश्यास्वपि विकृतिषु वैश्यस्य प्रकृतिवत्साप्तदश्यमेव, न तु पाञ्चदश्यमिति। तदेवं सूत्रगतनैमित्तिक[1]पदानुसारेण नैमित्तिकसाप्तदश्यविषयमिदमधिकरणमुपवर्णित भाष्ये।

वार्तिके तु "चमसेनापः प्रणयेत्, गोदोहनेन पशुकामस्य" इति काम्यविषयमेवेदमधिकरण वर्णितम्। [2]युक्तञ्चैतत्। नैमित्तिकसाप्तदश्यस्य प्रकरणाम्नानानर्थक्येन विकृतौ तदुत्कर्षपूर्वपक्षस्य सावकाशनिरवकाशादिस्थले[3] विकल्पाप्रसक्त्या विकल्पपूर्वपक्षस्य [4]चातिमन्दत्वात्। [5]काम्योदाहरणे तु पूर्वपक्ष एवमुन्मिषति— प्रकृतिप्रयोगस्य सर्वस्यापि चमसेनावरुद्धत्वात् काम्य गोदोहनं [6]विकृतावर्थवदुत्कृष्यते। न च सामान्यविशेषविहितत्वादुक्तहेतुत्रयेण[7] काम्यदोहनेन नित्यश्चमसो बाध्यतामिति वाच्यम्, नित्यपाञ्चदश्यनैमित्तिक[8]साप्तदश्ययो क्रतूपकारलक्षणकार्यैक्यादस्ति विरोध इति बाध्यबाधकभावो युज्यते। इह तु चमसः क्रत्वर्थ, गोदोहनन्तु पश्वर्थमिति भिन्नविषयतया विरोधाभावान्न चमसस्य गोदोहनेन बाधो युज्यते। अथापि यदि बाध्येत तर्हि क्रतोर्विगुणत्वात्तदाश्रितगोदोहनात्कथ फल स्यात्? ततश्च —

'पश्यतो [9]मधुबिन्दूश्च जीर्णशाखाधिरोहणम्।
मन्दबुद्धेरवश्यन्तु विनिपातस्ततो भवेत्'॥

इति न्याय आश्रितस्स्यात्। अतो विकृतिरेव गोदोहनस्य गतिः। यदि तु विकृतावपि चमसबाधे क्रतुवैगुण्यात्तत्रापि गोदोहनस्य न निवेशसम्भव, तर्हि लौकिकमेवापां प्रणयन गोदोहनस्य गतिरस्तु। 'आयुष्य प्राङ्मुखो भुङ्क्ते यशस्य दक्षिणामुख' इत्यादौ लौकिकभोजनाद्याश्रितादपि गुणात्फलदर्शनात्। यद्वा फलाय गुणविधिबलाद्गुणफललाभार्थमपा प्रणयनस्याभ्यास आक्षिप्यते। यथैन्द्रवायवग्रहे मित्रावरुणादिदेवतान्तरनिवेशासम्भवान्मित्रावरुणादिदैवत्यग्रहे यागाभ्यासान्तर "मैत्रावरुण गृह्णाति" इति विधिबलादाक्षिप्यते तद्वत्। एवञ्च क्रत्वर्थं चमसेनाप प्रणीय पश्वर्थं गोदोहनेनाप प्रणेतव्या। तदेव पूर्वपक्षद्वये प्राप्ते सिद्धान्त —

---

1 पदवलेन अ ग 2. युक्तमेतत् ख 3. स्थाने क 4 च नास्ति. क
5 काम्यपक्षे ख 6 अर्थवदिति नास्ति. अ, ग 7. विहितत्वाद्युक्त अ.
8. पाञ्चदश्ययो. क. 9 मधुबिन्दुवज्जीर्णशाखाधिरोहणात्. क.

दिन्यायेन फलकल्पनाक्लेशोऽपि न [1]कर्तव्य'। ततश्चाधानवत्पवमानेष्टीनामप्यग्न्यर्थ-त्वात् 'गुणानाञ्च परार्थत्वात्' इति न्यायेनाधानस्य न पवमानेष्ट्यङ्गत्वमिति [2]भाष्यानुयायी पन्था'।

पवमानेष्टिसन्निधौ[3] "यदाहवनीये जुह्वति" इत्यादिवाक्यान्तराणि न सन्त्ये-वेति, [4]वार्तिकमते तु सूत्रमेवं योजनीयम्—नैवाधान पवमानेष्ट्यङ्गम्, पवमाने-ष्टीनामाधानार्थत्वादिति। आधानं हि स्ववाक्यश्रुताग्निभि. फलवत्। [5]तत्सन्नि-ध्याम्नानात्पवमानेष्टय. अश्रुतफलास्तदङ्गमिति युज्यते। पवमानेष्टिषु विश्वजिन्न्या-येन रात्रिसत्रन्यायेन वा फल कल्पयित्वा [6]प्रकरणपठितमग्न्याधेय तदङ्गमिति कल्पनाया. क्लिष्टत्वात्। अस्मिन् व्याख्याने तदर्थत्वादित्येतत्[7] समञ्जस भवति। तच्छब्दस्य पूर्वसूत्रोपात्ताग्न्याधेयपरामर्शिताया उचितत्वात्। अग्न्यर्थत्वादिति व्याख्यानस्य च क्लिष्टत्वात्। तासा साक्षादग्न्यर्थत्वे प्रमाणाभावाच्च। तत्सन्निधौ "यदाहवनीये जुह्वति" इत्यादिवाक्यान्तराणि तु गगनकुसुमकल्पानि। सन्तु वा तानि, तथाप्याधानाङ्गभूतपवमानेष्टिहोमेषु आहवनीयादिप्रापकाण्येव तानि स्यु.। न चानारभ्याधीतयदाहवनीयादिवाक्यान्तरतस्तत्प्राप्तिः, पवमानेष्टिवेलायामाहवनी-यादिस्वरूपनिष्पत्त्यभावात्। पवमानेष्टीनामाधानाङ्गतया तत्सहिताधानस्यैवाहवनी-यादिस्वरूपनिष्पादकत्वात्। न चैवं सति पवमानेष्टिषु [8]स्वसन्निधिपठितैर्यदाहवनी-यादिवाक्यैर्वा कथमाहवनीयादिप्राप्तिः? तदनीमाहवनीयादिस्वरूपानिष्पन्नत्वादिति[9] वाच्यम्। तदानीं परमापूर्वोत्पत्त्यभावेनाहवनीयादिस्वरूपनिष्पत्त्यभावेऽप्याधानमा-त्रजन्योत्पत्त्यपूर्वविशिष्टाग्न्यधिकरणत्वप्रापणार्थत्वात्। एवञ्च सप्तम्या द्वितीयार्थ-लक्षकत्व[10] जुहोतेश्च होमसयुक्तपवमानेष्टिलक्षकत्व[11] नाश्रयितव्यं भवति। तस्मा-दग्न्याधेय न पवमानेष्ट्यङ्गम्। पवमानेष्टयस्तु—आधानाङ्गम्, आधानवदग्न्यर्था वेति स्थितम्।

प्रयोजन पूर्वपक्षे—स्वर्गाद्यर्था पवमानेष्टयस्तदङ्गभूताग्निसस्कारकमाधान तदुत्पन्नाग्निषु पवमानेष्टिभ्य प्रागपि अग्निहोत्राद्यारम्भ.। सिद्धान्ते तु सेष्ट्याधा-

1. न भवति क. 2 भाष्यानुसारी. क. 3. सन्निधावाम्नातयदाहवनीयान्त-राणि अ. 4. वार्तिकमतेन क. 5 तत्सन्निधानात्. अ. 6 तत्प्रकरण. अ. 7. इति तत्. क. 8 स्वेति नास्ति क. 9. अनिष्पाकदत्वात्. अ. 10. द्विती-यार्थकत्व. क 11. इष्ट्यर्थकत्व. क.

निर्दिष्टाग्निभिरेव फलवदिति कथं तस्य पवमानेष्ट्यङ्गता ? प्रत्युत पवमानेष्टीनामेवाफलत्वात्फलवदाधानाङ्गत्वमुचितमिति चेत्—सत्यम्, पवमानेष्टीनामस्ति प्रकरणम्, तत्र विश्वजिन्न्यायेन फलकल्पनात्। रात्रिसत्रन्यायेन "पुनात्येवैनम्" इत्यार्थवादिकफलकल्पनाद्वा[1]। आधानस्य तु नाग्नय: फलम्, तेषा स्वतोऽपुरुषार्थत्वात्। ततश्च यथा [2]द्वितीयाश्रुत्या प्रोक्षणादीना व्रीहिमात्रार्थत्वावगमेऽपि प्रकरणाद्दर्शपूर्णमासापूर्वीयव्रीह्यर्थत्वम्, [3]एवमाधानस्यापि प्रकरणात्पवमानेष्ट्यपूर्वीयाग्निसंस्कारकत्वम्। [4]सन्ति हि पवमानेष्टिष्वप्यतिदेशप्राप्ता अग्नय:। तथा च द्वितीयाश्रुतिसहितात्प्रकरणात् अतिदेशप्राप्ताग्निसंस्कारद्वारा [5]पवमानेष्ट्यङ्गमाधानम्।

अथ सिद्धान्तयति—

**न वा तासां तदर्थत्वात्॥ १० ॥**

वाशब्द[6] एवार्थे। नैवाग्न्याधेयं पवमानेष्ट्यङ्गम्। कुत: ? तासां-पवमानेष्टीनाम् तदर्थत्वात्-आधानवदग्न्यर्थत्वात्। आधानं हि द्वितीयावगतसाध्यताकाग्न्यर्थमेव, अग्नीना स्वत: पुरुषार्थत्वाभावेऽपि [7]फलवदग्निहोत्राद्यर्थतया [8]पश्चादिव स्फलत्वोपपत्ते:। [9]पवमानाद्योऽप्यग्न्यर्था एव। तासा सन्निधौ हि "यदाहवनीये जुहोति" इत्यादिवाक्यानि (श्रूयन्ते। तत्र हि पवमानेष्टिषु होमाधारतयाऽऽहवनीयादीना [10]विधान न सम्भवति, पवमानेष्टिदशायामाहवनीयादिस्वरूपनिष्पत्त्यभावात्। न चाधानमात्रात्तत्स्वरूपनिष्पत्तिरिशङ्क्या। तथा सति तदुत्पन्नानामाहवनीयादीना) "यदाहवनीये जुह्वति" इत्यनारभ्याधीतवाक्यान्तरै: प्रकृतिभूतदर्शपूर्णमासौ प्राप्तानां चोदकत एव पवमानेष्टिष्वपि प्राप्तिसम्भवेन तत्सन्निधौ "यदाहवनीये जुह्वति" इत्यादिपुनराम्नानानर्थक्यापातात्। तस्मात्पवमानेष्टिसन्निधावाम्नातेषु "यदाहवनीये जुह्वति" इत्यादिवाक्येषु सप्तम्या द्वितीयार्थलक्षकत्वम्, जुहोतेश्च होमसंयुक्तपवमानेष्टिलक्षकत्वमाश्रित्य पवमानेष्टिभिराहवनीयाद्यग्नीन् कुर्यादित्येव पवमानेष्टीनामग्न्यर्थत्वं विधीयते। एवञ्च पवमानेष्टिषु [11]विश्वजिदा-

1. आर्थवादिकस्य फलस्य. ख 2. द्वितीयया क 3 तथा क 4 सन्ति पवमानेष्टावपि. क. 5 पवमानेष्ट्यमाधान क. 6 शब्दोऽवधारणार्थे क 7 अग्निहोत्रार्थतया क. 8. पश्चात् अ. 9. पवमानेष्ट्योऽप्याधानवद ख. 10. विधानात्. अ. ( ) कोष्ठान्तर्गतो भागस्त्रुटित अ. पुस्तके 11. विश्वजिन्न्यायेन. क.

तयाऽऽम्नातत्वात्। क्रतूपस्थापकप्रमाणाभावादिति यावत्। अङ्गत्व हि श्रुत्यादिप्रमाणैकगम्यं न तु वस्तुतस्साधकतामात्रेणाङ्गत्वं भवति। तथा सति व्रीह्यादियागेषु कर्षणादेरप्यङ्गत्वापत्तेः। न च यथाऽनारभ्यविधीयमानं खादिरत्वादिकं [1]स्रुवादिस्वरूपे आनर्थक्यात्क्रत्वपूर्वसाधनत्वलक्षणया[2] वाक्यादेव क्रत्वङ्ग [3]सम्पद्यते, [4]तद्वदाधानमप्याहवनीयाद्यग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणया वाक्यादेव क्रत्वङ्गं भवतीति वाच्यम्, वैषम्यात्। स्रुवजुह्वादिशब्दा हि 'अङ्गुष्ठपर्ववृत्तपुष्कर. स्रुव' 'अर्द्धप्रादेशपुष्करा हंसमुख्य' स्रुच.' इत्याद्याकृतिविशेषवाचकाः। न च तत्र खादिरत्वादिजातिविशेषोऽपि प्रवृत्तिनिमित्तम्। क्वचित् "पालाश. स्रुव" इत्यादिदर्शनात्। अतो जातिविशेषनियम[5]स्तत्र विधेय'। स च[6] स्वरूपेणाकृतिविशेषार्थत्वे[7] आनर्थक्यात्क्रत्वपूर्वीयत्वलक्षणया[8] आकृतिविशेषार्थतया विधातव्य इति युक्तम्। तथा च क्रत्वपूर्वसाधनस्रुवादयो ये ते खादिरादिप्रकृतिका[9] इति वचनव्यक्ति.। इह तु[10] आहवनीयादिस्वरूपस्य केवलमलौकिकतया तस्याधानेन विना सिद्ध्यनवगमादाहवनीयाद्यग्नयो ये [11]तानाधानेन [12]संस्कुर्यादिति वचनव्यक्तिर्न सम्भवति। किन्त्वाधानेनाहवनीयादिस्वरूप निष्पादयेदिति वचनव्यक्ति। ततश्चाहवनीयादिस्वरूपनिष्पत्तये आधानस्य विधावानर्थक्याभावान्न [13]क्रत्वपूर्वीयत्वलक्षणाऽऽश्रयणीया। आहवनीयाद्यग्नीनाञ्च स्वत' पुरुषार्थत्वाभावेऽप्याहवनीयाद्यङ्गकफलवत्सर्वक्रत्वर्थत्वान्न विरोधः।

प्रयोजनं पूर्वपक्षे-प्रकृतिभूत[14]दर्शपूर्णमासज्योतिष्टोमेषु तद्विकृतिष्वेव चाहवनीयाद्यग्नयस्तु, न त्वपूर्वेऽग्निहोत्रादिकर्मणि,[15] आधानस्यानारभ्याधीतत्वेन प्रकृतिगामितया तद्विकारेष्वप्रवृत्तेः। तेषामाहवनीयाद्यग्नयस्तु[16] क्रयादिभिस्सम्पाद्या। सिद्धान्ते तु-तेष्वपि स्वाधानसिद्धा एवाग्नय इति ॥

इति पञ्चममाधानस्य प्रकृतिविकृत्यर्थताधिकरणम् ॥ ५ ॥

1 स्रुवादिरूपे. क 2. लक्षणाया. ख 3. भवति. ख. 4. तथा क. 5. नियमसम ग. 6. तत्र ख, तस्य. ग. 7 विशेषार्थकत्वे. क 8. क्रत्वपूर्वत्वलक्षणया. क. 9. प्रकारा:. क 10 तुर्नास्ति. अ 11 एतान्. अ 12. कुर्यात् क 13. क्रत्वर्थापूर्वीयत्व. क 14. भूतेष्वपि. अ 15. कर्माणि, अ, कर्मणी क. 16. माहवनीयादय. क.

नमग्न्यर्थम् । [1]पवमानेष्टिभ्य. प्रागग्निहोत्राद्यनारम्भः ॥

इतोऽप्येवमित्याह—

लिङ्गदर्शन ॥ ११ ॥

"जीर्यति ह वा एष आहितो यदग्निस्तदेतान्यग्न्याधेयस्य[2] हवींषि संवत्सरे संवत्सरे[3] निर्वपेत् तेनैव न जीर्यति तेनैवैन पुनर्नव करोति" इति श्रूयते । अत्र "एतान्यग्न्याधेयस्य हवींषि" इति पवमानहविषामग्न्याधेयसम्बन्धित्वेनाधेयाग्निसम्बन्धित्वेन[4] वा कीर्तन तेषामाधानद्वारा साक्षाद्वाऽन्यार्थत्वेऽवकल्पते, नान्यथा । अतोऽपि हेतोस्सेष्ट्याधानमग्न्यर्थम् ॥

इति चतुर्थं पवमानेष्ट्यधिकरणम् ॥ ४ ॥

५

अग्न्यर्थमाधानमिति स्थितम् । तत्किमग्निद्वारा [5]प्रकृत्यर्थम् । [6]ततश्च चोदकतो विकृत्यङ्गमपि ? उत न प्रकृत्यङ्गम् नापि विकृत्यङ्गम्, [6]किन्त्वग्निमात्राङ्गम् ? इति संशये पूर्वपक्षयति—

तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १२ ॥

तत्—[7]अनारभ्याभिहितमग्न्याधेय, प्रकृत्यर्थं, चोदकतस्तु विकृत्यर्थमपि "प्रकृतौ वा द्विरुक्तत्वात्" इति न्यायात् । यथान्येऽनारभ्यवादा "यस्य खादिरः स्रुवो भवति" इत्यादय' ।

अथ सिद्धान्तयति—

सर्वार्थं वाधानस्य स्वकालत्वात् ॥ १३ ॥

वाशब्दोऽवधारणे । अग्निमात्रार्थमेवाधान [8]यत् यदाहवनीयाद्यग्निभिश्शक्यते कर्तुम्, यथा—प्रकृति विकृति, तदुभयविलक्षणमपूर्वं कर्म चाग्निहोत्रादि, तत्सर्वार्थमेवाधानम् । अग्निद्वारेत्येतत्स्वार्थिकम् । न त्वेतावताऽऽधानस्य सर्वकर्माङ्गत्व सिध्यति । कुत ? आधानस्य स्वकालत्वात् । कलिरनेकार्थक. स्वतन्त्र-

---

1 न पवमानेष्टिभ्य द्यारम्भ क. 2 तदेतदग्न्या. क 3. एक सवत्सरपद नास्ति अ 4 सम्बन्धत्वेन क 5 प्रकृत्यङ्ग ख 6 उत तच्च ग 6 किञ्च. अ 7 अनारम्यविहित अ 8 यद्याहव क.

७

सन्ति ज्योतिष्टोमे त्रयः पशव —अग्नीषोमीय· सवनीय आनुबन्ध्यश्चेति। तत्राग्नीषोमीयस्तावत्प्रायणीयाहे[1] सोमक्रयसन्निधावुत्पन्नः "आ सोम वहन्ति" इत्युपक्रम्य "यदग्नीषोमीय पशुमालभत" इति। तस्य च "स एष उपवसथीयेऽहन् द्विदैवत्यः [2]पशुरालभ्यते" इति वचनात्[3]सोमक्रयाहादन्यस्मिन्नहनि [4]सुत्याया· पूर्वस्मिन्ननुष्ठानम्। सुत्याया· पूर्वदिनमुपवसथीयमित्युच्यते। अहन् इत्यत्र 'सुपां सुलुक्' इति सप्तम्या लुक्। सुत्याहे सवनीय· पशुराम्नात·—"आश्विन ग्रह गृहीत्वा त्रिवृता यूप परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति। अन्यच्चाऽग्नीषोमीय पशुसन्निधावस्ति वाक्यम्—"आग्नेयस्सवनीयः पशुरग्निष्टोम आलभ्यते" इति। आनुबन्ध्यस्तु [5]पशुरवभृथोत्तरोदयनीयानन्तरमुत्पन्नः—"मैत्रावरुणी वशामानुबन्ध्यामालभते" इति। पशुधर्मास्त्वग्नीषोमीयपशुसन्निधावाम्नाता —"यूप छिनत्ति, यूपे पशु नियुञ्जन्ति" इत्याद्या। ते किं त्रयाणामपि पशूना साधारण्येन विधीयन्ते? उत सवनीयपशोरेव? अथवाऽग्नीषोमीयसवनीयपश्वो? किं [6]वाऽग्नीषोमीयपशोरेव? इति सशय·।

तत्र पूर्वपक्षयति—

## तुल्य र्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १६ ॥

पशुविधि:—पशुधर्माम्नाय·, तुल्य:—पशुत्रयसाधारण· प्रत्येतव्यः। कुतः? प्रकरणाविशेषात्—त्रयोऽप्येते [7]पशवो ज्योतिष्टोमप्रकरणे [8]विहिता:, तथा पशुधर्माश्च। ततश्च पशुस्वरूपे तेषामा[9]म्नानानर्थक्यापत्त्या लक्षणयाऽपूर्वसाधनपश्वर्थत्वे सति प्रकरणाविशेषाज्ज्योतिष्टोमगतसर्वपशुयागार्थत्व[10] विज्ञायते।

अथ द्वितीयपक्षपरतयाप्येतदेव सूत्र योज्यम्। पशुविधि·—जातावेकवचनम्। [11]यूपशब्देन नियोजनादिधर्मविधि महाप्रकरणविशेषात् [12]तुल्यः—पशुत्रयसाधारण· सम्भाव्यते। इह तु सवनीयपश्ववान्तरप्रकरणेन महाप्रकरण

---

1. प्रायणीयाहसोम. अ. 2. पशुमालभते. क 3. क्रयान्हात. क
4. सुत्यादिनात्. ख. 5. अवभृथान्ते क 6 सवनीयेति पाठोऽशुद्ध. अ.
7. पशव नास्ति. अ 8. आम्नाता क 9 आम्नानेति नास्ति अ
10 पश्वर्थत्व. क 11. यूपच्छेदननियोजनादि. अ. 12 तुल्य ·· ·· ·साधारण. क

६

पवमानेष्टिषु तदङ्गतया पवमानेष्टयः कर्तव्या न वेति संशये पूर्वपक्षयति—

**तासामग्निः प्रकृतितः प्रयाजवत् ॥ १४ ॥**

तासां—पवमानेष्टीनाम्। अग्निः—जातावेकवचनम्। आहवनीयाद्यग्नयः पवमानेष्टिसंस्कृताः प्रकृतितः—दर्शपूर्णमासतः प्राप्नुवन्ति। दर्शपूर्णमासयोर्हि पवमानेष्टिसंस्कृताग्न्योऽङ्गमिति पवमानेष्ट्योऽप्यग्निद्वारा दर्शपूर्णमासाङ्गम्। अतस्तद्विकृतिभूतपवमानेष्टिष्वपि पवमानेष्टिसंस्कृता एवाग्नयोऽङ्गतया प्राप्तुमर्हन्ति। प्रयाजवत्—यथा दर्शपूर्णमासाङ्गभूताः प्रयाजादयः पवमानेष्टिषु प्राप्नुवन्ति ॥

अथ सिद्धान्तयति—

**न वा तासां तदर्थत्वात् ॥ १५ ॥**

वाशब्दोऽवधारणे। नैव पवमानेष्टिषु पवमानेष्टयः प्रकृतितः प्राप्नुवन्ति। कुतः? तासां पवमानेष्टीनां [1]तदर्थत्वात् पूर्वाधिकरणन्यायेनाग्निमात्रार्थत्वात्। प्रकृतिभूतदर्शपूर्णमासोपस्थापकप्रमाणाभावेन तदङ्गत्वाभावात्, आर्थिकस्य चानङ्गत्वात्, अनङ्गस्य चातिदेशाभावात्, अन्यथा गुणकामानामपि विकृतिष्वतिदेशापत्तेः। अस्तु वा पवमानेष्टीनां प्रकृत्यर्थत्वम्, तथापि न तासां पवमानेष्टिष्वतिदेशोऽवकल्पते[2]। पवमानेष्टयो हि कथम्भावाकाङ्क्षिण्यः प्रकृतिं पश्यन्त्यस्तदानीं प्रकृतेः पवमानेष्टिशून्यत्वात्तद्व्यतिरिक्तमेवाङ्गजातं गृहीत्वा शान्ताकाङ्क्षास्सत्यो न पवमानेष्टीरात्मानमपि ग्रहीतुं [3]प्रभवन्ति। ततश्च पवमानेष्टिविधिदशायां पवमानेष्टीनां दर्शपूर्णमासाङ्गतायाः[4] अक्लृप्तत्वान्न तासां तास्वतिदेश इति फलितम्। असम्भवाच्च—न ह्येकस्यैव शेषित्वं शेषत्वञ्च सम्भवति। न च पवमानेष्टीनामन्याः पवमानेष्टयोऽङ्गमिति व्यक्तिभेदान्न विरोध इति वाच्यम्। या हि पवमानेष्टयः प्रथमं क्रियन्ते ताभिः किमाहवनीयाद्यग्नयो जायन्ते न वा? नान्त्यः, [5]वैयर्थ्यात्। नाद्यः, प्राथमिकीभिरेव ताभिराहवनीयाद्यग्निरहिताभिराहवनीयाद्यग्निसिद्धौ तदुत्तरासां वैयर्थ्यात्। तस्मान्न पवमानेष्टिषु पवमानेष्टयः ॥

इति षष्ठं पवमानेष्ट्यनतिदेशाधिकरणम् ॥ ६ ॥

---

1 तदर्थत्वादिति नास्ति. ख. 2 देशः कल्पते क 3 शक्नुवन्ति. ग
4. अर्थक्लृप्तत्वात् क 5. वैधर्म्यात्. क.

सवनानि पशुमन्ति [1]भवन्तीति प्रश्नमवतार्य "वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिने सवनेऽङ्गैस्तृतीयसवने" इति वपादिप्रचारविप्रकर्षो विधीयते। मत्स्यो वीत'--जले विविध गच्छन् अनवधारितगति, [2]प्रेक्षकं जनमवधूनुते-प्रेक्षणायेतस्ततस्सञ्चालयति, [3]एवमेते-पशव कथ प्रचारयितव्या इति अप्रज्ञायमाना' प्रयोक्तार जन चालयन्तीति निन्दा। वपापुरोडाशहृदयादिहवि-प्रचाराणामेककालत्वस्य न्याय्यत्वात् प्रतिसवनञ्च [4]प्रचारावृत्तेरविज्ञानात् त्रीण्यपि सवनानि कथमेतै पशुप्रयोगवन्ति भवन्तीति प्रश्न। [5]तत्र पशुसङ्कीर्तनं प्रचारदेशविशेषाज्ञानप्रयुक्तनिन्दार्थम्। निन्दा च प्रश्नावतारणार्था। प्रश्नश्च प्रचारविप्रकर्षविध्यर्थं इत्यौपवसथ्येऽऽहनि सवनीयपशुसङ्कीर्तन गुणविधानार्थमेव, न तु सवनीयपशूना तत्रोत्पत्ति, येन धर्मानुक्रमणं प्रकरणप्रमाणात् तेषामपि साधारण स्यात्। "आश्विन ग्रहं गृहीत्वा" इत्यादिसुत्याहगतवाक्यादेव [6]सवनीयपशूत्पत्ति। ननु "आश्विन ग्रह गृहीत्वा" इत्यादि वाक्यमेव गुणविधायकमस्तु। न च प्राप्तकर्मानुवादेनानेकगुणविधौ वाक्यभेदश्शङ्क्य, "वपया प्रातस्सवने चरन्ति" इति प्रधानोत्कर्षादेव पूर्वेद्युर्विहितानामपि तदङ्गाना [7]प्रधानकालकर्तव्यादुत्कर्षे [8]सति तेषा प्रातस्सवनेऽपि कदानुष्ठानमित्यपेक्षायाम्-आश्विनं ग्रह गृहीत्वा, परिवीयेति परिव्याणस्य वा [9]यत् त्रिवृता यूपं परिवीयोपाकरोति तदाश्विन गृहीत्वेति, उपाकरणस्य वाऽऽश्विनग्रहोत्तरकालविशेषमात्र विधीयते। परिव्याणमुपाकरणं द्रव्यदेवते सवनसम्बन्धश्च वाक्यान्तरप्राप्ता अनूद्यन्ते। परिव्याणोपाकरणक्रमश्च पाठप्राप्तोऽनूद्यत इति न वाक्यभेद इति चेत्-सत्यम्; प्रकरणान्तराधिकरणे हि-अनुपादेयगुणसमभिव्याहृतवाक्य एव कर्मोत्पत्तिः। उपादेयस्य गुणस्य दूरस्थकर्मानुवादेनापि "यदाहवनीये जुहुति" इतिवत् विधिसम्भवादिति स्थितम्। तथा चौपवसथ्यगतवाक्यमेव सुत्याहेऽप्युत्पन्नं दूरस्थ कर्मानूद्य प्रचारविप्रकर्षलक्षणमुपादेयगुण विधातु शक्नोति। सुत्याहगतवाक्यन्तु-औपवसथ्योत्पन्नदूरस्थाविपरिवर्तमान कर्मानूद्याश्विनग्रहग्रहणोत्तरकाललक्षणमनुपादेयगुण न विधातुं प्रभवतीति तदेव सवनीयपशूत्पत्तिपरमास्थेयम्। तथा चौपवसथ्याहे पशुधर्माणा सवनीयावान्तरप्रकरणपरिग्रहाभावे सति स्थानादग्नीषोमीयार्थत्वमेव सिध्यति।

1. भवन्तीति नास्ति. ख 2 प्रेषक. क. 3. एवमेव ते. क 4. प्रचारानुद्भूते घ. 5. तत्रेति नास्ति क 6. न सवनीयेत्यशुद्धः पाठ. क. 7. अङ्गानामप्रधानेत्यशुद्ध पाठ. क. 8. जाते. ख. 9. यदा. ख.

बाध्यते । "आग्नेयस्सवनीयः पशुरग्निष्टोम आलभ्यते" इति सवनीयपशूत्पत्तिसन्निधावौपसथ्येऽह्नि पशुधर्माणामनुक्रमणात्[1] ।

अथ तृतीयं पक्षमुपक्षिपति—

**स्थानाच्च पूर्वस्य ॥ १७ ॥**

चो भिन्नक्रमः । पशुधर्मा अवान्तरप्रकरणात्सवनीयपशोर्भवन्ति, स्थानप्रमाणात् पूर्वस्य[2] चाग्नीषोमीयपशोरपि । तस्य ह्यग्नीषोमीयपशोरौपवसथ्यमहरुत्पत्तिस्थानम् । क्रयसन्निधावुत्पन्नस्यापि तस्य "स एष औपवसथ्येऽह्न् द्विदैवत्य. पशुरालभ्यते" इति तत्रोत्कर्षविधानात् । पशुधर्माश्चौपवसथ्येऽह्न्येव समाम्नाता इति स्थानप्रमाणात्तस्यापि ते विज्ञायन्ते । न च बलवदवान्तरप्रकरणेन पशुधर्माणा सवनीयार्थत्वे लब्धे तत एव नैराकाङ्क्ष्यात्कथमग्नीषोमीयार्थत्वमपीति वाच्यम्, सवनीयपशुमादाय धर्माणा नैराकाङ्क्ष्येऽपि अग्नीषोमीययागस्य प्राणिद्रव्यकतया[3] पशुधर्मापेक्षित्वेन[4] तदाकाङ्क्षाबलेन धर्माणामप्याकाङ्क्षोत्थानात् । आकाङ्क्षावशाच्च दुर्बलमपि स्थान न प्रकरणेन बाध्यत इति तदुभयार्थाः पशुधर्मा. । यथा प्रकृतौ प्रत्यक्षोपदेशलब्धाङ्गभावा अपि धर्मा विकृत्याकांक्षया दुर्बलेनाप्यतिदेशेन तदङ्गतामपि भजन्ते तद्वत् ।

अथ सिद्धान्तयति—

**श्वस्त्वेकेषां प्र श्रुतिर्गुणार्था ॥ १८ ॥**

तुरवधारणे । श्वस्तु–औपवसथ्याह्नान् परेद्युरेव सुत्याहे सवनीयपशोरुत्पत्ति, एकेषाम् अन्येषा शाखिनामाम्नाता[5]—"आश्विनं ग्रहं गृहीत्वा त्रिवृता यूप परिवीयाग्नेय सवनीय पशुमुपाकरोति" इति । तत्र–तस्मिन्नुत्पन्ने सवनीयपशौ प्राक् श्रुतिर्गुणार्था–सुत्याह्नात्प्राक् पूर्वेद्यु, औपवसथ्येऽह्नि श्रुतं "आग्नेयोऽग्निष्टोम आलभ्यते" इति वाक्य गुणविधानार्थम् । औपवसथ्येऽह्नि तावत् पशुधर्मानुक्रमणसन्निधौ "आग्नेयस्सवनीय पशुरग्निष्टोम आलभ्यते ऐन्द्राग्न उक्थ्ये, ऐन्द्रो वृष्णि षोडशिनि, सारस्वती मेष्यतिरात्रे" इति सवनीयान् पशूननुकीर्त्य "यथा वै मत्स्यो [6]वीतो जनमवधूनुते एव वा एतेऽप्रज्ञायमाना जनमवधून्वते" इति निन्दित्वा, एभि कथ

1. अनुमन्त्रणात अ 2 चेति नास्ति अ 3 धर्मतया क. 4. पेक्षत्वेन क
5 आम्नानात क. 6. अविदित, ख.

स्यादेतत्; औपवसथ्येऽहन्युत्पन्नस्य सवनीयपशोस्तदानीमेव स्वाङ्गसहितानुष्ठाने प्राप्ते सुत्याहे प्रातस्सवने वपाप्रचाराद्युत्कर्षो विहितः। तत्र यदि वपाप्रचाराद्येव सुत्याहेऽनुष्ठीयेत तत्पूर्वभाविनश्च [1]पदार्थाः पूर्वेद्युरेवानुष्ठीयेरन् तर्हि वपोद्धरणादिकमपि पूर्वेद्युरेवानुष्ठेयं स्यात्। तथासति "मुष्टिना शमिता वपोद्धरण[2]मपिधायास्त आ वपाया होमात्" इति विरुध्येत। न हि कश्चित् [3]वपोद्धरणच्छिन्नप्रदेशं मुष्टिना पूर्वेद्युरारभ्य परेद्युर्वपाहोमपर्यन्तमपिदधदुपवेष्टुं शक्नुयात्। मध्य आहारादिकर्मणामवर्जनीयत्वात्। ततश्च वपाप्रचाराद्युत्कर्षेण तत्पूर्वपदार्थानामपि सुत्याह उत्कर्षे सति परिव्याणस्योपाकरणस्य वा तदानीं विपरिवृत्तिसत्वात्तत्राश्विनग्रहणोत्तरकालविधिस्सम्भवतीति औपवसथ्येऽहन्युत्पन्नस्य [4]सवनीयस्य प्रकरणसत्वात्तदानीमाम्नाताः पशुधर्मा सवनीयपशोरपि भवन्तीत्याशङ्क्य परिहरति—

**अर्थेनेति चेन्न श्रुतिविप्रतिषेधात् ॥ २० ॥**

अर्थेन—"मुष्टिना शमिता" *इति विहितकार्येणानुपपद्यमानेन परेद्युः परिव्याणादिपदार्थानामपि प्राचामुत्कर्षो भवन्त्विति चेत्तन्न, कुतः? श्रुतिविप्रतिषेधात्—औपवसथ्येऽहन्युत्पत्तिपक्षे वपाप्रचाराद्येव सुत्याहे उत्कृष्यताम्। तत्पूर्वपदार्थास्तु पूर्वेद्युरेवानुष्ठीयन्ताम्। अथापि "मुष्टिना शमिता" *इति श्रुतिः न विप्रतिषिध्यते। तत्र ह्यासधातुरौदासीन्ये वर्तते। यथा 'क्षेत्राणि परिगृह्यास्ते' इति [5]कर्षणादिकर्मण्युदास्त इति गम्यते। मुष्टिनेति च तृणपर्णादिमुष्टिरुच्यते। तथा च [6]शमिता तृणपर्णादिमुष्टिना वपोद्धरणप्रदेशमपिधाय वपाहोमपर्यन्तं विशसनकर्मण्युदास्ते न व्याप्रियत इत्यर्थः। ततश्च वपाप्रचारतः [7]पूर्वपदार्थानां पूर्वेद्युरनुष्ठानेऽपि नानुपपत्तिः। तदेवं सवनीयपशोरौपवसथ्येऽहन्युत्पत्तिनिरासेन पशुधर्माणां तदवान्तरप्रकरणपरिग्रहाभावे सति स्थानप्रमाणबलादग्नीषोमीयपशुमात्रार्थत्वमिति सिद्धान्तं निगमयन् प्रथमपक्षं निरस्यति—

**स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २१ ॥**

तुरवधारणे। उक्तरीत्या पशुधर्माणां सवनीयपशुप्रकरणपरिग्रहाभावात् स्थानप्रमाणेन निस्सपत्नेन पूर्वस्याग्नीषोमीयपशोरेवैते धर्मा भवेयुः। ननु मास्तु

1. धर्माः. अ. 2 अविधाय क 3 वपोद्धरणात् अ. 4. सवनीयप्रक. अ.
* * एतच्चिन्हान्तर्गतो भाग अ पुस्तके त्रुटित. 5. तक्षणादि. अ. 6. शमितेति नास्ति. अ. 7 पूर्वाङ्गना. अ.

स्यादेतत्, नास्त्यत्र प्रकरणान्तरन्याय, औपवसथ्योत्पन्नस्यापि कर्मणो वपाप्रचारोत्कर्षादुत्कृष्टस्य सुत्याहे प्रातस्सवने बुद्धौ विपरिवर्तमानतयाऽसन्निधानलक्षणप्रकरणान्तराभावात्। तथा च 'सन्निधौ त्वविभागात्' इति न्यायेन "पौर्णमास्यां पौर्णमास्यया" इतिवत् सन्निहितकर्मानुवादेनानुपादेयस्याप्याश्विनग्रहग्रहणोत्तरकालस्य गुणस्य विधि सुत्यावाक्येऽपि किं न स्यादिति शङ्कामुद्भाव्य परिहरति—

## तेनोत्कृ य कालविधिरिति चेन्नैकदेशत्वात् ॥ १९ ॥

तेन—वपाप्रचारेण सुत्याहे प्रातस्सवने उत्कृष्टस्य बुद्धौ विपरिवर्तमानस्यानुवादेन सुत्याहवाक्य काललक्षणगुणविधिरस्त्विति चेत्—तन्न, कुतः? एकदेशत्वात्—वपाप्रचारस्य समस्ताङ्गोपेतसवनीयपशुभावनैकदेशतया तन्मात्रोत्कर्षेण तदितराङ्गानामुत्कर्षलाभात्। तथा हि—परिव्याणस्योपाकरणस्य वाऽऽश्विनग्रहग्रहणोत्तरकालो विधेय इति [1]वक्तव्यम्। तयोश्च नास्ति [2]विपरिवृत्तिः। न च वपाप्रचारोत्कर्षेण तयोरप्युत्कर्षाद्विपरिवृत्तिश्शक्या, एकोत्कर्षेण [3]ह्यपरोत्कर्षो द्वेधा घटते—"अङ्गानि तु विधानत्वादेतत्प्रधानेनोपदिश्येरन्" इत्येकादशेऽङ्गानां प्रधानकालत्वस्य वक्ष्यमाणतया प्रधानोत्कर्षेऽङ्गोत्कर्षाद्वा, 'तदादिवाभिसम्बन्धात्तदन्तापकर्षं स्यात्' इति पाञ्चमिकन्यायाद्वा। नाद्यः, एकादशे हि—'अङ्गाना मुख्यकालत्वाद्वचनादन्यकालत्वम्' इत्यत्रानिर्ज्ञातकालानामेवाङ्गाना प्रधानकालत्व वक्ष्यते। ततश्चौपवसथ्येऽहनि कर्मोत्पत्तौ तत्राङ्गाना कर्तव्यत्वेन निर्ज्ञातकालतया कथ [4]प्रधानवपाप्रचारोत्कर्षेणोपाकरणाद्युत्कर्षं। न द्वितीय, पञ्चमे हि—एकस्याङ्गस्योत्कर्षेऽपकर्षे च श्रुते तदादिरुत्कर्षे [5]तदन्तापकर्षश्च स्यात् बद्धक्रमत्वादिति सिद्धान्तयिष्यते। एवञ्च प्रकृते वपाप्रचार उत्कृष्टे तदुत्तरभाविनामेव पदार्थानामुत्कर्षो भवेत्, न तु तत्पूर्वभाविनामुपाकरणादीनामपि। तस्मादुपाकरणस्य परिव्याणस्य वा प्रातस्सवने विपरिवृत्त्यभावान्न तस्य सुत्यावाक्य कालविधिरित्युत्पत्तिविधिरेवाय सवनीयपशो'। औपवसथ्यवाक्यन्तु तत्र गुणविधिरिति। सवनीयपशोस्तदानीमनुष्ठानाभावान्न [6]तदङ्गत्व पशुधर्माणाम्।

---

1. वक्तव्य. क 2. परिवृत्ति. अ 3 हि नास्ति अ
4 प्रधानेति नास्ति अ 5 तदन्तस्य क 6 तदर्थत्व. क

इति वाक्यशेषाच्च । अग्नीषोममन्त्रवानयं पुरोडाशयागश्च न सवनीयदेवतां संस्कर्तुं शक्नोति । न चोहेन तत्सम्भवः । पशुधर्मोपदेशस्य ज्योतिष्टोमिकसर्वपशुसाधारणत्वेन सवनीयपशोरपि प्रकृतित्वात् प्रकृतौ चोहाभावस्य दशमे वक्ष्यमाणत्वात् । पशुधर्मोपदेशस्याग्नीषोमीयमात्रार्थत्वे तु सवनीयपशोस्तद्विकृतित्वादूहेन सवनीयपशुदेवतासंकारकत्वं सम्भवतीति तत्र पशुपुरोडाशदर्शनं[1] न विरुध्यते । तस्मादप्यग्नीषोमीयपशुमात्रार्थो धर्मोपदेश ॥

ननु पशुदेवतार्थत्वं पुरोडाशस्य न साक्षात्, किन्तु पशुसंस्कारद्वारैव । एवं हि श्रूयते—"सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति व्रीहिमय पुरोडाशो भवत्यपिधानायासुषिराय"[2] इति पुरोडाशयागसस्कृतपशुहविस्सम्बन्धात् पशुदेवता वर्धत इत्युपपद्यते । छिद्रापिधानात्मकपशुसंस्कार[3]श्चाग्नीषोममन्त्रवतापि पुरोडाशयागेन सम्पद्यत इति पशुधर्माम्नानस्य[4] पशुत्रयार्थत्वेऽपि न विरोध इत्यत आह—

**अचोदना [5]गुणार्थेन ॥ २३ ॥**

पुरोडाशयागस्य पशुच्छिद्रापिधानार्थत्वं प्रत्यक्षपराहतम् । अतोऽर्थवादमात्रमेतत् । ततश्च गुणार्थेन–छिद्रापिधानलक्षणगुणविधानप्रयोजनाय पुरोडाशस्याचोदना–विधिर्नास्ति । अतस्साक्षात्पशुदेवतार्थ एव पुरोडाशयाग । पशुदेवतार्थत्वञ्च न केवलमदृष्टविधया, किन्तु पुरोडाशयागीयमन्त्रतः प्रकाशनद्वारैव । यथाकथमपि दृष्टलाभे केवलादृष्टार्थत्वाश्रयणायोगात् । तदीयमन्त्रतः सवनीयदेवताप्रकाशनञ्चोहेनैव भवति । स च सवनीयपशो' प्रकृतित्वे सति न सम्भवति । अत. पशुधर्माम्नानमग्नीषोमीयपशुमात्रार्थमिति विज्ञायते ।

प्रयोजनं पूर्वपक्षे–"यद्देवत्यः पशुः तद्देवत्यः पशुपुरोडाशः" इत्याग्नेयपशुसमानदेवताके सवनीयपुरोडाशे अग्नीषोमलिङ्गकमन्त्राणा निवृत्तिः । प्रकृतावूहाभावाद्धर्मोपदेशस्य पशुत्रयसाधारणत्वे सवनीयपशोरपि प्रकृतित्वात्, तथानुबन्ध्यायां वशायां "प्रास्मा अग्निं भरत" इत्यादि पुल्लिङ्गमन्त्राणां निवृत्तिः । सिद्धान्ते तु–धर्मोपदेशस्याग्नीषोममात्रार्थतया सवनीयानुबन्ध्ययोस्तद्विकृतित्वादूहसम्भव इति ॥

**इति सप्तम पशुधर्माणामग्नीषोमीयमात्रार्थताधिकरणम् ॥ ७ ॥**

---

1. दर्शनात्र. क. 2. असषिराय. ग. 3. सस्कारकश्च. ग. 4. धर्माम्नानानुष्ठानस्य. क. 5 गुणार्थत्वेन. क.

पशुधर्माणामवान्तरप्रकरणपरिग्रहः। ज्योतिष्टोमार्थतया विज्ञायमानाः पशुधर्मा आनर्थक्यतदङ्गन्यायेन त्रिष्वपि पशुषु निविशेरन् इत्यत आह—संस्कारस्य तदर्थत्वादिति। संस्कारस्य नियोजनादिधर्मजातानुक्रमणस्याग्नीषोमीयमात्रार्थत्वात्। तथाहि—नियोजनोपाकरणसंज्ञपनादिपशुधर्माणामयोग्यत्वान्न ज्योतिष्टोमीयमहाप्रकरणपरिग्रहः। न चानर्थक्यतदङ्गन्यायोऽत्रावतरति। तत्र हि प्रथमप्रवृत्तवाजपेयिकमहाप्रकरण ( सप्तदशारत्नित्वस्यायोग्यतां दृष्ट्वा ततो झटिति परावृत्य तदाम्नानानर्थक्यं पर्यालोच्य पुनरभिमुखीभूय वाजपेयाङ्ग ) [1]पशुगतयूपद्वारा सप्तदशारत्नित्व परिगृह्णातीत्यगत्या स्वीक्रियते। इह तु नियोजनादिधर्मतः परावृत्तोऽपि महाप्रकरणे स्थानादग्नीषोमीयार्थतया धर्माम्नानस्यार्थवत्त्वोपपत्तेः नागतिकत्वमित्यग्नीषोमीयार्थमेव[2] धर्माम्नानम्।

तदयमत्र निष्कर्षः—सोमक्रयसन्निधावग्नीषोमीयः पशुरुत्पन्नः। स च चोदकतो दार्शिकाङ्गैरशान्तकथम्भावाकाङ्क्ष[3] औपवसथ्येऽहनि वचनादुत्कृष्टस्सन् तत्राम्नातै पशुधर्मैरुपकार्यमपेक्षमाणैः पुनरुत्थापितकथम्भावाकाङ्क्षस्तैस्सम्बध्यते। तथा चाग्नीषोमीयपशुस्सर्वेषां[4] पशूनां प्रकृतिः। सवनीयपशुस्तु सुत्याहे आश्विनग्रहग्रहणोत्तरकालकपरिव्याणादिसहितो विधीयते। तत्र परिव्याणादिकं प्रकृतिव प्राप्तमनूद्यते। प्राप्ताप्राप्तविवेकेनाश्विनग्रहग्रहणोत्तरकालादिविशिष्टो[5] विधेयः। विशिष्टविधानाच्च न वाक्यभेदः। औपवसथ्येऽहनि सवनीयपशुवाक्यन्तु प्रचारविप्रकर्षविधानार्थम्। आनुबन्ध्यायामपि चोदकतोऽग्नीषोमीयादेव धर्मा भवन्तीति॥

इतोऽप्यग्नीषोमीयार्थमेव धर्माम्नानमित्याह—

## लिङ्गदर्शनाच्च ॥ २२ ॥

"पुरोडाशेन माध्यन्दिने सवने" इति सवनीयपशौ पुरोडाशयागोऽनूद्यते। स चाग्नीषोमीयात्प्राप्यते। अग्नीषोमीयपशौ च "अग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि" इत्यादयोऽग्नीषोमीयलिङ्गका मन्त्रा आम्नाताः। पशुपुरोडाशश्च पशुदेवतासंस्कारार्थः, "[6]अविप्रतिषेधता पुरोडाशेन" इति मन्त्रलिङ्गात्, "[7]पशुदेवता वर्धत"

---

() चिन्हान्तर्गतो भागो नास्ति अ 1. पश्वङ्गेति क 2 र्थत्वमेव धर्माणाम्. क
3 कथम्भावाकाङ्क्षक. क 4. षोमीयः पशु. क 5 आश्विनग्रहणोत्तर अ
6. अचीवृधेता. अ. 7. तेनेत्यधिक. अ.

नन्तरं शाखानाशे प्रातर्दोहार्थं न शाखान्तरमुत्पाद्यम् , उपायान्तरेण वत्सापाकरणादि कर्तव्यम् । सिद्धान्ते तु शाखान्तरमुत्पाद्यम् ॥

इत्यष्टम शाखाहरणादीनामुभयदोहार्थताधिकरणम् ॥ ८ ॥

९

ज्योतिष्टोमे प्रातस्सवने ग्रहधर्मास्समाम्नाता —"ग्रहं सम्मार्ष्टि, गृहीत्वा खरे सादयति" इत्यादय.। ते किं प्रातस्सवनिकग्रहार्थाः ? उत सवनान्तरग्रहार्था अपि ? इति सशय । ऐन्द्रवायवादिग्रहग्रहणाभ्यासाना प्रातस्सवनेऽनुष्ठानादुत्पत्तेश्चानुष्ठान-सादेश्यलक्षण[1] स्थानमवान्तरप्रकरण चास्तीति प्रातस्सवनिकग्रहार्थमेव धर्माम्नान-मिति प्राप्ते, सिद्धान्तयति—

तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ २६ ॥

प्रातस्सवनादन्यत्र माध्यन्दिन[2]तृतीयसवनयोरपि यद्ग्रहाम्नान तदपि तद्वत्—श्रुतवद्धर्मग्राहकं महाप्रकरणात् । स्थानस्य च तदपेक्षया दुर्बलत्वात् । अवान्तरप्रकरणन्तु प्रातस्सवनशब्दसन्दंशाभावान्नास्ति । अतो महाप्रकरणात्सर्व-ग्रहार्थं धर्माम्नानम् ॥

इति नवम ग्रहधर्माणा सवनत्रयार्थताधिकरणम् ॥ ९ ॥

१०

सोमे[4]पशुधर्मानुक्रमणे "यूप परिव्ययति" इति प्रकृत्य रशनाधर्मा. श्रुताः—'त्रिगुणा भवति, दर्भमयी भवति, रशनया मध्यभागेन यूप परिवीयाद्यन्तभागौ प्रवेश्याग्रे मूलं प्रवेशयति' इत्यादयः। ते तावदग्नीषोमीयपरिव्याणरशनार्थाः सवनीयपरिव्याणरशनायां चोदकतः प्राप्नुवन्तीत्यनुपदमेव स्थितम् । अस्ति च सवनीयपशावपूर्वं परिव्याणान्तरं "स आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति" इति । अत्र हि चोदकप्राप्तपरिव्याणे आश्विनग्रहग्रहणोत्तरकालो न विधीयते, "आश्विनं ग्रह गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपा-करोति" इति सवनीयोत्पत्तिवाक्यदेव तत्प्राप्ते । [5]किन्तु परिव्याणान्तरमेव यूपस्य सस्कारान्तरार्थमप्राकृतकार्यं कालविशिष्ट विधीयते । उपनिष्क्रमणन्त्वर्थप्राप्तत्वान्न

1 सादेश्य लक्षण. क, ख.　2. साय सवन. ख.　3. धर्मार्थमाम्नानम्. ग.
4. सोमपशु. अ, ग.　5. किन्त्वन्यदेव परिव्याण. क.

८

दर्शे तावत् "ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायाम्" इति स्तो दधिपयोयागौ। तत्र पूर्वेद्युस्साय पयो दुग्ध्वा श्रपयित्वा तच्च दधि क्रियते। परेद्युस्तु प्रातः पयो दुग्ध्वा केवल श्रप्यते। तदिदं शृतशब्देन याज्ञिका व्यवहरन्ति। तत्र पूर्वेद्युः शाखाहरणवत्सापाकरणादयः पदार्थास्समाम्नाता। [1]ते किं दधिधर्मा ? उतोभयधर्मा ? इति संशये पूर्वपक्षयति—

**दोहयोः भेदादसंयुक्तं शृतं स्यात् ॥ २४ ॥**

दुह्येते इति दोहौ-दधिपयसी। ततोर्मध्ये शृतं-पय. [2]न शाखाहरणादिधर्मसंयुक्तं स्यात्। कुतः ? कालभेदात्। पूर्वेद्युः दधि क्रियते, परेद्युस्तु प्रात पयः। ततश्च दध्न एवानुष्ठानसादेश्यलक्षणसन्निधिरस्ति। दधिकरणस्य पूर्वेद्युर्विहितत्वेन तस्य पूर्वेद्युरेवेतिकर्तव्यताकाङ्क्षासत्वादवान्तरप्रकरणञ्च विद्यते। एवञ्च सन्निधिप्रकरणाभ्यां दध्न एवैते धर्मा इति प्राप्ते—

सिद्धान्तयति—

**प्रकरणाविशेषाद्वा संयुक्तस्य कालशास्त्रम् ॥ २५ ॥**

वाशब्द एवार्थे। उभयधर्मा एवैते शाखाहरणादयः। कुत ? प्रकरणाविशेषात्। दर्शपूर्णमासयोर्हि प्रकरणे शाखाहरणादयो धर्मा आम्नाताः। ते च योग्यतया लिङ्गेन दधिपयोयागमात्रधर्मास्सम्पद्यन्ते, न तु [3]सन्निधिमात्रवशाद्दधिमात्रधर्मा सन्निध्यपेक्षया प्रकरणस्य बलीयस्त्वात्। न च [4]दधियागस्यावान्तरमस्ति, शाखाहरणादिधर्माणा दधियागसन्दशाभावात्। न [5]हि शाखाहरणादिधर्मानुक्रमणस्य पुरस्तात्परस्ताच्च दधियागश्रवणमस्ति, येन सन्दशे सति सन्दष्ट 'तदङ्गमितरत्तुन.' इति [6]न्यायादवान्तरप्रकरणमुन्मिषेत्। नापि दधियागस्य पूर्वेद्यु-स्थानमस्ति, परेद्युरेव तदनुष्ठानात्। ततश्च दधियागासयुक्तस्य शाखाहरणादिधर्मजातस्यानुष्ठाने पूर्वेद्यु कालस्य विधायक शास्त्र वर्तत इति कृत्वा तत्रानुष्ठानम्। न तु तावता दधिमात्रार्थता। तस्मादुभयधर्मा। प्रयोजन पूर्वपक्षे—दधिनिष्पत्त्य-

1. ते इति नास्ति अ 2. न शब्दो नास्ति किन्तु धर्मैरसयुक्तमिति पाठ अ.
3. सन्निधिवशाद्दधिधर्मा' ए 4 अवान्तरप्रकरण. क. 5. न च. ए
6. न्यायेन. क.

११

ज्योतिष्टोमे "ग्रहं सम्मार्ष्टि" इत्यादयो ग्रहधर्मा अंश्वदाभ्ययोर्भवन्ति न वेति संशये पूर्वपक्षयति—

**आराच्छिष्टमसंयुक्तमितरैस्सन्निधानात् ॥ २८ ॥**

आरात्-दूरे शिष्टं-विहितम् अनारभ्यविहितमिति यावत्। तथाविधमिदं ग्रहद्वयं ग्रहधर्मैरसंयुक्त प्रत्येतव्यम्। कुत' ? इतरैस्सन्निधानात्-प्रकरणपठितैर्ग्रहैः ग्रहधर्माणां सन्निधानात्। असन्निधानादिति पाठे-आराच्छिष्टमनारभ्यविहित ग्रहद्वयमितरैः प्रकरणपठितै ग्रहधर्मैरसयुक्तं प्रत्येतव्यम्। ग्रहद्वयस्य धर्मविध्यसन्निधेरिति योजना। प्रकरणात्सोमग्रहेषु निविशमाना ग्रहधर्माः प्रकरणपठितेषु सन्निहितेष्वेव निवेश [1]लब्ध्वाऽनारभ्यविहिते ग्रहद्वयेऽस्मिन्न प्रवर्तन्त इति यावत्।

अथ सिद्धान्तयति—

**संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ २९ ॥**

वाशब्दोऽवधारणे। गृहद्वयमिद गृहधर्मैस्सयुक्तमेव प्रत्येतव्यम्। कुत. ? शेषस्य-सम्मार्गादिधर्मस्य, तन्निमित्तत्वात्-गृहप्रयुक्तत्वात्। अविशेषप्रवृत्तगृहशब्दघटित[2]वाक्यप्रमाणेन सर्वग्रहार्थत्वादिति यावत्। प्रकरणबलाद्ग्रहधर्माणा प्राकरणिकगृहमात्रार्थत्व वदतः किमवान्तरप्रकरण विवक्षितम् ? महाप्रकरण वा ? नाद्य., ऐन्द्रवायवादिगृहविधीनां प्रातिस्विकशब्दसन्दंशाभावात्। न द्वितीय., महाप्रकरणेन प्राकरणिकगृहार्थत्व वदता हि ज्योतिष्टोमप्रकरणगतान् गृहान् सम्मृज्यादित्येव प्रकरणस्य [3]धर्मविधिविशेषणत्व वक्तव्यम्। तद्विनाऽनारभ्याधीतव्यावृत्त्यसिद्धेः। न च तत्सम्भवति। विनियोजकमात्रप्रमाणस्य प्रकरणस्य विशेषकत्वानुपपत्ते। नन्वेवं सति गृहधर्मोपदेशस्य कर्मान्तरीयसुरादिगृहसाधारण्य स्यादित्यत आह-तदर्थत्वादिति। प्रकरणस्य स्वतो विशेषकत्वाभावेऽपि धर्मविधिषु उद्देश्यगृहशब्दार्थस्य ज्योतिष्टोमापूर्वसाधनत्वरूपप्रत्यायनार्थतया तद्द्वारा विशेषकत्वसम्भवादित्यर्थः। न चैवमपि सन्निधेर्विशेषकत्वात्सन्निहितगृहमात्रार्थत्व धर्माणामिति वाच्यम्। अपूर्वसाधननिवेशनमात्रेण धर्माणामर्थवत्त्वोपपत्त्या पुनस्सन्निधिना विशेषणस्याऽनाकाङ्क्षितत्वात्, अनारभ्याधीतगृहद्वयस्योत्पत्तितो धर्मविधिसन्निध्यभावेऽपि तस्य प्रकृत्यर्थ-

1. लब्धा. अ. 2 समभिव्याहृत. क. 3. कर्म. ख.

विधेयम् । तदेवंविधरशनासाधारणमपि त्रिगुणत्वादिधर्माम्नानमग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणम् ? उताग्नीषोमीयरशनामात्रार्थमिति संशयः ।

तत्र रशनाधर्माणां परिव्याणस्वरूपार्थत्वे आनर्थक्यापत्त्या क्रत्वपूर्वानुप्रवेशावश्यम्भावे सति स्थानादग्नीषोमीयपरिव्याणरशनार्थमेव [1]तदाम्नानम् । तथा च त्रिगुणत्वादयो रशनाधर्माः सवनीयपशौ चोदकप्राप्तपरिव्याणरशनायामेव प्राप्नुवन्ति नैतदपूर्वपरिव्याणरशनायामिति प्राप्ते, सिद्धान्तयति—

## रशना च लिङ्गदर्शनात् ॥ २७ ॥

सवनीयपशावपूर्वपरिव्याणरशनापि[2] रशनाधर्मोपदेशेन गृह्यते । तत्साधारणतया रशनाधर्मा उपदिश्यन्त इति यावत् । कुतः ? लिङ्गदर्शनात्—दृश्यते निश्चीयते सन्दिग्धोऽर्थोऽनेनेति दर्शनं न्यायः । लिङ्गञ्च दर्शनञ्चेति समाहारद्वन्द्वः । लिङ्गान्न्याचेत्यर्थः । "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय" इति सवनीयोत्पत्तिवाक्ये प्राकृतापूर्वसाधारणसवनीयपरिव्याणरशनायां त्रिगुणत्वानुवादो दृश्यते । रशनाधर्माणामग्नीषोमीयपरिव्याणमात्रार्थत्वे तु तन्नोपपद्येत । सवनीयपशुगतापूर्वपरिव्याणरशनायां त्रिगुणत्वस्य चोदकतोऽप्राप्तत्वेन[3] तदनुवादायोगात् । अतो लिङ्गादपि तद्रशनासाधारण्यं धर्माणाम् । न्यायाच्च—"यूपं परिव्ययति" इति हि द्वितीयाश्रुत्या परिव्याणं यूपार्थम्, तत्प्रणाड्या यूपार्थता रशनाधर्माः प्रतिपद्यन्ते । तत्र रशनाधर्माणां परिव्याणस्वरूपे आनर्थक्यात्क्रत्वपूर्वानुप्रवेशावश्यम्भावे सति अग्नीषोमीयार्थयूपार्थत्वेन परिव्याणं न [4]विशेषणीयम्, [5]किन्त्वग्नीषोमीयसम्बन्धियूपसम्बन्धित्वमात्रेण लाघवात्, तावतैवानर्थक्यपरिहारात् । अग्नीषोमीयसन्निधेरपि तावतैवोपपत्तेः । अन्यथा रशनाद्वयसाधारण्येन प्रवृत्तधर्मश्रुतिसङ्कोचापत्तेः । न च सवनीयपरिव्याणस्य सवनीययूपसम्बन्धित्वेऽपि अग्नीषोमीययूपसम्बन्धित्वाभावान्न तत्साधारण्यमिति वाच्यम् । एकादशे हि यूपस्य सौमिकपशुत्रयसाधारण्यं व्यवस्थापयिष्यते—'यूपश्चाकर्मकालत्वात्' इत्यत्र । अतस्सवनीयपरिव्याणमप्येतदग्नीषोमीयसम्बन्धियूपसम्बन्धीत्यदोषः । तस्मादुभयरशनार्थं धर्माम्नानम् ॥

इति दशमं रशनाधर्मसाधारण्याधिकरणम् ॥ १० ॥

---

1. तेषा. क. 2 अपिर्नास्ति. अ 3. अप्राप्त्यर्थं. अ 4. शेषणीय. फ.
5. किञ्च. अ.

१३

"यदि राजन्य वैश्यं वा याजयेत्" इति वाक्ये सोमचमसप्रत्याम्नायत्वेन फलचमसविधिरिति स्थितं पूर्वस्मिन् पादे। तत्र "सोममभिषुणोति" इत्यादिधर्मोपदेश' किं सोमफलसाधारण ? उत सोममात्रविषय' ? इति [1]संशय.। उभयसाधारण इति ब्रूमः। अभिषवादिविधिषु हि सोमशब्दो ज्योतिष्टोमापूर्वसाधनत्वरूपेणैव सोममाचष्टे, न तु तद्विशिष्टसोमत्वेन। अन्यथा "व्रीहीनवहन्ति" इत्यादीनां यवेष्वप्रवृत्तिप्रसङ्गात्। एवञ्च फलचमसस्यापि क्रत्वपूर्वसाधनत्वविशेषात्तत्साधारण्यमभिषवादिधर्माणामिति प्राप्ते, सिद्धान्तयति—

**नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३२ ॥**

राजन्यत्वादिनिमित्ते विहित फलचमसद्रव्यमसमानविधान स्यात्। समान साधारणं धर्माम्नानं यस्य तत् समानविधानम्। अभिषवादिधर्मोपदेश' सोममात्रविषय, न तु फलचमससाधारण इति यावत्। कुत ? अतुल्यत्वात्—फलचमसद्रव्यस्य कादाचित्कतया नित्यैरभिषवादिधर्मैरतुल्यत्वात्। नित्यानित्यसयोगविरोधादिति यावत्। यद्यपि व्रीहियवद्रव्ययोरपि प्रयोगभेदादनित्यत्वं, तथापि तत्रागत्याऽनित्ययोरपि तयोर्नित्यधर्मसम्बन्धो युज्यते। इह तु (प्रयोगतोऽपि नित्यस्य सोमद्रव्यस्य नित्याभिषवादिधर्माणां चान्वयसम्भवादनित्यफलचमसान्वयो न [2]युज्यते। किञ्च शाब्दमेव नित्यत्वं धर्मान्वये प्रयोजकम्, न तु प्रयोगतः। ततश्च व्रीहियवद्रव्ययो') प्रयोगतः पाक्षिकत्वेऽपि शब्दतो नित्यत्वान्न नित्यधर्मान्वयविरोध। फलचमसस्य तु "यदि राजन्यम्" इति यद्युपबन्धादनित्यत्वान्नाभिषवादि[3] धर्मसम्बन्ध.। न ह्यभिषवादिधर्मेण नित्येन ज्योतिष्टोमस्योपकुर्यात् अनित्यफलचमसद्वारेणेति युज्यते। नापि [4]नित्यमभिषवादिसंस्कृतफलचमसेन क्रतोरुपकुर्यादिति। तथा सति फलचमसस्यापि नित्यत्वप्रसङ्गात्। नाप्यभिषवसंस्कृतेन फलचमसेन राजन्यत्वादिनिमित्ते सति क्रतोरुपकुर्यादिति सङ्गच्छते, अभिषवादिधर्माणामप्यनित्यत्वप्रसङ्गात्। अतो नित्यानित्यसयोगविरोधान्न फलचमससाधारण्यमभिषवादिधर्माम्नानस्य[5]। नन्वपूर्वसाधनत्वरूपेणैव फलचमसस्य

1 सशये. ख ( ) कोष्ठान्तर्गतो भाग ख पुस्तके नास्ति. 2 युक्तः क.
3. न नित्याभिषव. अ. 4. धर्मसस्कृत. ग. 5. धर्माम्नानम्. ग.

न्यायेन ज्योतिष्टोमगामिनोऽनुष्ठानसादेश्यलक्षणसन्निवेशसत्त्वाच्च। तस्माज्ज्योतिष्टोमीयसर्वग्रहार्था धर्माः ॥

नन्वेव सति "मैत्रावरुण पयसा श्रीणाति" इत्यपि सर्वग्रहार्थं स्यात्। श्रीणातीति मिश्रणमुच्यत इति मन्दाशङ्कां निराकरोति—

**निर्देशाद्व्यवतिष्ठेत ॥ ३० ॥**

मैत्रावरुणमिति विशिष्टनिर्देशात्तत्रैव श्रयण निविशेत न तु महाप्रकरणमनुसृत्य ग्रहणान्तराणामपि सङ्क्रामति, प्रकरणाद्वाक्यस्य बलीयस्त्वात्। ततश्च श्रयणस्य प्राकरणिकसर्वार्थत्वबाधेन वाक्याद्व्यवस्था। इह तु प्राकरणिकव्यवस्थाबाधेन वाक्यात्सर्वार्थता ॥

इत्येकादशमश्वदाभ्याधिकरणम् ॥ ११ ॥

१२

*अग्निचयन [1]प्रकरणे "प्राणभृत उपदधाति" इत्याद्याः काश्चिदिष्टकास्सन्ति। "चित्रिणीपरुदधाति" [2]इत्याद्या अनारभ्यविहिताश्च। इष्टकाधर्माश्चाग्निप्रकरणे समाम्नाता—"न खण्डामुपदध्यान्न कृष्णामुपदध्यात्" इत्यादय। ते तावदनारभ्यविहितास्विष्टकासु* प्रवर्तन्ते न वेति सशय। तत्रांश्वदाभ्ययोरनारभ्यविहितयोरपि "यस्यैव विदुषोऽदाभ्यो गृह्यते" इति प्राकरणिकवाक्यद्वयेन विनियोगोऽस्ति। ततश्च प्रकरणसस्पर्शाद्युक्तस्तयोर्धर्मसम्बन्ध.। चित्रिण्यादीना त्वनारभ्यविहितानां "या काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात् ता मध्यमाया चितावुपदध्यात्" इत्यनारभ्यवादेनैव विनियोगोऽवगत। ब्राह्मणवतीरित्यनारभ्यविहिता उच्यन्ते। ततश्च चित्रिण्यादीनां प्रकरणसस्पर्शाभावान्न धर्मसम्बन्ध इति प्राप्ते सिद्धान्तयति—

**अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३१ ॥**

अप्रकरणे यदग्न्यङ्ग—चित्रिण्यादि तदप्यंश्वदाभ्यवद्धर्मसंयुक्तं स्यात्। प्रकरणसस्पर्शाभावेऽपि साग्निचित्यक्रत्वपूर्वसस्पर्शात्तत्साधननिवेशिन[3] इष्टकाधर्माः चित्रिण्यादीनामपि भवन्ति ॥

इति द्वादश चित्रिण्यधिकरणम् ॥ १२ ॥

---

* * चिन्हान्तर्गतो भागः क पुस्तके त्रुटितः 1. प्रकरण इति नास्ति ख.
2. इत्याद्यनारभ्य. ख 3 तदिति नास्ति. अ

अथ सिद्धान्तयति—

**न, तद्वत्प्रयोजनैकत्वात् ॥ ३४ ॥**

न[1] प्रतिनिधिरसमानविधान , किन्तु तद्वत्—श्रुतद्रव्यवत् धर्मोपदेश लभते । कुतः ? प्रयोजनैकत्वात् । येन शब्देन व्रीह्यादिद्रव्यमनूद्यावहननादिधर्मा. प्रयुज्यन्ते विधीयन्ते[2] तस्य व्रीह्यादिशब्दस्यैकत्वात् प्रतिनिधेयनीवारादिसाधारणत्वात् । "व्रीहिभिर्यजेत" इत्यत्र हि व्रीहिशब्द आकृत्यधिकरणन्यायेन जातिवचन. । तत्र जातेस्साक्षाद्यागसाधनत्वाभावाद्व्यक्तिद्वारा यागसाधनत्वं वाच्यम् । तदपि न सम्भवति, यागदशायामवहननपेषणादिना व्यक्तीना विनष्टत्वात् । अतो व्रीह्यवयवानामेव[3] यागसाधनत्वे व्रीहिशास्त्रस्य तात्पर्यं वाच्यम् । तत्र व्रीहिषु व्रीह्यवयवा बहुलास्सन्ति । नीवारेषु तु[4] व्रीह्यवयवा नीवारावयवमिश्रा अल्पास्सन्ति । तत्र यदि न व्रीहयो लभ्यन्ते तदा व्रीहिशास्त्रानुग्रहाय नीवारगता अल्पा अपि व्रीह्यवयवा ग्राह्या । तत्र नीवाराणामुपादान विना तद्गतव्रीह्यवयवानामुपादानासम्भवान्नान्तरीयकतयैव तदुपादानम् । तच्च व्रीह्यवयवबुध्यैव न तु नीवारबुध्येति षष्ठे वक्ष्यते—'सामान्यं तच्चिकीर्षा' इत्यत्र[5] । तथा च व्रीहिगतानामिव नीवारगतानामपि ( व्रीह्यवयवानां व्रीहिशास्त्रतात्पर्यविषयभूतत्वाद्धर्मोपदेशः श्रुतप्रतिनिधिद्रव्यसाधारणः ।

नन्वेवमपि व्रीहिगतावयवरूपेण साधनताया व्रीहिशास्त्रतात्पर्यविषयत्वात्तदवयवा. प्रथमावगता. । नीवारगतास्तु ) मुख्यद्रव्यालाभेऽपि कर्मणामवश्यकर्तव्यतया आक्षिप्ता पश्चादवगता । ततश्च फलचमसन्यायेनात्रापि न सामान्यविध्यन्तस्सम्भवतीत्यत आह—

**अशास्त्रलक्षणत्व ॥ ३५ ॥**

व्रीह्यवयवाना व्रीहिगतत्वेन[6] रूपेण यागसाधनताया व्रीहिशास्त्र [7]तात्पर्यविषयत्वाभावादित्यर्थ. । अवघातपेषणादिना व्रीहिस्वरूपस्य विनष्टत्वेन यागनिष्पत्तिदशायामवयवानां व्रीहिगतत्वाभावेन व्रीहिशास्त्रस्य व्रीहिगतत्वविशिष्टावयवेषु तात्पर्यासम्भवाद्व्रीहिजननयोग्यावयवमात्रे तात्पर्यं वक्तव्यम् । ततश्च व्रीहिजननयोग्य-

---

1 न प्रतिनिधिसमानधिन. क, न प्रतिनिधिस्समानविधान . अ. 2. विधीयन्त इति तस्य. क. 3. एवेति नास्ति. अ. 4. तुर्नास्ति. अ. 5 इति. अ, ग. ( ) कपुस्तके कोष्ठान्तर्गतो भागस्त्रुटित . 6. गतत्वरूपेण क 7. शास्त्रविषयतात्पर्याभावात्. अ.

धर्मान्वयः। ततश्चापूर्वसाधनत्वस्य ब्राह्मणयजमानकप्रयोगे सोमद्रव्यमाश्रित्य राजन्यादिप्रयोगे फलचमसद्रव्यमाश्रित्य च नित्यतयैव सर्वत्र प्रयोगेषु सद्भावान्न [1]नित्यानित्यसंयोगविरोध इति चेत्—सत्यम्; नित्यं नैमित्तिकञ्च द्रव्यं न युगपद्विधीयते, किन्तु नित्यं विधाय नैमित्तिकं विधीयत इत्यनुपदमेव निरूपितम्—'नैमित्तिकन्तु प्रकृतौ तद्विकारस्संयोगविशेषात्' इत्यत्र। ततश्च नित्यसोमद्रव्यशास्त्रप्रवृत्तिवेलायां नैमित्तिकफलचमसद्रव्यशास्त्रस्य प्रवृत्त्यभावेन फलचमसद्रव्यगतापूर्वसाधनत्वानवगत्या [2]सोमपदेन सोमद्रव्यगतापूर्वसाधनत्वस्यैव लक्षणयोपस्थिते' तद्विशेषणतया तस्या दशायामभिषवादिधर्मविधय स्वार्थान्विधाय निवृत्ता' पश्चान्नैमित्तिकद्रव्यशास्त्रप्रवृत्त्यनन्तरं नैमित्तिकद्रव्यगतापूर्वसाधनत्वावगतौ न [3]तद्विशेषणतयापि स्वार्थान् विधातु शक्नुवन्ति, आवृत्तिप्रसङ्गात्। व्रीहियवशास्त्रयो. पाठक्रमसत्त्वेऽपि तयोर्द्रव्ययोर्युगपदेव धर्मप्रवृत्तिरेकादशे वर्ण्यत इति न विरोधः।

प्रयोजनं पूर्वपक्षे—"सोम ते श्रीणामि" इत्यादिमन्त्राणा फलचमसद्रव्ये निवृत्तिः, प्रकृतावूहाभावाद्गुणकामाना प्रवृत्तिश्च। सिद्धान्ते तु—तद्विपर्यय इति॥

इति त्रयोदशमभिषवादीनां सोमार्थताधिकरणम् ॥ १३ ॥

१४

नित्यकर्मणि आरब्धे च काम्यकर्मणि श्रुतद्रव्यालाभे प्रतिनिधिरुपादातव्य इति षष्ठे वक्ष्यते। तत्रावघातादिधर्मोपदेशः किं श्रुतप्रतिनिधिसाधारणः? उत [4]श्रुतमात्रविषयः? इति संशये पूर्वपक्षयति—

## प्रतिनिधिश्च तद्वत् ॥ ३३ ॥

प्रतिनिधिरपि फलचमसवदसमानविधान इत्यर्थः। प्रतिनिधिद्रव्यस्य श्रुतद्रव्यालाभनिमित्तकतयाऽनित्यत्वेन तत्र नित्यवदाम्नातधर्माणा सम्बन्धाभावाच्छ्रुतद्रव्यविकारत्वाच्चातिदेशत एव तत्र धर्म [5]प्राप्तिरिति यावत्।

---

1. नित्येति नास्ति. अ 2 सोमपदेनेति नास्ति ग. 3. न शब्दो नास्ति क,ख.
4. श्रुतविषय . अ. 5. प्रवृत्तिः. क.

प्रयोजनं पूर्वपक्षे–प्रकृतौ "सोमन्ते क्रीणामि" इत्यादिमन्त्राणा पूतीकशब्द-विकारेण प्रवृत्ति.। सिद्धान्ते त्वविकारेण प्रवृत्तिरिति ॥

इति पञ्चदश प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ॥ १५ ॥

१६

ज्योतिष्टोमेऽग्निष्टोमाख्यस्तोत्रयुक्त सोमयज्ञ्यभ्यासप्रचारान्तं कर्मकलापमनुक्रम्य[1] "इत्यग्निष्टोम" इत्युक्त्वा "पशुकाम उक्थ्य गृह्णीयात्, षोडशिना वीर्यकामस्य स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्" इति काम्यगुणाननुक्रम्यानूयाजाद्युदवसानीयान्त यज्ञपुच्छमाम्नातम्। तत्र "सोमेन यजेत" इत्युपक्रान्तस्य[2] सोमयागस्य "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति [3]फलविधि। "अग्निष्टोमेन यजेत" इति तु तस्य सस्थाविधि.। अग्निष्टोमशब्दो हि आग्निमारुतशस्त्रात्[4] पूर्वभावितस्तोत्रविशेषे वर्तते, "अग्निष्टोमेन स्तुवत" इति स्तौतिसामानाधिकरण्यात्। तथाऽग्निष्टोमसस्थाकक्रतावपि वर्तते—'अग्निष्टोम. प्रथमयज्ञः' इति दर्शनात्। तत्राकृत्यधिकरणन्यायेन विशेषणभूताग्निष्टोमसंस्थैवाभिधेया। क्रतुस्तु गवादिशब्देषु व्यक्तिरिव निरूढलक्षणया शक्तितुल्यया गम्यते। अग्निष्टोमसंस्था चेहाग्निष्टोमस्तोत्रादूर्ध्वं स्तोतृव्यापारोपरतिः[5] विवक्षिता। ततश्चाग्निष्टोमस्तोत्रादूर्ध्वमाग्निमारुतशस्त्रतदीययज्ञ्यभ्यासप्रचारानूयाजादियज्ञपुच्छसत्त्वेऽपि न क्षतिः। न चाग्निष्टोमशब्दस्य स्तोत्रविशेषवाचिन एव लक्षणयाऽग्निष्टोमस्तोत्रसम्बन्धेन क्रतावपि प्रयोगोऽस्त्विति वाच्यम्। तथा सति योऽयमुक्थ्यादिसस्थाकै. क्रतुभिर्यजते तस्मिन्नप्यग्निष्टोमेन यजत [6]इति प्रयोगापत्तेः। तेष्वप्यग्निष्टोमस्तोत्रसम्बन्धसत्त्वात्। तदेव स्तोत्रविशेषवाची तत्संस्थावाची चाग्निष्टोमशब्द। तत्र "अग्निष्टोमेन यजेत" इत्यत्र यजिसामानाधिकरण्यात् सस्थानिमित्तकक्रतुपर एवास्थेय.। तथा चाग्निष्टोमसस्थाकेन क्रतुना भावयेदिति प्रतीयमानोऽर्थ.। तत्र क्रतुस्तावत् "सोमेन यजेत" इत्युत्पत्तिवाक्यादेव प्राप्तः प्राप्ताप्राप्तविवेकन्यायेन लोहितोष्णीषादिवद्विशेषणभूताग्निष्टोमसस्थैव विधीयते–अग्निष्टोमसस्थया क्रतुमुपकुर्यादिति। उक्थ्यषोडशिशब्दावपि स्तोत्रविशेषवाचकौ "उक्थ्यै स्तुवते षोडशिना स्तुवते" इति स्तौतिसामानाधिकरण्यात्। 'उक्थ्यो यज्ञ, षोडशी

1. माक्रम्य अ. 2 उत्पन्नस्य. क. 3. फले. ख. 4. स्तोत्रात्. क.
5. विरति. क. 6. इतीति नास्ति. क.

त्वरूपेण तदवयवानां व्रीहिषु नीवारेषु च[1] व्रीहिशास्त्राद्युगपदेव यागसाधनत्वमवगतम्, प्रवृत्तिनिमित्तत्वस्य साधारणत्वात्। एवञ्च व्रीहिशास्त्रानुसारेण "व्रीहीनवहन्ति" इत्यादिवाक्यगतस्यापि व्रीहिशब्दस्य व्रीहिजननयोग्यावयवमात्र[2] परत्वं न्याय्यम्, न तु व्रीहिगतत्वरूपेणेति सिद्धं प्रतिनिधीनामपि श्रुतद्रव्यसामानविध्यम्। ननु व्रीहिशास्त्रस्य व्रीहिजननयोग्यावयवपरत्वे व्रीहीणामिव नीवाराणामपि मुख्यत्वमेव स्यात्, न तु प्रतिनिधित्वमित्यत आह—चेति। चेत्यनुक्तसमुच्चये। व्रीहिषु व्रीहिजननयोग्यावयवा बहुलास्सन्ति। नीवारे त्वल्पाः। प्रवृत्तेश्चैष स्वभावः—यद्बहुलावयवेषु सत्स्वल्पावयवेषु न प्रसरतीति। तत्सिद्धं प्रतिनिधीना श्रुतद्रव्यसामानविध्यम्। प्रयोजन पूर्वपक्षे—[3]प्रकृतौ "व्रीहीणां मेध" इत्यादीनां मन्त्राणां यवनीवारादिशब्दविकारेण [4]प्रवृत्तिः। सिद्धान्ते तु अविकारेण [5]तत्प्रवृत्तिरिति ॥

इति चतुर्दश मुख्यप्रतिनिध्योस्सामानविध्यधिकरणम् ॥ १४ ॥

१५

"यदि सोमं न विन्देत्पूतीकानभिषुणुयात्" इत्यत्र पूतीकानामोषधिविशेषाणामभिषवादिधर्मोपदेश[6]ग्राहित्वलक्षण सामानविध्यमस्ति न वेति संशयः। तत्र व्रीह्यलाभे निमित्ते सति नीवारशब्देन नीवाराणा विध्यभावाद्[7]व्रीहिबुध्यैवोपादानाद्व्रीहिसामानविध्ये सत्यपि सोमालाभे पूतीकाना पूतीकशब्देन विधानात् पूतीकबुध्यैवोपादानात् फलचमसवन्न सामानविध्यमिति प्राप्ते, सिद्धान्तयति—

नि थर्था पुनःश्रुतिः ॥ ३६ ॥

सोमालाभे तत्सदृशद्रव्येष्वपि प्राप्तेषु पूतीकाना कदाचिदप्राप्तत्वात्, अप्राप्तदशपूरणाय नियमविधानार्थं पुनर्वचनम्। अर्थात्तु तदितरसदृशद्रव्याणा ग्रहणं निवर्तत इति न परिसङ्ख्यानिबन्धनत्रैदोष्यम्। न त्विह पूतीका अपूर्वतया विधेयाः, अत्यन्ताप्राप्तविधौ गौरवात्, कदाचित्प्राप्तत्वेनात्यन्ताप्राप्त्यभावाच्च। पूतीकग्रहणन्तु पूतीकगतसोमावयवोपलक्षणम्। तस्मात्पूतीकाना सोमसामानविध्यम्।

---

1. चेति नास्ति. अ 2 मात्रेति नास्ति. अ. 3 प्रकृताविति नास्ति. अ
4. प्रवृत्तिरिति नास्ति. क. 5. तदिति नास्ति क. 6. धर्मग्राहित्व. ग 7 व्रीहिबुध्यैवोपादानादिति नास्ति. अ.

## संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ३७ ॥

तुः फलचमसवैषम्ये। मा भूत्फलचमसस्य नैमित्तिकस्य [1]सोमद्रव्यसमानविधानता। उक्थ्यादिसंस्थास्तु काम्याः ज्योतिष्टोमसमानविधाना भवितुमर्हन्ति। कुतः? प्रकरणाविशेषात्। प्रकरणमितिकर्तव्यताकाङ्क्षालक्षणम्। तदेतज्ज्योतिष्टोमस्य क्रतोस्तदाश्रितानाञ्च काम्यसंस्थानां फलार्थत्वाविशेषादविशिष्टम्। न ह्यत्र नित्यमभिषवादिधर्मैः क्रतुमुपकुर्यादनित्यफलचमसद्वारेति नित्यानित्यसंयोगविरोधोऽस्ति। [2]एतदेव हि फलचमसस्यासमानविधानत्वम्—यत्, एतदभिषवादिधर्माणां क्रत्वन्वये फलचमसस्य न द्वारत्वमिति। न हि तस्य स्वतो धर्मग्राहित्वमस्ति, अफलत्वात्। नित्यानित्यसंयोगविरोधश्च द्वारमवलम्ब्य धर्मान्वये, न तु स्वतो [3]धर्मान्वयेऽपि। न च संस्थानामिह काम्यानां द्वारतयाऽन्वयः, तासां क्रतुवदेव फलार्थतया स्वतो धर्मग्राहित्वात्। अन्यथा ज्योतिष्टोमस्यापि नित्यस्यैव धर्मविधानं स्यात्, न तु फलार्थस्य, फलकामनयाऽनित्यत्वात्। ततश्च नित्यं दीक्षणीयादिधर्मैं क्रतोरुपकुर्यात्, [4]पश्वादिफलकामनायामुक्थ्यादिसंस्था उपकुर्यादित्यन्वये विरोधाभावात्तासां समानविधानता।

[5]इतोऽप्येवमित्याह—

## [6]व्यपदेशस्तुल्यवत् ॥ ३८ ॥

स्वार्थे वतिः। 'असिद्धवदत्राभात्' 'तृज्वत्क्रोष्टु' इति व्याकरणसूत्रव्याख्यावसरे '[7]आभीयकार्यमसिद्धं भवति। क्रोष्टुशब्द उकारान्तः [8]तृजन्तः क्रोष्टृशब्दो भवति' इति तद्भाष्यवार्तिकयो[9]र्व्याहृतत्वेन स्वार्थवतेर्ज्ञापितत्वात्। अत एव च 'नित्यवदाम्नातम् सिद्धवत्कृतम्' इत्यादि सङ्गच्छते। व्यपदेशः—ज्योतिष्टोमप्रकरणे विशिष्य धर्मोपदेशः सर्वसंस्थानां तुल्यो दृश्यते। "यमग्ने पृत्सु मर्त्यम्" इति प्रचरणीशेषात् "क्रतुकरणं जुहोति यद्यग्निष्टोमः। अथ यद्युक्थ्यो [10]मध्यमं परिधिमनक्ति, यदि षोडशी द्रोणकलशमुपस्पृशतीति, यद्यतिरात्र एतदेव यजुर्वेदेन हविर्धानं प्रपद्यते" इतीदं तत्तत्संस्थानां धर्मविशेषवचनं [11]सामान्यधर्मविधीनामविशेषितानां

1. सोमद्रव्यस्य अ. 2. एवंच हि विधानता, यदि. ग 3. धर्मान्वय. अ. 4 फले कामनाया क 5 अतोऽपि. अ 6. व्यपदेशश्च 7. अग्रीयमित्यशुद्ध पाठ. अ. 8. तृजन्त इति नास्ति. अ 9. व्यवहृतत्वेन. क. 10. मध्यपरिधिं. अ. 11. सामान्य क.

यज्ञः' इति प्रयोगात्तत्संस्थाकक्रत्वोरपि वर्तमानावाकृत्यधिकरणन्यायेन विशेषणभूत- तत्संस्थयोर्वाचकौ। उक्थ्यसंस्थया पशून् कुर्यात् षोडशिसंस्थया वीर्यं कुर्यादित्यर्थः। उक्थ्यमिति द्वितीया त्वग्निहोत्रमितिवदुपपाद्या। गृह्णातिस्तु "सौर्यं चरुं निर्वपेत्" इत्यादौ निर्वपत्यादिवत्प्रत्ययमात्रानुग्रहाय फलवत्संस्थाङ्गत्वेन वाक्यान्तरप्राप्तग्रहण- स्यानुवादकः। 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्" इति ग्रहणस्य स्तोत्रसम्बन्धोऽवगम्यते। ग्रहणबलात्तद्यज्यभ्यासोऽपि गम्यते। ततश्च ग्रहणं स्तोत्रं तद्ग्रहयज्यभ्यासश्चेत्येतत्सर्वमुक्थ्यसंस्थायाः फलवत्त्वात् फलवदफलन्यायेन तदर्थं भवति। एवं षोडशिवाक्येऽपि योज्यम्। न चोक्थ्यषोडशिशब्दाविह स्तोत्रपरावेव किं न स्यातामिति वाच्यम्, "उक्थ्यो यज्ञः न वै षोडशी नाम यज्ञोऽस्ति"[1] इत्या- दिवाक्यशेषावगतयजिसामानाधिकरण्यबलेन संस्थानिमित्तकत्वस्यैवावधारणात्। एवञ्चोक्थ्यषोडशिवाक्यद्वयमेतत् "उक्थ्येन पशुकामो यजेत षोडशिना वीर्य- कामः" इति वाक्यद्वयञ्च समानार्थकं सम्पद्यते। अतिरात्रशब्दोऽपि रात्रिमतीत्य सन्तिष्ठत इति व्युत्पत्त्या संस्थानिमित्तक एव। रात्रिमतीत्य यो वर्तत इति व्युत्पत्त्या- श्रयणे तु अग्निष्टोमादिसंस्थेष्वपि क्रतुषु तत्प्रयोगापत्तिः[2]। तेष्वपि सुत्याप्रयोगस्य पूर्वेद्युर्महारात्र उपक्रम्योत्तरेऽहनि समाप्यत्वात्। संस्थानिमित्तकक्रतुपरत्वेऽपि प्राप्ता- प्राप्तविवेकेन संस्थैवात्रापि फलाय विधीयते—अतिरात्रसंस्थया प्रजां कुर्यादिति। तदेवं ज्योतिष्टोमः क्रतुः फलार्थः। अग्निष्टोमसंस्था क्रत्वङ्गम्। उक्थ्यादिसंस्थास्तु फलान्तरार्थतया[3] ज्योतिष्टोममाश्रित्य विधीयन्ते। तथा च चतुस्संस्थो ज्योतिष्टोमो- ऽवधारितः। सर्वास्वपि संस्थासु "त्रिवृत्पञ्चदश सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" इति [4]निरुक्तज्योतिष्टोमस्वरूपमनुस्यूतं भवति। तदेत- त्संस्थाभेदोपजननेऽपि नापैति। यथा—[5]देवदत्तस्योन्मादाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति तद्वत्। संस्थानान्तु विरोधादन्योन्यं समावेशो नास्तीति स्थितिः।

[6]तदिह संशयः—किं दीक्षणीयाद्यङ्गविधानमग्निष्टोमसंस्थाकज्योतिष्टोमस्य काम्यसंस्थानाञ्च साधारणम्? उताग्निष्टोमसंस्थाकज्योतिष्टोमस्यैव? इति। तत्र पूर्वपक्षयति—

---

1. इत्याद्यर्थवादावगतः क. 2 पत्तेः क 3. फलविशेषार्थतया ग 4 निरु- क्तेति नास्ति क. 5. अ पुस्तके दैवदत्तस्य देवतात्व त्वपैति इत्यशुद्ध पाठः. 6 तदत्र. ख.

श्रित्य विरोधोन्मेषात्[1] बाधो विकल्पो वा स्यात्। [2]पूर्वपूर्वपशोरधिकविपत्तयोत्तरोत्तरपशुनाऽल्पावकाशेन बाधितत्वाच्च। ततश्च "द्वितीयम्" इत्यादिसमुच्चयदर्शनमनुपपन्नं स्यात्। [3]समानविधानत्वे तु सर्वे पशव: सर्वास्वपि संस्थासु प्रकरणाविशेषात्प्राप्ता:। तत्र [4]पूर्वपूर्वसंस्थासु पर. पर पशुर्न भवति, निमित्ताभावात्। उत्तरोत्तरसंस्थासु तु प्रत्यक्षेण निमित्तेन पूर्व: पशुर्वाक्यात्प्राप्नोति। तत्र सवनीयसमाख्यया[5] एककार्यत्वमवलम्ब्य बाधो विकल्पो वा यावत्प्रसज्यते, तत: प्रागेव वाक्यप्राप्तनिमित्तभेदलब्धस्समुच्चय. प्रवर्तते, वाक्यस्य समाख्यापेक्षया बलवत्त्वात्। यथा प्रयाजाना सत्यपि समाख्यैकत्वे "समिधो यजति, तनूनपात यजति" इत्यादिवाक्यानुसारेण कार्यान्वयात्समुच्चय. तद्वत्। अतोऽपि[6] सस्थास्समानविधाना:।

अथ सिद्धान्तयति—

## विकारास्तु मसंयोगे सति नित्यस्य समत्वात् ॥ ३९ ॥

तुरवधारणे। उक्थ्यादिसंस्था आश्रयभूतज्योतिष्टोमस्य विकारा एव, न तु तत्समानविधाना। यत कामसंयोगे सति पश्वादिफलान्तरकामनासयोगे सति उक्थ्यादिसस्था विहिता:। ताश्चाक्रियात्मकत्वाद्द्रव्यादिवदाश्रयभूता क्रियामाश्रित्यैव फल साधयन्ति, न तु स्वत.। धर्मान्वयश्च न स्वरूपेण, आनर्थक्यात्। किन्तु फलसाधनत्वरूपेण। ततश्च धर्मान्वयदशाया[7] सस्थाना [8]साधनत्वोपस्थितौ तन्निर्वाहकाश्रयभूतज्योतिष्टोमक्रियाया[9] उपस्थितिरावश्यिकी। तामनादृत्य न केवल सस्थाना धर्मान्वयस्सम्भवति। ज्योतिष्टोमक्रियायास्तु साधनत्वोपस्थितिदशायां[10] न संस्थानामुपस्थितिरावश्यिकीति ता अनादृत्यैव सा धर्मजात ग्रहीतु प्रगल्भत[11] इति तदर्थमेव धर्माम्नानम्, न तु तदाश्रितकाम्यसस्थार्थम्। समानविधानत्वे बाधकमप्याह—नित्यस्य समत्वादिति। नित्यवदाम्नातस्य धर्मजातस्याश्रयभूतज्योतिष्टोमक्रियान्वये सत्येव समत्वादेकरूपत्वात्। काम्यसस्थान्वये च वैरूप्यप्रसङ्गादित्यर्थ.। दीक्षणीयादिधर्मैर्नित्यं क्रतोरुपकुर्यात्, पश्वादिकामनाया सत्यामुक्थ्यादिसस्था उपकुर्यादिति नित्यानित्यविरोधप्रसङ्गादिति यावत्। अथैव

1 उदयात् क, ख. 2. पूर्वपदमेक नास्ति अ. 3 असमान अ 4. पूर्वपदमेक नास्ति अ. 5 समाख्याया. क. 6. अतश्च ख 7. वेलाया. ग. 8. साधनत्वे साधन. क, ख. 9. ज्योतिष्टोमस्य. ग. 10. वेलाया. ग. 11. प्रभवति. ग.

सर्वसंस्थासाधारण्यं गमयति। किञ्च यदि सामान्यविहितमग्निष्टोमसंस्थस्यैव क्रतोः स्यात्, [1]तदा "यद्यग्निष्टोम" इत्यनर्थकमेव स्यात्, [2]तद्विनापि "यमग्ने पृत्सु मर्त्यमिति जुहोति" इत्येतावतैवाग्निष्टोमक्रत्वङ्गत्वसिद्धे। किञ्चोक्थ्यादिसंस्थाना ज्योतिष्टोमप्रकरणपरिग्रहाभावे "यद्युक्थ्य" इत्यादि यद्युपबन्धोऽनुपपन्न, तस्यानेकसन्निहितापेक्षत्वात्। ततश्च "तिस्र एव सान्हस्योपसद" "द्वादशाहीनस्य" इतिवद्यद्यनुबन्ध विनैव धर्मविधान स्यात्। अत उक्थ्यादिसस्थासाधारणमङ्गविधानमिति विज्ञायते।

इदमपर लिङ्गम्—"आग्नेयमजं सवनीयमग्निष्टोम आलभते: ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्र वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषी चतुर्थीमतिरात्रे" इति। अत्राग्निष्टोमादिशब्दा अग्निष्टोमादिस्तोत्रसस्थाकक्रतुपरा न भवन्ति। नापि सस्थापरा, यजिसामानाधिकरण्याश्रवणात्। पूर्वप्रतीतस्तोत्रमात्रपरत्वे सम्भवति जघन्यप्रतीतस्तोत्रविशेषितसस्थानिमित्तकत्वस्य[3]आश्रयितुमनुचितत्वाच्च। तथा चाग्निष्टोमसस्थे ज्योतिष्टोमेऽग्निष्टोमस्तोत्रनिमित्तक आग्नेय एक सवनीय.[4] पशु, उक्थ्यसस्थाके तु—ऐन्द्राग्नपशुरुक्थ्यस्तोत्रनिमित्तकोऽग्निष्टोमस्तोत्रनिमित्तक आग्नेयश्चेति द्वौ सवनीयौ पशू भवत' निमित्तद्वयसद्भावात्[5]। षोडशिसस्थाके त्रयस्सवनीया'[6]पशव निमित्तत्रयसद्भावात्[7]। अतिरात्रसस्थाके तु चत्वारस्सवनीया' पशव, निमित्तचतुष्टयसत्त्वात्[8]। अत्राग्निष्टोमादिशब्दाना तत्तत्सस्थानिमित्तकत्वेन[9] पशूना तत्तत्सस्थानिमित्तकत्वापत्ति.। ततश्चोक्थ्यादिक्रतुषु पूर्वपूर्वसस्थाभावात्तत्तन्निमित्तकपशूनामप्राप्तौ "द्वितीयम्" इत्यादि समुच्चयदर्शन[10] नोपपद्येत। तस्मात्स्तोत्रपरा एवाग्निष्टोमादिशब्दा[11] इति स्थिति.। [12]यद्यसमानविधानता तर्ह्याश्रयभूतस्याग्निष्टोमसस्थज्योतिष्टोमस्य विकारा उक्थ्यादिसस्था.। तासु चाग्नेयस्य सवनीयपशोरतिदेशत. प्राप्ति। तेन [13]चाग्नेयेन सवनीयपशुना वैकृतानामैन्द्राग्नादिपशूना[14] तत्तद्वाक्यतो विहितानामपि तत्कृतकार्यान्यत्वमाश्रित्य यावत्समुच्चयस्सम्भवति, तत. प्रागेवौपदेशिकसवनीयसमाख्याकृतकार्यानन्यत्वमा-

---

1 तर्हि अ 2. तद्विधानमपि क 3 निमित्तत्वस्य अ 4 पशुरिति नास्ति क 5 सत्त्वात् ख 6. पशव इति नास्ति अ 7. सत्त्वात् ख. 8. सद्भावात् क 9 निमित्तकत्वे तु. अ, ग 10 दर्शनात् अ 11 अग्निष्टोमशब्दा. ख 12. यदि तु क, ख 13 आग्नेयसवनीय अ. 14. आग्नेयादीना ख.

इति सूत्रेण सुरावाजिनयोर्व्रीहिप्रयोज्यत्वात्तद्धर्मातिदेशो वक्ष्यते । अतस्संस्थाना विकारत्वमिति ॥

अथ यदुक्त [1]द्वितीयमित्यादि समुच्चयदर्शन नोपपद्यन इति तत्राह—

## वचनात्तु[2] समुच्चयः ॥ ४० ॥

तुरवधारणे । यद्यपि संस्थानां विकारत्वे सवनीयपशूना समुच्चयो न्यायतो न भवति, तथापि वचनादेव [3]समुच्चयो भविष्यति । न चोक्थ्यादिषु प्रकृतिप्राप्तसवनीयपशुयागानुवादेनैन्द्राग्नत्व[4]द्वितीयत्वादिविधौ वाक्यभेद. शङ्क्य, "ऐन्द्राग्नमुक्थ्ये ऐन्द्र षोडशिनि, सारस्वतमतिरात्रे" इति [5]वाक्यान्तरप्राप्तैन्द्राग्न्यनुवादेन समुच्चयविधानोपपत्ते, विशिष्टविधानाद्वा ।

इतोऽपि न समानविधानमित्याह—

## प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४१ ॥

"यद्यग्निष्टोमो जुहोति, यद्युक्थ्य' [6]परिधौ निमार्ष्टि न जुहोति, यदि षोडशी द्रोणकलशमुपस्पृशति, न जुहोति, परिधीननक्ति, यद्यतिरात्र एतदेव यजुर्वदन् (हविर्धान) प्रपद्यते, न जुहोति, नानक्ति, नोपस्पृशति" इति पूर्वपूर्वनिमित्तकानां होमादीनां प्रतिषेधानुवादो विकारपक्ष एवावकल्पते । चोदकप्राप्तस्याधिकविषयस्य क्रतुकरणसमाख्यातस्य पूर्वपूर्वस्योत्तरोत्तरेण प्रत्यक्षनिरवकाशविहितेन बाधित्वात् । समानविधानत्वे तु—औपदेशिकसमाख्यामाश्रित्य पूर्वपक्षोक्तरीत्या समुच्चयापत्त्या प्रतिषेधानुवादो[7]ऽनुपपन्नस्स्यात् । न च वचनात्समुच्चयसम्भव, विधिप्रतिषेधयोर्वाक्यभेदप्रसङ्गात् । न ह्यत्र द्वितीयमित्यादिवद्विशिष्टविधिसम्भवः, द्वितीयत्वादिवद्धोमाद्यभावस्य परिधिमार्जनादिविशेषणत्वाप्रसिद्धे. ।

यत्तु संस्थाना [8]प्रकरणधर्मविशेषसम्बन्धदर्शनात्सर्वोऽप्यङ्गविधिस्संस्थासाधारण इति सामान्यतो दृष्टानुमानमुपन्यस्त तत्राह—

---

1 द्वितीय तृतीयमित्यादि अ  2 वचनाच्च.  3 समुच्चय इति नास्ति ग.  4 ऐन्द्राग्न्यत्वादिति. क  5 वाक्यान्तरत. ग  6. परिधि. अ  7. अनुवादो न स्यात्. ख  8 धर्मेति नास्ति क.

सति ज्योतिष्टोमस्यापि नित्यस्यैव धर्मविधान स्यात्, न तु फलार्थस्यापीत्यत्राप्येतदेवोत्तरम्—नित्यस्य समत्वादिति। नित्यज्योतिष्टोमप्रयोगविधेः काम्यज्योतिष्टोमप्रयोगविधिना [1]युगपत्प्रवृत्तत्वादित्यर्थः। तथाहि—"सोमेन यजेत" इत्युत्पन्नस्य सोमयागस्य "वसन्ते वसन्ते [2]ज्योतिषा यजेत" इति प्रत्यवायपरिहारार्थतया नित्यप्रयोगविधिः। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति काम्यप्रयोगविधिः। एतौ च प्रयोगविधी उत्पन्नमात्रे सोमयागे युगपत्प्रवर्तेते, पौर्वापर्ये विनिगमकाभावात्। तथा च दीक्षणीयाद्यङ्गोपकृतेन सोमयागेन प्रत्यवायपरिहार कुर्यात्, स्वर्गं कुर्यादित्येव युगपदेव प्रवृत्तप्रयोगद्वयसाधारणज्योतिष्टोमस्वरूपे [3]धर्मविधय स्वार्थपर्यवसन्ना भवन्ति। ततश्च नित्यकाम्यप्रयोगभेदेन धर्मविधीना तात्पर्यभेदाप्रसक्तेर्नित्यकाम्योभयविधज्योतिष्टोमसाधारण्यं धर्मविधानस्योपपद्यत इति न प्रतिबन्धकावकाशः। उक्थ्यादिसस्थास्तु गुणा. ज्योतिष्टोमक्रियामाश्रित्य विधीयन्ते। प्रयुज्यमानैव च ज्योतिष्टोमक्रिया तदाश्रयतामर्हति। प्रयोगश्चेतिकर्तव्यतान्वयानन्तरभावीति प्रथमं क्रियासम्बन्धो धर्मविधीनामावश्यक.। ततश्च प्रथम ज्योतिष्टोमक्रियाविधिसमये व्यापृतानामङ्गविधीनां पश्चात्प्रवृत्तेष्वपि काम्यसस्थागुणविधिषु पुनर्व्यापार प्रसज्यत इति [4]न तत्साधारण्यसम्भवः। नित्यवदाम्नातदीक्षणीयाविधर्मजातस्य व्यवहितोपवीतविधिसमत्वान्न सस्थार्थत्वमित्यर्थः[5]। अभिषवादिधर्मा हि सोमद्रव्यद्वारा यागार्था भवन्ति। उक्थ्यादिसंस्थास्तु तैर्न सम्बध्यन्ते, द्वाराभावात्। न हि सोमद्रव्यस्य यागार्थतया श्रुतस्य सस्थार्थत्वमस्ति। ततश्च "सोममभिषुणोति" इत्याद्यसम्बन्धिपदैर्व्यवहितत्वान्न दीक्षणीयादिधर्मजात सस्थाविषयो ग्रहीतु [6]शक्नुवन्ति। यथा—निविद्भिर्व्यवधानात् "उपव्ययत" इति सामिधेनीप्रकरणाद्विच्छिन्न तद्वत। अतो ज्योतिष्टोमस्य विकारा एव सस्था न तु समानविधाना। न च सस्थाना भावलक्षणसमाप्तिरूपत्वात् ज्योतिष्टोमक्रियया सारूप्याभावेनातिदेशासम्भवान्न विकारत्वमिति वाच्यम्, न ह्यतिदेशे सारूप्य स्वरूपेण प्रयोजकम्, किन्तु प्रकृत्युपस्थापकसम्बन्धत्वेन। प्रकृते चाश्रयत्वप्रयोजकसन्निधानलक्षणसम्बन्धादेवास्ति प्रकृत्युपस्थितिरिति किं सारूप्येण? अत एवाष्टमे 'वाजिने सोमपूर्वत्वम्' इत्यधिकरणे 'हविषा वा नियम्येत तद्विकारत्वात्'

---

1. युगपत्काल. क, ख 2. ज्योतिष्टोमेन. क, ख. 3. धर्मेति नास्ति. ग
4. न तावत्. क, ख. 5. इत्यप्यर्थ. ग. 6 शक्नु्यु ग.

तद्विध्यभावात्। ततश्च ज्योतिष्टोमस्य केवलविकारास्ते, न तु गुणविकारा इत्य- भिप्रेत्य भाष्यवार्तिकयोर्नोदाहृता, अप्रकरणपठितेषु सामानविध्यप्रसक्त्यभावात्। कल्पसूत्रे तु-'उक्थ्यषोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकारा' इत्युक्तम्। कौषीतकब्राह्मणे अप्तोर्यामसंस्थाया अपि ज्योतिष्टोमप्रकरणेऽनुक्रमणादिति तदाशयः॥

इति षोडश संस्थाधिकरणम्॥ १६॥

श्रीविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन

वासुदेवदीक्षितविदुषा

विरचितायामध्वरमीमांसाकुतूहलवृत्तौ तृतीयाध्यायस्य षष्ठः पादः॥



## गुणविशेषादेकस्य व्यपदेशः ॥ ४२ ॥

अन्यप्रकरणेऽनुक्रान्तस्याप्येकस्य क्रतुकरणाख्यधर्मविशेषस्याप्राकरणिकसस्थाभिरङ्गतया व्यपदेशः—सम्बन्ध गुणविशेषात्—"यद्युक्थ्यः [1]परिधिं निमार्ष्टि" इत्यादिगुणविधायकवाक्यवशाद्युज्यते। न त्वेतावता सर्वाङ्गसम्बन्धोऽप्यापतति। अन्यथा ज्योतिष्टोमप्रकरणे "द्वादशाहीनस्य" इति धर्मविशेषानुक्रमणात् सर्वाङ्गसम्बन्धे सति तस्यापि सामानविध्यं स्यात्। यच्चाप्राकरणिकत्वे उक्थ्यादिसस्थाना यद्युपबन्धोऽनुपपन्नः, तस्य सन्निहितानेकविषयत्वादिति, तत्राप्येतदेवोत्तरं[2] सूत्रम्। एकशब्द कैवल्ये 'एके मुख्यान्यकेवला' इति कोशात्। एकस्य केवलस्य न्यायतो धर्मविहीनस्यापि उक्थ्यादिनिमित्तस्य पाठतस्सन्निहितत्वलक्षणगुणविशेषात्, व्यपदेश—यद्युपबन्धो युज्यते। यद्यप्यविशेषितधर्माम्नानस्याग्निष्टोमसस्थज्योतिष्टोममात्रविषयत्वे "यद्यग्निष्टोम" इत्यनर्थकमिति, तत्राप्येतदेवोत्तरम्—गुणविशेषादिति। फलस्य हेतुत्वविवक्षया पञ्चमी। एकशब्दो मुख्यवाची। "यद्युक्थ्य परिधौ निमार्ष्टि" इत्यादिगुणविशेषविधानार्थं "यद्यग्निष्टोम" इत्येकव्यपदेश—मुख्यस्याग्निष्टोमस्य व्यपदेश नित्यानुवाद। तस्मादुक्थ्यादिसस्था न समानविधाना इत्यास्ता तावत्।

समानविधानत्वे–उक्थ्यादिसंस्थासु ये ग्रहयज्ञ्याभ्यासा तेषु "पूर्णान् ग्रहान् गृह्णीयाद्वृष्टिकामस्य" इति गुणकामाना प्रवृत्तिः। विकारत्वे त्वप्रवृत्ति। गुणकामाना विकृतिष्वप्रवृत्तेरष्टमे वक्ष्यमाणत्वात्। अथवा 'अव्यक्तासु च सोमस्य' इति न्यायेनोद्भिदादियागा ज्योतिष्टोमविकारा विज्ञायन्ते। तेषु सर्वास्सस्था विकल्पेन भवेयु पूर्वपक्षे। सिद्धान्तेऽग्निष्टोमसंस्थैव सर्वत्रानादेशे भवति। तदेवं ज्योतिष्टोमस्य चतस्रस्सस्था। सस्थाभेदात्तदाश्रयज्योतिष्टोमस्यापि भेद उपचर्यते। तत्र प्रकृतिं ज्योतिष्टोममाश्रयन्त्य उक्थ्यादय सस्था आश्रयस्य क्रतोरग्निष्टोमसस्था[3]मविकृत्याबाधित्वा निविशन्त इत्युक्थ्यादिक्रतवो ज्योतिष्टोमस्याग्निष्टोमस्य गुणविकारा उच्यन्ते। अत्यग्निष्टोमवाजपेयाप्तोर्यामसस्थास्तु क्रतवो न ज्योतिष्टोमस्य [4]गुणविकाराः। न हि प्रकृतिभूत ज्योतिष्टोममाश्रित्य [5]तास्सस्था विहिता, ज्योतिष्टोमप्रकणे

---

1. परिधौ क 2. एतदेव सूत्रमुत्तर. ग. 3 सस्था विकृत्यबाधित्वा, क
4. गुण नास्ति. क. 5. तत्सस्था. क.

ननु वाक्येन प्रकरणबाधे [1]पिण्डपितृयज्ञीयवेदिबर्हिषोरपि [2]दर्शपूर्णमासाम्ना-तद्धर्माः प्रवर्तेरन्। अत. प्रकरणसहकृतं[3] वाक्य विनियोजक वाच्यम्। प्रकरणञ्च प्रधानस्येति तन्मात्रार्थत्वमेव युक्तमित्याशङ्क्य [4]निराकरोति—

## आरादपीति चेन्न तद्वाक्यं हि तदर्थत्वात् ॥ ३ ॥

आराद्दूरे। दर्शपूर्णमासप्रकरणाद्बहि' पिण्डपितृयज्ञेऽपि वेदिबर्हिर्धर्मा. स्युरिति चेत्—[5]तन्न, कुत ? हि—यत तद्वाक्यं—प्रकरणसहकृतमेव "वेद्यां बर्हिषि हवींष्यासादयति" इति वाक्य विनियोजकम्। अतो नातिप्रसङ्गः। नन्वस्तु प्रकरण-सहकृतमेव वाक्य विनियोजक तथापि प्रधानानामेव प्रकरणमिति कथमङ्गहविस्सा-धारणमित्यत आह—तदर्थत्वादिति। प्रकरणसहकृतवाक्यविनियोजकत्वेऽपि वेदि-बर्हिस्तद्धर्माणामङ्गप्रधानहविरर्थत्वसम्भवादित्यर्थ। तथाहि—साधने धर्मान्वये किं प्रधानापूर्वस्य व्यावर्तकतयान्वय' ? उत धर्मग्राहकतयान्वय ? नाद्य:, एवमपि हि यावत्साक्षात्परम्परया वा दर्शपूर्णमासप्रधानोपयोगि हविस्तावदासादयेदिति पर्य-वस्यति, न तु साक्षात्प्रधानार्थमित्यपि निवेश्यम्, यथाकथञ्चित्प्रधानापूर्वयोगित्व-मात्रेण व्यावृत्तिसिद्धे'। यावताऽतिप्रसङ्ग आनर्थक्यञ्च परिह्रियते तावन्मात्रमेव तत्पर्यवसानस्य कल्पयितुमुचितत्वात्। न द्वितीय:; एवमपि वेद्या बर्हिषा च हविरा-सादनद्वारा प्रधानापूर्वं कुर्यादिति नार्थपर्यवसानम्। न हि प्रधानोत्पत्तिविधिना धर्मविधीनामन्वय, किन्तु प्रयोगविधिना। प्रयोगविधिश्च साङ्गप्रयोगविषय.। तथा च कथञ्चित्प्रधानापूर्वोपयोगिहविरासादनद्वारा प्रधानापूर्वं कुर्यादित्येवार्थपर्यवसान-मित्यङ्गप्रधानार्थत्व वेदिबर्हिस्तद्धर्माणाम्।

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ४ ॥

"प्रयाजशेषेण हवींष्यभिघारयति" इति प्रकृत्य श्रूयते—"स वै ध्रुवामेवाग्रे-ऽभिघारयति ततो हि प्रथममाज्यभागौ यक्ष्यन् भवति" इति। यदि वेदिबर्हिस्तद्धर्मा अङ्गप्रधानार्था स्युस्तदैवङ्जातीयक[6] "प्रयाजशेषेण हवींष्यभिघारयति" इत्येतदपि [7]तुल्यन्यायत्वादङ्गप्रधानार्थं भवतीत्याज्यभागहविरप्यभिघारणीय भवति। ततश्च

1. पितृगत. अ  2 दार्शपूर्णमासिक ग.  3. सस्कृत. क, ग.  4. निरा-चष्टे ख  5 तदिति नास्ति अ  6 तदा प्रयाजशेषेण. ग.  7. तुल्यप्रधानत्वात्. अ.

# सप्तमः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानै. ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे प्रधानयो प्रकृतिविकृत्योः सामानविध्यं विचारितम् । अथास्मिन् सप्तमे पादेऽङ्गप्रधानविषयस्तद्विचार' प्राधान्येन प्रस्तूयते । दर्शपूर्णमासयोरस्ति [1]वेदिः—"वेद्या हवींष्यासादयति" इति । [2]सन्ति च वेदिधर्मा'—'वेदिं खनति सम्मार्ष्टि [3]परिगृह्णाति प्रोक्षति' इत्यादय' । अस्ति च बर्हि—"बर्हिषि हवींष्यासादयति" इति । सन्ति च [4]बर्हिर्धर्मा—"बर्हिर्लुनाति सम्भरति सन्नह्यति प्रोक्षति" इत्यादय' । किमेते वेदिबर्हिस्तद्धर्मा अङ्गप्रधानहविषा साधारणा' ? उत [5]प्रधानहविषामेव ? इति सशये पूर्वपक्षयति—

**प्रकरणविशे संयुक्तं प्रधानस्य ॥ १ ॥**

अङ्गार्थत्वेन प्रधानार्थत्वेन वा विशिष्यासंयुक्तं वेद्यादिकं प्रधानहविरर्थमेव स्यान्न त्वङ्गहविरर्थमपि । कुत. ? प्रकरणविशेषात् । प्रकरण हि प्रधानानामेव न त्वङ्गानाम् ॥

अथ सिद्धान्तयति –

**'षां वा [6]शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥**

वाशब्द एवार्थे । सर्वेषामेव–अङ्गप्रधानहविषा वेद्यादिकमङ्गम् , न तु प्रधानहविपामेव । कुत ? शेपत्वस्यातत्प्रयुक्तत्वात्–वेदिबर्हिस्तद्धर्माणामविशेपप्रवृत्तवाक्यगम्यस्य हविरासादनशेपत्वस्य [7]प्रकरणप्रयुक्तत्वाभावात् । प्रबलस्याविशेपप्रवृत्तवाक्यस्य [8]प्रकरणतस्सङ्कोचायोगादिति यावत् ।

---

1. वेदिरिति नास्ति क 2 वेदिधर्माश्च क 3. गृह्णाति अ. 4 तद्धर्मा ग 5. प्रधानेति नास्ति. अ 6 शेपस्य. अ, क, ग 7. प्रयुक्तत्वा. अ 8 प्रकरणस ग.

हि [1]कर्तृत्वापेक्षया प्रधानम्। कर्तृत्वं तु तस्य गुणभूतम्। अतो वपनादिसंस्कारा भोक्तृत्वार्था एव, यजमानस्य [2]फलाधारत्वयोग्यतासम्पादनद्वारा यागेन फले जननीये तेषामुपयोगात्। न तु गुणभूतकर्तृत्वार्था. 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यात्' इति न्यायात्। न च भोक्तृत्वार्थत्वे प्रधानतुल्यकक्ष्यतया संस्काराणां प्रकरणावगतक्रत्वर्थत्वविरोध इति वाच्यम्, न ह्यत्राग्नेयादियागानामिव करणतया तुल्यत्वमस्ति येन विरोधस्स्यात्। किन्तु तादर्थ्यमात्रेण तौल्यम्। तच्चेह न विरोधावहम्, क्षेत्रसंस्काराणा बीजावापरूपप्रधानार्थत्ववदेतेषामपि संस्काराणा प्रधानार्थत्वाविरोधात्। न चैवमपि फलस्य साङ्गप्रधानजन्यत्वात्[3]फलाधारत्वयोग्यतार्थाना संस्काराणां प्रधानार्थत्ववदङ्गार्थत्वमपि स्यादिति वाच्यम्। न ह्यङ्गानि प्रधानवत्साक्षात्फलजनने व्याप्रियन्ते। किन्तु प्रधानोपकारजननद्वारैवेत्यन्यथासिद्धत्वान्नाङ्गाना फलजनकता। अत प्रधानजन्यफलभाक्त्व[4]लक्षणभोक्तृत्वा[5]शोपनिपातिन, एते संस्कारा. प्रधानार्था एव न त्वङ्गार्था अपीति सिद्धम्। तत्राङ्गप्रधानार्थत्वे वपनादिसंस्कारा अग्नीषोमीयपशोरप्यङ्गभूता इति तद्विकृतिषु वायव्यादिपशुष्वपि प्रवर्तेरन्। केवलसोमयागलक्षणप्रधानार्थत्वे तु नेति फलभेद.॥

इति द्वितीय याजमानाना प्रधानार्थत्वाधिकरणम्॥ २॥

३

ज्योतिष्टोमे महावेदिः श्रूयते—"सा वा इय सर्वैव वेदि'—इयति (शक्ष्याम इति, त्वै अवमाय यजन्ते त्रिंशत्पदानि पश्चात् तिरश्च भवति। षड्विंशत्प्राची चतुर्विंशति पुरस्तात्तिरश्ची"ति। सा वै—सा खलु, इय—पृथिवी सर्वैव वेदिर्भवति। त्वै—तु वै इति छेद। वर्णलोपश्छान्दस। अथापीयति परिमितप्रदेशे) यष्टुं कर्तुं प्रभवाम, न तु सर्वस्या पृथिव्यामिति हेतोः अवमाय—त्रिंशत्पदानि पश्चादित्यादिप्रकारेण [6]कञ्चित्प्रदेश परिगृह्य यजेरन्नित्यर्थं। किमियं महावेदि. प्रधानमात्रार्था? उताङ्गप्रधानार्था इति संशय'।

---

1. प्रधानकर्तृत्वापेक्षया अ. 2 फलसाधारणत्व. क 3. फलार्थत्व. ग.
4. फलभोक्तृत्व अ. 5. अशोपरि. अ. () चिन्हान्तर्गतो भाग त्रुटित. अ.
6. कथञ्चित्. क.

"स वा अग्र" इति न्यायप्राप्तक्रमस्सिद्धवदुच्यमान' "ततो हि प्रथमम्" इति हेतुवन्निगदश्चोपपद्यते। अन्यथा ध्रुवाभिघारणस्य केवलोपाशुयाजलक्षणप्रधानार्थत्वादाग्नेयपुरोडाशाभिघारणा[1] (न) न्तर्यमेव स्यात्। आज्यभागहविषश्च ध्रुवागतस्याभिघारणमप्रसक्तमेव स्यात्। ततश्च "स वा अग्र" इति क्रम उच्यमानो हेतुवन्निगदश्चानुपपन्नस्स्यात्। अतोऽप्येवञ्जातीयकानामङ्गप्रधानार्थत्वम्।

प्रयोजनं पूर्वपक्षे—महापितृयज्ञे "देवबर्हि." इत्यादिबर्हिर्मन्त्रेषु[2] 'पितृबर्हि:' इत्याद्यूह.। "पृथिवि देवयजनि" इत्यादिवेदिमन्त्रेषु च 'पितृयजनि' इत्याद्यूह। [3]अङ्गप्रधानहविरर्थत्वे तु—'देवपितृबर्हि. देवपितृयजनि' इत्याद्यूहः। तत्र प्रयाजाद्यङ्गानां प्रकृतिवदग्न्यादिदैवत्यत्वात् प्रधानानामेव च [4]पित्रर्थत्वात्। प्रकृतौ [5]च नास्य [6]विकारस्य फलमस्ति। तत्र प्रयाजाद्यङ्गहविषामपि वेद्या बर्हिष्यासादनस्य विहितत्वेन पूर्वोत्तरपक्षयो. फलभेदाभावात्॥

इति प्रथम वेदिबर्हिरधिकरणम्॥ १॥

२

ज्योतिष्टोमे "केशश्मश्रु वपते नखानि [7]निकृन्तते" इत्यादयः पुरुषसस्काराः श्रुता.। ते च याजमाना इत्यग्रिमपादे वक्ष्यते—'याजमानास्तु तत्प्रधानत्वात्' इत्यत्र। यजमानस्य च कर्तृत्व भोक्तृत्वञ्चास्ति। किमेते धर्मा' कर्तृत्व उपयुज्यन्ते? उत भोक्तृत्वे? इति सशय.। कर्तृत्वगामिन इति ब्रूमः। भोक्तृत्व हि कर्मजन्यफलभाक्त्वमेव। तदर्थत्वे च वपनादिसस्काराणा फलार्थत्वमेव पर्यवस्येदिति प्रधानतुल्यकक्ष्यतया प्रकरणावगत प्रधानाङ्गत्वमेव न स्यात्। अतः कर्तृत्वगामिन एवैते सस्कारा'। कर्ता चाङ्गप्रधानार्थ इत्येकादशद्वितीयाद्ये वक्ष्यते—'एकदेशकालकर्तृत्व मुख्यानामेकशब्दोपदेशात्' इत्यत्र। तथाचाङ्गप्रधानार्थत्वमिति प्राप्ते सिद्धान्तयति—

## फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य॥ ५॥

तुरवधारणे। स्वामिसयुक्त—याजमान वपनादिक प्रधानस्यैव धर्म, न त्वङ्गानामपि। कुत? फलसयोगात्—फलभोक्तृत्वसयोगात्। फलभोक्तृत्व

1. अभिघारणाना तर्यमेव अ 2. बर्हिर्धर्मेषु ग 3. सिद्धान्ते तु ग
4 पितृत्वात्. अ 5 तु. क 6. विचारस्य क. 7. कृन्तते क.

अथ द्वितीयसंशये सिद्धान्तयति—

## गुणाभिधानात्सर्वार्थमभिधानम् ॥ ९ ॥

अभिधानम्-अभिमर्शनवचनमिद, सर्वार्थम्-अङ्गप्रधानार्थम् । कुत. ? गुणाभिधानात्-पौर्णमासीम् अमावास्यामिति द्वितीयया गुणस्यामुख्यस्यार्थस्याधिकरणत्वस्य प्रतिपादनात् । पौर्णमासीकर्मण्यमावास्याकर्मणि चाभिमृशेदित्यर्थ । अर्थाद्यदभिमर्शनयोग्य तदभिमृशेदिति गम्यते । न च जुह्वादिष्वतिप्रसङ्ग , न ह्यत्राभिमर्शन विधीयते, किन्तु-"आसन्नानि हवींष्यभिमृशेत्" इति प्राप्ताभिमर्शनानुवादेन गुणविधिरिति नास्ति प्रसङ्ग. । एतेन पौर्णमासीकर्मण्यमावास्याकर्मण्यभिमृशेदित्युक्तेऽपि [1]प्रत्यासत्त्या पौर्णमास्यमावास्याशब्दाभिधेयप्रधानहविर्मात्रविषयत्वमेव लभ्यत इति निरस्तम् । अभिमृशतेरासन्नानि हवींष्यभिमृशतीत्यविशेषप्रवृत्तसर्वहविरभिमर्शनानुवादकतया प्रधानहविर्मात्रविषयत्वायोगात् । एवञ्च द्वितीयया प्राधान्यानवगमेनाभिमर्शनस्य पौर्णमास्यमावास्याशब्दवाच्ययागार्थत्वानवगमान्नानर्थक्यतदङ्गन्यायावतार । न च यागानामभिमर्शनकर्मत्वासम्भवात्पौर्णमास्यमावास्याशब्दयो प्रातिपदिकयोरेव तदीयहविर्लक्षकत्वमस्त्विति वाच्यम्, प्रथमप्रतीतप्रातिपदिकलक्षणाश्रयणापेक्षया जघन्यप्रतीतविभक्तावेव तदाश्रयणौचित्यात् । न च विभक्तेः प्राधान्यात् प्रथमस्यापि प्रातिपदिकस्य लक्षणा न्याय्येति वाच्यम्, द्वितीयाप्रतिपाद्यकर्मत्वस्य "आसन्नानि हवींष्यभिमृशेत्" इति वचनान्तरादेव[2] प्राप्तत्वेन द्वितीयाया एव सप्तम्यर्थे लक्षणाश्रयणस्य युक्तत्वात् । अतोऽङ्गप्रधानहविषामिदमभिमर्शनमिति दिक् ॥

इति तृतीय वेदिहविरभिमर्शनयोरङ्गप्रधानार्थत्वाधिकरणम् ॥ ३ ॥

४

ज्योतिष्टोमे[3] "वाससा दीक्षयति, दण्डेन दीक्षयति" इत्यादिदीक्षितसंज्ञकद्रव्यसंस्कारा श्रुता[4] । "तस्य द्वादश शत दक्षिणा" इत्यपि श्रुतम् । तस्य-ज्योतिष्टोमस्य द्वादशाधिक शत गावो दक्षिणेत्यर्थ । येन कर्मकरा ऋत्विज आनता भवन्ति तद्वेतनद्रव्यं दक्षिणेत्युच्यते । सामान्याभिप्रायमेकवचनम् । तदिद दीक्षादक्षिणमङ्गप्रधानार्थम् ? उत प्रधानार्थम् ? इति संशय. । यद्यपि 'फलसंयोगात्तु स्वामि-

1. प्रत्यासत्त्येति नास्ति. क. 2 वचनान्तरत्वादेव क. 3. दीक्षणीया निर्वपतीत्यधिकम् अ 4 आम्नाताः. अ.

( तथा च "चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्याम्" इत्याद्यभिमर्शनमपि प्रधानहविर्मात्रार्थम् ? उताङ्गप्रधानहविरर्थम् ? इति संशयः । ) "पृथिवी होता" इत्यादिर्मन्त्रः चतुर्होता । "अग्निर्होता" इत्यादिर्मन्त्रः पञ्चहोतेति [1]वैदिकसमयः । तत्र प्रथमसंशये पूर्वपक्षयति—

## चि ^ ° च संयोगात् ॥ ६ ॥

"इयति शक्ष्याम इति त्वै अवमाय यजन्त" इति कृतिसाध्ययागार्थत्व प्रतीयते । कृतिसाध्यञ्चावश्यं चिकीर्षया युज्यते । प्रधानमेव च[2] फलवत्त्वाच्चिकीर्षितम् । अङ्गानि तु तदुपकारार्थतयानुष्ठीयन्त इत्यन्यथासिद्धत्वान्न फलाय चिकीर्ष्यन्ते । तस्माच्चिकीर्षितप्रधानमात्रार्था वेदि ॥

अथ द्वितीयसंशये पूर्वपक्षयति—

## तथाऽभिधानेन ॥ ७ ॥

संयोगादित्यनुवर्तते । अभिधानेन—पौर्णमासीशब्देनामावास्याशब्देन च नाम्ना विधीयमानमभिमर्शनमपि प्रधानार्थमेव, न त्वङ्गार्थमपि । कुतः ? संयोगात् अभिधानेनेत्यत्रापि सम्बध्यते । नाम्न प्रधानमात्रवाचित्वादिति यावत् । ,प्रधानानाञ्च यागाना मानससङ्कल्पविशेषात्मकत्यागरूपाणामभिमर्शनायोग्यत्वादानर्थक्यतदङ्गन्यायेन प्रधानहविरर्थमेवाभिमर्शन पर्यवस्यति ।

अथ प्रथमसंशये सिद्धान्तयति—

## तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ८ ॥

तुरवधारणे । तद्युक्ते—[3]अङ्गयुक्ते प्रधाने, फलश्रुति –"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति । अङ्गानुपकृतस्य प्रधानस्य फलकरणत्वासम्भवात् । ततश्च साङ्गप्रधानस्यैव चिकीर्षासंयोगात्तदर्था महावेदिः । तथा च महावेदेरग्नीषोमीयपश्वङ्गत्वात्तद्विकारे निरूढपशुबन्धेऽपि प्रवृत्तिरिति वार्तिककृत । यद्यपि "रथमात्रा निरूढपशुबन्धस्य वेदि" इति तत्र[4] श्रुत वेदिपरिमाणम्, तथापि तस्य शाखान्तरीयत्वाच्छाखान्तरोपसंहारस्य चानित्यत्वात्तत्र महावेदि पक्षे प्रवर्तत इति तदाशय ।

---

() भागोऽयं त्रुटितः अ. 1 याज्ञिकसमय क 2 चेति नास्ति ग
3 अङ्गयुक्त इति नास्ति. अ. 4 तत्रेति नास्ति अ

सत्वचं निखनेत्" इति [1]वचनात्। तदिदं यूपमानमधिकृत्य श्रूयते—"अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इति। किमत्रार्धमन्तर्वेदीति वेद्येकदेशो मीयमानयूपाङ्गतया विधीयते बहिर्वेदीत्यनुवाद ? उतार्धमन्तर्वेदि अर्धं बहिर्वेदि [2]इत्युभाभ्यामेक एव सन्धिदेशो वेदित्वानादरेण विधीयते ? इति संशये पूर्वपक्षयति—

## तथा यूपस्य वेदिः ॥ १२ ॥

यथा दीक्षादक्षिणं वचनात्प्रधानाङ्गं तथा महावेदिरपि तदेकदेशद्वारा मीयमानयूपाङ्ग भवति। तत्रार्धमन्तर्वेदीति विधि.। एकस्मिन्नर्धेऽन्तर्वेदि मीयमानेऽर्धान्तरमर्थाद्बहिरेव भवति। अतो बहिर्वेदीत्यनुवाद इति न वाक्यभेद' ॥

अथ सिद्धान्तयति—

## देशमात्रं वाऽशिष्येणैकवाक्यत्वात् ॥ १३ ॥

मात्रशब्दोऽवधारणे। वाशब्द पूर्वपक्षव्यावृत्तौ। "अर्धमन्तर्वेद्यर्धं वहिर्वेदि" इत्याभ्यां वेद्येकदेशत्व पुरस्कृत्य तदुपलक्षितान्तर्देशवहिर्देशोभयात्मक एव सन्धिदेशो विधीयते, न तु वेद्येकदेशोऽपि यूपमानाङ्गतया विधीयते। कुत ? अशिष्येणैकवाक्यत्वात्–शासु अनुशिष्टौ। शिष्य विधेयान्तर यस्य न विद्यते तदशिष्यम् "अर्धं बहिर्वेदि" इत्येतत्। तेन सह "अर्धमन्तर्वेदि" इत्यस्य सन्धिदेशविधावेकवाक्यत्वलाभात्। "अर्धमन्तर्वेदि" इति वेद्येकदेशविधौ तु बहिर्वेदीत्यस्यापि [3]विधेयान्तरपरत्वावश्यकत्वेन वाक्यभेदप्रसङ्गात्। "अर्धमन्तर्वेदि" इत्येतावता बहिर्वेद्यर्धमित्यलाभादनुवादत्वासम्भवात्। अर्धमन्तर्वेदीति विधेरर्धान्तरस्यापि सत्यप्यन्तर्वेदिसम्बन्धे विरोधाभावात्। अन्तर्वेद्यर्धमेवेति परिसङ्ख्याविधिः बहिर्वेदीत्यनुवाद इत्याश्रयणे तु त्रैदोष्यापत्ति। न च "इयति शक्ष्यामः" इति महावेद्यास्स्वाङ्गप्रधानार्थत्वस्य व्यवस्थापितत्वाद् यूप प्रत्यविशेषत्वेनान्तर्वेद्येव यूपमानस्य कार्त्स्न्येन मूलतः प्राप्तावर्धमन्तर्वेदीति वचनमगत्या परिसङ्ख्यार्थमेवाश्रयणीयमिति "अर्धं बहिर्वेदि" इत्यस्यानुवादत्वान्न वाक्यभेद इति वाच्यम्, साङ्गस्य हि ज्योतिष्टोमस्य वेदिरङ्गमित्युक्तम्। न हि यूपो ज्योतिष्टोमाङ्गम्। न [4]चैव वेदे प्रयोगाङ्गतया साङ्गस्यैव पशोर्ज्योतिष्टोमोपकारकत्वेन पश्वङ्गस्यापि प्रयोगान्तर्गततया पशोरेव स्वाङ्गभूता वेदिं स्वाङ्गहविरासादनादिकार्यो-

---

1 वचनान्तरम्. क. 2. इति द्वाभ्या अ. 3. विधेयान्त पातित्वा. अ.
4. एवमिति नास्ति अ.

संयुक्त प्रधानस्य' इति यजमानसंस्काराणां केवलप्रधानार्थत्वमुक्तम्, तथाप्यग्नीषोमीयादिकतिपयाङ्गार्थत्वमपि दीक्षासंस्काराणां दुर्वारम्, "यो दीक्षितो यदग्नीषोमीयं पशुमालभते, दीक्षितः सोमं क्रीणाति" इत्यादिवचनात्। दक्षिणानाञ्च ऋत्विगानमनार्थत्वादृत्विगानमनस्य च सहायोपादित्सया प्रयोगार्थत्वात् 'तद्युक्ते फलश्रुतिः तस्मात्सर्वचिकीर्षा' इत्यनुपदोक्तन्यायेन महावेदिवदङ्गप्रधानार्थत्वमिति प्राप्ते सिद्धान्तयति—

## दीक्षादक्षिणन्तु वचनात्प्रधानस्य ॥ १० ॥

तुरवधारणे व्युत्क्रमश्च। दीक्षादक्षिणमिति समाहारद्वन्द्वः। "दीक्षा सोमस्य दक्षिणा सोमस्य" इति वचनात् प्रधानस्यैव दीक्षादक्षिणमङ्गं प्रत्येतव्यम्। सम्भवति च साक्षात्सम्बन्धे परम्परासम्बन्धो न ग्राह्यः। "यो दीक्षितो यदग्नीषोमीय पशुमालभते" इत्यादौ दीक्षितग्रहणन्तु अग्नीषोमीयादीनां दीक्षानन्तरमाम्नानात्तत्क्रमानुवादमात्रम्। दक्षिणायास्तु यद्यपि द्रव्यत्यागात्मके प्रधाने यजमानस्यैव कर्तृत्वान्नोपयोगस्तथापि प्रधानोत्पत्यर्थसन्निपत्याङ्गानाम्[1] अभिषवादीनामृत्विक्कर्तृकत्वात्तन्मुखेन प्रधानार्थता।

इतोऽप्येवमित्याह—

## निवृत्तिदर्शनाच्च ॥ ११ ॥

निरूढपशुबन्धे "यत् षड्ढोतारं जुहोति साऽस्य दीक्षा" इति षड्ढोतृहोमेन दीक्षावाप्तिं वदन् दीक्षाया अभाव दर्शयति। तदेतदङ्गप्रधानार्थत्वे सति [2]नोपपद्यते। दीक्षाया अग्नीषोमीयपश्वङ्गत्वे सति तद्विकारभूते निरूढपशावपि [3]प्रवृत्तेर्निवृत्तिवचनासाङ्गत्यप्रसङ्गात्। अत केवलप्रधानार्थता।

प्रयोजन पूर्वपक्षे—अग्नीषोमीयपशुविकृतिभूते निरूढपशौ दीक्षादक्षिणस्य प्रवृत्ति। सिद्धान्ते तु निवृत्तिरिति दिक्॥

इति चतुर्थं दीक्षादक्षिणयो प्रधानार्थत्वाधिकरणम् ॥ ४ ॥

५

ज्योतिष्टोमेऽग्नीषोमीयपशौ [4]श्रूयते—"यूप मिनोति" इति। डुमिञ्प्रक्षेपणे। इह चावटे ऊर्ध्वाग्रस्य यूपस्य मूलभागप्रक्षेपेण तदुच्छ्रयणं विवक्षितम्। "मूलमनक्ति

1 सन्निपात्याङ्गाना अ. 2. अनुपपन्नम्. फ. 3 भक्तिवचना. अ
4. श्रुतम् फ

विधिविषयत्वं [1]निवर्तेत। तन्निवृत्तौ च विधितोऽर्थान्तरमानस्य वेद्यां कर्तव्यत्वाभावेऽप्यप्रतिषिद्धत्वादिच्छया मानं दुर्वारमित्यर्थान्तरस्य [2]बहिर्वेद्या नित्यप्राप्त्यभावादर्थं बहिर्वेदीत्यस्यापि विधेयत्वाद्वाक्यभेदो दुर्वारः। तस्मादिह वेदित्वानादरेण सन्धिदेश एव विधेयः। वेदित्वादरे तु सन्धिदेशे यूपं मिनुयाद्वेद्यन्तस्येति वाक्यभेदः। किञ्च वेदित्वादरे सति वेदेर्यूपमानाङ्गतया विशेषविधौ "इयति शक्ष्यामः" इति सामान्यश्रुतस्य वेदिविधेः पर्यवसानं स्यात्। ततश्च "अष्टाविंशत्यूनं पदसहस्रं महावेदिः" इति परिमाणस्यादृष्टार्थत्वं स्यात्, किञ्चिद्देशेनैव यूपमानसम्भवात्। अतो वेदित्वानादरेणैव सन्धिदेशविधिः। अन्तर्वेदीति तु यूपमानदेशोपलक्षणमात्रम्। ततश्च वस्तुतो वेदिसम्बन्धे सत्यपि संस्कारनिचये विशेषात्मकवेदित्वस्य न यूपमानाङ्गत्वम्। एवञ्च तीव्रसुति उक्थ्ये प्राच्यामेकादशिन्या तदङ्गतया यावद्यूपं वेद्युद्धननादिकं न कर्तव्यमिति फलतीति स्थितम्।

कल्पसूत्रकृतस्तु[3] 'प्राच्येकादशिनी सम्मीयते यावद्यूपं वेदिमुद्धन्ति पूर्वार्द्धं वेदेः परार्द्धंन्यासमपच्छिद्य तत्पुरस्तात्प्राञ्च दध्यात्' इत्याहुः। महावेदेः पूर्वार्धं चतुर्विंशतिपदोदगायतं भवति। तदर्धपदविस्तारमपच्छिद्य वेद्यवयवत्वेनापरिगृह्य तदपच्छिन्नक्षेत्रमुत्तरवेदेः पुरस्तात्प्रागायतं परिगृह्णीयादित्यर्थः। युक्तञ्चैतत्, तथाहि—सन्धिदेशो विधीयत इत्यङ्गीकुर्मः। वेदिमपुरस्कृत्येत्येतत्तु न मृष्यामहे। न च सन्धिदेशं मिनुयात् वेद्यन्तस्येति वाक्यभेदः शङ्क्यः, सन्धित्वस्य सापेक्षतयाऽतिप्रसक्ततया च वेदितद्बहिस्सन्धित्वविशिष्टदेशस्यैव विधेयतया वाक्यभेदाप्रसक्तेः। यत्तु वेदेर्यूपमानाङ्गतया [4]विशिष्टविधौ "इयति शक्ष्यामः इति त्वा अवमा यजन्ते" इति [5]साङ्गप्रधानार्थतया श्रुतवेदिविधिः पर्यवस्येत्। ततश्चाष्टाविंशत्यूनपदसहस्रपरिमाणस्यादृष्टार्थत्वापत्तिरिति, तदयुक्तम्, विशेष्यस्य सामान्यात्मकत्व एव हि सामान्यविधेर्विशेषविधौ पर्यवसानम्। न हि यूपमानाङ्गस्य साङ्गसोमयागाङ्गात्मकतास्ति। अतो नोपसंहारप्रसक्तिः। किञ्च यूपमानमेव न वेदिकार्यम्, वेद्यां सदो मिनोति वेद्यां हविर्धानं मिनोति, वेद्यामुत्तरवेदिं निवपति, अन्तर्वेदि प्रसर्पकेभ्यो ददाति इत्यादिपरश्शतं कार्याणां सत्त्वात्। ततश्च तद्विशेषविधिष्वपि वेदिविधेरुपसंहारस्यावश्यकत्वान्न वेदिपरिमाणस्यादृष्टार्थत्वम्। तस्माद्वेदित्वादरेणैव सन्धि-

1 न निवर्तेत. क. 2. बहिरिति नास्ति ग. 3 कारास्तु. ग. 4. विशेष. क. 5. चाङ्गप्रधान. ख.

येव[1] यूपायापि दास्यतीति वाच्यम्, सत्यं दद्याद्यदि पशौ वेदिस्समाम्नाता स्यात्। ज्योतिष्टोमप्रकरणे हि श्रुता वेदिः प्रधानार्था सती "इयति शक्ष्याम" इति साङ्गप्रधानेऽवतरन्ती प्रधानाङ्गभूतपशुयागेऽवतिष्ठते, न तु तदङ्गयूपमानेऽपि। न चैवमपि पशुहविरासादनमपि सौमिकवेद्या न स्यादिति वाच्यम्, प्राकृतवेदिकार्यं हि हविरासादनं चोदकतः प्राप्ता प्राकृतवेदिं विकृत्य निविशमानां सौमिकीं वेदिं लभते। यूपमानन्तु प्राकृतवेदिकार्यत्वाभावात्कथं [2]सौमिकीं वेदिं लभेत। अतो वेद्यामेव कार्त्स्न्येन यूपमानस्य प्राप्त्यभावात् "अर्धमन्तर्वेदि" इत्यस्य न परिसङ्ख्यात्वम्, त्रैदोष्यप्रसङ्गाच्च। एवञ्चान्तर्वेद्यवश्यमर्धं मिनुयादिति नियमविधित्वमेवाश्रयणीयं स्यात्। ततश्चार्धान्तरमन्तर्वेदि वा बहिर्वेदि वा स्यादित्यर्थं बहिर्वेदीत्यस्यापि विधित्वमेवास्थेयमिति वाक्यभेदप्रसङ्गात् "अर्धमन्तर्वेद्यर्धं बहिर्वेदि" इत्याभ्यां वेदित्वानादरेण सन्धिदेश एव विधीयत इति युक्तम्। न च समुदायस्य क्वचिदप्यशक्तत्वात्कथं स्वशक्यसम्बन्धरूपलक्षणाप्रसक्तिरिति वाच्यम्, अवयवद्वारा शक्यसम्बन्धस्य समुदायेऽपि सत्त्वात्, वाक्यशक्तेर्भाष्यसम्मतत्वाच्च। अन्यथाऽर्थवादेषु प्राशस्त्यलक्षणाया का गतिः? न च "व्रीहीनवहन्ति" इति नियमविधावप्यर्थान्नखविदलनादिव्यावृत्तिवदिहाप्यर्धस्यान्तर्वेदिनियमने सति—अर्धान्तरस्य वेद्या व्यावृत्तिसिद्धेर्बहिर्वेद्येवार्धान्तरं प्राप्नोतीत्यर्थं बहिर्वेदीत्यस्यानुवादत्वोपपत्तेर्न वाक्यभेद इति वाच्यम्। अत्र ह्यर्थादपि बहिर्वेद्येव पक्षप्राप्तस्यार्धान्तरस्यार्धमन्तर्वेद्यवश्यं मिनुयादिति वेद्या व्यावृत्तिस्सिध्येत्, न त्वन्तर्वेद्येव पक्षप्राप्तस्यार्धान्तरस्यापि व्यावृत्तिः। अन्तर्वेद्येवार्धद्वये मानेऽप्युक्त[3] नियमविधेरविरोधात्। न चैवमर्धमन्तर्वेदि मिनोतीत्यर्धविशेषणादर्धान्तरस्य वेद्या व्यावृत्तिसिद्धिः, अन्यथाऽर्धमिति विशेषणोपादानवैयर्थ्यात्। ततश्चार्धं बहिर्वेदीत्यस्यानुवादत्वसम्भवान्न वाक्यभेद इति वाच्यम्, [4]स्यादेवम्—यदि ह्यत्रार्धमित्यन्तर्वेदिविशेषणं स्यात्, न त्वेवम्। अर्धमिति गुणस्य स्वतो विधेयत्वाभावेन भावनाद्वारैव विधेयतया विधीयमानयूपभावनाविशेषणत्वात्। विशेषणञ्च स्वविरोधिसम्बन्धं विशेष्ये व्यावर्तयति। यथा नीलत्वमुत्पले रूपान्तरसम्बन्धम्। तथा चार्धमिति विशेषणं यूपमानभावनायामन्तर्वेद्यर्धान्तरसम्बन्धं व्यावर्तयेत्। ततश्चार्धान्तरस्य विधीयमानयूपभावनासम्बन्धव्यावृत्त्या

1. कार्यमेव क. 2. सौमिकवेदिं. क. 3 मानेऽप्यन्तर्नियम ग 4. स्यादेवमिति नास्ति. क

विधिविषयत्व [1]निवर्तेत। तन्निवृत्तौ च विधितोऽर्थान्तरमानस्य वेद्यां कर्तव्यत्वाभावेऽप्यप्रतिषिद्धत्वादिच्छया मान दुर्वारमित्यर्थान्तरस्य [2]बहिर्वेद्या नित्यप्राप्त्यभावादर्थं बहिर्वेदीत्यस्यापि विधेयत्वाद्वाक्यभेदो दुर्वार। तस्मादिह वेदित्वानादरेण सन्धिदेश एव विधेय। वेदित्वादरे तु सन्धिदेशे यूप मिनुयाद्वेद्यन्तस्येति वाक्यभेद.। किञ्च वेदित्वादरे सति वेदेर्यूपमानाङ्गतया विशेषविधौ "इयति शक्ष्यामः" इति सामान्यश्रुतस्य वेदिविधे पर्यवसान स्यात्। ततश्च "अष्टाविंशत्यून पदसहस्र महावेदि." इति परिमाणस्यादृष्टार्थत्व स्यात्, किञ्चिदंशेनैव यूपमानसम्भवात्। अतो वेदित्वानादरेणैव सन्धिदेशविधि'। अन्तर्वेदीति तु यूपमानदेशोपलक्षणमात्रम्। ततश्च वस्तुतो वेदिसम्बन्धे सत्यपि सस्कारनिचये विशेषात्मकवेदित्वस्य न यूपमानाङ्गत्वम्। एवञ्च तीव्रसुति उक्थ्ये प्राच्यामेकादशिन्यां तदङ्गतया यावद्यूप वेद्युद्धननादिक न कर्तव्यमिति फलतीति स्थितम्।

कल्पसूत्रकृतस्तु[3] 'प्राच्येकादशिनी सम्मीयते यावद्यूप वेदिमुद्धन्ति पूर्वार्द्धं वेदेः परार्द्ध्व्यासमपच्छिद्य तत्पुरस्तात्प्राञ्च दध्यात्' इत्याहु। महावेदे. पूर्वार्धं चतुर्विंशतिपदोदगायत भवति। तदर्धपदविस्तारमपच्छिद्य वेद्यवयवत्वेनापरिगृह्य तदपच्छिन्नक्षेत्रमुत्तरवेदे पुरस्तात्प्रागायत परिगृह्णीयादित्यर्थ.। युक्तञ्चैतत्, तथाहि—सन्धिदेशो विधीयत इत्यङ्गीकुर्म.। वेदिमपुरस्कृत्येत्येतत्तु न मृष्यामहे। न च सन्धिदेशं मिनुयात् वेद्यन्तस्येति वाक्यभेदः शङ्क्य, सन्धित्वस्य सापेक्षतयाऽविप्रसक्ततया च वेदितद्बहिस्सन्धित्वविशिष्टदेशस्यैव विधेयतया वाक्यभेदाप्रसक्ते। यत्तु वेदेर्यूपमानाङ्गतया [4]विशिष्टविधौ "इयति शक्ष्याम इति त्वा अवमा यजन्ते" इति [5]साङ्गप्रधानार्थतया श्रुतवेदिविधि पर्यवस्येत्। ततश्चाष्टाविंशत्यूनपदसहस्रपरिमाणस्यादृष्टार्थत्वापत्तिरिति, तदयुक्तम्, विशेष्यस्य सामान्यात्मकत्व एव हि सामान्यविधेर्विशेषविधौ पर्यवसानम्। न हि यूपमानाङ्गस्य साङ्गसोमयागाङ्गात्मकत्वास्ति। अतो नोपसहारप्रसक्ति.। किञ्च यूपमानमेव न वेदिकार्यम्, वेद्या सदो मिनोति वेद्या हविर्धान मिनोति, वेद्यामुत्तरवेदि निवपति, अन्तर्वेदि प्रसर्पकेभ्यो ददाति इत्यादिपरश्शत कार्याणां सत्त्वात्। ततश्च तद्विशेषविधिष्वपि वेदिविधेरुपसहारस्यावश्यकत्वान्न वेदिपरिमाणस्यादृष्टार्थत्वम्। तस्माद्वेदित्वादरेणैव सन्धि-

1. न निवर्तेत. क.　2. बहिरिति नास्ति ग　3 कारास्तु. ग.　4. विशेष. क.
5. चाङ्गप्रधान. ख.

येव[1] यूपायापि दास्यतीति वाच्यम्, सत्यं दद्याद्यदि पशौ वेदिस्समाम्नाता स्यात्। ज्योतिष्टोमप्रकरणे हि श्रुता वेदिः प्रधानार्था सती "इयति शक्ष्याम" इति साङ्गप्रधानेऽवतरन्ती प्रधानाङ्गभूतपशुयागेऽवतिष्ठते, न तु तदङ्गयूपमानेऽपि। न चैवमपि पशुहविरासादनमपि सौमिकवेद्या न स्यादिति वाच्यम्, प्राकृतवेदिकार्यं हि हविरासादनं चोदकतः प्राप्तं प्राकृतवेदिं विकृत्य निविशमाना सौमिकीं वेदिं लभते। यूपमानन्तु प्राकृतवेदिकार्यत्वाभावात्कथं [2]सौमिकीं वेदिं लभेत। अतो वेद्यामेव कार्त्स्न्येन यूपमानस्य प्राप्त्यभावात् "अर्धमन्तर्वेदि" इत्यस्य न परिसङ्ख्यात्वम्, त्रैदोष्यप्रसङ्गाच्च। एवञ्चान्तर्वेद्यवश्यमर्धं मिनुयादिति नियमविधित्वमेवाश्रयणीयं स्यात्। ततश्चार्धान्तरमन्तर्वेदि वा बहिर्वेदि वा स्यादित्यर्थं बहिर्वेदीत्यस्यापि विधित्वमेवास्थेयमिति वाक्यभेदप्रसङ्गात् "अर्धमन्तर्वेद्यर्धं बहिर्वेदि" इत्याभ्यां वेदित्वानादरेण सन्धिदेश एव विधीयत इति युक्तम्। न च समुदायस्य क्वचिदप्यशक्तत्वात्कथं स्वशक्यसम्बन्धरूपलक्षणाप्रसक्तिरिति वाच्यम्, अवयवद्वारा शक्यसम्बन्धस्य समुदायेऽपि सत्त्वात्, वाक्यशक्तेर्भाष्यसम्मतत्वाच्च। अन्यथाऽर्थवादेषु प्राशस्त्यलक्षणायां का गतिः? न च "व्रीहीनवहन्ति" इति नियमविधावप्यर्थान्नखविदलनादिव्यावृत्तिवदिहाप्यर्धस्यान्तर्वेदिनियमने सति—अर्धान्तरस्य वेद्या व्यावृत्तिसिद्धेर्बहिर्वेद्येवार्धान्तरं प्राप्नोतीत्यर्थे बहिर्वेदीत्यस्यानुवादत्वोपपत्तेर्न वाक्यभेद इति वाच्यम्। अत्र ह्यर्थादपि बहिर्वेद्येव पक्षप्राप्तस्यार्धान्तरस्यार्धमन्तर्वेद्यवश्यं मिनुयादिति वेद्या व्यावृत्तिस्सिध्येत्, न त्वन्तर्वेद्येव पक्षप्राप्तस्यार्धान्तरस्यापि व्यावृत्तिः। अन्तर्वेद्येवार्धद्वये मानेऽप्युक्त[3] नियमविधेरविरोधात्। न चैवमर्धमन्तर्वेदि मिनोतीत्यर्धविशेषणादर्धान्तरस्य वेद्या व्यावृत्तिसिद्धिः, अन्यथाऽर्धमिति विशेषणोपादानवैयर्थ्यात्। ततश्चार्धं बहिर्वेदीत्यस्यानुवादत्वसम्भवान्न वाक्यभेद इति वाच्यम्, [4]स्यादेवम्—यदि ह्यत्रार्धमित्यन्तर्वेदिविशेषणं स्यात्, न त्वेवम्। अर्धमिति गुणस्य स्वतो विधेयत्वाभावेन भावनाद्वारैव विधेयतया विधीयमानयूपभावनाविशेषणत्वात्। विशेषणञ्च स्वविरोधिसम्बन्धं विशेष्ये व्यावर्तयति। यथा नीलत्वमुत्पले रूपान्तरसम्बन्धम्। तथा चार्धमिति विशेषणं यूपमानभावनायामन्तर्वेद्यर्धान्तरसम्बन्धं व्यावर्तयेत्। ततश्चार्धान्तरस्य विधीयमानयूपभावनासम्बन्धव्यावृत्त्या

1. कार्यायैव क. 2. सौमिकवेदिं. क. 3. मानेऽप्यन्तर्नियम ग. 4 स्यादेवमिति नास्ति. क

प्रयोजनरूपं कर्म प्रत्यक्षश्रुतम्—"दक्षिणस्य हविर्द्धानस्य नीळे राजानमासादयति" इति । अक्षदण्डस्योपरि शकटयोरन्तरालप्रदेश. फलकास्तीर्णे नीळमित्युच्यते । तत्र राज्ञ आसादन [1]प्रत्यक्षश्रुतम् । तत्र [2]होतु स्थानं [3]बाधितम् । नीळस्य पुरस्ताद्दीक्षान्तरालस्य सोमोपावहरणाद्यर्थमुच्छ्रितफलकत्वान्न तत्र होतु स्थानसम्भव । ततश्च 'तदन्वाहु.' इति तच्छब्दलुप्तसप्तम्यास्सामीपिकाधारत्वे लक्षणा युक्ता । नीळ इति सप्तम्यास्तु प्रत्यक्षश्रुतत्वान्न लक्षणा [4]युज्यते । तस्माच्छकटसमीपदेश एवात्र विधीयते । इतोऽप्येवमित्याह—

**समाख्यानञ्च तद्वत् ॥ १५ ॥**

सोमलक्षण हविर्धीयतेऽस्मिन्नित्यन्वर्था[5] हविर्द्धानसमाख्यापि पूर्वोक्तहेतुवत् सोमं प्रत्येवाधारत्व शकटस्य गमयति, न तु होतार प्रत्यपि ॥

इति षष्ठ हविर्द्धानस्य सामिधेन्यनङ्गताधिकरणम् ॥ ६ ॥

७

दर्शपूर्णमासादिक कर्म किं साङ्गप्रधानं सर्वं यजमानेन कर्तव्यम् ? उत हविस्त्यागदक्षिणादानात्मके द्रव्योत्सर्गे यजमान कर्ता, अन्यत्र तु [6]यजमानोऽन्यो वा ? इत्यनियम ? किं वा द्रव्योत्सर्गे यजमान कर्ता, अन्यत्र त्वन्य एव ? इति संशये [7]पूर्वपक्षयति –

**शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात् ॥१७॥**

"स्वर्गकामो यजेत" इति शास्त्रगम्य फलं प्रयोक्तरि साङ्गकर्मकुर्वाणे भवति । कुत ? तल्लक्षणत्वात्—फलस्य साङ्गप्रधानप्रयोगनिबन्धनत्वात् । "स्वर्गकामो यजेत" इति साङ्गप्रधानभावनायास्त्र्यंशायाः फले विधानात् । यतश्च साङ्गप्रधानप्रयोक्तुरेव फलमवगतम् । तस्माद्धेतो स्वय यजमान एव साङ्गप्रधानप्रयोगे कर्ता स्यात् । "ऋत्विग्भ्यो दक्षिणा ददाति" इति [8]दानविधिस्तु "आत्रेयाय हिरण्य ददाति" इतिवददृष्टार्थतयाप्युपपद्यते । यजमानस्येव होत्रध्वर्य्वादिसमाख्या तत्तत्कर्मनिबन्धना भविष्यतीति न विरोध ।

1 प्रत्यक्ष नास्ति अ 2. होतृ क. 3 विहित अ. 4 युज्यत इति नास्ति. क 5. इत्यर्था ग. 6. यजमानात्. ग 7. प्रथमपक्षयति. क. 8. दक्षिणादानविधि . क.

देशविधिरिति युक्तम् ।

वस्तुतस्तु—"इयति शक्ष्याम" इति वेदेस्साङ्गप्रधानार्थत्वात्कार्त्स्न्येन मूलतो यूपमानस्य वेद्या प्राप्तौ "अर्धं बहिर्वेदि" इति विधिः । "अर्धमन्तर्वेदि" इति तु "इयति शक्ष्याम" इत्यर्थान्तरविषये नित्यप्राप्तेरनुवाद इति न वाक्यभेदः । अतो वेदेर्यूपमानाङ्गत्वात्प्राच्यामेकादशिन्या "यावद्यूपं वेदिमुद्धन्ति" इति युज्यत इति दिक् ॥

इति पञ्चम यूपावटदेशलक्षणाधिकरणम् ॥ ५ ॥

६

ज्योतिष्टोमेऽग्नीषोमीयपशौ श्रूयते—"यत्सुन्वन्ति सामिधेनीस्तदाहुः" इति । ज्योतिष्टोमे तावद्धविर्धानाख्यः कश्चिदस्ति मण्डपविशेषः । तत्र दक्षिणत उत्तरतश्च द्वे हविर्धानाख्ये शकटे । तत्र दक्षिणशकटे[1] स्थितं सोमं तदधस्तादुपावहृत्याधिषवणफलकयोश्चर्मपुटेऽभिषुण्वन्तीति स्थितिः । यत्तच्छब्दौ सप्तम्यन्तौ । 'सुपां सुलुक्' इति लुक् । "प्रवो वाजा" इत्याद्या ऋचः सामिधेन्यः । अन्वाहुरिति [2]बहुवचनमविवक्षितम् । यच्छब्दात्सप्तम्यास्सामीप्यकमाधारत्वमर्थः[3] । यच्छकटसमीपेऽधस्तादधिषवणफलकयोश्चर्मपुटेऽभिषुण्वन्ति तस्मिञ्छकटे तत्समीपे होताऽवस्थाय सामिधेनीरनुब्रूयादित्यर्थः । किमत्र हविर्धानशकटं सामिधेन्यङ्गम् ? उत तल्लक्षितो देशः ? इति संशयः । तत्र पूर्वपक्षयति—

**सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥१४॥**

हविर्धान[4] शकटयोर्मध्ये दक्षिणं शकटं सामिधेनीनामङ्गम् । तस्मिंस्स्थित्वा सामिधेनीरनुब्रूयादिति यावत् । कुतः ? तदन्वाहुरिति वचनात् । "तदन्वाहु" रित्येकदेशग्रहणम्[6]—"यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति वचनात् ॥

अथ सिद्धान्तयति—

**देशमात्रं वा प्रत्यक्षं ह्यर्थे कर्मं सोमस्य ॥ १५ ॥**

वाशब्दोऽवधारणे । दक्षिणहविर्धानशकटसमीपदेश एव सामिधेन्यङ्गम्, न तु शकटम् । कुतः ? हि—यस्मात् सोमस्यासादनं दक्षिणशकटस्य अर्थकर्म

1. तत्र दक्षिणशकटे नास्ति. क 2. बहुत्व. ग. 3. सप्तमी सामीप्ये. ख
4. हविर्धानयोः. क. 6. ग्रहण ग.

भृत्यस्वीकरणम्। तदर्थं दक्षिणादानविधानादित्यर्थः। [1]तच्च दक्षिणादानं [2]प्रत्यगात्मनि—स्वस्मिन् [3]न भवति। कुत ? विप्रतिषेधात्—विरोधात्। न हि स्वस्मै स्वयमेव दातु प्रभवति, दानस्य स्वस्वत्वपरित्यागपरस्वत्वापादनार्थकत्वात्। न च परिक्रयविधिरशक्तयजमानविषय इत्यपि युक्तम्। लोके मानान्तरवशादशक्तौ परिक्रयेऽपि मानान्तरागोचरस्य नित्यवच्छ्रुतपरिक्रयविधिबलेन नित्यमेव परिक्रीतपुरुषकर्तृकाङ्गसाध्यत्वावगमात्। तथा द्रव्योत्सर्गे यजमानस्य मुख्यकर्तृत्वं तदितरत्र त्वङ्गजाते प्रयोजककर्तृत्व तदुभयसाधारणकर्तृत्वमेव च स्वर्गकामवाक्यादवगम्यत इति सामानाधिकरण्यात्मनेपदयोरविरोधः॥

इति सप्तमं यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम्॥ ७॥

८

द्रव्योत्सर्गादन्यत्र यजमानादन्यः कर्तेति स्थितम्। तत्र किमेको द्वौ बहवो वेत्यनियम· ? उतैक एव ? किं वा अध्वर्युब्रह्महोत्राग्नीध्रा इत्यादयो यावत्यस्समाख्या श्रूयन्ते तावन्त· ? इति संशये पूर्वपक्षयति—

**तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात्॥ २०॥**

तत्र—तस्मिन् कर्त्रन्तरसमावेशे सिद्धे सति, अर्थात् इतिकर्तव्यताल्पत्वबहुत्ववशात् ( कर्तृपरिमाण—कर्तृसङ्ख्या स्यात्। यस्मिन् प्रयोगे यावद्भिः कार्यं निर्वर्तनीय तावन्त इत्यनियम·। कुतः ? अविशेषात् ) कर्तृसङ्ख्याविशेषस्यानवगमात्। परिक्रयविध्यन्यथानुपपत्त्या हि कर्त्रन्तरसमावेश। परिक्रयविधिश्चैकस्य द्वयो· त्रिचतुरादीनां वा समावेशेऽप्युपपद्यते।

द्वितीयपूर्वपक्षपरमप्येतत्सूत्रम्। अविशेषादनियमस्स्यादिति[4] नैवमस्ति, किन्तु अर्थात्-परिक्रयविध्यन्यथानुपपत्तिवशात् कर्तृपरिमाण किञ्चिल्लभ्यते। यावता हि विना परिक्रयविध्यन्यथानुपपत्तिस्तावदेव कल्प्यम्। एकस्यैव कर्त्रन्तरस्य [5]समावेशेऽपि परिक्रयविधिरुपपन्न इति न द्वितीयाद्युपादानम् 'प्रथम वा नियम्येत कारणादतिक्रमस्स्यात्' इति द्वादशिकन्यायात्। अतो द्रव्योत्सर्गादन्यत्रैकमेव कर्त्रन्तरम्।

1. ततश्च. ख. 2 प्रत्यात्मनि ग. 3. न इति सर्वेषु पुस्तकेषु नास्ति
() कोष्ठान्तर्गतो भागस्त्रुटितो ग पुस्तके. 4. इति नास्ति. ग. 5. समावेश·. ग.

अथ द्वितीय पक्षमुपक्षिपति—

**उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥ १८ ॥**

तुर्वैषम्ये। अस्तु साङ्गप्रधानप्रयोक्तु. फलम्। तदङ्गानामृत्विक्कर्तृत्वेऽपि यजमानस्य न [1]विरुध्यते। कुत ? उत्सर्गे प्रधानत्वात्—यजमानस्य देवतोद्देश्यकद्रव्योत्सर्गे याग एव कर्तृत्वस्य प्रधानत्वात्—मुख्यत्वात्। यजमाननियुक्तर्त्विक्कर्तृकाङ्गविषये च गौणकर्तृत्वोपपत्ते, 'तत्प्रयोजको हेतुश्च' इति प्रयोजकस्यापि कर्तृत्वस्मरणात्। 'षड्भिर्हलैः [2]कृषति' इत्यादौ कर्तृप्रत्ययस्य प्रयोजकेऽपि दर्शनाच्च। न चौत्सर्गिक साक्षादेव फलार्थिकर्तृकत्वं साङ्गप्रधानप्रयोगस्येति वाच्यम्, परिक्रयवचनस्य दृष्टार्थत्वाय प्रयोजकसाधारणकर्तृत्वस्यैवाश्रयितुमुचितत्वात्। न हि कर्तुरभावे[3] स्वस्मिन्नेव परिक्रयविधिर्दृष्टार्थो भवितुमर्हति। ननु परिक्रयविधिबलात् साङ्गप्रधानस्यान्यकर्तृकत्वं स्यादित्यत आह शेषकारीत्यादि। शेषकारी—अङ्गानां कर्ता, तस्मात्—यजमानाद् अन्यस्स्यात् स्वय यजमानो वा स्यात्। [4]परिक्रयो हि सहायार्थमन्यापेक्षाया भवति। [5]सहायापेक्षा चाशक्तावेव लोके दृष्टा। ततश्च शक्तौ सत्या यजमान एव [6]सर्वं साङ्गप्रधान करोति। अशक्तौ त्वन्येनाङ्गानि कारयितव्यानि। [7]परिक्रयविधिश्च तत्रैव दृष्टार्थो भविष्यति। ननु तर्हि परिक्रयविधिबलाद्द्रव्योत्सर्गेऽप्यन्यकर्तृत्वमशक्तौ स्यादित्यत्राप्येतदेवोत्तरम्—उत्सर्गे तु प्रधानत्वादिति। उत्सर्गे तु देवतोद्देश्यकद्रव्यत्यागे दक्षिणादाने च यजमान एव कर्ता स्यात्। कुत ? प्रधानत्वान्—स्वामित्वात्। न ह्यन्यदीयं द्रव्यमन्यस्मा उत्स्रष्टु [8]शक्नुयात्।

अथ सिद्धान्तयति—

**अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ १९ ॥**

वाशब्द एवार्थे। सत्यामपि शक्तौ द्रव्योत्सर्ग एव यजमान कर्ता। अन्यत्र त्वङ्गजातेऽन्य एव कर्ता। कुत ? परिक्रयाम्नानात्। परिक्रयो नाम द्रव्यदानेन

---

1. विरोध इति ग  2. कर्षतीति. क.  3. कर्त्रन्तराभावे. ग.
4. परिक्रये ग, विक्रयो हि ख  5. क्रयापेक्षा क  6. सर्वाङ्गप्रधान. क
7 क्रयविधिश्च. ग.  8 शक्य. ग.

सित्तम् । वैरूप्यन्तु प्रामाणिकत्वान्न दुष्यति । यद्यपि "दर्शपूर्णमासयोश्चत्वार ऋत्विज', पशुबन्धस्य षड्त्विज', चातुर्मास्यानां पञ्चर्त्विज, सोमस्य षोडशर्त्विजः सदस्य-स्सप्तदश" इति वचनादेव कर्तृभेदस्सिद्ध, तथापि यत्रैवंविध वचन नास्ति तद्विषयमधिकरणं नेयम् ॥

इत्यष्टममृत्विक्सख्यानियमाधिकरणम् ॥ ८ ॥

९

ज्योतिष्टोमे सन्ति चमसाध्वर्यवः—"रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून् वृणीते" इति । किमेते ऋत्विक्ष्वेवान्तर्भवन्ति ? उतान्ये ? इति सशय । तत्राध्वर्यु ब्रह्मादिशब्दानामवयवार्थाप्रसिद्धे वरणप्रवृत्तिनिमित्तनिरूढत्वात्कर्तृभेदकत्वेऽपि चमससम्बन्धिनोऽध्वर्यव इति यौगिकत्वाद्वरणनिमित्तत्वाभावान्न कर्तृभेदकत्वम् । योगबलादेव तद्वरणमदृष्टार्थं भविष्यतीति प्राप्ते, सिद्धान्तयति—

**चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २३ ॥**

ऋत्विजो यजमानादिव चमसाध्वर्यवोऽपि तेभ्यो भिद्यन्ते । कुत' ? तैर्व्यपदेशात्–"मध्यतः कारिणां चमसाध्वर्यवः [1]होत्रकाणा चमसाध्वर्यव:" इत्येवमृत्विग्भिस्सह भेदेन निर्देशात् । ब्रह्महोतृयजमानोद्गातारो मध्यत कारिणः । मैत्रावरुणब्राह्मणाच्छसिपोतृनेष्ट्रच्छावाकाग्नीध्रा [2]होत्रका. । षष्ठ्या गम्यमानस्य तदाज्ञाकरत्वरूपतदीयत्वस्य भेदघटितत्वान्न तेष्वन्तर्भाव. । यद्यपि यजमानेन [3]व्रियन्ते, तथापि तदाज्ञाकरत्वेनैव [4]व्रियन्त इत्यदोष' । तस्मादृत्विग्भ्योऽन्ये चमसाध्वर्यवः ॥

इति नवम चमसाध्वर्य्वधिकरणम् ॥ ९ ॥

१०

ऋत्विग्भ्योऽन्ये चमसाध्वर्यव इति स्थितम् । तत्र किमेको द्वौ बहव इत्यनियम. ? उत [5]बहवः ? इति सशय. । अविशेषादनियमः । "चमसाध्वर्यून् वृणीत" [6]इति वरणं प्रति चमसाध्वर्यूणामुद्देश्यतया तद्बहुत्वस्य ग्रहैकत्ववदविवक्षितत्वादिति प्राप्ते, सिद्धान्तयति—

---

1–2. होतृकाणा इति होतृका. ग 3–4. वीयन्त इत्यशुद्ध पाठ ग. 5 तत्र बहव. क. 6. इत्यत्र क.

अथ सिद्धान्तयति—

अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥ २१ ॥

अपि वेति पूर्वपक्षव्यावृत्तौ । "अध्वर्युर्ग्रहं गृह्णाति, होता शसति, उद्गातो-द्गायति, ब्रह्माभ्यनुजानाति" इत्येव यावन्ति कर्तृनामधेयानि श्रूयन्ते तावन्त-कर्तारस्स्युः । कुत ? श्रुतिभेदात्—श्रुतनामधेयभेदात्, 'संज्ञा चोत्पत्तिसयोगात्' इति न्यायस्य कर्मभेदवत्कर्तृभेदस्यापि [1] साधकत्वात् । अत्राशङ्क्य निराकरोति—

एकस्य भेदादिति चेन्नोत्पत्तौ हि ॥ २२ ॥

एकस्यैव [2] ग्रहग्रहणादितत्तत्कर्मभेदादध्वर्युहोत्रादिसंज्ञा स्यु पाचकया-जकादि [3] शब्दवदिति चेत्तन्न, हि—यत, उत्पत्तौ जात्यभिप्रायमेकवचनम् । "अध्व-र्युर्ग्रहान् गृह्णाति (होता शंसति" इत्यादिकर्मविधिष्वध्वर्युहोत्रादिशब्दास्सिद्धव-न्निर्दिश्यन्ते, न तु तत्र संज्ञासज्ञिसम्बन्धोऽपि गम्यते । ग्रहान् गृह्णाति ) गृह्णन्न-ध्वर्युर्भवतीति वाक्यभेदप्रसङ्गात् । कर्मारम्भकाल[4] वरणनिमित्ता एव ह्यध्वर्युहोत्रादि-शब्दा "अग्निर्मे होतासौ मानुष इति होतारं वृणीते" "चन्द्रमा मे ब्रह्मासौ मानुष इति ब्रह्माणम्" "आदित्यो मेऽध्वर्युरसौ मानुष इत्यध्वर्युम्" इत्यादिश्रवणात् । अस्मिन् करिष्यमाणकर्मणि अथ होता भवत्वित्येव होतृत्वादिरूपेणाप्रवृत्तप्रवृत्त्य-भ्यर्थना वरणमित्युच्यते । वरणञ्चैतत् 'एकस्यैव पुन श्रुति' इति न्यायाद्विहितस्य पुनर्विधानासम्भवाद् भिन्नभिन्नमेवेति यावद्वरणं संज्ञाभेदाद् यावत्संज्ञा कर्तृभेद-स्सिध्यति । न चैकस्मिन्नेव बहुभिर्वरणै बह्वयस्संज्ञा पाचकयाजकादिशब्दवत्कुतो न स्युरिति वाच्यम्, वरणस्य दृष्टार्थतया (चि) आमिक्षावरुद्धे यागे [5] वाजिनवदेक-वरणावरुद्धे वरणान्तरानिवेशासम्भवात् । न हि वृतस्य वरणे [6] दृष्ट किञ्चित्प्रयोजन-मस्ति । यत्र तु मन्त्रवरण नास्ति दर्शपूर्णमासादौ [7] तत्र लौकिक्या वाचा वरणमेव प्रवृत्तिनिमित्तमित्यदोष । यद्यपि सत्रेषु सर्वेषां यजमानत्वेन स्वयमेवानतत्वादेव-विधवरण नास्ति, तथापि 'अध्वर्युरहमसानि' इत्यादिसङ्कल्प[8] एव तत्र प्रवृत्तिनि-

---

1. विधायकत्वात् क. 2 ग्रहेति नास्ति ग 3 शब्दवदिति नास्ति ग.
() कुण्डलान्तर्गतो भागो गपुस्तके त्रुटित. 4 कालकरणेति ग. 5 वदेवेति क
6. दृष्टमिति नास्ति ग 7. तत्रेति नास्ति ग 8 सङ्कल्पा इति क.

१२

शमिता किमृत्विक्ष्वेवान्तर्भवति ? उत ततोऽन्य ? इति संशये पूर्वपक्षयति—

**शमिता च शब्दभेदात् ॥ २६ ॥**

चमसाध्वर्युवच्छमितापि न ऋत्विक्ष्वन्तर्भवति । कुत. ? शब्दभेदात्—संज्ञाभेदात् ॥

अथ सिद्धान्तयति—

**प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २७ ॥**

वाशब्दोऽवधारणे । ऋत्विक्ष्वेव [1]शमितान्तर्भवति । न तु ततोऽन्य. । कुत ? उत्पत्त्यसंयोगात्—"चमसाध्वर्यून् वृणीत" इत्युत्पत्तिगता संज्ञा भेदिकेति युक्तम्, शमितृसंज्ञा तु नोत्पत्तिगता 'शमितार वृणीत' इति तदुत्पत्तेरदर्शनात् । कथं तर्हि ऋत्विक्षु शमितृशब्दसम्भव ? तत्राह–प्रकरणादिति । प्रकरणं प्रक्रिया, प्रकृतिप्रत्ययव्युत्पादनम् । शमयति पशु संज्ञपयतीति योगवशादिति यावत् । तत्र तावदध्वर्युर्न शमिता, "पराङावर्ततेऽध्वर्यु· पशोस्संज्ञप्यमानात्" इति विरोधात् । ( "शृत हवि शमित. इत्यध्वर्यु पृच्छति, शृतमिति शमिता प्रत्याह" इति विरोधाच्च । ) किन्त्वध्वर्युपुरुषे प्रतिप्रस्थातृनेष्टृउन्नेतृषु कश्चिच्छमिता । एवञ्चाध्वर्यु समाख्यापि शामित्रकर्मसु न विरुध्यते । ननु "क्लेमान वैकर्तस्य शमितुर्दद्यात्स ब्राह्मणाय दद्याद्यद्यब्राह्मणस्स्यात्" इति श्रुतम् । 'कर्त शैथिल्ये' चुरादि । प्राणशैथिल्यसंज्ञपनमिह विवक्षितम् । विकर्ता एव वैकर्तः । स्वार्थिकोऽण् । क्लेमा नाम मांसखण्डविशेष । यदि शमिता ऋत्विग्विशेषस्स्यात्तदा शमितुरब्राह्मणानुवादोऽनुपपन्नस्स्यात्, 'स्मृतेर्वा ब्राह्मणाना स्यात्' इति द्वादशान्त्याधिकरणेऽब्राह्मणस्यार्त्विज्यनिराकरणात् । अतोऽन्य एव शमितेति शङ्कायामपि 'प्रकरणात्' इत्युत्तरम् । 'यद्यब्राह्मणस्स्यात्' इति न शमितृपरं, किन्तु यजमानपरम्, 'दद्यात्' इति तस्यैव [2]प्रकृतत्वात् । [3]यद्यब्राह्मण–क्षत्रियो वैश्यो वा यजमानस्स्यात्तदा शमिता स्वं भागं ब्राह्मणाय दद्यात्, न तु स्वयमुपभुञ्जीतेत्यर्थः । तस्मादुक्तरीत्या ऋत्विक्ष्वेव शमितान्तर्भवतीति स्थितम् ।

अत्र ब्रूम —[4]वाजसनेयकशाखाया "शमिता पशु नयति तं प्रतिप्रस्थाता-

1. शमितुरन्तर्भावः. ग. () चिन्हान्तर्गतो भागो नास्ति. क. 2. प्रक्रमसत्वात् ग. 3 यदि ब्राह्मण ग. 4. वाजसनेयकादि. क.

## उत्पत्तौ तु बहुश्रुतेः ॥ २४ ॥

तुरवधारणे। बहव एव चमसाध्वर्यवः। कुतः? उत्पत्तौ बहुश्रुतेः–[1]वरणोत्पत्तिवाक्ये बहुत्वश्रवणात्। वरणेन चमसाध्वर्यून् [2]कुर्यादिति नार्थः, किन्तु वरण संस्कृतैश्चमसाध्वर्युभिः क्रतुमुपकुर्यादिति। तथा च वृतानां चमसाध्वर्यूणां क्रतु प्रत्युपादेयत्वाद्बहुत्वं विवक्षितम्। असिद्धक्रतुसम्बन्धाना[3] तेषां वरण प्रत्युद्देश्यत्वासम्भवेन क्रत्वर्थतयैव तेषामुपादेयत्वात्। न च क्रतूपस्थापकाभावः, प्रकरणकल्पितेन प्रयोगवचनेन सर्वेषां ग्रहणे सति वृतानां चमसाध्वर्यूणामपि क्रत्वर्थतालाभात्। न चैवं सति "ग्रहं संमार्ष्टि" इत्यत्राप्येकत्व विवक्षितं स्यात्–[4]संमृष्टेन ग्रहेण क्रतुमुपकुर्यादित्येवमुपादेयत्वस्य तत्रापि सत्वादिति वाच्यम्, ग्रहाणां हि "ऐन्द्रवायवं गृह्णाति" इत्युत्पत्तिवाक्यैरेव प्रकरणसनाथैः क्रतुसम्बन्धस्य सिद्धतया सम्मार्गवाक्ये केवलमुद्देश्यत्वमेवेति न सङ्ख्या विवक्षितु शक्या। चमसाध्वर्यूणान्त्वन्यत उत्पत्त्यभावेन क्रतुसम्बन्धस्यान्यत सिध्यभावादिदमेव वाक्यं प्रकरणसनाथ सद्वरणस्य चमसाध्वर्यूणा सङ्ख्यायाश्चेति त्रयाणामपि क्रतुसम्बन्ध विधत्ते। पश्चात्त्वरुणैकहायनीन्यायेन यथायोगं परस्परमन्वयो भवति–वरणोत्पादितैश्च तैश्चमसाध्वर्युभिः क्रतुमुपकुर्यादिति। ततश्चेह बहुत्वमुपादेयमेव शब्दविधया। अर्थात्तूपादेयगतमपीति तदवश्यं विवक्षणीयमिति वैषम्यम्। अतो बहवश्चमसाध्वर्यवः ॥

इति दशमं चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥ १० ॥

११

बहवश्चमसाध्वर्यव इति स्थितम्। कियन्तो बहव इति संशये 'प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात्' इति न्यायेन त्रय इति प्राप्ते, सिद्धान्तयति—

## दशत्वं लिङ्गदर्शनात् ॥ २५ ॥

चमसाध्वर्यूणां दशत्व प्रत्येतव्यम्। कुत? लिङ्गदर्शनात्–होतृचमसो ब्रह्मचमस इत्येव चमसस्वामिदशत्वस्य च लिङ्गस्य चमसाध्वर्यूणा दशत्वावगमकस्य दर्शनात्। ज्योतिष्टोमविकारे दशपेये दश चमसाध्वर्यव[5] इत्यनुवादरूपलिङ्गस्य प्रकृतौ तद्दशत्वगमकस्य दर्शनाच्चेत्यर्थः ॥

इत्येकादशं चमसाध्वर्यूणामियत्ताधिकरणम् ॥ ११ ॥

---

1. वरणे. क. 2 उपकुर्यात्. ग 3 सम्बन्धात्. ग 4 समृष्टे ग्रहणे. ग
5. चमसाध्वर्यवरूप. ग.

१२

शमिता किमृत्विक्ष्वेवान्तर्भवति ? उत ततोऽन्यः ? इति संशये पूर्वपक्षयति—

## शमिता च शब्दभेदात् ॥ २६ ॥

चमसाध्वर्युवच्छमितापि न ऋत्विक्ष्वन्तर्भवति । कुत ? शब्दभेदात्— सञ्ज्ञाभेदात् ॥

अथ सिद्धान्तयति—

## प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २७ ॥

वाशब्दोऽवधारणे । ऋत्विक्ष्वेव [1]शमितान्तर्भवति । न तु ततोऽन्य. । कुत ? उत्पत्त्यसंयोगात्—"चमसाध्वर्यून् वृणीत" इत्युत्पत्तिगता सञ्ज्ञा भेदिकेति युक्तम्, शमितृसञ्ज्ञा तु नोत्पत्तिगता 'शमितार वृणीत' इति तदुत्पत्तेरदर्शनात् । कथं तर्हि ऋत्विक्षु शमितृशब्दसम्भव ? तत्राह–प्रकरणादिति । प्रकरणं प्रक्रिया, प्रकृतिप्रत्ययव्युत्पादनम् । शमयति पशु सञ्ज्ञपयतीति योगवशादिति यावत् । तत्र तावदध्वर्युर्न शमिता, "पराङावर्ततेऽध्वर्यु पशोस्सञ्ज्ञप्यमानात्" इति विरोधात् । ("शृतं हवि शमितः इत्यध्वर्यु पृच्छति, शृतमिति शमिता प्रत्याह" इति विरोधाच्च ।) किन्त्वध्वर्युपुरुषे प्रतिप्रस्थातृनेष्टृन्नेतृषु कश्चिच्छमिता । एवञ्चाध्वर्युसमाख्यापि शामित्रकर्मसु न विरुध्यते । ननु "क्लोमान वैकर्तस्य शमितुर्दद्यात्स ब्राह्मणाय दद्याद्यद्यब्राह्मणस्स्यात्" इति श्रुतम् । 'कर्त शैथिल्ये' चुरादि । प्राणशैथिल्यसञ्ज्ञपनमिह विवक्षितम् । विकर्ता एव वैकर्त. । स्वार्थिकोऽण् । क्लोमा नाम मांसखण्डविशेष । यदि शमिता ऋत्विग्विशेषस्स्यात्तदा शमितुरब्राह्मणानुवादोऽनुपपन्नस्स्यात्, 'स्मृतेर्वा ब्राह्मणाना स्यात्' इति द्वादशान्त्याधिकरणेऽब्राह्मणस्यार्त्विज्यनिराकरणात् । अतोऽन्य एव शमितेति शङ्कायामपि 'प्रकरणात्' इत्युत्तरम् । 'यद्यब्राह्मणस्स्यात्' इति न शमितृपरं, किन्तु यजमानपरम्, 'दद्यात्' इति तस्यैव [2]प्रकृतत्वात् । [3]यद्यब्राह्मण – क्षत्रियो वैश्यो वा यजमानस्स्यात्तदा शमिता स्वं भाग ब्राह्मणाय दद्यात्, न तु स्वयमुपभुञ्जीतेत्यर्थः । तस्मादुक्तरीत्या ऋत्विक्ष्वेव शमितान्तर्भवतीति स्थितम् ।

अत्र ब्रूम —[4]वाजसनेयकशाखाया "शमिता पशु नयति त प्रतिप्रस्थाता-

---

1. शमितुरन्तर्भावः. ग. () चिन्हान्तर्गतो भागो नास्ति. क. 2. प्रक्रमसत्वात् ग. 3 यदि ब्राह्मण . ग. 4. वाजसनेयकादि. क.

उत्पत्तौ तु बहुश्रुतेः ॥ २४ ॥

तुरवधारणे। बहव एव चमसाध्वर्यवः। कुत ? उत्पत्तौ बहुश्रुतेः-[1]वरणोत्पत्तिवाक्ये बहुत्वश्रवणात्। वरणेन चमसाध्वर्यून् [2]कुर्यादिति नार्थः, किन्तु वरणसंस्कृतैश्चमसाध्वर्युभिः क्रतुमुपकुर्यादिति। तथा च वृतानां चमसाध्वर्यूणां क्रतु प्रत्युपादेयत्वाद्बहुत्व विवक्षितम्। असिद्धक्रतुसम्बन्धानां[3] तेषा वरण प्रत्युद्देश्यत्वासम्भवेन क्रत्वर्थतयैव तेषामुपादेयत्वात्। न च क्रतूपस्थापकाभाव, प्रकरणकल्पितेन प्रयोगवचनेन सर्वेषां ग्रहणे सति वृताना चमसाध्वर्यूणामपि क्रत्वर्थतालाभात्। न चैवं सति "ग्रहं संमार्ष्टि" इत्यत्राप्येकत्व विवक्षितं स्यात्-[4]संमृष्टेन ग्रहेण क्रतुमुपकुर्यादित्येवमुपादेयत्वस्य तत्रापि सत्त्वादिति वाच्यम्, ग्रहाणां हि "ऐन्द्रवायव गृह्णाति" इत्युत्पत्तिवाक्यैरेव प्रकरणसनाथैः क्रतुसम्बन्धस्य सिद्धतया सम्मार्गवाक्ये केवलमुद्देश्यत्वमेवेति न सङ्ख्या विवक्षितु शक्या। चमसाध्वर्यूणान्त्वन्यत उत्पत्त्यभावेन क्रतुसम्बन्धस्यान्यत सिध्यभावादिदमेव वाक्य प्रकरणसनाथं सद्वरणस्य चमसाध्वर्यूणा सङ्ख्यायाश्चेति त्रयाणामपि क्रतुसम्बन्ध विधत्ते। पश्चात्त्वरुणैकहायनीन्यायेन यथायोगं परस्परमन्वयो भवति-वरणोत्पादितैश्च तैश्चमसाध्वर्युभिः क्रतुमुपकुर्यादिति। ततश्चेह बहुत्वमुपादेयमेव शब्दविधया। अर्थात्तूपादेयगतमपीति तदवश्य विवक्षणीयमिति वैषम्यम्। अतो बहवश्चमसाध्वर्यव ॥

इति दशम चमसाध्वर्यूणा बहुत्वाधिकरणम् ॥ १० ॥

११

बहवश्चमसाध्वर्यव इति स्थितम्। कियन्तो बहव इति संशये 'प्रथम वा नियम्येत कारणादतिक्रमस्स्यात्' इति न्यायेन त्रय इति प्राप्ते, सिद्धान्तयति—

दशत्वं लिङ्गदर्शनात् ॥ २५ ॥

चमसाध्वर्यूणां दशत्व प्रत्येतव्यम्। कुत ? लिङ्गदर्शनात्-होतृचमसो ब्रह्मचमस इत्येव चमसस्वामिदशत्वस्य च लिङ्गस्य चमसाध्वर्यूणां दशत्वावगमकस्य दर्शनात्। ज्योतिष्टोमविकारे दशपेये दश चमसाध्वर्यव[5] इत्यनुवादरूपलिङ्गस्य प्रकृतौ तद्दशत्वगमकस्य दर्शनाच्चेत्यर्थ ॥

इत्येकादश चमसाध्वर्यूणामियत्ताधिकरणम् ॥ ११ ॥

1. वरणे. क. 2 उपकुर्यात्. ग 3. सम्बन्धात्. ग. 4 समृष्टे ग्रहणे. ग
5. चमसाध्वर्यवरूप. ग.

[1]विशसितृविषयमेवेदमधिकरणमिति युक्तम्। एवञ्च पशुविशसनं न समाख्यावशादाध्वर्यवम्। सञ्ज्ञपनन्तु ऋत्विग्भ्योऽन्यश्चातुर्वर्ण्यान्तर्गत' कश्चित्कुर्यादिति सिद्धम्। अतएव कलिवर्ज्यप्रकरणे 'शामित्रञ्चैव विप्राणाम्' इत्यादित्यपुराणवचनमुपपद्यते। यदि तु ऋत्विजामन्यतम एव शमिता स्यात्तदा कलौ ब्राह्मणस्य [2]शामित्रनिषेधाद्-ब्राह्मणस्य चार्त्विज्याभावाच्छमितुरभावे सति पशुयाग एव लुप्येत। तथासति कलिवर्ज्यप्रकरणे 'सौत्रामण्या सुराग्रह. गोसंज्ञप्तिश्च गोसवे, अनुबन्ध्या पयोऽपि वा' इत्यादि व्याकुप्येत। ततश्च पूर्वयुगेषु चतुर्णां वर्णानामन्यतमश्शमिता, कलौ तु शूद्र एव शमिता, तत्र ब्राह्मणस्य शमितृत्वनिषेधात्। 'कलावाद्यन्तयोस्स्थिति.' इति धर्मशास्त्रमर्यादया ब्राह्मणशूद्रवर्णौ विना वर्णान्तराभावादित्यन्यदेतत्॥

इति द्वादश शमित्रधिकरणम्॥ १२॥

१३

ज्योतिष्टोमे श्रूयते—"हो इत्युपगातार [3]उपगायेयु" इति। मुख्येषु गायकेषु विरम्य विरम्य गायत्सु तदन्तरालाच्छादनाय तानप्रदानेन तद्गुणभूता उपगातार उच्यन्ते। किमेते[4] ऋत्विग्भ्योऽन्ये ? उत तेष्वेवान्तर्भवन्ति ? इति संशयः। तदन्य इति ब्रूम'। यद्यप्युपगातृशब्दस्य यौगिकत्वाद्वरणविध्यभावाच्च [5]शमितृवत्तेष्वन्तर्भावो [6]युक्त, तथाप्यृत्विजां स्वामिकार्यकरतया 'गुणानाञ्च परार्थत्वात्' इति न्यायेन मिथो गुणभावानुपपत्तेस्तदन्यत्वमेव युक्तमिति प्राप्ते, सिद्धान्तयति –

**उपगाश्च लिङ्गदर्शनात्॥ २८॥**

[7]शमितृवदुपगातारोऽप्यृत्विक्ष्वेवान्तर्भवन्ति। कुत ? लिङ्गदर्शनात्—दृश्यते सन्दिग्धोऽर्थोऽनेनेति दर्शन न्याय। लिङ्गान्न्यायाच्चेत्यर्थः। उपगातृशब्दस्य यौगिकत्वाद्वरणविध्यभावाच्च शमितृवदृत्विक्ष्वेवान्तर्भावो युक्त। मिथो गुणभावस्तु वचनादुपपद्यते। यथा "सवदस्वेत्याग्नीध्रोऽऽध्वर्युमाह" इत्यादौ। उपगातृणामृत्विगन्यत्वे च "नाध्वर्युरुपगायेत्" इति निषेधो व्यर्थस्स्यात्। अतो निषेधाल्लिङ्गादपि उपगातार ऋत्विक्ष्वन्तर्भवन्तीति स्थितम्।

केचित्तु याज्ञिका ऋत्विग्भ्योऽन्ये उपगातार इति मन्यन्ते। युक्तञ्चैतत्, काठके हि—"शत वर्षसहस्राणि दीक्षितास्सत्रमासत" इति विश्वसृजामयनाख्ये

1 विशासितृ घ. 2. शामितृत्व. ग 3 उपेति नास्ति. ग. 4. एभ्यः घ 5 शामित्र. ग. 6. युज्यते क 7. शामित्र. ग.

न्वारभते तमध्वर्युः त यजमान' । उल्मुकमादायाग्नीध्रः पुरस्ताद्गच्छति अजैदग्निरिति मैत्रावरुणः प्रेष्यति दैव्याश्शमितार इत्यध्रिगु' होतान्वाह ब्रह्मा दक्षिणत आस्ते" इति युगपत्कर्माण्यवगतानि । अत एतेभ्योऽन्यश्शमितेति निर्विवादम् । न च तदानीं नेष्टोन्नेता वाध्वर्युपुरुषः शमिता [1]भविष्यवीति वाच्यम्, "पशुबन्धस्य षडृत्विज" इति विरोधात् । न च क्वचिच्छाखाया प्रतिप्रस्थातुः पश्वन्वारम्भो न विहितः । अतस्स एव तदानीं शमिता स्यादिति वाच्यम् । [2]तत्र शाखायां "प्रमुच्य-माना इति नीयमाने पशौ जुहोति" इति प्रतिप्रस्थातु'[3] होमविधानात् । तैत्तिरीय-शाखायान्तु—"यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपण ? हरेत्" इति प्रजाहितगार्हपत्यात्पशुश्रपणार्थमग्न्युद्धरणमाम्नातम् । तदपि प्रतिप्रस्थातृकर्तृकमेव, अध्वर्योः पश्वन्वारम्भे व्यापृतत्वात् । किञ्च वपाश्रपणात् 'अभक्षो वा कर्मभेदा-त्तस्यास्सर्वप्रदानत्वात्' इति दाशमिकाधिकरणे प्रतिप्रस्थातुरप्राकृतकार्यकर-त्वान्न पश्विडाङ्गभक्षणमिति वक्ष्यमाणमृत्विगन्यत्व एवोपपद्यते । [4]तत्प्रतिप्रस्थातु-श्शमितृत्वे विरुध्येत । 'पयो वा कालसामान्यात्' इति पशो प्रातर्दोहविकारत्वस्य वक्ष्यमाणतया तच्छ्रपणकारिणस्तस्य प्राकृतकार्यकरत्वेन पश्विडाभक्षणप्राप्ते-र्दुर्वारत्वात् । तस्मादृत्विग्भ्योऽन्य एव शमिता । एवञ्च "क्लेमान वैकर्तस्य शमितु-र्दद्यात्त स ब्राह्मणाय दद्याद्यद्यब्राह्मणस्स्यात्' इति भाष्योदाहृतश्रुतौ अब्राह्मणपद शमितृविषयमेव समञ्जस भवति । 'नाब्राह्मणस्सान्नाय्य प्राश्नीयात्' इति सान्नाय्य-विकारपशुभक्षणस्याब्राह्मणशमितृविषये प्रतिषिद्धतयाऽब्राह्मणश्शमिता क्लेमान स्व भाग न भक्षयेत्, किन्तु ब्राह्मणाय दद्यादित्यर्थस्य स्वरसत प्रतीते. । अब्राह्मण-शब्दस्य [5]समानवाक्यस्थान्यवहितप्रथमान्ततच्छब्दोपात्तशमितृपरत्वे सम्भवति व्यव-हितपूर्ववाक्योपात्तयजमानपरताया अनुचितत्वाच्च ।

अधिकरणन्तु विशसितृपर नेयम् । शमिता हि द्वेधा संज्ञपयिता विशसिता च । अतएव "वैकर्तस्य शमितु" इति [6]भाष्योदाहृतश्रुतौ वैकर्तस्येति विशेषण-मर्थवत् । तत्र हि वैकर्तो मारयितोच्यते । सज्ञपने च श्रूयमाणश्शमिता ऋत्वि-ग्भ्योऽन्य एव, अध्वर्युहोत्रादीनामृत्विजामन्यत्र व्यापृतत्वात् । अत परिशेषात्

---

1. भवति. ग 2. तस्या क. 3 प्रतिप्रस्थातुश्च ग. 4. तदिति नास्ति. क, ग, घ. 5. अव्यवस्थित. ग. 6 भाष्य उदाहृताया. ग.

सुब्रह्मण्य, सदस्यः, चमसाध्वर्यवश्चेति कर्तारस्समधिगता। किमेते सर्वे ऋत्विक्छब्दवाच्याः ? उत सप्तदशैव ? इति संशये पूर्वपक्षयति—

**कर्मकार्यात्सर्वेषां[1]ऋत्विक्त्वमविशेषात् ॥ ३० ॥**

सर्वेषामृत्विक्त्वं प्रत्येतव्यम्। कुतः ? कर्मकार्यादविशेषात्—कर्मकरत्वाद्धेतो प्रवृत्तस्यर्त्विक्छब्दस्य सर्वत्राविशिष्टत्वात्। [2]कर्मकार्यादिति भावे ष्यञ्। आर्षत्वादुत्तरपदवृद्धिः। [3]कर्मकार्यत्वादित्येव वा पठितव्यम्। ऋतौ यज्ञे यजन्ति [4]दक्षिणाप्राप्तिनिमित्त वा तदीयकर्माणि कुर्वन्तीति ऋत्विजः। (यद्वा ऋ गतौ मतु. दक्षिणाप्राप्ति, तन्निमित्ते यजन्ति यज्ञीयं कर्म। तत्करत्वाद्धेतो प्रवृत्ता ऋत्विजः।) तथाच यागीयकर्मकरत्वमृत्विक्छब्दप्रवृत्तिनिमित्तम्। तच्च सर्वेष्वप्येतेष्वविशिष्टम्।

अथ सिद्धान्तयति—

**न वा परिसंख्यानात् ॥ ३१ ॥**

वाशब्दोऽवधारणे। नैव सर्वसाधारण ऋत्विक्छब्द। कुत ? परिसंख्यानात्—"सौम्यस्याध्वरस्य सप्तदश ऋत्विज" इति [5]सप्तदशभ्योऽन्येषा ऋत्विक्त्वव्यावर्तनात्।

अत्राशङ्क्य निराकरोति—

**पक्षेणेति चेन्न सर्वेषामनधिकारात्[6] ॥ ३२ ॥**

ऋत्विक्छब्दप्रवृत्तिनिमित्तस्य चमसाध्वर्युषु तदन्येष्वपि सत्त्वात्तदनुरोधेन सप्तदशत्ववचन पक्षेण—एकदेशेनोपपद्यते। अवयुत्यानुवाद इदि यावत्। द्वादशकपालविधौ "यदष्टाकपालो भवति" [7]इत्यादिर्वादिति (छि) चेत्—[8]तन्न; कुत. ? सर्वेषामनधिकारात्—सर्वसाधारणपरमसंख्याया [9]अप्रस्तुतत्वात्। द्वादशकपालविधौ तु द्वादशत्वलक्षणपरमसंख्याया विहितत्वादष्टत्वादिसंख्यानां तदेकदेशतया [10]तत्स्तुत्या द्वादशत्वसख्या स्तुता भवतीत्यवयुत्यानुवादत्वं युज्यते। ततश्च "सप्तदश" इत्यस्यावयुत्यानुवादत्वासम्भवादानर्थक्यप्रसङ्गादितरपरिसख्यालाभान्न सप्तदशभ्योऽन्येषा-

1 ऋत्विक्कम अ. 2 कर्मकार्यत्वादिति क 3 वाक्यमिद नास्ति क.
4 दक्षिणाप्राप्तिनिमित्त वा नास्ति. ज () चिह्नान्तर्गतो भागो नास्ति. क.
5. सप्तदशातिरिक्ताना. अ 6. अनधिकार क. 7. इतिवत् ग 8. तदिति नास्ति अ 9. अस्तुतत्वात्. अ. 10. तत्स्तुतत्वात् अ, ग.

सत्रे "तप आसीद्गृहपतिः" इत्यादिना गृहपतिब्रह्महोत्रादीन् कर्तॄननुक्रम्य[1] तद्न्यत्वेनैवोपगातॄन्[2] निर्दिशति—"आर्तं वा उपगातारः" इति। अत उपगातारो न ऋत्विक्ष्वन्तर्भवन्तीति मन्यामहे। "नाध्वर्युरुपगायेत्" इति तु "ये प्रसृप्तास्ते[3] सर्वेऽग्निष्टोममुपगायेयुः" इत्यग्निष्टोमस्तोत्रे प्राप्तस्य निषेधो भविष्यतीति न दोष इति ॥

इति त्रयोदशमुपगात्रधिकरणम् ॥ १३ ॥

१४

सोमविक्रयी किमृत्विजामन्यतम ? उत ततोऽन्य ? इति संशये सोमविक्रयिशब्दस्य यौगिकत्वाद्वरणविध्यभावाच्चोपगातृवदृत्विजामन्यतम इति प्राप्ते, सिद्धान्तयति—

**विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ २९ ॥**

उपगानस्य विहितत्वादुपगातार[4] ऋत्विक्ष्वन्तर्भवन्तु। सोमविक्रयी[5] त्वन्य एव। कुत. ? कर्मणोऽचोदितत्वात्—सोमविक्रयस्याविहितत्वात्। यजमानस्य यत्कर्तव्य तदर्थो ह्यृत्विजा परिग्रह.। सोमविक्रयश्च क्रत्वर्थतया विधानाभावान्न यजमानस्य कर्तव्य'। अत' कथं तमृत्विज' कुर्युः। न च "सोम क्रीणाति" इति क्रयस्य विहितत्वात् तस्य च विक्रय विनानुपपत्ते विक्रयस्यापि विधिराक्षिप्यते भक्षणविधिना ग्रहणादिविधिवदिति वाच्यम्, द्रव्यलोभेन विक्रये प्रवृत्त पुरुषमादायैव क्रयविध्युपपत्त्या धनार्जनवद्विक्रयस्यापि[6] विध्यनपेक्षणात्, यजमानकर्तव्यत्वाभावेन धर्मशास्त्रतस्सर्वकर्मानर्हत्वापादकत्वेन च ऋत्विक्कर्तृकत्वानुपपत्ते। एवञ्चाब्राह्मणादपि सोम क्रीणीयादित्युपपद्यते। तस्मादृत्विग्भ्योऽन्यस्सोमविक्रयी॥

इति चतुर्दश सोमविक्रेतु पृथक्त्वाधिकरणम् ॥ १४ ॥

१५

ज्योतिष्टोमे—अध्वर्यु प्रतिप्रस्थाता नेष्टा उन्नेता, ब्रह्मा ब्राह्मणाच्छसी आग्नीध्र पोता; होता मैत्रावरुण अच्छावाक ग्रावस्तुत्, उद्गाता प्रस्तोता प्रतिहर्ता

1 कर्तॄननतिक्रम्य क 2 उपगातार. ग 3 स्युस्ते घ 4. ऋत्विजस्तदन्तर्भवन्तु घ 5. तु तदन्य. ग. 6 विध्यनाक्षेपात्. क.

कुत ? दक्षिणाभिः श्रुतिसंयोगात्—श्रुतीति कर्मणि क्तिन्। "तस्य द्वादशशत दक्षिणा" इति [1]प्रकृत्य "ऋत्विग्भ्यो दक्षिणां ददाति, प्रथममग्नीधे ददाति ततो ब्रह्मणे ततो होत्रे" इत्यादिना "प्रतिहर्त्रेऽन्ततः" इत्यन्तेन सप्तदशाना चमसाध्वर्युवर्जितानामेव ऋत्विक्छब्देन श्रुतेन सयोगात्। चमसाध्वर्युप्रसर्पकाणां द्रव्यान्तरेण परिक्रयविधेश्च॥

इतोऽप्येवमित्याह—

## उक्त्वा च यजमानत्वं (तेषां) दीक्षाविधानात्॥ ३४॥

सत्रे[2] "य ऋत्विजस्ते यजमानाः" इत्यभिधाय "गृहपतिं दीक्षयित्वा ब्रह्माण दीक्षयति तत उद्गातार ततो होतारम्" इत्यादिना ब्रह्मादय एव सप्तदशानुक्रम्यन्ते,[3] न तु चमसाध्वर्यवः। अतोऽपि न चमसाध्वर्यव ऋत्विजः॥

इति षोडश ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम्॥ १६॥

१७

दक्षिणावाक्येषु दीक्षावाक्येषु चानुक्रान्ता ऋत्विज इति स्थितम्। तेषु च वाक्येषु क्वचिच्छाखाया षोडशैवर्त्विज श्रुता, न तु सदस्यः। वरणन्तु तस्य श्रुतम्—"सप्तदशर्त्विज" इति। तत्र सदस्य एव सप्तदश., कर्मकरत्वसामान्यात्; न तु यजमानः। कृताकृतप्रत्यवेक्षणमेव च [4]सदस्यकर्मेति प्राप्ते, सिद्धान्तयति—

## स्वामिसप्तदशाः कर्मसामान्यात्॥ ३५॥

स्वामी यजमान सप्तदश येषान्ते स्वामिसप्तदशा ऋत्विजस्स्यु.। कुत.? कर्मसामान्यात्। दीक्षादक्षिणावाक्यश्रुतेषु ब्रह्मादिषु ऋत्विक्षु यागीयाङ्गकर्मकर्तृत्व दृष्टम्, तत्सामान्याद्यजमान एव सप्तदश ऋत्विक्, भृत्यर्थत्वस्य परकीयत्वस्य च प्रवेशे गौरवात्। अङ्गेत्यनेन सोमविक्रयिनिरास, विक्रयस्याविहितत्वात्। [5]चमसाध्वर्यूणान्त्वन्यतमो न सप्तदशो भवितुमर्हति, तदन्यतमस्यानिर्द्धारणात्, चमसहोमे तेषा व्यापृतत्वाच्च। कृताकृतपर्यवेक्षणस्याविहितत्वान्नाङ्गमिति न सदस्यस्सप्तदश.। अतो यजमान एव सप्तदशः। "ऋत्विजो वृणीते" इति विधिश्च "ब्रह्माणं वृणीते" इत्यादिविधिभिरुपलक्षियत इति न यजमानस्य वरणम्। तस्माद्यजमानसप्तदशा ऋत्विज इति स्थितम्।

1. प्रस्तुत्य अ, ख. 2 सत्रे नास्ति अ. 3. अनुक्रमन्ते क. 4. सदस्यस्य. अ. 5. चमसाध्वर्यूणामन्य. क, ख.

मृत्विक्त्वम् । न चर्त्विक्छब्दस्य[1] योगसिद्ध सर्वसाधारण्य वचनशतेनापि दुर्निवार-मिति वाच्यम् । ऋत्विक्छब्दो हि न यौगिक, किन्तु वरणनिमित्तक. "ऋत्विजो-वृणीते" इति श्रवणात् । ऋत्विजो वरणेन संस्कुर्यादिति हि तदर्थः । न तु ऋत्विजस्ततो वरणेन संस्कुर्यादिति, वरणात्प्रागृत्विक्छब्दस्य [2]तत्र प्रयोगाभावात् । सप्तदशवरणा-न्येव च ऋत्विक्छब्दप्रवृत्तिनिमित्तम् । तथाविधवरणत्वमेव तदवच्छेदकमिति नाननुगम । न च प्रवृत्तिनिमित्तवरणभेदादृत्विक्छब्दो नानार्थस्स्यात्, न तु [3]गवादि-शब्दवत्सामान्यशब्द इति वाच्यम्, [4]प्रमाणवशेन नानार्थत्वेऽप्यदोषादिति भाष्यकृतः ।

वार्तिककृतस्तु—ऋत्विक्छब्दस्य वरणनिमित्तकत्वेऽवयवशक्तिबाधापत्त्या 'ऋत्विग्दधृक् स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च' इति योगप्रदर्शकस्मरणबाधापत्त्या[5] च वरणविधेरप्रसिद्धर्त्विगर्थत्वापत्त्या नानार्थत्वापत्त्या च ऋतौ [6]दक्षिणाप्राप्तौ वा निमित्ते यजन्तीति योगाबाधेनाध्वर्युत्वब्रह्मत्वादिक प्रयोगोपाधिरित्युचितम् । यथा 'हरतेः दृतिनाथयोः पशौ' इति दृतिहरशब्दस्य चर्मभस्त्रिकाहर्तृत्वरूपयोगाबाधेन पशुत्व प्रयोगोपाधिरित्याश्रीयते तद्वत् । [7]अध्वर्युब्रह्मादिशब्दानान्त्ववयवार्थाप्रसिध्या अध्वर युनक्तीत्यादियोगाश्रयणेऽध्वरयुगित्याद्यापत्त्यानुशासनाभावेन च वरणनिमि-त्तकत्वमेव युक्तम् । ऋत्विक्छब्दस्तु प्रसिद्धावयवार्थकत्वात्सप्तदशत्ववचनाच्च यज्ञिय-कर्मविशेषनिबन्धन इत्याहु ।

प्रयोजनम्—पूर्वपक्षे "ऋत्विजो मधुपर्केणार्हयन्ति[8]" इत्यादिधर्मास्सर्वसा-धारणा । सिद्धान्ते तु सप्तदशानामेवेति ।

इति पञ्चदशमृत्विक्छब्दवाच्यताधिकरणम् ॥ १५ ॥

१६

सोमे सप्तदश ऋत्विज इति स्थितम् । तत्राध्वर्युब्रह्मादीना चमसाध्वर्यूणाञ्च मध्ये यै कैश्चित्सप्तदशत्वमिति प्राप्ते सिद्धान्तयति—

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३२ ॥**

तुरवधारणे । सप्तदशत्वस्य नियम चमसाध्वर्युवर्जितेष्वेव [9]पर्यवसानम् ।

---

1 योगसिद्धमिति नास्ति अ 2 तत्रेति नास्ति अ, ग 3 गवादिवत् अ
4 प्रकरण क 5 बाधान्यत्वाच्च. अ 6. दक्षिणाप्राप्तौ वा निमित्ते नास्ति अ, ग
7. अध्वर्यु ब्रह्मादीना क 8 अर्हयति अ. 9. पर्यवसानमिति नास्ति घ

कुत ? दक्षिणाभिः श्रुतिसंयोगात्—श्रुतीति कर्मणि क्तिन्। "तस्य द्वादशशतं दक्षिणा" इति [1]प्रकृत्य "ऋत्विग्भ्यो दक्षिणा ददाति, प्रथममग्नीधे ददाति ततो ब्रह्मणे ततो होत्रे" इत्यादिना "प्रतिहर्त्रेऽन्ततः" इत्यन्तेन सप्तदशाना चमसाध्वर्युवर्जितानामेव ऋत्विक्छब्देन श्रुतेन संयोगात्। चमसाध्वर्युप्रसर्पकाणां द्रव्यान्तरेण परिक्रयविधेश्च ॥

इतोऽप्येवमित्याह—

## उक्त्वा च यजमानत्वं (तेषां) दीक्षाविधानात् ॥ ३४ ॥

सत्रे[2] "य ऋत्विजस्ते यजमाना." इत्यभिधाय "गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातार ततो होतारम्" इत्यादिना ब्रह्मादय एव सप्तदशानुक्रम्यन्ते,[3] न तु चमसाध्वर्यव। अतोऽपि न चमसाध्वर्यव ऋत्विज. ॥

इति षोडश ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम् ॥ १६ ॥

१७

दक्षिणावाक्येषु दीक्षावाक्येषु चानुक्रान्ता ऋत्विज इति स्थितम्। तेषु च वाक्येषु क्वचिच्छाखाया षोडशैवर्त्विज श्रुता, न तु सदस्यः। वरणन्तु तस्य श्रुतम्—"सप्तदशर्त्विज" इति। तत्र सदस्य एव सप्तदश, कर्मकरत्वसामान्यात्; न तु यजमानः। कृताकृतप्रत्यवेक्षणमेव च [4]सदस्यकर्मेति प्राप्ते, सिद्धान्तयति—

## स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३५ ॥

स्वामी यजमान सप्तदशः येषान्ते स्वामिसप्तदशा ऋत्विजस्स्युः। कुत.? कर्मसामान्यात्। दीक्षादक्षिणावाक्यश्रुतेषु ब्रह्मादिषु ऋत्विक्षु यागीयाङ्गकर्मकर्तृत्व दृष्टम्, तत्सामान्याद्यजमान एव सप्तदश ऋत्विक्, भृत्यर्थत्वस्य परकीयत्वस्य च प्रवेशे गौरवात्। अङ्गेत्यनेन सोमविक्रयिनिरास, विक्रयस्याविहितत्वात्। [5]चमसाध्वर्यूणान्त्वन्यतमो न सप्तदशो भवितुमर्हति, तदन्यतमस्यानिर्द्धारणात्, चमसहोमे तेषा व्यापृतत्वाच्च। कृताकृतपर्यवेक्षणञ्चाविहितत्वान्नाङ्गमिति न सदस्यस्सप्तदशः। अतो यजमान एव सप्तदश.। "ऋत्विजो वृणीते" इति विधिश्च "ब्रह्माणं वृणीते" इत्यादिविधिभिरुपसंह्रियत इति न यजमानस्य वरणम्। तस्माद्यजमानसप्तदशा ऋत्विज इति स्थितम्।

1. प्रस्तुत्य अ, ख. 2 सत्रे नास्ति अ. 3. अनुक्रमन्ते क. 4. सदस्यस्य. अ. 5. चमसाध्वर्यूणामन्य. क, ख.

मृत्विक्त्वम् । न चर्त्विक्छब्दस्य[1] योगसिद्धं सर्वसाधारण्यं वचनशतेनापि दुर्निवार-मिति वाच्यम् । ऋत्विक्छब्दो हि न यौगिक, किन्तु वरणनिमित्तकः "ऋत्विजो-वृणीते" इति श्रवणात् । ऋत्विजो वरणेन संस्कुर्यादिति हि तदर्थः । न तु ऋत्विजस्ततो वरणेन संस्कुर्यादिति, वरणात्प्रागृत्विक्छब्दस्य [2]तत्र प्रयोगाभावात् । सप्तदशवरणा-न्येव च ऋत्विक्छब्दप्रवृत्तिनिमित्तम् । तथाविधवरणत्वमेव तदवच्छेदकमिति नाननुगम । न च प्रवृत्तिनिमित्तवरणभेदादृत्विक्छब्दो नानार्थस्स्यात्, न तु [3]गवादि-शब्दवत्सामान्यशब्द इति वाच्यम्, [4]प्रमाणवशेन नानार्थत्वेऽप्यदोषादिति भाष्यकृतः ।

वार्तिककृतस्तु—ऋत्विक्छब्दस्य वरणनिमित्तकत्वेऽवयवशक्तिबाधापत्त्या 'ऋत्विग्दधृक् स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च' इति योगप्रदर्शकस्मरणबाधापत्त्या[5] च वरणविधेरप्रसिद्धर्त्विगर्थत्वापत्त्या नानार्थत्वापत्त्या च ऋतौ [6]दक्षिणाप्राप्तौ वा निमित्ते यजन्तीति योगाबाधेनाध्वर्युत्वब्रह्मत्वादिक प्रयोगोपाधिरित्युचितम् । यथा 'हरते. दृतिनाथयो. पशौ' इति दृतिहरशब्दस्य चर्ममक्षिकाहर्तृत्वरूपयोगाबाधेन पशुत्व प्रयोगोपाधिरित्याश्रीयते तद्वत् । [7]अध्वर्युब्रह्मादिशब्दानान्त्ववयवार्थाप्रसिध्या अध्वर युनक्तीत्यादियोगाश्रयणेऽध्वरयुगित्याद्यापत्त्यानुशासनाभावेन च वरणनिमि-त्तकत्वमेव युक्तम् । ऋत्विक्छब्दस्तु प्रसिद्धावयवार्थकत्वात्सप्तदशत्ववचनाच्च यज्ञिय-कर्मविशेषनिबन्धन इत्याहु ।

प्रयोजनम्—पूर्वपक्षे "ऋत्विजो मधुपर्केणार्हयन्ति[8]" इत्यादिधर्मास्सर्वसा-धारणा । सिद्धान्ते तु सप्तदशानामेवेति ।

इति पञ्चदशमृत्विक्छब्दवाच्यताधिकरणम् ॥ १५ ॥

१६

सोमे सप्तदश ऋत्विज इति स्थितम् । तत्राध्वर्युब्रह्मादीनां चमसाध्वर्यूणाञ्च मध्ये ये कैश्चित्सप्तदशत्वमिति प्राप्ते सिद्धान्तयति—

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३३ ॥**

तुरवधारणे । सप्तदशत्वस्य नियम चमसाध्वर्युवर्जितेष्वेव [9]पर्यवसानम् ।

1 योगसिद्धमिति नास्ति अ 2. तत्रेति नास्ति. अ, ग 3 गवादिवत् अ.
4. प्रकरण क 5 बाधान्यत्वाच्च. अ. 6. दक्षिणाप्राप्तौ वा निमित्ते नास्ति अ, ग.
7. अध्वर्यु ब्रह्मादीना क 8 अर्हयति अ. 9. पर्यवसानमिति नास्ति घ.

अग्नयोऽपि सर्वार्था—प्रकृतिविकृत्यर्था भवेयु । कुत ? स्वकालत्वात्—प्रकरणाधीतत्वादिति यावत्। पर्णता हि द्वारीभूतजुहूप्राप्तिमपेक्षते । ततश्च यावज्जुहूरतिदेशेन विकृतिषु [1]प्राप्नोति तावत्पर्णतापि प्राप्नोतीति द्विरुक्तिदोषप्रसङ्गात्सा प्रकृत्यर्थेति युज्यते। नेह तथा [2]द्विरुक्तिदोषोऽस्ति। यद्यपि विकृतौ "चतुरवत्त जुहोति" इति प्राकृतस्य होमस्याहवनीयप्राप्तौ द्वारभूतस्यातिदेशत एव प्राप्ते. द्विरुक्तिदोष प्रसज्येत, तथापि यत्र साङ्ग्रहण्यादौ "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इत्यादिहोमानामुपदेश, तत्र द्वारभूतहोमप्राप्तावतिदेशापेक्षाभावात्, पश्चादवतरतोऽप्यतिदेशस्य उपदेशत प्रथमप्रवृत्ताहवनीयव्यतिरिक्तविषयत्वात्तादृशविकृतिसाधारण्येऽप्यग्नीना द्विरुक्तिदोषाभावान्न प्रकृतिमात्रगामित्वम्। न चामनादिहोमाना विकृतावुपदेशेऽपि तत्राहवनीयातिदेशस्यावर्जनीयतया तत एव तेषु होमेष्वपि आहवनीयप्राप्तेरवर्जनीयो द्विरुक्तिदोष, उपदेशस्य प्राथम्येऽपि पश्चादप्यतिदेशेन प्राप्स्यतोऽर्थस्य पूर्वं वचनवैयर्थ्यादिति वाच्यम्। आमनादिहोमानामप्राकृतकार्यत्वेन पश्चादपि यूपावटास्तरणबर्हिर्न्यायेन (जि) तत्राहवनीयस्य चोदकत [3]प्रवृत्त्यभावात्। एवञ्चामनादिहोमेषु आहवनीयस्योपदेशातिदेशयोरभावादप्राप्ति पूर्वपक्षे, सिद्धान्ते तूपदेशात्तत्प्राप्तिरिति फलभेद.।

अथ कर्तॄणामनियम[4] इति योऽय पूर्वपक्षः स्थित. तत्र सिद्धान्तयति—

**तत्संयोगात्कर्मणो व्यवस्था स्यात्संयोगस्यार्थवत्वात् ॥ ३८ ॥**

आध्वर्यव हौत्रमित्यादिसमाख्याया.[5] सयोगात् तत्र कर्मणो व्यवस्था स्यात्। कुत ? सयोगस्यार्थवत्वात्—एव सत्येव समाख्यासंयोगस्य प्रयोजनवत्त्वात्, अन्यथा वैयर्थ्यात्। न च पक्षप्राप्तानुवादिनी समाख्या भविष्यतीति युक्तम्, समाख्याया नित्यवच्छ्रवणविरोधात्। यद्यपि समाख्यातो लिङ्गप्रकरणे बलीयसी तथापि विरोधे सत्येव बाधकता। न त्विह विरोधोऽस्ति। लिङ्गप्रकरणाभ्यामव्यवस्थया[6] कर्तृषु प्राप्तेषु कि केन कर्तव्यमित्यपेक्षितव्यवस्थासमर्पकत्वेन समाख्यायाः तदविरोधात्॥

---

1. प्राप्नोति तावत्पर्णतापीति नास्ति. अ  2 द्विरुक्तीत्यारभ्य 'देवाय इति' इत्यन्तो ग्रन्थपात अ पुस्तके  3. प्राप्त्यभावात् अ.  4 यदनियम क.  5 समाख्यासयोगात्. अ.  6 अव्यवस्थाया अ

शाखान्तरे तु दीक्षादक्षिणादिवाक्येषु सदस्यसप्तदशा ऋत्विजोऽनुक्रान्ताः। तथा "प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातुः प्रयजमानस्य प्रसदस्यस्य" इति प्रैषस्समाम्नातः। उदाहृतश्च भाष्यवार्तिकयोः 'चमसेषु समाख्यानात्' इत्यत्र। ततश्च [1]सदस्यचमसे यज्यभ्यासः, सोमभक्षश्च समाख्यानिमित्तोऽस्ति। अधिकरणन्तु शाखान्तरविषयमिति दिक्॥

इति सप्तदश यजमानसप्तदशत्वाधिकरणम्॥ १७॥

१८

किमध्वर्युब्रह्मादीनामनियमेन सर्वकार्येषु शेषता? उत समाख्यावशाद्व्यवस्था? इति संशये, पूर्वपक्षयति—

**ते सर्वार्थाः प्रयुक्तत्वात्॥ ३६॥**

ते—कर्तारः, [2]सर्वार्थाः—सर्वकार्यार्थाः। कुतः? प्रयुक्तत्वात्—पदार्थैः कर्तृणामविशेषेणाक्षिप्तत्वात्। पदार्था हि स्वप्रयोगे कर्तॄनाक्षिपन्ति। [3]तत्र च शक्तिः सहकारिणी। कर्तारश्च प्रकरणे समधिगताः। ततश्च प्रकरणात्सामर्थ्यरूपलिङ्गाच्च यद्येन कर्तुं [4]शक्यं तत्सर्वं तेन कर्तव्यम्, लिङ्गप्रकरणापेक्षया समाख्याया दुर्बलत्वात्। न च 'द्रव्यश्चोत्पत्तिसंयोगात्' इत्यधिकरणन्यायेन स्फ्यादीनामिव [5]कर्तृणामपि *संयोगव्यवस्थेति वाच्यम्। स्फ्यादीनां "स्फ्येनोद्धन्ति" इत्यादिवचनतो व्यवस्था युक्ता, प्रत्यक्षवचनस्य समाख्यापेक्षया प्रबलत्वात्। इह तु लिङ्गप्रकरणापेक्षया समाख्याया दुर्बलत्वान्न तथा व्यवस्थासम्भवः। न च समाख्याया निरवकाशत्वात्प्राबल्यं शङ्क्यम्, तस्याः पक्षप्राप्ताध्वर्युब्रह्माद्यनुवादित्वेनैवोपपत्तेः। एवञ्च लिङ्गप्रकरणाभ्यां कर्तृणामनियम इति पूर्वपक्षः स्थितः। सिद्धान्तस्तु वक्ष्यते।

तदन्तरेदं चिन्त्यते—किमाहवनीयाद्यग्नयः प्रकृत्यर्थाः? उत* प्रकृतिविकृतिसाधारणाः? इति। तत्रानारभ्याधीतत्वात् प्रकृत्यर्था इति प्राप्ते, सिद्धान्तयति—

**अग्नयश्च स्वकालत्वात्॥ ३७॥**

'सर्वार्थाः' इत्यनुवृत्त्यर्थोऽत्रान्तरा [6]अधिकरणान्तरारम्भः। [7]चोऽप्यर्थे।

---

1. सदस्यचमसीययोर्यज्यभ्यासः क. 2. ते कर्तारः अनियमेन सर्वकार्यकर्तारः क. 3. तत्र शक्तिः अ. 4. शक्यते. ग. 5. कर्तृणामपि इत्यनन्तरं * * चिन्हान्तर्गतो भागः क पुस्तके त्रुटितः 6. अधिकरणम् अ 7. चोऽप्यर्थे नास्ति. अ, क, ख.

## प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४१ ॥

प्रैषानुवचनमिति समाहारद्वन्द्व । केवलप्रैषानुवचनात्मकप्रैषाः केवलानुवचनाश्च मैत्रावरुणस्य सम्भवन्ति[1] । कुत. ? उपदेशात्—केवलप्रैषकेवलानुवचनप्रैषात्मकानुवचनसाधारण्येन मैत्रावरुणस्य विधानात् । चशब्दद्वयावगतसमुच्चयस्योद्देश्यगतत्वेनाविवक्षितत्वात् ॥

अथ सिद्धान्तयति—

## पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४२ ॥

अध्वर्युप्रैषानन्तर याज्याया प्रागुच्यमानो मन्त्र. पुरोऽनुवाक्या[2] । स चेह प्रैषानुवचनोभयात्मको विवक्षित । वाशब्द एवार्थे । 'प्रेष्यति चानु चाह' इत्युभयात्मकमन्त्रविषय एव मैत्रावरुणविधि. प्रत्येतव्यः । कुत ? प्रैषसन्निधानात्—केवलानुवचनेषु केवलप्रैषेषु च प्रैषस्य प्रेरणात्मकस्य कर्तृविशेषविधे समाख्ययैव सन्निधानात् प्राप्ते । केवलानुवचनेषु हि हौत्रसमाख्यया होता प्राप्त. । केवलप्रैषेषु चाध्वर्यवसमाख्ययाध्वर्यु. प्राप्त. । उभयात्मकेषु तु मन्त्रेषु "होता यक्षत्" इत्यादिषु मन्त्रैकत्वेन कर्तृभेदासम्भवात् अध्वर्योर्होतुश्च प्रच्युतत्वादपेक्षितकर्तृविशेषस्य मैत्रावरुणस्य विधि । न च समाख्याया विलम्बितप्रवृत्तिकत्वात् तत्प्रवृत्तेः प्रागेव केवलानुवचनेषु केवलप्रैषेषु च मैत्रावरुणविधिरिति वाच्यम् । उभयात्मकमन्त्रेषु [3]समाख्याया अभावेनैव तद्विधेरुपपत्ते ॥

इतोऽप्येवमित्याह—

## प्रातरनुवाके च होतृदर्शनात् ॥ ४३ ॥

"[4]होतु प्रातरनुवाकमुपशृणुयु" इति केवलानुवचने होतारं दर्शयति । अतोऽप्युभयात्मकमन्त्रेष्वेव मैत्रावरुणविधि. ॥

इत्येकोनविंश प्रैषानुवचनस्य मैत्रावरुणकर्तृत्वाधिकरणम् ॥१९॥

२०

"चमसाञ्जुहोति" इत्यादिचमसकार्याणि किं चमसाध्वर्यव. कुर्यु: ? उताध्वर्युरेव ? इति सशये, पूर्वपक्षयति—

1 भवन्ति. 2. पुरोऽनुवाक्य क 3 समाख्यायुक्तसाधनतयैव. अ, ग
4. यत्र होतुः क.

ननु समाख्यायाः[1] नियमेऽध्वर्युकाण्डपठितस्याध्वर्युणैव कर्तव्यत्वात् "प्रतिप्रस्थाता मन्थिनं जुहोति मैत्रावरुणः प्रेष्यत्यनु चाह नेष्टा पत्नीमुदानयति" इत्यादि विशेषवचनानां समाख्यानाञ्च सर्वथानुपपत्तिः। कर्तॄणामनियमे तु तद्वचनसमाख्याना पक्षप्राप्तिसम्भवान्नानुपपत्तिरित्याशङ्क्याह—

**तस्योपदेशसमाख्यानेन निर्देशः ॥ ३९ ॥**

तस्य—आध्वर्यवादिसमाख्यानस्य, उपदेशसमाख्यानेन[2] वचनैर्विशेषसमाख्यानैश्च निर्देशः–निष्कृष्योपदेशः[3]। अपवाद इति यावत् ॥

इतोऽपि समाख्याया नियम इत्याह—

**तद्वच्च लिङ्गदर्शनम् ॥ ४० ॥**

'यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयुः, तदाध्वर्युर्वहन्तीनां गृह्णाति, उद्गीथ एवोद्गातॄणामृचः प्रणव उक्थ्यशंसिनां प्रतिगरोऽध्वर्यूणाम्' इत्येव हौत्रादिसमाख्याके प्रातरनुवाकादौ होत्रादयोऽनूद्यन्ते। तदिदं लिङ्गदर्शनमपि उक्तहेतुवत्स[4]माख्यानियमं गमयति। अतोऽपि समाख्यया कर्तृनियमः ॥

इत्यष्टादशमृत्विजां नियतपदार्थकर्तृत्वाधिकरणम् ॥ १८ ॥

## १९

ज्योतिष्टोमे श्रूयते—"मैत्रावरुणः प्रेष्यति चानु चाह" इति। [5]अन्वाह चेत्यन्वयः। अन्वाहेत्येव पाठान्तरम्। तत्र 'अनुब्रूहि' 'यज' इत्यादयः[6] प्रैषाः, ते [7]चाध्वर्यवसमाख्याकाः। अध्वर्युप्रेषितेनोच्यमाना मन्त्रा अनुवचनाः याज्यापुरोनुवाक्याः, ते च होत्रसमाख्याकाः[8]। ये तु 'प्रेष्य'[9] इत्यध्वर्युप्रैषानन्तरमनूच्याः "होता यक्षदग्निम्" इत्यनुवाकपठिताः प्रतिमन्त्रं "होतर्यज" इत्यन्ताः, ते प्रैषानुवचनोभयात्मकाः[10] इति स्थितिः[11]। तत्र किं सर्वेषु प्रैषेषु [12]सर्वेष्वनुवचनेषु च मैत्रावरुणविधिः ? उत [13]प्रैषात्मकानुवचनेषु ? इति संशये पूर्वपक्षयति—

---

1. समाख्यानियमे. अ 2. समानेन. अ. 3. निष्कृष्योपदेश. अ.
4. समाख्यया क 5. अन्वाहेति च अ 6. इत्यादि. क 7. चाध्वर्यु अ.
8. समाख्यका अ 9. समिद्भ्यः प्रेष्य अ. 10. उभयरूपाः. ख 11. स्थितेः अ.
12. सर्वेषु नास्ति अ. 13. प्रैषानु. अ. ग

एवञ्चाध्वर्योः प्रातिस्विककार्यान्तरेष्वव्यापृतत्वे[1] सति चमसकार्याणां स एव कर्ता। व्यापृतत्वे तु[2] चमसाध्वर्यवं इति स्थितम्॥

इति विंश चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम्॥ २०॥

२१

ऋग्वेदो यजुर्वेदस्सामवेद इति त्रयो वेदाः। ते होतृवेदः अध्वर्युवेद उद्गातृवेद इति च क्रमेण समाख्यायन्ते[3]। ज्योतिष्टोमे चर्ग्वेदिकान्यङ्गानि शस्त्रादीनि, याजुर्वेदिकानि सोमाभिषवादीनि, सामवेदिकानि स्तोत्रादीनि सन्ति। तानि च तद्विकृतिषु चोदकत प्राप्नुवन्तीति स्थिति। तत्र वाजपेयो यजुर्वेद उत्पन्नः[4]। तत्र वेदत्रयसिद्धान्यङ्गानि चोदकप्राप्तानि सर्वाणि किमध्वर्युणैव कर्तव्यानि? उत प्रकृतिवत्समाख्यावशात्तेन तेन[5] कर्तव्यानि? इति संशये पूर्वपक्षयति—

**वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः॥ ४८॥**

'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इत्यधिकरणे तावदङ्गाना प्रधानविधिविधेयत्वात्प्रधानवेदस्वरत्वमिति[6] स्थितम्। तद्वद्वाजपेयस्य वेदान्यत्वे प्रधानस्याङ्गानाञ्चोत्पत्तिवेदभेदे सति यथोपदेश [7]प्रधानोत्पत्तिवेदानुसारेण तदङ्गान्यपि तत्समाख्यानि तल्लब्धकर्तृविशेषाणि च स्युः। कुतः? वेदोपदेशात्। वाजपेयस्याध्वर्युवेदसमाख्याते यजुर्वेदे प्रधानमात्रपाठेऽपि तदङ्गानामपि 'अङ्गानि तु[8] प्रधानेनोपदिश्येरन्' इत्येकादशाधिकरणन्यायेन तेनैव यजुर्वेदेन विधानात्। न च ज्योतिष्टोमे [9]स्तोत्रशस्त्रादीनामुद्गातृहोत्रादिकर्तृत्वेन[10] समधिगताना चोदकतो वाजपेये प्राप्तत्वान्नाध्वर्युकर्तृकत्वं समाख्यातस्तेषा सम्भवतीति वाच्यम्, वाजपेयोत्पत्तिवेदद्वारकसमाख्याया[11] उपदेशरूपतया चोदकाद्बलीयस्त्वेन ततोऽध्वर्युकर्तृकत्वस्यैव न्याय्यत्वात्। न चैव सति प्रकृतावपि ज्योतिष्टोमे याजुर्वेदिके प्रधानवेदनिबन्धनसमाख्यावशात् स्तोत्रशस्त्रादीनामप्यध्वर्युकर्तृकत्वमेव स्यादिति वाच्यम्, वैषम्यात्, प्रकृतौ हि

1 अव्यावृतत्वे. अ 2 च अ. 3. समाख्याते अ, ख. 4. उत्पन्नो अ.
5. तेन नास्ति अ, ग 6 स्वरूपमिति. अ 7. अपुस्तके 'प्रधानोत्पत्ति वेदोपदेशात्' इत्यन्तो ग्रन्थपात. 8 तु विधानत्वात् अ. 9. स्तोत्रादीना. अ, ग.
10. होतृकर्तृत्वेन. अ, ग, घ 11. उत्पत्तिद्वारकसमाख्यया. क,

## चमसांश्चमसाध्वर्यवस्समाख्यानात् ॥ ४४ ॥

चमसान्—चमसकार्याणि चमसाध्वर्यवः कुर्युः, न त्वध्वर्युः। कुतः ? समाख्यानात्—चमसाध्वर्यव इति विशिष्य समाख्यानात् ॥

अथ सिद्धान्तयति—

## अध्वर्युर्वा तन्न्यायत्वात् ॥ ४५ ॥

वाशब्दोऽवधारणे। नीयते प्राप्यत इति न्यायः[2]। कर्मणि घञ्। अध्वर्युरेव चमसकार्याणि कुर्यात्, न तु[3] चमसाध्वर्यव। कुतः ? तन्न्यायत्वात्[1]—चमसाध्वर्यवविशेषसमाख्याप्रवृत्तेराध्वर्यवसामान्यसमाख्यया[5] प्राप्यत्वादित्यर्थः। यत्र हि सामान्यसमाख्यामनपेक्ष्यैव विशेषसमाख्या प्रवर्तते, यथा नेष्ट्रीय पोत्रीयमित्यादौ तत्रैव विशेषसमाख्या सामान्यसमाख्यां बाधते। प्रकृते तु चमस[6]साधनाध्वर्युकार्यकारित्वाच्चमसाध्वर्युसमाख्याप्रवृत्तिर्वाच्या। तत्र च यदि सामान्यसमाख्ययाध्वर्युश्चमसकार्याणि न कुर्यात्तदा तत्कार्यकारिणा तेषाम्[7] अध्वर्युकार्यकारित्वाभावाच्चमाध्वर्युसमाख्यैव बाधिता स्यात्। तस्मादध्वर्युरेव चमसकार्याणि कुर्यात् ॥

इतोऽप्येवमित्याह—

## चमसे[8] चान्यदर्शनात् ॥ ४६ ॥

चो भिन्नक्रम। सवनमुखप्रचारे "होत्रास्सयाजयन्ति" इति प्रस्तुत्य "हुत्वा हुत्वा त त चमस चमसाध्वर्यवे प्रयच्छति" इति चमसाध्वर्युभ्योऽन्यश्चमसहोमकर्तारं दर्शयति। अतोऽप्यध्वर्युरेव चमसकार्याणि कुर्यात् ॥

ननु तर्हि चमसाध्वर्युभि कि प्रयोजनमित्यत आह—

## अशक्तौ हि ते प्रतीयेरन् ॥ ४७ ॥

हि यत', शुक्रामन्थिप्रचारादिषु अध्वर्योर्ग्रहहोमे [9]व्यापृतत्वात् ग्रहहोमकाले तद्वषट्कारे युगपच्चमसहोमाना कर्तुमशक्तौ चमसाध्वर्यव कर्तार प्रतीयेरन्। ततश्च कादाचित्कमध्वर्युकार्यकारित्वमादाय चमसाध्वर्युसमाख्यापि तेषु सम्भवति।

---

1 तन्न्याय्यत्वात् 2 न्याय्यः अ. 3. च ख 4 न्याय्यत्वात. अ
5. समाख्याया प्राप्तत्वात् अ, ग 6 साधनक अ 7. मातृकास्वत्रान्यथा पाठो दृश्यते। यथा 'अध्वर्युकारित्वाभावाच्चमसाध्वर्युरेव चमसकार्याणि कुर्यात्' इति। सोऽयमसङ्गत इति पाठ परिवर्तित 8 चमसेषु 9 व्यावृत्तत्वात् अ

वाजपेयेऽध्वर्युवेदविहिते "सावित्राणि[1] जुहोति कर्मणः पुरस्तात्" इत्यादय. प्रत्यक्षोपदिष्टपदार्था अध्वर्युणैव कर्तव्या. । श्येनादौ च "कण्टकैर्विकृन्तति"[2] इत्यादयः[3] पदार्था उद्गातृवेदविहितत्वादुद्गात्रैव कर्तव्या इति सिध्यति[4] ॥

इत्येकविंश वाजपेयादेरनेककर्तृकत्वाधिकरणम् ॥ २१ ॥

इति विश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन
श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ
तृतीयाध्यायस्य सप्तमः पादः ॥



1. सावित्र. अ, ग. 2 वितुदन्ति. अ, ग. 3. इत्यादि. क.
4. स्थिति . अ.

"उद्गातारस्स्तुवते होता शंसति" इत्यादिप्रत्यक्षवचनैरुद्गातृहोत्रादिकर्तृकत्वम्[1]। इह तु तथाविधवचनाभावाच्चोदकस्य च दुर्बलत्वात्प्रधानवेदद्वारकसमाख्ययोपदेशरूपयाध्वर्युरेव सर्वेषामङ्गानां कर्ता स्यात्। एवमुद्गातृसमाख्यातवेदविहितत्वेन (?) सन्दशादिषूद्गातैव सर्वेषामङ्गानां कर्ता स्यात्॥

अथ सिद्धान्तयति—

## तद्ग्रहणाद्वा स्वधर्मं स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तश्शेषे ॥ ४९ ॥

वाशब्दोऽवधारणे। स्व आत्मीयो धर्मः–अङ्गकलापो यस्य तत् स्वधर्मं 'धर्मादनिच्केवलात्' इत्यनिच्। वाजपेयादिकं प्रकृतिसिद्धनानाकर्तृकाङ्गकलापयुक्तमेव स्यात्। कुतः? तद्ग्रहणात्–तेषां प्राकृतधर्माणां सकर्तृकाणामेवात्र चोदकतो ग्रहणात्। अथ यदुक्तं कर्त्रंशचोदक उपदेशरूपया समाख्यया बाध्यत इति, तत्राह–अधिकारसामर्थ्यादिति। अधिकारः–"वाजपेयेन स्वाराज्यकामो यजेत" इति प्रयोगविधिः। तस्य चोदकप्रवृत्त्युत्तरकालमेव साङ्गप्रधानविधौ समर्थत्वात् चोदकस्यात्र समाख्याप्रवृत्तावुपजीव्यत्वान्न[2] दौर्बल्यमिति यावत्। प्रधानद्वारकसमाख्या हि यदि चोदकप्रवृत्तेः प्रागेव भवेत्तदा बाधिका स्यात्। न त्वेवम्, प्राकृतानां स्वाङ्गानामिह वैकृतवाजपेयादिस्पर्शे सति तदुत्तरकालं तत्समाख्यासम्बन्ध उन्मिषेत्। तत्संस्पर्शश्चाङ्गानां चोदकप्रापितानामेव स्यात्। ततश्च यावच्चोदकतोऽङ्गानि न[3] प्राप्यन्ते, तावत्प्रयोगविधेरेवापरिपूर्णत्वात्[4] तत्समाश्रयसमाख्यैव[5] नात्मानं लभत इत्यलब्धात्मा समाख्या कथं चोदकतः प्राप्यमाणं नानाकर्तृकत्वं निवारयितुं शक्नुयात्। तथाचाङ्गेषु स्वरस्य प्रधानवेदनिबन्धनत्वेऽपि प्रकृते समाख्यायास्तन्निबन्धनत्वं चोदकबाधात्परित्याज्यम्।

नन्वेवं सति वाजपेयादीनां प्रधानविधिनिबन्धनाध्वर्यवसमाख्यायाः किं प्रयोजनमित्यत आह–अव्यक्तश्शेष इति। समाख्याकल्प्यो योऽयं कर्तृसम्बन्धः स अव्यक्तः–अक्लृप्तः। स तावच्छेषे चोदकप्राप्तपदार्थेभ्योऽन्यत्र भवति। तथा च

---

1 कर्तृकम् अ 2. उपजीवकत्वान्न क. 3 न इति नास्ति अ
4 प्रयोगविधिरेवापरिपूर्ण क 5 समाख्ययैवात्मानं. क.

वाजपेयेऽध्वर्युवेदविहिते "सावित्राणि[1] जुहोति कर्मण पुरस्तात्" इत्यादय. प्रत्यक्षोपदिष्टपदार्था अध्वर्युणैव कर्तव्या. । श्येनादौ च "कण्टकैर्विकृन्तति[2] इत्यादयः[3] पदार्था उद्गातृवेदविहितत्वादुद्गात्रैव कर्तव्या इति सिध्यति[4] ॥

इत्येकविंश वाजपेयादेरनेककर्तृकत्वाधिकरणम् ॥ २१ ॥

इति विश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन
श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ
तृतीयाध्यायस्य सप्तमः पादः ॥



1 सावित्र. अ, ग.  2 वितुदन्ति. अ, ग.  3. इत्यादि. क.
4. स्यति . अ.

"उद्गातारस्स्तुवते होता शंसति" इत्यादिप्रत्यक्षवचनैरुद्गातृहोत्रादिकर्तृकत्वम्[1]। इह तु तथाविधवचनाभावाच्चोदकस्य च दुर्बलत्वात्प्रधानवेदद्वारकसमाख्ययोपदेशरूपयाध्वर्युरेव सर्वेषामङ्गानां कर्ता स्यात्। एवमुद्गातृसमाख्यातवेदविहितत्वेन (?) सन्दशादिषूद्गातैव सर्वेषामङ्गानां कर्ता स्यात्॥

अथ सिद्धान्तयति—

## तद्ग्रहणाद्वा स्वधर्मं स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तश्शेषे ॥ ४९ ॥

वाशब्दोऽवधारणे। स्व आत्मीयो धर्मः—अङ्गकलापो यस्य तत् स्वधर्मं 'धर्मादनिच्केवलात्' इत्यनिच्। वाजपेयादिकं प्रकृतिसिद्धनानाकर्तृकाङ्गकलापयुक्तमेव स्यात्। कुतः? तद्ग्रहणात्—तेषां प्राकृतधर्माणां सकर्तृकाणामेवात्र चोदकतो ग्रहणात्। अथ यदुक्तं कर्त्रंशचोदक उपदेशरूपया समाख्यया बाध्यत इति, तत्राह—अधिकारसामर्थ्यादिति। अधिकारः—"वाजपेयेन स्वाराज्यकामो यजेत" इति प्रयोगविधिः। तस्य चोदकप्रवृत्त्युत्तरकालमेव साङ्गप्रधानविधौ समर्थत्वात् चोदकस्यात्र समाख्याप्रवृत्तावुपजीव्यत्वान्न[2] दौर्बल्यमिति यावत्। प्रधानद्वारकसमाख्या हि यदि चोदकप्रवृत्तेः प्रागेव भवेत्तदा बाधिका स्यात्। न त्वेवम्, प्राकृतानां स्वाङ्गानामिह वैकृतवाजपेयादिस्पर्शे सति तदुत्तरकालं तत्समाख्यासम्बन्ध उन्मिषेत्। तत्संस्पर्शश्चाङ्गानां चोदकप्रापितानामेव स्यात्। ततश्च यावच्चोदकतोऽङ्गानि न[3] प्राप्यन्ते, तावत्प्रयोगविधेरेवापरिपूर्णत्वात्[4] तत्समाश्रयसमाख्यैव[5] नात्मानं लभत इत्यलब्धात्मा समाख्या कथं चोदकतः प्राप्यमाणं नानाकर्तृकत्वं निवारयितुं शक्नुयात्। तथा चाङ्गेषु स्वरस्य प्रधानवेदनिबन्धनत्वेऽपि प्रकृते समाख्यायास्तन्निबन्धनत्वं चोदकबाधात्परित्याज्यम्।

नन्वेवं सति वाजपेयादीनां प्रधानविधिनिबन्धनाध्वर्यवसमाख्यायाः किं प्रयोजनमित्यत आह—अव्यक्तश्शेष इति। समाख्याकल्प्यो योऽयं कर्तृसम्बन्धः स अव्यक्तः—अक्लृप्तः। स तावच्छेषे चोदकप्राप्तपदार्थेभ्योऽन्यत्र भवति। तथा च

---

1 कर्तृकम् अ 2. उपजीवकत्वान्न. क 3. न इति नास्ति अ.
4 प्रयोगविधिरेवापरिपूर्ण क 5 समाख्यैवात्मानं. क.

मात्रेण यजमानस्याङ्गेषु कर्तृत्वं सम्भवतीति वाच्यम्। यदि हि ऋत्विग्भ्यो देयमध्वर्यवे यजमानो दद्यात्[1] तथा तस्य द्रव्यस्याध्वर्योः यथेष्टविनियोज्यतया कदाचिदध्वर्योः ऋत्विग्भ्यो दातुर्मानिच्छायामृत्विगानमनलोपप्रसङ्गः स्यात्। यदि हि ऋत्विग्भ्यो देहीति यजमानोऽध्वर्यवे दद्यात् तदा ददात्यर्थोऽध्वर्यौ गौणस्स्यात्। यजमानेन दत्तस्य ऋत्विग्भ्य. प्रापणमात्रमेव ह्यध्वर्यौ पर्यवसन्नम्, यथेष्टविनियोज्यत्वलक्षणस्वत्वस्याध्वर्युनिरूपितस्य[2] तदानीं तस्मिन्द्रव्येऽभावेन स्वार्थत्यागघटितददात्यर्थस्य मुख्यस्याभावात्। न च समाख्यावशेनाध्वर्योरेव यथाकथञ्चित्परिक्रयेऽपि कर्तृत्वमुचितमिति वाच्यम्। समाख्या हि निरवकाशत्वेन[3] प्रधानवाक्यावगतसाक्षाद्यजमानकर्तृकत्वबाधेन कर्त्रन्तरप्रापिका। तथा सति "य कामयेत वीरो म आजायेतेति स चतुर्होतार प्रयुञ्जीत" इत्यादावपि समाख्याबलेनाध्वर्युकर्तृकत्वापातात्। किन्तु परिक्रयविधिबलेन कर्त्रन्तरप्राप्तौ[4] तद्विशेषनियमनमात्रे समाख्या प्रयोजिका। परिक्रयविधिश्च परिक्रयादन्यत्रैव कर्त्रन्तर प्रापयति, न तु परिक्रयेऽपि। अतस्तस्मिन् परिक्रये कर्त्रन्तरप्राप्त्यभावेन तद्विशेषनियामिकायास्समाख्याया अप्रवृत्त्या न प्रधानवाक्यस्वारस्यावगतसाक्षाद्याजमानकर्तृकत्वत्यागो युक्त। अस्तु वा समाख्या कर्त्रन्तरप्रापिका। [5]अथापि न परिक्रयेऽध्वर्युः कर्ता, यजमानद्रव्येऽध्वर्योस्स्वामित्वाभावेन तदीयद्रव्येणाध्वर्यो. कर्त्रन्तरपरिक्रेतृत्वस्यात्यन्ताप्राप्त्या तत्प्रापकत्वे विधेरत्यन्तगौरवप्रसङ्गात्। परिक्रयस्य स्वामिकर्तृकत्वे तु तद्विधेर्नात्यन्तगौरवम्। प्रयोगविधिबलेन स्वामिनापि कस्यचित्पदार्थस्य[6]कर्तव्यत्वे सति परिक्रयनियममात्रविधानात्। [7]अतोऽप्यतिलाघवाद्यजमान एव परिक्रेता, नाध्वर्युः एवञ्च देवतोद्देश्यकद्रव्यत्यागे "आत्रेयाय हिरण्य ददाति" इत्यादावपि यजमानस्यैव कर्तृत्व बोध्यम्, न्यायसाम्यात्। सूत्रे परिक्रयग्रहण द्रव्यत्यागमात्रोपलक्षणम्॥

नन्वेव सति "य एतामविद्वान् ब्राह्मण स्वयमातृण्णामुपदध्यात् सोऽध्वर्यवे त्रीन्वरान् दद्यात् अनड्वान्[8] होत्रे देय" इत्यादौ यजमानादन्यस्य कथं दातृत्वमित्यत आह--

---

1 ददाति. क　2 निरूपकस्य. अ　3. निरवकाशत्वेऽपि न. अ.
4. प्राप्ता. क　5. तथापि. ख.　6 अर्थस्य ख.　7. अतो विधि. अ.
8. होत्रा. क

# अष्टमः पादः ॥



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे समाख्यानिबन्धना कर्तृव्यवस्था वृत्ता । अथास्मिन्नष्टमे[1] पादे तदपवाद प्राधान्येन प्रस्तूयते । यजुर्वेदे[2] ज्योतिष्टोमे श्रूयते—"तस्य द्वादशशत दक्षिणा" "ऋत्विग्भ्यो दक्षिणा ददाति" इत्यादि[3] । तदिद दक्षिणादानमृत्विगानमनरूपपरिक्रयार्थमिति दशमे वक्ष्यते—'परिक्रयार्थं वा कर्मसयोगाल्लोकवत्' इति । तत्किमध्वर्युणा कर्तव्यम् ? उत यजमानेन ? इति । समाख्यावशादध्वर्युणा कर्तव्यम् । यद्यपि "स्वर्गकामो यजेत" इति साङ्गप्रधाने यजमानस्य साक्षात्कर्तृत्वमवगतम्, अतस्समाख्याबाधेन साक्षाद्यजमानकर्तृक दक्षिणादानमिति युक्तम्, तथापि निरवकाशसमाख्यानुरोधेन दक्षिणादाने प्रधानवाक्यावगत साक्षाद्यजमानकर्तृकत्व परित्यज्याध्वर्युकर्तृकत्वमेवाश्रयितुमुचितम् । अन्यथान्वाधानादिपदार्थान्तरेष्वपि समाख्यया कर्त्रन्तरप्रवेशो न स्यात् । तस्मादाध्वर्यव दक्षिणादानमिति प्राप्ते, सिद्धान्तयति—

**स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥१॥**

परिक्रीयन्ते आनम्यन्ते ऋत्विजो येन स परिक्रय—दक्षिणादान स्वामिकर्म—यजमानकर्तृकं कर्म । कुत ? कर्मणस्तदर्थत्वात्—साङ्गस्य कर्मण स्वाम्यर्थत्वात् । "स्वर्गकामो यजेत' इति हि सर्वेषु साङ्गप्रधानवाक्येषु[4] सामानाधिकरण्यात्मनेपदाभ्या यजमानस्यैव कर्तृत्वे प्राप्ते सति परिक्रयाम्नानबलेनाङ्गेषु परम्परया कर्तृत्वमिति स्थितम्—'शास्त्रफल प्रयोक्तरि तल्लक्षणत्वात्' इत्यत्र । तदेतत्परिक्रयस्य स्वामिकर्तृकत्वाभावे सति तद्द्वारापि यजमानस्याङ्गेषु कर्तृत्वासम्भवादनुपपन्न स्यात् । न चर्त्विग्भ्यो देय सर्वमध्वर्यवे दत्वा तन्मुखेनेतरेषा परिक्रय-

---

1 अष्टमपादे अ, ग. 2 वेदज्योतिष्टोमे क. 3. इति अ.
4. पदार्थेषु. अ

ग्यतया पदार्थानां स्वकर्तव्यत्वाभावेन स्वकर्तव्यपदार्थानुष्ठानार्थं परिक्रयस्यैवाप्रसक्तेः। ततश्च वपनादिसंस्कारेषु परिक्रयविधेरप्रवृत्त्या तेषु कर्त्रन्तरप्राप्त्यभावेन तद्विशेषव्यवस्थापकसमाख्याया अप्रवृत्त्या याजमानत्वमेव तेषामुचितम्, कर्मवत्। यथा यागात्मकप्रधानकर्माणि पुरुषार्थत्वाद्यजमानकर्तृकाणि भवन्ति तद्वत् ॥

इतोऽप्येवमित्याह—

## व्यपदेशाच्च ॥ ५ ॥

ऋत्विक्कर्तृके कर्मणि परस्मैपदप्रयोगो दृश्यते—"वाससा दीक्षयति" इत्यादौ। अतोऽपि वपते आङ्क्ते इत्यादिविषयो याजमाना इति प्रतीमः ॥

ननु वपनादिसंस्काराणां स्वामिनि योग्यताधायकत्वेऽपि ऋत्विक्षु कृतानामेव तेषां स्वामिनि योग्यताधायकत्वमस्त्वित्यत आह—

## गुणत्वे तस्य निर्देशः ॥ ६ ॥

कर्माणि प्रति ऋत्विजां गुणत्वे सति तस्य—परिक्रयस्य निर्देशः—परिक्रीतैः ऋत्विग्भिः कर्माणि कारयेदित्येव दीक्षणीयाप्रायणीयादिकर्माणि प्रति गुणभूतत्वेनैवर्त्विजामनुवादेन परिक्रयविधिरिति निर्विवादम्। ततश्च वपनादिसंस्कारकर्माणि प्रति प्रधानत्वेन तदनुवादेन परिक्रयविधिर्न सम्भवति, वैरूप्यप्रसङ्गात्। तथा च पुरुषप्रधानकपदार्थानुष्ठानाय परिक्रयाभावान्न परिक्रीतेष्वृत्विक्षु कृतानां वपनादिसंस्काराणां स्वामिगतयोग्यताधायकत्वमिति तेषु परिक्रीतानामृत्विजां प्राप्त्यभावात्तद्विशेषव्यवस्थापिका समाख्या न प्रवर्तितुमर्हति ॥

इतोऽप्येवमित्याह—

## चोदनां प्रतिभावाच्च ॥ ७ ॥

चोद्यते विधिना गम्यत इति चोदना—परमापूर्वम्। तां प्रति वपनादिसंस्काराणां विधिसद्भावादपि याजमानास्ते भवन्ति। परमापूर्वे हि विधीयमाना वपनादिसंस्काराः साक्षात्तत्रासम्भवादानर्थक्यतदङ्गन्यायेन तत्साधनेषु निविशमानास्साक्षादाश्रयं यजमानं प्राप्य कृतार्था विप्रकृष्टेष्वृत्विक्षु न निवेशमीहन्ते ॥

ननु वपनादिसंस्कारा उक्तन्यायेन याजमानास्सन्तु, समाख्याबलादृत्विजामपि तेऽविरोधाद्भवेयुरित्यत आह—

## वचनादितरेषां स्यात् ॥ २ ॥

स्पष्टम्। यजमानाभ्यनुज्ञया तदीयद्रव्यस्यान्यस्मै प्रापयितृत्वमेव तत्र दद्या-दित्यनेन विवक्षितमिति भावः ॥

इति प्रथम दक्षिणादानस्य स्वामिकर्तृत्वाधिकरणम् ॥ १ ॥

२

अध्वर्युवेदे ज्योतिष्टोमे "केशश्मश्रु वपते, नखानि निकृन्तते, दतो धावते, स्नाति" इत्यादि श्रुतम्। वापयते निकृन्तयतीत्यर्थः। वपनादयश्चैते संस्कारा [1]अघ-विगमद्वारा पुरुषार्था इति निर्विवादम्। ते किमाध्वर्यवा ? उत याजमाना ? इति संशये पूर्वपक्षयति—

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं [2]कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥

तु प्रत्यवस्थाने। परिक्रयविधेः परिक्रयादन्यत्रैव कर्त्रन्तरप्रापकतया परिक्रये कर्तृविशेषव्यवस्थापिकायास्समाख्यायास्तत्राप्रवृत्तावपि वपनादिषु [3]"परिक्रयविधेः पुरुषसामर्थ्ये सति कर्त्रन्तरप्रापणसामर्थ्ये सति तद्विशेषव्यवस्थापकसमाख्याया" प्रवृत्तिसम्भवेन वपनादिसंस्कारा· [4]स्तोत्रादिकर्मवत् यथावेद तत्तद्वेदसमाख्यया व्यवतिष्ठेरन्—व्यवस्थितकर्तृविशेषा भवेयु। आध्वर्यवा स्युरिति यावत् ॥

अथ सिद्धान्तयति—

## याजमानास्तु तत्प्रधानत्वात्कर्मवत् ॥ ४ ॥

तुरवधारणे। वपनादिसंस्कारा याजमाना एव स्यु.। कुत· ? तत्प्रधानत्वात्—स स्वामिकार्यत्वेन प्रधान येषान्ते तत्प्रधाना.। "मृता वा एषा त्वगमेध्या यत्केश-श्मश्रु ( वपते ) मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति यदा वै दीक्ष-तेऽथ मेध्यो भवति" इत्यादिवाक्यशेषानुसारेण वपनादीना पुरुषकर्मयोग्यत्वलक्षणा-तिशयविशेषजननार्थत्वादित्यर्थ.। परिक्रयाद्धि प्राप्नुवन्त ऋत्विजो वपनादिसंस्का-रेभ्योऽन्यत्रैव व्याप्रियन्ते। वपनादिसंस्काराणा कर्मयोग्यत्वलक्षणातिशयविशेषजन-नार्थत्वेनर्त्विक्परिक्रयस्य तदर्थत्वाभावात्। यजमानो हि स्वस्मिन्नेव कर्मयोग्यता-जनककर्मानुष्ठानार्थमृत्विजः परिक्रीणीते, न तु परत्र। तथा सति स्वस्य कर्मायो-

1. दुरितविगम. अ. 2 कर्म 3. परिक्रयण अ ग 4. स्तोत्रशस्त्रादि अ.

भवति[1]। पुरुषस्य ह्येहजन्मनि जन्मान्तरेषु वा विहिताकरणनिषिद्धाचरणकृतोऽधर्मोऽवश्यमस्ति। स च दुःखोपभोगसमर्पणेन स्वर्गादिसुखभोग प्रतिबध्नाति। स एव क्रतुफलभोगप्रतिबन्धकोभूतोऽधर्म दुःखात्मकेनानशनेन तपसा नश्यति। अधर्मस्य स्वदुःखोपभोगनाश्यत्वात्। लोकवत्। लोके हि यथा दर्पणस्य मालिन्यनिरासेन [2]कार्यक्षमतां भस्मघर्ष आधत्ते तद्वत्। ननु स्वल्पक्लेशात्मकेन तपसा महतो दुरितस्य चिरकालभोक्तव्यासह्यतमदुःखाधायकस्य कथ निवृत्तिरित्यत्राप्येतदेवोत्तरम्—लोकवदिति। यथा लोके स्वल्पक्लेशात्मकेनापि प्रायश्चित्तेन महतो दुरितस्य निवृत्ति' तद्वत्॥

इतोऽपि तपो याजमानमित्याह—

**वाक्यशेषश्च तद्वत्॥ १०॥**

उक्तन्यायवद्वाक्यशेषोऽपि तपो याजमानमिति दर्शयति—"यदा वै दीक्षित कृशो भवत्यथ मेध्यो भवति, [3]यदास्मिन्नन्तर्न किञ्चन भवत्यथ मेध्यो भवति, [4]यदास्य कृष्ण चक्षुषोर्नश्यत्यथ मेध्यो भवति, यदास्य त्वचास्थि सन्धीयतेऽथ मेध्यो भवति" इति। अत्र स्वाम्येकसाध्यद्रव्यत्यागात्मकयागापरपर्यायमेधार्ह[5]त्वमनशनकृतमवगम्यमान द्रव्यस्वामिनो यजमानस्यैव युज्यते। अतोऽपि याजमान तप॥

ननु किं सर्वमेव तपो याजमानम्? नेत्याह—

**वचनादितरेषां स्यात्॥ ११॥**

"ऋत्विज उपवसन्ति" इत्यादौ ऋत्विजामपि स्वकर्मयोग्यत्वमुपवासादि विना न भवतीति वचनबलात्कल्प्यमिति भाव.॥

**इति तृतीय तपसो याजमानताधिकरणम्॥ ३॥**

४

अध्वर्युवेदे वाजपेय प्रकृत्य श्रूयते—"हिरण्यमालिन ऋत्विज' प्रचरन्ति" इति। अत्र च प्राप्ताप्राप्तविवेकेन हिरण्यमालाधारणमृत्विजा विधीयते। किमिदम् अध्वर्योस्तत्पुरुषाणाञ्च प्रतिप्रस्थातृनेष्टृन्नेतृणा भवति? उत सर्वेपामृत्विजाम्? इति

1 सम्भवति, अ, ख, ग    2. कार्यक्षमता इत्येव मातृकासु पाठ.
3–4. यथा अ    5 मेधार्ह. अ.

## अतुल्यत्वादसमानविधानास्स्युः ॥ ८ ॥

समानं साधारणं विधानम् उपदेशो येषान्ते समानविधाना' वपनादिसंस्काराः, समानविधाना न भवन्ति । ऋत्विग्यजमानसाधारणतया नैषामुपदेश इति यावत् । कुत ? अतुल्यत्वात्—परिक्रयस्य वपनादिसंस्कारसाधारण्याभावात् । सर्वं हि यजमानेन कर्तव्यम् । तत्र किञ्चित्साक्षादेव कर्तव्यम् किञ्चित्[1] परिक्रीतैः कारयितव्यम् । तद्यदि वपनादिसंस्कारा आर्त्विजास्स्यु, तर्हि न ते साक्षाद्यजमानेन कृता भवन्ति, नापि परिक्रयमुखेन कारिता भवन्ति, उक्तरीत्या परिक्रयस्य पुरुषसंस्कारान्यकर्मानुष्ठानार्थत्वात् । तथा च ऋत्विजस्सन्तस्ते कर्माङ्गमेव न स्युः । तस्माद्याजमाना एव वपनादिसंस्कारा इति ॥

इति द्वितीयं फलिसंस्काराणां याजमानताधिकरणम् ॥ २ ॥

३

ज्योतिष्टोमे दीक्षितस्य व्रतमस्ति—"पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्य आमिक्षा वैश्यस्य" इति । तदेतद्व्रताशक्तावस्त्यनुकल्पः—"यदि मन्येतोपदस्यामीति ओदनं धानाः सक्तून् [2]घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय" इति । अनुस्सहार्थे । यथा नदीमन्ववसिता सेनेति नद्या सम्बद्धेति गम्यते । यदि पयोमात्रादिव्रतेनोपदस्यामि—शुष्यामि इत्यात्मानं मन्येत, तदौदनादिना सह व्रतयेदित्यर्थ । आत्मनोऽनुपदासायाशोषणायेत्यर्थ । तदिदमनुव्रत[3] प्रकृत्य श्रुतम्—"द्व्यहं नाश्नात्यथाश्नाति त्र्यहं नाश्नात्यथाश्नाति" इत्यादि । तदिदमनशनं किमाध्वर्यवम् ? उत याजमानम् ? इति संशय । वपनादीनां फलिसंस्कारत्वेन याजमानत्वेऽपि अनशनस्य क्लेशात्मकस्य सुखेप्सुस्वामिप्रतिकूलतया तद्गतसुखाधायकातिशयजनकत्वाभावेन दुःखात्मकानशनानुष्ठानाय ऋत्विजां गुणभूततयैव परिक्रयस्योपपन्नतया कर्त्रन्तरप्राप्तौ तद्विशेषव्यवस्थापिकायास्समाख्यायास्तत्र प्रवृत्तिसम्भवादाध्वर्यवत्वमेव युक्तमिति प्राप्ते, सिद्धान्तयति—

## तपश्च फलसिद्धत्वाल्लोकवत् ॥ ९ ॥

तप —कायशोषणमनशनम् । तदपि वपनादिवत् फलिनं संस्करोति । कुत ? फलसिद्धत्वात्—फलस्य सिद्धिरुत्पत्ति यस्मात्तत् तप फलसिद्धि । संस्कारता हि कार्ययोग्यताधायकता । योग्यताधानञ्चातिशयजननादिवत् [4]प्रतिबन्धनिरासादपि

1. किञ्चित्परि. द. 2 व्रत क 3 व्रतन. क 4. प्रतिबन्धक अ, ग.

चेत्—तर्हि 'अर्थसयोगात्' इत्येवं व्याख्येयम्—अर्थस्य गुणकामस्य याजमानत्वे सत्येवार्थेन प्रयोजनेन वाक्यस्य सयोगात्, आध्वर्यवत्वे निष्प्रयोजनत्वापातात्। यजमानसम्मितौदुम्बरी हि सदस ऊर्ध्वप्रमाण नित्यवच्छ्रुतम्। तत्तावदवश्य स्वकीयक्रत्वर्थतया यजमान' प्रयुङ्क्ते, न तु तद्विरुद्धमध्वर्यो नीचै' परिमाणम्, स्वकीयक्रत्वर्थनित्यवच्छ्रुतगुणस्य बाधप्रसङ्गात्। न हि परार्थेन स्वार्थस्य बाध. कश्चिदनुमन्यते। न च काम्य नित्यस्य बाधकमिति न्यायेन परकीयकाम्यगुणेनापि यजमानो नित्यगुणस्य स्वकीयक्रत्वर्थस्य बाधमनुमन्यतामिति वाच्यम्, नित्यगुणविज्ञान हि तत्पुरुषीयेणैव काम्यगुणविज्ञानेन बाध्यते, न तु पुरुषान्तरीयेणातिप्रसङ्गात्। [1] ततश्चाध्वर्युस्थेन काम्यगुणविज्ञानेन यजमानस्थस्य नित्यगुणविज्ञानस्य निवृत्त्यसम्भवाद्यजमानो नित्यगुण प्रयोक्तुमनुमन्यते। एवञ्च परकीयकाम्यगुणस्य तत्र प्रवृत्त्यनवकाशादाध्वर्यवत्वे कामस्य वाक्यमेतदुन्मत्त[2] प्रलपितवदनर्थकमेव स्यात्। अतोऽयं याजमान एव गुणकामः—यदि यजमानो वर्षुक पर्जन्य. स्यादिति कामयेत तदाध्वर्युः नीचैस्सदो मिनुयादिति॥

ननु किं सर्वत्रैव कामो याजमान. ? नेत्याह—

**व्यपदेशादितरेषां स्यात्॥ १४॥**

"आत्मने यजमानाय वा काममुद्गाता कामयेत तदध्यायन्नुद्गायेत्। यदि कामयेताध्वर्युरात्मान यज्ञयशसेनार्पयेयम्" इत्यादिवचनादितरेषा क्वचित्कामस्स्यात्॥

इति पञ्चम गुणकामाना याजमानताधिकरणम्॥५॥

६

अग्निहोत्रे "आयुर्दा अग्नेऽस्यायुर्मे देहि" इत्यादयो मन्त्रा आध्वर्यवा याजमाना वा ? इति सशये पूर्ववच्छ्रुत्यादिविरोधाभावात्समाख्यया आध्वर्यवा इति प्राप्ते, सिद्धान्तयति—

**मन्त्राश्चाकर्मकरणास्तद्वत्॥ १५॥**

चकारात् 'अर्थसयोगात्' इत्यनुकृष्यते[3]। एवञ्जातीयका अपि मन्त्रास्तद्वत्—कामवद्याजमाना. प्रत्येतव्या'। कुत ? अर्थसयोगात् याजमानत्वे सत्येव

1. अपुस्तकेऽत्र पठोऽशुद्ध परिलक्ष्यते. 2. प्रलाप. अ. 3. अनुवर्तते ख.

सशय.। वचनादृत्विजां भवदपि हिरण्यमालाधारण समाख्यावशादध्वर्युतत्पुरुषेषु व्यवतिष्ठत इति प्राप्ते, सिद्धान्तयति—

गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

हिरण्यमालाधारणस्य वेदनिमित्तसमाख्याविशेषेण व्यवस्था अध्वर्युतत्पुरुषेषु सङ्कोचो न स्यात्। कुत ? गुणत्वात्—हिरण्यमालाधारणस्यर्त्विग्गुणत्वात्। प्रतिप्रधानञ्च गुणावृत्तेर्न्याय्यत्वात्। अतस्सर्वर्त्विग्विषयत्वं युक्तम्। चकारस्तु समाख्यया वचनसङ्कोचायोगादिति हेत्वन्तरं समुच्चिनोति। समाख्यया आध्वर्यवत्वे ऋत्विग्ग्रहणस्यैव वैयर्थ्यात् बहुवचनविरोधाच्च। अध्वर्युतत्पुरुषाभिप्रायकत्वे लक्षणैव दोष ॥

इति चतुर्थं हिरण्यमालित्वाधिकरणम् ॥ ४ ॥

५

अस्ति ज्योतिष्टोमे सदो नाम मण्डपविशेष [1]। तस्यौदुम्बरी मध्यमस्थूणा यजमानसम्मितोन्नता पर्यन्तस्थूणा नाभिदघ्नीति स्थिति.। तदिद सदोऽधिकृत्य श्रूयते—"यदि कामयेत वर्षुक पर्जन्य स्यादिति नीचैस्सदो मिनुयात्" इति। किमिह यदि कामयेताध्वर्युरित्याध्वर्यव. काम ? उत यदि कामयेत यजमान इति याजमान ? इति सशय। 'कामयेत' इत्युक्ते क इत्याकाङ्क्षाया समाख्योपस्थितो [2]ऽध्वर्युरेव कर्तृत्वेनान्वेतीति युक्तमिति प्राप्ते, सिद्धान्तयति—

तथा कामोऽर्थसंयोगात् ॥ १३ ॥

यथा तपो याजमान तथा कामोऽपि याजमान। कुत ? अर्थसयोगात्—एव सत्येव यजमानो यदि कामयेत तदा तस्य नीचैरध्वर्युर्मिनुयादित्यर्थेन सयोगात्, अन्यथा तदनुपपत्ते। यद्यध्वर्यु कामयेत तदानीं 'नीचैस्सदो मिनुयात्' इत्यर्थे मिनुयादिति परस्मैपदानुपपत्ते। डुमिञ् प्रक्षेपण इति धातो ञित्वेन कर्तृगामिनि क्रियाफले तत आत्मनेपदप्रसङ्गात्। 'स्वरितञित कर्त्रभिप्राये क्रियाफले' इत्यनुशासनात्। नन्वेव 'यदि कामयेत वर्षुक पर्जन्यस्स्यादिति नीचा हस्तेन निमृज्यात्" इत्यादौ यत्र कर्तृगामिनि क्रियाफले आत्मनेपदप्रसक्तिर्नास्ति तत्राध्वर्यवत्व स्यादिति

1. मण्टप प 2 म्यिताध्वर्यु अ

तत्वात्[1]। ऋत्विजश्चाग्निहोत्रव्यापारे प्रवृत्तस्य व्यवधानाभावेन 'तिरो मा सन्तम्' इत्यस्यासमवायात्। अतोऽय याजमानो मन्त्र इति निर्विवादम्। तत्सामान्यादितरेषामप्येवञ्जातीयकानां[2] मन्त्राणा याजमानत्वम्॥

इति षष्ठ प्रोत्साहनमन्त्राणा याजमानताधिकरणम्॥ ६॥

७

यजुर्वेदे पौरोडाशिककाण्डे "इषे त्वा" इति प्रश्ने तथा याजमानकाण्डे[3] "सन्त्वा सिञ्चामि" इत्यादौ च "वाजस्य मा प्रसवेन" इत्यादयो मन्त्रा पठिता.। किमेतेऽध्वर्युणा यजमानेन वा प्रयोक्तव्या.? उत यजमानेनैव? अथवाध्वर्युणैव? उत[4] द्वाभ्याम्? इति संशय'। मन्त्रैक्यादेकेनैवान्यतरेण प्रयोक्तव्या। न च पाठभेदानर्थक्यम्, एकत्र पाठस्य स्वरूपज्ञापनार्थत्वात्, इतरत्र पाठस्य विनियोगार्थत्वादिति प्रथम. पक्ष। समान्यभूताध्वर्यवसमाख्यातो वैशेषिकयाजमानसमाख्याया बलवत्त्वाद्याजमाना एवेति द्वितीय पक्ष.। [5]स्रुग्व्यूहनादेराध्वर्यवत्वात् तदङ्गभूता अप्येते मन्त्रा आध्वर्यवा एव, अङ्गाना प्रधानसमान[6]कर्तृकत्वादिति तृतीयः पक्षः।

अथ सिद्धान्तयति—

## द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात्॥ १७॥

आध्वर्यवयाजमानकाण्डयोराम्नातेष्वेवञ्जातीयकेषु मन्त्रेषु अध्वर्युर्यजमानश्च द्वावपि प्रयोक्तारौ भवत.। कुत.? द्व्याम्नानस्यार्थवत्त्वात्–एव सत्येव द्वयो. काण्डयोस्तदाम्नानस्यार्थवत्वात्, [7]अन्यथान्यतराम्नानस्य वैयर्थ्यापातात्। येषामेकत्राम्नान तेष्वेव विशेषसमाख्या बलीयसी। यथा [8]याजमानकाण्डपठितेषु "वसन्तमृतूनां प्रीणामि" इत्यादिमन्त्रेषु। ये तु सामान्यसमाख्याते विशेषसमाख्याते चाम्नायन्ते[9] तत्र न विशेषसमाख्या बलवती। तथा सति सामान्यसमाख्याते पाठस्यानर्थक्यापातात् स्वरूपज्ञापनविनियोगयो "इषे त्वा" इत्यादिमन्त्राणामिवैकत्र

---

1. प्रवृत्तत्वात्. अ, ग. 2. जातीयकमन्त्राणा, अ, ग. 3. मम नाम प्रथम मित्यादौ. अ, 'मम नाम सन्त्वा'. क. 4. किवोभाभ्या अ. 5 व्यूहनस्य अ. 6. कर्तृकत्वनियमात्. अ, ग 7 अन्यतरत्र. अ. 8 यजमान. अ 9. चाम्नाते क.

दृष्टप्रयोजनेन सयोगात्, अन्यथादृष्टार्थत्वापातात । तथाहि—न तावत्सूक्तवाकव- दिहाङ्गकलापमाशास्यम् । तत्र हि तृतीयाश्रुत्या प्रस्तरप्रहरणं प्रत्यवगम्यमान करणत्व साक्षात्तत्प्रकाशकत्वाभावात्तदीयफलप्रकाशनमुखेनैव वक्तव्य[1] भवतीति । दर्शपूर्णमा- साङ्गभूतप्रस्तरप्रहरणसम्बन्ध्यायुरादिफलपरत्व सूक्तवाकस्य । नैवमेते मन्त्रा अङ्ग- फलाशासनपरा[2] भवितुमर्हन्ति । कुत. ? यत एते मन्त्रा अकर्मकरणा. कर्मणा क्रियमाणाना साधनत्वेन चोदिता न भवन्ति, अतो 'नात्राङ्गफलकमायुरादिकमा- शास्यम् । नाप्यङ्गफलादन्यदायुरादिक तथा[3] भवति, क्रियातत्सम्बन्धिप्रकाशक- त्वाभावेनादृष्टार्थत्वापातात् । ततश्चायुरादिशब्दे[5] लक्षणया प्रधानफल स्वर्गादिकमेव प्रकाश्यम् । तत्प्रकाशजनने सत्युत्साहजननद्वारा[6] दृष्टार्थत्वलाभात् । प्रधानफलञ्च यजमानगाम्येवेति सामर्थ्यात्समाख्या बाधित्वा याजमानत्वमेषामभ्युपगन्तु युक्तम् । ननु सति सम्भवे समाख्याबाधायोगादृत्विगुत्साहार्थं तत्फलमायुरादिक दक्षिणा- लाभादि[7] लक्षणया प्रकाश्यतामित्यत्राप्येतदेवोत्तरम्—अर्थसयोगादिति । यजमा- नगामिप्रधानफलप्रकाशनपरत्वे सत्येव वाच्यार्थसमवायात् ऋत्विक्फलपरत्वे च तदयोगात् । न ह्यन्यदीयक्रतूपकारकमन्त्राणामन्यदीयायुरादिफलाशासनपरत्व युज्यते । दक्षिणालाभश्च यजमानादेव प्रार्थ्य., न त्वग्ने । ततश्च यजमानगामिप्रधानफलपरा एवैते मन्त्रा इति याजमानत्वमेवैतेषा[8] युक्तम् ॥

इतोऽप्येवमित्याह—

## विप्रयोगे च दर्शनात् ॥ १६ ॥

विप्रयोगे—प्रवासेऽग्निहोत्रिणोऽग्न्युपस्थानमन्त्रोऽस्ति । "इहैव सन् तत्र सतो वा अग्नय प्राणेन वाचा[9] मनसा बिभर्मि तिरो मा सन्तमायुर्मा प्रहासीत् ज्योतिषा[10] वो वैश्वानरेणोपतिष्ठ" इति । अत्र तिरस्सन्त व्यवहित माम् आयु. मा प्रहासी- दित्यग्नीन् प्रति प्रार्थनमेवोपस्थानम्, न तु समीपावस्थानमपि, असम्भवात् । अतश्च नाय करणमन्त्र, स च यजमानस्यैव । तमधिकृत्यैव प्रवासविधेरधिक-

1. वक्तव्यमिति अ 2 पर क. 3 फलमायु. अ 4. तथा सति अ. 5. शब्दे अ. 6. जननेन. अ, क 7. लाभवत् अ, ग 8. मेव युक्तम्. अ 9. मनस्याविर्भवति अ. 10 ज्योतिष्टोमेन अ.

प्रागनधीतवेदस्यापि प्रयोगकाले क्रत्वपेक्षितवेदभागाध्ययनवतोऽप्यधिकाराविरोधात्तद्विषये वाचनविधेश्चरितार्थतया प्रागधीतमन्त्रस्य न वाचनमिति वाच्यम्। क्रतूपयुक्तमन्त्राणां गुरुकुलवासभिक्षाचरणानध्यायवर्जनादिव्रताचरणपूर्वकं वाध्येतव्यत्वात्, प्रयोगकाले च तथाविधव्रताचरणासम्भवात् स्वाध्यायविधिसंसिद्धवेदलाभेनैव क्रतुविधिप्रवृत्ते.,

'धर्मेणाधिगतो येषां वेदस्सपरिबृंहण ।
लब्धपुण्य[1]धनाढ्यानामग्न्याधेय[1] इहोच्यते' ॥

इत्यादिस्मरणाच्च। यद्यपि

'पारम्पर्यागतो येषा वेदस्सपरिबृंहण. ।
तच्छाखाकर्म कुर्वीत तच्छाखाध्ययनं तथा' ॥

इत्यादिधर्मशास्त्रेषु [2]स्वशाखाध्ययनमधिकृत्यैव व्रताचरणं विहितम्, तथापि स्वशाखीयमन्त्राणामध्ययनव्रतावश्यम्भावात् क्रतूनाञ्च प्रायेण स्वपरसर्वशाखासाध्यत्वात् प्रयोगात्प्रागेवाधीतसकलमन्त्रस्य वाचनम्। न चैवमपि वाचनविधेर्दृष्टार्थत्वायैवञ्जातीयकमन्त्राध्ययनाभावे सत्येवाधिकार कल्प्यतामिति वाच्यम्। एव सति [4]'वाजपेये कृताध्वर्यवस्य क्लृप्त्यादिमन्त्रान् वाचयितवत' स्वीयवाजपेये तद्वाचनस्य दृष्टप्रयोजनाभावेन[5] लोपापत्त्या नित्यवदाम्नानविरोधापत्ते। तद्विषये वाचनविधेरदृष्टार्थत्वेन च वैरूप्यापातात्। वाचनञ्च याज्ञिकै क्रियमाण खण्डश कृत्स्नमन्त्रसमर्पणं ब्रूहीति स्मारणं वेत्यन्यदेतत्।

अत्र भाष्ये—'कियता पुनर्विदितेन विद्वानधिक्रियत इति' प्रश्नमवतार्य 'यावता विदितेन शक्तो भवति यथोक्त क्रतुमभिनिर्वर्तयितुम्। तस्मात् तावद्यो वेद स तेन क्रतुनाधिक्रियते' इत्यादिसन्दर्भेण [6]समस्तवेदाध्ययनाभावेऽपि क्रतूपयुक्तवेदभागाध्ययनमात्रेण क्रतुष्वधिक्रियत इति प्रपञ्चितम्। वार्तिककृतश्चैवमाहु— 'यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीत, तथापि दर्शपूर्णमासौ कुर्वाणस्य ज्यौतिष्टोमिकमन्त्रब्राह्मण न क्वचिदुपपद्यत'[7] इति तदध्ययनाभावो दर्शपूर्णमासाधिकार न व्यावर्तयति। तेन तद्याजिनस्तावानेव स्वाध्यायः। यस्त्वसौ सकल पठ्यते,

---

1. धनाढ्याना अ   1. धेय अ   2 स्व नास्ति अ   3 ज्ञापक अ, ग   4 वाजसनेयाध्वर्यवत अ.   5. प्रयोजनाभावे अ.   6. समस्तवेदार्थ. अ.   7. उपयुज्यते अ, ग

पाठेनैव सिद्धत्वाच्च। यद्यप्युभयत्र मन्त्राणामेकत्वादन्यतरेण प्रयोक्तव्या इति तदसत्, "यजेत स्वर्गकामः" इति प्रयोगविधिपरिगृहीतान्येव ह्यङ्गानि कर्त्रपेक्षाणि, मन्त्राणाञ्च पठ्यमानानामेव प्रकरणे [1]बुद्धिविपरिवृत्तेर्न स्वरूपेणाङ्गता, किन्तु पाठविशिष्टत्वेनैव। अन्यथा प्रयोगकाले स्मृतैरपि मन्त्रैरर्थप्रकाशनसम्भवात्तदुच्चारणमावश्यकं न स्यात्। उपांशूच्चैस्त्वविधिश्च तेषामसमञ्जसं स्यात्। तथाच पाठद्वयवता तेषां तदीयसमाख्यावशात्कर्तृद्वयं सिध्यति। यदपि स्रुग्व्यूहनाङ्गत्वान्मन्त्राणामाध्वर्यवत्वमेवेति, तदप्यसत्, औत्सर्गिकतथाविधनियमस्य पाठद्वयबलेन बाधितत्वात्। याज्यामन्त्रेषु यजमानकर्तृकद्रव्यदेवतात्यागात्मकयागं प्रति करणभूतेषु होतृप्रयोज्यत्वस्य समाख्यानिबन्धनस्य[2] स्वीकाराच्च। न च स्रुग्व्यूहनस्यान्यतरप्रयुक्तमन्त्रत एव प्रकाशनसम्भवादुच्चारण[3] व्यर्थमिति वाच्यम्। अध्वर्युणा हि मन्त्रैः प्रकाशिताः पदार्थाः क्रियन्ते। यजमानस्तु तैरेव मन्त्रैरप्रमादार्थं प्रत्यवेक्षत इत्यस्ति प्रयोजनभेदः। यत्र तु यजमानस्य नाम्नाता मन्त्रास्तत्रोपायान्तरेण प्रत्यवेक्षितव्यमित्यदोषः। तदेवमुभाभ्यामेते मन्त्राः प्रयोक्तव्याः॥

इति सप्तमं द्व्याम्नाताधिकरणम्॥ ७॥

८

यजुर्वेदे तैत्तिरीयशाखायां वाजपेयकाण्डे "आयुर्यज्ञेन कल्पताम्" इत्यादयो मन्त्रास्समाम्नाताः। तान् प्रकृत्य क्वचिच्छाखायां श्रूयते—"क्लृप्तीर्यजमानं वाचयति" इति। क्लृप्त्यर्थकशब्दयुक्तान्मन्त्रानित्यर्थः। तत्र किमधीतमन्त्रोऽनधीतमन्त्रस्सर्वोऽपि यजमानो वाचयितव्यः? उतानधीतमन्त्र एव? अथवा अधीतमन्त्र एव? इति संशयः। तत्राविशेषादुभयोऽपि वाचयितव्य इति प्रथमः [4]पक्षः। अधीतवेदविषये वाचनस्यादृष्टार्थत्वप्रसङ्गादनधीतवेद एव वाचयितव्यः। अधीतवेदस्तु स्वयमेव ब्रूयादिति द्वितीयः पक्षः।

अथ सिद्धान्तयति—

**ते च वाचनं [5]न ह्यविद्वान्विहितोऽस्ति॥ १८॥**

हि—यतः, अविद्वान्—अनधीतवेदः क्रतुषु न विहितोऽस्ति, अधिकृतो न भवति। [6]अतः ज्ञाते च—अधीत एव मन्त्रविषये वाचनमदृष्टार्थं प्रवर्तते। न च

1 बुद्धिपरि अ 2. सम्बन्धनस्य अ 3 उच्चारणार्थमिति. अ
4. पक्ष नास्ति अ 5. तन्नास्त्यवि. 6. कुत अ

विशेषयाजमानसमाख्यया समान्याध्वर्यवसमाख्याया बाधितत्वादिति यावत्। 'कर्माणि याजमानम्' इति पाठभेदे 'वेदा प्रमाणम्' इतिवदेकवचनम्॥

अथ सिद्धान्तयति—

**अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम्॥ २०॥**

वाशब्दोऽवधारणे। अध्वर्युरेवैतानि द्वन्द्वानि सम्पादयेत्, न यजमान॰। कुत॰? तदर्थो हि परिक्रय इति शेषः। परिक्रयस्तावत्कर्त्रन्तरप्रापणार्थ॰। स च कर्मस्वपेक्षितमेव कर्त्रन्तर प्रापयति। उत्पन्नानामेव च कर्मणा कर्त्रपेक्षा। "वत्सञ्चोपावसृजति" इत्यादिकर्मणाञ्चाध्वर्यव एव काण्डे उत्पत्ति, तत्र विधेयान्तराभावात्। याजमानकाण्डे त्वाध्वर्यवकाण्डोत्पन्नकर्माण्यनूद्य [1]द्वन्द्वतासम्पादनमात्रं विधीयते। ततश्चाध्वर्यवकाण्डे उत्पन्नमात्राणामेवैषां कर्मणामध्वर्युकर्तृकत्वेन प्रथममसञ्जातविरोधितया निर्ज्ञातत्वाद्याजमानकाण्डे विहितस्यापि तानि कर्माणि प्रति गुणभूतस्य द्वन्द्वतासम्पादनस्य 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन यजमानकर्तृकत्वं बाध्यते। अन्येन क्रियमाणाना कर्मणामन्येन द्वन्द्वतासम्पादनस्य कर्तुमशक्यत्वात्। ननु "द्वन्द्वानि सम्पाद्य यजेत" इति क्त्वाप्रत्ययात्मनेपदसयुक्तवाक्यबलात्[2] द्वन्द्वतासम्पादनं याजमानमेव वाच्यम्, वाक्यस्य समाख्याबाधकत्वात्। ततश्च तद्बलात्कर्मणामपि समाख्यालब्धमाध्वर्यवं बाधित्वा याजमानत्वमेवाश्रयितु युक्तमित्याशङ्क्याह—न्यायपूर्वं समाख्यानमिति। [3]अङ्गगुणोपक्रमादिन्यायोपन्यासपूर्वक यदुक्तमाध्वर्यवसमाख्यानमादर्तव्यमिति[4] तदेव युक्तमित्यर्थ। वचन हि विरोधे सत्येव समाख्या बाधते। अत्र तु नाध्वर्यवसमाख्यया वचनस्य विरोधोऽस्ति, द्वन्द्वतासम्पादने [5]क्त्वाप्रत्ययात्मनेपदलब्धयजमानकर्तृकत्वस्य प्रयोजककर्तृत्वमादायाप्युपपत्ते॰। ततश्चाध्वर्युरेवैतानि कर्माणि तेषु च[6] द्वन्द्वतासम्पादनञ्च कुर्यात्। यजमानस्तु द्वन्द्वानि कुरु इत्यध्वर्यु प्रयोजयतीति फलितम्॥

इति नवम द्वादशद्वन्द्वाधिकरणम्॥ ९॥

---

1. द्वन्द्वताप्रापणार्थः। स च कर्मस्वपेक्षितमेव सम्पादनमात्र. अ	2. सयुक्तबलात्. क, ख, सयोगबलात्. ग.	3. अङ्गगुणविरोधोपक्रम. अ.	4. मादातव्य. अ.	5 क्तप्रत्यय अ.	6. च नास्ति. अ.

तन्नित्यनैमित्तिककाम्यकर्मणां यथोपपन्नकालत्वान्न ज्ञायते–कतरत्कदा करिष्यत इति, तत्र [1]कदाचिद्यन्न पठितं तत्फलकामना वा निमित्तं वास्योपजायते, तत्र तदविद्वान् अशक्नुवन्व्याहन्येत। तदानीञ्चाधीयानस्य व्रताचरणासम्भवात्कर्मभिश्च व्रताचरण-पूर्वकमधीतभागत एव निराकाङ्क्षैस्तद्विहीनाध्ययनसिद्धवेदभागस्याग्रहणाद्वैगुण्यप्रसङ्ग। क्रतुविधिभिरपरिग्रहाच्च सर्वैरनारभ्यविहितो वेदोऽपेक्षित इत्यवश्यं ब्रह्मचर्य-काल एव समस्तो वेदोऽध्येतव्य [2]। यदि तु कश्चिदशक्तो नाधीते 'सकलं वेदम् [3], अग्निहोत्रदर्शपूर्णमासौ च कथञ्चिदधिगच्छति न तस्य तत्राधिकारश्चेति' इत्यादि ॥

इत्यष्टममभिज्ञवाचनाधिकरणम् ॥ ८ ॥

९

यजुर्वेदे तैत्तिरीयशाखायां दर्शपूर्णमासयाजमानकाण्डे श्रुतम्—"वत्सं चोपा-वसृजति, उखाञ्चाधिश्रयति, अव च हन्ति, दृषदौ च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशञ्चाधिश्रयति, आज्यञ्च स्तम्बयजुश्च हरति, अभिं च गृह्णाति, वेदिञ्च परिगृह्णाति, पत्नीञ्च सन्नह्यति, प्रोक्षणीश्चासादयति, आज्यञ्च एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवं सम्पाद्य यजते" इति। [4]द्वन्द्वत्वेनानुसन्धानमेव[5] द्वन्द्वसम्पादनम्। यद्यप्यत्र सप्त द्वन्द्वानि प्रतीयन्ते, तथापि "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च दृषच्चोपला च, इति पञ्चभिर्द्वन्द्वैस्सह द्वादश द्वन्द्वता बोध्या। आह हि[6] बोधायन— 'स्फ्यश्च कपालानि चेति पञ्च द्वन्द्वानि वत्सञ्चोपावसृजत्युखाञ्चाधिश्रयतीति सप्त तानि द्वादश' इति। शाखान्तरे चाध्वर्यवकाण्डेऽप्येतानि "वत्सञ्चोपाव-सृजति" इत्यादीनि श्रुतानि। तदेतेषां किं याजमानत्वम्? उताध्वर्यवत्वम्? इति संशय, तत्र पूर्वपक्षयति—

**याजमाने समाख्यानात्कर्माणि [7]याजमानानि स्युः ॥ १९ ॥**

याजमानकाण्डे यानि कर्माणि द्वन्द्वसम्पादनानि श्रुतानि तानि यजमान-कर्तृकाण्येव स्यु। कुत? समाख्यानात्—याजमानमिति समाख्याविशेषात्।

1. यदि कदाचिन्न. अ. 2. अध्येय अ, ग, घ 3 सकलवेद. क, ख
4. द्वन्द्वेन अ. 5 अनुसन्धानत्वमेव. क, ख. 6 च अ, ग 7. याजमानम्.

एव तत्कार्यकारित्वलक्षक आश्रीयते—यो होता सोऽध्वर्युकार्यकारीति। अध्वर्यु-कार्यं यत्[1] तद्धोता कुर्यादिति पर्यवस्यति। एवञ्च होतुरिह स्वकार्यसम्बन्ध आनुमानिकः। आध्वर्यवकार्यसम्बन्धस्तु प्रत्यक्षविहित इति तदनुसारेण 'युवासुवासा' इति हौत्रमन्त्र परित्यज्य 'परिवीरसि' इत्याध्वर्यव एव करणमन्त्रः प्रयोज्य'। तस्मादितरं—'युवासुवासा' [2]इति मन्त्रन्तु अन्य ऋत्विक् ब्रूयात्। तत्रापि न य कश्चिदृत्विक्[3], किन्तु तेषां—ऋत्विजां मध्ये यत—यस्मिन्मैत्रावरुणादौ होतृपुरुप-समाख्याकृतो विशेष स्यात् स एव ब्रूयात्। परिधिस्तु यूपकार्ये विधीयते। यूप-धर्मास्तु परिधावतिदेशत एव प्राप्नुवन्ति। ततश्च परिधियूपधर्माणामुभयेपामप्यातिदे-शिकत्वाविशेषे सति प्रथमोपस्थिताः परिधिधर्मा एव प्रवर्तन्त इति वैपम्यम्॥

इति दशम होतु. करणमन्त्रानुष्ठातृत्वाधिकरणम्॥ १०॥

११

अध्वर्युवेदे दर्शपूर्णमासयोस्सन्ति प्रैपा—"प्रोक्षणीरासादय" इत्यादय, 'प्रोक्षणीरासादयति' इत्यादयश्च प्रैषार्थाः। तदुभये किमेककर्तृका.? उत भिन्नकर्तृकाः? इति सशय। "यो होता सोऽध्वर्यु" इति वचनबलात्क्रियमाणानुवादिमन्त्रप्रयोग-विषये समाख्यालब्धकर्तृबाधेऽप्यत्र [4]कर्तृवचनभेदाभावान्न समाख्यालब्धकर्तृबाधो युज्यत इत्युभयत्राप्येक एव कर्ता समाख्यानुग्रहायैव 'प्रोक्षणीरासादय' इत्यादौ प्राप्त-कालतायां लोडाश्रयणीय', 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति तद्विधानात्। प्रैषा-र्थकत्वे तु समाख्या बाध्यते। शक्नोति च यः प्रोक्षण्यासादनादि करिष्यन् भवति स एव प्रोक्षण्यासादनादिकर्मणेऽयं प्राप्त काल इत्येव प्रैषैरभिसन्धातुम्। [5]मध्यम-पुरुषस्तु स्वात्मन्यपि युष्मत्त्वारोपवशाद्[6] भविष्यतीति प्राप्ते, सिद्धान्तयति—

**प्रैषेषु पराधिकारात्॥ २२॥**

अन्य इत्यनुवर्तते। प्रैषेषु प्रैषार्थकेपु चान्य एव कर्ता। कुत'? पराधिकारात्—प्रैषाणा प्रेष्यपुरुषान्तरविषयत्वात् लोट. प्रैषार्थकत्वाश्रयणेन मध्यमपुरुषस्य मुख्यवृत्तित्वे[7] सम्भवति तदुपचाराश्रयणस्यान्याय्यत्वात्॥

इत्येकादश प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्॥ ११॥

---

1 यत् नास्ति. अ. 2. इति तु. क. 3 ऋत्विक् नास्ति. क 4. कर्तृ-भेदवचना. अ 5. पुरुषस्य अ, ग. 6. युष्मत्त्ववशात्. अ. 7. वृत्तत्वे अ, क.

१०

ज्योतिष्टोमेऽग्नीषोमीयपशौ "यूपाय परिवीयमाणायानुब्रूहि" इति सम्प्रैषानन्तरं "परिवीरसि इति यूपं परिव्ययति" इत्यध्वर्युवेदे श्रुतम्। तत्रैव पशौ "युवासुवासा इत्यन्वाह" इति होतृवेदे श्रुतम्। [1]तत्र 'परिवीरसि' इति करणमन्त्रः। 'युवासुवासा' इति तु क्रियमाणानुवादी। सम्प्रैषानन्तरमेवोभावपि मन्त्रावारभ्येते। यूपसमीपेऽध्वर्युर्मन्त्रं ब्रवीति। होता त्वपरेणोत्तरवेदिमुपविष्टो ब्रवीतीति [2]स्थितिः। तौ च मन्त्रौ चोदकपरम्परया कुण्डपायिनामयनाख्यं सत्रं गतौ। तत्र च "यो होता सोऽध्वर्युः" इति श्रुतम्। तत्रैकेनोभयोर्मन्त्रयोः प्रकृतिवत् प्रयोक्तुमशक्यत्वादन्यतरस्य मन्त्रस्य त्यागेऽवश्यम्भाविनि किमाध्वर्यवो मन्त्रस्सन्त्याज्यः ? उत हौत्रः ? इति संशयः। "परिधौ पशून् नियुञ्जीत" इति सिद्धरूपस्यैव परिधेः यूपकार्ये विधानात् स्वधर्माविरुद्धैरेव परिव्याणादियूपधर्मैः परिधिस्सम्बध्यते, न तु "सत्वक्का परिधयो भवन्ति" इत्यादिस्वधर्मविरुद्धैरष्टाश्रीकरणादियूपधर्मैरित्येकादशे वक्ष्यते— 'परिधिर्द्व्यर्थकत्वादुभयधर्मा स्यात्' इत्यत्र। तद्वदिहापि होतुस्सिद्धरूपस्यैवाध्वर्युत्वविधानात् स्वधर्माविरुद्धैरेवाध्वर्युकार्यैः होता सम्बध्यत इति 'परिवीरसि' इत्याध्वर्यवमन्त्रस्त्यज्यत इति प्राप्ते, सिद्धान्तयति—

## विप्रतिषेधे करणः [3]समवायविशेषादितरमन्यस्तेषां यतो विशेषस्स्यात् ॥ २१ ॥

कुण्डपायिनामयने मन्त्रयोरनयोर्विरोधे सति 'परिवीरसि' इति करणमन्त्र एव प्रयोज्यो न तु 'युवासुवासा' इति क्रियमाणानुवादी। कुतः ? [4]समवायविशेषात्—होतुरध्वर्युकार्ये कर्तृत्वेन सम्बन्धस्य विशेषात् विशिष्टत्वात्, प्रत्यक्षविहितत्वेन [5]च बलवत्वात्। न हि सिद्धरूपं होतारमुद्दिश्याध्वर्युत्वमिह विधीयते, येनोक्तरीत्या होतृधर्म एवानुसरणीयस्स्यात्, किन्तु होत्रध्वर्युशब्दयोरत्यन्तविभिन्नपुरुषवाचितया तयोर्मुख्यसामानाधिकरण्यस्य बाधितत्वेनान्यतरशब्दस्य तत्कार्यकारित्वलक्षकत्वे आश्रयणीये[6] सति 'मुख्यं वा पूर्वचोदनात्' इति द्वादशिकन्यायेन प्रथमश्रुतहोतृशब्दमेव [7]मुख्यवृत्तिमनुरुध्य जघन्यश्रुताध्वर्युशब्द[8]

1. तत्रापि अ 2 स्थितः क, स्थित अ. 3 – 4. समवायि अ. 5 च नास्ति क 6 आश्रयणीयेति अ. 7. मुख्यविधि. क 8 शब्दोऽत्यन्तभिन्न एव अ

प्रथमावगतसमाख्यानिबन्धनाध्वर्युकर्तृकत्वस्यासञ्जातविरोधित्वेन बाधस्यायुक्ततया तद्बाधाय प्रैषार्थस्याग्नीध्रकर्तृकताया एव परिशेषलब्धत्वात्। ततश्च स्फ्यं धारयन्नध्वर्युर्यदान्वञ्चं धारयेत् तदा वज्रात्मना स्फ्येनाध्वर्युम्—अध्वर्युर्वेदविहितकर्मकर्तारमाग्नीध्रं क्षिण्वीतेति न विरोधः। आग्नीध्रस्य चाध्वर्युप्रयोज्यत्वात्तत्कर्तृकप्रोक्षण्यासादनादिकर्मस्वप्यध्वर्योः प्रयोजकत्वात् कर्तृत्वं न विहन्यत इति प्रैषप्रैषार्थयोरुभयोरपि समाख्यानुग्रहः। आग्नीध्रस्य प्रेषितृत्वे तु प्रैषे आध्वर्यवसमाख्यात्यन्तमेव बाधिता स्यात्। न हि तथा सति प्रैषोऽध्वर्युणा [1]कृत कारितो वा भवति। ततश्च प्रैषस्याध्वर्युकर्तृकत्वाश्रयणे प्रैषप्रैषार्थयोस्समाख्यानुग्रहसत्त्वेन तद्विरोधाभावान्नाङ्गगुणविरोधन्यायस्य भूयोऽनुग्रहन्यायस्य च प्रवृत्तिरित्यध्वर्युरेव सम्प्रेषिता। आग्नीध्रस्तु प्रैषार्थकर्तेति स्थितम्। अत्र तैत्तिरीयशाखाया "वज्रो वै स्फ्यः यदन्वञ्चं धारयेत् वज्रो अध्वर्युः क्षिण्वीत" इति पठितः। अत्र क्षणुधातुरकारमध्य इति भट्टभास्कर। यदि स्फ्यमात्माभिमुख[2] धारयेत् तदा वज्रेणाध्वर्युरात्मान हिंस्यादित्यर्थः। अत्र चाध्वर्युरिति प्रथमान्तमध्वर्युपदं यदन्वञ्चं धारयेदित्यस्याध्वर्युपरत्वं गमयति। न हि यद्याग्नीध्रोऽन्वञ्च स्फ्यं धारयेत्तदाध्वर्युर्वज्रेणाग्नीध्र हिंस्यादिति वात्मान[3] हिंस्यादिति वा समञ्जस भवति। ततश्च स्फ्यधारणस्याध्वर्युकर्तृकत्वे सति [4]सम्प्रैषोऽप्यध्वर्युकर्तृकस्सिद्ध एव। द्वितीयान्ताध्वर्युपदघटितशाखान्तरीयवाक्यशेषमेवापेक्ष्य त्वधिकरणप्रवृत्तिः। यद्यपि वाजसनेयशाखायामध्वर्योरन्यः "स्फ्यमुद्यम्याह प्रोक्षणीरासादय" इत्यादि पठितम्, ततश्च प्रैषस्य वचनादाग्नीध्रकर्तृकत्वे सति "वज्रेणाध्वर्युं क्षिण्वीत" इति शाखान्तरीयवाक्यशेषे द्वितीयान्तमध्वर्युपदमपि मुख्यार्थकमेव समञ्जसम्। आग्नीध्रकर्तृके च सम्प्रैषे लोट् प्राप्तकालतायामेव वाच्य, प्रैषार्थकत्वे विरोधात्। न ह्यध्वर्युराग्नीध्रेण नीचेन प्रेषितु शक्यते। मध्यमपुरुषश्च कथञ्चित्[5] स्वात्मन्येव पुरुषान्तरत्वारोपेण बोध्य। कात्यायनश्च सम्प्रैषमाग्नीध्रकर्तृकमनुक्रम्याह— 'यथाप्रेषितमन्यः पराधिकारात्, स्वय वाविरोधात्, सम्प्रैषवचनाच्च' इति। [6]तदेतत्कर्कभाष्यादिग्रन्थेषु व्यक्तं प्रपञ्चितम्। तथापि यस्यां शाखायां सम्प्रैषस्याग्नीध्र[7]

---

1 कृतो वा अ, ग 2. आत्माभिखण्ड अ. 3 आत्मान हिंस्यादिति नास्ति. अ. 4. स्वहस्तकर्तृकसम्प्रैष क 5 कश्चित्. क 6. तदिद. ग, घ 7. अग्नीत्कर्तृ. अ, ग, घ.

१२

तदेवं प्रेषितुरन्य प्रैषार्थकर्तेति स्थितम्। तत्र किमग्नीत्प्रेपिता, अध्वर्युस्तु प्रैषार्थकर्ता ? उत विपरीतम् ? इति संशये पूर्वपक्षयति—

## अध्वर्युस्तु दर्शनात् ॥ २३ ॥

तुस्सम्भावनायाम्। अध्वर्यु प्रैषार्थकर्ता स्यात्। कुत ? दर्शनात्—दृश्यते निश्चीयते सन्दिग्धोऽर्थोऽनेनेति दर्शन न्याय, वाक्यशेषश्च। "प्रोक्षणीरासादय[1]" इत्येक सम्प्रेषवाक्यम्[2]। तत्र [3]प्रोक्षण्यात्मकमनुष्ठेयार्थं प्रति गुणभूतम्। प्रोक्षण्यासादनन्तु प्रधानभूतम्—"प्रोक्षणीरभिपूर्योदञ्च स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन्त्सादयति" इति[4] भूयोवाक्यतदर्थगर्भितम्। ततश्चाङ्गगुणविरोधन्यायेन भूयोऽनुग्रहन्यायेन च सम्प्रैपस्यैव समाख्याप्राप्ताध्वर्यु कर्तृकत्वबाधो युक्त इत्याग्नीध्र प्रेषिता, अध्वर्यु स्तु प्रैषार्थकर्ता। वाक्यशेषसम्मतश्चायमर्थ — "स्फ्यहस्तस्सम्प्रेष्यति" इति क्वचिच्छाखाया श्रूयते। "यदन्वञ्च स्फ्य धारयेद्वज्रेणाध्वर्यु [5]क्षिण्वीत" इति च। 'क्षाण हिंसायाम् क्षिणु च' इति तनादौ पठितम्। इकारमध्यो द्वितीयधातुरिह निर्दिष्ट। सम्प्रैष कर्तुं स्फ्यहस्तो भवितु यदि [6]स्फ्यमन्वञ्चमात्माभिमुखाग्र धारयेत्तदा अयं स्फ्यस्य धारयिता वज्रतुल्येन स्फ्येनाध्वर्युं [7]क्षिण्वीत हिंस्यादिति तदर्थ। अत्र च स्फ्यहस्तात्सम्प्रेषितुरन्यत्वेनाध्वर्युर्निर्दिश्यते। अतस्तदन्य. प्रेषितेति विज्ञायते। स च [8]ब्रह्मा भवितु नार्हति। तस्य सर्वपदार्थप्रत्यवेक्षणार्थं दक्षिणेनाहवनीयमुपविष्टस्य "उत्तरेण विहारमुपविश्य पश्चार्द्धे वेदे वितृतीयदेशे स्फ्य स्तब्ध्वा सम्प्रेष्यति" इति विहितपदार्थकर्तृकत्वानुपपत्ते। नापि होता, तस्येदानीमप्रवेशात्, हविरासादनोत्तरमेव तत्प्रवेशविधानात्। अत. परिशेषादध्वर्योरन्यत्वेन निर्दिष्ट आग्नीध्र एव प्रेषितेति विज्ञायते। अध्वर्यु स्तु प्रैषार्थकर्तेति ॥

अथ सिद्धान्तयति—

## गौणो वा ॰ ामान्यात् ॥ २४ ॥

वाशब्दोऽवधारणे। वाक्यशेषे चाध्वर्यु शब्दस्तावदध्वर्यु वेदविहितकर्मकारित्वसामान्यादाग्नीध्रे गौण एवास्थेय। 'मुख्य वा पूर्वचोदना' इति न्यायेन प्रैषे

1 आसादयति क 2. वचन. अ. 3 प्रोक्षणासादन अ 4. इत्यादि क
5. क्षिण्वति अ 6. 'स्फ्यमन्वञ्चावात्माभि' इति मातृकासु पाठ 7. क्षिणुयात् अ.
8 न ब्रह्मा अ.

माध्वर्यवमेव मन्त्रप्रतिपाद्यं, क्रियाकारिणाध्वर्युणा मन्त्रस्य प्रयुज्यमानत्वात्, 'मम' इत्यस्मच्छब्दस्य च प्रयोक्तृपुरुषवाचित्वात। न च क्रियापि स्वामिकर्तृकैवेति कल्प्यतामिति वाच्यम्, प्रधानभूतायां क्रियायां प्रथमत एवोत्पत्तौ समाख्ययावगतस्याध्वर्यवत्वस्य पश्चाद्गुणभूतमन्त्रलिङ्गानुरोधेन त्यागायोगात्। अतो मन्त्रलिङ्गात्तद्गत वर्च'प्रभृतिफलमाध्वर्यवमेवेति प्राप्ते, सिद्धान्तयति—

## स्वामिनो वा तदर्थत्वात् ॥ २६ ॥

वाशब्दोऽवधारणे। मन्त्रप्रयोक्त्राध्वर्युणा वर्च.प्रभृतिफलं यजमानस्यैवाशासितव्यम्, *न त्वात्मन'। कुत ? तदर्थत्वात्—यजेत इत्यात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलस्यापि यजमानगामित्वावगमात्। ततश्चात्मनेपदश्रुत्या मदीयस्य यजमानस्य वर्च इत्येव ममेति लिङ्गं बाधित्वा याजमानमेव फलमध्वर्युणाशासितव्य* इत्यास्थेयम्, लिङ्गाच्छ्रुतेर्बलीयस्त्वात् ॥

वेदसम्मतश्चाय न्याय इत्याह—

## लिङ्गदर्शनाच्च ॥ २७ ॥

"यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा" इति वाक्यशेषो यजमानफलमेवैवञ्जातीयकेषु सिद्धवत्कृत्य दर्शयति, वैशब्दस्य [1]प्रसिद्धिद्योतकत्वात्। अतोऽपि याजमानमेव फलमिह विवक्षितम्। प्रयोजन पूर्वपक्षे—सत्रेषु ममेत्यनूह'। सिद्धान्ते तु—ऊह इत्यादि ॥

इति त्रयोदश करणमन्त्रफलस्य याजमानत्वाधिकरणम् ॥ १३ ॥

१४

अस्ति दर्शपूर्णमासयोरध्वर्योर्दक्षिणातिक्रमणमन्त्र —"अग्नाविष्णू मा वामवक्रमिष विजिहाथां मा मा सन्ताप्तम्" इति। अग्निराहवनीय., विष्णुर्यज्ञ., "यज्ञो वै विष्णु" इति दर्शनात्। यज्ञसाधन वेद्यामासन्नं हविरिह[2] विवक्षितम्। हे आग्नाविष्णू—आहवनीयहविषी वा युवा मावक्रमिषम्—नाक्रमेयम्। विजिहाथा—मयि कोप त्यजताम्, मा मा युवयोरन्तरा दक्षिणातिक्रामन्त मा सन्ताप्त—न सन्तापयतमित्यर्थ। अत्रासन्तापलक्षणं फलं किमध्वर्युणा याजमानमाशास्यम्?

* * चिन्हान्तर्गतो भागस्त्रुटित अपुस्तके. 1. प्रसिद्ध. अ, ग, घ. 2. आसन्नमिह. क, ख.

कर्तृकत्ववचनं [1]नास्ति "अध्वर्युं क्षिण्वीत' इति द्वितीयान्ताध्वर्युपदयुक्तश्च[2] वाक्यशेष' पठ्यते तद्विषयमिदमधिकरणमिति दिक् ॥

इति द्वादशं प्रैषस्याध्वर्यवत्वाधिकरणम् ॥ १२ ॥

१३

अध्वर्युवेदे दर्शपूर्णमासौ प्रकृत्य श्रूयते—"ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुव पुषेमेति पूर्वमग्निं गृह्णाति" इति। पूर्वोऽग्निराहवनीय. तमनेन मन्त्रेण गृह्णाति। समित्प्रक्षेपेण प्रज्वलयतीत्यर्थः। तदिदमन्वाधानमिति याज्ञिका व्यवहरन्ति। तत्र किं ऋत्विक्फलमाशासितव्यम्? उत यजमानफलम्? इति संशये पूर्वपक्षयति—

## ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २९ ॥

ऋत्विक्फलमेवात्र करणमन्त्रेषु विवक्षितम्। कुत'? अर्थवत्त्वात्—समाख्यालब्धाध्वर्युकर्तृकाग्न्यन्वाधानमन्त्रे 'मम' इत्यस्मच्छब्दस्यैव सत्येव मुख्यार्थकत्वलक्षणात्[3], अन्यथा तस्य यजमाने गौणत्वापातात्। ननु 'मन्त्राश्चाकर्मकरणास्तद्वत्' इत्यत्र "आयुर्दा अग्नेस्यायुर्मे देहि" इत्यादिमन्त्राणा याजमानत्व व्यवस्थापितम्, तन्न्यायेनात्रापि याजमानमस्त्वित्यत्राप्येतदेवोत्तरम्—अर्थवत्त्वादिति। अग्न्यन्वाधानस्याध्वर्युफलेनैव फलवत्त्वादित्यर्थः। क्रिया तत्सम्बन्धिन वा प्रकाशयतो मन्त्रस्य करणत्व वाच्यम्। ततश्च "सूक्तवाकेन प्रस्तर प्रहरति" इति श्रुतकरणत्वस्य प्रस्तरप्रहरणात्मकक्रियामप्रकाशयतस्सूक्तवाकस्य तत्सम्बन्धिफलप्रकाशनेनैव निर्वाह्यतया सूक्तवाकप्रकाश्यायुरादिफलकत्व प्रस्तरप्रहरणस्यास्थितम्। "आयुर्दा अग्नेस्यायुर्मे देहि" इत्यादिमन्त्राणान्तु[4] करणत्वेन श्रुतत्वाभावादायुरादिपद यजमानगामि क्रतुफलपरम्, यजमानप्रोत्साहनार्थमनूद्यत इति युक्तम्। प्रकृते चाग्न्यन्वाधानकरणत्वेन मन्त्रस्य श्रुतत्वात्प्रकाश्यवर्चःप्रभृते फलत्व वाच्यम्। यद्यपीह "वयन्त्वेन्धानाः" इतीन्धनात्मकाग्न्यन्वाधानक्रियाप्रकाशकत्वमग्न्यादिदेवताप्रकाशकत्वञ्चास्ति, तथापि कृत्स्नस्य मन्त्रस्य [5]करणत्वनिर्वाहाय तत्प्रकाश्यवर्चःप्रभृतेरपि फलत्वमावश्यकम्। अन्यथा सूक्तवाकस्यापि अग्न्यादिदेवताप्रकाशकत्वमात्रेण करणत्वोपपत्त्या तद्गतायुरादीना फलत्वाभावप्रसङ्गात्। त्र वर्चःप्रभृतिकमग्न्यन्वाधानादिक्रियाफल-

1 चास्ति अ 2 सयुक्तश्च. अ, ख, ग 3. लाभात्. अ, ग, घ.
4 च क 5. प्रकरण. क.

इत्यादावजहत्स्वार्थलक्षणया 'मम' इत्यस्यास्मदीयस्वाम्यर्थपरत्वाश्रयणात् स्वार्थ-त्यागाभावाद्युक्तमात्मनेपदश्रुत्या लिङ्गबाधनम्। इह तु द्विवचनस्यैकत्वे लक्षणाभ्यु-पगमे स्वार्थस्य द्वित्वस्यात्यन्तबाधप्रसङ्गाद् 'आनर्थक्यप्रतिहताना विपरीत बला-बलम्' इति न्यायेनात्मनेपदश्रुतिमेव द्विवचनं बाधते। ततश्च वचनादुभयगाम्येव फलमाशास्यम्॥

इति पञ्चदश भद्रादेरुभयगामिताधिकरणम्॥ १५॥

१६

ज्योतिष्टोमेऽग्नीषोमीयपशौ श्रूयते—"बर्हिषा यूपावटमवस्तृणाति" इति। तत्र बर्हिषि प्राकृता बर्हिर्धर्मा भवन्ति न वेति संशये पूर्वपक्षयति—

**द्रव्यसंस्काराः प्रकरणाविशेषात्सर्वकर्मणाम्॥ ३०॥**

यत प्रकृतौ द्रव्यसस्कारा—बर्हिर्धर्मा लवनादयः, प्रकरणाविशेपात् सर्व-कर्मणाम्—अङ्गप्रधानकर्मणा साधारणा इति पूर्वस्मिन् पाद उक्तम्, अतो विकृता-वपि यूपावटास्तरणबर्हिषि ते स्यु॥

सिद्धान्तयति—

**निर्देशात्तु विकृतावपूर्वस्यानधिकारः॥ ३१॥**

तु पूर्वपक्षव्यावृत्तौ। दशमाद्यन्यायेन विकृतौ प्राकृतकार्यमुखेनैव धर्माणां निर्देशात्—अतिदेशादपूर्वस्याप्राकृतकार्यकस्य यूपावटास्तरणबर्हिषोऽनधिकार.—प्राकृतधर्मैरसम्बन्ध, यूपावटास्तरणबर्हिष. प्रकृतहविरासादनादिकार्यसाध-नत्वाभावात्॥

इति षोडश प्राकृतधर्माणा वैकृतापूर्वपदार्थानङ्गत्वाधिकरणम्॥ १६॥

१७

दर्शपूर्णमासयोस्समामनन्ति—"समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुत" इति, "अरत्निमात्रे विधृती करोति" इति च। स्तीर्णे बर्हिषि तिर्यगवस्था-पितयो तृणयोरुपरि प्रस्तराख्यबर्हिर्मुष्टिविशेषस्तीर्यते। तयोर्विधृतिशब्दो वर्तते। तदिमे पवित्रे विधृती च लवनादिसस्कृताद्बर्हिष कर्तव्ये? उतान्यस्माद् [1]असंस्कृ-

1 असस्कृतात् म.

उत स्वकीयम्? इति संशये पूर्वाधिकरणन्यायेन याजमानमेव फलमाशास्यमिति प्राप्ते, सिद्धान्तयति—

**र्थिन्तु फलं तेषां स्वामि ' [1]प्रत्यर्थत्त्वात् ॥२८॥**

तुर्वैषम्ये। 'ममाग्ने वर्च' इत्येवञ्जातीयकेषु करणमन्त्रेषु याजमानस्यैव फलस्याशास्यत्वेऽपि 'मा सन्ताप्तम्' इत्येवञ्जातीयकेषु करणमन्त्रेषु [2]तेषां—ऋत्विजामेव सम्बन्धि असन्तापादिलक्षण फलमाशास्यं न तु यजमानगामि। कुतः? यतः कर्मार्थमसन्तापादिलक्षण हि फलं कर्मसिद्ध्यौपयिकम्। न हि सन्तापादिदोष[3]-ग्रस्ताः कर्म कर्तुं शक्नुवन्ति। ततस्सामर्थ्यादृत्विग्भिः स्वात्मन्येवासन्तापादिलक्षणं फलमाशास्यम्। नन्वेव सति यजेतेत्यात्मनेपदश्रुतिबाध इत्यत आह—स्वामिन प्रत्यर्थत्त्वात् इति[4]। अर्थ्यते प्रार्थ्यत इत्यर्थ.। कर्मणि घञ्। असन्तापादिलक्षणफलस्यर्त्विग्गतस्यैवात्मीयकर्माविघातार्थं स्वामिन यजमान प्रत्यर्थत्वात्—प्रार्थनीयत्वाञ्नात्मनेपदश्रुतिविरोध इत्येवञ्जातीयकेषु करणमन्त्रेषु ऋत्विक्फलमेवाशास्यम्॥

इति चतुर्दश क्वचित्करणमन्त्रफलस्यर्त्विग्गामिताधिकरणम्॥ १४॥

१५

ज्योतिष्टोमे दक्षिणस्य हविर्धानशकटस्याधस्ताच्चत्वार उपरवाख्या अवटा। तत्र मिथो हस्तौ निवेश्याध्वर्युं यजमानः पृच्छति—'अध्वर्यो किमत्र' इति। 'भद्रम्' इत्यध्वर्युः प्रतिवक्ति। 'तन्नौ सह' इति यजमान आहेति स्थितम्। तत्—पूर्वमन्त्र-प्रस्तुत[5] भद्र नौ—आवयोरध्वर्युयजमानयोस्सह—व्यासक्त भवत्वित्यर्थ.। अत्र [6]भद्ररूपफलस्यासन्तापादिवत्कर्मानौपयिकतयाध्वर्युगामित्वेन रूपेण यजमानेच्छाविषयत्वाभावाद् 'यजेत' इत्यात्मनेपदानुरोधाय यजमानगाम्येव [7]तद्भद्रफल तन्नौ सहेत्यत्र विवक्षितम्। नौ इति द्विवचनात्मनेपदश्रुत्यनुरोधादेकत्वे लाक्षणिक [8]कल्प्यमिति प्राप्ते, सिद्धान्तयति—

**व्यपदेशाच्च ॥ २९ ॥**

चो भिन्नक्रम। भद्रलक्षणमिद फल यजमानस्याध्वर्योश्चेह विवक्षितम्। कुत? व्यपदेशात्—नौ इति द्विवचनेन [9]विशिष्योभयनिर्देशात्। "ममाग्ने वर्चः"

1 प्रत्यर्थवत्वात् 2. तेषा नास्ति क 3. दोषादि. क. 4. इति नास्ति. अ, ग, घ. 5 प्रकृत. क, ख, 6. भद्ररूपस्य. अ, ग, घ. 7. तत् नास्ति. अ, ग. 8. कल्प्यता. अ, घ. 9. विशिष्य नास्ति. अ.

करणेन दृष्टफलकत्वसम्भवात्। [1]ततश्च सवनीययागार्थस्यैव शकलस्य संस्कारोऽयमित्यन्यत्र[2] विनियोगाभावान्न पूर्वाधिकरणविरोधोऽपि। यद्यप्येकदेशे श्रुते कस्यैकदेश इत्याकाङ्क्षाया सन्निहितेनैकदेशिनान्वयान्न द्रव्यान्तरप्रयोजकत्वमिति चतुर्थे वक्ष्यते— 'एकदेशद्रव्य चोत्पत्तौ विद्यमानसंयोगात्' इत्यत्र। तथा चात्र पूर्वपक्षस्यैवानुन्मेषः। पुरोडाशशकलस्याप्येकदेशद्रव्यत्वेन तस्यैन्द्रवायवपात्रसंस्कारार्थत्वेऽपि स्विष्टकृदादिवद्द्रव्यान्तरप्रयोजकत्वाभावस्य सिद्धत्वात्। तथापि "पयस्या मैत्रावरुणस्य पात्रे निदधाति" इति वाक्यमिहोदाहरण द्रष्टव्यम्॥

इत्यष्टादश शेषनिधानाधिकरणम्॥ १८॥

१९

इदमामनन्ति—"यज्ञाथर्वण वै काम्या इष्टयस्ता उपांशु कर्तव्याः" इति। अथर्वणशब्देन रहस्याभिचारादिपरचतुर्थवेदवाचिना रहस्यत्व लक्ष्यते। आथर्वणा रहस्या यज्ञा आथर्वणयज्ञा इति कर्मधारय। पूर्वनिपातलिङ्गवचनव्यत्ययश्छान्दस। वैशब्दो हेतौ। यत काम्या इष्टय, अभिचारादिवद्रहसि कर्तव्या। अतस्ता उपांशु कर्तव्या इत्यर्थ। किमिदमुपांशुत्वमङ्गप्रधानार्थम्? उत केवलप्रधानार्थम्? इति संशये पूर्वपक्षयति—

**विकृतौ सर्वार्थः शेषः प्रकृतिवत्॥ ३४॥**

विकृताविति जातावेकवचनम्। काम्येष्टिष्वाम्नातश्शेष—धर्म उपांशुत्वलक्षणस्सर्वार्थः—अङ्गप्रधानार्थ। अविशेषादिति भाव। प्रकृतिवत् सप्तम्यन्ताद्वति। उपांशुत्व हि [3]मन्त्रोच्चारणधर्म, तद्द्वारैव कर्मान्वय[4], न तु साक्षात्। मन्त्रोच्चारणञ्चाङ्गप्रधानसाधारणम्। ततश्च यथा प्रकृतौ हविरासादनद्वारकाणा बर्हिस्तद्धर्माणामङ्गप्रधानसाधारण्यम् अङ्गानामपि हविरासादनसद्भावात्, तथा मन्त्रोच्चारणद्वारकस्याप्युपांशुत्वस्याङ्गप्रधानसाधारण्य युक्तमित्यर्थ। न चोपदिष्ट वैकृतमङ्गमुपदिष्टेन प्रधानेनैव प्रथममन्वेतीति न पाश्चात्यातिदेशिकाङ्गसाधारण्य युक्तमिति वाच्यम्। विकृतिभावना हि क्लृप्तप्राकृतोपकाराकाङ्क्षिणी। सा यदि

1. तथा ख. अ, ग, घ. 2 इत्यत्र. क, ग. 3. मन्त्रोच्चारण. अ, ग, घ 4. कर्मान्वयी. क.

तात् ? इति संशये, बर्हिर्धर्मोणा प्रधानोपकारित्वं बर्हिरर्थत्वात्पवित्रयोर्विधृत्योश्चापि प्रधानोपकारित्वाविशेषात् [1]संस्कृतादेव बर्हिष पवित्रविधृतिकरण युक्तमिति प्राप्ते, सिद्धान्तयति—

**विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥**

चकार उक्तसमुच्चये। विकृतौ यूपावटास्तरणमधर्मकबर्हिषेत्युक्तम्। प्रकृतावपि श्रुतिविशेषात्—"त्रिधातु पञ्चधातु वा बर्हिस्तृणाति" इति सस्कृत बर्हिरधिकृत्य वेदिस्तरणे विनियोजकवचनविशेषात् सस्कृतस्य बर्हिस्तरणादन्यत्र विनियोगविरोधे सति, शेषे—वेदिस्तरणादन्यस्मिन् पवित्रविधृतिलक्षणकार्ये अव्यक्त—अधर्मक परिभोजनीयाख्यो दार्भमुष्टिविशेष प्रत्येतव्य। त्रिधातु—त्रिःपरिपाटिसस्कृत बर्हिस्त्रेधा कृत्वा तैस्त्रिभिर्भागै वेदिपूर्वमध्यापरभागान् क्रमेण स्तृणातीत्यर्थ ॥

इति सप्तदश लवनादेरसर्वार्थताधिकरणम् ॥ १७ ॥

१८

ज्योतिष्टोमे श्रूयते—"पुरोडाशशकलमैन्द्रवायवपात्रे निदधाति" इति। किमत्र सन्निहितात्सवनीयपुरोडाशाद् [2]अपच्छिन्नस्य शकलस्य निधानम् ? उत पुरोडाशान्तरमुत्पाद्य (तच्छकलस्य निधानम् ? इति सशये सन्निहितपुरोडाशस्य सवनीययागार्थस्य पूर्वाधिकरणन्यायेनान्यत्र विनियोगासम्भवात्पुरोडाशान्तरमुत्पाद्य) तच्छकल एवैन्द्रवायवपात्रे तत्सस्कारार्थं निधातव्य इति प्राप्ते, सिद्धान्तयति—

**अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥**

तुरवधारणे। सवनीयार्थपुरोडाशस्यैवैकदेशस्यापनय—देशरिक्तीकरणफलकमन्यत्र निरसनमत्र विधीयते, न तु पुरोडाशान्तरशकलस्य। कुत ? विद्यमानसयोगात्—सवनीयार्थतया विद्यमानपुरोडाशशकलेन द्वितीयासयोगात्। द्वितीयया हि पुरोडाशशकलस्य सस्कार्यत्वमवगम्यते। ततश्च पुरोडाशान्तरस्य नाय सस्कार., तस्य भूतभाव्युपयोगाभावात्, "सक्तूञ्जुहोति" इतिवद्विभक्तिविपरिणामेनारादुपकारकत्वाश्रयण सम्भवन्त्या दृष्टार्थताया न न्याय्यम्। ऐन्द्रवायवे पात्रे[3] निधानस्य सवनीययागोपयुक्तपुरोडाशशकलप्रतिपत्तिरूपत्वे[4] सति तस्य देशरिक्ती-

---

1 सस्तुतात् अ 2 अवच्छिन्नस्य. अ, ग. ( ) चिन्हान्तर्गत पाठस्त्रुटित अपुस्तके. 3 वायवपात्रे अ, ग, घ. 4. प्रतिरूपत्वे. अ

करणेन दृष्टफलकत्वसम्भवात्। [1]ततश्च सवनीययागार्थस्यैव शकलस्य संस्कारोऽयमित्यन्यत्र[2] विनियोगाभावान्न पूर्वाधिकरणविरोधोऽपि। यद्यप्येकदेशे श्रुते कस्यैकदेश इत्याकाङ्क्षाया सन्निहितेनैकदेशिनान्वयान्न द्रव्यान्तरप्रयोजकत्वमिति चतुर्थे वक्ष्यते— 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्' इत्यत्र। तथा चात्र पूर्वपक्षस्यैवानुन्मेषः। पुरोडाशशकलस्याप्येकदेशद्रव्यत्वेन तस्यैन्द्रवायवपात्रसंस्कारार्थत्वेऽपि स्विष्टकृदादिवद्द्रव्यान्तरप्रयोजकत्वाभावस्य सिद्धत्वात्। तथापि "पयस्या मैत्रावरुणस्य पात्रे निदधाति" इति वाक्यमिहोदाहरणं द्रष्टव्यम्॥

इत्यष्टादशं शेषनिधानाधिकरणम्॥ १८॥

१९

इदमामनन्ति—"यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या" इति। अथर्वणशब्देन रहस्याभिचारादिपरचतुर्थवेदवाचिना रहस्यत्वं लक्ष्यते। आथर्वणा रहस्या यज्ञा आथर्वणयज्ञा इति कर्मधारयः। पूर्वनिपातलिङ्गवचनव्यत्ययश्छान्दसः। वैशब्दो हेतौ। यतः काम्या इष्टयः, अभिचारादिवद्रहसि कर्तव्याः। अतस्ता उपांशु कर्तव्या इत्यर्थः। किमिदमुपांशुत्वमङ्गप्रधानार्थम्? उत केवलप्रधानार्थम्? इति संशये पूर्वपक्षयति—

**विकृतौ सर्वार्थः शेषः प्रकृतिवत्॥ ३४॥**

विकृताविति जातावेकवचनम्। काम्येष्टिष्वाम्नातश्शेषः—धर्मः उपांशुत्वलक्षणस्सर्वार्थः—अङ्गप्रधानार्थः। अविशेषादिति भावः। प्रकृतिवत् सप्तम्यन्ताद्वतिः। उपांशुत्वं हि [3]मन्त्रोच्चारणधर्मः, तद्द्वारैव कर्मान्वयः[4], न तु साक्षात्। मन्त्रोच्चारणञ्चाङ्गप्रधानसाधारणम्। ततश्च यथा प्रकृतौ हविरासादनद्वारकाणां बर्हिस्तद्धर्माणामङ्गप्रधानसाधारण्यम् अङ्गानामपि हविरासादनसद्भावात्, तथा मन्त्रोच्चारणद्वारकस्याप्युपांशुत्वस्याङ्गप्रधानसाधारण्यं युक्तमित्यर्थः। न चोपदिष्टं वैकृतमङ्गमुपदिष्टेन प्रधानेनैव प्रथममन्वेतीति न पाश्चात्यातिदेशिकाङ्गसाधारण्यं युक्तमिति वाच्यम्। विकृतिभावना हि क्लृप्तप्राकृतोपकाराकाङ्क्षिणी। सा यदि

1. तथा च. अ, ग, घ.　2 इत्यत्र. क, ग.　3. मन्त्रोच्चारण. अ, ग, घ.　4 कर्मान्वयी. क

तात्? इति संशये, बर्हिर्धर्माणां प्रधानोपकारिसर्वबर्हिरर्थत्वात्पवित्रयोर्विधृत्योश्चापि प्रधानोपकारित्वाविशेषात् [1]संस्कृतादेव बर्हिषः पवित्रविधृतिकरणं युक्तमिति प्राप्ते, सिद्धान्तयति—

**विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥**

चकार उक्तसमुच्चये। विकृतौ यूपावटास्तरणमधर्मकबर्हिषेत्युक्तम्। प्रकृतावपि श्रुतिविशेषात्—"त्रिधातु पञ्चधातु वा बर्हिस्तृणाति" इति संस्कृतं बर्हिरधिकृत्य वेदिस्तरणे विनियोजकवचनविशेषात् संस्कृतस्य बर्हिस्तरणादन्यत्र विनियोगविरोधे सति, शेषे—वेदिस्तरणादन्यस्मिन् पवित्रविधृतिलक्षणकार्ये अव्यक्तः-अधर्मकः परिभोजनीयाख्यो दार्भमुष्टिविशेषः प्रत्येतव्यः। त्रिधातु–त्रिःपरिपाटिसंस्कृतं बर्हिस्त्रेधा कृत्वा तैस्त्रिभिर्भागैः वेदिपूर्वमध्यापरभागान् क्रमेण स्तृणातीत्यर्थः ॥

इति सप्तदशं लवनादेरसर्वार्थताधिकरणम् ॥ १७ ॥

१८

ज्योतिष्टोमे श्रूयते—"पुरोडाशशकलमैन्द्रवायवपात्रे निदधाति" इति। किमत्र सन्निहितात्सवनीयपुरोडाशाद् [2]अपच्छिन्नस्य शकलस्य निधानम्? उत पुरोडाशान्तरमुत्पाद्य (तच्छकलस्य निधानम्? इति संशये सन्निहितपुरोडाशस्य सवनीययागार्थस्य पूर्वाधिकरणन्यायेनान्यत्र विनियोगासम्भवात्पुरोडाशान्तरमुत्पाद्य) तच्छकल एवैन्द्रवायवपात्रे तत्संस्कारार्थं निधातव्य इति प्राप्ते, सिद्धान्तयति—

**अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥**

तुरवधारणे। सवनीयार्थपुरोडाशस्यैवैकदेशस्यापनयः-देशरिक्तीकरणफलकमन्यत्र निरसनमत्र विधीयते, न तु पुरोडाशान्तरशकलस्य। कुतः? विद्यमानसंयोगात्—सवनीयार्थतया विद्यमानपुरोडाशशकलेन द्वितीयासंयोगात्। द्वितीयया हि पुरोडाशशकलस्य संस्कार्यत्वमवगम्यते। ततश्च पुरोडाशान्तरस्य नायं संस्कारः, तस्य भूतभाव्युपयोगाभावात्, "सक्तूञ्जुहोति" इतिवद्विभक्तिविपरिणामेनारादुपकारकत्वाश्रयणं सम्भवन्त्या दृष्टार्थताया न न्याय्यम्। ऐन्द्रवायवे पात्रे[3] निधानस्य सवनीययागोपयुक्तपुरोडाशशकलप्रतिपत्तिरूपत्वे[4] सति तस्य देशरिक्ती-

---

1. संस्कृतात् अ 2. अवच्छिन्नस्य अ, ग () चिन्हान्तर्गत पाठस्त्रुटित अपुस्तके 3 वायवपात्रे अ, ग, घ. 4. प्रतिरूपत्वे अ.

प्रधानार्थत्वमुच्चैष्ट्वस्यापाङ्ग्र युज्यते। प्रकृते तु कर्मार्थकसत्यप्रत्ययसयोगात् काम्येष्टि-कर्मकभावना प्रतीयते। तस्याश्चाङ्गव्याप्त्यभावान्[1] नाङ्गसाधारण्यमिति ॥

इत्येकोनविंशमुपांशुत्वस्य प्रधानार्थत्वाधिकरणम् ॥ १९ ॥

२०.

श्येनाख्ये सोमक्रतौ श्रूयते—"दृतिनवनीतमाज्यं भवति" इति। ( दृति-श्चर्मभस्त्रिका। तद्गतमिह लक्ष्यते। दृतिगत नवनीत यस्य प्रकृतिद्रव्य तदाज्य दृति-नवनीतम्। ) किमत्र दृतिनवनीतत्व प्रधानार्थम्? अङ्गार्थम् वा? इति सशय। तत्र प्रकरणलब्धश्येनोद्देशेन दृतिनवनीतत्वविशिष्टाज्यस्य सोमद्रव्यापवादेन प्रधानार्थ-कतया विधानमाश्रीयते। न चैव सति विशिष्टविधौ[2] गौरवाद्यदाज्य तद् दृतिनवनीत भवतीति वचनव्यक्तिमाश्रित्याज्यानुवादेन दृतिनवनीतत्वविधानाश्रयणादनुवादस्य च प्राप्तिसापेक्षत्वात् प्रधाने च चोदकप्राप्तसोमद्रव्यावरुद्धे आज्यस्याभावादानर्थ-क्यतदङ्गन्यायेनाज्यसाध्यदीक्षणीयादिलक्षणाङ्गार्थत्वमेव दृतिनवनीतस्य युक्तमिति वाच्यम्, एव सति प्रकरणबाधापत्ते। अतो विशिष्टविधिगौरवमप्याश्रित्य प्रकर-णसनाथेन वाक्येन विधीयमान दृतिनवनीतत्वविशिष्टमाज्य प्रधान एवावतिष्ठत इति प्राप्ते, सिद्धान्तयति—

**सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ ३६ ॥**

विशिष्टविधिगौरवादाज्यानुवादेन दृतिनवनीतत्वविधिरेवाश्रयणीय। अनु-वादस्य च प्राप्त्यपेक्षत्वात् यत्राज्य प्राप्त तत्रैवायं विधिरवतिष्ठते। ततश्च प्रधाने श्येने सन्निधानविशेषात्सोमद्रव्यप्रापकचोदकलक्षणप्रमाणविशेषादाज्यस्यासम्भवे सति तद-ङ्गानामाज्यवता दीक्षणीयादीनामेव शेषो दृतिनवनीतत्वम्। तेष्वाज्यस्यानुपदेशेऽपि चोदकतत्सन्निधिविशेषलक्षणविशेषाद् दृतिनवनीतत्वविधिसम्भवात्, न तु प्रधाना-र्थम्। अङ्गसम्बन्धेऽपि प्रकरणोपपत्त्या न विशिष्टविधिगौरवस्याश्रयणमुचितम्। अङ्गानामपि प्रधानोपकारकतया अङ्गार्थस्यापि प्रकरणिनि प्रधान एव विश्रान्ते ॥

नन्वाज्यानुवादेन दृतिनवनीतत्वस्य विधौ दर्शपूर्णमासादावतिप्रसङ्ग, श्येना-ङ्गत्वेनाज्यस्य विशेषणे त्वसम्भव, आज्यस्य साक्षात् श्येनाङ्गत्वाभावात्। परम्परया

1. व्याप्त्यभावात्. म. () चिन्हान्तर्गतो भागो नास्ति. म. 2. गौरव स्यात्. क.

सन्निधौ गृहमेधीयेष्टावाज्यभागवत् प्रकृतिक्लृप्तोपकारजनकं कञ्चित्पदार्थमाम्नातमालोकते तदा तं गृह्णाति, तावतैवोपकाराकाङ्क्षाशान्ते, न तु चोदकादुपकारप्राप्तिमर्थयते। यदि तु विकृतिभावनासन्निधौ प्राकृतोपकारजनकत्वेनाक्लृप्तं[1] वैकृतपदार्थमाम्नातं पश्यति[2], तदा तद्ग्रहणेऽपि प्राकृतोपकारकाकाङ्क्षाशान्त्यभावात्तमुपेक्ष्य प्रथमं चोदकप्राप्तमेवोपकारकं [3]तदवच्छेदकेनापि पदार्थान् गृह्णाति। ततस्तु पश्चाद् शेषिकाङ्कैमर्थ्याकाङ्क्षाया पुनरुत्थापिताकाङ्क्षासध्रीचीना सती विकृतिभावना तदपि वैशेषिकमङ्गं गृह्णातीति स्थितिः। ततश्चोपदिष्टस्याप्युपांशुत्वस्य न प्रथमं प्रधानान्वय इत्यङ्गप्रधानार्थत्वं युज्यत इति प्राप्ते, सिद्धान्तयति—

## मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३९ ॥

वाशब्दोऽवधारणे। प्रधानार्थ एवोपांशुत्वविधिः, न त्वङ्गार्थोऽपि। कुतः? अङ्गस्याचोदितत्वात्। अङ्गस्येति जातावेकवचनम्। अङ्गानां प्रति साधनतया विहितत्वाभावात्। 'काम्या इष्टयः' इत्यत्र हि काम्यपदेन 'तदस्य प्रयोजनम्' इत्यर्थे 'स्वर्गादिभ्यो यत्' [4]इत्युपसङ्ख्यातयत्प्रत्ययान्तेन प्रधानमेव विवक्षितम्, न त्वङ्गान्यपि। प्रधानस्यैव कामं प्रति करणत्वेन कामप्रयोजनकत्वात्। अङ्गानां परम्परया कामप्रयोजनकत्वेऽपि स्वरसतस्साक्षात्प्रयोजनकपरकाम्यशब्दविषयत्वाभावात्। ततश्च "बर्हिषि हवींष्यासादयति" इति वाक्येन प्रधानाङ्गसाधारणसकलहविर्द्धारकत्वावगमेन[5] बर्हिस्तद्धर्मोणां तत्साधारण्यावगमेऽपि प्रकृते काम्यशब्दघटितवाक्येन प्रधानार्थतयैवोपांशुत्वस्य विधानान्नाङ्गसाधारण्यम्। न चात्र इष्टय उपांशु कर्तव्यास्ताश्च काम्या इति वाक्यभेदप्रसङ्गात्काम्यत्वविशेषणं न विवक्षितमिति वाच्यम्, ता इत्येकेनैव शब्देन विशिष्टोद्देशे वाक्यभेदाभावात्। तस्मात्काम्यास्विष्टिषूपांशुत्वं केवलप्रधानविषयमिति स्थितम्।

नन्वेवं "उपैः प्रवर्ग्येण चरन्ति" "अप्स्ववभृथेन चरन्ति" इत्यत्राप्युच्चैष्ट्वस्य अपाञ्च प्रधानसंयोगात् केवलप्रधानार्थत्वं स्यादिति चेत्—विषम उपन्यासः। प्रवर्ग्येणेति अवभृथेनेति तृतीयासंयोगात् प्रवर्ग्यकरणिका अवभृथकरणिका भावना श्रूयमाणा अङ्गसंयुक्तैव[6] गम्यते, करणस्य नित्यमुपकारापेक्षत्वात्। अतस्तत्र साङ्ग-

1. क्लृप्तं अ. 2. पश्येत्, अ, ग, घ 3 जनकता तत्तदवच्छेदकानपि अ
4. इत्युपसङ्ख्यातत्वात् अ, ग, घ 5 गमे क. 6. अङ्गसंयुक्ता घ अ

स्थिताः। ते च श्येने चोदकत प्राप्ता। तानधिकृत्य तत्राम्नायते— सह पशूनालभते" इति। तत्रान्यतमस्य पशो. काले त्रयाणा साहित्य प्राप्तम्। अग्नीषोमीयः पुरोडाशोऽग्नीषोमीयस्थाने, आनुबन्ध्यायाः स्थाने मैत्रावरुण्यामिक्षेत्यनुग्रहवचनमग्नीषोमीयानुबन्ध्याकालयो पश्वभावं गमयति। अत'[1] परिशेषात् सवनीयः पशु [2] सुत्यायामेव तत्साहित्यमवतिष्ठते। तथा च तत्सामान्यादितरेषु तथात्वमिति न्यायेन वैशेषिकश्येनाङ्गान्तरस्यापि दृतिनवनीतस्य' वैशेषिकश्येनाङ्गत्वाविशेषात् सुत्याकालत्वमनुमीयते, दृतिनवनीतत्व सुत्याकालकमेव भवितुमर्हति, श्येने विशिष्य विहितत्वात्, पशुसाहित्यवदिति ॥

अथ सिद्धान्तयति—

## सर्वेषां वाऽविशेषात् ॥ ३९ ॥

वाशब्द एवार्थे। सुत्याकालकतदन्यकालकानां सर्वेषां श्येनाङ्गानामाज्यवता दृतिनवनीत्व शेष'। कुत. ? अविशेषात्—सामान्यवचनस्य विशेषकप्रमाणाभावात्। तथा च वाक्येन सुत्यातदितरकालकसमस्तश्येनाङ्गार्थतया दृतिनवनीतत्वस्य गम्यमानत्वादागमबाधितमनुमानम्, अप्रयोजकञ्च। पुरोडाशामिक्षावचन तावत् पशुसाहित्यस्य सुत्याकालत्व गमयतु, नैतवता पशुसाहित्यवद्वैशेषिकश्येनाङ्गत्वाद् दृतिनवनीतत्वमपि सुत्याकालकमिति न्याय कल्पयितुं शक्यते। पुरोडाशामिक्षावचनस्य पशुसाहित्ये सुत्याकालकत्वग्राहकत्वमात्रेणोपपन्नतया सुत्याकालकत्वे वैशेषिकश्येनाङ्गत्वस्य हेतुत्वग्राहकत्वाभावात् ॥

ननु तर्हि पशुसाहित्यस्य सुत्याकालकत्व कुत. ? न तावत्पुरोडाशामिक्षावचनाल्लिङ्गादेवेति शक्यते वक्तुम्, लिङ्गस्य न्यायप्राप्तार्थसवादकत्वेनापूर्वार्थप्रापकत्वाभावात्। नापि न्यायात्, वैशेषिकश्येनाङ्गत्वात् पशुसाहित्य सुत्याकालकमिति न्यायस्य हेतुताग्राहकप्रमाणाभावेन निरस्तत्वात्। तत्राह—

## न्यायोक्ते लिङ्गदर्शनम् ॥ ४० ॥

प्रधानप्रत्यासत्तिवशात्पशुसाहित्यं सुत्याकालकमिति न्यायसिद्धेऽर्थे पुरोडाशामिक्षावचनरूपलिङ्गदर्शनमुपपन्नमित्यर्थ। न चायं न्यायो दृतिनवनीतत्वेऽपि

1 अत नास्ति. क 2. पशुकाले. अ. 3. नवनीतत्वस्यैव. ग.

श्येनाङ्गत्वविवक्षायान्तु आधाने पूर्णाहुति[1] पवमानेष्टिगतस्याप्याज्यस्य दृतिनवनीतत्वप्रसङ्ग । तस्यापि श्येनाङ्गभूताहवनीयादिनिष्पादनद्वारा श्येनोपकारकत्वादित्याशङ्क्य निराकरोति—

**आधानेऽपि तथेति चेन्न अप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् ॥ ३७॥**

यथा श्येनोपकारकदीक्षणीयाद्याज्य दृतिनवनीतं तथाऽऽधाने पवमानेष्ट्याद्याज्यमपि दृतिनवनीत स्यात्, श्येनोपकारकारकत्वाविशेषादिति चेत्–तन्न, कुत. ? अप्रकरणत्वात्–न विवक्ष्यते[2] प्रकरण बुद्धिविपरिवृत्तिलक्षणसन्निधिर्यस्य तदप्रकरणम्। श्येनविधावसन्निहितत्वादिति यावत्। दृतिनवनीतत्व हि धर्म बुद्धिसन्निहित एव दीक्षणीयाद्याज्ये श्येनोपकारकेऽन्वयमर्हति, न त्वसन्निहिते पवमानेष्ट्याद्याज्ये। श्येने हि ज्यौतिष्टोमिको दीक्षणीयादिर्विध्यन्तश्चोदकतस्सन्निहित । दीक्षणीयादौ च दार्शपूर्णमासिको[3] विध्यन्तश्चोदकान्तरतस्सन्निहित इति दार्शपूर्णमासिकमाज्य चोदकपरम्परया दीक्षणीयादिद्वारा श्येने सन्निहितम्। पवमानेष्ट्याज्यन्तु न केनापि प्रमाणेन तत्र सन्निहितम्। ननु श्येनेऽसन्निहितस्यापि पवमानेष्ट्याद्याज्यस्योपकारकत्वमात्रेण दृतिनवनीतत्वान्वय कुतो न स्यादित्यत आह–अङ्गस्यातन्निमित्तत्वादिति। अङ्गस्य–पवमानेष्ट्याद्यङ्गभूतस्याज्यस्यासन्निहितस्य दृतिनवनीतत्वप्राप्तौ तस्योपकारकत्वमात्रस्य निमित्तत्वाभावादसन्निहितस्य पवमानेष्ट्याद्याज्यस्य यदाज्यं तद् दृतिनवनीतमिति वचनव्यक्त्यावनुवादविषयत्वादिति भाव ॥

इति विंश दृतिनवनीताधिकरणम् ॥२०॥

## २१

श्येनाङ्गाज्य दृतिनवनीतमिति स्थितम्। तत् किं सुत्याकालकेष्वङ्गेषु ? उत सर्वेषु ? इति सशये पूर्वपक्षयति—

**तत्काले वा लिङ्गदर्शनात् ॥ ३८ ॥**

वाशब्दस्सम्भावनायाम्[4] । सुत्याकालक एवाङ्गे दृतिनवनीतत्वविधिरिति वक्ष्यते[5] । कुत. ? लिङ्गदर्शनात्—एतदर्थसाधकानुमाने दृष्टान्तसाधकलिङ्गदर्शनात्। तथाहि—प्रकृतौ ज्योतिष्टोमेऽग्नीषोमीयसवनीयानुबन्ध्या पशवो भिन्नकाला

1. पवमानेष्ट्यादि. अ, ग, घ. 2. विद्यते. अ 3 विध्यन्त नास्ति. अ
4. शङ्कायाम्. अ, ग 5. विधिरवतिष्ठते. अ, ग

स्थिताः। ते च श्येने चोदकत प्राप्ता'। तानधिकृत्य तत्राम्नायते— सह पशूनालभते" इति। तत्रान्यतमस्य पशो. काले त्रयाणा साहित्य प्राप्तम्। अग्नीषोमीय' पुरोडाशोऽग्नीषोमीयस्थाने, आनुबन्ध्यायाः स्थाने मैत्रावरुण्यामिक्षेत्यनुग्रहवचनमग्नीषोमीयानुबन्ध्याकालयो पश्वभाव गमयति। अत'[1] परिशेपात् सवनीय. पशु[2] सुत्यायामेव तत्साहित्यमवतिष्ठते। तथा च तत्सामान्यादितरेपु तथात्वमिति न्यायेन वैशेषिकश्येनाङ्गान्तरस्यापि दृतिनवनीतस्य[3] वैशेपिकश्येनाङ्गत्वाविशेपात् सुत्याकालत्वमनुमीयते, दृतिनवनीतत्व सुत्याकालकमेव भवितुमर्हति, श्येने विशिष्य विहितत्वात्, पशुसाहित्यवदिति॥

अथ सिद्धान्तयति—

## ॅषां वाऽविशेषात्॥ ३९॥

वाशब्द एवार्थे। सुत्याकालकतदन्यकालकानां सर्वेषां श्येनाङ्गानामाज्यवत्ता दृतिनवनीत्व शेष। कुत.? अविशेषात्–सामान्यवचनस्य विशेषकप्रमाणाभावात्। तथा च वाक्येन सुत्यातदितरकालकसमस्तश्येनाङ्गार्थतया दृतिनवनीतत्वस्य गम्यमानत्वादागमबाधितमनुमानम्, अप्रयोजकञ्च। पुरोडाशामिक्षावचन तावत् पशुसाहित्यस्य सुत्याकालत्वं गमयतु, नैतवता पशुसाहित्यवद्वैशेषिकश्येनाङ्गत्वाद् दृतिनवनीतत्वमपि सुत्याकालकमिति न्याय कल्पयितुं शक्यते। पुरोडाशामिक्षावचनस्य पशुसाहित्ये सुत्याकालकत्वग्राहकत्वमात्रेणोपपन्नतया सुत्याकालकत्वे वैशेपिकश्येनाङ्गत्वस्य हेतुत्वग्राहकत्वाभावात्॥

ननु तर्हि पशुसाहित्यस्य सुत्याकालकत्व कुत? न तावत्पुरोडाशामिक्षावचनाल्लिङ्गादेवेति शक्यते वक्तुम्, लिङ्गस्य न्यायप्राप्तार्थसंवादकत्वेनापूर्वार्थप्रापकत्वाभावात्। नापि न्यायात्, वैशेषिकश्येनाङ्गत्वात् पशुसाहित्य सुत्याकालकमिति न्यायस्य हेतुताग्राहकप्रमाणाभावेन निरस्तत्वात्। तत्राह—

## न्यायोक्ते लिङ्गदर्शनम्॥ ४०॥

प्रधानप्रत्यासत्तिवशात्पशुसाहित्यं सुत्याकालकमिति न्यायसिद्धेऽर्थे पुरोडाशामिक्षावचनरूपलिङ्गदर्शनमुपपन्नमित्यर्थ। न चायं न्यायो दृतिनवनीतत्वेऽपि

1. अत नास्ति. क. 2. पशुकाले. अ. 3. नवनीतत्वस्यैव. ग.

श्येनाङ्गत्वविवक्षायान्तु आधाने पूर्णाहुति[1] पवमानेष्टिगतस्याप्याज्यस्य दृतिनवनीतत्वप्रसङ्गः । तस्यापि श्येनाङ्गभूताहवनीयादिनिष्पानद्वारा श्येनोपकारकत्वादित्याशङ्क्य निराकरोति—

**आधानेऽपि तथेति चेन्न अप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् ॥ ३७॥**

यथा श्येनोपकारकदीक्षणीयाद्याज्य दृतिनवनीत तथाऽऽधाने पवमानेष्ट्याद्याज्यमपि दृतिनवनीत स्यात्, श्येनोपकारकारकत्वाविशेषादिति चेत्-तन्न, कुत ? अप्रकरणत्वात्-न विवक्ष्यते[2] प्रकरण बुद्धिविपरिवृत्तिलक्षणसन्निधिर्यस्य तदप्रकरणम्। श्येनविधावसन्निहितत्वादिति यावत्। दृतिनवनीतत्व हि धर्मः बुद्धिसन्निहित एव दीक्षणीयाद्याज्ये श्येनोपकारकेऽन्वयमर्हति, न त्वसन्निहिते पवमानेष्ट्याद्याज्ये। श्येने हि ज्यौतिष्टोमिको दीक्षणीयादिर्विध्यन्तश्चोदकतस्सन्निहित । दीक्षणीयादौ च दार्शपूर्णमासिको[3] विध्यन्तश्चोदकान्तरतस्सन्निहित इति दार्शपूर्णमासिकमाज्य चोदकपरम्परया दीक्षणीयादिद्वारा श्येने सन्निहितम्। पवमानेष्ट्याज्यन्तु न केनापि प्रमाणेन तत्र सन्निहितम्। ननु श्येनेऽसन्निहितस्यापि पवमानेष्ट्याद्याज्यस्योपकारकत्वमात्रेण दृतिनवनीतत्वान्वय कुतो न स्यादित्यत आह-अङ्गस्यातन्निमित्तत्वादिति। अङ्गस्य-पवमानेष्ट्याद्यङ्गभूतस्याज्यस्यासन्निहितस्य दृतिनवनीतत्वप्राप्तौ तस्योपकारकत्वमात्रस्य निमित्तत्वाभावादसन्निहितस्य पवमानेष्ट्याद्याज्यस्य यदाज्य तद् दृतिनवनीतमिति वचनव्यक्तावनुवादविषयत्वादिति भावः ॥

इति विंशं दृतिनवनीताधिकरणम् ॥२०॥

## २१

श्येनाङ्गाज्य दृतिनवनीतमिति स्थितम्। तत् किं सुत्याकालकेष्वङ्गेषु ? उत सर्वेषु ? इति संशये पूर्वपक्षयति—

**तत्काले वा लिङ्गदर्शनात् ॥ ३८ ॥**

वाशब्दस्सम्भावनायाम्[4] । सुत्याकालक एवाङ्गे दृतिनवनीतत्वविधिरिति वक्ष्यते[5] । कुत ? लिङ्गदर्शनात्—एतदर्थसाधकानुमाने दृष्टान्तसाधकलिङ्गदर्शनात्। तथाहि—प्रकृतौ ज्योतिष्टोमेऽग्नीषोमीयसवनीयानुबन्ध्या पशवो भिन्नकाला-

1. पवमानेष्ट्यादि. अ, ग, घ 2. विद्यते अ. 3. विध्यन्त नास्ति. अ.
4. शङ्कायाम्. अ, ग 5. विधिरवतिष्ठते. अ, ग.

यावत्। कुत'? प्रकृतिलिङ्गत्वात्। प्रकृतौ ज्योतिष्टोमे "अनुसवनं पुरोडाशा निरुप्यन्ते" इत्यादौ दृष्ट लिङ्गं—धानादिपञ्चहवि प्रत्यायनसामर्थ्यं यस्य स प्रकृतिलिङ्ग पुरोडाशशब्द। अतो विकृतावपि [1]तत्र लक्षणा न दुष्यति। वैराजवत्। यथा प्रकृतौ ज्योतिष्टोमे "यदि रथन्तरसामा सोमस्स्यात्" इत्यादौ सामशब्दस्य पृष्ठमात्र लाक्षणिकस्य दृष्टत्वात्, विकृतावपि "षोडशी वैराजसामा" इत्यत्र सामशब्दस्य पृष्ठस्तोत्रे लक्षणा तद्वत्। (सवनीयशब्दस्तु प्रकृतावसवनीयेषु क्वापि लक्षणया न दृष्ट। अतो नात्र तस्य लाक्षणिकत्वाश्रयणम् किञ्च। मुख्यत्वात्) सवनीयशब्दस्यैव मुख्यवृत्तित्वम्, पुरोडाशशब्दस्य तु जघन्यत्वाल्लाक्षणिकत्वमुचितम्। अस्तु परिहारः स्पष्टत्वादुपेक्षित। अतस्सवनीयानामेव हविषा तरसमयत्वमिति सिद्धम्॥

इति कथितबलाबलप्रवेकैरवगतसर्वविरोधबाधमार्गैः।
श्रुतिदृढकृतनिश्चयप्रमाणैः स्थित इह कर्मसु शेषशेषिभावः॥

इति द्वाविंश तरसमयाधिकरणम्॥ २२॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमानमहाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजि-शरभजि-तुक्कोजि-भोसलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण तदर्थ्युणा बाल्य एव तद्दयानिर्वर्तितापरिमितमहाग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामाविवरिष्ठसोममखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपेययाजिसुतेन अन्नपूर्णागर्भजातेन आपारपदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो

लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायां जैमिनिसूत्रव्याख्यायाम् अध्वरमीमांसाकुतूहलवृत्तौ
तृतीयाध्यायस्याष्टमः पादः॥
तृतीयाध्यायस्समाप्त.॥



---

1 तत्र नास्ति अ    () चिन्हान्तर्गतो भागस्त्रुटित, अ

सम्भवति, तस्य पूर्वाधिकरणेऽङ्गार्थत्वेन व्यवस्थापिततया प्रधानप्रत्यासत्ते-रनपेक्षणात् । अतो दृतिनवनीतत्वं सुत्यातदितरकालकसर्वाङ्गार्थमिति ॥

इत्येकविंशं दृतिनवनीतस्य सर्वाङ्गार्थत्वाधिकरणम् ॥ २१ ॥

## २२

अस्ति शाक्यानामयनं नाम षट्त्रिंशत्संवत्सररात्र्यात्मकं सत्रम् । तत्रेदमा-मनन्ति—"संस्थिते संस्थितेऽहनि गृहपतिर्मृगया याति । स तत्र यान् मृगान् हन्ति तेषां तरसमया सवनीयाः पुरोडाशा भवन्ति" इति । तरस मांसम् । किमत्र पुरोडाशोद्देशेन तरसमयत्वविधिः ? उत सवनीयोद्देशेन ? इति संशयः । तत्र सवनीयशब्दस्य सन्निहितस्यापि विशेष्यसापेक्षत्वात् पुरोडाशपदमेवोद्देश्य-समर्पकम् । तच्च दृतिनवनीतमित्याज्य[1]पदवदविशेषप्रवृत्तत्वात्सर्वपुरोडाशपरम्, उद्देश्यपुरोडाशानाञ्च सवनीयत्वेन विशेषणायोगात् सवनीयपदमनुवादमात्रम् । सृष्टिन्यायेन सवनीयासवनीयसर्वपरम् । तस्मात्सर्वपुरोडाशविषयस्तरसमयत्वविधि-रिति प्राप्ते, सिद्धान्तयति—

**मांसन्तु सवनीयानां चोदनाविशेषात् ॥ ४१ ॥**

तुरवधारणे । मांसं सवनीयानां धानाकरम्भादीनाञ्च हविषामेव प्रकृति-द्रव्यम्, न तु केवलपुरोडाशादीनाम्, नापि तेषामसवनीयानाम् । कुतः ? चोदना-विशेषात्—"सवनीयान्निर्वपति धानाः करम्भं परीवापं पुरोडाशं पयस्या" इति चोदनायां सवनीयशब्दस्य धानादिपञ्चहविष्षु निरपेक्षप्रवृत्तिरूपविशेषलाभात् । पूर्वपक्षे तु तस्य लाक्षणिकत्वं दोषः । सवनीयशब्दस्योद्देश्यसमर्पकत्वे सन्निहिता-न्वयरूपविशेषलाभाच्च ॥

नन्वेवमपि धानादिपञ्चकहविर्वाचकसवनीयशब्देन पुरोडाशशब्दस्य सामा-मानाधिकरण्यनिर्वाहाय पुरोडाशापुरोडाशलक्षणा दुर्वारेत्याशङ्क्य निराचष्टे—

**भक्तिरसन्निधावन्याय्येति चेत्स्यात् प्रकृति-लिङ्गत्वाद्वैराजवत् ॥ ४२ ॥**

असन्निधौ—व्यवहिते चरमभूते[2] पुरोडाशपदे भक्तिः—लक्षणा सिद्धान्ते आश्रयणीयेति चेन्मन्यसे, तत्रेदमुत्तरम्—पुरोडाशशब्दस्य लक्षणा स्यादेव, युक्तैवेति

1. पदविशेष अ 2 भूते. अ.

# अध्वरमीमांसाकुतूहलवृत्तेस्तृतीयाध्यायान्तभागस्याकारादिक्रमेण

## सूत्रसूची

### अ


| पृ० | | अ. | पा. | सू. |
|---|---|---|---|---|
| ४३७ | अकर्मक्रतुसंयुक्तं | ३ | ४ | १८ |
| ५७२ | अग्नयश्च स्वकालत्वात् | ३ | ७ | ३७ |
| २५१ | अगुणा च कर्मचोदना | २ | ३ | ६ |
| २३२ | अगुणे तु कर्मशब्दे | २ | २ | २४ |
| २६५ | अग्निस्तु लिङ्गदर्शनात् | २ | ३ | २१ |
| ५३४ | अग्न्यङ्गमप्रकरणे | ३ | ६ | ३१ |
| ३६६ | अग्रहणाद्वानपाय. | ३ | २ | २६ |
| २२० | अचोदकाश्च संस्कारा. | २ | २ | १८ |
| ५२६ | अचोदना गुणार्थेन | ३ | ६ | २३ |
| ४६० | अचोदितं च कर्मभेदात् | ३ | ४ | ३६ |
| ३६६ | अतुल्यत्वात्तु नैवम् | ३ | २ | ३३ |
| २३४ | अतुल्यत्वात्तु वाक्ययो | २ | २ | २६ |
| ५८४ | अतुल्यत्वादसमान० | ३ | ८ | ८ |
| २६६ | अथात' शेषलक्षणम् | ३ | १ | १ |
| २ | अथातो धर्मजिज्ञासा | १ | १ | १ |
| २६२ | अद्रव्यत्वात्केवले | २ | ३ | २० |
| ४५४ | अद्रव्यत्वात्तु शेष | ३ | ४ | २७ |
| १०० | अद्रव्यशब्दत्वात् | १ | ३ | २६ |
| २६० | अद्विर्वचन वा श्रुति० | २ | ४ | १६ |
| ३५७ | अधिकारे च मन्त्रविधि | ३ | २ | १८ |
| ५६३ | अध्वर्युर्वा तदर्थो हि | ३ | ८ | २ |
| ५७६ | अध्वर्युर्वा तन्न्याय्यत्वात् | ३ | ७ | ४५ |
| ५९६ | अध्वर्युस्तु दर्शनात् | ३ | ८ | २३ |
| १४ | अनपेक्षत्वात् | १ | १ | २१ |
| १७१ | अनर्थकश्च तद्वचनम् | २ | १ | २३ |
| ३५६ | अनर्थकश्चोपदेश. | ३ | २ | २० |
| ४५२ | अन्नप्रतिषेधाच्च | ३ | ४ | २५ |
| १७७ | अनाम्नातेषु | २ | १ | ३१ |
| १६ | अनित्यदर्शनाच्च | १ | १ | २८ |
| २८२ | अनित्यत्वात्तु नैव | २ | ४ | ५ |
| २३ | अनित्यसयोगात् | १ | २ | ६ |
| ५०८ | अनुप्रसर्पिषु समान्यात् | ३ | ५ | ५२ |
| ८५ | अनुमानव्यवस्थानात् | १ | ३ | १३ |
| ३७१ | अनुवषट्कारश्च कर्तृवत् | ३ | २ | ३५ |
| १८७ | अनुषङ्गो वाक्यसमाप्ति. | २ | १ | ४४ |
| ४८६ | अन्त्यमरेकार्थे | ३ | ५ | ११ |
| २६ | अन्त्ययोर्यथोक्तम् | १ | २ | १८ |
| १०० | अन्यदर्शनाच्च | १ | ३ | ३० |
| १७२ | अन्यश्चार्थ. प्रतीयते | २ | १ | २४ |
| २२ | अन्यानर्थक्यात् | १ | २ | ४ |
| ६२ | अन्यायश्चानेकशब्दत्वम् | १ | ३ | २३ |
| २७६ | अन्यार्था वा पुन श्रुति | २ | ३ | २६ |
| ५६० | अन्यो वा स्यात्परिक्रया० | ३ | ७ | १६ |
| ४२५ | अपदेशो वार्थस्य | ३ | ४ | २ |
| ६०२ | अपनयस्त्वेकदेशस्य | ३ | ८ | ३३ |
| ३६५ | अपनयाद्वापूर्वस्य | ३ | २ | २८ |
| ६० | अपि वा कर्तृसामान्यात् | १ | ३ | २ |
| ६७ | अपि वा कारणाग्रहणे | १ | ३ | ६ |
| १०५ | अपि वा नामधेय स्यात् | १ | ४ | २ |
| १७३ | अपि वा प्रयोगसामर्थ्यात् | २ | १ | २८ |
| ५६२ | अपि वा श्रुतिभेदात् | ३ | ७ | २१ |
| २६७ | अपि वा श्रुतिसयोगात् | २ | ४ | ३२ |
| १७१ | अपि वा श्रुतिसयोगात् | २ | १ | २१ |

| पृष्ठ | | अ | पा. | सू. |
|---|---|---|---|---|
| ४१३ | उकथ्यादिषु वार्थस्य | | | |
| १०४ | उक्तं समाम्नायैदमर्थ्यं | १ | ४ | १ |
| ४१० | उत्कर्षो वा ग्रहणात् | ३ | ३ | २२ |
| ५१२ | उत्पत्तिरिति चेत् | ३ | ६ | ५ |
| ५६४ | उत्पत्तौ तु बहुश्रुते. | ३ | ७ | २४ |
| १५ | उत्पत्तौ वावचना. | १ | १ | २४ |
| ४८६ | उत्पन्नाधिकारात् | ३ | ५ | ६ |
| ५६० | उत्सर्गे तु प्रधानत्वात् | ३ | ७ | १८ |
| ४३२ | उदक्त्व चापूर्वत्वात् | ३ | ४ | १३ |
| ४६४ | उद्गातृचमसमेकस्य | ३ | ५ | २३ |
| ५६७ | उपगाश्च लिङ्गदर्शनात् | ३ | ७ | २८ |
| ३५१ | उपदेशो वा याज्याशब्द | ३ | २ | ११ |
| ४६६ | उपायो वा तदर्थत्वात् | ३ | ४ | ४५ |
| ४२६ | उपवीत लिङ्गदर्शनात् | ३ | ४ | १० |
| | **ऊ** | | | |
| ५१ | ऊह | १ | २ | ४२ |
| | **ऋ** | | | |
| ५६८ | ऋत्विक्फल करणेषु | ३ | ८ | २५ |
| | **ए** | | | |
| ३१७ | एकत्वयुक्तमेकस्य | ३ | १ | १३ |
| २६० | एकत्वेऽपि परम् | २ | ४ | १३ |
| २६२ | एकत्वेऽपि पराणि | २ | ४ | २१ |
| ४०८ | एकदेश इति चेन्न | ३ | ३ | २० |
| ६४ | एकदेशाच्च विभक्ति० | १ | ३ | २६ |
| ५०१ | एकपात्रे क्रमादध्वर्यु° | ३ | ५ | ३६ |
| ४८० | एकस्माच्चेद्याथाकाम्य० | ३ | ४ | ५२ |
| ४१६ | एकस्मिन्नेकसयोगात् | ३ | ३ | ३३ |
| ३७४ | एकस्मिन्वा देवता० | ३ | २ | ३८ |
| ४२२ | एकस्मिन्वार्थधर्मत्वात् | ३ | ३ | ३८ |
| ४८३ | एकस्मिन्समवत्तशब्दात् | ३ | ५ | ३ |
| ५६२ | एकस्य कर्मभेदादितिचेत् | ३ | ७ | २२ |
| २४४ | एकस्य तु लिङ्गभेदात् | २ | ३ | २ |
| १६३ | एकस्यैवपुन. श्रुति° | २ | २ | २ |

| पृ० | | अ. | पा. | सू. |
|---|---|---|---|---|
| २८८ | एक वा सयोगरूप० | २ | ४ | ६ |
| | **ऐ** | | | |
| १२१ | ऐकशब्द्ये परार्थवत | १ | ४ | ७ |
| ४६१ | ऐन्द्रवायवे तु वचनात् | ३ | ५ | १७ |
| ३७३ | ऐन्द्राग्ने तु लिंगभावात् | ३ | २ | ३७ |
| | **औ** | | | |
| ६६ | औत्पत्तिकस्तु | १ | १ | ५ |
| | **क** | | | |
| ६ | करोतिशब्दात् | १ | १ | ८ |
| ३२३ | कर्तृगुणे तु कर्मासमवायात् | ३ | १ | १६ |
| २७८ | कर्तुर्वा श्रुतिसंयोगात् | २ | ४ | २ |
| २८३ | कर्तुस्तुनियमात्काल० | २ | ४ | ७ |
| ४१० | कर्तृतो वा विशेषस्य | ३ | ३ | २३ |
| ५६६ | कर्मकार्योत्सर्वेषा | ३ | ७ | ३० |
| ८७ | कर्मधर्मो वा प्रवणवत् | १ | ३ | १६ |
| ३०२ | कर्माण्यपि जैमिनि | ३ | १ | ४ |
| ६०० | कर्मार्थं तु फल तेषा | ३ | ८ | २८ |
| ८ | कर्मैके तत्र दर्शनात् | १ | १ | ६ |
| १३६ | कारण स्यादिति चेत् | १ | ४ | १८ |
| ४८३ | कारणाच्च | ३ | ५ | २ |
| ५०२ | कारणानुपूर्व्याच्च | ३ | ५ | ३६ |
| २६० | कृतकञ्चाभिधानम् | २ | ४ | १२ |
| ४६६ | कृतत्वात्तु कर्मण° | ३ | ४ | ४६ |
| १७ | कृते वा विनियोग | १ | १ | ३२ |
| ३५४ | कृत्स्नोपदेशादुभयत्र | ३ | २ | १४ |
| ४१० | क्रतुतो वार्थवादानुपपत्ते | ३ | ३ | २४ |
| ३६३ | क्रमश्च देशसामान्यात् | ३ | ३ | ११ |
| | **ग** | | | |
| १७८ | गीतिषु सामाख्या | २ | १ | ३३ |
| ५८६ | गुणत्वाच्च वेदेन | ३ | ८ | १२ |
| ५८३ | गुणत्वेन तस्य | ३ | ८ | ६ |
| ३८५ | गुणमुख्यव्यतिक्रमे | ३ | ३ | ८ |

